THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

Nos. 322, 335, 344, 348, 353, 363, 373, 378, 382, 388, & 399.

THE

# YĀJÑAVALKYA SMṚTI

*With–*

*Viramitrodaya the–Commentary of*

*Mitra Misra*

*and*

*Mitaksara the–Commentarya of*

*Vijnanesvara*

*Edited By*

Pt. Nârâyana S'astri Khiste Sahityâchârya, Assistant Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares, and
Pt Jagannâtha S'âstrî Hos'inga Sahityopâdhyâya.

FASCICULUS I to XI. १ से ११.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1930.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares,*

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ६२

नं० ३२२, ३३५, ३४४, ३४८, ३५३, ३६३, ३७३, ३७८, ३८२, ३८८, ३२९ ।

# याज्ञवल्क्यस्मृतिः ।

श्रीमित्रमिश्रकृत 'वीरमित्रोदय' टीकया श्रीविज्ञानेश्वरकृत-
'मिताक्षरा' टीकया च सहिता ।

काशीस्थराजकीय सरस्वतीभवनपुस्तकालयाध्यक्षेण
साहित्याचार्य-खिस्ते नारायणशास्त्रिणा,
साहित्योपाध्याय-होशिङ्ग जगन्नाथशास्त्रिणा च
सपरिष्कारं संशोधिता ।



प्रकाशक—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलासप्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

१९८६

# मिताक्षरावीरमित्रोदयाख्यटीकाद्वयसहितायाः
# याज्ञवल्क्यस्मृतेर्भूमिका ।

अथेयं याज्ञवल्क्यस्मृतिर्विज्ञानेश्वरयोगिविरचितमिताक्षरया मित्रमिश्रविरचितवीरमित्रोदयाख्यटीकया च संकलिता संमुद्र्य प्रकाश्यते। यद्यपि मिताक्षरासहितायाः अस्याः स्मृतेरनेकानि संस्करणान्यनेकैः पण्डितैरनेकवारं प्रकाशितानि सन्ति, तथाऽपि मित्रमिश्रकृतवीरमित्रोदयसहितायास्तस्या इदम्प्रथमं संस्करणमिदमिति न पुनरुक्तीभवति नः प्रयासः। धर्मशास्त्रेषु स्मृतिग्रन्थानामार्षत्वेन समानेऽपि प्रामाणिकत्वे मनुस्मृतेर्याज्ञवल्क्यस्मृतेश्च कोऽपि लोकोत्तरो गरिमाऽपरोक्ष एव विश्वेषां विदुषाम्। तत्र प्रकृते याज्ञवल्क्यस्मृतिरेवेदानीमस्माकमालोचनाविषयः। प्रतिपादितविषयगौरवेण सहैव प्रणेतुर्गौरवमपि ग्रन्थस्य माहात्म्यं जनयतीति सुस्पष्टमेव।

यद्यपीयं स्मृतिर्याज्ञवल्क्येन मुनिना स्वयं विरचितेति वक्तुं न शक्यम्। स्मृतेरस्याः याज्ञवल्क्यमहर्षितच्छिष्यसंवादरूपत्वात्। तथाऽपि याज्ञवल्क्यर्षिरस्यैव न किञ्चित् स्वबुद्ध्योपनिबद्धम्। यद् यावच्च गुरुमुखाच्छ्रुतं, तदेव, सर्वं समाहितेन मनसा स्मृत्वा सङ्गृहीतमिति प्रकृतग्रन्थकर्तृत्वं याज्ञवल्क्य एव समायाति न तच्छिष्येष्वन्येषु वा। अन्या अपि स्मृतय इत्थंविधा एव तत्तदृषिकर्तृका इति व्यपदिश्यन्ते। एतावता याज्ञवल्क्यप्रणीतेयं याज्ञवल्क्यस्मृतिरिति कथनं न दोषावहं भवेत्।

## याज्ञवल्क्यः

अथ कोऽसौ याज्ञवल्क्यः ? कदाऽनेन समुपदिष्टेयं स्मृतिरित्याद्याः प्रश्नाः स्वभावत एव मनसि समुपतिष्ठन्ते। परन्तु दुर्भाग्यादयं प्राचीनानां ऋषीणां समयनिर्णयं कर्तुं न पारयामः। समयनिर्णयेतिवृत्तौपयिकसामग्रीसम्पादने साभिनिवेशैरप्यस्माभिः पुराणादिषु परस्परं तथा विरोधा गोचरीक्रियन्ते, यैराकुलितचेतसो वयं कमपि निर्णयं नाधिगच्छामः।

प्रकृतेऽपि सैव गतिः, तथाऽपि महर्षेर्याज्ञवल्क्यस्य विषये यत्र यत्र यावदुपलब्धमस्माभिस्तत्सर्वं सङ्गृह्य परीक्षकाणां विदुषां पुरः प्रकाशयामः।

योगी याज्ञवल्क्यः, याज्ञवल्क्यश्चेति द्विविधं याज्ञवल्क्यनाम तत्र तत्र दृष्ट्वा केचन भिन्नमिदं ऋषिद्वयमिति कल्पयन्ति, परन्तु वयं तत्र न किमपि विशिष्टं प्रमाणमुपलभामहे येनैतादृशभेदनिर्णयः सुकरो भवेत्। महर्षेर्याज्ञवल्क्यस्य महायोगित्वे भूयांसि प्रमाणानि तत्र तत्रोपनिषत्सु पुराणेषु च समुपलभ्यन्ते। प्रकृतस्मृतिरपि 'योगीश्वरं याज्ञवल्क्य' मित्यादिनैव समारब्धा महर्षेर्याज्ञवल्क्यस्य महायोगित्वं प्रकृतस्मृतेश्च योगियाज्ञवल्क्यप्रणीतत्वं च बाढं साधयति। अथ प्रकृतस्मृत्युपदेशकस्य महर्षेर्याज्ञवल्क्यस्य कः समय इति विचारे प्रस्तुते राजर्षेर्वैदेहस्य जनकस्याऽयं ब्रह्मविद्यागुरुरित्युपनिषत्सु पुराणेषु च बहुशः श्रूयमाणत्वाज्जनकनृपति-

समसामयिकत्वमस्य कल्पनीयं भवति । जनकश्च भगवतो रामचन्द्रस्य श्वशुरः सीतादेव्याश्च पालकपितेति त्रेतायुगकालिकत्वं तस्य सिद्धम् । तत्सम्बन्धेन महायोगिनो याज्ञवल्क्यस्याऽपि त्रेतायुगकालिकत्वकल्पनं स्वभावतः समायाति ।

किञ्चाऽन्यदप्येकमत्र विचारणीयमस्ति—श्रीश्रीमद्भागवते द्वादशस्कन्धे—

ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतवतैः ।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥
अस्मिन्नप्यन्तरे ब्रह्मन् ! भगवान् लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥
पराशरात्सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥

इत्युपरिनिर्दिष्टैरवतरणैरन्यैश्च द्वापरावसाने कलियुगारम्भात्पूर्वं भगवदंशांशकलया व्यासो भगवानवातरदिति सिद्ध्यति । स च तदानीमेव ऋगादिसंहिताश्चतस्रो विभज्य एकैकस्मै शिष्यायैकैकां संहितां ददौ । तत्र यजुर्वेदसंहितां स्वशिष्येष्वन्यतमाय वैशम्पायनायाऽदात् । तस्यान्तेवासी याज्ञवल्क्यो बभूव । अथैकदा याज्ञवल्क्यगुरोर्वैशम्पायनस्य ब्रह्महत्यादोष उदभूत् । तदंहोनिवर्हणाय वैशम्पायनः स्वच्छात्रान् ब्रह्महत्याऽपनोदनक्षमं व्रतमादिदेश । तदा याज्ञवल्क्यो गुरुमाह—भगवन् ! श्रीमदुक्तं व्रतं सुदुश्चरमप्यहमेवाचरिष्ये । किमल्पमेधसां दुर्बलानामेषामादेशेन इति । वैशम्पायनस्तस्य तदभिमानविजृम्भितमितरविप्रापमानजनकं वचनं निशम्य भृशं चुक्रोध । आह च याज्ञवल्क्यम्—"त्वं ब्राह्मणावमन्ताऽसि । अतो मदन्तिके यदधीतं तत्सर्वं विमुच्य याही" ति । असहिष्णुर्याज्ञवल्क्यो वैशम्पायनादधीतं यजुर्वेदगणं छर्दित्वा तं वैशम्पायनं गुरुमुत्सृज्यागमत् । अथ सुदुश्चरेण तपसाऽऽराध भगवन्तं त्रयातनुं भास्वन्तम् । परितुष्टो भगवान् भास्करोऽयातयामानि यजूंषि तस्मै प्रायच्छत् । तैर्याज्ञवल्क्यो वाजसनीसंज्ञाः शाखा वितताम । श्रीमद्भागवतप्रतिपादितयाऽनया कथया याज्ञवल्क्यस्य द्वापरान्तिमकालिकत्वं साधितं भवति ।

किञ्च बृहदारण्यकोपनिषदि तृतीयेऽध्याये याज्ञवल्क्यविषये वर्तते काचित्कथा । सा चेत्थम्—"कदाचिद्वैदेहो राजर्षिर्जनकः प्रभूतदक्षिणं सत्रमारेभे । तत्र कुरुपाञ्चालवासिनो वैतानिककर्मनिष्णाता राज्ञा निमन्त्रिता ब्राह्मणाः समाजग्मुः । यज्ञं दिदृक्षवोऽनाहूता अपि बहवो जनाश्च सङ्गता आसन् । अथ तं महान्तं समाजमालोक्य जनको जिज्ञासितवान्—"को नु खल्वनूचानतमो ब्रह्मिष्ठः" इति । स च गवां सहस्रं रुद्ध्वोवाच—'हे भगवन्तः ! यो वो ब्रह्मिष्ठः स एता गा उत्कालयतु स्वगृहं प्रति' इति । तद्वैते ब्राह्मणा न दधृषुः । अथ याज्ञवल्क्यो निजमन्तेवासिनमुवाच 'हे सौम्य । उत्कालयेमा गा अस्मद्गृहान् प्रति' एतच्छ्रुत्वा स चोत्कालितवान् आचार्यगृहं प्रति । एवं सङ्गताः सर्वे विप्रा अवमानिता आसन्"। इति।

एतावता याज्ञवल्क्यस्य जनकसमकालिकत्वेन त्रेतायुगकालिकत्वं वैशम्पायन-

समकालिकत्वेन द्वापरान्तिमकालिकत्वं च कल्पनीयं भवति । महदन्तरं चाऽनयोः-समययोरिति । तत्र महायोगिनो याज्ञवल्क्यस्य त्रेतायुगमारभ्य द्वापरान्तपर्यन्तं यदि योगप्रभावाच्चिरजीवित्वं कल्प्येत तर्हि न किञ्चिदप्यसामञ्जस्यम् । परन्तु कथन मिदं केवलं विश्वासजुषां परमास्तिकानामेव सम्मतं भवेत् । ये पुनर्विवेचका असमा नुपमसम्भवनीयं किमपि न विश्वसन्ति तेषां कृते किमप्यन्यथाऽपि विचारणीयम स्ति । यथा—जनक इति याज्ञवल्क्य इति च गोत्रनामनी । जनकवंशे जाताः स-र्वे एव जनकाः याज्ञवल्क्यवंशे जाताः सर्वे एव याज्ञवल्क्याः । तथा च जनकस्य ब्रह्म-विद्योपदेष्टा त्रेतायुगकालीनो याज्ञवल्क्योऽन्यः, वैशम्पायनशिष्यः शुक्लयजुर्वेदद्रष्टा द्वापरान्तिमकालिको याज्ञवल्क्योऽपरः । एवं विचार्यमाणे न किञ्चिदसामञ्जस्यं भवति । एवमपि प्रकृतस्मृतिकर्ता याज्ञवल्क्यः क इति शङ्का तु तदवस्थैव । तत्रे-त्थं विचारयाम.—प्रकृतिस्मृतिकर्तुर्याज्ञवल्क्यस्य निवासस्थानं मिथिलाऽऽसीत् । यथाऽत्रैव द्वितीयश्लोके 'मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन्' इ-त्युक्तम् । मिथिलैव च जनकस्य राजर्षे राजधानी आसीत् । किञ्च योगीन्द्र इति याज्ञवल्क्यविशेषणम् । प्रकृतस्मृतौ चाऽप्यत्र योगमहिमोपवर्णितः । 'अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्याद्युक्तेः प्रकृतिस्मृतिकर्तुर्याज्ञवल्क्यस्य योगे भूयान मिनिवेशो दृश्यते । किञ्च 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता.' इत्याद्युक्ते पुराणनिर्माणोत्तरकालिकत्वं प्रकृतस्मृतेरापतति । पुराणानां च कर्ता व्यासो द्वापरका-लिक इति । अन्यच्च धर्मशास्त्रप्रयोजकप्रस्तावे—'मन्वत्रिविष्णुहारीते'त्यादौ व्यास स्य नामग्राहमुल्लेखाच्चदनन्तरभावित्वं याज्ञवल्क्यस्य सिद्ध्यति । तथा च द्वापरा न्तिमकालिको मिथिलानिवासी महायोगी वैशम्पायनशिष्यः शुक्लयजुर्वेदद्रष्टा या-ज्ञवल्क्यः प्रकृतस्मृतेर्निर्मातेति सिद्धम् । यच्चैतिहासकोविदा अस्यशिक्षादीक्षिता' पष्ठीं शताब्दीं याज्ञवल्क्यसमयत्वेन निर्धारयन्ति, तदर्थं च स्वाभिमतानि प्रमाणा-न्यप्युपन्यस्यन्ति, तदखिलं तद्विचारसरणिमनुसरद्भिः स्वयमूहनीयम् । वयं तु त-न्मतेन पश्चाद्दृशास्तैरपलब्धां दिव्यां दृष्टिं नाधिगताः स्म इति वाढं स्तुमः स्वकी-यं सौभाग्यम् ।

## विज्ञानेश्वरः

याज्ञवल्क्यस्मृतेष्टीका 'मिताक्षरा' तु विश्वविख्यातैवास्ते । भारतवर्षे प्राय' स र्वेष्वेव देशेषु तत्तद्देशवासिप्रधानपण्डितप्रणीतेषु धर्मशास्त्रनिबन्धेषु जाग्रत्स्वपि दा-क्षिणात्यस्य विज्ञानेश्वरस्य कृते मिताक्षरायास्तु किमपि लोकोत्तरं महत्त्वं सर्वैरप्य-नुभूयतेऽङ्गीक्रियते च । इत्थंविधस्य सर्वैर्मूर्ध्ना समादृतस्य मिताक्षराख्यग्रन्थरत्नस्य निर्माता विज्ञानेश्वरपण्डितः कदा कुत्र समुत्पन्न इति जिज्ञासायामित्थं विचार्यते-मिताक्षराया अवसाने विज्ञानेश्वरेण स्वाश्रयभूतो नृपतिर्विक्रमादित्यः श्लोकत्रयेण कीर्तितः । ते च श्लोका यथा—

नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ॥

विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥ १ ॥

स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां
दाताऽर्थानामतिशयजुषामर्थिलार्थायमानाः।
ध्याता मूर्तेर्मुरविजयिनो जीवतादार्कचन्द्रं
जेता ऽरीणां तनुसहभुवां तत्त्वविज्ञाननाथः ॥ २ ॥

आ सेतोः कीर्तिरासो रघुकुलतिलकस्या च शैलाधिराजा-
दा च प्रत्यक् पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात्।
आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभास्वराङ्घ्रिः
पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः ॥ ३ ॥

अत्र विज्ञानेश्वरेण स्वाश्रयदाता कल्याणपुराधिनाथो विक्रमार्कदेवः संस्तुतः। स च किं शकप्रवर्तकोऽन्यो वा?। तत्र प्रस्तुतविक्रमार्कस्य कल्याणपुरेण सम्यन्यो वर्णित इति शककर्तुरन्य एवायमिति भाति। कल्याणपुरस्वामी विक्रमादित्यः कः किं सामयिकश्चेति विचारे प्रस्तुते श्रीमद्भिः Dr. Bhandarkar महोदयैर्निर्मिते History of the Deccan नामके ग्रन्थे चालुक्यवंश्यनृपतिप्रस्तावे विक्रमादित्यद्वितीयनाम्नो नृपतेरस्ति वर्णनम्। तच्च काश्मीरकमहाकविबिह्लणविरचित 'विक्रमाङ्कदेवचरित' नामक महाकाव्यावलम्बेन सङ्गृहीतमिति तत्रैव निरूपितमस्ति। अथ विक्रमाङ्कदेवचरितं तत्सम्पादकरलोकवासिमहामहोपाध्याय श्रीरामावतारपाण्डेयमहोदयलिखितां तद्भूमिकां च विमृश्य विक्रमार्कविषये सङ्गृहीतं संक्षिप्तमितिवृत्तमित्थम्—

चालुक्यनृपतिवंशो ऽयोध्यातो दक्षिणां दिशं गतः, आहवमल्लदेवस्य त्रयः पुत्रा आसन्। ज्येष्ठः सोमदेवः, मध्यमो विक्रमादित्यः, कनिष्ठो जयसिंह इति। तत्र विक्रमादित्य एव प्रबलपराक्रमः शत्रूनवधूय कल्याणपुरं स्वराजधानीं चकार। काश्मीरको बिह्लणमहाकविः प्रायः समस्तं भारतवर्षं परिभ्रमन् विक्रमादित्यसभां गतस्तत्र राज्ञा बहु सम्मानितः तत्सभायां विद्यापतिपदेऽभिषिक्तोऽभूत। अथ तद्गुणगणाकृष्टेन तेन कविना तच्चरितवर्णनपरं 'विक्रमाङ्कदेवचरितं' नाम महाकाव्यं निरमायि। श्रीमत्पण्डितरामावतारपाण्डेयमतानुसारेण विक्रमाङ्कदेवचरितनिर्माणसमयः खिृस्तीयैकादशशतकस्य चरमभागः। एतत्काव्यनिर्माणसमये प्रायः प्रसिद्धो भोजनृपतिर्दिवं गत आसीत्। तदानीं काव्यनायकश्चालुक्यविक्रमादित्यो दक्षिणस्यां दिशि, अनन्तराजपुत्रः कलशदेवश्च, कश्मीरेषु राज्यं शास्ति स्म। चालुक्यविक्रमादित्यसमयः ९९८—१०३८ शकाब्दाः। कश्मीराधिपकलशदेवसमयश्च १००२—१०१० शकाब्दा इति। बिह्लणेन विक्रमाङ्कदेवचरितस्यान्तिमसर्गे कश्मीरवर्णनं कलशदेववर्णनं स्ववृत्तान्तश्चोपनिबद्धस्तत्र विक्रमादित्यसभायामात्मनो विद्यापतित्वप्राप्तिरित्यनुपवर्णिता—

मौलच्छत्रोन्मदगजघटापात्रमुत्कम्पचोला-
च्चालुक्येन्द्रादलभत कृती योऽत्र विद्यापतित्वम्।

मस्मिन्नासीत्तदनु निबिडाश्लेषदेवाकलीला-
वेल्लद्बाहुक्वणितवलया सन्ततं राजलक्ष्मीः ।
(वि० दे० च० स० १८ श्लो० १०१)

विक्रमादित्यराजधानीत्वेन विज्ञानेश्वरोल्लिखितं कल्याणपुरं तावत्सम्प्रत्यपि हैदराबादराज्ये 'कल्याणकीर्ति' रिति नाम्ना प्रथितमस्ति । तत्रत्या भूपतयोऽपि चालुक्यवंश्या इत्येव कथ्यन्ते ।

तथा च विक्रमादित्यसमय एव विज्ञानेश्वरस्यापि समय इति सिद्ध्यति । अन्यच्च मिताक्षरान्तपुष्पिकायां 'इति श्रीभारद्वाजपद्मनाभभट्टोपाध्यायात्मजस्य' इत्युक्तेर्विज्ञानेश्वरो भारद्वाजगोत्रः पद्मनाभभट्टोपाध्यायस्य पुत्र आसीदित्यपि व्यक्तमेव । किञ्च मिताक्षरावसाने विज्ञानेश्वरेण स्वयमेवोपन्यस्तात्—

उत्तमापपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥

इति श्लोकात् उत्तमात्मा नाम आत्मोत्तमो नाम वा विज्ञानेश्वरस्य गुरुरासीदिति प्रतिभाति । इतोऽधिकं विज्ञानेश्वरस्य विषये नाऽन्यत्किञ्चिद्यावधि समुपलब्धम् ।

## मित्रमिश्रः ।

याज्ञवल्क्यस्मृतेः प्रस्तुतेऽस्मिन् संस्करणे इदम्प्रथमतया प्रकाश्यमानायाः वीरमित्रोदयाख्यया ख्यातायाष्टीकायाः प्रणेतुर्मित्रमिश्रस्य विषये यावदितिवृत्तमुपलब्धं तावद्यो निर्दिशामः—

मित्रमिश्रकृतेषु वीरमित्रोदयाख्येषु धर्मशास्त्रनिबन्धेषु प्रथमस्य परिभाषाप्रकाशस्योपोद्घाते मित्रमिश्रेण स्वयमेवानेकपद्यैः स्ववंशवृत्तं प्रकाशितमस्ति तदनुरोधेनेदं व्यक्तं भवति यत् गोपाचल (गवालियर) वासी हंसपण्डितो मित्रमिश्रस्य पितामह आसीत् । परशुराममिश्रश्च पिता । बुन्देलखण्डाधिराज 'ओरछा' राजधानीपतिर्वीरसिंहदेवश्च मित्रमिश्रस्याश्रयदाता प्रभुरासीत् । अनेन वीरसिंहदेवेन यवनाधिपतेरकबरस्य सम्राजः सामन्तत्वमङ्गीकृत्य मिथः सौहार्दवृद्धये स्वभ्रातृपुत्री सम्राजः पुत्राय सेलीमनाम्ने युवराजाय प्रदत्ता । अथ युवराजसेलीमस्य परमासीभूतोऽयं तं प्रसादयितुं तदाज्ञया विद्वद्वरस्य अबुलफजलनाम्नो ऽकबरप्रियसुहृदो यवनस्य प्रच्छन्नं वधं कृतवानित्यपि केचित्कथयन्ति । अस्तु किमपि । राजनीतिः प्रायो धर्मनियन्त्रणं न सहते नाऽपेक्षते च । तत्र हि स्वार्थसाधनमेव धर्मो भवति । तत्परिपन्थिनः सर्वेऽप्यधार्मिका एव । परिपन्थिनां विनाशस्तु सर्वथा कर्तव्यकोटिनिविष्ट एव । इत्थमपि वीरसिंहस्य शौर्यं तु स्पृहणीयमेवासीत् । मित्रमिश्रेण स्वकृतिषु उपोद्घतप्रसङ्गेन वीरसिंहदेवो बहुशः स्तुतोऽस्ति । याज्ञवल्क्यस्मृतिटीकावीरमित्रोदयोपोद्घाते वीरसिंहदेवस्य शौर्यं प्रस्तुत्य—

भगोलाद् भूगोलाद् बहिरभिपिपासन्ति भवितुं
पठामाः पाठीना इव जलविलीनां धियमधुः ।
मघो (गा) मोघारम्भोऽपसरति, बुंदेलाकुलपतौ
रणार्से दुर्वारे रणति रणसारे रणभुवि ।

इत्यादि बहुशो वर्णितमस्ति । दातृत्वमपि वीरसिंहदेवस्य लोकोत्तरमेवासीदित्यपि मित्रमिश्रोक्तिभिर्वाढं प्रतीयते ।

यथा—व्रीडाभिर्जडिमोदयादुपलतां चिन्तामणिः पाशवं
कामं कामगवी च कल्पविटपी स्वर्गाटवीं गाहते ।
आकर्ण्योर्जितवीरसिंहनृपतेर्दानोर्ज्जिहानं यशः
सान्तर्ध्दानतयाऽध· निर्दयमधोनेतारमस्तौद् बलिः ।
वसु वर्षति वीरसिंहदेवे जलदः केवलमम्बु यद् द्विजेषु ।
इयतैव यशोवदातविश्वो मलिनः सोऽजनि लज्जया तयैव ॥
(या०स्मृ०टी०वी०मि० श्लो०११-१२)

वीरसिंहदेवसमये तस्य राजधानी 'ओरछा' नगर्यप्यमरावतीव परमां सुषमां वहन्ती सर्वनगरीललामभूता ऽऽसीदिति मित्रमिश्रेण तत्र तत्र स्वकृतग्रन्थोपोद्घाते विशेषतः स्वकृते आनन्दचम्पूनामके चम्पूकाव्ये बहुधा वर्णितमस्ति ।

तत्र आनन्दचम्पूग्रन्थात् दिङ्मात्रमुद्धरामः—

साम्नाढ्यैः सन्नयाढ्या सुकृतिभिरतुलैरुज्ज्वला कान्यकुब्जैः
शाकद्वीपीयसारस्वतकृतसुषमा मालवाबद्धमाला ।
पाश्चात्यैर्दाक्षिणात्यैर्मधुमथनपदार्थाभवच्चित्तवित्तै-
रुद्यद्विद्याकवित्वैर्द्विजपतिभिरसावोंडछा सम्बभासे ॥ १ ॥
भूदेवैः क्वाऽपि देवैरिव निखिलजनाराध्यसेवैः सदैव
क्षत्रैः कुत्राऽपि चित्रा स्वकृतिषु निपुणैः क्वापि वैश्यैरुपास्या ।
अक्षुद्रैः क्वाऽपि शूद्रैर्विहितसमुदया ऽगाधविद्यासमुद्रै-
र्धन्या सा चोंडछापूरवति मम चतुर्वर्णसृष्टीरभीष्टा ॥ २ ॥

इत्याद्यनेकविधवर्णनेन वीरसिंहदेवस्य धार्मिकत्वं चातुर्वर्ण्यपरिपालकत्वं च स्पष्टं प्रतिभाति । वीरसिंहदेवेन च लक्षत्रयव्ययेन मथुरायां श्रीमित्रमिश्रद्वारा भगवतः पुरुषोत्तमस्य रम्यं मन्दिरं निर्मापितमासीत् । तदेव पश्चात् अकब्बरप्रपौत्रेण औरंगजेबेन स्वकीयेन सुयशसा सहैव निपात्य विनाशितम् । मन्दिरनिर्माणेतिवृत्तमानन्दचम्पूग्रन्थे इत्थमुपवर्णितं मित्रमिश्रेण—

स्वान्तेऽचिन्तयदेकदा परिषदामग्रे समग्रेश्वरो
दृक्चेतःसुलभेऽपि कैटभरिपौ दृग्गोचरेऽपि स्थितम् ।
दीर्घं कञ्चिदुपायमञ्चिततया हर्तुं तमः सञ्चितं
सर्वेषामपि दुर्लभं च सुलभीकर्तुं तमाद्रान्तरः ॥ १ ॥
चक्रे श्रीयुतमित्रमिश्रसुकृतिद्वारा दुरारोहणं
श्रीनारायणधाम नाम मथुरालङ्कारमोङ्कारवत् ।
क्षीणाक्षीरसमुद्रमुद्रविसमालम्बे विलम्बे रतो (?)
वैकुण्ठेऽपि विकुण्ठधीरपि निरालम्बो यदालम्बते ॥ २ ॥
यच्छ्रेयोऽवर्द्धत श्रीभुजभजनवशादस्य गोवर्द्धनाद्रे-
र्यद्दोर्दण्डेन रूढः परमसुखमसावन्वभूत्कैटभारेः ।

तेनोच्चीभूय भूयः स्तवयति सुभगो रंहसा वीरसिंह-
प्रासादस्तुङ्गभावात्त्रिभुवनगरिमा बिभ्रदङ्के समेपः ॥ ३ ॥
ऊर्ध्वं मूर्द्धाऽभिस्पृशद् गुरुगरिमभृता रोदसी मध्यमेन
क्ष्माधोभागस्य भूम्ना जयति मधुपुरे मन्दिरं कैटभारेः ।
पूर्णाभावात्प्रपूर्य त्रिभुवनमधुना स्थैर्यमाचर्य बिभ्रद्
ब्रह्मैवान्तः समाधौ यश इव विशदं वीरसिंहस्य राज्ञः ॥ ४ ॥
कृत्वाङ्के स्मेरपङ्केरुहनयनमनङ्गेन मूर्ध्ना फणाग्रे
सप्ताधोलोकभूमा फणिकुलपतिनाऽवोधि कूर्मस्थितेन ।
दोःस्तम्भे धैर्यमद्भ्यामुलकुलरिपोर्वीरसिंहस्य शङ्के
तस्योर्वीभारमूर्ध्वं पुनरियमधुना मापते सप्तलोकी ॥ ५ ॥
वीरसिंहकृतमिन्दिरापतेः सुन्दराकृति रराज मन्दिरम् ।
केशवे दधदनन्तमुन्नतिमा वीरसिंहनृपतेरिवाशयः ॥ ६ ॥
वीतांहोवीरसिंहोद्धृतघटितगुहामन्दिरं कैटभारे-
राभाति स्तम्भकूटं त्रिभुवनभवनस्येव मेरोर्विरोधि ।
यच्छृङ्गोत्सङ्गरिङ्गत्कलगुलकुले मत्तपारावताना-
माराधारास्थिमालिङ्गति विपति मुहुः स्वर्गपिण्डभ्रमेण ॥ ७ ॥
त्रिभावस्थापादौ भुवनमनवमारोहतहरि-
प्रसादप्रासादो हिमगिरिविवादोरपटकः ।
बुन्देलाभूलासक्षितिरमणचूडामणितया
विधत्ते व्याधानामपि च परमब्रह्म सुलभम् ॥ ८ ॥
सदायामं कामं त्रिजगदभिरामं समनमां
तदुच्चैर्भावं कः कथयितुमशक्तः प्रभवतु ।
यदङ्के पर्यङ्केऽवनि शशधराङ्केन तुलितः
स मे विश्वातङ्कं त्रिपदपदहर्ता त्रिभुवनः ॥ ९ ॥
विकुण्ठं वैकुण्ठं जलधिमपि कुर्वञ्जलधियं
प्रसीदन् प्रासादं भजति भजनीयो दिविषदाम् ।
सदानन्दस्पन्दः स्वयमपि सदानन्दलहरी
स्वनन्देर्बुन्देलाकुलजलधिनैलाजितवर· (?) ॥ १० ॥
अनीहा नीहारक्षितिभृति स्वनीहारिमहसा-
मलासः कैलासःकनकगिरिवासः कनगिरिः ।
कथाशेषः शेषोऽजनि गुणविशेषोदयवशा-
दहो प्रासादानामनवरतदानार्द्रमनसः ॥ ११ ॥
यदायामं कामं निरधिगतवामं दशदिशा-
मनन्तानन्त्यं यद्वदनवधि चाऽन्तर्व्यरचयम् ।
अतो मे वैदग्धीमनुभवति दिग्धीरनिवहो
न चेदीदृग् भूमा सकलमिह भमावुदयतु ॥ १२ ॥

कैलासाद्रिघनोर्विमर्दितघना यद्वा हिमाद्रिं प्रति
स्पर्द्धां मेरुमिवन्ननेकजलवन् सम्भावयन् भासते ।
केषां केलिगतानिवासविलसल्लेखा जगल्लेखय-
न्नुल्लासी कनकैर्विमर्दनघनाः प्रासादचूडामणिः ॥ १३ ॥
सन्ध्याह्ने मणिदर्पणो दिनमणिः स्यान्मूर्ध्नि रात्रौ पुन-
र्मध्यायां रजनीमणिर्यदुमणिप्रासादचूडामणेः ।
प्राग्जन्मार्जितनिर्भरार्जिततरःसम्भारसम्भावना-
द्यालोकि स एव लोकमटनाऽऽलोकि त्रिलोक्यद्भुतम् ॥ १४ ॥
स्पृशन्ती ब्रह्माण्डोपरि तदमलखण्डोदितरुचा
सुचार्वी चागर्वीकृतमहितदर्वीकरपतिः ।
वदेति प्रासादादुपरि परिवादध्वजपटी-
पटीयः स्वर्धुन्यास्तुहिनगिरिमूर्धन्युदितया ॥ १५ ॥
दिशामीशाः प्राहुर्नभसि तरसा योजनमधिका-
यदातप्रासादं प्रकटितनिनादं दश दिशि ।
तदग्रोद्योधद्ध्वजचलनिसर्गोज्ज्वलपटी-
तटीं दृष्ट्वा तन्नाङ्कुरकलननिर्यातकलहाः ॥ १६ ॥
आब्रह्माण्डमखण्डपाण्डुरपयोधाराऽद्य नारायणी
गङ्गे गङ्गगङ्गया सुरधुनीपङ्क्तीयसङ्कोचिनी ।
आनन्दावहगन्धवाहनिवहैः प्रासादमूर्ध्नि ध्वजा-
दुद्धूता धवला पटीचलतटीकोटीरलोकत्रयी ॥ १७ ॥
चुम्बत्यम्बरमेतदम्बरमणेर्बिम्बं यदा मण्डली-
मिन्दोर्नन्दकुमारमन्दिरशिरः संधो(?)त्यमन्दं यदा ।
मन्यन्ते मनुजाः प्रजातकुतुकाः संवीक्ष्य साक्षात्तदा
पद्मं नद्धमृणालमिद्धमुदयत् क्षीरोदनीरोदरात् ॥ १८ ॥
तुल्याभेपद्दरिन्निवेशनिविडस्फारस्फुरद्दीधितौ
मध्येऽह्नि द्युमणौ जनौघमनसि स्फूर्तिः स्फुटाऽऽसीत्त्वसौ ।
एतद्भूपतिवीरसिंहहस्तनी प्रासादमूर्ध्नि स्वधा-
दुद्दण्डध्वजदण्डमण्डितमणिच्छत्रं मुरद्वेषिणः ॥ १९ ॥
शुद्धप्रासादमूर्ध्वं ध्वजचलपटीकोटकोटीरभावं
बिभ्राणे शुभ्रभानौ दिशि दिशि विदिशि भ्राजिनादभ्रभानौ ।
बुन्देलाभूपतीन्द्रोरधिगतजगतीजैत्रकैलासकूटे
नं कैनातापमङ्गा जगदुपरिघनभ्रमभ्रोल्लपन्ति ॥ २० ॥

इन्दिरेन्दुमधिगत्य सुन्दरं
वीरसिंहकृततुङ्गमन्दिरे ।
छत्रयन्नुदयते फणीश्वरः
स्वां फणां ध्वजपटीनसाख्या ॥ २१ ॥

प्रासादोद्यत्तुपाराचलमतिरचलन्मण्डलं चण्डभानो-
स्तं दृष्ट्वा द्रष्टुकामः फणिपतिरदगाद्धाम वैकुण्ठधाम ।
वैकुण्ठं सन्दधानो रजनिमणिरसौ तन्मणिर्मध्यरात्री
वातध्याभूतपूतध्वजपटममरा वर्णयन्त्येवमेव ॥ २२ ॥
यः सौन्दर्यमये मुकुन्दनिलये दृग्वीक्षणं योक्षणं
स्थाणुर्वा पुरुषोऽयं वेति वहते तस्मिन् सतां संशयः ।
नाश्चर्यं तदपि प्रतीहि यदभावाश्चर्यभूमा मुने
पाषाणप्रतिमामिपोऽजडिमा तस्मिन् रमावल्लभः ॥ २३ ॥
भूयिष्ठानि पदानि कैटभभिदः प्रेष्ठानि भूमण्डले
तत्रास्मौ मथुरा नितान्तमधुरा तत्रापि तन्मन्दिरम् ।
तत्किं नारद वेदयामि विदितं ते नाथि सर्वं पुरो
बुन्देलापतिचेतसीव मुरजित्तत्रैव विभ्राजते ॥ २४ ॥

उपरिष्टात्प्रदर्शितैरानन्दचम्पूगतैर्वीरसिंहमाहात्म्येन श्रीमित्रमिश्रनिर्मापितभगवन्मन्दिरवर्णनपरैः पद्यैस्तस्य मन्दिरस्य लोकोत्तरसुषमाशालित्वं स्पष्टं प्रतीयते । कविगिरामत्युक्तिबहुलत्वांशं पृथक्कृत्याऽपि मन्दिरस्याऽसाधारणत्वमभ्युपगन्तव्यमेव । न हि कोऽपि कविः साधारणं शोभावर्जितं मन्दिरमुद्दिश्यैवंविधैः पद्यैरीदृश्या सरण्या इत्थंकारं वर्णयितुमुत्सहेत । दुर्दैवादस्माकं भारतीयानां, मूर्तिमतेवाऽशुभकर्मणा विरसत्विनेन लब्धजन्मना औरङ्गजेबनाम्ना यवनसम्राजा तस्य मन्दिरस्य निपाति तत्रासत्सौन्दर्यसमृद्धयादिकमिदानीं कथाशेषमेवास्ति । सा कथाऽपि आनन्दचम्पूग्रन्थे वर्णिता । स च ग्रन्थो नाऽद्यावधि मुद्रित इति निम्नस्थमपि मन्दिरवर्णनं ततः समुद्धृत्य विदुषां प्रीतये इह सन्निवेशितम् ।

मित्रमिश्रस्य पितृपितामहादिपरिचयस्तु तदीयपरिभाषाप्रकाशोपोद्घातानुसारेण पूर्वं प्रदत्त एव । आनन्दचम्पूग्रन्थे मित्रमिश्रेण यत्किंचित्स्वविषये स्ववंशविषये च परिभाषाप्रकाशोपोद्घातापेक्षयाऽधिकमुक्तमस्ति तदिह सङ्गृह्यते—

गोपाचलवासिनो हंसपण्डितस्य पौत्रः परशुराममिश्रस्य पुत्रो वीरसिंहदेवाश्रितो मित्रमिश्र इत्येतावदेव मित्रमिश्रविषये पूर्वमुल्लिखितम् । आनन्द(१)चम्पूनामा

(१) द्वौ ज्यायांसौ प्रशस्तानुगगुणगणौ धीरधारारतौ सौ
कंसारातेरिवांशौ धृतिसुमतिदयामांसलावुन्नतौ तौ ।
एको मानी+++गुणिमुकुटमणिः स्पर्धमानत्रिमूर्धान्
सोदर्यान् साधुचर्यान्++++इव ते यस्य चासंत्रयोऽपि ॥ १ ॥
ज्येष्ठाज्ज्येष्ठो गरिष्ठो बहुलगुणभरः श्रेष्ठकारैकनिष्ठः
प्रेष्ठः क्ष्माष्टमाजामपि चरितवशाभिभूतभूयो दिविष्ठः ।
मुख्यो वीरेश्वराख्यो महिमवहलिमक्षोभितक्षीरसिन्धुः
श्रीबन्धुध्यानबन्धीभवदमलमना सिन्धुरो यस्य बन्धुः ॥ २ ॥
यस्य ज्येष्ठानुजन्मा जगदुदितयशा फुल्लमल्लीमतल्ली

मित्रमिश्रेण स्वस्य त्रयो भ्रातरो द्वौ ज्यायांसावेकः कनिष्ठश्चासादित्युक्तम्। तत्र मुख्यो ज्येष्ठो वीरेश्वरस्तदनुजन्मा चक्रपाणिरिति। श्रीमित्रमिश्रस्य कनीयान् भ्राता श्रीयोगादित्यमिश्रनामासीत। 'मिश्र' इत्यस्योपाधिरासीत्। अयं च पञ्चगौडान्तर्गत'सनाढ्य'जातीयो ब्राह्मण आसीदित्यप्यानन्दचम्पूसमाप्तावुपन्यस्तमस्ति।

यथा—

श्रीगोविन्दकृपानुविन्दनफलां श्रीवीरसिंहोज्ज्वलां
प्रालेयाद्रिसुतानुभाव कवचोकंपाच चम्पूचमूम्। (?)
जेतुं कालकलौ वलौकसि कलौ काले करालेऽधुना
सान्नाढयः स गुणाढ्य एष विदधे श्रीमित्रमिश्रः कृती।

आनन्दचम्पूसमाप्तौ तन्निर्माणसमयोऽपि ग्रन्थकर्त्रा इत्थमुपन्यस्तः—

मीनारोहिणि रोहिणीसहचरे कृत्वाऽन्तिके रेवतीं
याते चण्डमरीचिमालिनि तुलां वारे च वाचस्पतेः।
शाके खाङ्कगतर्तुभूपरिमिते ह्यानन्दकन्दाभिधां
चम्पूं पूरितवान् सितस्मरतिथौ श्रीमित्रमिश्रः कृती।

एतेन १६९० शके तुलास्थे सूर्ये शुक्लपक्षपञ्चमीतिथौ गुरुवासरेऽस्य ग्रन्थस्य पूर्तिर्जातेति सिद्धम्। अत्र शकपदेन विक्रमशकएव लक्षितः प्रतिभाति। श्रीमदकब्बरपुत्रजहांगीरसमयएव मित्रमिश्रस्याऽपि समय इति तु वीरसिंहावदानैः सिद्धमेव। तथा च तस्य समयस्यानुरोधेन पूर्वोक्तः शको वैक्रम एवेत्यभ्युगन्तव्यमेव।

मित्रमिश्रप्रणीतान् ग्रन्थान् पश्यन्तो वयं तस्य लोकोत्तरं वैदुष्यं, असाधारणीं निर्माणधोरणीं, निरुपमं च सर्वविषयावगाहित्वं बाढमभ्युपगच्छामः। केवलं वीरमित्रोदयाख्यनिबन्धस्यैव द्वाविंशतिप्रकाशानां श्लोकसंख्या लक्षद्वयं भवति। अन्येषां ग्रन्थानां संख्या तु न तत्र गणिता। इत्थंभूते व्यतिकरे एकस्यैव विदुषः सर्वदा राजसेवासंलग्नस्यैतादृशमहापरिमाणग्रन्थनिर्माणं कथं सुशकमासीदिति चित्रार्पितचित्तवृत्तिष्वस्मासु सत्सु किमनेन पण्डितान्तरद्वारा ग्रन्थाः कारिता उत स्वयमेव सर्वे कृता इति विचिकित्सायां चेतसि कृतपदायां याज्ञवल्क्यस्मृतिटीकात्मकवीरमित्रोदयोपोद्घाते पद्यमेकमुपलब्धं, यत्र सदानन्दनामा कश्चिन्मैथिलः पण्डितो मित्रमिश्राज्ञया ग्रन्थमिमं जग्रन्थेत्युक्तम्। ततः परं तत्रैवापरेणैकेन पद्येन श्रीवीरसिंहद्वारि मित्रमिश्रावस्थितिः सम्यक् वर्णिता, सा च मित्रमिश्रस्य स्वरचना भवितुं

---

लक्ष्मश्रेणिश्चक्रपाणि र्गुणमणिविपणिः प्रीतिमच्चक्रपाणेः।
मर्यादौदार्यधैर्याद्यवधिरनवधिश्रेष्ठनिःशेषविद्या-
रम्भैर्जम्भारिसम्भावितगुरुरिव सोऽदम्भधीरुज्जिजृम्भे॥ २॥
वाचा वाचामधीशो मुनिरपि तपसा तेजसा वीतिहोत्रो
द्रोणस्पर्द्धी समृद्धोत्सवनिवहतया युद्धमध्ये च यस्य
निःकृच्छ्रः श्रीसहस्रद्युतिरिव दमयन् द्राक् तमिस्रं तनूजैः
श्रीयोगादित्यमिश्रः समुदयमयते भक्तिनिष्ठः कनिष्ठः॥ ३॥

नार्हतीति तथाविधेन तेन श्लोकद्वयेन स्पष्टमेवेदं यन्मित्रमिश्रः पण्डितान्तरद्वारा स्वनाम्ना ग्रन्थान् विरचयामास । नेदमाश्चर्यावहं, ततः किञ्चित्पूर्वं अकबरसमये टोडरमल्लनृपतेरादेशेन तन्नाम्ना पण्डितैः 'टोडरानन्द'नामा महान् ग्रन्थः प्रणीत एवासीत् । यावज्जीवं सङ्ग्रामसंसक्तस्य टोडरमल्लस्यैतादृशमहाकायग्रन्थनिर्माणायाऽवसर आसीदिति तु न केऽपि कथयितुं प्रभवेयुः मित्रमिश्रेणापि सैव सरणिरनुसृतेति प्रतिभाति । ते श्लोकाश्च—

आरोहो गीर्लतायाः सदुपकृतिपदं धर्मभूमीरुहाणा-
मुद्याने शुद्धकीर्तेरुपचयभवने श्रीमृगीवागुरेव ।
आकारो विप्रताया निधिरपि महसः सर्वविधानवद्यो
यद्द्वारि द्योतते श्रीद्युमणिरिव समो मूर्छयन् मित्रमिश्रः ॥ १ ॥
क्ष्माचक्रं धारु चक्रे समुचितनयतो रक्षितुं भूमिदेवान्
देवांश्च प्राप्तसेवान् विमलमपि यशो वीरसिंहो नरेन्द्रः ।
वित्तं मत्वाऽप्यसारं वितरदविरतं याज्ञवल्क्योक्तिमुक्ता-
हारं स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम् ।
उत्तरम्भीरशुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्
श्रीभाजो मित्रमिश्रात्मजदुपकृतये विप्रदारैरवादीपम् ॥ २ ॥
ज्ञानानां दैन्यदोषापहमकलिमयं याज्ञवल्क्योक्तिकोशाद्
दृष्ट्वा स्मृत्यर्थसारं समचिनुत यशो धर्मलक्ष्मीविहारम् ॥ ३ ॥

एतावता स्पष्टमिदं यदियं याज्ञवल्क्यस्मृतिटीका सदानन्दनाम्ना मैथिलविदुषा मित्रमिश्रनाम्ना प्रणीतेति । एवमन्येऽपि मित्रमिश्रनाम्ना प्रसिद्धा ग्रन्था अन्यैरन्यैः पण्डितैर्निर्माय मित्रमिश्रनाम्ना प्रख्यापिताः स्युः । अतएव वीरमित्रोदयनिबन्धस्य याज्ञवल्क्यस्मृतिटीकायाश्च निर्माणशैली न मिथः संवदति । तत्र कर्तृभेद एव मूलमिति प्रतिभाति ।

मित्रमिश्रनिर्मितत्वेन प्रसिद्धा ग्रन्थास्त्विमे—

( १ ) वीरमित्रोदयः ( महान् धर्मशास्त्रनिबन्धः )

तस्य द्वाविंशतिप्रकाशाः ।

१ परिभाषाप्रकाशः
२ संस्कार ,,
३ आह्निक ,,
४ पूजा ,,
५ प्रतिष्ठा ,,
६ राजधर्म ,,
७ व्यवहार ,,
८ शुद्धि ,,
९ श्राद्ध ,,
१० तीर्थप्रकाशः
११ दान ,,
१२ व्रत ,,
१३ समय ,,
१४ ज्यौतिष ,,
१५ शान्ति ,,
१६ कर्मविपाक ,,
१७ चिकित्सा ,,
१८ प्रायश्चित्त ,,

१९ प्रकीर्णक ,,
२० लक्षण ,,
२१ भक्ति ,,
२२ मोक्ष ,,

२ याज्ञवल्क्यस्मृतिटीका ( वीरमित्रोदयाख्या )

३ आनन्दचम्पूः ।

तत्र वीरमित्रोदयनिबन्धस्याद्याः अष्ट प्रकाशा मुद्रिताः । अन्येऽद्याऽप्यमुद्रिता एव सन्ति । याज्ञवल्क्यस्मृतिटीका तु सम्प्रत्येव मुद्रिता । आनन्दचम्पूरप्यद्यावध्यमुद्रितैव । इत्थमिदं ग्रन्थकर्तुरितिवृत्तं यथावदुपलब्धं विदुषां पुरो निहितम् ।

## प्रस्तुतं संस्करणम् ।

एतावत्पर्यन्तं ग्रन्थप्रणेतृविषये ऐतिह्यमुपनिबद्धम् । ग्रन्थगौरवविषये तु न किमपि वक्तुमावश्यकम् । आसेतु शीताचलं सर्वैर्विद्वद्धुर्यैर्मूर्ध्ना समादृताया याज्ञवल्क्यस्मृते र्मिताक्षरायाः वीरमित्रोदयस्य च तथाविधस्य विषये किमस्माभिरधिकं वक्तुं शक्यम् ।

याज्ञवल्क्यस्मृतिर्मिताक्षरा च मुद्रितपुस्तकावलम्ब्येनैव पुनर्मुद्रिता, वीरमित्रोदयटीकायास्तु द्वे पुस्तके आदर्शभूते काशीस्थराजकीयसरस्वतीभवनपुस्तकालयस्थे समासाद्य प्रवर्त्तितं सम्पादनकार्यम् ।

अशुद्धयोरपि तयोरेव पुस्तकयोः साहाय्येन प्रवृत्तेऽस्मिन् संस्करणे महता प्रयासेन सावधानतया सम्पादितेऽपि संशोधने विद्यमानासु त्रुटिष्वदत्तावधानाः सुधियः समास्वादयन्तु मित्रमिश्रवाचाममन्दं मधुरिमाणम् । महाकायस्यास्य ग्रन्थस्य संशोधनकार्यं प्रायः श्रीमत्पण्डितवरैः साहित्योपाध्याय व्रतकोशग्रन्थकार जगन्नाथशास्त्रिहोशिङ्गमहाशयैरेव सम्पादितमिति ते सविशेषं धन्यवादार्हाः । यत्र यत्र तेषां सन्देहः समुद्भूत्तत्र तत्रैव तैः पृष्टैरस्माभिः स्वबुद्ध्या विचार्य संशोधनं विहितमिति वस्तुस्थितिः ।

भूमिकालेखाय प्रवृत्तैरस्माभिस्तत्कार्यं पूज्यतमानां काशिकराजकीयपाठशालाप्रधानाध्यक्षश्रीगोपीनाथकविराजमहोदयानां महनीयेन साहाय्येनैव सम्पादितमिति शतशो धन्यवादै स्तानभिनन्दामः ।

पर्यवसाने श्रीमते श्रेष्ठिने श्रीजयकृष्णदासगुप्तायाऽनेकान् शुभाशीर्वादान् वितरामः । येन खलु व्यापारिजनसाधारणं लाभमसम्भावयताऽपि गीर्वाणवाणीसमुद्धरणप्रवणेन महाकायोऽयं ग्रन्थः संमुद्य प्रकाशितः ।

एतादृशे महापरिमाणेऽस्मिन् ग्रन्थेऽक्षरयोजकदोषेण संशोधकस्याऽसावधानतयाऽन्येन वा कारणेन वर्तमानान् दोषान् अविगणय्य दयालवः सुधियः प्रबन्धस्य माधुरीमविकलमास्वादयन्त्विति सशिरःप्रणाममभ्यर्थयते विपश्चिदपश्चिमान् सविनयम् ।

काशीस्थराजकीयपुस्तकालयः
सरस्वतीभवनम् । काशी
संवत् १९८७

श्री नारायणशास्त्री खिस्ते

याज्ञवल्क्यस्मृतेस्य–

# विषयानुक्रमणिका ।

## अथाचाराध्यायः १

इत्याचाराध्यायः ।

## अथ व्यवहाराध्यायः २

## सीमाविवादप्रकरणम् ९

## प्रायश्चित्ताध्यायः ३

इति प्रायश्चित्ताध्यायसूचीपत्रम्।

समाप्तेयं याज्ञवल्क्यस्मृतिविषयसूची।

---


सर्वविधपुस्तकप्राप्तिस्थानम्—
जयकृष्णदास–हरिदास गुप्त—
**चौखम्बा संस्कृत सीरिज़ आफिस,**
विद्याविलासप्रेस, गोपालमन्दिरके उत्तर फाटक,
बनारस सिटी।

॥ श्रीः ॥

# ॥ याज्ञवल्क्यस्मृतिः ।

श्रीमन्मित्रमिश्रकृत वीरमित्रोदयाख्यव्याख्यया
श्रीमद्विज्ञानेश्वरकृतया मिताक्षराख्यव्याख्यया च
संवलिता ।

(वी०मि०) निःस्वाम्यं स्वस्य शंसन्निव विदधदिव द्वैतवार्तामिहार्ता-
मद्वन्द्वं शीलयिष्यन्निव च निजपदं शीलिताऽद्वन्द्वभावः ॥
अन्यासां शुद्धसत्त्वाङ्कुर इव विशदो विश्वभृत्क्रोडभर्तु-
र्दंष्ट्रेवोच्चैरनाशी हरमुकुटशशिविकद्दन्तस्य दन्तः ॥ १ ॥
अस्ति क्षोणीप्रशस्तिस्तनुरिव गिरिशस्योण्डछी(१)पूरपूर्णा
धुर्या रामासदुर्गा तनुरतनुरिपुर्बिभ्रती भूरिभूतिम् ॥
नीराजद्राजलक्ष्मीः सगुणमपि रुचा निर्धुनाना पिनाकं
दप्यपन्नागाजिनश्रीः सुवृषमधिगता नागरावद्धशोभा ॥ २ ॥
अरिकुलकरिकुम्भकूटपाटी शिखरितटीमिव यां प्रभापरीयान् ॥
अधिवसति महीन्दुवीरसिंहो मधुकरसाहिमहीशसिन्धुजन्मा ॥ ३ ॥
श्रेयःसम्भूतवीरसिंहनृपतेराप प्रतापोदया-
द्दावोद्दामद्रुताशनाहितचमूदार्द्रेन्धनस्य श्रियम् ॥
या(२) चाऽन्तः स्फुटति ध्वनिं प्रकटयत्यश्रुधारारसा-
विर्भाव्यं तनुते तनोति कुयशोधूमैर्जगच्छ्यामलम् ॥ ४ ॥
गाम्भीर्यं बहु वीरसिंहनृपतेरम्भोधिरन्तः स्मरन्
दुर्वारौर्वशिखिच्छलेन निबिडप्रौढोपतापं दधौ ॥
स्मारंस्मारमुदारसारमधिकोद्भ्रच्चमत्कारतो
जातोऽचेतन एव जातजडिमा श्यामाकृतिः क्ष्माधरः ॥ ५ ॥
यादवाऽऽलयान्तरालस्थगितमिव मनः कामकौमारकेली-
मस्वीकुर्वन् किशोरीचरण इव रिपुश्रृङ्खलीभूय भूयः ॥

---

(१) छा-ह ते खपुस्तके पाठः । (२) पेनऽन्त इति खपुस्तके पाठः ।

क्रीडान्तावस्थकान्ताजन इव विगलत्कुन्तलो व्यस्तवासा
यस्य त्रासाज्जरत्याः स्तन इव निपतन्नुर्वीतं नैव लेभे ॥ ६ ॥
भगोलाद् भूगोलाद्बहिरभियियासन्ति भवितुं
पठानाः पाठीना इव जलविलीनां धियमधुः ॥
मघो मोघारम्भोऽप्यसंराति बुंदेलाकुलपतौ
रणार्थं दुर्वारे रणति रणसारे रणभुवि ॥ ७ ॥
बिभ्राणो बुधमित्रतां कविगुरू राजा धरानन्दनः
शोभाभिर्विलसत्तमो दिवि लसत्केतुश्च भास्वत्सुतः ॥
इत्थं जन्यजनुर्नवग्रहतनुः किन्त्वस्ति तुङ्गः सदा
सोद्रेकः किल वीरसिंहधरणीधौरेयचूडामणिः ॥ ८ ॥
शुभ्राभाविभवार्थमात्तवृषभो भोगीन्द्रभागीरथी-
भास्वद्भूतिभनाथभूषितवपुः कैलासवासी भवन् ॥
वीरश्रीयुतवीरसिंहनृपतेः सम्भाव्य शम्भुर्यशः
शान्त्यै साम्यविधेर्बभार गरलं कण्ठे किमुत्कण्ठितः ? ॥ ९ ॥
हेमोर्वीधरकर्णिकापरमहाशैलौघसंवर्तिका
व्यालेन्द्रैकमृणालिका गजघटाव्यालीनभृङ्गालिका ॥
सप्ताम्भोधिमधूलिकाविमलिका क्षोणीयशोमालिका
सम्पर्के ऽप्रतिमल्लवीरनृपतेः शुभ्रारविन्दायते ॥ १० ॥
व्रीडाभिर्जडिमोदयादुपलतां चिन्तामणिः पादपं
कामं कामगवी च कल्पविटपी स्वर्गाटवीं गाहते ॥
आकर्ण्यार्जितवीरसिंहनृपतेर्दानोर्जिहानं यशः
सान्तर्द्धानतया ऽद्य निर्दयमधो नेतारमस्तौद्बलिः ॥ ११ ॥
वसु वर्षति वीरसिंहदेवे जलदः केवलमम्बु यद्द्विजेषु ॥
इयतैप यशोवदातविश्वो मलिनः सोऽजनि लज्जया तयैव ॥१२॥
दूराद् दुश्च्यवनो दिवसपतिरभूद्दिक्कोणभाक् पावकः
कीनाशः स्वयमेव दण्डमितवान् रक्षोपि रक्षोक्तिभाक् ॥
पाशं च स्वयमाददे पतिरपां वातो गतो ऽदृश्यतां
प्रस्थाने धनदोऽस्य गुह्यकपदं दुर्गातिमुग्रो ऽचरत् ॥ १३ ॥
आरोहो गीर्लतायाः सदुपकृतिपदं धर्मभूमीरुहाणा-
मुद्यानं शुद्धकीर्तेरुपचयभवनं श्रीमृगीवागुरेव ॥
आकारो विप्रताया निधिरपि महसः सर्वविद्याऽनवद्यो

यद्वारि द्योतते श्रीद्युमणिरिव तमो मूर्च्छयन्मित्रमिश्रः ॥ १४ ॥
स्वाचारः चारु चक्रे समुचितनयतो रक्षितं भूमिदेवान्
देवांश्च प्राप्तसेवान् विमलमपि यशो वीरसिंहो नरेन्द्रः ॥
वित्तं मत्वाऽप्यसारं वितरदविरतं याज्ञवल्क्योक्तिमुक्ता-
हारं स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम् ॥१५॥
उत्तरस्तीरभुक्तेरखिलबुधगुरुः श्रीउदानन्दधीमान्
श्रीमाञ्जो मित्रमिश्राज्जगदुपकृतये विप्रदादेशदीपम् ॥
ज्ञानानां दैन्यदोषापहमकालिमयं याज्ञवल्क्योक्तिकोशाद्
दृष्ट्वा स्मृत्यर्थसारं समचिनुत यशो धर्मलक्ष्मीविहारम् ॥ १६ ॥

इह हि भगवता महर्षिणा याज्ञवल्क्येन लोकहिताय प्रणीतं धर्मशास्त्रं तच्छिष्यप्रवरो मानवं भृगुरिव प्रश्नोत्तरप्रबन्धेन संक्षिप्य वक्तुं प्रस्तौति—

योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् ॥
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥

इत्येवं सम्प्रदायविदोऽवतारयन्ति। परे पुनर्योगीश्वरमित्याद्यपि याज्ञवल्क्यप्रणीतमेव। 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इति [ जै० सू० ३।१।४। ] 'तदुपर्यपि बादरायणः सम्भवात्' [ ब्र०सू० १।३।२६ ] इत्यादावाचार्याणामित्थमेव स्वग्रन्थे स्वनामकीर्तनस्य दर्शनात्। योगीश्वरमित्यादि स्वोत्कर्षकीर्तनं तु शिष्याणां श्रद्धाधिक्याय न त्वभिमानविशेषविजृम्भितमिति वर्णयन्ति।

इदं च शास्त्रमध्यायत्रयात्मकम् । तत्र प्रथमेऽध्याये-(१) उपोद्घातप्रकरणम् [ श्लो० १-९ ] (२) ब्रह्मचारिप्रकरणम् [ श्लो० १०-५० ] (३) विवाहप्रकरणम् [ श्लो० ५१-८९ ] (४) जातिवर्णविवेकप्रकरणम् [ श्लो० ९०-९६ ] (५) गृहस्थप्रकरणम् [ श्लो० ९७-१२८ ] (६) स्नातकप्रकरणम [ श्लो० १२९-१६६ ] (७) भक्ष्याभक्ष्यप्रकरणम् [ श्लो० १६७-१८१ ] (८) द्रव्यशुद्धिप्रकरणम् [ श्लो० १८२—१९७ ] (९) दानप्रकरणम् [ श्लो० १९८-२१६ ] (१०) श्राद्धप्रकरणम् [ श्लो० २१७-२७० ] (११) शान्तिप्रकरणम् [ श्लो० २७१-३०८ ] (१२) राजधर्मप्रकरणम् [ श्लो० ३०९-३६८ ] एवं द्वादश

प्रकरणानि। द्वितीयतृतीयाध्याययोस्तु प्रकरणानि तत्र तत्राऽभिधास्यन्ते। तदेतद्यथामति प्राचीननिबन्धानुपजीव्य व्याख्यायते।

योगीश्वरमित्यादि। योगो वृत्तिनिरोधः तद्वतामीश्वरं श्रेष्ठम्। एतेन सार्वज्ञ्यं सूचितम्। यद्वा, प्रशंसायामिनिः। प्रशस्तयोगवन्तमीश्वरमणिमादिविभूतियुक्तञ्च। अणिमादिकमभिधाय 'ऐश्वर्यं कारणैरेभिर्योगिनः प्रोक्तमष्टधा' इति मार्कण्डेयपुराणात्। अत्र योगीश्वरपदप्रयोगान्मङ्गलमपि निबद्धं वेदितव्यम्। याज्ञवल्क्यमिति=नामाऽनुकीर्तनम्। सम्पूज्य=कायवाङ्मनोभिः सम्यक् समाराध्य। मुनयः=सोमश्रवःप्रमुखाः। अब्रुवन्। किम्? वर्णेत्यादि। वर्णाः=ब्राह्मणादयः। आश्रमाः=ब्रह्मचर्यादयः 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः' इत्यनुशासनात्। इतरे=सङ्कीर्णाः। 'द्वन्द्वे च' इति सर्वनामसंज्ञानिषेधादितराणामिति रूपम्। वर्णादीनां पुंस्त्वं चाऽत्र न विवक्षितं बीजाऽभावात् स्त्रीणामपि सङ्ग्रहः, सामान्यपरत्वान्नपुंस(१)कतेतरशब्देन तासामप्युक्तिरित्यप्याहुः। तेषां धर्मान्=स्मार्तान् अस्मत्सन्देहास्पदत्वोचितान्। अशेषतः=कार्त्स्न्येन। नः=अस्मान्। ब्रूहि।

इत्थं व्याख्याने च केषाञ्चिद्धर्माणामग्रेऽनभिधानेऽपि न न्यूनतेत्यवधेयम्। न च दण्डनीतिदारोपगमादीनां लौकिकत्वेन धर्मभिन्नानामप्यभिधानादाधिक्यमाशङ्कनीयम्, तेषामपि नियमविषयतया धर्मत्वाद्विध्यादिविषयतयेव यागादीनां स्वरूपतस्तेषामलौकिकत्वात्। विध्युपसन्दानेन तु तेषामलौकिकत्वं दण्डनीत्यादीनां च नियमोपसन्दानेनेति न कश्चिद्विशेषः। इदमेव चाऽभिसन्धाय भगवान् जैमिनिर्धर्मलक्षणं विवक्षन्नसूत्रयत् "चोदनालक्षणोऽर्थो धर्मः" [ जै०सू० १।१।२। ] इति। एतत्सूत्रव्याख्यानं च प्रकृतोपयोग्यपि विस्तरभयान्नेह ततमन्यत्र द्रष्टव्यम्। धर्मानित्याद्यर्थबहुवचनेन चतुर्वर्गस्य ग्रहणमिति स्मृतयः। अतो धर्मोऽभिधेयः कण्ठत एव दर्शितः। स च षड्विधः—वर्णधर्म, आश्रमधर्मो, वर्णाश्रमधर्मो, गुणधर्मो, निमित्तधर्मः, साधारणधर्मश्च। तत्राऽऽद्यो मद्यपानवर्जनादिः, द्वितीयो भैक्ष्यचर्यादिः, तृतीयः पालाशदण्डधारणादिः, चतुर्थः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः, पञ्चमः प्रायश्चित्तम्, षष्ठः=अहिंसादिः। द्विविधश्च प्रवृत्तनि-

(१) सकलिङ्गेनेतरशब्देन इति खपुस्तके पाठः।

वृत्तभेदात् । तथा च मनुः—

प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म वैदिकम् ।
इह चाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ।

त्रिविधश्च नित्यनैमित्तिककाम्यभेदादिति विवेक्तव्यम् । प्रयोजनं तु स्वर्गाद्यलौकिकश्रेयःसाधनवाचिना धर्मपदेनैव सूचितम् । धर्मज्ञानादिप्रणाडिकयैतच्छास्त्रस्य धर्मप्रयोजकतायाः कटाक्षितत्वादिति ॥ १ ॥

( मिता० ) धर्माधर्मौ (१)तद्विपाकास्त्रयोऽपि
(२)क्लेशाः पञ्च प्राणिनामायतन्ते ॥
यस्मिन्नेतैर्नो परामृष्ट ईशो
यस्तं वन्दे विष्णुमाकारवाच्यम् ॥ १ ॥
याज्ञवल्क्यमुनिभाषितं मुहु-
र्विश्वरूपविकटोक्तिविस्तृतम् ॥
धर्मशास्त्रमृजुभिर्मिताक्षरै-
र्बालबोधविधये विविच्यते ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यमुनिप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास । यथा (३)मनुप्रणीतं भृगुः । तस्य चायमाद्यः श्लोकः—

योगीश्वरमिति । योगिनां सनकादीनामीश्वरः (४)श्रेष्ठस्तं याज्ञवल्क्यं संपूज्य मनोवाक्कायकर्मभिः पूजयित्वा मुनयः (५)सोमश्रवःप्रभृतयः श्रवणधारणयोग्या अब्रुवन् उक्तवन्तः धर्मान्नोऽस्मभ्यं (६)ब्रूहीति । कथम् ?

---

( १ ) जात्यायुर्भोगा विपाकाः ।

( २ ) अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ( पात० सू० २ । ३ । ) तत्राऽविद्या नाम अनित्ये, अशुचौ, दुःखे, अनात्मनि च नित्यशुचिसुखात्मता प्रत्ययः । वस्तुनोऽन्यतरविभक्तयोरपि दृक्शक्तिदर्शनशक्त्यात्मनोः पुरुषबुद्ध्योरनात्यविवेकादेकस्मिन् बुद्ध्येकात्मताभ्यास पुरुषस्याऽस्मिता ।

अनुभूतसुखस्य तत्र तत्साधने वा लोभो रागः ।
अनुभूतदुःखस्य तत्र तत्साधनेषु परिजिहीर्षा द्वेषः ॥

पामरस्येव श्रुतानुमितविवेकिनोऽपि विदुषो यो नैसर्गिको दृढो मरणादेस्त्रासः सोऽभिनिवेशः ।

( ३ ) मनुनोक्तं ख० ( ४ ) प्रभुस्तं ख० ( ५ ) सोमश्रवःप्रभृतय क० ( ६ ) ब्रूहि कथयेति क०

अशेषतः कार्त्स्न्येन केषाम् वर्णाश्रमेतराणाम् वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचारिप्रभृतयः, इतरे ऽनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः। इतरशब्दस्य 'द्वन्द्वे च' इति सर्वनामसंज्ञाप्रतिषेधः। अत्र च धर्मशब्दः (१)षड्विधस्मार्तधर्मविषयः । तद्यथा–वर्णधर्म, आश्रमधर्मो, वर्णाश्रमधर्मो, गुणधर्मो, निमित्तधर्मः, साधारणधर्मश्चेति । तत्र वर्णधर्मो 'ब्राह्मणो नित्यं मद्यं वर्जयेत्' इ २)त्यादिः । आश्रमधर्मोऽग्नीन्धनभैक्ष्यचर्यादिः। वर्णाश्रमधर्मः 'पालाशो दण्डो ब्राह्मणस्य' इत्येवमादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः । निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम् । साधारणधर्मोऽहिंसादिः । 'न हिंस्यात्स(३)र्वाभूतानि' इत्याचण्डालं साधारणो धर्मः । 'शौचाचा(४)रांश्च शिक्षयेत्' इत्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते। तत्र चायं क्रमः । प्रागुपनयनात्कामचारकामवादकामभक्षाः । ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनं, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनं, ततस्तदर्थजिज्ञासा, ततस्तदर्थानुष्ठानमिति । तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम् । प्राधान्यं च धर्ममूलत्वादितरेषाम् । न च वक्तव्यं धर्ममूलोऽर्थो ऽर्थमूलो धर्म इत्यविशेष इति । यतोऽर्थमन्तरेणापि(५)जपतपस्तीर्थयात्रादिना धर्मनिष्पत्ति, रर्थलेशोऽपि न धर्ममन्तरेणेति । एवं काममोक्षावपीति॥१॥

मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन् ॥
यस्मिन्देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत ॥ २ ॥

(वी० मि०) मिथिला विदेहनगरी तस्यां स्थितः । एतेन देशप्रकर्षनिबन्धनोऽध्यापनोपयोग्युत्कर्षः सूचितः । स तथा पृष्टः योगीन्द्रः= योगिनां परमेश्वरोऽपि । क्षणं=कञ्चित्कालमभिव्याप्य । ध्यात्वा प्रकृत-

(१) स्मार्तकधिषयः० (२) वर्जयेदिति क.
(३) अयमेव पाठो युक्तः । सर्वभूतानि इति ख. पाठः.
(४) श्रत्युक्तशौचाचारान ख. (५) जपतीर्थयात्रा क० ख०

वचनैरपरिमितमर्थजातं कश्चित्स्वैरमनः, कश्चिच्च मनःप्रणिधानेन चिन्तयित्वा। 'क्षणमात्रमृषिस्तस्थौ सुप्तमीनो यथा ह्रदः। सोऽपश्यत्प्रणिधानेन' [रघु० १।७३,७४] इत्यादौ योगिनामपि सूक्ष्मेक्षणाय प्रणिधानप्रतिपादनात्। अब्रवीत्—यस्मिन्देश इत्यादि। मुनीन्=मननशीलान् तर्कोपजीविन इति यावत्। प्राचीनाचार्यशैलीमनुसरता महर्षियाज्ञवल्क्येनाऽत्राऽनुक्तैरपि स्मृत्यन्तरोक्तैः कैश्चिद्धर्मैरेतच्छास्त्रोपबृंहणं शिष्याणां सामर्थ्यसूचनादनुक्त(१)निबन्धनान्यूनता परिहृतेत्यवधेयम्। धर्मान्=बुभुत्सितान्। निबोधत=निश्चयबोधविषयीकुरुत। बोधस्य यथार्थं देशकालहेतुस्वरूपलक्षणप्रमाणफलादितत्तद्धर्मसम्बन्धिक्रोडीकरणेनेति प्रथमतः प्राधान्याद्देशेन धर्मान् विशिनष्टि। यस्मिन्=कचिदपि देशे=भूभागे भारतवर्षरूपे, तदुपक्रम्य 'कर्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्' इति विष्णुपुराणात्। मृगः कृष्णः=कृष्ण इत्यर्थः। चरति=स्वभावत इति शेषः। 'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः' इति मनुवचनात्। तस्मिन् अनुष्ठेयान्। अत्र यस्मिन्नित्यादिसिद्धबहिर्भूतब्रह्मावर्तादेः पुण्यत्वाभिधानमन्यत्र प्रशंसार्थम्।

आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्।
तयोरेवाऽन्तरं गिर्योरार्यावर्तं प्रचक्षते॥

इति मनुना कृष्णसाररहितस्याऽपि देशस्याऽऽर्यावर्तत्वकथनेन धर्मत्वप्रतिपादनं तु असम्पूर्णधर्माभिप्रायेण; विशिष्टदेशे धर्माणामेव विशेषणाद्धर्मोत्पत्तावार्यावर्तादिविशेषो नाऽपेक्षितः, किन्तु भारतवर्षमात्रमिति मन्तव्यम्॥ २॥

( मिता० ) एवं पृष्टः किमुवाचेत्याह—

मिथिलास्थ इति। मिथिला नाम नगरी तत्रावस्थितः स याज्ञवल्क्यो योगीश्वरः क्षणं ध्यात्वा कञ्चित्कालं मनः समाधाय एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान्मुनीन्। किम्। यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः॥ २॥

(१) दनुक्तनिबन्धनन्यूनता–इति क पुस्तके पाठः।

( वी० मि० ) अथ धर्मस्य प्रयोजनहेतून् प्राधान्यगुणत्वाभ्यामापाततः संमुग्धानेव प्रमितिप्रयोजकांश्च प्रदर्शयन् प्रकृतशास्त्रस्य पूर्वकटाक्षितधर्मप्रयोजकताप्रकटनेन प्राक् सूचितं प्रयोजनसम्बन्धं स्फुटयति—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३ ॥

पुराणानि—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

इति लक्षितानि ।

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथाऽन्यन्नारदीयं च मार्कण्डेयञ्च सप्तमम् ॥
आग्नेयमष्टमं चैव भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥
वाराहं द्वादशं चैव स्कान्दं चाऽत्र त्रयोदशम् ।
चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यञ्च गारुडं चैव ब्रह्माण्डञ्च ततः परम् ।

इति विष्णुपुराणे दर्शितानि ।

कौर्मे तु (१)विष्णुपुराणमनन्तर्भाव्य वायुपुराणमुपादायाऽष्टदशत्वमुक्तं तदनयोर्विकल्प एव । भागवतं प्रसिद्धमेव ।

अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनैव यदीच्छसि भवक्षयम् ॥ इति वचनात् ।
यत्रोपक्रम्य गायत्रीमुच्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥

इति लक्षणस्य तत्रैव सम्भवाच्च । प्रसिद्धे गायत्र्योपक्रमस्य व्याख्यातृभिर्दर्शितत्वात्पुराणान्तरे तल्लेशस्याऽप्यभावादिति निपुणमालोचनीयम् ।

अत्र पुराणशब्देनोपपुराणादीन्यप्युपलक्ष्यन्ते । तत्र कूर्मपुराणम्—

(१) विष्णुपुराणमनुक्त्वेति पुस्तके पाठः ।

अन्यान्यपि पुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं पाद्ममुद्दिष्टं कुमारेण सुभाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दिप्रवर्तितम् ॥
दुर्वाससोक्तमाश्चर्यं(१) नारदोक्तमतः परम् ।
कापिलं वामनं चैव तथैवोशनसोदितम् ॥
ब्रह्माण्डसंज्ञकं चैव कालिकासंज्ञमेव च ।
माहेश्वरं तथा साम्बं सौरधर्मानुसंश्रयम् ॥
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ।
इदञ्च पञ्चदशमं पुराणं कौर्ममुच्यते ॥
पद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् ।
तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ॥
नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते ।
नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्यते ॥
यत्तु साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ।
तत्प्रोच्यते पुनर्लोके साम्बमेव मुनिव्रताः ॥
एवमादित्यसंज्ञा च तत्रैव परिगण्यते ।
अष्टादशभ्यस्तु पृथक् पुराणं यत्तु दृश्यते ॥
विजानध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ।

विनिर्गतमुद्धृतम् । प्रमाणप्रकरणे भविष्यत्पुराणम्—

अष्टादश पुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णञ्च पञ्चमं वेदं(?) यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र ! मानवोक्ता महीतले ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ।

न्याय='प्रमाणप्रमेय'इत्यादि'हेत्वाभासाश्च यथोक्ताः'इत्यन्तं पञ्चाध्यायीशास्त्रमक्षपादप्रणीतम् । न्यायपदेन च साक्षादुपकरोतीति विचारोपासनानि वैशेषिकसाङ्ख्यपातञ्जलान्यपि गृह्यन्ते । मीमांसा=श्रुत्यादिविचारः कर्मविषयकः 'अथातो धर्मजिज्ञासा'[जै०सू०१।१।१] इत्या-

(१) दुर्वाससोक्तमाश्चर्यं इति ख० पुस्तके ।

द्विद्वादशाऽध्यायीरूपो जैमिनिप्रणीतः, ब्रह्मविषयकश्च 'अथाऽतो ब्रह्मजिज्ञासा'[ब्र० सू० १।१।१]इत्यादिचतुरध्यायीरूपो व्यासप्रणीत इति द्विविधः। धर्मशास्त्राणि=स्मृतयो मन्वादिप्रणीता धर्मसंहिताः।

दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथा परा।
दृष्टाऽदृष्टार्थरूपाऽन्या न्यायमूला तथा परा॥
अर्थवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी।

इति भविष्यत्पुराणे विभक्ताः। गृह्याणि स्मृतिरूपाण्येव। स्मृतिपदेन पञ्चरात्राण्यपि गृह्यन्ते,तेषामपि मन्वादिस्मृतिवदेव प्रामाण्यात्।

अलाभे वेदमन्त्राणां पञ्चरात्रोदिते नये।
आचारेण प्रपद्यन्ते मामायास्यन्ति मानवाः॥

इति वाराहे श्रीभगवद्वाक्यात्।

अभावे वेदमन्त्राणां पञ्चरात्रोदिते विधिः।

इति तत्रैव वचनान्तरात्।

पञ्चरात्रविधानेन सम्पूज्य मधुसूदनम्।

इति ब्रह्मपुराणात्। महाभारते पञ्चरात्राणां प्रशंसितत्वाच्च।

एवञ्च वेदान्ते भट्ट(१)वाक्ये च पञ्चरात्राप्रामाण्याऽभिधानं वेदविरुद्धपञ्चरात्रविषयमिति मन्तव्यम्। तथा हि—स्मृतिपादे 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' [ जै० सू० १। ३। ३ ] इति सूत्रे प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रामाण्यमनपेक्ष्यमिति व्यवस्थाप्यते।'हेतुदर्शनाच्च' [ जै० सू० १। ३। ४ ] इति सूत्रेऽपि भट्टपादाः—(२)'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्र(३)धर्म(४)कञ्चुकच्छायापतितानि लोकोपसङ्ग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासम्बद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्र(५)पाशुपतशाक्यनिर्ग्रन्थपरिगृहीत(६)ध-

(१) भट्टवार्तिके— इति ख० पुस्तके।
(२) अयं पाठः 'बनारस संस्कृत सीरीज़्' मुद्रितपुस्तकस्थः पृ० ११४—११५।
(३) तुल्याश्रय-इति क. ख. पुस्तकयोः पाठः।
(४) धर्म— इति ख० पुस्तके नाऽस्ति।
(५) 'पाञ्चरात्र' इत्यस्य स्थाने 'मन्त्र'-इति क. ख. पुस्तकयोः पाठः।
(६) धर्मा-इति क. ख. पुस्तकयोर्नास्ति.।

र्मोऽधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादि(१)समर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धि(२) बलेनाऽहिंसासत्यवचन(३)दमदानदयाश्रुतिस्मृति(४)संवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यतराणि (५) म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि, तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं(६) प्रतिपाद्यते'इति प्राहुः। अत एव रत्नमालायां भोजराजेन 'प्रोक्तानी'त्यादिभगवद्वचनमु(७)दाहृत्य कूर्मपुराणवचनं प्रत्युदाहृतम्।

अन्यानि चैव शास्त्राणि लोकेऽस्मिन् मोहनानि तु।
वामं पाशुपतं सोमं लकुलं(?) चैव भै(८)रवम्॥
असत्यमेतत्कथितं वेदबाह्यं तथैव तत्।

तथा—

वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा॥

पाञ्चरात्रिका वेदविरुद्धपञ्चरात्रव्यवहारिणः।

अत एव चाग्निपुराणे पञ्चरात्रपरिगणने पाशुपतादिपञ्चरात्राणि पठितानि। यथा हयग्रीव उवाच—

प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया।
व्यक्तानि मुनिभिर्लोके पञ्चविंशतिसंख्यया॥
हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम्।
वैभवं पौष्करं तन्त्रं प्राह्लादं गार्ग्यमा(९)लवम्॥
नारदीयं च माण्डव्यं शाण्डिल्यं वैश्वकं तथा।
सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम्॥
स्वायंभुवं कापिलं च तार्क्ष्यं नारायणीयकम्।

---

(१) उत्सादनादि-इति क. ख. पुस्तकयोः पाठः।
(२) कादाचित्कसिद्धि-इति क. ख. पुस्तकयोर्नास्ति।
(३) दम—इत्यधिकं क॰ पुस्तके पाठः।
(४) स्मृति-इति क. ख. पुस्तकयोर्नास्ति।
(५) बाह्यचराणि-इति क. पुस्तके पाठः।
(६) अनपेक्ष्यत्वं-इति क. ख. पुस्तकयोः पाठः।
(७) उपाकृत्य इति क॰ पुस्तके, उपाहृत्य- इति ख॰ पुस्तके।
(८) चौरवम्-इति ख॰ पुस्तके।
(९) लयवम्-इति " " ।

आत्रेयं नारसिंहाख्यं(१) मानदाख्यं तथारुणम् ॥
बौधायनं तथावार्ण(?)मित्युक्तस्तस्य(२) विस्तरः ।

एतत्सर्वमभिसन्धायाऽऽन्हिके पञ्चरात्रनिर्मूलत्वाभिधानं निर्मूलमिति श्रीदत्तोपाध्यायानां सिंहनादः। पञ्चरात्रपाशुपतादीन्यपि शास्त्राणि वेदाविरुद्धभागे प्रमाणमेवेति पारिजातश्चेति सकलशिष्टानुमतार्थव्यवस्थापने कृतं बहुभिरावेशैरिति । एवमन्यान्यपि-'स्मृतिरिति शिष्टाः' इत्याद्युक्तप्रामाणिकनिबन्धेषु लिखितानि वाक्यानि ग्राह्याणि, महाजनपरिग्रहात् । षट्त्रिंशन्मतादीन्यपि तथेति केचित् । नेति कल्पतरुः ।

अङ्गानि='शिक्षाव्याकरणनिरुक्तच्छन्दः कल्पज्योतिषाणि वेदाङ्गानि' इति देवलोक्तानि । शिक्षा=वेदाध्ययनेतिकर्तव्यताप्रतिपादको याज्ञवल्क्यपाणिनिपराशरादिग्रन्थः । व्याकरणं—'वृद्धिरादैच्' इत्यादि 'अ अ' इत्यन्तमष्टाऽध्यायीशास्त्रं पाणिनिप्रणीतमन्येषां वैदिकाऽव्युत्पादकत्वात् । निरुक्तं=यास्कप्रणीतो वैदिकपदार्थादिव्युत्पादको ग्रन्थः । छन्दः=गायत्र्यादिच्छन्दःप्रतिपादकं पिङ्गलप्रणीतं शास्त्रम् । कल्पः=ज्योतिष्टोमाद्यनुष्ठानपद्धतयः कात्यायनबौधायनादिप्रणीताः । ज्योतिः=ग्रहगत्यादिबोधकं होराशास्त्रमिति प्रसिद्धं गर्गादिप्रणीतम् ।

एतैः पुराणादिभिर्मिश्रिता युक्ता वेदाः वैदिकयाज्ञिकानां मन्वादीनामभियुक्तानां वेद इति प्रसिद्धविषयाः शब्दाः, मन्त्राधिकरणन्यायात्। अपौरुषेयवाक्यत्वं वेदत्वमित्येके । मीमांसासिद्धपौरुषेयान्यजातीयव्याख्यानवाक्यत्वं तदिति कण्टकोद्धारः ।

केचित्तु न्यायनिबन्धप्रकाशे 'कथात्वं जाति' रिति (३)वर्द्धमानचरणानां सोपपत्ति लिखनं पश्यन्तस्तादृशा 'वेदत्वं जाति'रिति परिष्कुर्वते । अखण्डोपाधिर्वेदत्वमिति तूच्छृङ्खलाः ।

ते पुनश्चतुर्विधा 'ऋग्यजुःसामाथर्वाणो वेदाः' इति देवलादिभिर्विभज्य प्रतिपादिताः । तत्र ऋग्बहुलो वेदभाग ऋक्, यजुर्बहुलः स यजुः, सामबहुलस्तु साम । अदृष्टद्वारा दृष्टप्रयोजनक(४)कर्मप्रतिपादकवाक्यबहुलश्चाऽथर्वा । खिलशुक्रियौ त्वेतच्चतुष्टयान्तर्भूतावेव ।

---

(१) नारसिंहं च-इति ख० पुस्तके ।
(२) तथावर्णितमित्युक्तस्य-इति क. पुस्तके, तथार्णमित्युक्तस्य-इति ख. पुस्तके. ।
(३) वर्द्धमानेत्यादि वेदत्वमिति तूच्छृङ्खला इत्यन्तो भागः ख० पुस्तके नास्ति ।
(४) कर्मप्रयोजको वेदभागः खिल इति ख० पुस्तके ।

तथाऽनिरुक्त इदानीमनुष्ठानप्रयोजको वेदभागः खिलः । शुक्रोक्तत्वेन ब्राह्मणे कीर्तितो वेदभागः शुक्रियः । आङ्गिरसस्त्वथर्वैकदेश एवेति ।

अथैतेऽपि चत्वारो वेदाः प्रत्येकं द्विविधाः, मन्त्रब्राह्मणभेदात् । 'तत्र यानि प्रयोगकाले ऽनुष्ठानोपयिकार्थाभिधानरूपाणि वेदवाक्यानि तानि मन्त्रशब्देनोच्यन्त इति 'तच्चोदकेषु मन्त्राख्या' [ जै० सू० २ । १ । ३२ ] इति मन्त्राधिकरणे व्यवस्थितम् । तथापि मन्वादीनां मन्त्रप्रसिद्धिरेव मन्त्रलक्षणं विवक्षिताविवक्षितविवेकेन पर्यवस्यति । अत एव प्रायिकमिदमभियुक्तप्रसिद्धलक्षणार्थं यत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इत्यर्थं इति पार्थसारथिमिश्राः । भगवान् जैमिनिरपि ऊहप्रवरनामधेयानां मन्त्रत्वनिरासाय 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्'[जै०सू०२।१।३४]इति मन्त्रप्रसिद्धिमेवोपलक्षयति।आहुश्च भट्टपादाः-

याज्ञिकानां समाख्यानं लक्षणं मन्त्रलक्षणमिति ।

अत्र मन्त्रेत्युपलक्षणमिति ब्राह्मणस्य ऋग्यजुःसामादीनां सूक्तानुवाकादीनां चेत्थमेव लक्षणं निरवद्यम् । तत्रभवत्प्रायुर्यान्तु लक्षणान्तराण्यभिधीयन्त इति मन्त्रभागातिरिक्तो वेदभागो ब्राह्मणम्, यदाह—'शेषे ब्राह्मणशब्दः' [ जै० सू० २ । १ । ३३ ] । मन्त्रवाक्यावशिष्टं वेदवाक्यं ब्राह्मणमित्यर्थः । मन्त्रा अपि ऋचो यजूंषि सामानि निगदा मन्त्रा इति कात्यायनेन विभक्ताः । यत्राऽर्थवशेन पादव्यवस्था स मन्त्र ऋक् । यदाह-'तेषामृग्यत्राऽर्थवशेन पादव्यवस्था'[जै० सू० २ । १ । ३५ ] । नियताक्षर(१)मन्त्र ऋगिति पर्यवसितार्थः । अगीयमानत्वं चात्र विशेषणमर्थादन्यथा साम्न्यतिप्रसङ्गात् । अनियताक्षरावसानो मन्त्रः पुरस्कृतगानो यजुः । इदन्तु नान्तरीयकतया कटाक्षयन्नेव यजुर्लक्षणमाह-'शेषे यजुःशब्दः'[ जै० सू० २ । १ । ३७] । ऋक्सामभ्यां यदन्यत्प्रश्लिष्टपठितं तद्यजुः । गीयमानो मन्त्रः साम । यद्यपि गीतमेव सामशब्दार्थत्वेनाऽसिद्धान्तयत् सप्तमेऽध्याये । तथाहि—'रथन्तरेण स्तुवीत' इत्यादिदर्शनादक्षरेषु तद्व्यपदेशः । एवं च मन्त्रविभागप्रकरणे सामशब्दस्य गीयमानाक्षरपरतामेवाऽभिप्रयन्सूत्रयत् । 'गीतिषु सामाख्या' [ जै० सू० २ । १ । ३६ ] । अक्षरपरतया कथंचित्सूत्रयोजनादिति । निगदास्तु 'प्रोक्षणीरासाद-

(१) एतदग्रे—पदावसानो—इति ख. पुस्तके ।

यति' इत्येवमादयः परसम्बोधनरूपा मन्त्राः । निगदाधिकरणे 'निगदो वा चतुर्थं स्याद्धर्मविशेषात्'[ जै० सू० २ । १ । ३८ ]इत्याक्षिप्य यजुर्विशेषा एवेत्यासिद्धान्तयत् । अत एव—'अहेर्बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः। ऋचः सामानि यजूंषि' इति श्रुतौ त्रिधैव मन्त्रः कथितो यद्यपि, तथापि 'उपांशु यजुषा, उच्चैर्निगदेन' इत्यादौ विशेषसंज्ञापुरस्काराद्यजुर्विशेषप्रदर्शनाय निगदाः कात्यायनेन पृथगुपात्ता इति मन्तव्यम्। ब्राह्मणन्तु द्विविधं, विध्यर्थवादभेदात् । परकृतिपुराकल्पौ त्वर्थवादान्तर्भूतावेव। तत्र विधिश्चतुर्द्धा—उत्पत्तिविनियोगप्रयोगाऽधिकारभेदात् । विध्यन्तराविषयपदार्थस्वरूपप्रतिपादकोऽपि विधिरुत्पत्तिविधिराद्यप्राप्तेरुत्पत्तित्वात् । तत्र चाऽस्य शब्दान्तराभ्यासगुणसङ्ख्यानामधेयप्रकरणाख्यानि षट् सहकारीणि। अथ 'अग्निष्टोमेन यजेत' इत्यादिपरा(१)र्थ्यरूपशेषत्वबोधको विधिर्विनियोगविधिः। नियोगे चास्य 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या'रूपाणि षट् सहकारीणि । फलस्वामित्वरूपाधिकारबोधको विधिरधिकारविधिः । यथा 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादिः। साङ्गप्रधानस्य युगपत्कर्तव्यताबोधको विधिः प्रयोगविधिः । करणानुगृहीतप्रत्येकविधिविनियुक्तप्रयाजादीनामष्टदोषदुष्टविकल्पसमाधानाय सर्वाङ्गोपेतप्रधानकर्तव्यतां बोधयन् प्रधानविधिरेव प्रयोगविधिरित्युच्यते । यथा 'ज्योतिष्टोमेन यजेत' इत्येवमादिरेवेत्याकाराद्विवेक्तव्यम् । उत्पत्तिविधिस्त्रिविधः, कर्ममात्रोत्पादकः 'अग्निहोत्रं जुहोति' इत्येवमादिः। गुणविशिष्टकर्मोत्पादकः 'सोमेन यजेत' इत्येवमादिः। गुणमात्रोत्पादको 'द(२)ध्ना जुहोति' इत्येवेति। विनियोगविधिरपि त्रिधा—पूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति। यदाहुः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्येति कीर्त्यते॥

तत्राद्यो 'ज्योतिष्टोमेन यजेत स्वर्गकामः'इत्यादिः। द्वितीयो 'व्रीहीनवहन्ति' इत्यादिः । तृतीयः 'अश्वाभिधानीमादत्ते' इत्यादिः । भाष्ये तु 'पञ्च पञ्चनखा भक्ष्याः' इति, तृतीयोदाहरणं प्रकृतकारि-

(१) परार्ध्य—इति ख. पुस्तके।

(२) दध्नाऽग्निहोत्रं जुहोति— इति क. पुस्तके पाठः।

काविस्तरभयान्न विव्रियते इति । अर्थवादास्तु स्तुतिनिन्दारूपाः । तत्राद्यो 'वायुर्वै क्षेपिष्ठा देवता'इत्यादिः । द्वितीयस्तु 'न तस्याऽऽहुतिमभ्यवहरन्ति य उदिते जुहोति' इत्यादिरित्याद्यन्यत्राऽनुसन्धेयमित्यास्तां प्रसक्तानुप्रसक्तिविस्तरः । पुराणादीनामुपसर्जनीकरणं वेदानां प्राधान्यसूचनाय । विद्याना=पुरुषार्थसाधनज्ञानानाम् । अत एव धर्मस्याऽपि स्थानान्युपायाः विद्यायाः प्रवृत्तिद्वारा धर्मप्रयोजकत्वात् । यद्यप्यन्यत्राऽष्टादश विद्यास्थानान्युक्तानि । तथा च विष्णुपुराणम् ।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं(१)च विद्या ह्यष्टादश स्मृताः ॥

तथापीह वेदशब्देनोपवेदरूपाणामायुर्वेदादीनां ग्रहणात्‌ न न्यूनतेति बोद्धव्यम् । तेषां विद्यास्थानत्वेऽपि न धर्मस्थानत्वं धर्मे तात्पर्याऽभावादित्यप्याहुः । यत्तु ब्रह्मपुराणम्—

वेदान्तः पञ्चदशमं विद्या षोडशकं भवेत्-इति ।

तत्र वेदान्तः=शारीरकम् । विद्या=बृहदारण्यकादिरहस्यम् । ते चाऽत्र मीमांसावेदपदाभ्यामेव गृहीते इति सर्वं चतुरस्रम् ॥ ३ ॥

(मिता०) 'शौचाचारांश्च शिक्षयेत्'इत्याचार्यस्य धर्मशास्त्राध्यापनविधिः । शिष्येण तत्राध्ययनं कर्तव्यमिति कुतोऽवगम्यत इत्यत आह—

पुराणेति । पुराणं ब्राह्मादि । न्यायस्तर्कविद्या । मीमांसा वेदवाक्यविचारः । धर्मशास्त्रं मानवादि । अङ्गानि व्याकरणादीनि षट् । एतैरुपेताश्चत्वारो वेदाः । विद्याः (२)पुरुषार्थसाधनानि । तासां स्थानानि च चतुर्दश । धर्मस्य च चतुर्दश स्थानानि हेतवः । एतानि च त्रैवर्णिकैरध्येतव्यानि(३)तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम् । (४)तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाऽधिगन्तव्यानि । क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय । तथाच शङ्खेन विद्यास्थानान्युपक्रम्योक्तम्—

(१) तु-इति ख० पुस्तके ।
(२) पुरुषार्थसाधनानि क० पुरुषार्थसाधनज्ञानि ख० ।
(३) तदन्तर्गतत्वात् क० ।
(४) तत्र ब्राह्मणेनैतानि क० ।

'एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषाम्' इति । मनुरपि द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारो ब्राह्मणस्य प्रवचने नान्यस्येति दर्शयति ( २ । १६ ), ( १ । १०३ )—

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य(१) कर्हिचित् ॥
विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित् ॥ इति ॥ ३ ॥

(वी०मि०)धर्मशास्त्रस्य प्रयोजनवत्त्वेऽपि प्रकृते किमायातमित्याशङ्क्य स्वसंहितायां धर्मशास्त्रत्वं दर्शयितुं तद्व्यवस्थार्थं धर्मशास्त्रप्रणेतॄनाह—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमाऽऽपस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ ४ ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्र(२)योजकाः ॥ ५ ॥

उशन इत्यन्तमेकभावी द्वन्द्वः । प्रयोजकाः प्रणेतारः । वसिष्ठश्चेति चो ऽनुक्तसमुच्चये, तेनाऽन्येषामपि ग्रहणम् ॥

तथा च शंखलिखितौ-स्मृतिर्धर्मशास्त्राणि तेषां प्रणेतारो मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्रचेतसादयः शिष्टाः ।

मनुर्बृहस्पतिर्दक्षो गौतमो ऽथ यमो ऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्त्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥
एते ह्यष्टादश प्रोक्ता मुनयो नयतव्रताः ।
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ॥
व्यासः सनत्कुमारश्च सुमन्तुश्च पितामहः ।
व्याघ्रः कार्ष्णाजिनिश्चैव जातूकर्णः कपिञ्जलः ॥

---

( १ ) कस्यचित्०क० ख० । ( २ ) प्रवर्तकाः-इति क० पुस्तके ।

बौधायनश्च काणादो विश्वामित्रस्तथैव च ।
पैठीनसिर्गोभिलश्च उपस्मृतिविधायकाः ॥

तथा—

वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।
वसुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।
आत्रेयः छागलेयश्च मरीचिर्वत्स एव च ॥
पारस्करऋष्यशृङ्गौ बैजवापस्तथैव च ।
इत्यन्ये स्मृतिकर्तार एकविंशतिरीरिताः ॥
एभिर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येतानि प्रमाणानि न हन्तव्यानि हेतुभिः ॥

अत्र मन्वादिभिरष्टादशभिः प्रणीताः स्मृतयः,जाबाल्यादिभिरष्टादश(१)भिस्तु प्रणीता उपस्मृतय इत्यवान्तरविभागवत्त्वोऽपि भविष्ये—

मन्वादिस्मृतयो याश्च षट्त्रिंशत्परिकीर्तिताः ।

इति सामान्येनैवोक्ताः । वसिष्ठाद्येकविंशतिप्रणीतास्तु 'तथा स्मृत्यन्तरेषु च' इत्यनेनोक्ताः । वृद्धमनुवृद्धवसिष्ठवृद्धशातातपलघुहारीतयोगियाज्ञवल्क्यादयस्त्ववस्थाभेदेन सविशेषणसंज्ञाव्यपदेशभाजो मन्वादय एवेति न पृथग्गुणाः । एवञ्च(२)याज्ञवल्क्यप्रणीतत्वात्स्यक्षतसंहिता धर्मशास्त्रमिति दर्शितम् ॥ ४ ॥ ५ ॥

( मिता० ) अस्तु धर्मशास्त्रमध्येतव्यं, याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह—

मन्वत्रीति । पराशरेति च । उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भावः । याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्याभिप्रायः । नेय परिसंख्या(३) किन्तु प्रदर्शनार्थमेतत् । अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते । विरो(४)धे विकल्पः ॥ ४ ॥ ५ ॥

---

(१) अष्टदशभि इति क० पुस्तके नास्ति ।

(२) च-इति ख० पुस्तके नास्ति ।

(३) परिसंख्या नाम एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनम् । एतद्विस्तरोऽग्रे ८१ श्लोकमिताक्षरायां द्रष्टव्यम् ।

(४) विरोधे तु ग० ।

( वी० मि० ) इदानीं धर्मस्य साक्षाद्धेतून् देशादीन् प्रदर्शयन्नेव स्वरूपमप्याह—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ६ ॥

देशः-कुरुक्षेत्रादिः। कालः-सूर्योपरागादिसमयः। उपायः-इतिकर्तव्यता। द्रव्यं-हिरण्यादि। श्रद्धा-वैदिककर्मणि फलावश्यंभावनिश्चयः, तया सम्यक् हेतुभावेनाऽन्वितं यथा स्यात्। पात्रं- श्रोत्रियादि वक्ष्यमाणम्। सप्तमी चेह चतुर्थ्यर्थे। प्रदीयत इति दानं ससम्प्रदानकस्त्यागः, स्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलको विक्रयादिव्यावृत्त इच्छाविशेषो वा। तत्र प्रकर्षः प्रत्युपकारादिप्रतिसन्धानराहित्यं जातिगुणादिरूपदानोपयोगि तत्तन्निमित्तसान्निध्यञ्च। अत्र(१)दानं चतुर्षु धर्मचरणेषु युगचतुष्टयावस्थायित्वेन प्राधान्यादुदाहरणम्। शास्त्रदेशिततत्तत्स्वकारकसंवलितानां यागहोमादीनां सर्वेषामुपलक्षणम्। यदिति देशादिरूपकारकविशिष्टक्रियापरामर्शः। तदिति यच्छब्दाऽव्यवहितोत्तरस्थस्य तच्छब्दस्य 'यत्तदूर्जितम्' (वे०सं०१।१३) इत्यादाविवोत्सर्गतः प्रसिद्धपरामर्शकत्वेऽपि 'मयि क्रूरे यत्तत्साविषयमिव' इत्यादाविव तदपवादेन यच्छब्दानिर्दिष्टार्थनिर्देशतैवेति स्मर्तव्यम्। सकलं-सम्पूर्णम्। धर्मलक्षणं-तत्स्वरूपं शास्त्रदेशितसम्पूर्णफलसम्पादकत्वात्। देशाद्येकैकादिरहितं तु विफलं विफलतरं विफलतमं, तादृक्फलासाधकत्वादित्याशयः। एवञ्च यागादिरूपो धर्मो यद्यदङ्गविशिष्टो विध्युपदिष्टः तत्समुच्चयं वाऽनुप्रेयः। अङ्गा(२)नां विरोधे नैराकांक्ष्ये च विकल्पः, अनन्यगतिकत्वादनाकाङ्क्षिताऽनन्वयाच्च। यदाहुः—

विरोधे तु विकल्पः स्यात् इति।

स्मृतिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति। इति च।

परन्त्वावश्यके कर्मणि शक्यानामेव काम्ये तु सर्वेषामङ्गानामुपसंहारः। सर्वशक्तिनयात्सङ्कल्पितं काम्यमपि नित्यवदेव। यत्र तु काम्ये अङ्गवैगुण्येऽपि कुतश्चिन्निमित्तात्सम्पूर्णफलता

(१) अत्रदानम् इति ख. पुस्तके पाठः।
(२) अङ्गानि-इति ख. पुस्तके पाठः।

ऽल्पफलता या शास्त्रे वेदिता तत्र तदर्थिना तादृगेवाऽऽचरणीयमिति विवेकः ॥ ६ ॥

( मिता० ) इदानीं धर्मस्य कारकहेतूनाह—

देश इति । देशो यस्मिन्देशे मृगः कृष्ण इत्युक्तलक्षणः । कालः सङ्क्रान्त्यादिः । उपायः शास्त्रोक्तेतिकर्तव्यताकलापः । द्रव्यं प्रतिग्रहादिलब्धं गवादि । श्रद्धा आस्तिक्यबुद्धिस्तदन्वितं यथा भवति तथा । पात्रं न विद्यया केवलयेत्येवमादिवक्ष्यमाणलक्षणम् । प्रदीयते यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यवसानं त्यज्यते । एतद्धर्मस्योत्पादकम् । किमेतावदेव नेत्याह—सकलमिति । अन्यदपि शास्त्रोक्तं जातिगुणहोमयागादि तत्सकलं धर्मस्य कारकं, जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति । तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम् । श्रद्धा सर्वत्रानुवर्तत एव ॥ ६ ॥

( वी० मि० ) सम्प्रति पुराणादिभ्यः पूर्वोक्तेभ्यो निष्कृष्य प्रधानीभूतं धर्मे प्रमाणं(१) दर्शयन्नेव प्रदीयत इत्यनेन कर्ममात्रोपलक्षणे लौकिकभोजनादेरपि धर्मरूपताप्रसक्तिं व्युदसितुमुपलक्ष्यतावच्छेदकं धर्मलक्षणमि(२)त्याह—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥

श्रुतिर्वेदः । स्मृतिर्धर्मशास्त्रम् । यदाह मनुः—

श्रुतिस्तु (३)वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।

सदाचारः ।

साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

इति विष्णुपुराणे दर्शितः । आचरणमलौकिकं तेन लौकिकभोजनादिव्युदासः । *स्वस्य प्रियं प्रीतिः कारणेन कार्यलक्षणात्*, धर्मसन्देहे वैदिकसंस्कारवासितात्मनोऽभेकत्र पक्षे मनःपरितोष इति यावत् ।

(१) प्रधाने—इति क पुस्तके पाठ ।
(२) मप्याह— इति ख पुस्तके ।
(३) स्तु—इति ■ पुस्तके पाठ ।

यदाहुर्भट्टाः—

एतेन वैदिकानेकधर्मश्रीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मप्रसिद्धये ॥ इति ।

कृत्स्न इति न तु सर्वस्य । एतच्चैकदेशमू(१)मतेऽपि धर्मेऽन्वितं योग्यताबलात् । सम्यक् सङ्कल्पात् रागद्वेषादिरहिताद् ज्ञा(२)नात् जातः कामो ब्राह्मणोपचिकीर्षादिः ।

अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानञ्च शीलमेतद्विदुर्बुधाः ॥

इति महाभारतादौ शीलपरिगणनेऽनुग्रहादिशब्देनोक्तः । इदन्—एते 'मूल'मिति विधेयलिङ्गसङ्ख्याग्रहणात् तच्च पञ्चस्वन्यापेक्षया प्रधानीभूतेष्वपि श्रुत्यादिषु एकस्य श्रुतिरूपस्य प्रमाणस्याऽतिप्राधान्यसूचनाय धर्ममूलं धर्मे प्राधान्येन प्रमाणम् । प्राधान्यं च साक्षाद्बोधकतया । तथा च मनुः—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥

साक्षात् श्रुत्यनुग्राहकतया लक्षणं प्रमाणम् । यद्यपि—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

इति मनुनैव शीलमप्यधिकमुक्तं तथाऽपि (३)तस्याऽद्रोहादिरूपस्य भारतोक्तस्य ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मित्रता प्रियवादिता कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलमिति । ब्रह्मण्यतादेः हारीतोक्तस्य च शीलस्याऽऽचार एवान्तर्भावान्नाऽत्र पृथगुक्तम् । देवभक्तता पितृभक्तता चेति द्वे । प्रायः परोपकारपर्यवसायितयाऽऽचारान्तरादभ्यर्हितत्वेन वचनान्तरे 'गोबलीवर्द' न्यायाद्भेदेनोपन्यस्तम् । एवं सम्यक् सङ्कल्पजः काम इति प्रकृतवाक्येऽपि बोद्धव्यम् । तत्र च (४)श्रुतिरग्निहोत्रादौ । स्मृतिरन्वष्टकादौ । आचारो होलकादौ । आत्मतुष्टि-

(१) मूलेऽपि—इति क० ख० पुस्तकयोः पाठः ।
(२) जनक—इति ङ० पुस्तके पाठः ।
(३) अतो—इत्यधिकं ग० पुस्तके ।
(४) श्रु—इति ख० पुस्तके नास्ति ।

रभ्यासादि(१)सन्देहविषयप्रायश्चित्तयतादौ । तथा च प्रायश्चित्तप्रकरणे बृहस्पतिः—

यस्मिन्कर्मण्यस्य कृते मनसः स्यादलाघवम् ।
तस्मिँस्तावत्पुनः कुर्याद्यावत्तुष्टिकरं भवेत् ॥ इति ।

अलाघवं पापशून्यताप्रतिसन्धानविरहः, तन्निबन्धनोऽपरितोष इति यावत् । अध्ययनस्थितविकल्पविषयप्राङ्मुखोदङ्मुखाचमनादावेव मनस्तुष्टिः स्वविषये अन्यतरस्मिन् धर्मे प्रमाणमिति बहवः । तुष्टिस्तु यस्य तस्यैव धर्मे प्रमाणमित्युक्तम् । कामस्तु प्रत्यक्षश्रुत्याद्यबोधिते ब्राह्मणोपकार (२)विशेषादौ भोजनव्यतिरेकेण मया जलपानं न कर्तव्यमित्याद्याकारस्तदकरणादावेिति तु निबन्धः । अत्र पुराणादीनां स्वर्गादिकथाप्राधान्यादितिहासबहुलत्वेनाऽर्थवादादिरूपतया न्यायमीमांसयोस्तर्कद्वारा शिक्षादीनामङ्गानां तत्तदुपकारसम्पादनेन वेदाऽनुग्राहकतया धर्मे प्रामाण्यं न साक्षादिति न तान्यत्र गणितानि । स्मृत्यादयस्तु श्रुतिमनुमापयन्तो ऽपि तामननुगृह्णन्त एव धर्मे प्रमाणमिति तेषामत्र ग्रहणमिति विवेक्तव्यम् । एवं श्रुतिप्रमाणकधर्मस्य लक्षणमपि दर्शितम् । (३)स्मृत्यादिमूलकस्याऽपि धर्मस्याऽध्ययापेक्षितवेदप्रमाणकत्वात् । सर्वेषां वेदानां मुख्यतो धर्म एव तात्पर्यपर्यवसानेन तत्रैव प्रामाण्यात् । 'चोदनालक्षणोऽर्थो धर्मः'(जै० सू० १।१।२) इति सूत्रे तु फलञ्जभक्षणादेरधर्मस्यापि चोदनालक्षणत्वमङ्गीकृत्याऽर्थपदेन वारणं कृतमित्यवधेयम् ॥ ७ ॥

( मिता० ) इदानीं धर्मस्य ज्ञापकहेतूनाह—

श्रुतिरिति । श्रुतिर्वेदः । स्मृतिर्धर्मशास्त्रम् । तथा च मनुः (२।१०) श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः इति । सदाचारः सतां शिष्टानामाचारो(४)नुष्ठानम् । स्वस्य चात्मनः प्रियं, वैकल्पिके विषये यथा 'गर्भाष्टमेऽष्टमे वाब्दे' इ(५)त्यादावात्मेच्छैव नियामिका ।

(१) अभ्यसाभ्न्यासादि-इति ख० पुस्तके पाठ ।
(२) ब्राह्मणेकार-इति क० पुस्तके, ब्राह्मणोपरोपकार-इति तु ख० पुस्तके पाठ ।
(३) श्रुत्यादि-इति ख० पुस्तके ।
(४) नुष्ठान नाशिष्टानाम् ख० ।
(५) इत्यष्टमेघैव, इत्यादिष्वात्मेच्छैव ख० ।

सम्यक्संकल्पाज्जातः कामः शास्त्राविरुद्धो (१) यथा-'मया भोजनव्यतिरेकेणोदकं न पातव्यम्' इति। एते धर्मस्य मूलं प्रमाणम्। एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम्॥ ७॥

(वी० मि०) नन्विदं धर्मलक्षणमात्म(२)तत्त्वसाक्षात्कारेऽतिव्यापकम्। न च सोऽपि धर्म एव यागादीनामिव कर्मकाण्ड एव व्युत्पादनप्रसङ्गादित्याशङ्कायामाह—

इज्याऽऽचारदमाहिंसादानस्वाध्यायकर्मणाम्॥
अयन्तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्॥ ८॥

इज्या-यागः। आचारः-आह्निकादिः। दमः-इन्द्रियनिग्रहः। अहिंसा-विहितातिरिक्तहिंसाविरहः। दानम्-उक्तम्। स्वाऽध्यायः-वेदाऽध्ययनम्। कर्म-इज्याद्यतिरिक्तं होमादि, 'गोबलीवर्द'न्यायात् पृथगुक्तम्। तेषां मध्ये योगेनाऽष्टाङ्गेन तु मनःसन्निकर्षमात्रेण यदात्मदर्शनम्-आत्मतत्त्वसाक्षात्कार इति फलितार्थः। सोऽयं परमो धर्मः। 'पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा' (रघु०८।४) इत्यादौ प्रकंस्यमानलिङ्गस्याऽपि प्रकान्तलिङ्गस्येव सर्वनाम्ना ग्रहणदर्शनान्न लिङ्गाऽसङ्गतिः। क्वचिद(३)यं त्विति पाठः। तत्र तुशब्दः कर्मणामित्यनन्तरं योज्यः, तेन-

तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
युगपत्त्रितयाऽभ्यासाज्जीवन्मुक्तिर्दृढा भवेत्॥

इत्युक्ताभ्यासावच्छेदः। तस्य तत्त्वसाक्षात्कारादप्युत्कर्षाद्य(४)थाश्रुतक्रमे कर्मणामिति निर्द्धारणषष्ठ्येव। तुशब्दस्य गतार्थत्वादित्यवधेयम्। यद्वा कर्मणामिति शेषषष्ठी इज्यादिकर्मसम्बन्धितन्निमित्तकमात्मदर्शनमित्यर्थः। 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन' इत्यादिश्रुतेः। परमत्वं त्वात्मदर्शनस्य। सकलप्रयोजनमौलिभूतमोक्षान्तरङ्गत्वादिज्यादीनामपि तादर्थ्याच्चत्तद्यान्तरफलस्य स्वर्गादेरानुषङ्गिकत्वात्। तथा चैतेनोत्कर्षेणेज्यादिधर्म-

(१) शास्त्राविरुद्धः कामो यथा घ०।
(२) वस्त्व-इति क० पुस्तके पाठः।
(३) क्वचिदयन्त्विति-इति घ० पुस्तके पाठः।
(४) तथा-इति घ० पुस्तके पाठः।

भ्यो नि[१]ःस्पृहस्य धर्मरूपस्यात्मदर्शनस्य ज्ञानकाण्डेऽभिधानमिति सर्वं चतुरस्रम् । क्वचित्तु कर्मणामित्यत्र कर्म चेति । स इत्यत्र चेति पठितं व्याख्यातं च धर्मस्वरूपमाह—इज्येति प्रदर्शनमात्रमेतत् । तेन वैदिकं सर्वं धर्मधर्म, आत्मदर्शनञ्च प्रकृष्टो धर्म इति । देशे काल इत्यादिवचनं तु धर्मकारकप्रदर्शनमात्रपरतयैवाऽवतारितमिति तदनवद्यम् ॥ ८ ॥

( मिता० ) देशादिकारकहेतूनामपवादमाह—

इज्येत्यादि । इज्यादीनां कर्मणामयमेव परमो धर्मः, यद्योगेन बाह्यचित्तवृत्तिनिरोधेनात्मनो दर्शनं याथातथ्यज्ञानम् । योगेनात्मज्ञाने देशादिनियमो नास्तीत्यर्थः । तदुक्तं 'यत्रैकाग्रता तत्राविशेषात्' इति पातञ्जले ॥ ८ ॥

( वी० मि० ) ननु श्रुतिः स्मृतिः सदाचार इत्यादिधर्मप्रमाणगणनं नूनं धर्माऽधर्मसन्देहस्थले तन्निर्णायकत्वेन बहुदाः शास्त्रबोधितस्य पर्षदादिवचनस्याऽनभिधानादित्याऽऽशङ्क्य शिष्टविशेषसमुदायादिरूपं पर्षदादिस्वरूपं प्रदर्शयन्नेव [२] न केवलं सदाचारशब्देन शिष्टानां कायक्रियैवाऽत्राऽभिप्रेता किन्तु नामवचनमपीति न न्यूनत्वमित्यभिप्रयन्नाह—

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा(३) ।
सा ब्रूते यं स धर्मः स्यादेको (४)वाऽध्यात्मवित्तमः ॥९॥

वेदा—ऋगादयः । धर्मा—धर्मशास्त्राणि । तज्ज्ञाश्चत्वारः पर्षत् । ते च ब्राह्मणा ग्राह्याः । तथा च मनुः—

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥

तिस्रो विद्या वेदा येषान्ते त्रिविद्याः तेषां समूहस्त्रैविद्यं मिक्षादिवदण् तद्वा पर्षत् । तथा च मनुः—

(१) निःस्पृह-इति ख० पुस्तके ।
(२) च इति ख० पुस्तके नास्ति ।
(३) च-इति क० पुस्तके ।
(४) एकोऽप्यध्यात्मवि-इति क० ख० पुस्तकयोः पाठः ।

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च।
त्र्यवरा परिषत् ज्ञेया धर्मसंशयनिर्णये॥

त्रयोऽवराश्चरमः पक्षो यस्यां सा। एतेन संख्यान्तरमपि सूचितम्। (१)तथा चाऽङ्गिराः—

एकविंशतिसंख्यातैर्मीमांसान्यायपारगैः।
वेदार्थकुशलैश्चैव परिषत्त्वं प्रकल्पयेत्॥

मनुः—

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाऽऽश्रमिणः पूर्वे परिषत्स्याद्दशावरा॥

त्रैविद्यस्त्रयीवेत्ता। हैतुकोऽनुमानज्ञः। तर्की सत्तर्कक्षुण्णमतिः। तथा च मनुः—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः॥

नैरुक्तो निरुक्तज्ञः। धर्मपाठको धर्मशास्त्राभिज्ञः प्रायश्चित्तादिनिर्देष्टा—यमनुवादक इति लोका वदन्ति पठन्ति च—

वेदविद्याव्रतस्नातः सत्यसन्धो जितेन्द्रियः।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः॥

पूर्वे ब्रह्मचारिगृहस्थवानप्रस्थाः एते च कल्प्याः कार्यलाघवगौरवयोः गुणप्रकर्षनिष्कर्षयोश्च तारतम्येन व्यवस्थाप्याः। सर्वं (२) चेदं प्रदर्शनार्थम्। यावद्भिर्यत्र धर्मनिरूपणं सम्भवति तावद्भिस्तत्र परिषत्। अत एव यमः—

एको द्वौ वा त्रयो वापि यद् ब्रूयुर्धर्मपाठकाः।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः॥

इत्यास्तां विस्तरः। प्रकृतमाह सा पर्षत् यं धर्म इति ब्रूते स धर्मः। अध्यात्मवित्तमः—आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मं तद्विदां श्रेष्ठः आत्मतत्त्वसाक्षात्कारवानिति यावत्। एकोऽपि यं ब्रूत इत्याद्यनुषञ्जनीयम्। पर्षदादिवचनमिव 'स्त्रीभ्य(३)श्चावरवर्णेभ्यो धर्मशेषान् प्रतीयात् इत्येक इत्येके' (आप० ध० सू० २। २९। १५) इत्यक

(१) यथा—इति क० पुस्तके।
(२) वेदं—इति क. पुस्तके।
(३) स्त्रीभ्यस्सर्ववर्णेभ्यश्च—इति 'मयमहाराजकीयसंस्कृतपुस्तकमाला'मुद्रितपुस्तके पाठः।

इत्यापस्तम्बोक्तस्त्रीशूद्राद्याचारोऽपि वेदाद्यविरुद्धः परम्पराप्राप्तः सदाचारश(१)ब्देनैव सङ्ग्राह्यः । एकः—इत्यनेनाऽन्यादृशतदाचारेऽस्वरसः सूचितः । न च स्मृत्यादीनां निरुक्तसत्त्वाभावात् शास्त्रविरोधश्च(२) कथमेवमिति वाच्यं, क्षीणदोषत्वेन प्रकृतार्थे भ्रान्तेरनुपलक्षणात् । अन्यथेदानीन्तनानां प्रायशो ऽव्यापनात् । शास्त्रविरोधश्च सर्वथैव सदाचारेपूपसंहर्त्तव्यः । अन्यथेन्द्रकृताहल्यासङ्गमादेव (३)शिष्टकृताक्षमालोपयमा[४] देश्च धर्मे प्रामाण्यापत्तेः । अत एव महाभारते—

कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
न चरेत्तानि धर्मात्मा श्रुत्वा चाऽपि न कुत्सयेत् ॥

इत्यास्तामतिविस्तरः ॥ ९ ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराज
चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर
श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मज श्रीपरशुराम-
मिश्रसूरिसूनुसकलविद्यापारावारपारीणधु
रीणश्रीमन्मित्रमिश्रकृते श्रीवीरसिंह-
मित्रोदयाख्याने श्रीयाज्ञवल्क्य-
व्याख्याने उपोद्घात-
प्रकरणम् ॥ १ ॥

( मिता० ) कारकहेतुषु ज्ञापकहेतुषु वा सन्देहे निर्णयहेतूनाह—

चत्वार इति । चत्वारो ब्राह्मणाः वेद(५)धर्मशास्त्रज्ञाः पर्षत् । तिस्रो विद्या अधीयन्त इति त्रैविद्यास्तेषां समूहस्त्रैविद्यम् । धर्मशास्त्रज्ञत्वमत्राऽप्यनुवर्तते तच्च पर्षत् । सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः । अध्यात्मज्ञानेषु निपुणतमो धर्म(६)शास्त्रज्ञश्च एकोऽपि वा यं ब्रूते सोऽपि धर्म(७) एव ॥ ९ ॥

इत्युपोद्घातप्रकरणम् ।

—:०:—

(१) धर्मेणैव इति क पुस्तके ।  (२) शास्त्रविरोधश्च इति क पुस्तके नास्ति ।
(३) वा इति क पुस्तके ।  (४) सा—इति क पुस्तके ।
(५) वेदशास्त्रधर्मज्ञा ख.  (६) वेदधर्मशास्त्रज्ञश्च ख  (७) सोऽपि धर्म एव

# अथ ब्रह्मचारिप्रकरणम् २

( वी०मि० ) अथ वर्णधर्मेषु वक्तव्येषु वर्णानाह—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ॥
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ १० ॥

ब्रह्म=ब्राह्मणः। क्वचिद्विप्रेतिपाठः। कर्माधिकारिविभागाय द्विजान् विविनक्ति-'स्वाद्यास्त्रयो द्विजाः'-अत्र तुशब्दस्य वर्णा इत्युत्तरं पाठात् स्वरूपस्य आद्या इत्यनन्तरं योजनादर्थस्य सङ्गतिः । तेषामाद्यास्तु त्रयो द्विजाः द्विर्जायन्त इति व्युत्पत्तेः। तथा च वक्ष्यति-मातुर्यदग्र इत्यादि (१।३९)। अत्र वृत्तीनामनभिव्यक्तलिङ्गसङ्ख्यत्वात् ब्राह्मणाश्च क्षत्रियाश्चेत्यादिविग्रहेऽपि प्रकृतसमासोपपत्तेराद्या इत्यनेन ब्राह्मणा एवोक्ता इति भ्रमनिरासाय त्रय इत्युक्तम्। वर्णा इत्यनुषङ्गेऽपि त(१)न्नि- रासात्। तत्र च ब्रह्मव्यक्तिषु तिसृषु अनवध्यवसायादव्याप्त्यानन्त्याच्च ब्राह्मणत्वक्षत्रियत्ववैश्यत्वाद्येवाऽऽदाय त्रित्वपर्यवसानमिति । अत्रैव मनुः—

चतुर्थ एकजातिस्तु वर्णो नास्ति तु पञ्चमः ।

चतुर्थः शूद्रः वर्णशुद्धः। वर्णसङ्करस्त्वस्त्येव,-वर्णसङ्करो न वर्णान्तर्गत इत्यप्याहुः। तत्र द्विजानां शूद्रादिभ्यो धर्मे विशेषमाह—

निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।

निषेको गर्भाधानं तदाद्याः श्मशानं तसम्बन्धिन्यन्त्येष्टिः तदन्ताः क्रिया मन्त्रतो मन्त्रकरणिकाः। तेषां वै द्विजानामेव, न तु शूद्रस्याऽपि। अमन्त्रकास्तु तस्याऽपि क्रियाः। अत एव चूडाकरणान्ताः क्रियाः प्रकृत्य यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केन चित्समसृजत् छन्दसा तं प्रजापतिः ॥

शूद्र इति लिङ्गमविवक्षितमनुपादेयगतत्वात्। एवंविधः=चूडान्तक्रियावान्-अत एव संस्कृतः कार्यः। मन्त्रेण वैदिकेन'वेद (२)मन्त्रवर्ज'—मित्येकमूलताऽनुरोधात् । केन चिद्गायत्र्यादिना प्रजापतिर्ब्रह्मा तं

(१) अपि इति ख. पुस्तके पाठः। (२) वेद इति ख. पुस्तके नास्ति।

शूद्रं समसृजत् संयोजयामास वेनोपनयनं नास्तीत्यर्थः । तथा च श्रुतिः-'गायत्र्या ब्रा(१)ह्मणं समसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केन चिच्छन्दसा शूद्र' मिति । एवञ्च—

विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदा ।

इति ब्रह्मपुराणे मात्रपदेन उपनयनस्य वैदिकमन्त्रस्य वा व्यवच्छेदो, न गर्भाऽऽधानादीनामपीति मन्तव्यम् ॥ १० ॥

( मिता० ) एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह—

ब्रह्मेत्यादि । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्षणास्तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः द्विर्जायन्त इति द्विजाः तेषां द्विजानां वै एव न शू(२)द्रस्य । निषेकाद्याः निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । श्मशानं पितृवनं तत्सम्बन्धि कर्म अ(३)न्ते यासां ताः क्रिया मन्त्रैर्भवन्ति ॥ १० ॥

( वी०मि० )उक्ता एव निषेकादिक्रियाः कालविशेषसम्बन्धेनाऽन्यकामन् । तासां फलमप्याह सार्धश्लोकाभ्याम्—

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ॥
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ ११ ॥

गर्भ आधीयते ऽनेनेत्यादिव्युत्पत्तिभिर्गर्भाधानादिशब्दैस्तत्तत्संस्कारकर्माण्युच्यन्ते । ऋतौ=वा वक्ष्यमाणे काले । पुमा(४)न् सूयतेऽनेनेति पुंसवनं पुंसः सवनमित्यनेनोक्तम् । स्पन्दनात्=गर्भचलनात् । पूर्वं=तृतीये मासीत्यर्थः । 'चतुर्थे स्पन्दते ततः' इति वचनात् । गर्भमासात् षष्ठेऽष्टमे वा=मासि सीमन्तोन्नयनम् । एते=आ(५)इते बहिर्गते गर्भकोशात् अपत्ये सति जन्मनि जातकर्म इत्यर्थः । 'प्रसवे जातकर्म च'-इति पाठः सुगमः । चशब्देन (६)प्रसङ्गादपत्यजन्मकालकृत्यानामन्येषां कर्मणां समुच्चयः । यद्वा—अग्रिमश्लोकस्यैकादशे इत्यनन्तरं संयोज्यमानो·

(१) ब्रह्मणं इति ख० पुस्तके । (२) न शूद्राणां क (३) अन्तो येषां क.
(४) पुमान्-इति क ख पुस्तकयोः पाठः । (५) आहते इति क. पुस्तके, आयते-इति तु ख पुस्तके । (६) चशब्देन संस्कारकर्म समुच्चीयते ऋतौ वा वक्ष्यमाणे काले पुमान् सूयते प्रसङ्गात्-इत्यधिकं ख पुस्तके पाठः ।

ऽत्राऽनुक्तान् द्वादशादीन् समुच्चिनोति ते च दर्शयिष्यन्ते ॥ ११ ॥ *

अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ १२ ॥

( वी०मि० ) एकादशे जन्मदिनात्, एतच्च सूतकान्तोपलक्षणम् । 'आशौचव्यपगमे नामधेयकरणम्' इति विष्णुवचनात् । अत्र श्रुतिः— 'एकादशे द्वादशे वा पिता नाम कुर्यात्' । मनुः—

नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥

दशम्यां तिथौ=दशम दिन इति यावत् । एतच्चाशौचापकर्षे दशम्यामुपस्थाप्य ब्राह्मणान् भोजयित्वा पिता—

नामधेयं दशम्यान्तु केचिदिच्छन्ति पार्थिव ।
द्वादश्यामपरे रात्र्यां मासे पूर्णे तथा परे ॥
अष्टादशेऽह्नि च तथा वदन्त्येके मनीषिणः ।

रात्रिपदमहोरात्रपरम् । गोभिलः—'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम्' । व्युष्टेऽतीते । अत्र कालविकल्पे व्यवस्थेति वक्ष्यते(१) । निष्क्रमः सूर्यस्य चन्द्रमसो वा दर्शनार्थमपत्यस्य सूतीगृहान्निस्सरणं चतुर्थे मासि । एतच्च छन्दोगानाम् । 'जननाद्यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायाम्' इति गोभिलवचनात् । ज्यौत्स्नः शुक्लपक्षः । 'षष्ठेऽन्नप्राशनं मासि' इति प्रथमः कल्पः ।

ततोऽन्नप्राशनं कार्यं मासि षष्ठे यथाविधि ।
अष्टमे वाऽपि कर्तव्यं यद्वेष्टं मङ्गलं कुले ॥

इति ब्रह्मपुराणे कालान्तरस्याऽपि विधानात् । लौगाक्षिरपि —'षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा' । चूडा—चूडाकर्म । यथाकुलं कुलाचाराऽनुसारेण द्वितीये तृतीये वाऽब्दे । तथा च मनुः—

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिदर्शनात् ॥

---

* एकादशद्वादशश्लोकयोर्मिताक्षराख्या व्याख्या त्वेकत्र सम्बद्धेति द्वादशात् श्लोकादुत्तरमुभयोरपि मिताक्षरा द्रष्टव्या ।

(१) वक्ष्यते-इति क. पुस्तके नास्ति ।

द्वितीये पूर्णे इत्यनुषज्यते । तृतीये स्वल्पाऽवशिष्टे 'तृतीये भूयिष्ठे गते चूडा' इति लौगाक्षिवचनात् । इदञ्च तृतीयस्यैव चरमभागप्रशंसापरमिति न पौनरुक्त्यम् । कार्येति विभक्तिविपरिणामेन गर्भाधानादिषु उपनयनान्तेष्वप्यन्वेति । नाम्नस्तु करणं व्यवस्थापनमात्रमिति विशेषः । न च चूडापदवन्नामपदमपि कर्मविशेषपरमेवाऽस्त्विति वाच्यं, प्रामाणिककल्पनविरोधादिति ॥ १२ ॥

( मिता० ) इदानीं ताः क्रिया अनुक्रामति—

गर्भाधानमिति । अहनीति च । गर्भाधानमित्यनुगतार्थं कर्मनामधेयम् । एवं वक्ष्यमाणान्यपि । तद्गर्भाधानमृतौ ऋतुकाले वक्ष्यमाणलक्षणे । पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम् । षष्ठेऽष्टमे वा मासि सीमन्तोन्नयनम् । एते च द्वे पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये न प्रतिगर्भम् । यथाऽऽह देवल —

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।
यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥ इति ।

यद्वा एते=आ इते आगते गर्भकोशाज्जाते कु(१)मारे जातकर्म । एकादशेऽहनि ना(२)म । तच्च पितामहमातामहादिसम्बद्धं कुलदेवतासम्बद्धं वा । यथाह शङ्ख —'कुलदेवतासम्बद्धं पिता नाम कुर्यात्' इति । चतुर्थे मासि निष्क्रमणलक्षणं सूर्यावेक्षणं कर्म । षष्ठे मास्यन्नप्राशनं कर्म । चूडाकरणं तु यथाकुलं कार्यमिति प्रत्येकं सम्बध्यते ॥ ११ ॥ १२ ॥

( वी०मि० ) उक्तक्रियाणामावश्यकत्वे ऽप्यानुषङ्गिकं फलमाह —

एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥

एवं=एवंकृते बीजं शुक्रं शोणितं च, गर्भस्तदाशयः, तत्समुद्भवस्तत्सम्बन्धि । एनो ऽशुचित्वमपत्यस्य । अत्र गर्भाधानादित्रयं क्षेत्रसंस्कारद्वारा ऽपत्यसंस्कारकम् । क्षेत्रसंस्कारश्च प्रथमगर्भ एव जात इति न प्रतिगर्भमावर्तनीय, 'आरम्भणीया' न्यायात् । तथा च हारीत —

सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

---

(१) कुमारे जाते च (२) नामकरणम् च

सीमन्तेन तदन्तकर्मणा, न्यायतौल्यात् । वचनस्य चाऽस्य न्यायमूलकत्वात् । द्विजेति चोपलक्षणम् । अत एव—

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।

इति देवलेन संस्कृतेति नारीति च सामान्येनैवोक्तम् । जातकर्मादि तु साक्षादेवाऽपत्यसंस्कारकमिति प्रत्यपत्यमावर्तनीयमिति विवेकः । द्विजसंस्कारे तूपनयनमप्यधिकम् ।

गार्भैर्होमैर्जातकर्म चौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते । इति मनूक्तेः ।

गार्भैर्होमैरिति तु पुंसवनादीनामप्युपलक्षणम् ॥

( मिता० ) एतेषां नित्यत्वेऽप्यानुषङ्गिकं फलमाह—

एवमिति । एवमुक्तेन प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः कृतैरेनः पापं शमं याति । किंभूतम् । बीजगर्भसमुद्भवं शुक्रशोणितसम्बद्धं गात्रव्याधिसङ्क्रान्तिनिमित्तं वा न तु पतितोत्पन्नत्वादि ॥

( वी०मि० )द्विजस्त्रीणां द्विजेभ्यः शूद्रादिभ्यश्च विशेषमाह—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥

तूष्णीं=वेदमन्त्रेण विना । एताः=जातकर्माद्याः । स्त्रीणां=ब्राह्मण्यादितिसृणाम् । विवाहकर्मणि पत्युरधिकारस्तस्य च निषेकाद्या इत्यादितः सामान्यत एव मन्त्रप्राप्तौ--

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।

इति(१)वचनाद्विवाहस्य स्त्रीसंस्कारकत्वेन तत्प्राधान्यमभिप्रेत्य तथा च मन्त्राणामपि सम्बन्धमाह-विवाहस्तु समन्त्रकः, इति । अत्र जातकर्मादौ साङ्गोपाङ्गे मन्त्रा(२)णां निषेधः । तथा च मनुः—

अमन्त्रिका तु कार्येयं स्त्रियामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥

आवृत्=क्रिया । अशेषतः=सेतिकर्तव्यताका । एवं च विवाहेऽपि साङ्ग एव मन्त्रविधिरेकत्रेति न्यायादि(३)त्यर्थः ॥ १३ ॥

(१) वचनाद्विवाहस्य-इत्यादिः-स मन्त्रक इति-इत्यन्तो भागः ख. पुस्तके नास्ति ।
(२) मन्त्रामन्त्राणां-इति क. पुस्तके पाठः । (३) न्यायादिति-इति ख. पुस्तके पाठः ।

( मिता० ) स्त्रीणां विशेषमाह—

तूष्णीमिति । एता जातकर्मादिकाः क्रियाः स्त्रीणां तूष्णीं विनैव मन्त्रैर्यथाकालं कार्याः । विवाहः पुनः समन्त्रकः कार्यः ॥ १३ ॥

( वी०मि० )उपनयनकालमाह—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ॥
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥

गर्भाधानसमयादष्टमे जन्मसमयादष्टमे वा वर्षे ब्राह्मणस्योपनायनम् । स्वार्थे णिच् । राज्ञां एकादश-इत्यत्र गुणभूतोऽपि गर्भशब्दोऽनुवर्तनीयः,आकाङ्क्षाबलात् तथा गोभिलः –'गर्भाष्टमेषु ब्राह्मणमुपनयेत् गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम्' इति । विशां सैक-इत्यत्र एकादश इत्यनुषङ्गः, तेन द्वादश इत्यर्थः । एके=आचार्याः । यथाकुलं–कुलाचाराऽनुसारेण उपनयनमित्याहुः । एतेन कालान्तरमपि स्मृत्युक्तं तद(१)नुक्तं च सूचितम् । (२)तथा च गौतमः –'उपनयनं ब्राह्मणस्याष्टमे नवमे पञ्चमे वा काम्यम्' । अष्टम इति नित्यकालनिर्देशः । मनुः —

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

उपनयेदित्युपक्रम्य— आपस्तम्बः –'अष्टमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमे ऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम्' । अत्र संस्का(३)रप्रकरणे यत्र इव मासादयस्त्रिंशदहोरात्रात्मका एवेति प्राञ्च । सौरास्ते । परन्तु यस्मिन्मासे जन्मादिनं सम्पूर्णमेवाऽऽदाय मासादिगणनमित्येके । अनयैव रीत्या मुख्याश्चान्द्रास्त इत्यपरे । परे पुनर्गौणचान्द्ररूपास्तिथिनिर्मिता मासिकादाविव प्रकृतेऽपि त इत्याहुः । कालविकल्पः फलविशेषाऽनुक्तौ पूर्वपूर्वसम्पत्तावुत्तरोत्तराश्रयणामित्येव व्यवस्थितो बोध्यो न त्वैच्छिको,ऽष्टविधदोषादित्यन्यत्र व्युत्पादितम् । फलविशेषोक्तौ तु तदनुसारे व्यवस्था । सति सम्भवे स्वगृह्योक्त एव कल्प आदर्तव्य इति दिक् ॥ १४ ॥

---

(१) तदनुक्त इति ख पुस्तके नास्ति । (२) यथा-इति क पुस्तके । (३) संस्कारेण इति ख पुस्तके पाठ ।

( मिता० ) उपनयनकालमाह—

गर्भेति। गर्भाधानमा(१)दिं कृत्वा जननं वाऽष्टमे वर्षे ब्राह्मणस्योपनायनं उपनयनमेवोपनायनम्। स्वार्थे अण् वृत्ता(२)नुसारात्। छन्दोभङ्गात्। आर्षं वा दीर्घत्वम्। अत्रेच्छया विकल्पः। राज्ञामेकादशे। विशां वैश्यानां सैक एकादशे द्वादश इत्यर्थः। गर्भग्रहणं सर्वत्राऽनुवर्तते। समासे गुणभूतस्याऽपि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राऽप्यनुवर्तनं कार्यम्।

गर्भादेकादशे राज्ञो गर्भाद्धि द्वादशे विशः।

इति स्मृत्यन्तरद(३)र्शनात्। यथा—अथ श(४)ब्दाऽनुशासनम्। केषां शब्दानामिति। लौकिकानां वैदिकानामिति। अत्राऽपि कार्यमित्यनुवर्तते कुलस्थित्या केचिदुपनयनमिच्छन्ति॥ १४॥

( वी० मि० )उपनयनान्तसंस्कारकर्मणां पित्रादिकर्तव्यत्वं दर्शयन्नेव पित्रादेः कृत्यान्तरमाह—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्॥
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥ १५॥

एवं ब्राह्मणादिकं शिष्यं शासनार्हं शुश्रूषादिगुणयुक्तमसूयादिदोषरहितं चेति यावत्। उपनीय=उपनयनाख्यकर्मणा संस्कृत्य। महाव्याहृतयो भूराद्यास्तिस्रः। सप्तेत्येके। तत्पूर्वकं यथा स्यात्। वेदं मन्त्रब्राह्मणरूपं पित्रादिरध्यापयेदित्यर्थः। महाव्याहृतयः प्रणवस्याऽप्युपलक्षिकाः।

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यलं कृतं पूर्वं परस्ताच्च विशीर्यते॥

इति मनुवचनात्। ब्रह्मणो वेदस्य शौचं वक्ष्यमाणम्। आचाराह्निकादीन् चकारादन्यानपि ब्रह्मचारिनियमान्। शौचग्रहणं 'गोबलीवर्द' न्यायात्॥ १५॥

( मिता० ) गुरुधर्मानाह—

उपनीयेति। स्वगृह्योक्तविधिनोपनीय गुरुः(५)शिष्यं महाव्याहृतिपूर्वकं वेदमध्यापयेत्। महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त। पञ्च वा

(१) अर्वाक् कृत्वा जन्मनो ख. (२) प्रकरणानुसारात् क. (३) वचनात् ख.
(४) शब्दानामिति क. (५) शिष्यं गुरुः ख.

गौतमाऽभिप्रायेण । किं च शौचाचारांश्च वक्ष्यमाणलक्षणान् शिक्षयेत् । उपनीय शौचाचारांश्च शिक्षयेदित्यनेन प्रागुपनयनात्कामचारो दर्शितः । वर्णधर्मान्वर्जयित्वा स्त्रीणामप्येतत्समानं विवाहादर्वाक् । उपनयनस्थानीयत्वाद्विवाहस्य ॥ १५ ॥

( वी० मि० ) शौचादीन् यथायथमनुक्रामन्नाह—

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥

कर्णे स्थितं ब्रह्मसूत्रं यज्ञोपवीतं यस्य सः । कर्णोऽत्र दक्षिण प्रथमोपस्थितत्वादाचाराऽनुसाराच्च ।

पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमाचरेत् ।

इति वचनादिति केचित् । इदं चैकवस्त्रतायाम् । 'यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा' इति सांख्यायनसूत्रात् । द्विवस्त्रपक्षे तु—

नियम्य वाचं संवीताङ्गो ऽवगुण्ठितः ।

इति मनुवचनान्निवीतमेव कर्तव्यम् । संवीतन्निवीतं अङ्गे यस्य स तथा निवीतं कण्ठे सज्जितयज्ञसूत्रं 'निवीतं कण्ठसज्जने' इति कोशात् । तदपि पृष्ठदेशलक्षितं कार्यम् ।

कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।

इति यमवचनात् । दिवा=दिने । सन्ध्यासु=प्रातःसायंरूपासु 'सन्ध्ययोश्च यथा दिवा' इति वचनात् । बहुवचनस्य व्यक्तिबहुत्वादेवोपपत्तेः । सन्ध्यासु तिसृष्वपि द्विवेलस्य तदतिरिक्तभागपरत्वादित्यपि व्याचक्षते—उदङ्मुख=उत्तराभिमुखः । रात्रौ दक्षिणाभिमुखः कुर्यादुत्सृजेत् । चेदिति सन्ध्यास्वित्यत्राऽप्यन्वितम् । उपरोधविशेषेण—

मैत्रं पूर्वाह्ण एवेति सन्ध्यासु परिवर्जयेत् ।

इति चोक्तनिर्वाहाऽसम्भवाभिप्रायम् । अत्र पूर्वाह्ण इति ब्रह्ममुहूर्त्तपर्यन्तपरम् । मूत्रपुरीषे त्विति तु शब्दो भिन्नक्रमो दिवेत्यत्राऽन्वेति । दिवेत्यस्य प्रातर्मध्याह्नपरत्वेन सङ्गवादिषु उदङ्मुखत्वव्यवच्छेदार्थत्वात् । साम्प्रदायिकास्तु पुरीषे चेति पाठः । चकार उदङ्मुख इत्यनन्तरं योज्यः । तेन दिवा दिगन्तराभिमुखस्याऽत्रा-(१)ऽनुक्तस्य पुरीषाद्युत्सर्गे रीतिविशेषस्य च समुच्चयः । तथा देवल—

(१) अत्र इति क० पुस्तके नैक पाठ ।

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः।
विण्मूत्रे विसृजेन्नित्यं सन्ध्यासु परिवर्जयेत्॥

यमः—

प्रत्यङ्मुखस्तु पूर्वाण्हे ऽपराण्हे प्राङ्मुखस्तथा।
उदङ्मुखस्तु मध्यान्हे निशायां दक्षिणामुखः॥

एवञ्च दिवा प्रातरादित्रिमुहूर्तात्मकसमयपञ्चकभेदेन व्यवस्थेति। 'ऐच्छिको विकल्पः' इति केचित्। एते च नियमाः सति सम्भवे, अन्यथा तु—

छायायामन्धकारे वा रात्रावहनि वा द्विजः।
यथासुखमुखः कुर्यात्प्राणबाधभयेषु च॥

इति यमवचनात्। नेति विष्णुपुराणे—

ततः कल्पं समुत्थाय कुर्यान्मैत्रं नरेश्वरः।
नैर्ऋत्यामिषुविक्षेपमतीत्याऽभ्यधिकं भुवः॥

'नैर्ऋत्यां शयनस्थानात्' आपस्तम्बः। दक्षिणां दिशं गत्वेति शेषः। अ(१)थ अस्तमिते वहिर्ग्रामादाराच्चावसथान्मूत्रपुरीषे वर्जयेत्। आराद् दूरे–इत्युपाध्यायाः। समीप–इति मिश्राः। वायुपुराणे—

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन च।
मृण्मयैर्भाजनैर्वापि अन्तर्धाय वसुन्धराम्॥

तृणैः काष्ठैश्च कुशपालाशादिभिन्नैः। 'तृणमयज्ञिकं काष्ठ'मित्यापस्तम्बात्। हारीतः —

न गच्छन्नाप्यवस्थितः स्थित ऊर्ध्वम्।

आपस्तम्बः–'न सोपानत्को मूत्रपुरीषे कुर्यात्'। शङ्खलिखितौ–'नानन्तर्वासा न निर्वासाः'। अनन्तर्वासा अधरीयशून्यः। हारीतः–घ्राणास्यं वाससा वेष्टयित्वा मृद्धात्रीग्रीवामासज्य दक्षिणे वामपार्श्वे कमण्डलुमाधाय। मृद्धात्री मृत्तिकापात्री।

यमः—

शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम्।

विष्णुपुराणे—

तिष्ठेन्नातिचिरं तत्र।

तत्र मूत्रादिस्थाने। हारीतः–'लोष्ठेन प्रमृजीत शुष्ककाष्ठेन वा'।

(१) तथा–इति ख० पुस्तके पाठः।

गुदलिङ्गे इति शेषः । लोष्टेनेति शुष्ककाष्ठाभावे । 'पर्णलोष्ठाश्मभिर्मूत्रपुरीषापकर्षणं कुर्या'दिति यमनिषेधात् । व्यास –

नाऽश्ममूत्रफलाङ्गारैरन्मृज्याद्वाऽस्थिवर्हिषा ।

हारीत –'आर्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः स्रंसणं वर्जये'दिति । मूत्राद्युत्सर्गे देशविशेषनिषेधादयस्तु गृहस्थप्रकरणे दर्शयिष्यन्ते ॥ १६ ॥

( मिता० ) शौचाचारानाह—

दिवेति । कर्णस्थं ब्रह्मसूत्रं यस्य स तथोक्तः । कर्णश्च दक्षिणः । 'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्' इति लिङ्गात् । असावहनि सन्ध्ययोश्च उदङ्मुखो मूत्रपुरीषे कुर्यात् । चकाराज्जन्त्वादिरहिते देशे । रात्रौ तु दक्षिणामुखः ॥ १६ ॥

( वी० मि० )

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥

गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥

गृहीतशिश्नो वामहस्तेन औचित्यादाचाराच्च । उ(१)त्थाय पुरीषाद्युत्सर्गस्थानात् । चकारात्स्थानान्तरे उपविश्य । केवलजलेन लिङ्गगुदे क्षालयित्वा । 'सुनिर्णिक्ते मृदं दद्या'दिति ब्रह्माण्डपुराणात् । सुनिर्णिक्ते केवलजलक्षालिते पायाविति निबन्धृभिस्तद्व्याख्यानात् । मृद्भिः प्रीवासकमृद्धानीतः शुचौ देशे स्थापिताभिरसिकताभिः(२) । अन्यथा तद्धारण(३) स्याऽदृष्टार्थतापत्तेः । तदसम्भवे स्वयमतोऽप्यानीताभिरावश्यकत्वात् शुचिदेशीयाभिः ससिकताभिः शर्करावल्मीकपांसुलकर्दममार्गोखरकुड्यलेपासम्भाविधनीभिः अन्तर्जलस्थशौचावशिष्टकीटादिप्राणियुक्तहलोत्खातव्यतिरिक्ताभिश्च स्मृत्यन्तराऽनुसारात् । केचित्तु—

वापीकूपतडागेषु नाहरेद्बाह्यमृत्तिकाः ।
अन्तर्जलगता ग्राह्याः परतो मणिबन्धनात् ॥

इति स्मृतिमञ्जूषालिखितवाक्यं प्रमाणयन्तो वाप्यादावन्तर्जलस्थां मृदमुपाददते । अभ्युद्धृतैः—पूर्वमेव करकादिपात्रे स्थापितैः । पत-

---

( १ ) उत्थाय-इत्यादि मृदं दद्या इत्यन्तो भाग ख० पुस्तके नास्ति ।
( २ ) असिकताभि – इत्यत शर्करावल्मीकं पांसुल कर्दममार्ग —इत्यधिकं ख० पुस्तके ।
( ३ ) तद्धारणस्य—इति ख० पुस्तके ।

त्प्राण्यर्थमेवाऽभीत्युपसर्गस्याऽधिकस्योपादानम्। अत एव लिखितहा-रीतस्मृतौ-'दक्षिणपार्श्वे कमण्डलुधारणमुक्तं दृष्टार्थतया सङ्गच्छते'। सङ्गच्छते च—

उद्धृतोदकमादाय मृत्तिकां चैव वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥

इति ब्रह्मपुराणे उद्धृतस्याऽऽदानविधानम् । एवं च जलाशयाद्ध-स्तमात्राहृतजलैः शौचं व्युदस्तम्। करकाद्यभावे तु हेमाद्रौ विशेष उक्तः-

बलिमात्रं परित्यज्य कुर्याच्छौचमनुद्धृतः । इति ।

इदं पुनरत्राऽवधेयम् । मूत्रपुरीषोत्सर्गकालादौ कर्णोपवीतधार-णादि न काम्यं,फलाऽश्रवणात् । विश्वजिन्न्यायस्याऽतिजघन्यत्वात्। नापि नित्यं मानाऽभावात्। नापि मूत्रपुरीषोत्सर्गाद्यङ्गमलौकिकानङ्ग-त्वात्। अन्यथा तक्षसूत्राधिकरणविरोधात् । किन्तु गृहस्थादाचार-भङ्ग इन्द्रबाहुबन्धनादिवन्नैमित्तिकं न्यायतोलयात्। अत एव न्यूना-धिकं न कर्तव्यमित्यग्रे ले(ख?)ख्यवचने अवहितातिक्रमे सामान्यत एव प्रायश्चित्तोपदेशः सङ्गच्छत इति कृतं विस्तरेणेति । गन्धलेपेति। गन्धलेपौ पुरीषादेः तत्क्षयकरं शौचं पाद्यादिक्षालनं कुर्यात्। अधो वामेन उदूर्ध्वं दक्षिणेन पाणिना ।

धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् ।
तथैव वामहस्तेन नाभेरूदूर्ध्वं न शोधयेत् ॥
प्रकृतिस्थितिरेषा स्यात्कारणादुभयक्रिया ।

इति देवलात् । अतन्द्रितः=अनलसः । अनेन स्मृत्यन्तरोक्तसंख्यादि-नियममभिप्रैति। तथा च मनुः-

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥

एकत्र वामे । हारीतः-'दश मध्ये षडग्रतः' ।

पुनर्मनुः—

तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।

मूत्रमात्रोत्सर्गे दक्षः—

एका लिङ्गे तु सव्ये त्रिरुभयोर्मृद्द्वयं स्मृतम् ।

ब्राह्मे—

पादयोर्द्वे गृहीत्वा च ।

अत्र पुरीषोत्सर्गे पादयोस्तिस्रः मूत्रमात्रोत्सर्गे त्वेकैका मृत्तिकेति मिश्राः । उभयत्राऽपि लेपादिशङ्कायां प्रथमः कल्पः । तदभावे द्वितीय इत्युपाध्याय । पैठीनस—'मूत्रे द्वे द्वे(१)तस्रः समुत्सर्गे' । अत्र ब्रह्मचारिणः प्रायश्चित्तमप्यधिकम् । शङ्ख —

मृत्तिका तु समुद्दिष्टा त्रिपर्वी पूर्यते यया ।

त्रिपर्वी तर्जनीमध्यमाऽनामिकानां चरमपर्व(२)रूपा । 'अङ्गुष्ठपर्वमात्राऽपि मृत्तिका' इति छन्दोगाह्निकम् । 'आर्द्रामलकमितापि' इति मिश्रा । गुदमृत्तिकायां दक्ष —

अर्धप्रसृतिमात्रा तु मृत्तिका प्रथमा स्मृता ।
द्वितीया च तृतीया च तदर्धं परिकीर्तिता ॥

पुनः स एव—

लिङ्गेऽप्यत्र समाख्याता त्रिपर्वी पूर्यते यया ।

अत्र लिङ्गे मृत्तिकाद्वयं गुदे पञ्च सप्त वा । वामकरे चतुर्विंशतिर्द्वात्रिंशद्वा हस्तद्वये चतुर्दश षोडश वा मृत्तिकाः स्मृत्यन्तरोक्ता लेपाद्यनुवृत्तिशङ्कायां यथाक्रमं योज्याः । एवं—

पुनः सप्त (३)च मृत्तिकाः—इति माले । शेषे हस्तद्वये सप्त मृत्तिकाः । विधिरपि तत्पर एवेति संख्यामुक्त्वा मनु—

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणन्तु वनस्थानां यतीनान्तु चतुर्गुणम् ॥
यद्दिवा विहितं शौचं रात्रौ तस्याऽर्धमिष्यते ।
तदर्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि ॥

आतुरे=अत्यातुरभिन्ने । अध्वनि=अतिकान्तारे । अन्यत्राऽऽपस्तम्ब —

पथि पादस्तु विज्ञेय आर्तः कुर्याद्यथाबलम् ।

ननु संख्यादिनियमे—

यावता मन्यते शुद्धिं शौचं कुर्वीत तावता ।
प्रमाणं द्रव्यसंख्या या न शिष्टैरुपदिश्यते ॥

इति देवलविरोध इति चेत्-मैवम्, तस्य स्त्रीशूद्रादिमात्र(४)विषय·

---

(१) मेतस इति ख० पुस्तके ।
(२) चरमपर्व तद्रूपा—इति ख० पुस्तके ।
(३) च—इति क० पुस्तकेऽधिक पाठः ।
(४) विषयत्व दिश्य दि—अन्यथेत्यन्तो भागो नास्ति ख० पुस्तके ।

त्वात्तत्र संख्यादेरश्रवणात्। 'गन्धलेपक्षयाद्याचम्य प्रयतो भवति' इति पैठीनसिरपि तत्पर एव। जलमात्रविषयं वा देवलवचनम्—

दातव्यमुदकं तावद्यावत्स्यान्मृत्तिकाक्षयः ।

इति दक्षात्। एवञ्च संख्यानियमोऽदृष्टार्थः। शुद्धिस्तु गन्धलेपक्षयादेवेति मतमनादर्तव्यं कल्पनाप्रसङ्गात्।

न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तेन शुध्येत विहितातिक्रमे कृते ॥

इति दक्षविरोधाच्च। अत्र न्यूनाधिकमिति संख्यामात्रे, तस्यैव प्रकृतत्वात्। अथ ऋष्यशृङ्गः—

यस्मिन् स्थाने कृतं शौचं वारिणा तत्तु शोधयेत् ।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥

अथ हारीतः—'गोमयेन मृदा कमण्डलुं परिमृज्य'। ब्रह्मपुराणे—द्विराचम्यत—इति ॥ १७ ॥

( मिता० ) गृहीतशिश्न इति। किं च अनन्तरं शिश्नं गृहीत्वोत्थायोद्धृताभिरद्भिर्वक्ष्यमाणलक्षणाभिर्मृद्भिश्च गन्धलेपयोः क्षयकरं शौचं कुर्यात्। अतन्द्रितोऽनलसः। उद्धृताभिरद्भिरिति जलान्तः शौचनिषेधः। अत्र गन्धलेपक्षयकरमिति सर्वाश्रमिणां साधारणमिदं शौचम्। मृत्संख्यानियमस्त्वदृष्टार्थः ॥ १७ ॥

( वी० मि० ) अथाऽऽचमनप्रकारमाह—

अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ॥
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥

शुचौ=अशौचापादकनिमित्तरहिते। देशे=भूमौ। अन्तर्जानुः=जानुद्वयमध्यस्थितबाहुद्वयं तादृग्दक्षिणबाहुं वा यथा स्यात् तथोपविष्टः। तथा च हारीतः—'अन्तरूर्ध्वोर?रत्नी कृत्वा'। (१)गौतमश्च—'दक्षिणबाहुं जान्वन्तरं कृत्वा'। अत्र शक्त्यपेक्षो विकल्पः। द्वितीयपक्षो द्विराचम्यत एवेति मिश्राः। उदङ्मुखः=उत्तराभिमुखः, प्राङ्मुखः। वेत्यनुक्तस्याऽपि विकल्पार्थः। 'ईशानाभिमुखो भूत्वा' इति मरीचिवचनात्। उदङ्मुखत्वादिकमाचमनान्तम्(२)। पादप्रक्षालनेऽपि—

( १ ) गौतमश्चेति कृत्वेत्यन्तो भागो नास्ति क० पुस्तके ।
( २ ) आचमनाङ्गम्-इति ख० पुस्तके ।

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥

इति देवलात् । स्थित्वेत्यूर्ध्वावस्थायामेव । चरणक्षालनोक्तिर्जानुपर्यन्तक्षालनपक्षे—

इत्येवमुक्त्वा राजा तु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चाऽऽमणिबन्धाभ्यां पश्चादासीत संयतः ॥

इत्यग्रे तेनैवाऽभिधानात् । 'प्रक्षाल्य पादौ चोपविश्ये'ति गोभिलोऽप्येवम् । आजान्विति अध्वभ्रमणादिना जानुपर्यन्तशौचे । 'अन्यथा त्वाजङ्घाभ्यां पादा'विति हारीतोक्तमेव ग्राह्यम् । दैवत्य इत्यनेन च एतद्वचनैकवाक्यत्वात् । पित्र्या इति रिक्तवैदिककर्माङ्गं नैमित्तिकञ्च सर्वमेवाऽऽचमनमभिप्रैति ।

प्रक्षाल्य पादौ पाणी च त्रिः पिबेदम्बु वीक्षितम् । इति ।

दाक्षेणे सामान्यादेवाऽऽचमने पादादिक्षालनविधानात् आकाङ्क्षातौल्यात् । प्रकृते तु पृथक् तदभिधानं मूत्रादिकालीनपादक्षालनेनैव चरितार्थत्वात् । एवञ्च 'पृथक् पादासेचन'मित्यापस्तम्बवचनं केवलपादक्षालनविषयतया नेयम् । क्षालनन्तु पादयोर्दक्षिणोपक्रमेण 'सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति, ब्राह्मणश्चेद्दक्षिणं प्रथम'मिति पारस्करात् । छन्दोगानान्तु वैपरीत्यं गोभिलाऽनुसारात् ।

सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् ।

इति (१) कात्यायनवचन—

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।

इति मार्कण्डेयपुराणवचनाभ्यां कुशपवित्रधारणविधानम् । कर्माङ्गाचमनमात्र इति सामान्याचमनप्रकरणेऽत्र तथोक्तम् ।

क्रियां यः कुरुते मोहादनाचम्येह मानवः ।
भवन्ति निष्फलास्तस्य क्रियाः सर्वा न संशयः ॥

इति वायुपुराणवचनेनाऽऽचमनस्य सकलवैदिककर्माङ्गत्वावगमात् । सन्ध्यावन्दनाङ्गाचमनमात्रे तद्विधानमुपक्रमानुरोधात् इत्यपि केचिदित्यास्तां विस्तरः । ब्राह्मेण तीर्थेन—वक्ष्यमाणेन । द्विज इत्याचमनकर्तृमात्रोपलक्षणमाकाङ्क्षातौल्यात् । नित्यं सति सम्भवे तीर्थान्तरसौष्ठवेऽपि—

(१) एतदादि —आचमनक्रियामित्यन्तो भाग क० पुस्तके नास्ति ।

ब्राह्मेण विप्रतीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥

इति मनुना सम्भवे तीर्थान्तरस्याऽपि विधानात् । उपस्पृशेत=आचामेदिति ॥ १८ ॥

( मिता० ) अन्तरिति । शुचौ अशुचिद्रव्यासंस्पृष्टे । देश (१)इत्युपादानादुपानच्छयनासनादिनिषेधः । उपविष्टो न स्थितो न शयानः प्रह्वो गच्छन्वा । उदङ्मुखः प्राङ्मुखो वेति दिगन्तरनिवृत्तिः । शुचौ देश इत्येतस्मात्पादप्रक्षालनप्राप्तिः । ब्राह्मेण तीर्थेन वक्ष्यमाणलक्षणेन । द्विजो न शूद्रादिः । नित्यं सर्वकालमाश्रमान्तरगतोऽपि । उपस्पृशेदाचामेत् । कथम् । अन्तर्जानुः जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति ॥ १८ ॥

( वी० मि० ) ब्राह्मेणेत्युक्तं, तत्किं ब्राह्मं किञ्च तस्य विशिष्य विधिना व्यवच्छेद्यं तीर्थान्तरमित्यपेक्षायां तीर्थान्याह—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥

देशिनीतर्जनीकनिष्ठादीनां मूलानि करस्याग्रं अनुक्रमात् यथासंख्यं प्रजापतितीर्थादीनि स्युः । तुशब्देनाऽङ्गुष्ठतर्जनीमूलयोर्व्यवच्छेदः । यदि तु चेति पाठः । तदा कनीनीमूलस्य समुच्चयः । (२)तथा च बौधायनः—'कनीनीमूलं दैवमङ्गुल्यग्रमार्षम्' । वसिष्ठः—'ङ्यङ्गुष्ठस्याऽग्रे मानुषं मध्य आग्नेयम्' । योगी—'मध्ये सौम्यं प्रतिष्ठितम्' । ब्रह्मे हस्तमध्ये ब्राह्मम् । शङ्खः —'कायं कनीनिकामूलम्' । एवञ्च'कनिष्ठामूलस्य कायं प्राजापत्यं दैव'मिति । 'तर्जन्यङ्गुष्ठमध्यस्य पित्र्य'मिति । 'अङ्गुष्ठमूलस्य ब्राह्म'मिति । 'अङ्गुल्यग्रस्य दैवं आर्ष'मिति । 'हस्तमध्यस्य आग्नेयं सौम्यं ब्राह्म'मिति संज्ञा पर्यवस्यतीति ॥ १९ ॥

( मिता० ) प्राजापत्यादितीर्थान्याह—

कनिष्ठेत्यादि । कनिष्ठायास्तर्जन्या अङ्गुष्ठस्य च मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रमं वेदितव्यानि ॥ १९ ॥

( वी० मि० ) आचमनस्वरूपं दर्शयन् तदुत्तराङ्गमप्याह श्लोकार्द्धेन—

---

( १ ) इत्युपानत क० । ( २ ) तथा च बौधायन — इति ख० पुस्तके नास्ति ।

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ॥

अपः=मृद्ग्रहणानन्तरं संस्कृते कमण्डलौ स्थापिताः 'गोमयेन मृदा वा कमण्डलुं परिमृज्य पूर्ववदुपस्पृशे'दिति हारीतात् । 'मूत्रपुरीषे कुर्वन् दक्षिणहस्ते गृह्णाति सव्येनाऽऽचमनीय'मिति कमण्डल्वधिकारी । बौधायनवचनपर्यालोचनया तथैवाऽवगमात् । अन्यथाऽऽचमनकाले कमण्डलुधारणस्याऽदृष्टार्थापत्तेः। आचमनीयमाचमनविधिम् । एवञ्च 'भूमिगतास्वप्स्वाचम्य प्रयतो भवति यं वा प्रयत आचामे'दित्यापस्तम्बदर्शनात् । स्वहस्तावर्जितजलाचमनं प्रायश्चित्तहेतुरिति निरस्तम् । यं प्रयतोऽन्य आचामेत् आचामयेत् स च प्रयतो भव(?)तीत्यनुपज्यते । यद्वेति क्वचित्पाठः । 'न शूद्रात्कपाण्यावर्जिताभि'रिति ग्रहवचने । सव्येकपाणिपदे आचमनकर्तृभिन्नपरे शूद्रासाहचर्यात् ।

बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ॥

इति भविष्यवचनमप्येतदनुसारेणैव नेयमित्यन्यत्र विस्तरः । त्रिः=वारत्रयम् । एवं चाङ्क्षणत्रयं योगरूढिभ्यामाद्यपूर्वस्य च सेवार्थे उपपूर्वस्पृशेरिव । क्वचित्त्वेकदेशेऽपि तत्प्रयोगो लक्षणयेति ध्येयम् । प्राश्येति प्रशब्देन प्रकृताऽम्भक्षणे स्मृत्यन्तरोक्तरीतिसाचिव्यरूपप्रकर्षपरामर्शः । तथा च देवलः —

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा द्विजः ।
उष्णीषी चाऽपि नाऽऽचामेद्वस्त्रेणोद्वेष्ट्य वा शिरः ॥

तथा—

न गच्छन्न शयानश्च न चलंश्च परान्स्पृशेत् ।
न हसन्नैव संजल्पन्नात्मानं चैव वीक्षयन् ॥
केशान्नीवीमधःकायमस्पृशन् धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥

आत्मानं हृदयं वीक्षयन्निति स्वार्थे णिच् । अधःकायो नाभ्यपेक्षया । व्यासः—

शिरः प्रावृत्य कण्ठं चाऽमुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽ४(१) शुचिर्भवेत् ॥

(१) आचान्तोऽप्यशुचिर्भवेद् इति ग० पुस्तके ।

मुक्तकच्छशिखोऽपि वेति चरणस्थाने रथ्यापणगतोऽपि वेति ब्रह्माण्डपुराणे पठितम् । प्रचेताः–'नानन्तर्वासा नाश्रु कुर्वन्न चाऽमेध्ये'। अनन्तर्वासाः=अधोवस्त्रशून्यः।

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा(१)।
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनिके? ॥

गोभिलः—

नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम् ।

देवलः—

शिखां वध्वा वसित्वा तु निर्णिक्ते वाससी शुभे ।

भविष्ये—

विना यज्ञोपवीतेन मुक्तकच्छशिखो द्विजः ।
अप्रक्षालितपादस्तु आचान्तोऽथ शुचिर्भवेत् ॥

शाट्यायनः—

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जानुर्वाजङ्घयोस्तथा ।
कृता(२)वसक्थिको यस्तु प्रौढपादः स उच्यते ॥

कृतावसक्थिकः=कृतापाश्रयः 'बद्धपर्याङ्ग' इत्येके । जलस्थं स्थलस्थं वाऽनेकोद्धाह्यं प्रक्षालितमेकोद्धाह्यमपि दारु नाऽऽसनं, मपि तु वेदीस्थानीयमतस्तत्र पादारोहणं न दोष इत्यभिनववर्द्धमानोपाध्यायः। आपस्तम्वः–'तिष्ठन्नाचामेत् प्रह्वो वा' । हारीतः—

न वहिर्जानु न त्वरया नासनस्थो न चोत्थितः ।
न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः ॥

तथा—

भुक्तासनस्थ आचामेन्नाऽन्यकाले कदाचन ।

गोभिलः—

जानुभ्यामूर्ध्वमाक्रम्य जले तिष्ठन्न दुष्यति ।
ताभ्यामधस्तथा तिष्ठन्नाचामेच्च विचक्षणः ॥

---

(१) एतदुत्तरं वासित्वा तु- इत्यन्तं ख० पुस्तके नास्ति ।
(२) एतत्पद्यार्धं क० पुस्तके नास्ति ।

पैठीनसिः-'अन्तरुदक आचान्तोऽन्तरेव शुध्यति बहिरुदक आचान्तो बहिरेव शुध्यति तस्मादन्तरेकं बहिरेकं पादं कृत्वाऽऽचामेत् सर्वत्र प्रयतो भवति'।

व्यास.—

अपः पाणिनखाग्रेण आचामेद्यस्तु वै द्विजः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

व्यास.-'वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाऽप आचामेत्'। चतुर्वेति त्रिराचमनापरितोषपक्षे। भविष्ये—

ब(१)द्धाङ्गुलिकरं कृत्वा एकाग्रः सुमना द्विजः ।
समौ च चरणौ कृत्वा तथा बद्धशिखो नृप ॥

नारसिंहे—

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत्पुनः ।
त्रिः पिबेद्वीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥

गोभिल —

रात्रावपीक्षितेनाऽपि शुद्धिरुक्ता मनीषिभिः ।

अवीक्षितेन तोयेन इति हलायुधनिबन्धे व्यास.—

बद्धहस्त उपस्पृशेत्। बद्धूरूर्ध्वीकृताङ्गुलिद्वयो हस्तौ यस्य सः इति आचारमयूखाम् ।

ब्रह्मपुराणम्—

समस्ताङ्गुलिनोद्धृत्य पानीयं दक्षिणेन तु ।
त्यक्त्वाऽङ्गुष्ठं कनिष्ठाञ्च शेषेणाऽऽचमनं विदुः ॥

देवल —

अथापः प्रथमास्तीर्यादक्षिणात्त्रिः पिबेत्समम् ।
अशब्दमनचत्राचमबहिर्जान्ववुद्बुदम् ॥

इत्यास्तां विस्तरः । द्विरुन्मृजेति वारद्वयं मार्जयित्वा, मुखमिति शेष । 'त्रिरोष्ठौ परिमृजे'दित्यापस्तम्बवचनं तूच्छिष्टजलशेषाप्रवृत्तिसम्भावनायाम् । मार्जनमङ्गुष्ठमूलेन ।

संवृत्याऽङ्गुष्ठमूले वा द्विः प्रमृज्यात्ततो मुखम् ।
संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् ॥ इति दक्षात् ।

(१) बन्द्धाङ्गुलिकरं-इति क पुस्तके ।

मुखं संवृत्याऽनिर्लोमौष्ठं मुद्रयित्वा प्रमृज्यादित्यन्वयः ।

आचान्तः पुनराचामेत् वासो विपरिधाय च ॥
ओष्ठौ संस्पृश्य च तथा यत्र स्यात्तावलोमकौ ॥

इति वसिष्ठेन निर्लोमकौष्ठभागस्पर्शे द्विराचमनविधानात् । तिसृभिस्तर्जनीमध्यमानामिकाभिः संहत्य मिलित्वा स्थिताभिः। एवं संचरणपूर्वकमेवास्यं, उप=समीपे श्यामलोमकभागे स्पृशेदित्यर्थः। एवं द्विरिति केचित् । सकृदुपस्पृशेत् द्विरित्येके । 'दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशे' दित्यापस्तम्बात् । एवञ्चाऽऽस्यमार्जनोपस्पर्शनपाणिपादप्रोक्षणानि क्रमेण सिद्ध्यन्ति । मार्जनोपस्पर्शनयोर्मध्ये तु पाण्यादिप्रोक्षणं छन्दोगानां गोभिलसंवादात् । छन्दोगाह्निकादाचारस्य मार्जनानन्तरमुपस्पर्शनानन्तरञ्च करक्षालनमधिकमुक्तमिति । खानीति । खानि=छिद्राणि । 'शिरस्थानि खानि चोपस्पृशेच्छीर्षस्थानी'ति गौतमात् । घ्राणादीनीन्द्रियाणीति यावत् । तथा च गोभिलः— 'इन्द्रियाण्यद्भिः संस्पृशेदाक्षिणी नासिके कर्णा'विति । अक्ष्युपक्रमः स्पर्शः छन्दोगाना, मन्येषां घ्राणोपक्रम एव दक्षाद्यनुसारात् । समुपस्पृशेदिति सम्यगुपस्पृशेदित्यर्थः । तेन प्रतिच्छिद्रमद्भिः स्पर्शनं लभ्यते । खानीति चोपलक्षणम् । तथा च दक्षः—

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥
नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै ।
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

पश्चादास्यस्पर्शादेः । अत्राऽङ्गुष्ठेन प्रदेशिन्येत्युक्तेः ।

अङ्गुष्ठमध्यमायोगात् स्पृशेन्नासापुटद्वयम् ।

इति शङ्खोक्तपक्षान्तरम् । पुनःपुनरिति वीप्सा घ्राणचक्षुःश्रोत्राणां प्रत्येकं पुटद्वये स्पर्शपरान्वयितावच्छेदकसामानाधिकरण्ये समभिव्याहृतक्रियासमभिव्यवहार एव । पुनः पुनरन्नं भुङ्क्त इत्यादिप्रयोगदर्शनेन पुनःशब्दस्य व्युत्पत्तिस्थैर्यात् । अत एव शङ्खवाक्ये 'स्पृशेन्नासापुटद्वयं नेत्रद्वयं श्रवणे' इत्युक्तम् । 'चक्षुषी नासिके श्रोत्रे सकृदुपस्पृशेत् द्विरेके' इत्यापस्तम्बदर्शनात् । एकैकत्र नासापुटादौ द्विर्द्विः स्पर्शनमित्यपि पक्ष इत्याहुः ।

नाभिस्पर्शानन्तरन्तु हस्तप्रक्षालनन्ततः ।

'स्पृशेच्चाभिदेशं पुनरपः संस्पृशे'दिति व्यासात् । अथ पैठीनसिः—

स्पृष्ट्वा प्राणान् यथासङ्ख्यं पादौ प्रोक्ष्य ततः शुचिः ।

सव्ये च पाणौ शेषा अपो (१)नयेत् । प्राणान् इन्द्रियादीन् निनयेत् दद्यात् । इन्द्रियस्पर्शानन्तरं भविष्ये—

यद्भूमावुदकं वीर ! समुत्सृजति मानवः ।

वासुकिप्रमुखान्नागांस्तेन प्रीणाति भारत ! ॥

शौचानन्तरं हारीतः—'गोमयेन मृदा वा कमण्डलु परिमृज्य पूर्ववदुपस्पृश्याऽऽदित्यं सोममग्निं वा वीक्षेत' । अत्र दिवाऽऽदित्यं, रात्रौ सोमं, तयोरभावेऽग्निमिति व्यवस्था । ब्रह्मे—

पादयोर्द्वे गृहीत्वा तु सुप्रक्षालितपाणिना ।

द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥

शङ्खलिखितौ—'आचम्येशानं मनसा ध्यायेत्' । अत्राऽऽदित्यादिदर्शनं विष्ण्वादिस्मरणं च शौचानन्तराचमन एव तत्सन्दंशात् । द्विस्त्वमपि तत्रैव नियतम् । अन्यत्र तु यथा तत्तद्विधानमिति स्मर्तव्यम् । व्यास—'शौचं कृत्वा मृगोचारं न पश्येत् दृष्ट्वाऽऽदित्यमग्निं सोमं वा पश्येत्' । अत्र(२)वशिष्ठेन गोब्राह्मणस्पर्शनमधिकमुक्तम् । द्विराचमने तु पादक्षालनं सकृदेव दृष्टार्थत्वात् । आस्यमार्जनादि पुनरावर्तते दृष्टिभेदात् । आस्यस्पर्शादिकमप्यावर्तते अदृष्टार्थत्वात् । भोजनोपक्रमाचमने तु सकृदेवोष्ठस्पर्शः । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् । 'द्विः परिमृजेत्सकृदुपस्पृशे'दित्यापस्तम्बात् । द्विजातीनामपि द्वितीयाचमने 'ओष्ठस्पर्शमात्रं प्रत्युपस्पृश्याऽन्ततः शुचिर्भवती'ति गोभिलादिति श्रीदत्ताह्निकम् । आचमनविध्यनन्तरं देवल —

रेतोमूत्रशकृन्मोक्षे भोजनेऽध्वपरिश्रमे ।

शौचमेवंविधं प्रोक्तमीषच्चाऽन्यत्र वर्तते ॥

एवंविधं यथोक्तसकलाङ्गसम्पन्नम् । अन्यत्र ईषत् चाचमनमात्रमपि(३) इन्द्रियस्पर्शादिरहितं शुद्धये भवतीत्यर्थः । अध्वपरिश्रम इति गमनमात्रव्यवच्छेदः ॥

---

(१) निवेदयेद्-इति क पुस्तके ।
(२) अथ इति क. पुस्तके ।
(३) इति-इति क पुस्तके ।

( वी० मि० ) अपो विशिषन् व्यवस्थामाह सार्द्धेन—

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥
हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ॥
शुद्ध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥

अद्भिस्त्विति तुशब्देन भिन्नक्रमे स्मृत्यन्तरनिषिद्धजलव्यवच्छेदः। तथा च बौधायनः—'पादप्रक्षालनोच्छेषेण नाचामेत्'। भूमौ(१)स्नापयित्वाचामेत्। स्नापयित्वा=स्नाप्य। आपस्तम्बः—'नाभ्युदकशेषेण वृथा कर्माणि कुर्वीताऽऽचामेद्वा यानि स्रुग्भेन तथा न वर्षधाराभ्याचामेत् तथा न प्रदरोदकेन तप्ताभिश्चाऽकरणात्'। प्रदरो विदीर्णभूमिभागः। वसिष्ठः-'प्रदरादपि यागोस्तर्पणाय स्युः'तप्ताभिरित्यग्नितप्तपरम्। अग्नितामिरिति शङ्खदर्शनादिति नारायणः। हलायुधोऽप्याह—'नाग्नितप्ताभि'-रिति। कारणाद्रोगादेः।

उदकेनाऽऽतुराणान्तु तथोष्णेनोष्णपायिनाम्। इति।

प्रकृतिस्थाभिर्द्रव्यान्तरासंस्पृष्टाभिरिति केचित्। साहजिकरूपादिमतीभि'रिति न्यायः।

न वर्णरसदुष्टाभिर्याश्च स्युरशुभागमाः।

इति वसिष्ठोक्तेः। अशुभागमाः=अशुचिदेशागताः। बुद्बुदाः फेना इति प्रसिद्धाः। द्विजातयो ब्राह्मणक्षत्रियवैश्या यथासंख्यमन्तरवच्छेदेन हृत्कण्ठतालुगामिनीभिः शुध्यन्ति। स्त्रीशूद्रौ अन्ततः=ओष्ठप्रान्तेन सकृत्स्पृष्टाभिः शुद्ध्यतः।'उत्तरोत्तरमपकर्षा'दिति पारिजातः। हलायुधनिबन्धे तु सुहृदयगाभिः ब्राह्मणः शुचिः,कण्ठगाभिः क्षत्रियः,तालुगाभिः वैश्यः,स्त्री शूद्रश्च ओष्ठप्रान्तगाभिरिति शङ्खवचनमेवाऽत्र लिखितम्। अन्ततोऽन्तरवयवेन। एवं चापां भक्षणमेव विवक्षितम्। आचामेदित्युपक्रम्य—

शरीरं शौचमिच्छन् हि शूद्रश्चैव सकृत्सकृत्।

इति मनुना शूद्रे चशब्दसमुच्चितायां स्त्रियां च सकृदम्भक्षस्य स्फुटं विधानादिति कल्पतरुप्रभृतयः। अन्ततः=अन्तेन, सार्वविभक्तिकस्तसिः तालुनेत्यर्थः। सकृदिति तु वैश्याद्विशेष इति मिताक्षरा। अत्र

(१) एतदादिव्यर्थम्.तत्र.भागेत इत्यन्तं म. पुस्तके नास्ति।

वर्द्धमानादयो मिताक्षरा,मिश्राः कल्पतरुं, श्रीदत्तोपाध्यायाः पारिजातमनुसरन्ति ।

स्त्री शूद्रो ऽथ नित्याम्भःक्षालनाद्य करौष्ठयोः ।

इति ब्रह्मपुराणाच्चरमो ज्यायान् । शारीरमित्यादिमनौ स्पृशेदित्यध्याहारः । 'कृष्णलं क्षपये'दित्यादाविव व्यापारमात्रं वा धात्वर्थः । यद्वा शारीरशौचार्थिनोऽम्भक्षणमेव विधीयत इति तत्त्वम् । यत्तु आचमनार्थं पाणिपादप्रक्षालनमात्रमेवेति शूद्राधिकारे गौतमवचनम्, तदाचमनार्हजलाभाव इत्याचाराऽध्यायव्याख्यानन्तु सर्वसंमतमिति । शूद्रश्चेति चकारादनुपनीतोऽपीति मिश्राः । द्विजातिपदं द्वितीयजन्मयोग्यतामात्रपुरस्कारेण त्रैवर्णिकसामान्यपरम् । अन्यथा द्विज इत्यादिशब्दोल्लेखेन विहितमशौचादिकमनुपनीतस्य न स्यात् । स्त्री शूद्रश्चेति चकारयोरन्यसमुच्चयार्थत्वेन द्राक् प्रतीतेरनुक्तसमुच्चये मानाभावात् । एवं चाऽनुपनीतानामपि त्रैवर्णिकानामुपनीतवदाचमनकल्प इति त्वन्ये निबन्धारः ॥ २० ॥ २१ ॥

( मिता० ) आचमनप्रकारः—

त्रिरिति । वारत्रयमपः पीत्वा मुखमङ्गुष्ठमूलेन द्विरुन्मृज्य खानि छिद्राणि ऊर्ध्वकायगतानि घ्राणादीनि अद्भिरुपस्पृशेत् । अद्भिर्द्रव्यान्तरासंसृ(१)ष्टाभिः । पुनर(२)द्भिरित्यप्ग्रहणं प्रतिच्छिद्रमुदकस्पर्शनार्थम् । स्मृत्यन्तरात्-'अङ्गुष्ठेन प्रदेशिन्या घ्राणं चैव मुखं स्पृशेत् । अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः ॥ कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै । सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ इति । पुनस्ता एव विशिनष्टि । प्रकृतिस्थाभिः गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः । फेनबुद्बुदरहिताभिः । तुशब्दाद्वर्षधारागतानां शूद्राद्यावर्जितानां च निषेधः ॥ २० ॥

( मिता. ) हृत्कण्ठेत्यादि । हृत्कण्ठतालुगाभिरद्भिर्यथाक्रमेण द्विजातयः शुध्यन्ति । स्त्री च शूद्रश्च अन्ततः अन्त(३)र्गतेन तालुना स्पृष्टाभिरपि । सकृदिति वैश्यादिशेषः । चशब्दादनुपनीतोऽपि ॥२१॥

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ॥
सूर्यस्य चाऽप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥

---

(१) संसृष्टाभि क ग । (२) पुनरद्ग्रहणं क । (३) अन्तेन ग ।

( वी० मि० ) स्नानमिति । स्नानेतिकर्तव्यतायाः संहितान्तरे याज्ञवल्क्येनैव प्रपञ्चितत्वान्नेह तदभिधानम् । तथा च योगी—

योऽसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्राऽयं विधिरुच्यते ॥
स्नानमन्तर्जलं चैव मार्जनाचमने तथा ।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतत्समुद्दिष्टं महात्मभिः ॥

अयमर्थः—विस्तरतः स्नानकरणासामर्थ्येऽघमर्षणसूक्तेन त्रिरावृत्तेन क्रमेण जलाभिमन्त्रेण तीर्थपरिकल्पनाचमनमार्जनान्तर्जलजपस्नानानि कुर्यात् । पूर्वप्रतिपन्नक्रमवत्तीर्थपरिकल्पनाद्यनुवादेन मन्त्रमात्रविधानादत्र विपरीतेऽपि शाब्दक्रमे पूर्वस्नानकल्पस्यैव क्रमो ग्राह्य इति । अत्र विस्तरस्नानकल्पेऽसामर्थ्ये संक्षिप्ततत्कल्पोपादाने बीजमुपदर्शयताऽत्रापि कल्पेऽसमर्थस्येतोऽपि संक्षिप्तं कल्पान्तरमुपादेयत्वेनाऽभिसंहितम् । तद्यथा पद्मपुराणे—

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्—इत्यादिना सर्वपापं प्रमोचय—इत्यन्तेन दर्शितम् । तदनुसारी चाऽयं क्रमः । नाभिमात्रं जलं प्रविश्य ॐ नमो नारायणाय इति मूलमन्त्रेण चतुर्हस्तं चतुरस्रं जलं हस्तेनाऽवच्छिद्य(१)तीर्थे तीर्थत्वेन कल्पयित्वा 'विष्णोः पादे'त्यादिना 'शान्तिप्रदायिनी'त्यन्तेन वा 'त्रिपथगामिनी'त्यन्तेन वा तत्र गङ्गामावाह्य मूलमन्त्रेण सप्तधा पठितेन, सप्तकृत्वः पञ्चकृत्वश्चतुस्त्रिर्वा करसम्पुटेन जलं मूर्ध्नि क्षिप्त्वा 'ॐ अश्वक्रान्ते रथक्रान्ते' इत्यादिना 'सर्वपापं प्रमोचय' इत्यन्तेन मृदमभिमन्त्र्य तया गात्राण्यालभ्य नद्यादौ प्रवाहादिमुखोऽन्यत्र सूर्याभिमुखस्त्रिर्निमज्जेदिति । अयञ्च स्नानविधिः सर्वशाखिसर्ववर्णसाधारणः, सङ्कोचे मानाभावात् । पुराणश्रवणे सर्वाधिकारश्रवणाच्च । अनधीतवेदं प्रति चाऽयमेव प्रशस्तो वेदमन्त्रशून्यत्वात् । न च—

ब्रह्मक्षत्रविशाञ्चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥

---

( १ ) तीर्थे-इति ख. पुस्तके नास्ति ।

इति नार्यदि शूद्रस्य सामान्यत एव मन्त्रनिषेधात्कथमेवामिति वाच्यम्। 'वेदमन्त्रवर्जं शूद्रस्य' इति स्मृत्यन्तरैकफलकत्वेनाऽत्र वैदिकमन्त्रमात्रव्युदासात्। तूष्णीं वेदमन्त्रवर्जं,सनमस्कारकं जलनमस्कारसहितं वेदमन्त्रस्थाने नम शब्दमात्रयुक्तमित्येके। एवं मत्स्यपुराणाद्युक्तोऽपि सर्वसाधारण एवेति। नरसिंहपुराणेयस्तु कुशमृत्तिलान् शुचौ देशे स्थापयित्वाऽभ्युक्ष्य (१)स्वतो येन पूर्ववद्देहं प्रक्षाल्य स्नानद्रावों संशोध्य द्विराचम्य शनैर्जलं प्रविश्य वरुणमप्पतिं नत्वा हरिं स्मरन् पूर्ववदाप्लवेत्। ततस्तीरं समासाद्य आचम्य 'ॐ उपास्मै गायता'इत्यादि 'श राजन्नोषधीभ्यः'इत्यन्तेन (२)त्यृचेन कुशाग्रस्थतोयेनाऽऽत्मानं प्रोक्ष्य 'इदं विष्णु' रिति त्यृचेन मृदा गात्राण्यालभ्य नारायणं देवं स्मरन् जलं प्रविश्याऽघमर्षणसूक्तस्य ऋष्यादिकं स्मृत्वा जले निमग्नः निरघमर्षणं जपेदिति। सर्वत्र वे(३)धस्नानकल्पे पूर्वं स्नानाय नेया प्रायत्ये मलापकर्षण स्नानम्।

> तूष्णीमेवाऽवगाहेत यदा स्यादशुचिर्नरः।
> आचम्य च ततः पश्चात्स्नानं विधिवदाचरेत्॥

इति हारीतादित्यास्तां विस्तरः। स्नानाऽशक्तौ सन्ध्यादिवमानुकूलशौचार्थमाह–अब्दैवतैर्मन्त्रैर्मार्जनमिति। अब्दैवतैरापोहिष्ठेत्यादिभि। इदञ्च सावित्र्यादेरप्युपलक्षणम्। तथा च योगी—

> त्रिरावर्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा।
> मार्जनं च ततः कृत्वा आपोहिष्ठेति मार्जयेत्॥
> अधोमधः प्रतिक्षिप्य ऊर्ध्वं सार्द्धा समुत्क्षिपेत्।
> अधोभागविसृष्टाया असुरा यान्ति सक्षयम्॥
> सर्वतीर्थाऽभिषेकश्च ऊर्ध्वं समार्जनाद्भवेत्।
> अघमर्षणसूक्तेन मार्जनं कारयेत्ततः॥
> श न आपश्च द्रुपदां कामतः सम्प्रयोजयेत्।
> एवं संमार्जनं कृत्वा बाह्यशुद्ध्यर्थकारणम्॥
> अथाऽऽभ्यन्तरशुद्ध्यर्थं प्राणायामान् समभ्यसेत्।

प्रणवव्याहृतित्रयसहितगायत्र्या त्रिरावृत्तया एकं मार्जनम् 'आपो-

---

(१) तुम्युक्ष्य-इति क पुस्तके।
(२) इत्यन्तेनाऽन्त्यृचेन इति क पुस्तके।  (३) वैध इति ख पुस्तके।

हिष्ठे'त्यादित्र्यृचस्य प्रथमार्धेन दर्भैर्जलमधः क्षिप्त्वाऽपरार्द्धेन द्वितीयम्। अघमर्षणेन सूक्तेन तृतीयम्। 'शन्न आपो धन्वान्याः शन्नो भवन्त्वनूप्याः। शन्नः समुद्रिया आपः शन्नो भवन्तु कूप्याः' इति मन्त्रेण चतुर्थं, द्रुपदया पञ्चममिति। चतुर्थपञ्चमे चाऽत्रापि कल्पे काम्ये एव न। 'आपस्तु द्रुपदां कामतः' इत्यभिधानात्। यद्यपि स्नानाशक्तौ तदनुकल्पो मार्जनम्।

कालदोषादसामर्थ्यान्न शक्नोति यदाह्यसौ।
तदा ज्ञात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टन्तु मार्जनम्॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणम्।
एभिश्चतुर्भिर्मन्त्रैस्तु मन्त्रस्नानमुदाहृतम्॥

इति योगिनैव 'शन्न आप' इत्यादिमन्त्रचतुष्केनोक्तम्। तथापि पक्षान्तरमेतत्। यद्वाऽधिकफलार्थमिदं मार्जनं कल्पान्तरं वा। स्नानानुकल्पमार्जनन्तु प्रकृतं याज्ञवल्क्योक्तम्। आपोहिष्ठेत्यादित्र्यृचमात्रकरणकमेव। 'आपोहिष्ठे'ति तु ब्राह्ममिति हारीते तस्याऽपि विधानात्। परमार्थतस्तु 'अब्दैवतैर्मन्त्रैर्मार्जन'मिति सन्ध्यावन्दनान्तर्गतं 'आपोहिष्ठे'त्यादित्र्यृचमात्रमन्त्रकं प्राणायामोत्तरकृत्यमेवोक्तं क्रमे(१)तात्पर्याभावात्। 'त्रिराचम्यासून् पुष्पाण्यम्बुमिश्राण्यूर्द्धं क्षिप्त्वा'इति कात्यायनसूत्र इव सन्ध्याप्रयोगो लक्षणमात्रत्वात्। अत एवाऽनुपदं प्राणानायम्य सम्प्रोक्ष्येत्येव वक्ष्यति। न चैवं पौनरुक्त्यमाशङ्कनीयमुक्तानुवादेन सायंसन्ध्यायां विशेषमात्रपरत्वात्। अन्यथा प्राणायामे तस्य वज्रलेपत्वादिति निपुणमालोकनीयमिति। प्राणसंयम इति प्राणायाम इत्यर्थः। एतत्प्रकारं वक्ष्यति। सूर्यस्योपस्थान'मुद्वय'मित्यादिमन्त्रैः। गायत्र्याः 'तत्सवितु'रित्यादिकायाः ऋचो जपः। एते प्रत्यहं क्रियेरन्। अनेन नित्यत्वमुक्तम्। तथा (२)च कात्यायनः—

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चोत्तरमन्त्रवित्॥

गेह इत्युद्धृतोदकोपलक्षणं नद्याद्यभावे विधानात्। यदि तु स्नानमब्दैवतैरित्यादिना मध्याह्नस्नानादिकमेव विवक्षितम्। प्रत्यहमिति श्रवणात्। अत एव प्राणानायम्येत्यादिना सायंसन्ध्यां प्रातरेवमित्या-

(१) क्रमेण-इति ख. पुस्तके।
(२) च-इति ख. पुस्तके नास्ति।

दिना च प्रातःसन्ध्यां पृथक् पृथगेव वक्ष्यति, तदा स्पष्टमेव प्रकृतस्नानस्य नित्यत्वम्। अथातो नित्यस्नानमिति 'सवस्त्रोऽहरहरा प्लुत्ये'त्यादिनानास्मृतिभ्यः । परं त्वस्मिन् पक्षे प्रातःस्नानानभिधानेन न्यूनत्वम्। न च पक्षान्तरेऽपि शङ्कनीयं मध्याह्नस्नानस्य गृहस्थप्रकरणेऽभिधानात् प्रत्यहमिति (१)त्वहोरात्रमिति परत्वेनाऽप्युपपद्यते बहुशः प्रयोगदर्शनादिति । सन्ध्यावन्दनं तु दिवातन सामान्यमेव घाऽप्रोक्तमिति पर(२)म च शिष्यते। तत्तु गृहस्थप्रकरणीयः शौचविधिरिति विधिपदेन प्रातःस्नानोक्तेः। परिहरणीयमिति सन्ध्यावन्दनमपि नित्यम्। तथा च विष्णुपुराणे—

नित्यकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

योगी—

सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनाऽऽत्मविदा सदा ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥

दक्षः—

यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ।
आपत्स्वप्यशक्तो च सन्ध्यां कुर्वीत मानसीम् ॥

इति स्मृतिमञ्जूषायां लिखितम्। संवदति चैतत् 'मनसा चैनं सम्यगाचारमनुपालये'दिति गौतमोक्तेन । सन्ध्ययोरिति विष्णुपुराणं ब्रह्मचारिपरम्। अथ ब्रह्मचारिणो गुरुकुलवासः सन्ध्याद्वयोपासनमिति विष्णुवचनैकमूलकत्वात्। सन्ध्यात्रयन्तु कर्तव्यमिति योगिवचनं भिक्षुपरमात्मविदेति श्रवणादिति केचित्। तत्र—

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् ।
यस्य नाऽस्त्यादरस्तत्र स न ब्राह्मण उच्यते ॥

इति आदिवचनद्वारस्य तत्त्वं सिद्धम्। यथोर्मोना(?)भावादात्मविदेत्यस्याऽहं ब्रह्मण इति ज्ञानवतेत्यर्थात् विष्णुवचनस्य प्रायोवादत्वात्परिसंख्यायां गौरवात् गृहस्थस्याऽप्यग्रे सन्ध्योपासनाभिधानात्साधारणविधौ लाघवाच्च। अत्र 'ऋतं च सत्यं च' इत्यादिनाऽऽचमनमारभ्य गायत्रीजपान्ते कर्मकलापे सन्ध्यापदं प्रवर्त्तते, पवित्रयागमार-

(१) त्वहोरात्रमिति-इति क. पुस्तके नास्ति। (२) परमेव-इति ख पुस्तके पाठः ।

स्य क्षुद्रश्रुतिपर्यन्त इष्टसमुदायेऽश्वमेधपदवदिति तत्कर्त्तव्यता विधीयते।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥

यमस्मृत्यादौ तु देवताविशेषपरम्।

ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च।
कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तमः॥

इति योगिना देवित्वेन कीर्तनात्।

यावन्तोऽस्यां विकर्मस्थाः पृथिव्यां बालिशा द्विजाः।
तेषान्तु पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा॥
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः।

इति विष्णुतौल्यप्रदर्शनाच्च। विकर्मस्थाः विहिताऽकर्तारः शास्त्रनिषिद्धकर्त्तारश्च, बालिशा ज्ञानशून्याः तस्य। उपासनमाराधनमुक्तकर्मकलापेनेति विवेक्तव्यम्। ब्रह्मलोकगमनादिफलश्रवणादत्राऽपि सम्बलिताधिकार इत्यन्यत्र विस्तरः। सूर्यस्य चाऽप्युपस्थानमिति चाऽपिकाराभ्यामनुक्तस्य विशेषान्तरस्य सन्ध्यावन्दनेतिकर्तव्यतान्तरस्य च समुच्चयः। तच्चेह कृत्स्नामपि सङ्क्षेपतः प्रदर्श्यते। तथा च शङ्खलिखितौ–'स व्रती बहिः सन्ध्यामुपासीत'। स व्रती ब्रह्मचारी बहिर्ग्रामात्।

नैनं ग्रामेऽभिनिम्लोचेत् सूर्यो नाभ्युदयात् क चित्।

इति मनुवचनात्। एवं ब्रह्मचारिणं निम्लोचेत् अस्तं यायात्।

योगी—

स्नात्वैवं वाससी धौते अक्लिष्टे परिधाय च।
प्रक्षाल्योरू मृदाऽद्भिश्च हस्तौ प्रक्षालयेत्तथा॥

अक्लिष्टे दग्धत्वाऽदिदोषरहिते।

विष्णुः—

नाऽप्रक्षालितं पूर्वधृतं वासो वा बिभृयात्।

पराशरः—

स्नात्वा निरस्य वासोऽन्यज्जङ्घे प्रक्षालयेन्मृदा।
अपवित्रीकृते ते तु कौपीनं क्लेदोतदम्भसा॥

कौपीनं लिङ्गम्। तथा—

अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च।
कुतपो योगपट्टश्च द्विवासा येन वा भवेत्॥

कात्यायन—

'तृतीयमुपवीतं वा(१) उत्तरीयं कुर्या'दिति प्रकरणात्। तथा मृदोरू करौ प्रक्षाल्याऽऽचम्य इदानीं तिलककरणमाचारात्। तत्र भारते—

गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्॥

वर्द्धमानादयस्तु—

कर्मादौ तिलकं कुर्याद्रूपं तद्वैष्णवं परम्।
यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम्॥
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रविवर्जितम्।

इति ब्रह्माण्डपुराणवचनमेव तिलके प्रमाणयन्ति।

वामनपद्धतौ विशेषः—

ललाटे वंशपत्राभं दीर्घं विप्रस्य शस्यते।
मीनाकारं ततो न्यूनं क्षत्रियस्य प्रशस्यते॥
ततो न्यूनं तु वैश्यस्य शूद्रस्याऽप्यर्धचन्द्रकम्।
तिर्यक् तथाऽऽयतं पुण्ड्रं नित्यं कर्माङ्गमिष्यते॥

तथा उशना—

अभावे तूदकेनाऽपि (२)पौण्ड्रं दैवतमर्चयेत्।

'गङ्गातीरसमुद्भूता' मित्युपक्रम्य—

मूर्द्ध्नि कण्ठे ललाटे च बाहुभ्यां हृदये तथा।
नाभौ पृष्ठे प्रदातव्यं पार्श्वतश्च द्वयं द्वयम्॥

इति पठन्ति। सन्ध्योपक्रमे व्यास —

स्मृत्वोङ्कारं च गायत्रीं निबध्नीयाच्छिखां ततः।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत्॥

यदि तस्मिन्काले मुक्तशिखः स्यात्तदा ऽनेन मन्त्रेण शिखां बध्वा(३)ऽऽचामेत्। न तु समन्त्रकृत्यार्थे बद्धाऽपि शिखा मोचनीयेति भ्रमः कार्य इत्युपाध्यायाः पठन्ति च।

(१) वा-इति ख पुस्तके नास्ति। (२) 'पुण्ड्रं' इति ख० पुस्तके।
(३) 'आचामेत्' इत्यारभ्य-'गायत्र्या तु शिखां बध्वा'- इत्यन्तो भागो नास्ति क पुस्तके।

ब्रह्मपुराणे—

गायत्र्यान्तु शिखां बध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः ।
जुटिकाञ्च ततो बध्वा ततः कर्म समाचरेत् ॥

स्मृतिः—

शिखिवच्छिखया युक्तो ब्रह्मावर्तनबद्धया ।

शिखिवत् शिरोमध्ये, ब्रह्मावर्त्तो ब्रह्मग्रन्थिः, स च द्विगुणीकृत-(१)योग्रोटी तस्य द्विः प्रदक्षिणीकृत्य पश्चाद्भागं संवेष्ट्य पाशान्तर्भावे गर्भजादित्याहुः। एवञ्च सार्द्धभ्रमिद्वयं सम्पद्यते प्रवरार्द्धमितैव भ्रमिरिति साम्प्रदायिकाः ।

छन्दोगपरिशिष्टे—

सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियाम् ।
सव्यः सोपग्रहः कार्यो(२)दक्षिणः सपवित्रकः ॥

पवित्रम् ।

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चित् ॥

इति कात्यायनेन लक्षितम्। अ(३)न्यत्र संन्यासपद्धतिलिखितं वाक्यं पठन्ति ।

सव्यापऽसव्यवलितं ब्रह्मग्रन्थिसमन्वितम् ।
लङ्घयेत्प्रथमं पर्व द्वितीयं न कदाचन ॥

पर्व=दक्षिणाऽनामिकायाः ।

ग्रन्थिर्यस्य पवित्रस्य न तेनाऽऽचमनं चरेत् ।
मोहादाचमनं कृत्वा रुधिरप्राशनं भवेत् ॥

इति(४) तु वचनं प्रामाणिकनिबन्धृभिरनादरात् शिष्टाचारविरोधाच्च हेयमेवेति । लघुहारीतः—

दर्भहीना च या सन्ध्या यच्च दानं विनोदकम् ।
असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

योगी—

ईशानाभिमुखो भूत्वा शुचिः प्रयतमानसः ।
आचान्तः पुनराचामेदतस्मीत्यभिमन्त्रितम् ॥

---

(१) द्विगुणीकृतमोटी–इति ख० पुस्तके । (२) कुर्याद–इति ख. पुस्तके ।
(३) अत्र–इति ख. पुस्तके । (४) तु–इति क. पुस्तके नास्ति ।

आन्तरं शुध्यति ह्येवमपानमलीकृतम्।

शुचिः स्नानेन मार्जनादिना वा सम्पादितशरीरशुद्धिः।

तथा च जाबालिः—

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम्।
आर्द्रेण वाससा वाऽपि दैहिकं मार्जनं विदुः॥

कर्मिणां कर्मचिकीर्षूणाम्। योगी—

'कालदोषादसामर्थ्या'दित्यादि लिखितम्। हारीतोऽपि-'आपोहि' ष्ठेति च ब्राह्म'मित्याद्यन्यत्र विस्तरः। 'आचान्तः पुनराचामे'दिति। सन्ध्योपक्रमे पूर्वं कृताचमनः 'स्मृत'मित्यभिमन्त्र्य पुनराचामेदित्यर्थः। मन्त्रकरणक द्विराचमनमिति तु मिश्राः। 'त्रिरायत्य तु सावित्री'-मित्यादि योगिवचनं तु लिखितं व्याख्यातञ्च। योगी—

पूर्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता।
या भवेत्पश्चिमा सन्ध्या सा तु देवी सरस्वती॥
रक्ता भवति गायत्री सावित्री शुक्लवर्णिका।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम्॥

रूपकथनं ध्यानार्थम्। छन्दोगपरिशिष्टे—

रक्षाऽन्ते वारिणाऽऽत्मानं परिक्षिप्य समन्ततः।

अन्ते पूर्वोक्तमार्जनकर्मणः आत्मानं वारिणा परिक्षिप्य रक्षा कार्या। आचारात् 'आपो मामभिरक्षन्तु' इत्युच्चार्य 'ॐ भूर्भुवः स्व'रिति मन्त्रो ऽत्र करणमिति वर्द्धमानः। बृहस्पतिः—

बध्वाऽऽसनं नियम्य स्वं स्मृत्वा ऋष्यादिकं ततः।
सन्निमीलितदृग्मौनी प्राणायामान् समभ्यसेत्॥

आसनम्।

पद्ममर्द्धासनं वापि तथा स्वस्तिकमासनम्।

इति वायुपुराणाद्युक्तम्।

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे।
अङ्गुष्ठौ(१) च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः॥
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम्।
जान्वोरन्तरे सम्यक् कृत्वा पादतले उभे॥
ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते।

---

(१) इद मार्द्ध पद्यं ख० पुस्तके नास्ति।

इत्यादि लक्षितम्। अत्र पद्मासने प्रथमं दक्षिणस्य तदुपरि वामस्य चरणस्य न्यासः। तदुक्तम्—

वामोरूपरि दक्षिणञ्च चरणं संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम्।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये—
देतद्व्याधिविघातिकारि यमिनां पद्मासनं प्रोच्यते॥

स्वस्तिके च प्रथमं वामस्य तदुपरि दाक्षिणस्य न्यासः। तदुक्तं पातञ्जलटीकायां—'सव्यं चरणं दक्षिणजङ्घोर्वोरन्तरे निक्षिपेत्, दक्षिणञ्च वामजङ्घोर्वोरन्तरे तदेतत्स्वस्ति(१)क'मिति। अयन्तु विशेषः—कर्मकाले ऊर्वोरूर्ध्वं व्यत्यासेन चरणद्वयन्यासमात्रं पद्मासनपदेन अभिप्रेतम्। अन्यथा हस्तव्यापृतत्वेनाऽग्रिमक्रियाविरोधात् इति प्राहुः।स्वं आत्मानं मन इति यावत्। नियम्याऽसूनिति पाठे प्राणायामपदं मन्त्रपरम्। ऋष्यादिकं स्मृत्वाऽसून्नियम्येति च योजनार्थात्। ऋष्यादिस्वरूपं योगि-

यद्येन ऋषिणा दृष्टं सिद्धिः प्राप्ता च येन वै।
मन्त्रेण तस्य तत्प्रोक्तं ऋषेर्भावस्तदार्षकम्॥
छादनाच्छन्द इत्युक्तं वाससी इव चाऽऽकृतेः।
आत्मा संछादितो देवैर्मृत्योर्भीतिस्तु वै पुरा॥
आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै।
यस्य यस्य तु मन्त्रस्य उद्दिष्टा या तु देवता॥
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते।
पुरा(२) कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च।
अनेनेदन्तु कर्तव्यं विनियोगः स उच्यते॥

तथा—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥
अविदित्वा तु यः कुर्यात् याजनाऽध्यापनं जपम्।
होममन्तर्जलादीनि तस्य चाऽल्पं फलं भवेत्॥

ब्राह्मणेन=विप्रेण,उपलक्षणमिदम्। एवं पञ्चविधं योगमिति वेदरूपब्राह्मणान्तर्भावेन पञ्चविधत्वं प्रकारान्तरमधिकफलार्थं वा। अत्र ॐकारसप्तव्याहृतिशिरसां प्राणायामपूर्वमव्यवहितक्रमेण ऋष्या-

(२) पुरा इत्यारभ्य-विनियोगस्तथैव च-इत्यन्तं ख. पुस्तके नास्ति।

दिस्मरणं मिलितानामेव तेषां विनियोगात् । 'आपोहिष्ठा'दीनान्तु प्रत्येकं विनियुक्तानां तत्पूर्व (१) प्रत्येकन्यायप्राप्तस्याऽव्यवधानस्य तथैवोपपत्तेः । 'ऋत'मिति प्रथमाऽऽचमने 'अन्तश्चरसी'त्याचमने 'गायत्र्यसी'ति गायत्र्युपस्थाने ऋष्यादिस्मरणं नास्तीत्युपाध्यायस्वरसः । अत्र अघमर्षणसूक्तादेश्च ऋष्यादिकं प्रसिद्धम् । अत्र ऋष्यादिस्मरणे शब्दप्रयोगो न कार्यो मानाऽभावादसम्बद्धव्यवायापत्तेश्चेति मिश्राः । योगी-

प्राणस्याऽऽयमनं कृत्वा आचामेत्प्रयतोपि सन् ।

प्राणायामप्रकारं वक्ष्यति मैत्रायणीयपरिशिष्टे-

प्रातः 'सूर्यश्च मे'त्युक्त्वा सायं'मग्निश्च मे'ति च ।
'आपः पुनन्तु' मध्याह्ने कुर्यादाचमनन्तथा ॥

अस्य वचनस्य राजावलिखितत्वेन प्रकृताचमनेषु तत्तन्मन्त्रसम्बन्धे शिष्टाचार एव प्रमाणमित्युपाध्यायः ।

प्राणानायम्य सम्प्रोक्ष्य त्र्यृचेनाऽब्दैवतेन तु ।

विभागमाह व्यासः—

विष्णुः—'वोयोवो(?)ऽष्टौ क्षिपेन्मूर्ध्नि अघौघस्य क्षयाय च ।

प्रकारमाह कात्यायनः—

शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः ।

यथा द्रुपदा ।

ॐकारो व्याहृतीः सप्त गायत्रीः शिरसा सह ।
'आपोहिष्ठे'त्यृचस्तिस्रो 'द्रुपदा'घमर्षणम् ॥
'उदुत्यं' 'तच्चित्रं', 'तत्सेओऽसी'ति यथाक्रमम् ।
गायत्रीं उत्तरीयञ्च सन्ध्यामेभिः समापयेत् ॥

इति शातातपेन तथैव मन्त्रविधानात् । 'द्रुपदं चे'त्यत्र 'सूक्तं चैव'- मिति पाठेऽपि उक्त एव क्रमः ।

सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम् ।

इत्युक्त्वा=द्रुपदा ऋष्यादिकमुक्त्वा ।

अपः पाण्योः समादाय त्रिः पठेद् द्रुपदामृचम् ।
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥

(१) तत्सर्व—इति ख० पुस्तके ।

इति योगि(१)याज्ञवल्क्यीयपाठक्रमात् । ततोऽघमर्षणं तत्प्रयोगः (२)परिशिष्टे—

करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपे(३)दनायतासुर्वा त्रिः सकृद्वाऽघमर्षणम् ॥

अनायतासुर्वेति आयतासुरिति पक्षान्तरं दर्शितम् । शङ्खः—

उपस्पृशेत्ततः पश्चान्मन्त्रेणाऽनेन धर्मतः ।

'अन्तश्चरसी'त्यादि एतच्चाऽऽचमनं मार्जनानन्तरं श्रुतमप्यघमर्षणानन्तरमनुष्ठेयम् । एतदनन्तरं शङ्खेनैव सूर्याञ्जलिविधानात् । छन्दोगपरिशिष्टे—

उत्थायाऽर्कं प्रतिरोहेत्त्रिकेणाऽञ्जलिमम्भसः ।

त्रिकेण—

प्रणवो 'भूर्भुवः स्वश्च' सावित्री च तृतीयका ।

इति प्रागुक्तेन सूर्यं प्रति जलाञ्जलिं क्षिपेदर्थात्सूर्यमुद्दिश्य त्यागोऽयम् । जलाञ्जलौ पुष्पाण्यपि मिश्रणीयानि । 'पुष्पाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षेत्' 'उद्यन्नुदुत्यं चित्रं तच्चक्षु'रिति 'गायत्र्या च यथाशक्ति' इति कात्यायनात् । पुष्पजलाञ्जलिं स्वमौलितुल्यदेशमादाय प्रदक्षिणं प्रक्रम्य क्षिपेत् । 'यत्प्रदक्षिणं प्रक्रामन्ति तेन पाप्मानमवधुन्वती'ति श्रुतेः । गायत्र्या चेति जपजाप्यसाधारणेन सन्ध्यान्तर्गतमप्राप्त्यर्थम् । स च 'उभे सन्ध्ये जपन् जाप्यमुपासीत यथाविधी'ति वचनेषु स्फुट एव । परि(४)श्रुतेस्तु सावित्रीजपः पृथगपीति मन्तव्यम् । अन्ये तु—'जपेन्नित्यं सर्वकल्मषनाशिनीम्' इति ।

जपेदहरहः स्नात्वा सावित्रीं जपविद् द्विजः ।

इत्यादिभिर्बोधितम् । गायत्रीजपरूपकर्मान्तरमेवेह विधीयते, परन्तु प्रधानभूतस्वतन्त्रेण तर्पणेन स्नानाङ्गतर्पणस्येव स्वतन्त्रगायत्रीजपेनैव सूर्योपस्थानस्याऽपि प्रसङ्गत एव सिद्धेर्न तदर्थं पृथग्गायत्रीपाठ इति वदन्ति । सूर्योपस्थानकरणमन्त्राणां तु ऋष्यादिस्मरणमावश्यकम् ।

---

(१) योगि—इति क० पुस्तके नास्ति ।
(२) तत्प्रयोग—इत्यस्य स्थाने—तत्र योग० छन्दोऽघमर्षणं—इति ख० पुस्तके पाठः ।
(३) जपेत्—इति ख० पुस्तके पाठः ।
(४) फलश्रुतेः—इति ख० पुस्तके ।

चित्रं देवेति च ऋच ऋषिः कौत्स उदाहृतः ।
त्रिष्टुप् छन्दो दैवतञ्च सूर्योऽस्याः परिकीर्तितः ॥
अग्निष्टोम उपस्थाने विनियोगस्तथैव च ।

इति व्यासेन सन्ध्याप्रकरणेऽभिधानस्य एकत्र निर्णीत इति न्यायेनाऽन्यत्राऽपि तत्सम्बन्धाऽभिप्रायकत्वात् । इदन्त्ववधेयं शिष्टाचारानुसारि ऋष्यादिकमिह प्रसिद्धमेव (१)सर्वानुक्रमण्यांतु 'उदुत्यं सौरी अनुष्टुप्प्रस्कण्वस्य उदुत्यं प्रस्कण्वः सौरी गायत्री चित्रं कुत्स आङ्गिरसस्त्रैष्टुभं तच्चक्षुः पुर उष्णिक् सौरी'त्युक्तम् । अत्राचाञ्जलाद्युप(२) क्रमणे मत्स्ययोर्दक्षिणहोमे चतुर्थ्यां महावीरशान्तिकरणे विनियोगः इति कातीयकल्पः गायत्रीजपे योगी—

प्रणवो भूर्भुवः स्वश्च अङ्गानि हृदयादयः ।
*शिरावर्त्तं ततः पश्चादार्षं छन्दश्च दैवतम् ॥*
विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु(३) वै ।

अत्र ॐ हृदयाय नमः ॐ भूः शिरसे स्वाहा ॐ भुवः शिखायै वषट् ॐ स्वः कवचाय हुं ॐ भूर्भुवः स्वः नेत्रत्रयाय(४)वौषट् ॐ भूर्भुवः स्वः अस्त्राय फडिति केवलेन ॐकारेण तत्सहितया प्रथमया व्याहृत्या तादृश्या द्वितीयया तादृश्यैव तृतीयया तादृशेनैव च व्याहृतित्रयेण तादृशेनैव च व्याहृतिरूपेण षडङ्गन्यासमाचरन्ति । तत्र तु वासना चिन्तनीया, परं स्वीदृशाचारस्य बहुतरमहाजनसंमतत्वेन नाऽत्राऽधिकमभिनिवेशः क्रियत इति . गायत्रीरूपमाह स एव—

श्वेतवर्णा समुद्दिष्टा कौशेयवसना(५)शुभा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता ॥
आदित्यमण्डलान्तःस्था ब्रह्मलोकगताऽथवा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥

(१) अनुक्रमण्या—इति ख० पुस्तके ।
(२) अलङ्गुलाक्रमणे—इति क० पुस्तके पाठः ।
(३) स—इति ख० पुस्तके ।
(४) नेत्राभ्यां—इति क० पुस्तके, नेत्रत्रयाभ्यां—इति च ख० पुस्तके पाठः ।
(५) तथा—इति ख० पुस्तके ।

आवाह्य यजुषाऽनेन 'तेजोऽसी'ति विधानतः॥
ततो(१) ब्राह्मं जपित्वा तु नमस्कृत्य विसर्जयेत्।

एवं चाऽविशेषे तत्तद्वचनबलात्सन्ध्यात्रयेऽपि गायत्री शुद्धैव ध्येया। केचित्तु 'प्रातर्ब्रह्माणी रक्ता, मध्यान्हे वैष्णवी कृष्णा, सायं माहेश्वरी शुक्ला' इति त्रिरूपा गायत्री ध्येयेति वदन्ति। पठन्ति चैतन्मूलतया सुबहून्यनाकरवाक्यानीति। अत्र चाऽऽवाहनादनन्तरं जपात्प्रागेव गायत्र्या उपस्थानं ब्राह्मणेन। तथा च शतपथश्रुतिः–'तस्या उपस्थानं गायत्र्यत्रस्येकपदी द्विपदी त्रिपदी चतुष्पद्यसि न हि पद्यसे नमस्ते तुरीयाय दर्शनाय पदाय परोरजसे सावदोमाप्राप'दिति। 'यं द्विष्यादस्मैकामो मासमर्द्धी(२)तिष्वानहैवास्मै स कामः समृद्ध्यते, यस्मा एवमुपतिष्ठतेऽहमदः प्राप'दिति वा बौधायनः। उपतिष्ठेत वा एतां देवीं तुरीयेण पादेन। अथाऽभ्युदाहरन्ति गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यसि(३)न हि पद्यसे नमस्ते तुरीयाय दर्शनाय पदाय परो रजस इत्यथैतां जपति। 'अथापी'त्यादिना तुरीयपादस्य स्वरूपकथनम्। एवञ्च श्रुतावपि 'परो रजस'इत्यन्त एव मन्त्रः, अग्रे चाऽर्थवाद इत्युपाध्यायादयः। अन्ये तु 'मा प्राप'दित्यन्तो मन्त्रः श्रुताविति-शब्देन तावद् दूरस्य व्यवच्छेदात्। बौधायनसूत्रन्तु राजाद्यलिखितत्वान्निर्मूलमेव। समूलत्वेऽपि बौधायनतैत्तिरीयसूत्रकारत्वेन माध्यन्दिनीयैः शतपथोक्त एव मन्त्रो ग्राह्य इत्याहुः। यत्तु—

गायत्र्यस्यैकपद्याद्यैरुपस्थाय ततो जपेत्।
उपस्थाय तुरीयेण तेनैव च विसर्जयेत्॥
अष्टाक्षरपदन्तत्तु परो रजसे सावदोम्।

इति मन्त्रप्रकाशानुसारात् सावदोमित्यन्त एवायं मन्त्र इति, तन्न शतपथविरोधात्।

अजपा नाम गायत्री जीवो जपति सर्वदा।
हंस इत्येव तन्मन्त्रं स च पादश्चतुर्थकः॥

---

(१) तत्र—इति ख० पुस्तके।
(२) मासमध इति वा नहैवास्मै—इति ख० पुस्तके।
(३) चतुष्पयपदासि—इति ख० पुस्तके।

,इति काशीखण्डविरोधादित्यपि कश्चित् । यत्रा'ऽथोपतिष्ठे'दित्यादि पूर्वलिखितयोगिवचनमवलम्ब्य 'आगच्छे'त्यादि 'स्मृते'त्यन्तं गायत्रीजपात्पूर्वं केचित्पठन्ति । जप्यमाह योगी—,

ॐकारः पूर्वमुच्चार्यो भूर्भुवः स्वस्ततः परम् ।
गायत्री प्रणवश्चाऽन्ते जप्ये ह्येवमुदाहृता ॥

यम (१)—

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रींन्तु जपेन्नित्यं सर्वफलमपनाशिनीम् ॥

बौधायन —'शतकृत्वोऽपरिमितकृत्वो वा दशावरम्' । अपरिमितकृत्व=दशोपरि शतादर्वागनियतसङ्ख्यामित्यर्थः । गोभिल—

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् ।
गायत्र्यग्निमुखी देवी तस्मादुत्थाय तां जपेत् ॥

बृहस्पति —

मार्जनं जलमध्ये तु प्राणायामो यतस्ततः ।
उपस्थानं ततः पश्चात्सावित्रीजप उच्यते ॥

मार्जनं मन्त्रस्नानाङ्ग (२)यतस्ततः=जले स्थले वा । एवं प्राणायामोपस्थानयोः सन्ध्यान्तर्गतयोरुभयत्र विधानादुपस्थानपर्यन्ता सन्ध्याजलेऽस्य मते । गायत्रीजपस्तु स्थल एवोक्तः । कात्यायनेन तु तीर्थसन्ध्यावन्दनमुक्तम् । नारसिंहेऽपि 'स्नानोत्तरं तर्पणात्प्रागभिहितम् ।

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
प्राणायामांस्तु कुर्वीत यथाशास्त्रमतन्द्रितः ॥
जपेदहरहः स्नात्वा सावित्रीं प्रयतो द्विजः ।
अथ पुष्पाञ्जलिं क्षिप्त्वा भानवे चोर्ध्वबाहुकः ॥
तस्यैव च जपेन्मन्त्रं चित्रं 'तच्चक्षु'रित्यपि ।
प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम् ॥

अत्र दर्भेष्विति श्रवणात्स्थल एव सन्ध्याकरणमायाति । जपानन्तरमुपस्थानं प्रकारान्तरं बौधायनेऽपि दर्शनात् । हारीत —

(१) यम —इति क० पुस्तके नास्ति ।
(२) मन्त्रस्नाना न— इति क० पुस्तके ।

'सावित्रीं जपन् पापेभ्यो मुच्यते शतं जप्त्वा मानसात् पूतो भवति सहस्रं जप्त्वा वाक्कृतात् पूतो भवति'। यमः—

न तथा वेदजप्येन पापं निर्दहति द्विजः।
यथा जपेन सावित्र्याः सर्वपापैः प्रमुच्यते ॥

जपविधौ शङ्खः—कुशवृस्यामासीनः कुशान्तरायां वा कुशपवित्रपाणिरुदङ्मुखः सूर्याऽभिमुखो वाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात्। सुवर्णमणिमुक्तास्फटिकपद्माक्षेन्द्राल(१)रुद्राक्षपुत्रजीवकानामन्यतममालां कुर्यात्। कुशग्रन्थियुतां वा हस्तोपयामैर्वा गणयेत्।

वृसीं लब्ध्वासनं हस्तोपयामोङ्गुलिनामनम्?।

योगी—

तिष्ठंश्चेदीक्षमाणोऽर्कं जपं कुर्यात्समाहितः।
अन्यथा प्राङ्मुखः कुर्याद्वक्ष्यमाणक्रमेण तु ॥
प्राक्कूलेषु कुशेष्वेव आसीनश्चाऽऽसने शुभे।
नात्युच्छ्रितो नातिनीचो दर्भपाणिः सुसंयतः ॥
स्फटिकेन्द्राक्षरुद्राक्षपुत्रजीवप्रवालकैः।
अक्षमाला हि कर्तव्या उत्तमा ह्युत्तरोत्तरा ॥

प्राक्कूलेषु प्रागग्रेषु। नारसिंहे—

त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत।
वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ॥
त्रयाणां जपयज्ञानां श्रेयः स्यादुत्तरोत्तरः।
यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ॥
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः।
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन् ॥
किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः।
ध्येया यदक्षरश्रेण्यो वर्णाद्वर्णं पदात्पदम् ॥
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः।

एवञ्च त्रिविधस्याऽपि जपस्य विधानात्।

नोच्चैर्जपं बुधः कुर्यात्सावित्र्याश्च विशेषतः।

---

(१) लरुद्रा—इति क० पुस्तके नास्ति।

इति शङ्खवचनमल्पफलाऽभिप्रायम् ।

ध्यायेत्तु मनसा मन्त्रान् जिह्वोष्ठौ न विचालयेत् ।
न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥

इति योगिवचनं मानसविषयम् ।

योगी—

नचङ्क्रमन्न च हसन्न पार्श्वमवलोकयेत् ।
न प्राशितो ? न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पदमाक्रम्य न चैव हि तथा करौ ।
न वा समाहितमना न चसन् श्रावयन् जपेत् ॥
न छिन्नवासाः स्थलगो जपादीनाचरेद्बुधः ।
प्रताप्ते नार्द्रवासा नैकवासाः समाचरेत् ॥
न जीर्णेन मलिनेन परिक्लिष्टेन वा जपेत् ।
यक्षराक्षसभूतानि सिद्धविद्याधरा (१)गणाः ॥
हरन्ति प्रसभं यस्मात्तस्माद्युतं समाचरेत् ।
जपकाले न भाषेत व्रतहोमादिके तथा ॥
एतेष्वेवावसक्तं च यद्यागच्छेद्द्विजोत्तमः ।

स्मृतिः—

नैकवस्त्रः प्रवर्त्तेत द्विजवाचनिके जपे ।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्त्तयेत् ॥
तूष्णीमासीत च जपंश्चाण्डालपतितादिकान् ।
दृष्ट्वा तद्वार्युपस्पृश्याऽऽभाष्य स्नात्वा पुनर्जपेत् ॥

'अवसक्तं प्रवृत्तं योगादिकीर्त्तनञ्च दन्तसन्धाने सत्येव दन्तैर्दन्तान् सन्धायाऽन्तर्मुख एव यावदर्थमभिभाषेते'ति तेनैवाऽभिधानात् । तदपि(२)'संस्कृतेनैव न म्लेच्छितवै नापभाषितवै'इति श्रुतेः ।

तथा—

यदि वा यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

---

(१) गुणा—इति ख० पुस्तके ।
(२) यदपि—इति ख० पुस्तके ।

बौधायनः—

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वथो हविः ॥

व्यासः—

आर्द्रवासाश्च यः कुर्याज्जपं होमं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥

वसिष्ठः—

जपहोमोपवासेषु धौतवस्त्रधरो भवेत् ।
अहङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

लघुहारीतः—

जपहोमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥

अत्र सुवर्णधारणं दक्षिणनामिकायाम् ।

अनामिकायां तद्धार्यं दक्षिणस्य करस्य च ।

इति हेमप्रकरणीयदेवीपुराणात्तत्सन्दंशाद्रजतकुशधारणमपि तत्रैव 'तर्जन्यां रजतं धार्य'मिति त्वमूलम् ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥
क्रियां यः कुरुते मोहादनाचम्येह मानवः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

इत्यादीनि ।

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
उद्धरन्त्यसुरास्तस्य मूढस्य ह्यकृतात्मनः ॥

तथा—

प्रमादात्कुर्वतां कर्म प्रच्यवेताऽध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

इत्यन्तानि वचनानि उपाध्यायादिभिर्जपप्रकरणे लिखितानि च । प्रण
व्याहृतित्रयसहितगायत्रीमधिकृत्य—

योऽधीतेऽहन्यहन्येतां त्राणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः (१) स्वमूर्तिमान् ॥

---

(१) वायुर्भूतः—इति ख० पुस्तके ।

तथा—

सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुद्ध्यन्ति लक्षजाप्यान्न संशयः ॥

इत्यादीनि तत्तत्फलार्थत्वादिति गायत्रीजपानन्तरं (१)कार्यम् । कात्यायनः—'विभ्रा'डित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्य । अयञ्च जपः काम्यः ।

सन्ध्यात्रयेऽप्युपस्थानमेतदाहुर्मनीषिणः ।
मध्याह्न उदये वाऽपि 'विभ्राड्'दीच्छया जपेत् ॥

इति परिशिष्टेत् । उदयेऽपीत्यभिधानादुदयमात्रानन्तरमपि । मध्याह्नसन्ध्यावन्दनमिति पारिजातः । नमस्कृत्य सूर्यं, उपस्थानकर्मत्वेन तस्यैवोपस्थितत्वात् । 'नमस्कृत्य ततः प्रभु'मिति नारसिंहाच्चेति । मिश्रास्तु गायत्रीं नमस्कृत्येति कात्यायनसूत्रार्थं इति व्याख्यातवन्तः । तेषामयमाशयः-गायत्रीमधिकृत्य ।

तत्राऽऽवाह्य जपित्वा तु नमस्कृत्य विसर्जयेत् ।

इत्यावाहनादिपूर्वाऽपरक्रियासु गायत्र्या एव कर्मत्वेनाऽन्वयात्तन्मध्यपठितायां नमस्क्रियायामपि स एव युक्तिमानिति । 'नमस्कृत्य ततः प्रभु'मित्यत्रापि प्रभुशब्देन गायत्र्येवाऽभिमता, 'गायत्र्यभिमुखी'त्यादौ देवीत्यादिना कीर्तनादिति । आदित्यगायत्र्योर्द्वयोरपि नमस्कार इति तु श्रावकः । विसर्जने [illegible] यद्यप्युपाध्यायैर्मन्त्रो न लिखितः । मिश्रैः पुनस्तूष्णीमिति सिद्धवदुक्तम् । षडङ्गस्वरेण तु—

उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि ।
ब्राह्मणैः समनुज्ञाते(२) गच्छ देवि यथासुखम् ॥

इति विलिख्य छन्दोगानामेव मन्त्र इत्युक्तम्, तथापि सर्वेषांमप्यविरोधात्, गारुडलैङ्गादिपुराणविहितत्वाच्च । अत एव आचारचिन्तामणौ शौरिणाचारपल्लवेदेववर्धन(?) साधारण्येनैव सिद्धवदयं मन्त्रो लिखित इत्याधुनिकवर्द्धमानाः ।

इत्येष चाऽपिशब्दाभ्यां परमार्थिकटाक्षितः ।
संक्षेपात् दर्शितः प्रश्ने सन्ध्यावन्दनिकः क्रमः ॥ २२ ॥

---

(१) कार्यम्—इति ख॰ पुस्तके नास्ति ।

(२) समनुज्ञाता—इति [illegible] पुस्तके पाठः । 'उत्तमे शिखरे जाता भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्' । इति प्रचलितः पाठः ।

(मिता०) स्नानमिति। प्रातःस्नानं यथाशास्त्रम्। अब्दैवतैर्मन्त्रैः 'आपो हि ष्ठे'त्येवमादिभिर्मार्जनम्। प्राणसंयमः प्राणायामो वक्ष्यमाणलक्षणः। ततः सूर्यस्योपस्थानं सौरमन्त्रेण। गायत्र्यास्तत्सवितुर्वरेण्यमित्या(१)द्यायाः प्रतिदिवसं जपः(२)। कार्यशब्दो यथालिङ्गं प्रत्येकमभिसम्बध्यते ॥ २२ ॥

(वी० मि०) प्राणायामो द्विविधः, सबीजोऽबीजश्च। तथा च विष्णुपुराणम्—

प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥

सबीजः=सगर्भः, मन्त्राद्यालम्बन इति यावत्। तदुक्तमभियुक्तैः—

जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ।
तदपेतं विगर्भञ्च प्राणायामं परं विदुः ॥

सोऽपि प्रत्येकं त्रिधा। तथा चोक्तं मार्कण्डेयपुराणे—

लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधा मतः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क ! शृणुष्व मे ॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तमः स उदाहृतः ॥
निमेषोन्मेषणा मात्रा तालो लघ्वक्षरं तथा ।

अत्र तु पातञ्जलटीकायां 'षट्त्रिंशन्मात्राभिः प्रथम उद्घातो मन्दः स एव द्विगुणीकृतो द्वितीयो मध्यमः स एव त्रिगुणीकृतस्तृतीयस्तीव्र इति वाचस्पतिमिश्रैरुक्तम्, तन्मुख्यं पक्षान्तरमिति। तत्र प्रकृते प्राणायामः कीदृगित्याकाङ्क्षां पूरयन्नेव सन्ध्यान्तर्गते प्राणायामे जपविशेषरूपमङ्गं वि(३)धत्ते—

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥

अत्राऽयंशब्दः स इति समानार्थः। 'पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा' [रघु० ८।४] इत्यादाविव। तस्य च यत्पदसापे-

(१) मित्यादेः ख ।
(२) जपः कार्यः ख ।
(३) विधत्ते-इति ख. पुस्तके ।

हात्वात्सप्तम्यन्तं तदिहाऽध्याह्रियते, तेन 'शिरसे'त्यादिविशेषणविशिष्टां गायत्रीं यत्र जपेत्स(१)प्राणसंयमः क्रियेतेत्यर्थः । क्रियेतेत्यध्याहृतस्य विभक्तिविपरिणामेनाऽनुवृत्तेः । यत्तुवस्तु–प्राणसंयमस्वरूपमाह गायत्रीमित्यवतारयन्ति । तच्चिन्त्यम्, प्राणसंयमशब्दार्थस्याऽनभिधानात् । (२)न च तादृग्रूप एव तदर्थं (३)उच्छृङ्खलस्याऽपि तस्य प्राणसंयमत्वापत्तेः । न चाऽऽयतप्राण इति कर्त्रध्याहाराद्यैव दोषः । अत एव यमबृहस्पतिवसिष्ठाऽत्रिर पैठीनसिबौधायनाः —

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥

इति । छन्दोगपरिशिष्टे कात्यायन —

भूरादास्तिस्र एवैता महाव्याहृतयोऽव्ययाः (४) ।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥

'आपो ज्योतिरसोऽमृतं ब्रह्म भूर्भुवः स्व'रिति शिरः प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ।

एता एतां सहाऽनेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥

इति । आयतप्राण इति विशिशिषुरिति वक्त(५)व्यम् । अध्याहारगौरवात् । न च पक्षान्तरेऽपि कर्त्रपेक्षा(६)पूरणाय तदाश्रयणमावश्यकम्, अभ्यर्हितपूर्ववचनेऽवश्याऽध्याहार्यस्याऽवृत्त्यैवोपपत्तेः । अध्याहारापेक्षया तस्य लघुत्वात् । आयतासुत्वापेक्षया लघुधर्मान्तरमेव पुरस्कृत्य तस्यौचित्याच्च । न चाऽन्यपक्षे क्रियानुवृत्तिगौरवं सर्वं हि वाक्यं क्रियया परिसमाप्यत इति, तदावृत्त्यादेः सर्वैरेवाऽङ्गीकरणीयत्वात् । अन्यथा कर्त्रो(७)वृत्त्यादिरपि नाऽभ्युपे(८)या, युक्तिसाम्यात्(९) । किञ्च तत्पक्षे(१०) 'पिकः कोकिल इत्यपि' इति पि-

(१) एतदादि-तच्चिन्त्यम्-इत्यन्तो भाग ख. पुस्तके नास्ति ।
(२) न च-इति ख पुस्तके नास्ति । (३) शब्दार्थ -इति ख पुस्तके पाठः ।
(४) 'महाव्याहृतयोऽव्यया'-इति ख पुस्तके पाठः ।
(५) वक्तव्यम्-इति ख पुस्तके नास्ति । (६) कर्त्रपेक्षा-इति ख. पुस्तके पाठः ।
(७) प्रवर्त्त-इति क पुस्तके । (८) नाभ्युपेया,-इति ख॰ पु॰ पाठः ।
(९) युक्तिसामान्यात्-इति क॰ पु॰ पाठः ।
(१०) तत्पक्षे इति ख पु पाठः ।

कशब्दस्येवाऽत्र प्राणसंयमशब्दस्य स्वार्थत्वरूपेण स्वार्थलक्षणाप-त्तिः । अन्यथा पौनरुक्त्यवज्रलेपादिति सचेतसा भाव्यम् । भवतु वोक्तजप एवा ऽयंशब्दार्थः । तस्य संयमपदार्थाभेदान्वयः 'संयम्यत-ऽनेने'ति करणव्युत्पत्तेः । द्वादशमात्राभिरिति मात्राणामिव जप-स्याऽपि अवच्छेदादिप्रयोजकतया प्राणायामकरणत्वसम्भवात् । 'यजमानः प्रस्तरः' इत्यत्र यजमानशब्दस्येव संयमशब्दस्य गुण-वृत्त्याश्रयणाद्वा । तत्प्रयोजनं प्राणसंयमस्वरूपमिव तदङ्गयुक्तजपो-ऽप्यत्यावश्यक इति न, तदभावे प्राणायामविधिनिर्वाह इति प्रति-पत्तिरेवेत्यवान्तरकथनात् । जपप्राणायामस्वरूपमिति त्वश्रध्देय-मेव । तथा हि प्राणसंयमशब्दे प्राणायाम एवात्रोच्यतेऽन्याभि(१) धानस्य विचारासत्त्वात् । 'त्रिरायम्याऽसू'निति कात्यायनस्मृत्यादेक-त्वात् 'प्राणानायम्ये'त्यग्रेऽभिधानाच्च । न वोऽक्तगायत्रीजपः प्राणाया-मशब्दार्थः, व्युत्पत्तिविरहात् । न चायम्यतेऽनेनेति करणव्युत्पत्तिर्व-हुव्रीहिर्वा गौरवात् । कदाचित्तदाश्रयणस्याऽ न्यथाऽनुपपत्तिमूलक-त्वात् । न च रूढ्याश्रयणं योगेनैवोपपत्तेः। प्राणपदसमभिव्याहृतेषु नि-यमसंयमाऽऽयामशब्देषु निसमङामुपसर्गाणामर्थविशेषेणैवाऽनतिप्र-सङ्गात् । रूढेरपि योगसमानाऽधिकरणाया एव युक्तत्वाच्च । 'योग-रूढि'न्यायात् पङ्कजपदतुल्ययुक्तिकत्वात् मण्डपपद इव योगरूढत्वे मानाभावात्, प्राणायामशब्दार्थव्युत्पादनपराभियुक्तानुशासनविरो-धाच्च । तथा भगवान् पतञ्जलिः—तस्मिन् सति श्वासप्रश्वासयोर्गति-विच्छेदः प्राणायामः । अत्र वेदव्यासभाष्यम्—सत्यासने बाह्यस्य वा-योराचमनं श्वासः, कोष्ठयस्य वायोर्निःसारणं प्रश्वासः, तयोर्गति-विच्छेदः उभयाभावप्राणायाम इति । इहाऽऽचमनं निःसारणमिति भाववाचिभ्यां भवितैव विवक्षितः, कृदभिहितो भावो द्रव्यवत्प्रकाश-त इति न्यायात् । 'विसकिसलयच्छेदपाथेयवन्तः' [मेघ० १।११] इत्या-दिप्रयोगप्राचुर्य्यात् । तेनाऽऽचम्यमानो वायुः श्वासः, निस्सार्यमाणः कोष्ठ्यो वायुः प्रश्वास इति लभ्यते । अत एवोक्तं तयोर्गतिविच्छेद इति भावप्राधान्येऽन्वयोपपत्तेः । टीकाकृतोऽप्याहुः—'रेचकपूरककुम्भके-ष्वस्ति गतिविच्छेद'इति । प्राणायामसामान्यलक्षणमेतदिति । तत्र पूर-

(१) इतः प्रभृति—प्राणानायम्येत्यग्रे-इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति ।

के बहिरवच्छेदेन श्वा(१) सस्याऽपि गतिविच्छेदः, प्रश्वासस्यापि गत्यभावः, श्वासगत्यभावस्तु श्वासाऽभावादेव। कुम्भके तु श्वासप्रश्वासयोर्द्वयो(२)रप्यभावात् स्पष्टमेवोभयोर्गतिविच्छेद इति तात्पर्यम् । मार्कण्डेयपुराणमपि—

प्राणाऽपानविरोधश्च प्राणायाम उदाहृतः ।

इति । तथा—

प्राणानामुपसंरोधात्प्राणायाम उदाहृतः ॥

इति । एतेनाऽऽयतप्राण इति स्मृत्यन्तरदर्शनात् । प्राणनिरोधावच्छिन्नः प्रकृतगायत्रीजपः, तदवच्छिन्नः प्राणनिरोधः, तुल्यप्राधान्यादुभौ मिलितावेवा प्राणायाम इति निरस्तं तद्व्युत्पादनप्रवृत्तशास्त्रीयनिरपेक्षानुशासनविरोधात् । सबीजप्रणवादिमात्रबीजप्राणा(३)यामयोरसङ्करदोषस्य दुष्परिहरत्वाच्च । तस्मात्सामान्यशास्त्रोत्पादितस्वरूप एव । प्राणायामे सन्ध्यान्तर्गते योगियाज्ञवल्क्यसंहितायाम्—

नीलोत्पलदलश्यामं नाभिदेशे प्रतिष्ठितम् ।
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत् ॥
कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम् ।
ब्रह्माणं रक्तसर्वाङ्गं चतुर्वक्त्रं पितामहम् ॥
रेचकेनेश्वरं ध्यायेल्ललाटस्थं महेश्वरम् ।
शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम् ॥

इति ध्यानविशेषरूपमिव प्रकृते जपविशेषरूपमङ्गमुपदिश्यत इत्येव न्यायः ।

अत्र—

ब्रह्माणं केशवं शम्भुं ध्यायेद्देवाननुक्रमात् ।

इति पक्षान्तरम् । एवं च (४)सबीजः स्वकालावच्छेदाय द्वादशमात्रादिपरिकलनशून्यश्च सन्ध्याप्राणायामः पर्यवस्यति, तत्कालस्य मन्त्रजपेनैवाऽवच्छेदात् । त्रित्वादिकथनस्य योगिप्राणायाममात्रपरत्वात् । एतेन स्मृत्यन्तराण्यपि व्याख्यातानि । उक्तानुसारेणैव तदर्थस्य नेयत्वा-

(१) श्वासस्याऽपि गतिविच्छेद—इति ख पुस्तके नास्ति ।
(२) द्वयो—इति क पुस्तके नास्ति ।
(३) प्राणायामनिरस्तयो—इति ख पुस्तके पाठः । (४) च—इति क पुस्तके नास्ति ।

दन्यथाऽनुपपत्तेः। प्राणायामसामान्यलक्षणन्तु 'गायत्री'मित्यादि याज्ञवल्क्योक्तमिति। छन्दोगाह्निकलिखनन्त्वेवं व्याख्येयम्। ननु भवतु प्रत्येकमेव पूरकादीनां प्राणायामत्वं, तथापि कुम्भक एव मन्त्रपाठः। याज्ञवल्क्येन संयमशब्देन तस्यैवोक्तेः सम्यक् यम इति व्युत्पत्तेः। अत एव संयम इत्येकवचनमपि सङ्गच्छत इत्यत आह—'प्राणायामसामान्ये'ति। तुशब्दो भिन्नक्रम इति याज्ञवल्क्योक्तन्तु प्राणायामानां त्रयाणां सामान्यं लक्षणं धर्म इत्यर्थः। प्राणायामशब्देन प्राणायामसामान्यस्यैवाऽभिधानादिति भावः। सोऽयं जपः प्राणायामसंज्ञक इति प्रामाणिकलिखनमपि यथाकथञ्चिद्व्याख्येयमिति संक्षेपः। गायत्रीमिति 'तत्सवितु'रित्यादिचतुर्विंशत्यक्षरां सावित्रीमृचमित्यर्थः। तस्या एव तैत्तिरीयकारण्यके प्राणायाममन्त्रत्वेनाऽऽम्नातात्।

सविता देवता यस्या मुखमग्निस्त्रिपाच्च या।
विश्वामित्र ऋषिः, छन्दो गायत्री, सा विशिष्यते॥
विनियोग उपनयने (१)प्राणायामे तथैव च।

इति योगिना प्राणायामे विनियोगकथनाच्च। शिरसा 'आपोज्योति'रित्यादिना 'स्वरि'त्यन्तेन छन्दोगपरिशिष्टप्रदर्शितेन यजुषा। सार्द्धं=सह, (२)साहित्यं च तेन गायत्र्याः पश्चात्पठितेन तावतैवाऽप्राधान्येन सहार्थयोगविहिततृतीयोपपत्तेः। लिखितशङ्खादिस्मृतौ प्रकृत(३)वचनेऽपि पाठिकक्रमस्याकोपाच्च। व्याहृतयो=भूराद्याः सप्त छन्दोगपरिशिष्टोक्ताः। प्रतीत्यनन्तरं प्रतीकमित्यध्याहार्यं 'प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरस' इत्यन्यत्र श्रवणात्। 'संयुक्ता'मित्युपसर्गेणाऽन्तेऽपि प्रणवसम्बन्धमभिप्रैति। त्रिः=वारत्रयं जपेदित्यन्वयः। तेन 'ॐ भूः, ॐ भुवः, ॐ स्वः, ॐ महः, ॐ जनः, ॐ तपः, ॐ सत्यं, ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, 'ॐ आपो ज्योतिरसोऽमृतं ब्रह्म भूर्भुवः स्वरो'मिति जप्यं पर्यवस्यति।

एता एतां सहाऽनेन तथैभिर्दशभिः सह।

इति छन्दोगपरिशिष्टैकमूलकत्वात्। जपस्तु प्राणायामे मानस एव। अन्यथाऽभिमतप्राणनियमनासम्भवात्। अन्ये तु—

(१) प्राणायामे-इत्यारभ्य योगिना-इत्यन्तं ख० पुस्तके नास्ति।
(२) सरूपं-इति ख० पुस्तके पाठः।
(३) प्रकृत इति क० पुस्तके नास्ति।

प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः ।
सावित्रीं शिरसा सार्द्धं मनसा त्रिः पठेद्द्विजः ॥

इति संवर्त्तवचनमेवाऽत्र प्रमाणयन्ति । अत्र केचित्—पूरककुम्भकरेचकैर्मिलितैकं प्राणायाममिच्छन्ति । तत्रापि पक्षत्रयम् । एके-प्रत्येकमेकधा मन्त्रपाठं पूरकादिषु मन्यन्ते । अन्ये-त्रिधा । अपरे-पूरकरेचकयोर्मन्त्रपाठं न मन्यन्ते, कुम्भकमात्रे मन्त्रपाठमिच्छन्ति तत्सर्वमयुक्तम् । तथा हि ।

पूरककुम्भकरेचकैः प्राणायामस्त्रिलक्षणः ।
नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ॥
कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः ।

इत्युपक्रम्य योगी—

एवं त्रिविधमुद्दिष्टं प्राणायामस्य लक्षणम् ॥

इत्युपसञ्जहार । विधाशब्दो ह्यवान्तरभेदवाची, अत सामान्यस्य प्राणायामस्यैते त्रयः प्रभेदा इति प्रत्येकमेव पूरकादीनां प्राणायामत्वम् । स्मृत्यन्तरेऽप्युक्तम् 'त्रिविधः प्राणायामः—पूरकं, कुम्भकं, रेचक'मिति । किञ्च 'स त्वि'ति पूर्णिकया 'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परि(१)दृष्टो दीर्घसूक्ष्म' इति पतञ्जलसूत्रमवतार्य्य यत्र प्रश्वासपूर्वको गत्यभाव स बाह्यः, यत्र श्वासपूर्वको गत्यभावः (२)स आभ्यन्तरः, तृतीयः स्तम्भवृत्तिः यत्रोभयाभावः सकृत्प्रयत्नाद्भवती'ति भाष्ये तट्टीकायां च प्राणायामविशेषत्रयलक्षणपरं सूत्रमवतारयति । 'स त्विति' इत्युपक्रमे 'एवं त्रयो विशेषा लक्षिता' इत्युपसंहारे च पूरकादीनां प्रत्येकमेव प्राणायामत्वमिति स्पष्टमुक्तमिति । अतः पूरकादिषु प्रत्येकं त्रिधा मन्त्रपाठः, एतावतैव च प्राणायामत्रयसिद्धिः ।

आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ।

इति व्यासोक्तं पूरकादीनां प्रत्येकं त्रित्वं त्रिरावृत्तमन्त्रावच्छेदेन वा नानाप्रयोगापेक्षया वा । यद्वा पक्षान्तरमेवेदम् ।

त्रिविधं केचिदिच्छन्ति तथैव नवधा परे ।

---

(१) परिदृष्टो—इति क० पुस्तके ।
(२) स इत्यादि सकृत्प्रयत्नाद्भवति—इत्यन्तो भाग ख० पुस्तके न स्ति ।

इति योगिनाऽप्यभिधानात् । परन्तु पूरकादीनां प्रत्येकमावृत्तिपक्षे एकैकमेकैकधा कृत्वा पुनस्तथैव कृत्वा पुनस्तथैव कुर्यादिति क्रमः । तत्र प्रथमं वामनासापुटेन पूरकं, अनन्तरं कुम्भकं, ततो दक्षिणनासापुटेन रेचकं, ततो दक्षिणनासापुटेन पूरकं, अनन्तरं कुम्भकं, (१)ततो वामनासापुटेन रेचकं, ततो दक्षिणनासापुटेन पूरकं, अनन्तरं कुम्भकं, ततो दक्षिणनासापुटेन रेचकमिति प्रकारः । तथा च छन्दोगाह्निकेऽप्युपाध्यायः-वामनासापुटेन शनैर्वायुमाकृष्य सर्वनाडीः पूरयन् नाभौ यथोक्तं विष्णुं ध्यायन् यथोक्तं जपं कुर्यादिति पूरकाख्यः प्राणायामः, ततो हृदि ब्रह्माणं ध्यायन् निश्चलश्वासो जपेदिति कुम्भकाख्यः, ततो दक्षिणनासापुटेन शनैर्वायुं रेचयन ललाटे शिवं ध्यायन् जपेदिति रेचकाख्य इति । अभियुक्ताश्च—

ईडया कर्षयेद्वायुं वाह्यं षोडशमात्रया ।
धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया ॥
सुषुम्ना मध्यमं सम्यग्द्वात्रिंशन्मानतः शनैः ।
नाड्या पिङ्गलया चै(२)नं रेचयेद्योगवित्तमः ॥
येनैव सन्त्यजेत्तेन पूरयेद् धारयेत्ततः ।
रेच(३)येच्च ततोऽन्येन शनैरेवं पुनः पुनः ॥

तथा—

भूयो भूयः क्रमात्तस्य व्यत्यासेन समाचरेत् ।
प्राणायाममिमं(४) प्राहुर्योगशास्त्रविशारदाः ॥

इति । अत्र च प्राणायामगायत्रीजपे सर्वे जपधर्मा ग्राह्याः सामान्यशास्त्राऽनुरोधादित्यास्तां विस्तरः ॥ २३ ॥

(मिता०) प्राणायामविचारः—

गायत्रीमिति । गायत्रीं पूर्वोक्तामापोज्योतिरित्यादिना शिरसा संयुक्तां उक्तव्याहृतिपूर्विकां प्रतिव्याहृति प्रणवेन संयुक्तां ॐ भूः ॐ भुवः ॐ स्वरिति त्रीन्वारान्मुखनासिकासञ्चारिवायुं निरुन्धन् मनसा जपेदित्ययं सर्वत्र प्राणायामः ॥ २३ ॥

(१) ततो-इत्यारभ्य कुम्भकं,-इत्यन्तं ख० पुस्तकेऽधिकम् ।

(२) चैवं—इति ख० पुस्तके ।

(३) रेचयेच्च-इत्यारभ्य समाचरेत्-इत्यन्तं ख० पुस्तके नास्ति ।

(४) इमं-इत्यस्य स्थले इति-इति ख० पुस्तके पाठः ।

(वी० मि०) प्राणायामानन्तरं मार्जनकर्तव्यतायाः श्लोकार्द्धेन प्रदर्शनपूर्वकं सायंप्रातःसन्ध्ययोरेकेन श्लोकेन विशेषमाह—

प्राणानायम्य संप्रोक्ष्य तृचेनाऽब्दैवतेन तु ॥
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥

प्राणानायम्येति यथाविधि प्राणायामं विधायेत्यर्थः । संप्रोक्ष्य=मार्जनं कृत्वा, तृचेन=ऋक्त्रयेण, अब्दैवतेन=जलदेवताकेन आपोहिष्ठेत्यादिना, सावित्रीम्=उक्ताम्, प्रत्यक्=पश्चिमाभिमुखः, जपन् सन्ध्यां=सायंसन्ध्यां अभिव्याप्य, कालाऽध्वनोरत्यन्तसयोगे [ पा० सू० २ । ३ । ५ ] द्वितीया । तदेव स्फुटयति—आतारकोदयात्=सम्यक् नक्षत्रदर्शनपर्यन्तम् ।

पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ।

इति मनुवचनात् । मर्यादायामाङ् । आसीत=उपविशेत् । तेन सायंसन्ध्यायामुपविश्य नक्षत्रदर्शनावधि सावित्रीं जपेदिति विशेषो दर्शितः । अत्र जपधर्म आसीनत्वादिस्तदङ्गेष्वङ्गन्यासादौ सर्वत्राऽन्वेति, अङ्गानां प्रधानरीत्यन्वयस्यौत्सर्गिकत्वात् । प्रातः=प्रातःसन्ध्यायां, प्राक्=प्राङ्मुखः, एवं प्राणायामादिपूर्वकं उक्तजपं कुर्वन् सूर्यदर्शनपर्यन्तं तिष्ठेत्=ऊर्ध्वः स्यात् । तेन प्रातःसन्ध्यायामुत्थित एव सावित्रीं जपेदिति विशेषो दर्शितः । सूर्याभिमुखत्वमूर्ध्वता च ।

तिष्ठेच्चेदीक्षमाणोऽर्कं जप कुर्यात्समाहितः ।

इति योगियाज्ञवल्क्यवचनात् ।

तिष्ठेदोदयात्पूर्वां मध्यमामपि शक्तितः ।
आसीतोद्गमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन् ॥

इति छन्दोगपरिशिष्टात् । अत्र शक्तित इत्यनेन मध्याह्ने 'सहस्रपरमां देवीं'मित्याद्युक्तसङ्ख्याकैर्यथासामर्थ्यं कृतैरेव जपैः सन्ध्योपासनसमाप्तिमभिप्रैति ।

नन्वेतद्वचनस्य सन्ध्यात्रयसाधारण्यात्प्रातःसायंसन्ध्ययोरप्येवमिति चेत्सत्यं, परन्तु फलविशेषार्थितायां तत्राऽप्यत्यन्तरोक्तिः । तथा च मनुः—

ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्।
प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च॥

यशो=जीवितस्य(१) ख्यातिः, कीर्तिस्तु मृतस्य सेति व्याख्यातारः। अत्र दीर्घायुरादिकं गुणफलमित्युपाध्यायाः। वाक्यान्तरेऽपि सूर्यनक्षत्रदर्शनयोरेवाऽवधित्वं फलार्थं मूलक्याऽनुरोधात्। अथवा सूर्यनक्षत्रदर्शनयोः प्राक्कालोऽप्यनेन नित्यजपाङ्गतया बोध्यते, न तु जपेन कालस्याऽभिव्याप्तावपि तात्पर्यम्। एवञ्च सन्ध्यात्रयेऽपि नित्यजपे उक्तैव व्यवस्था, काम्यजपे तु प्रातः सायं च सूर्यनक्षत्रयोरुत्तरावधित्वम्। एतच्च यदि तद्वयाऽवधिजपस्य सहस्रजपादधिकसङ्ख्यत्वसम्भवः। वस्तुतस्तु तदसम्भवात्सर्वत्र सहस्रजपेनैव सन्ध्याया दीर्घत्वम्। एवञ्च मध्याह्नसन्ध्यायामपि तदप्रत्यूहम्। जपे च सहस्रसङ्ख्या क्रतुपुरुषोभयार्था। 'खादिरं वीर्यकामस्ये'त्यत्र यूपे खादिरत्ववत्।

गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्। इति।
गायत्रीम(२)भ्यसेत्तावद्यावन्नक्षत्रदर्शनम्॥

इति वचनयोरप्युक्तसङ्ख्यायामेव तात्पर्यम्। किं बहुना प्रकृतवचनमप्यनयैव दिशा प्रस्थाप्यताम्। अथवा एवंविधानि सर्वाणि वचनानि सन्ध्यासमयचरमसीमप्रदर्शनपरतयैव वर्ण्यताम्। ननु—

सन्धौ सन्ध्यामुपासीत नाऽस्तगे नोद्गते रवौ।

इति योगिसंहितायां सन्ध्यावन्दनस्य दिनरात्रिसन्धिरूपसन्ध्याकालकर्त्तव्यत्वस्थितौ कियान् सन्धिरित्यपेक्षायाम्—

ह्रासवृद्धी तु सततं दिनरात्र्योर्यथाक्रमम्।
सन्ध्या मुहूर्त्तमात्रं तु ह्रासे वृद्धौ समा स्मृता॥

इति वचनात्सन्ध्याकालस्य दण्डद्वयात्मकत्वे निर्व्यूढे 'समं स्यादश्रुतत्वात्' इति न्यायाद्रात्रेश्चरमो दण्डो दिवसस्य प्रथमः प्रातःसन्ध्या, दिवसस्य चरमो रात्रेः प्रथमो दण्डः सायंसन्ध्येति पर्यवसानात्कथं सूर्यनक्षत्रदर्शनयोः सन्ध्यासमयोत्तरावधित्वमव्यापनादधिकव्यापनाच्चेति चेत् मैवं, वाचनिकेऽर्थे न्यायाऽनवकाशात्। यदाह मिहिराचार्यः—

(१) जीवितः सन्-इति क० ख० पुस्तकयोः पाठः।
(२) इदं पद्यार्धं ख० पुस्तके नास्ति।

अर्द्धास्तसमयात्सन्ध्या व्यक्तीभूता न तारका यावत् ।
तेजःपरिहानिरुपा भानोरर्द्धोदयं यावत् ॥

एवश्चाऽविद्यमानार्द्धाधिकमार्तण्डमण्डलः स्पष्टलक्ष्यनक्षत्रगणः कालविशेषः सन्ध्येति सन्ध्ययोः सामान्यलक्षणम् । तथा हि अस्तमितेऽपि सूर्ये कियन्ति हि तस्य तेजांसि मुहूर्त्तमनुवर्तन्तेऽनुदितेऽपि(१) तस्मिन् कियन्ति चिरप्रवर्तन्ते, तानि चोभयरूपाण्यपि तारकातेजः पराभवन्तीति वस्तुस्थितिः । तेन प्रातःसन्ध्यायाः सौरकिरणप्रयुक्ततारकातेजोऽभिभव(२)प्रवृत्तिः । यत्तु (३)सन्ध्या पूर्वोऽवधिः, सूर्यबिम्बार्द्धोदयस्तूत्तरः, सायंसन्ध्यायास्तु सूर्यबिम्बार्द्धाऽस्तमयः पूर्वोऽवधिः, सौरकिरणप्रयुक्ततारकातेजोऽभिभवनिवृत्तिस्तूत्तरः । यत्तु सन्ध्या च रात्रेर्भागाऽवशेषः इति (४)प्रामाणिकलिखनं, तत् शास्त्रे क्वचित् क्वचित् सन्ध्यारात्र्योः पृथक्कथनोपपत्तये । परिभाषाविशेषमाश्रित्य प्रायिकव्यवहारानुसारेण स्वस्मिन् द्वीपे सूर्यमण्डलयान् कालोऽस्मिन् दिनं तद्रहितश्च रात्रिरिति लक्षणं दिनरात्र्युभयान्तर्गतैव सन्ध्या । परन्तूक्तसन्ध्याद्वयसामान्याऽनुसारेण सन्ध्याया भूयान् भागो विभावर्यामन्तर्भवति, स्तोकस्तु दिवस इति विशेषः, इत्युपपन्नं सूर्यबिम्बार्द्धस्पष्टनक्षत्राभावयोः प्रातः(५)सायंसन्ध्योत्तरावधित्वं सन्ध्याद्वयसाधारणम् । तल्लक्षणन्तु—

त्रयाणां चैव देवानां ब्रह्मादीनां समागमः ।
सन्धिः सर्वसुराणां च सन्ध्या तेन प्रकीर्तिता ॥

इति योगिनोक्तं पृथगेव । इदमत्राऽवधेयं मध्याह्नसन्ध्यायां न(६) दण्डद्वयात्मकत्वनियमो मानाऽभावात् ।

न च सन्ध्या मुहूर्त्तमात्रं त्वित्य(७)विशेषितसन्ध्योपादानमेव

(१) अपि-इति क० पुस्तके नास्ति ।
(२) निवृत्ति-इति पाठान्तरम् ।
(३) यत्तु सन्ध्या-इति क० पुस्तके नास्ति ।
(४) प्रामाणिक-इत्यारभ्य परिभाषाविशेष-इत्यन्तो भाग ख० पुस्तके नास्ति ।
(५) प्रात-इति ख० पुस्तके नास्ति ।
(६) न इति ख० पुस्तके नास्ति ।
(७) त्विति विशेषित० एव ख० पुस्तके पाठः ।

मानमनध्यवसायात् । न च स्मृतिषु मध्यान्हे सन्ध्यावन्दनकर्तव्यताया विहितत्वात् द्वितीययामस्याऽन्त्यो दण्डस्तृतीयस्य च प्रथम इति दण्डद्वयात्मिकाऽभिजित्कालरूपा मध्याह्नसन्ध्येति वाच्यम्, मध्याह्नशब्देन त्रिधा विभक्तदिनस्य मध्यमभागाऽभिधानात् । अष्टधाविभक्तदिनपञ्चमभागस्य संविभागेन तदव्यवहितपूर्वकालस्य च सन्ध्यावन्दनोत्तरसंविभागपूर्वं कर्त्तव्यकर्मकलापेनाऽक्रान्तत्वात् ।

तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विभिः ।

इत्यादौ तत्पूर्वकालस्याऽपि सन्ध्यात्वावसायाच्च । तस्मात्प्रातः-सायंसन्ध्याऽनवच्छिन्नो दिनभागः सम्पूर्णमेव वा दिनं मध्याह्नसन्ध्याशब्दार्थः, अनन्यगतेः । मध्याह्न उदये वाऽपि, इत्यादिशास्त्रव्याकोपादत्यावश्यकप्रकरणे—

मुखसंशोधनं प्रातः सन्ध्याऽह्नि स्नानपूर्विका ।
सन्ध्याऽथ पञ्चयज्ञान्ते भोजनं लीलया स्थितिः ॥
सायंसन्ध्याऽशनं वेदपाठोप्य(१)शयनं भवेत् ।
एतावदपि कर्त्तव्यं श्रेयःपरमभीरुभिः ॥

इति अहनि स्नात्वा पञ्चमहायज्ञान्निर्वर्त्येत्यादिप्रामाणिकनिबन्धलिखनादाचारानुसाराच्च । इयांस्तु विशेषः-सति सम्भवेऽष्टधाविभक्तदिनचतुर्थभागे(२)निषिद्धवेलायां क्रमेण स्नानं तत्प्रतिनिधिं वा विधायाऽव्यवधानेन सन्ध्यावन्दनानिमित्तविशेषेण तु क्वचिदप्यहर्भागे निषिद्धवेलायां क्रमेण स्नान(३)सन्ध्यादिकमिति कृतं प्रसक्तानुप्रसक्तया । स्यादेतत् भवतूक्तं स्नानसन्ध्यालक्षणं समयस्वरूपम् । तथाऽपि सहस्रजपेन तदुल्लङ्घने ध्रौव्यात् ।

सन्धौ सन्ध्यामुपासीत नाऽस्तगे नोद्गते रवौ ।

इति वचनविरोध, इति मैवं—

प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥

---

(१) पादोप्यशयनं इति ख० पुस्तके पाठः ।
(२) निषिद्धवेलायां क्रमेण-इति क० पुस्तके नास्ति ।
(३) स्नानेत्यादि भवतूक्त,मित्यन्तं क० पुस्तके नास्ति ।

इति संवर्तग्रन्थस्य इव प्रकृतेऽप्युपासीतेत्यस्य उपासीतेति विधिः। उपासीतेत्यस्य उपासितुमारभेतेत्यर्थात् तेन सन्ध्याऽप्युक्तदण्डद्वयात्मके काले सन्ध्यामुपासीतेति विधिः। अयं वैषम्येऽप्यनुपङ्गे दोषाभावात् उपासितुमारभेतेत्युक्त्वा। 'सायं स्वाग्रदर्शये प्रातर्दर्शये च नारभेते'ति निषेधश्च प्रकृतवचनार्थः। प्रातःसन्ध्यां सनक्षत्रां संम्यग्विभावनीयामथ पश्चिमां सन्ध्यां सादित्यां सम्पूर्णादित्यां तदसंभवेऽर्द्धास्तमितभास्करां उपासितुमारभेतेति संवर्त(१)वचनार्थः। न च निरुक्तस्वरूपायाः सन्ध्यायाः प्रकृतविशेषणद्वयारसामानाधिकरण्याऽनुपपत्तिः, तादृङ्नक्षत्रादित्याभ्यामव्यवहितोत्तरस्वरूपस्य सादित्यत्वोपपन्नमात्रयो(२) सन्ध्ययोः सम्भवात्। अयं त्ववान्तरविशेषो यत् 'सविशेषणे ही'ति न्यायेन सन्ध्याव्यवधानविशिष्टौ नक्षत्रादित्यौ विशेष्यान्वयस्यौत्सर्गिकत्वादुक्तनक्षत्रादित्याऽव्यवधानविशिष्टा सन्ध्यैव वाऽऽरम्भे बीजमिति। तत्र सति सम्भवे प्रथमः कल्पः, अन्यथा द्वितीयः, यदाह बौधायनः। अपि चाऽत्र प्रजापतिगीतौ श्लोकावुदाहरन्ति।

अनागतां तु ये पूर्वामतिक्रान्तां तु पश्चिमाम्।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः॥
सायं प्रातः सदा सन्ध्या न ये विप्रा उपासते।
तानेतान् धार्मिको राजा शूद्रकर्मसु योजयेत्॥

शातातपोऽपि—

अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम्।
नोपासीत द्विजः सन्ध्यां स शूद्रो ब्राह्मणः स्मृतः॥

केचित्तु सनक्षत्रां दृश्यविद्यमानसकलनक्षत्रां प्रवृत्तसूर्यकिरणामिति शेषः। तेनाऽदृश्यकिञ्चिन्नक्षत्रस्याऽपि सन्ध्याऽव्यवहितपूर्वस्याऽपि समयस्य व्यवच्छेदः। सादित्यां=दृश्यसूर्यां, अर्द्धेत्यादि=अदृश्यसूर्यार्द्धां, तेन दृश्यसम्पूर्णसूर्यस्याऽदृश्यसम्पूर्णसूर्यस्य च समयस्य व्यवच्छेदः। तेन सन्ध्यायाः समारम्भो न तत्पूर्वमपीति व्याचक्ष-

(१) संवर्त इति ख० पुस्तके नास्ति।
(२) सादित्यैरुपपन्नमात्रयो—इति क० पुस्तके, सादित्यत्वोपपन्नमात्रयोः—इति ख० पुस्तके पाठः।

ते। पूर्वोक्तद्वितीयपक्षोऽपि सति सम्भव एव। तथा हि शिष्टाः पठन्ति–'अतीतामप्युपासीते'ति। अतीतां=अतीतारम्भकालां उपासीतोपासितुमारभेत। एवञ्च सहस्रजपेन सन्ध्यासमयोल्लङ्घनेऽपि न दोषः, कर्मारम्भे विहितकालान्वयस्य शास्त्रार्थत्व'मभ्युदितेष्ट्यधिकरण'न्यायात्। एतदेवाऽऽहुः—

काले कर्म समारब्धमकालेऽपि समापयेत्।

इति सहस्रजपाऽन्यथाऽनुपपत्तेः।

पूर्वां सन्ध्यां जपंस्तिष्ठेत्स्वे काले चाऽपरां चिरम्।
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्॥

इति मनुवचनाच्च। चिरमित्युभयोः सन्ध्ययोः(१) सम्बद्ध(२)-सन्ध्यासमयोत्तरमपीत्यर्थः, एवमेव व्याख्यातारः इति सर्वं चतुरस्रम्। 'अतीतामप्युपासीते'ति यथाश्रुत एवाऽर्थः। तेन बलवता केनं चिन्निमित्तेन सन्ध्यायामुपासनारंभे तदूदूरमप्युपासनं कर्त्तव्यम्। 'अतिक्रान्तान्तु पश्चिमा'मित्यप्येतत्परम्।

मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणेऽप्यत्रेदृशो भवेत्॥

इति परिभाषैकमूलकत्वात्। परन्तु कियत्कालपर्यन्तमतीतोपासनार्हो गौणः काल इत्यनवध्यवसाये—

एवमागामियागीयमुख्यकालादधस्ततः।
स्वकालादुत्तरो गौणः कालः प्राक्तनकर्मणः॥

इति वचनादेव 'व्यवस्थाप्युरपी'(?)ति(३) न्यायात् यागपदस्य वैदिककर्ममात्रपरत्वात्।

मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते।

इत्युपक्रमे 'प्राक्तनकर्मणः' इत्युपसंहारे च कर्मत्वस्यैव पुरस्कारात्। अगामि च कर्माऽव्यवहितसन्ध्यावन्दनमेवाऽऽन्तरतम्यात्। द्रागुपस्थितेः सन्ध्योपासनाव्यवहितोत्तरकर्त्तव्यमावश्यकम्। नियतवैदिककर्मान्तरमेवेति बहवः॥ २४॥

(१) सन्ध्ययोः–इति ख० पुस्तके नास्ति।
(२) संवर्ध–इति क० पुस्तके पाठः।
(३) 'व्यवस्थपुरपी'ति–इति ख० पु० पाठः।

( मिता० ) सावित्रीजपप्रकारः—

प्राणानित्यादि । प्राणयामं पूर्वोक्तं कृत्वा तृचेनाऽब्दैवतेन पूर्वोक्तेनाऽऽत्मानमद्भिः सम्प्रोक्ष्य सावित्रीं जपन् प्रत्यक्सन्ध्या(१)मासीत । अर्थात्प्रत्यङ्मुख इति लभ्यते । आतारकोदयात् तारकोदयावधि । प्राक्सन्ध्यां प्रातःसमये । एवं पूर्वोक्तविधिमाचरन् प्राङ्मुखः सूर्योदयावधि तिष्ठेत् । अहोरात्रयोः सन्धौ या क्रिया विधीयते सा सन्ध्या । तत्र अहः सम्पूर्णादित्यमण्डलदर्शनयोग्यः कालः । तद्विपरीता रात्रिः । यस्मिन्काले खण्डमण्डलस्योपलब्धिः स सन्धिः ॥ २४ ॥

( वी० मि० )

अग्निकार्यं ततः कृत्वा सन्ध्ययोरुभयोरपि ॥ २५ ॥
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ॥

ततः=सन्ध्योपासनानन्तरम् । उभयोः सन्ध्ययोः=सायंप्रातःसन्ध्याविहितकालयोः । अग्नौ कार्यं समित्प्रक्षेपादि गृह्योक्तविधिना कुर्यात् इत्यर्थः । तथा च भविष्ये—

दूरादाहृत्य समिधं सन्निदध्याद् गृहोपरि ।
सायं प्रातश्च जुहुयात्ताभिरग्निं च तद्व्रतः ॥

अपिना प्रातःकृत्यान्तरसमुच्चयः । ततोऽभिवादयेदिति । ततः=प्रातरग्निकार्यानन्तरम् । वृद्धान्=वयोविद्याद्यधिकान् गुरुप्रभृतीन् । असावहमिति=अमुकशर्माहमिति । ब्रुवन्=वक्तमुच्चारयन् । अभिवादयेत्=अभिवादनं=पादोपसङ्ग्रहणं सं(४)भाषणं वा ।

व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यः सङ्ग्राह्यो दक्षिणेन तु दक्षिणः ॥

सव्येन पाणिना सव्योऽभिवाद्यस्य पादः । एवमग्रेऽपि । अहमित्यनन्तरं भोःशब्दो वाच्यः । तथा च मनुः—

*अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् ।*
असौ नामाऽहमस्मीति स्वं नाम परिकीर्तयेत् ॥

---

( १ ) मुख इति ग० ।
( २ ) भाषण इति ग० पुस्तके पाठः ।

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभि(१)वादने।

एवञ्च व्यत्य(२)स्तहस्ताभ्या(३)मभिवाद्यस्य पादौ गृहीत्वा 'अमुकशर्माऽहमस्मि भो गुरो!' इति अभिवादनं पर्यवस्यति। अभिवाद्येन च प्रत्यभिवादनं कार्यम्। तदाह स एव—

आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने।
अकारश्चाऽस्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः॥

(४)अस्य अभिवादकस्य नाम्नोऽन्ते अकार इति नामान्तस्वरोपलक्षणम्। 'आमन्त्रिते स्वरोऽन्त्यः प्लवत' इति वसिष्ठात्। तेनाऽभिवादकनामाऽन्त्यस्वरः पूर्वाक्षरप्लुतः। पूर्वमक्षरं व्यञ्जनरूपं यस्य सः पूर्वाक्षरश्चासौ प्लुतश्चेति कर्मधारयः। प्लुतस्त्रिमात्रः पूर्वाक्षरेति(५)विशेषणाद्व्यञ्जनसहित एव स्वरः प्लावनीय इति पर्यवस्यति। एवञ्च 'आयुष्मान् भव सौम्य(६)देवदत्ता' इति प्रत्यभिवादनं सिद्ध्यति(७)। अत्र मनुः—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाऽभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥

इत्यादि संक्षेपः॥ २५॥

(मिता०) अग्निकार्यमिति। ततः सन्ध्योपासनानन्तरं द्वयोः सन्ध्ययोरग्निकार्यं अग्नौ कार्यं समित्प्रक्षेपादि यत्तत्कुर्यात् स्वगृह्योक्तेन विधिना॥ २५॥

(मिता०) तत इति। तदनन्तरं वृद्धान् गुरुप्रभृतीनभिवादयेत। कथम्। असौ देवत्तशर्माऽहमिति स्वं नाम कीर्तयन्॥

(वी० मि०)

गुरुं चैवाऽप्युपासीत स्वाध्यायार्थं समाहितः॥ २६॥

---

(१) अभिवादनैः-इति क० पुस्तके पाठः।
(२) व्यस्तहस्ताभ्यां-इति ख० पुस्तके पाठः।
(३) अभिवाद्यस्येत्यारभ्य गुरो!-इत्यन्तं ख० पुस्तके नास्ति।
(४) पूर्वमक्षर-इति ख० पुस्तकेऽधिकम्।
(५) पूर्वाक्षरेण-इति क० पुस्तके पाठः।
(६) सौम्य-इति ख० पुस्तकेऽधिकः पाठः।
(७) सिद्ध्यति-इत्यारभ्य प्रत्यभिवादनम्-इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति।

गुरुं=वक्ष्यमाणलक्षणम्। चस्त्वर्थः। गुरुमेव त्विति सम्बन्धः। समानार्थ(१)पत्यु(!)समुदायश्च समुदायार्थमेवाऽभिधत्ते, अपि चेत्यादौ बहुशस्तथा दर्शनात्। अपिर्भिन्नक्रमः। तेन गुरुन्तु स्वाध्यायो वेदा(२)ध्ययनं, तदर्थमुपासीत परिचरेदपि। न केवलमभिवादयेदेवेत्यर्थः। समाहितः=तदेकाग्रमनाः॥ २६॥

( वी० मि० )

आहूतश्चाऽप्यधीयीत लब्धं चाऽस्मै(३) निवेदयेत्॥

आहूतः=आकारितो गुरुणा प्रक्रमात्, न तु स्वयं गुरुं प्रेरयेत्। चकारात्तदनुष्ठानादिकं समुच्चिनोति। तथा च गौतमः—'अनुज्ञात उपविशे(४)द्दक्षिणतः प्राङ्मुख. शिष्य उदङ्मुखो वा अधीयीताऽपि न केवलं उपासीतैवे'ति। लब्धं भिक्षादि सर्वं अस्मै गुरवे निवेदयेत् दद्यात् इति यावत्। इदं मया लब्धमिति प्रकाशयेदित्यर्थः-इति साम्प्रदायिकाः॥

( वी० मि० )

हितं चाऽस्य(५) चरेन्नित्यं मनोवाक्कायकर्मभिः॥२७॥

हितं तदन्वयापायोर्विरुद्धमनुकूलम्। अस्य=गुरोः। नित्यं=तत्तदवसराऽनतिक्रमे(६)। मानसवाचिककायिकैर्व्यापारैः कुर्यादित्यर्थः। चकारात्—

शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम्॥
नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः।
आस्यतामिति चोक्तः सन्नासीताऽभिमुखं गुरोः॥

इति आदिमन्वाद्युक्तं समुच्चीयते॥ २७॥

( मिता० ) गुरुमित्यादि। तथा गुरुं वक्ष्यमाणलक्षणमुपासीत

---

(१) समानार्थपत्युसमुदायश्च-इत्यस्य स्थाने समानार्थत्यश्च-इति ख० पुस्तके पाठः।
(२) वेदाध्ययन-इति क० पुस्तके, वेदाध्ययनं-इति च ख० पुस्तके पाठः।
(३) लब्धं तस्मै इति ख०।    (४) उपविशेत-इति ख० पुस्तके पाठः।
(५) हित तस्याऽऽचरेन्नित्य इति मुद्रितपुस्तके पाठः।
(६) अनतिक्रमेण-इति ख० पुस्तके पाठः।

तत्परिचर्यापरस्तदधीनस्तिष्ठेत्। स्वाध्यायार्थमध्ययनसिद्धये समाहितोऽविक्षिप्तचित्तो भवेत्। आहूतश्चाऽप्यधीयीत गुर्वाहूत एवाऽधीयीत न स्वयं गुरुं प्रेरयेत्। यच्च लब्धं तत्सर्वं गुरवे निवेदयेत्। तथा तस्य गुरोर्हितमाचरेत्। नित्यं सदा। मनोवाक्कायकर्मभिः न प्रतिकूलं कुर्यात्। अपिशब्दाद्गुरुदर्शने गैतमोक्तं कण्ठप्रावृतादि वर्जयेत्॥ २६॥ २७॥

( वी० मि० ) प्रसङ्गाद् गुरोरध्याप्यानाह—

कृतज्ञाद्रोहिमेधाविशुचि(१)कुल्याऽनसूयकाः॥
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः॥ २८॥

कृतज्ञः=उपकाराविस्मरणशीलः। अद्रोही=परहिंसापराङ्मुखः। मेधावी=ग्रन्थग्रहणधारणप्रवणधीमान्। कुल्यो=ज्ञातिः। अनसूयकः=असूयारहितः, परगुणाविष्करणतद्दोषानाविष्करणशील इति यावत्। साधुः=सच्चरितः। शक्तः=शुश्रूषाकरणसमर्थः। आप्तो=बन्धुरवि(२)प्रलम्भको वा। ज्ञानदो=विद्यान्तरदाता। वित्तदोऽध्ययनपणबन्धं विना गुरवेऽर्थदाता। एते धर्मतो धर्मशास्त्रानुसारेणाऽध्यापनीयाः। कुल्येत्यत्र कल्पेति क्वचित्पाठः। तत्र कल्पः=आधिव्याधिरहितः। क्वचित्कल्याणसूचकः इति पाठः। तत्र (३)कल्याणसूचकः=शुभलक्षणः।

अध्याप्याः साधुशक्ताप्ताः स्वार्थदा धर्मतस्त्विमे।

इति क्वचित्पाठः। तत्र स्वो=ज्ञातिः। अर्थदो=गुर्वर्थप्रदाता। अत्रैव मनुः—

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः।
आप्तः शक्तोऽर्थदः साधुरध्याप्या दश धर्मतः॥ २८॥

( मिता० ) अध्याप्यानाह—

कृतज्ञेति। कृतमुपकारं न विस्मरतीति कृतज्ञः। अद्रोही दयावान्। मेधावी ग्रन्थग्रहणधारणशक्तः। शुचिर्बाह्याभ्यन्तरशौचवान्। कल्प

(१) शुचिकल्पाऽनसूयकाः—इति मुद्रित पुस्तके पाठः।
(२) बन्धुरहितविप्रलम्भकः इति ख० पुस्तके पाठ.।
(३) तत्र-इति क० पुस्तके नास्ति।

आधिव्याधिरहितः । अनसूयको दोषानाविष्का(१)रेण गुणाविष्करणशीलः । साधुवृत्तवान् । शक्तः शुश्रूषायाम् । आप्तो बन्धुः । ज्ञानदो विद्याप्रदः । वित्तदोऽप(२)णपूर्वकमर्थप्रदाता । एते गुणाः समस्ता व्यस्ताश्च यथासम्भवं द्रष्टव्याः । एते च धर्मतः शास्त्रानुसारेणाऽध्याप्याः ॥ २८ ॥

( वी० मि० ) उपनीतं प्रत्याह—

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ॥

दण्डो=यष्टिश्च अजिनं=चर्म च उपवीतं यज्ञसूत्रं च तानि । मेखलां=रशनां च धारयेत् । ब्रह्मचारीति शेषः । अत्र विशेषमाह मनुः—

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥
मुञ्जाभावे तु कर्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनै(३)केन त्रिभिः पञ्चभिरेव वा ॥
कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकसूत्रिकम् ॥
ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥
केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥
ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचो नाऽग्निदूषिताः ॥

कृष्णाया इदं कार्ष्णं, कृष्णा=एणी । रुरोरिदं रौरवं, रुरुर्गौरमृगः, झपाव(४) इति प्रसिद्धः । वस्तस्येदं वास्तं, वस्तः=छागः । आनुपूर्व्येण ब्राह्मणक्षत्रियवैश्या(५)यथासङ्ख्यमित्यर्थः । एतानि चोत्तरीयाणि । तथा च स्मृतिः—

(१) नाविष्करणेन ख० । (२) पणो वेतनभाग्यबन्धस्तदादिति, अर्थपूर्वक ख० ग० ।
(३) ग्रन्थिनैकेन-इति क० पुस्तके पाठः ।
(४) एण-इति ख० पुस्तके पाठः (५) कार्ष्णम्-इति ख० पुस्तके ऽधिकम् ।

उत्तरीयं समाख्यातं वासः कृष्णाजिनं शुभम्।

पारस्करगृह्यमपि–'ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्याऽऽजं गव्यं वा वैश्यस्य'। एणी=कृष्णसारहरि(१)णी तस्या इदमैणेयम्। 'स्त्रीभ्यो ढक्' [पा० सू० ४।१।१२०] इति पाणिनिस्मृतेः।

ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु।

इति अमरसिंहः। एणस्येदमैणेयमिति भाष्यलिपिः प्रमादात्। न च 'एणः कृष्णमृगः स्मृतः' इति तद्व्याख्यायककात्यायनवचनादार्ष एवाऽयं प्रयोग इति वाच्यम्, तस्य स्त्रीप्रत्ययप्रकृत्येणशब्दव्याख्यामात्रत्वात्। आर्षत्वाश्रयणे मानाभावात्। स्मृतिः—

मेखला सप्तहस्ता स्यादजिनञ्च(२)द्विहस्तकम्।
बहिर्लोम त्र्यङ्गुलं च खण्डं वाऽथ त्रिखण्डकम्॥

चतुर्विंशाष्टषोडशाङ्गुलैः खण्डानि कारयेत्। विकल्पः शक्त्यपेक्षया कुलाचारापेक्षया वा। 'सर्वेषां रौरवाऽजिन'मिति यमोक्तं कार्ष्णाद्यसम्भवे इति। 'शाणक्षौमाविकानी'ति, शणः=स्तम्बलिः, क्षुमाऽतसी, अविर्मेषः, तदीयानि यथाक्रमं ब्राह्मणादयोऽधरीयाणि वसीरन्नित्यर्थः। 'क्षौमं शाणं वा वसनं ब्राह्मणस्य, कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य' इति गोभिलोक्तं पक्षान्तरम्। तथा 'अलाभे सर्वाणि सर्वेषाम्'। अलाभे तु मुख्यस्य, सर्वाणि क्षौमादीनि सर्वेषां ब्राह्मणादीनाम्। तत्रैव वसिष्ठः–'सर्वेषां तान्तवमरक्तम्'। गौतमः–'सर्वेषां कार्पासमविकृतम्'। कापायमप्येके इति संक्षेपः।

अथ मेखला। मौञ्जी त्रिवृदित्यादि। मौञ्जी=मुञ्जभवा, त्रिवृत्=नवगुणीकृता, श्लक्ष्णा=मसृणस्पर्शा, मूर्वा=लताविशेषः, त्वधमरु(३)रतिप्रसिद्धः। तन्निर्मिता मौर्वी, ज्या=धनुर्गुणः, तथाभूताया एव मौर्व्या मेखलायां विनियोगः। अश्मन्तकः=कुशसदृशस्तृणविशेषः। बल्वजः=सारय! इति प्रसिद्धः। त्रिवृतेत्यादि चतस्रस्तृतीयाः इत्थम्भूतलक्षणे। तेन त्रिरावृ(४)ता गुणरज्वा वर्त्तनत्रयेण त्रिसरपर्य(५)वसितेन एकेन च ग्रन्थिना त्रिभिः पञ्चभिर्वा भ्रामणैर्लक्षितेन लक्षिता मेखला कार्येत्यन्वयः। भ्रामणे प्रवरसाम्येन व्यवस्थितो विकल्पः।

---

(१) मृगी–इति ख० पुस्तके पाठः। (२) तु–इति ख० पुस्तके पाठः।
(३) त्वग्धमरुः इति प्रसिद्धः–इति ख० पुस्तके पाठः।
(४) त्रिवृत्त्या–इति ख० पुस्तके पाठः। (५) त्रिसरपर्यन्तवसितेन–इति क० पुस्तके पाठः।

अथोपवीतम् । 'कार्पासमुपवीतं स्या'दित्यादि । विप्रस्य कार्पासं, राज्ञः शणसूत्रमयं, वैश्यस्य मेषलोम(१)निर्मितमुपवीतमित्यर्थः । उपवीतस्वरूपमाह त्रिवृतनवगुणम् । 'नव वै त्रिवृदि'ति श्रुतेः । तेन नवतन्तव उपवीतमिति लभ्यते । अत एव देवलः—

यज्ञोपवीतं कुरुत(२)सूत्राणि नव तन्तवः ।

नवेति उपवीतप्रकृतिभूतसूत्रसङ्ख्याकथनम् । सूत्राणीति वेकलिपक्षौमादिसूत्रबहुत्वापेक्षया बहुवचनम्, न केवलं नवतन्तुसमुदाय एवोपवीतमित्यभिप्रेरयन्(३) विशिनष्टि—ऊर्ध्ववृतमिति । उपलक्षणमेतत् । तथा च संयोगपरिशिष्टम्—

ऊर्ध्वन्तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

अत्र टीका—वामावर्त(४)वलितं सूत्रमयं त्रिगुणीकृत्य दक्षिणावर्तवलितं च कार्यं, तेन नव तन्तवः सम्पद्यन्ते, तदेव त्रिसरमुपवीतं स्यात्तस्य च निकर्षयको ग्रन्थिरिति । एवञ्च यद्यपि कर्तक(५)सौकर्यार्थमेव तन्तुत्रयवलितं भङ्क्त्वा त्रिगुणीकृत्याऽधोमुखं वर्त्तयित्वा पुनस्त्रिगुणीकृत्योर्ध्वमुखं वर्तयति, तथाऽपि ग्रन्थिपातनानन्तरं नवसङ्ख्यासिद्धये नवगुण(६)सूत्रमुभयदिग्वलन्दन्ति । उपनयनकालीनोपवीते तु तदकरणं प्रमादादाचारानुसाराद्वेति स्मर्तव्यम् । ग्रन्थौ च त्रिपञ्चप्रवरापेक्षया त्रिपञ्चवारान् त्रितन्तुं रज्जुमावर्तयन्ति । मनुना मेखलाया तदभिधानादेकत्र निर्णीत इति न्यायादिति । तत्र त्रिभिर्दक्षिणावर्तेन तस्यौत्सर्गिकत्वात् ।

न च प्रकृतिभूततन्तूनां नवसङ्ख्यत्वे 'कार्पासमुपवीतं स्यात् षट्त्रिवृतं ब्राह्मणस्ये'ति पैठीनसिविरोधः । नवगुणस्य त्रिसरत्वे एकेन ग्रन्थिना 'तन्तुर्द्विगुणस्त्रिगुणोऽपि वे'ति देवलीयद्विगुणत्वोक्तिविरोधश्चेति वाच्यम्, 'नवानां तन्तूनामसम्भवे षट्कस्य, त्रिसरत्वासम्भवे द्विसरत्वस्याऽऽश्रयणा'(७)दिति दैर्घ्यछन्दोगपारीशिष्टे ।

---

(१) सूत्र-इति क० पुस्तके अधिक पाठः । (२) कुरुत-इति क० पुस्तके नास्ति ।
(३) इत्यभिप्रयन्-इति ख० पुस्तके पाठः ।
(४) वलित-इत्यस्य स्थाने 'वलीक' इति ख० पुस्तके पाठः ।
(५) कर्तन इति ख० पुस्तके पाठः ।
(६) सूर्य इति क० पुस्तके पाठ (७) अभावात्-इति क० पुस्तके पाठः ।

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यात् नाऽतिलम्बं न चोच्छ्रितम् ॥

वामस्कन्धे कृतं नाभिपृष्ठवंशयोर्धृतं यथा कटिपर्यन्तं प्राप्नोति तावत्परिमाणमुपवीतं धार्यं न ततो दीर्घं ह्रस्वं चेत्यर्थः ।

अथ 'कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतमानाभेर्दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽव दध्यात्, विपरीतं पितृभ्यः, कण्ठेऽवसक्तं निवीत, मधोऽवसक्तमधोवीतम्,' इति बौधायनः । कौशं पट्टं त्रसरादिनिर्मितं, आनाभेः=नाभिप्राप्तम् । निगमपरिशिष्टम्—'वामस्कन्धे यज्ञोपवीतं देवे प्राचीनावीतमितरथा (१)वामेतरस्कन्धे नाभ्या'मिति । नाभिप्राप्तमित्यर्थः । देवलः—उपवीतमधिकृत्य ।

स्तनादूर्ध्वमधोनाभेर्न कर्त्तव्यं कदाचन ।

स्कन्धे प्रवेशितं यज्ञोपवीतं यत्स्तनादूर्ध्वमवतिष्ठते नत्वधो लम्बते, यच्च नाभिमति(२)क्रम्याऽधो याति तन्न धार्यतामित्यर्थः । एषु वचनेषु नाभ्यधोगामिनो यज्ञोपवीतस्य कण्ठतोऽर्थतो (३) वा व्युदासात्कथमेवामिति चेन्न, एतेषां वचनानां माध्यान्दिनीयगोभिलीयाद्यतिरिक्तशाखाविषयत्वात् । आचारोऽपि शिष्टानां कर्मप्रदीपाऽनुसारेणैवेति नाऽधिकमत्राऽभिनिविश्यते । अत्र ब्रह्मचारिणामेकमुपवीतं स्नातकानान्तु द्वे इति नियमः । तथा हि मनुवसिष्ठौ,—

स्नातकानां हि नित्यं स्यादन्तर्वासस्तथोत्तरम् ।
द्वे चोपवीते यष्टिश्च सोदकश्च कमण्डलुः ॥

तदिदमुपवीतं प्राङ्मुख उदङ्मुखो वा परिदध्यात् दैव (४)त्वात् । अत्र यज्ञोपवीतमिति मन्त्रस्य विश्वेदेवा ऋषयस्त्रिष्टुप् छन्दो यज्ञोपवीतं देवता ग्रहणे विनियोगः इति ऋष्यादिस्मरणमपि केचिदिच्छन्ति, मन्त्रं च त्रिः पठन्ति । मन्त्रस्तु वाजसनेयिनां 'यज्ञोपवीतं परमं पवित्र' मित्यादिः । छन्दोगानां 'यज्ञोपवीतमसी'त्यादिः ।

धारणप्रकारमाह गोभिलः—'दक्षिण बाहुमुद्धृत्य शिरोवधाय सव्येंऽसे प्रतिष्ठापयति स(५) दक्षिणं कक्षमन्ववलम्बं भवत्येवं (६)प्रा·

(१) वामेतर'—इत्यारभ्य 'अधिकृत्य'- इत्यन्तस्य ग्रन्थस्य स्थाने—'पितृयज्ञे नाभ्यां देव' इति पितृमनुष्यकार्यातिरिक्तसकलवैदिककर्मोपलक्षणमित्युपाध्यायाः इति ख० पुस्तके पाठान्तरम् ।

(२) अधिकम्य—इति क० पुस्तके पाठः । (३) कण्ठतोऽर्थस्य वा—इति ख० पुस्तके पाठः ।

(४) दैवतत्वात्—इति क० पुस्तके पाठः । (५) स इति ख० पुस्तके नास्ति ।

(६) यज्ञोपवीती—इति ख० पुस्तके पाठान्तम् ।

वीनावीती भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे (१)प्रतिष्ठापयति सव्यं कक्षमन्ववलम्ब भवत्येवं प्राचीनावीती (२)भवति' । निगमपरिशिष्टम्—'द्विकण्ठावसक्तम्', कण्ठपार्श्वद्वयं लग्नम् । छन्दोगपरिशिष्टम्—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

अत्र पूर्वार्द्धेनोपवीतित्वादेः पुरुषार्थत्वमुत्तरार्द्धेन क्रत्वर्थत्वमभिप्रेतमतो नाऽन्यतरवैयर्थ्यं यद्वैदिकं कर्म न कृतम् । न फलसाधकं वैगुण्यादित्यर्थः । उपवीतिनेति सामान्यशब्देन प्राचीनावीतनिवीतयोरपि परिग्रहः, तेन श्राद्धकाले प्राचीनावीतित्वादावस्थायामपि न पुरुषार्थोपवीतित्वबाधः । न च—

'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन् निवीतं कण्ठलम्बितम्' ॥

इत्यनुशासनादुपवीतपदस्य स्कन्धविन्यासविशेषविशिष्टसूत्रसमुदायविशेषवाचकत्वात्कथमेवमिति वाच्यं, भूयः प्रयोगबलेन स्कन्धे विन्यासशून्येऽपि सूत्रसमुदायविशेषे सामान्यत एवोपवीतिपदस्य शक्तिरवधार्यात् । अत एवोपवीतदानविधयोऽपि निष्प्रत्यूहाः । अन्यथा स्कन्धविन्यासविशिष्टस्यादानाचदनुपपत्तेः । अत एव च—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृहीतान्यानि मन्त्रतः ॥

इति मनुना परिहितेऽपि सूत्रसमुदाय एवोपवीतपदप्रयोगः सङ्गच्छते । सङ्गच्छते च 'यज्ञोपवीतं परमं पवित्र'मित्यादि मन्त्रेऽपि तादृशायज्ञोपवीतपदप्रयोग । किञ्च—

ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

इत्युपवीतपदार्थव्युत्पादकछन्दोगपरिशिष्टवचनात्सामान्यशक्तिरप्रत्यूहेति ।

न चोपवीतपदस्य सूत्रसमुदायविशेषसामान्यवचनत्वे उपवी-

(१) सव्ये इति क० पुस्तके पाठ ।
(२) यज्ञोपवीती इति ख० पुस्तके पाठ ।

ताधिकरणविरोधस्तत्र 'निवीतं मनुष्याणां, प्राचीनावीतं पितृणा, मुपवीतं देवाना'मिति श्रुतिमधिकृत्य 'उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्' [ जै० ३।४।२।१० ] इति मीमांसायामुपवीतत्वादीनां परस्परभेदस्याऽतिस्फुटत्वादिति वाच्यं शक्तिभेदेनोभयोपपत्तेः। न च'अन्यायश्चाऽनेकार्थत्व'मितिजैमिनीयन्यायविरोधः विनिगमकसत्त्वे तन्न्यायावकाशात् प्रकृते च तदभावात्। प्रत्युत लाघवे सामान्यशक्तिरेवोचिता। तुष्यतु वा विशेषशक्तिमात्राङ्गीकारेण सुजनः। तथाऽपि सामान्यपुरस्कारेण छन्दोगपरिशिष्टीयपरिभाषाबलादसति बाधके सामान्यपरतैवोपवीतपदस्य स्मार्त्ते कर्मणि प्रयुज्यते। एवं च श्राद्धादिकाले वामस्कन्धे द्वयोर्दक्षिणस्कन्धे च (१)द्वयोः सूत्रसमुदायविशेषयोर्धारणस्वीकरणं मूर्खानां न श्रद्धेयं सर्वदेशीयशिष्टाचारविरोधाच्चेति। कण्टकोद्धारकृतस्तु सदेति प्रक्रम्यमाणकर्मकालपरमेव। अत एव पूर्वोत्तरार्द्धयोर्हेतुसद्भावेनाऽन्वयान्न वाक्यभेदः।

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्त्ते च कर्मणि।

इत्यादिना,

गा(२)यत्र्यां च शिखां बध्वा नैर्ऋतणां ब्रह्मरन्ध्रतः।
ज्रुटिकां च ततो बध्वा ततः कर्म समाचरेत्॥

इति ब्रह्मपुराणवचनेन चाऽङ्गत्वस्थैर्यात्। एतेन सदेत्यादिविधिरिति मूर्खतैव। विशिख इत्यादिनिन्दार्थवादस्थपुरुषार्थविधिशक्तिमेघाऽन्तर्भातीति परा(३)स्तम्। अत एव कर्माऽन्यकाले न धारणावश्यकता। परन्तूपवीतधारणम्—

सकृदुच्चारणात्तस्य प्रायश्चित्तीयते हि सः।

इति वाक्यान्तरबलात्पुरुषार्थमपीति प्राहुः।

अन्ये तु उक्तवचनमालोचयन्तो यज्ञोपवीतधारणस्याऽपि न पुरुषार्थताम्। तथासत्यभ्यङ्गादिकाले यज्ञोपवीतत्यागस्य शिखामोचनस्य च प्रामा(४)णिकैः करणाचारविरोधादिति वदन्तीत्यास्तामात्य(५)वेशः। गोभिलः—'यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव'।

(१) च–इति क० पुस्तके नास्ति।
(२) गायत्र्या–इति ख० पुस्तके पाठः।
(३)परास्तपत्रम्–इति क० पुस्तके पाठः।
(४) च–इति क० पुस्तके नास्ति।
(५) मत्याविष्टः इति ख० पुस्तके पाठः।

अत्र सूत्रमिति मुख्यः पक्षः । अरण्यादौ तदलाभे वस्त्रं चौराद्युपहतौ तस्याऽप्यभावे कुशरज्जुमिति उत्तरोत्तरमभावविधिरिति निबन्धार । निगमपरिशिष्टे-'वाससा यज्ञोपवीतानि कुर्यात्तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालप्रतिसररज्जुभिर्वा' । वालोऽत्र गोवालः ।

> कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् ।
> सदा सम्भवतो धार्यमुपवीतं द्विजातिभिः ॥

इति देवलसंवादात् । शणगोवालादिषु नवगुणत्रिसरत्वादिनियमो नाऽस्ति सूत्र एव तदुपदेशात् । अयथातादयस्तु श्रौतधर्मत्वात्तत्कार्यकारिष्वपि क्रियन्ते । गुणादयस्तु यज्ञोपवीताङ्गता एव, न तु धर्मा इति टीकाकारः । तदभावे त्रिवृता सूत्रेणेति एकस्याऽभिधानमिति न गोभिलादिविरोध इति बहव ।। कल्पतरुकृतस्तु 'यज्ञोपवीतपदमुत्तरीये गौणं तद्धर्मविन्यासविशेषप्राप्त्यर्थम्' इत्याहुः । (१)इति व्याख्याने त्रिवृत्सूत्रशब्दयोऽप्युत्तरीयप्रतिनिधय एव । तथा च कात्यायन 'तृतीयमुपवीतं वा योगपट्ट वा (२ कुशरज्जु वा सूत्र वा परिधान स्योत्तरार्द्ध चोत्तरीयं कुर्यात्' इति । हारीत —

> ब्रह्मसूत्रोपानहञ्च धृतमन्यैर्न धारयेत् ।

ब्रह्मसूत्र यज्ञोपवीतमन्यधृतं सर्वथा न धारयेदुपानद्वये तु तादृशे अप्यापदि इतनिर्णजने धार्ये । 'निर्णिक्तं चैव तान्तवम्' इति गौतमवचनादिति कल्पतरु । स्मृति —

> पिबतो मेऽम्मश्राऽन्नं (च) ? भुञ्जतोऽनुपवीतिनः ।
> प्राणायाम त्रिधा षट्क नक्तत्रययुत क्रमात् ॥

अथ दण्ड –'ब्राह्मणो बैल्वपालाशौ' इत्यादि । पीलु=गुडफल । गोभिल –'पार्णवैल्वा दण्डाः' । पार्ण =पालाशः, पालाशादय क्रमेण दण्डा ब्राह्मणादीनां प्रशस्ता इत्यर्थः । पारस्कर –'पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्योदुम्बरो वैश्यस्य सर्वे वा सर्वेषाम् , एषामलाभे सर्वेषां (३)सर्वे यज्ञिया ' ।

> धारयेद्बैल्वपालाशौ दण्डौ केशान्तिकौ द्विजः ।
> यज्ञार्हवृक्षजं वाऽथ सौम्यमव्रण एव च ॥

इति वचनात् ।

(१) एवं इति ख० पुस्तके पाठ ।   (२) वा-इति क० पुस्तके नास्ति ।
(३) सर्वे इति ख० पुस्तके नास्ति ।

एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञियाः ।

इति यमवचनाच्च । औदुम्बर इति कुलकल्पभेदेन । केशान्तिक इत्यादि । ललाटोर्ध्वकेशजन्यस्थानस्याऽन्तः केशान्तः । एवं चोर्ध्वस्थितस्य पुरुषस्य भूमितस्तत्पर्यन्तो ब्राह्मणस्य भ्रूमध्यदेशसंमितो राज्ञो नासाग्रसंमितो वैश्यस्य प्रमाणतो दण्ड इत्यर्थः । यत्तु केशान्तिकः कर्णसमीपकेशमूलपर्यन्त इति कस्यचिद्व्याख्यानं तन्न, तथा सति ब्राह्मणक्षत्रिययोस्तत्तुल्यप्रमाणत्वे पृथगुपदेशानर्थक्यापत्तेरिति ऋजव इत्यग्रादन्यत्र । 'यूपवक्राः' इति गौतमेन नाऽग्रत्यस्य विधानात् । अव्रणाः=अच्छिद्राः, सौम्यदर्शनाः=अतिस्थौल्यादिनिबन्धनभयानकत्वरहिताः, अनुद्वेगकराः=स्वरूपेणाऽभीषणा (१)इति । अक्षाऽजिनोपवीतमेखलाधारणमदृष्टार्थं, दण्डधारणन्तु अवलम्बनगोसर्पादिनिवारणादिदृष्टार्थमित्याहुः ॥

( मिता० ) दण्डादिधारणमाह—

दण्डेति । तथा स्मृत्यन्तरप्रसिद्धं पालाशादिदण्डं, अजिनं (२)कार्ष्णादि, उपवीतं कार्पासादिनिर्मितं, मेखलां च मुञ्जादिनिर्मितां ब्राह्मणादिर्ब्रह्मचारी धारयेत् ॥

( वी० मि० )

ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥

भिक्षितमन्नादिकं भिक्षा । भिक्षेत भिक्षामित्यादिप्रयोगस्य बहुशो दर्शनात् । तत्समूहो भैक्षम् । 'तस्य समूहः' (पा० सू० ४ । २ । ३७) इत्यनुवृत्तौ 'भिक्षादिभ्योऽण्' ( पा० सू० ४ । २ । ३८ ) इत्यनुशासनात् । (३)एवञ्च भैक्ष्यमिति यकारयुक्तोऽपपाठः, अणाधिकारे पुनरण्ग्रहणेन एभ्यो बाधकं बाधित्वाऽण् स्यादित्यभियुक्ताभ्यां व्याख्यानात् । अनिन्द्येष्वनभिशस्तादिषु स्वकर्मनिरतेषु (४)च ।

वेदयज्ञैन हीनानां प्रसक्तानां स्वकर्मसु ।
ब्रह्मचर्या(५)चरेद्भैक्षं गृहेभ्यः प्रय(६)तोऽन्वहम् ॥

(१) इति-इति ख० पुस्तकेऽधिकम् ।　(२) कार्ष्णाजिनादि ख० ।
(३) एवञ्च-इत्यारभ्य व्याख्यानात्-इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति ।
(४) च-इति ख० पुस्तके नास्ति ।
(५) ब्रह्मचर्यांश्चरेद्भैक्ष-इति ख० पु० पाठः ।　(६) यहितो-इति क० पु० पाठः ।

इति मनुवचनात् । तेन ब्राह्मणेष्वनिन्द्येषु भिक्षया लब्धमन्नादि ब्रह्मचारी चरेदाहरेदित्यर्थः । आत्मनो वृत्तये प्राणरक्षणाय न तु परार्थम् आचार्यादिव्यतिरेकेण ।

समाहृत्य तु तद्भैक्षं यावदर्थममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥

इति मनुनाऽऽचार्याय तन्निवेदनस्याऽभ्यनुज्ञानात् । न चाऽदृष्टार्थं तद्भैक्षं हविषा संस्तुतम् । तत्राऽऽचार्यो देवतार्थे आहवनीयार्थे च भोजयित(१)व्यः । 'यदुच्छिष्टं प्राश्नाति (२)हविरुच्छिष्टमेव तद्भवति' इत्यापस्तम्बात् । 'आचार्यस्तु यदि स्वेच्छया न भुञ्जीत तदपि तदनुज्ञया स्वयं भुञ्जीत' इत्याहुः । ब्राह्मणेष्विति सति सम्भवे नियमः । तदभावे व्यासः —

ब्राह्मणक्षत्रियविशाश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥

सार्ववर्णिकमित्यापद्विषयं, तेन सति सम्भवे ब्राह्मणेषु तदभावे स्वसमानवर्णेषु तदभावे (३)शूद्रवर्ज्यं सर्वेषु (४)आपदादिषु । सर्वेषु भिक्षेति चत्वारः पक्षाः । तथा च भविष्ये—

सर्वं वाऽपि चरे(५)द्ग्रामं पूर्वोक्तानामसम्भवे ।
अन्त्यवर्ज्यं महाबाहो । इत्याह भगवान्विभुः ॥

वाचं नियम्य प्रयतः आमिषं वाऽपि वर्जयेत् ।
चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ! ॥

शौनकः—

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥

एतच्च नित्यभिक्षायाम् । यत्तु—

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥

---

(१) भोजयितव्यम् इति क० पु० पाठ । (२) हवि-इति ख० पु० पाठ ।
(३) स्वसमानशूद्रवर्ज्यं-इति ख० पु० पाठः । (४) सर्वेषु आपदादिषु इति ख० पु० नास्ति ।
(५) भग इति ख० पु० पाठः ।

सुवर्णं रजतं शलं सा पात्रेऽस्य विनिक्षिपेत्।

इति मनुवचनं तदुपनयनाङ्गप्राथमिकभिक्षाविषयमित्यविरोधः।

(१)मनुः—

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याऽग्निं चरेद्भैक्षं यथाविधि॥ २९॥

( वी० मि० )

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता॥
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम्॥ ३०॥

ब्राह्मणादीनां ब्रह्मचारिणां भिक्षावाक्ये यथाक्रममादौ मध्ये अन्ते च स्थितेन भवच्छब्देन सम्बोध्य लिङ्गवता उपलक्षिता भैक्षचर्या कार्येत्यर्थः। तेन 'भवति भवन् वा भिक्षां देहि' इति ब्राह्मणस्य, 'भिक्षां भवति भवन् वा देहि' इति क्षत्रियस्य, 'भिक्षां देहि भवति भवन्वा' इति वैश्यस्य ब्रह्मचारिणो भिक्षावाक्यं सिद्ध्यति। अत एव हारीतः—

सप्ताक्षरां चरेद्भिक्षां क्षां च हिं च न वर्जयेत्।

'क्षां च हिं च' इत्यनेन भिक्षां देहीति पदयोरपि प्रयोगो मत इत्युक्तमिति कल्पतरुः। अतः सप्ताक्षरत्वं स्त्रियामेव सम्बोध्यायामित्यवधेयम्॥ ३०॥

( मिता० ) भैक्षचर्याप्रकारः—

ब्राह्मणेष्वित्यादि। पूर्वोक्तदण्डादियुक्तो ब्रह्मचारी ब्राह्मणेष्वनिन्द्येषु अभिशस्तादि(२)व्यतिरिक्तेषु स्वकर्मनिरतेषु भैक्षं चरेत्। आत्मवृत्तये आत्मनो जीवनाय न परार्थं आचार्यतद्भार्यापुत्रव्यतिरेकेण। निवेद्य गुरवे तदनुज्ञातो भुञ्जीत। 'तदभावे तत्पुत्रादौ' इति नियमात्। अत्र च ब्राह्मणग्रहणं सम्भवे स(३)ति नियमार्थम्। यत्तु सार्ववर्णिकं भैक्षचरणमिति तत्त्रैवर्णि(४)कविषयम्। यच्च चातुर्वर्ण्यं चरेद्भैक्षमिति तदापद्विषयम्। कथं भैक्षचर्या, आदिमध्यावसानेषु भवच्छब्दोपलक्षिता 'भवति भिक्षां देहि, भिक्षां भवति देहि, भिक्षां देहि भवति' इत्येवं वर्णक्रमेण भैक्षचर्या कार्या॥ २९॥ ३०॥

(१) मनुः—इत्यारभ्य यथाविधि—इत्यन्तं क० पुस्तके नास्ति। (२) दिदोषरहितेषु— ख०।
(३) सति न नियमार्थं० ख०। (४) त्रैवर्णिकानामर्थम् ० ख०।

( वी० मि० )

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ॥
अपोशानक्रियापूर्वं सत्कृत्याऽन्नमकुत्सयन् ॥ ३१ ॥

गुर्वनुज्ञया कृताग्निकार्यो ऽन्नं सत्कृत्याऽकुत्सयन् वाग्यतः, अपोशानक्रियापूर्वं भुञ्जीतेति योजना । तत्र गुर्वनुज्ञया त्वमिदं भुङ्क्ष्वेति विनियुङ्क्ष्वेति वाऽऽचार्यानुमत्येत्यर्थः । कृतमग्निकार्यमग्नौ समिदाधानादिकं येन स तथा । 'अत्र पुनरग्निकार्यग्रहणं प्रातःसन्ध्याकाले कथञ्चिदकृताग्निकार्यस्य कालान्तरविध्यर्थं न पुनस्तृतीयप्राप्त्यर्थम्' इति मिताक्षरायाम् । अन्ये तु वैश्वदेवैकदेशहोमोऽत्राऽग्निकार्यशब्देनाऽभिप्रेत इति वदन्तस्तत्र हविषो हुत्वा सन्तर्प्योऽग्निं समिध दत्त्वा 'यदन्न यदन्नमसी'त्युक्त्वाऽनुमन्त्रयेत् । 'त्रिः सिद्धकृतमग्निकार्यं कृत्वाऽनुज्ञातो भुञ्जीत वाग्यतः' इति पैठीनसिवचनं, 'प्रोक्षितान्नं क्षाद्ग्नौ हुत्वा भुञ्जीत' इत्यापस्तम्बवचनं च प्रमाणयन्ति । सत्कृत्य=पूजयित्वा, भूतानामुत्पत्तिस्थितिहेतुतया ध्यात्वा । अकुत्सयन्=अनिन्दन्, वाग्यतो=मौनी, अपोशानक्रिया 'ऽमृतोपस्तरणमसी'त्यनेन जलगण्डूषपानं तत्पूर्वकं यथा स्यात् । तदुक्तं भाष्ये—

आपोशानं च गृह्णीयात्सर्वतीर्थमयं च तत् ।
अमृ(१)तोपस्तरणमसीति, विष्णोरन्नमयस्य च ॥

अथ भोजनविधिः । स च 'आचारादर्शच्छन्दोगाह्निकाऽऽचारचिन्तामण्या'-द्यनुसारेणाऽत्रैव लिखनीयः । संवर्तः—

अष्टौ ग्रासा मुनेर्भक्षं षोडशाऽरण्यवासिन ।
द्वात्रिंशतं गृहस्थस्य अमितं ब्रह्मचारिणः ॥ ३१ ॥

( मिता० ) भोजनप्रकारः—

कृताग्नीति । पूर्वोक्तेन विधिना भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया कृताग्निकार्यो वाग्यतो मौनी अन्नं सत्कृत्य सम्पूज्य अकुत्सयन्ननिन्दन् अपोशानक्रियां अमृतोपस्तरणमसीत्यादिकां पूर्वं कृत्वा भुञ्जीत । अत्र पुनरग्निकार्यग्रहणं सन्ध्याकाले कथञ्चिदकृताग्निकार्यस्य काला(२)न्तरविध्यर्थं न पुनस्तृतीयप्राप्त्यर्थम् ॥ ३१ ॥

---

(१) अमृतोपस्तरमसी विष्णोरन्नमयस्य च-इति क० पुस्तके पाठः ।

(२) कालान्तर मध्याह्नादि० ।

( वी० मि० )

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ॥

ब्रह्मचर्ये स्थित आश्रितब्रह्मचर्यो ब्रह्मचारीति यावत् । एकमेकस्वामिकमन्नं अनापदि अन्नान्तरलाभसम्भवे नाऽद्यात् । एकस्मिन् दिने यदीयमन्नं भुक्तं तदव्यवहितदिने तदीयमन्नं नाऽश्नीयादित्यर्थः ।

( वी० मि० ) एतदपवदति ।

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥

ब्राह्मणग्रहणं राजश्चेद्ब्रह्मचारी तदा श्राद्धे आमन्त्रितोऽभ्यर्थितः काममेकान्नमप्यश्नीयात् मधुमांसादिवर्जनेन व्रतं ब्रह्मचारिनियममपीडयन् । ब्राह्मणग्रहणं राजन्यवैश्ययोः(१) श्राद्धे भोजनव्यावृत्त्यर्थम् । तदाह श्राद्धभोजनमुपक्रम्य मनुः—

राजन्यवैश्ययोश्चैव नैतत्कर्म प्रशस्यते ।

इति । काममित्यनेनाऽकामानुमतिर्विवक्षिता, तेनाऽभ्यर्थितस्य स्वेच्छया श्राद्धेऽप्येकान्नभोजनं व्यवच्छिन्नं तत्पर एव (२)च स्मृत्यन्तरे ब्रह्मचारिणः श्राद्धभोजननिषेध इति स्मर्तव्यम् ॥ ३२ ॥

(मिता०) ब्रह्मचर्य इति । ब्रह्मचर्ये स्थित (३)एकान्नं नाद्यादनापदि व्याध्याद्यभावे । ब्राह्मणः पुनः श्राद्धेऽभ्यर्थितः सन् (४)काममश्नीयात् । व्रतमपीडयन् मधुमांसपरिहारेण । अत्र ब्राह्मणग्रहणं क्षत्रियादेः श्राद्धभोजनव्युदासार्थम् । 'राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते' इति मनुस्मरणात् ॥ ३२ ॥

( वी० मि० ) ब्रह्मचारिणो नियमानाह--

मधुमांसाऽञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ॥
भास्करालोकनाश्लीलपरिवादांश्च (५)वर्जयेत् ॥ ३३ ॥

मधु=मद्यं क्षौद्रं च, मांसं=सर्वमेव, अञ्जनं=घृतादिना गात्रस्य, कज्जलेन वाऽक्ष्णोः, उच्छिष्टं=भुक्तशेषं, स्वस्य=गुरुव्यतिरिक्तस्य परस्याऽपि, 'उच्छिष्टमगुरोर्भोज्यम्' इति वसिष्ठवचनात् । शुक्तं=परुषं वचः, स्वभावमधुरं कालवशादम्लतां गतं दध्यादिव्यतिरिक्तं च, प्राणि-

(१) शूद्रयोः—इति ख० पुस्तके पाठः ।
(२) च—इति ख० पुस्तके नास्ति ।
(३) एकान्नमेकस्वामिकम्० ।
(४) कामं यथेष्टम्० ।
(५) परिवादादि—इति मुद्रितपुस्तके पाठः ।

एवं हिंसासामान्यलाभार्थं, भास्करस्य उद्यतोऽस्तं गच्छतश्चाऽऽलोकनं, अश्लीलं=ग्राम्यं, परिवादः=परनिन्दा। अत्र मद्वादेर्भक्ष्यतया प्रसक्तस्याऽभक्षणात्। स्त्रियाश्चाऽष्टविधमैथुननिवृत्तेरश्लीलस्याऽनभिधानादञ्जनादीनां च क्रियाणामकरणाद्वर्जनं द्रव्य गुर्वनुज्ञयेत्युक्तम् ॥ ३३ ॥

( मिता० ) मधुमांसादिवर्ज्यान्याह—

मधुमांसेत्यादि। मधु क्षौद्रं न मद्यम्। तस्य 'नित्यं मद्यं ब्राह्मणो वर्जयेत्' इति निषेधात्। मांसं छागादेरपि। मञ्जनं घृतादिना गात्रस्य, कज्जलादिना चाक्ष्णोः। उच्छिष्टमगुरोः। शुक्तं निष्ठुरवाक्यं (१)नाम्लरसः, तस्याऽभक्ष्यप्रकरणे निषेधात्। स्त्रियमुपभोगे। प्राणिहिंसनं जीववधः। (२)भास्करस्योदयास्तमयावलोकनम्*। अश्लीलमस(३)त्यभाषणम्। परिवादः सदसद्रूपस्य परदोषस्य ख्यापनम्। आदिशब्दात्स्मृत्यन्तरोक्तं गन्धमाल्यादि गृह्यते। एतानि ब्रह्मचारी वर्जयेत् ॥ ३३ ॥

( वी० मि० ) तत्र को गुरुरित्यपेक्षायां गुरुं निरूपयन्नेव प्रसङ्गादाचार्यादीनामपि निरूपयति—

स गुरुर्यः क्रियां (४)कृत्वा वेदमस्मै प्रयच्छति ॥
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ ३४ ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥

क्रियां निषेकाद्यां संस्कारहेतुभूतामुपनयनान्तां तदव्यवधानेनैव वेदाध्यापनस्य 'उपनीय वेदमध्यापयेत्'इत्यादौ विधानात्। कृत्वेत्यर्थाद्ब्रह्मचारित्वाभिमतस्यैव। वेदं सम्पूर्णैकशाखं साङ्गं सार्थं च अस्मै ब्रह्मचारिणे प्रयच्छत्युपदिशति यः स तस्य गुरुरित्यर्थः। एतच्च ब्राह्मणपरम्, इतरस्याऽध्यापनाऽनधिकारात्। तथा च वक्ष्यति। एवं च निषेकादिकामुक्तां क्रियां यथाधिकारमदोषां यो यस्य करोति स तस्य गुरुरिति साधारणमेकयोक्त्या गुरुलक्षणम्। अत एव—

---

(१) न रसादि क०। (२) भास्करस्य पर्यालोकनं क०।
(*)भास्करालोकनमुदितास्तमितादावादित्यस्यावलोकनमिति गुरुसम्प्रदायागत पाठ इति०।
(३) गुह्यभाषणं ग०। (४) क्रिया—इति मुद्रितपुस्तके पाठः।

निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चाऽन्नेन स विप्रो गुरुरुच्यते॥

इति मनौ यथाविधीति विप्र इति चोक्ताऽभिप्रायकतयैव नेयम्। अ(१)न्यथा क्षत्रियादीनां स्वपुत्रं प्रति गुरुत्वाभावप्रसङ्गादिति बहवः। वस्तुतस्तु मान्यमाननरूपब्रह्मचारिधर्मान् वक्तुं गुर्वादिमान्यस्वरूपं तत्प्रसङ्गाद् गृहस्थमान्यर्त्विक्स्वरूपं चोक्तम्। गुर्वनुज्ञयेत्यादौ च गुरुत्वमुपनेतृत्वमेवाऽऽचार्यसाधारणं प्रमीतपितृकसाधारण्येनैव विधानात्। गुरुशब्दशक्तिस्तु जनकत्वोपाधिना मातापित्रोरेव तयोरे(२)व भूयसो लोकशास्त्रयोर्गुरुशब्दप्रयोगदर्शनात्।

आचार्याः पितरो ज्येष्ठो भ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामहपितामहौ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः।
माता मातामही गुर्वी मातुलानी च सोदरा॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा॥

इत्यादावाचार्यादावपि गुरुशब्दप्रयोगस्तद्धर्ममाननीयत्वप्राप्त्यर्थको गौणः।

जनकश्चोपनेता च यश्च विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥

इत्यादौ जनकभिन्ने पितृशब्दप्रयोगवत्। भवदेवहरिनाथादिसंमतोऽप्ययमेवाऽर्थ इति तत्त्वम्। ददादिति अध्यापयतीत्यर्थः। य इति शेषः। तथा च मनुः—

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥

कल्पशब्देन व्याकरणादीनि षडङ्गान्युपलक्ष्यन्ते। वेदं सम्पूर्णम्। एकदेशं वैक(३)देशम्। यदाह मनुः—

एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥

---

(१) अन्यथा—इत्यारभ्य गुर्वादि-इत्यन्तं ख० पुस्तके नास्ति।
(२) तयोरेव—इति ख० पुस्तके नास्ति।
(३) वैकदेशम्—इति ख० पुस्तके नास्ति।

यज्ञकृत्—वृतः सन् पाकयज्ञादिकर्ता । यदाह मनुः—

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य तस्य ऋत्विगिहोच्यते ॥

(वी० मि०)

एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ ३५ ॥

एते गुर्वादयश्चत्वारः समवाये सति पूर्वपूर्वाऽनतिक्रमेणोत्तरोत्तरेऽभिवादनादिना माननीयाः । जननी तु सर्वेभ्य एव मान्यतमा । तदाह मनुरपि—

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रेण पितुर्माता गौरवेणाऽतिरिच्यते ॥

गौतमस्तु मातुराचार्यस्य च गौरवे विकल्पं मन्यते । यदाह-'आचार्यः श्रेष्ठो गुरूणाम्' । यत्तु स्मृत्यन्तरे क्वचित्पितुर्गुरुतरत्वाभिधानं तद्विक्रयादिपरमिति द्रष्टव्यम् ॥ ३४-३५ ॥

[ मिता० ] गुर्वाचार्यादिलक्षणमाह—

स इति । योऽसौ गर्भाधानाद्या उपनयनपर्यन्ताः क्रिया यथाविधि कृत्वा वेदमस्मै ब्रह्मचारिणे प्रयच्छति स गुरुः । यः पुनरुपनयनमात्रं कृत्वा वेदं [१]प्रयच्छति स आचार्यः ॥ ३४ ॥

[ मिता० ] उपाध्यायर्त्विग्लक्षणम्—

एकदेशमिति । वेदस्यैकदेशं मन्त्रब्राह्मणयोरेकं अङ्गानि वा योऽध्यापयति स उपाध्यायः । यः पुनः पाकयज्ञादिकं वृतः करोति स ऋत्विक् । एते च गुर्वाचार्योपाध्यायर्त्विजो यथापूर्वं यथाक्रमेण मान्याः पूज्याः । एभ्यः सर्वेभ्यो माता गरीयसी पूज्यतमा ॥ ३५ ॥

[ वी० मि० ] ब्रह्मचर्यकालनियममाह—

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ॥
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ ३६ ॥

प्रतिशाखं स्वगृह्योक्तब्रह्मचारिव्रतं द्वादश पञ्च वा वर्षाणि का-

(१) ददाति पा० ।

र्थम् । प्रतिवेदमित्यभिधानात्स्नानोवेदाध्ययनमायाति । तदाह मनुः—

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥

अत्र वर्षवेदयोर्विकल्पः । शक्त्यपेक्षया फलभूमा कल्पनीय इति तु केचिद्ग्रहणान्तिकामिति । यावता कालेन शाखानां शाखयोः शाखाया वा अध्ययनं सम्पद्यते तावत्कालामित्यर्थः । पुरुषबुद्धितारतम्यापेक्षयोक्तकालादधिको न्यूनो वाऽध्ययनसमाप्तिकालो व्रतावधिरित्येके-इत्यस्यार्थः ।

केशान्तो गोदानाख्यः संस्कारविशेषः । गर्भकालावधिकषोडशवर्षे कार्यः । 'गर्भादिसङ्ख्या वर्षाणा'मिति बौधायनात् । केचित्तु-जन्मावधिकमेवाऽत्र षोडशत्वं 'गर्भाष्टमे' इत्यादाविव विशेषमनभिधाय 'अष्टमे वाऽब्दे' इत्यादाविव षोडशे इति निर्विशेषितविधिना तथा स्थैर्यादित्याहुः । एतद्ब्राह्मणमात्रपरम् । तथा च मनुः—

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ३६ ॥

( मिता० ) वेदग्रहणार्थं ब्रह्मचर्यावधिमाह—

प्रतिवेदमिति । यदा विवाहासम्भवे वेदानधीत्य वेदौ वा वेदं वेति प्रवर्तते तदा प्रतिवेदं वेदं वेदं प्रति ब्रह्मचर्यं पूर्वोक्तं द्वादशवर्षाणि कार्यम् । अशक्तौ पञ्च । ग्रहणान्तिकमित्येके वर्णयन्ति । केशान्तः पुनर्गो(१)दानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कार्यम् । एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम् । इतरस्मिन् पक्षे यथासम्भवं द्रष्टव्यम् । राजन्यवैश्ययोस्तूपनयनकालवद्द्वाविंशे चतुर्विंशे वा (२)द्रष्टव्यम् ॥ ३६ ॥

( वी० मि० ) अथोक्तकालेषूपनयनासम्भवे गौणं कालमाह—

आषोडशाच्च(३)द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ॥
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥

---

(१) गावः केशा दीयन्ते खण्ड्यन्ते यस्मिन्० । (२) वा यथासम्भवं ख० ।
(३) आषोडशाद्द्वाविंशाच्चतु०- इति मुद्रितपुस्तके पाठः ।

अभिविधावयाङ् प्रत्येकं च सम्बध्यते,'छन्दसि परेऽपि' 'व्यवहिताश्च'[१।४।८१,८२]इत्यनुशासनात्। तेन षोडश ब्राह्मणस्य, द्वाविंश क्षत्रियस्य, चतुर्विंश च वैश्यस्य वर्षमभिव्याप्योपनयनस्य परो मुख्यादन्यः कालः इत्यर्थः । चकारो मिथः समुच्चये । यत्तु 'द्वादश षोडश विंशति श्चेत्यतीता विरुद्धकाला भवन्ती'ति पैठीनसिवचनं, तत्तु द्वादशवर्षाद्यतिक्रमे स्वल्पपापप्रतिपादनपरमित्यविरोधः ।

( वी० मि० ) नाऽतः परं व्रात्यस्तोमं विना गौणोऽप्युपनयनकालोऽस्तीत्याह—

अत ऊर्ध्वं पतन्त्येते सर्व(१)धर्मबहिष्कृताः ॥
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥

अत इति (२)बहुवचनान्तात्तसिल् । तेनोक्तकालस्य ऊर्ध्वमेते ब्राह्मणादयः सावित्रीतः पतिताः भ्रष्टाः सावित्र्युपदेशाऽयोग्या भवन्तीति यावत्, अतश्च पतन्ति उपपातकिनो भवन्ति, 'व्रात्यता बान्धवत्याग' इति मनावुपपातकगणनात् । अत एव च (३)द्विजातिधर्मोऽनधिकारिणो भवन्ति । यद्यप्युपपातकस्य'ऽभ्यस्तस्यैव नित्यधर्मकर्मोऽनधिकारप्रयोजकत्वं लिखितं, तथाऽपि प्रकृते वचनबलादनभ्यस्तस्याऽपि कर्मानधिकारप्रयोजकत्वं द्रष्टव्यम् । अत एव (४)च शास्त्रे तत्र तत्र व्रात्यपदवाच्याः । अत्र प्रतिप्रसवः । व्रात्यस्तोमादृते क्रतोरिति । व्रात्यस्तोमं क्रतुं व्रात्यानां प्रायश्चित्तक्रतुं तं विना । तेनोक्तकालस्य ऊर्ध्वमपि कृतव्रात्यस्तोमा उपनेया (५)एव भवन्ति, न तु व्रात्यस्तोममात्रेणोपनयनं विनाऽप्यधिकारिणो भवन्तीति ॥ ३८ ॥

( मिता० ) उपनयनकालस्य परमावधिमाह—

आषोडशादिति, अत ऊर्ध्वमिति च । आषोडशाद्वर्षात् षोडशवर्षं यावत् । आद्वाविंशादाचतुर्विंशाद्वर्षाद्ब्र(६)ह्मक्षत्रविशां औपनायनिकः उपनयनसम्बन्धी परः कालः । नाऽत परमुपनयनकालोऽस्ति । किन्तु अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः सर्वधर्मेष्वनधिका-

(१) यथाकालमसंस्कृता इति अपर पाठः । (२) एत इति ख० पुस्तके पाठः ।
(३) च इति क० पुस्तके नास्ति । (४) च इति ख० पुस्तके नास्ति ।
(५) एव इति ख० पुस्तके नास्ति । (६) ब्राह्मणक्षत्रियवैश्यानां ख० ।

रिणो भवन्ति । सावित्रीपतिताः पतितसावित्रीका भवन्ति सावित्रीदानयोग्या न भवन्ति । व्रात्याः संस्कारहीनाश्च (१)व्रात्यस्तोमात् क्रतोर्विना । कृते तु तस्मिन्नुपनयनाधिकारिणो भवन्ति ॥ ३७-३८॥

( वी० मि० ) अत्राऽऽद्यास्त्रयो द्विजा इति प्रागभिधानाद् व्रात्यस्याऽपि सति द्विजत्वे कथं द्विजातिधर्माऽनधिकार इत्यपेक्षायां न केवलं ब्राह्मण्यादिजातियोगमात्रेण द्विजत्वं, किन्तु सविधिमौञ्जीबन्धनादित्याह—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ॥
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥

द्वितीयमिति क्रियाविशेषणम् । यस्माद्ब्राह्मणादयो मातृतः प्रथमं जायन्ते द्वितीयं मौञ्जिबन्धनात्तस्मादेते द्विजाः । व्रात्यानां च मौञ्जीबन्धनाऽभावान्न द्विजत्वमिति भावः । मौञ्जीति ह्रस्वत्वमार्षमित्याहुः । अत्र मौञ्जीबन्धनजनितसंस्कारे जनिरौपचारिकः ॥ ३९ ॥

( मिता० ) आद्यास्त्रयो द्विजा इत्युक्तं तत्र हेतुमाह—

मातुरिति । मातुः सकाशात्प्रथमं जायन्ते, मौञ्जिबन्धनाच्च द्वितीयं जन्म यस्मात्तस्मादेते ब्राह्मणक्षत्रियवैश्या द्विजा उच्यन्ते ॥३९॥

( वी० मि० ) 'आहूतश्चाऽप्यधीयीते'ति प्रागुक्तस्याऽध्ययनस्य फलमाह—

यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥
वेद एव द्विजातीनां निःश्रेयसकरः (२)परः ॥ ४० ॥

यज्ञानां पाकयज्ञज्योतिष्टोमादीनां तपसां कायसन्तापनरूपाणां चान्द्रायणादीनां अन्येषाम[३]पि शुभफलानां दानाऽध्ययनादीनां कर्मणां मध्ये वेदाध्ययनमेव सर्वोत्कृष्टमभ्युदयसाधनं वैदिकसकलवृत्तिनिदानभूतवाक्यार्थबोधादिजनकत्वादित्यर्थः । अत्र स्मृत्याद्यध्य[४]यनस्य तथात्वेऽपि वेदाध्ययनमूलकत्वेन तस्मादपकर्षः ।

(१) व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः । तेन चोद्दालकव्रतादिप्रायश्चित्तान्तरमप्युपलक्ष्यते. अपरार्कः ।

(२) स्मृतः-इति ख० पुस्तके पाठः । (३) अपि-इति ख० पुस्तके नास्ति ।

(४) 'यनस्य तथात्वेऽपि वेदाध्य०'-एतावानंशः ख० पुस्तके नास्ति ।

'द्विजातीना'मित्यनेन शूद्रादीनां पुराणादिश्रवणमेव परमभ्युदयसाधनमिति सूचितम् ॥४०॥

[ मिता० ] वेदग्रहणाध्ययनफलमाह—

यज्ञानामिति । यज्ञानां श्रौतस्मार्तानां, तपसां कायसन्तापरूपाणां चान्द्रायणादीनां, शुभानां च कर्मणां उपनयनादिसंस्काराणां अवबोधकत्वेन वेद एव द्विजातीनां परो निःश्रेयस(१)करो नान्य । वेद एवेति तन्मूलकत्वेन स्मृतेरप्युपलक्षणार्थम् ॥ ४० ॥

[ वी० मि ] ब्रह्मचारिणा प्रत्यहं शक्तितो वेदादिपाठरूपो ब्रह्मयज्ञः कर्तव्य इत्यभिप्रेत्य तत्फलमाह-'नित्यं स्वाध्यायवान् द्विजः'इत्यन्तैरष्टभिः श्लोकैः—

मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ॥
पितॄन्मधुघृताभ्यां च ऋचोऽधीते (२)तु योऽन्वहम् ॥४१॥
यजूंषि शक्तितोऽधीते योऽन्वहं सघृतामृतैः ॥
प्रीणाति देवानाज्येन मधुना च पितॄँस्तथा ॥ ४२ ॥
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ॥
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥
मेदसा तर्पयेद्देवानथर्वाऽङ्गिरसः पठन् ॥
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥

यो द्विजो यथाशक्ति ऋग्यजुःसामाऽथर्वभागान् पठति स मधुपयोभ्यां सो(३)मघृताभ्यां मेदसा मेध्यपशुधातुविशेषेण यथाक्रममिन्द्रादीन् देवान् मधुघृताभ्यां च पितॄन् दिव्यान् स्वजनकादींश्चाऽन्वहं प्रतिपाठं तर्पयतीति सङ्कलितार्थः । अत्र प्रकृतपाठेन देवादीनां मध्वादीन्युपतिष्ठन्ते । मध्वादिकरणकतृप्तितुल्या तृप्तिर्वा भवतीति तात्पर्यम् । आङ्गिरसो ऽङ्गिरसा दृष्टो ऽभिचारप्रधानको ऽथर्वभाग एव । पृथङ्निर्देशस्त्वतिप्रशंसार्थः ॥ ४१, ४२, ४३, ४४ ॥

---

(१) करो मोक्षकरो ग० ।
(२) 'हि'-'च'-इति पाठश्च मुद्रितपुस्तके ।
(३) सोमघृताभ्यां इति ख० पुस्तके नास्ति ।

(वी० मि०)

वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ॥
इतिहासांस्तथा विद्यां यो(१)ऽधीते शक्तितोऽन्वहम् ॥४५॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ॥
करोति तृप्तिं च (२)तथा पितॄणां मधुसर्पिषा ॥ ४६ ॥

वाकोवाक्यं=प्रश्नोत्तररूपोपनिषद्भागः, पुराणं=प्रसिद्धम्, चकारान्मन्वादिधर्मशास्त्रं च, नाराशंस्यः=ऋग्वेदे खिलग्रन्थे पठिता 'इदं जना उपश्रुता' इत्याद्यास्तिस्रः ऋचः, गाथिकाः=इन्द्रगाथाद्याः, इतिहासाः=भारतादयः, विद्याः=वारु(३)ण्याद्याः ॥ ४५, ४६॥

(वी० मि०) देवादितृप्तेः स्वतः फलत्वाऽभावेन तत्प्रयुक्तं स्वनिष्ठं फलमाह—

ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ॥

ते=देवाद्याः। एनं=स्वतर्पयितारम्। सर्वैः=काम्यमानैः फलैस्तर्पयन्ति नन्दयन्ति।

(वी० मि०) क्रतुपाठस्य फलान्तरमाह—

यं यं क्रतुमधी(४)यीत तस्य तस्याऽऽप्नुयात् फलम् ॥४७॥

यं यं क्रतुं यद्यत्क्रतुप्रतिपादकं वेदभागं पठति तत्तत्क्रतुफलसमानं फलं लभत इत्यर्थः ॥ ४७ ॥

(वी० मि०) सामान्यतो वेदपाठस्य फलमाह—

त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ॥
तपसश्च(५) परस्येह नित्यं(६) स्वाध्यायवान् द्विजः ॥४८॥

स्वाध्यायवान् वेदपाठकर्ता। त्रिरिति दानान्वितम्। परस्योत्कृष्टस्य। नित्यमित्यनेन संव(७)लिताधिकारयोः संवलनं वाऽभिप्रैति ॥ ४८ ॥

(१) 'विद्याः शक्त्याऽधीते हि योऽन्वहम्'-इति मुद्रितपुस्तके पाठः।
(२) 'कुर्याच्च'-इति मुद्रितपुस्तके पाठः। (३) 'वारुण्याद्याः'-इति ख० पुस्तके पाठः।
(४) 'क्रतुमधीते च'-'क्रतुमधीतेऽसौ'-इति मुद्रितपुस्तके पाठद्वयम्।
(५) तपसो यत्परस्य ख०। (६) 'नित्यस्वाध्यायवान्'-इति मुद्रितपुस्तके पाठः।
(७) संवलिताधिकारमाधिकारयोः-इति ख० पुस्तके पाठः।

( मिता० ) ब्रह्मणाध्ययनफलमुक्त्वेदानीं (१)काम्यब्रह्मयज्ञाध्ययनफलमाह—

मधुनेति, यजूंषीति, स त्विति च । योऽन्वहमृचोऽधीते स मधुना पयसा च देवान् पितृंश्च मधुघृताभ्यां तर्पयति । यः पुनः शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान् पितृंश्च मधुघृताभ्यां त(२)र्पयति । यस्तु सामान्यन्वहमधीते स सोमघृतैर्देवान् पितृंश्च मधुसर्पिर्भ्यां प्रीणाति । ऋगादिग्रहणं सामान्येन ऋगादि(३)मन्त्रप्राप्त्यर्थम् ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥

मेदसेति, वाकोवाक्यमिति, मांसेति, ते इति च । यः पुनः शक्तितोऽन्वहं अथर्वाङ्गिरसोऽधीते स देवान् मेदसा पितृंश्च मधुसर्पिर्भ्यां तर्पयति । यस्तु वाकोवाक्य (४)प्रश्नोत्तररूप वेदवाक्यम् । पुराणं ब्राह्मादि । चकारान्मानवादिधर्मशास्त्रम् । नाराशंसीश्च रुद्रदैवत्यान् मन्त्रान् । गाथा यज्ञगाथेन्द्रगाथाद्याः । इतिहासान् महाभारतादीन् । विद्याश्च वारुण्याद्याः । शक्तितोऽन्वहमधीते स मांसक्षीरौदनमधुभिर्देवान् पितृंश्च मधुसर्पिर्भ्यां तर्पयति ॥ ४४ ॥ ४५ ॥ ४६ ॥

ते पुनस्तृप्ताः सन्तो देवाः पितरश्च एनं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति ।

प्रशंसार्थमाह—

यं यमिति, निर्विचेत्यादि च । यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते तस्य तस्य क्रतोः फलमवाप्नोति । तथा वित्तपूर्णाया पृथिव्याः त्रिः त्रिवारं दानस्य यत्फलं परस्य तपसश्चान्द्रायणादेर्यत्फलं तदपि नित्यस्वाध्यायवानाप्नोति । नित्यग्रहणं काम्यस्यापि सतो नित्यत्वज्ञापनार्थम् ॥ ४७ ॥ ४८ ॥

( वी० मि० ) ब्रह्मचारी द्विविधः—उपकुर्वाणको नैष्ठिकश्च । तत्र सामान्यतो धर्मानुक्त्वा नैष्ठिकस्य विशिष्य तमाह—

नैष्ठिको ब्रह्मचारी (५)च वसेदाचार्यसन्निधौ ॥
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥

---

(१) काम्यव्रत ख० ।    (२) र्पयति क० ।    (३) मन्त्राप्त्यर्थं ख० ।

(४) यथा—पृच्छामि त्वा परमन्तं पृथिव्या इति प्रश्नः, इयं वेदिः परो अन्तः इत्युत्तरम् एवमन्यत्रापि वाकोवाक्यं ज्ञेयम् ।

निष्ठा जीवनसमाप्तिस्तत्पर्यन्तं ब्रह्मचर्यसङ्कल्पः कृतो येन स नैष्ठिकः । चस्त्वर्थः । क्वचित्तथैव पाठः । वसेदिति । यावज्जीवमिति शे(१)षः । तदभावे आचार्यसन्निध्यभावे अस्य तनये आचार्यतनयसन्निधौ आचार्यतनयसन्निध्यभावे आचार्याणीसन्निधौ सर्वेषामभावे ब्रह्म(२)चर्याग्निसन्निधौ वसेन्न तु समावर्तेतेत्यर्थः । पत्नी चाऽत्राऽऽ(३)चार्यसवर्णैव 'गुरुदारे सवर्णे वा' इति मनुवचनात् ॥४९॥

( वी० मि० ) नैष्ठिकब्रह्मचर्यफलमाह—

अनेन विधिना देहं साधयन् विजितेन्द्रियः ॥
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥ ५० ॥

विशेषेण यावज्जीवं जितानि योषिदादिभ्यो निवर्त्तितानीन्द्रियाणि येन सः । अनेन पूर्वोक्तेन कृत्स्नेन विधिना प्रकारेण देहं साधयन् यावज्जीवब्रह्मचर्येणाऽवसादयन् हिरण्यगर्भलोकं प्राप्नोति । तदुत्तरं चेह संसारे न जायते मुच्यत इति यावत् ॥ ५० ॥

इति श्रीमत् याज्ञवल्क्यव्याख्याने ब्रह्मचारिप्रकरणम् ।

(मिता० ) एवं सामान्येन ब्रह्मचारिधर्मानभिधायाऽधुना नैष्ठिकस्य विशेषमाह—

नैष्ठिक इति अनेनेति च । (४)उक्तेन प्रकारेणात्मानं निष्ठां उत्क्रान्तिकालं नयतीति नैष्ठिकः । स यावज्जीवमाचार्यसमीपे वसेत् । न (५)वेदग्रहणोत्तरकालं स्वतन्त्रो भवेत् । तदभावे तत्पुत्रसमीपे तदभावे तद्भार्यासमीपे तदभावे (६)वैश्वानरेऽपि । अनेनोक्तविधिना देहं साधयन् क्षपयन् विजितेन्द्रियः इन्द्रियजये विशेषप्रयत्नवान् ब्रह्मचारी ब्रह्मलोकममृतत्वमाप्नोति । न कदाचिदिह पुनर्जायते ॥४९॥ ॥५०॥

इति ब्रह्मचारिप्रकरणम् ।



(१) तु· इति मुद्रितपुस्तके पाठः । (२) विशेषः-इति क० पुस्तके पाठः ।
(३) आचार्याग्निसन्निधौ-इति ख० पुस्तके पाठः ।
(४) यावत्-इति क० पुस्तके नास्ति । (५) अनेनोक्तप्रकारेण ख० ।
(६) ग्रहणकालोत्तरं ख० । (७) स्वोपास्याग्निसंनिधौ ख० ।

( वी० मि० ) उपकुर्वाणब्रह्मचारि(१)णोऽनन्तरकृत्यमाह—

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ॥
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥

प्रोक्ता(२)नुसारेण वेदान् वेदौ वेदं वा व्रतानि ब्रह्मचारिधर्मान् वा वेदसहितानि व्रतानि वा पारं समाप्तिं प्रापयित्वा वरमभिलषितं 'धनं क्षेत्रं हिरण्यमश्वं रत्नादि' मन्वुक्तं 'गौर्ब्राह्मणस्य, वरो ग्रामो राजन्यस्याऽश्वो वैश्यस्ये'ति कात्यायनाद्युक्तं वा गुरवे दक्षिणां दत्त्वा गुर्वनुज्ञया स्वगृह्योक्तविधिना स्नानं कुर्यात् इत्यर्थः । वरदानाशक्तौ तदनुज्ञयेति पक्षान्तरम् । तथा च गौतमः 'विद्यान्ते गुरुमर्थेन निमन्त्र्य' । 'कृत्वाऽनुज्ञां तस्य वा स्नान'मिति च । वरमित्यत्र धनमिति क्वचित्पाठः । एतेन स्नातकस्य(३) त्रैविध्यमुक्तम् । अत एव कात्यायनः—'त्रयः स्नातका भवन्ति, विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक'इति । समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः । समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः । उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातक इति । अत्र च विकल्पः शक्त्याद्यपेक्षया । वेदसमाप्तिश्चाऽर्थज्ञानपर्यन्ता । यदाह व्यासः—

न वेदपाठमात्रेण सन्तोषं कारयेद्बुधः ।
पाठमात्रावसाने तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारवाही न तस्य लभते फलम् ।
द्विजस्तथाऽर्थानभिज्ञो न वेदफलमश्नुते ॥
वेदस्याऽध्ययनं सर्वं धर्मशास्त्रस्य(४)चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्धि सः ॥

---

(१) ब्रह्मचारी-इति क० पुस्तके पाठः ।
(२) यथोक्तानुसारेण-इति ख० पुस्तके पाठः ।
(३) त्रैविध्यमित्यारभ्य विद्याव्रतस्नातकः इत्यन्तो ग्रन्थः क० पुस्तके नास्ति ।
(४) चाऽपि-इति क० पुस्तके पाठः ।

श्रुतहीनमधीतं यत्नेह नाऽमुत्र तद्भवेत् ।
श्रुतं तु केवलमपि समुद्धाराय कल्पते ॥
समन्वितं स्तोकमपि श्रुताधीतं विशिष्यते ।
पाठमात्रवतो नित्यं द्विजातींश्चाऽर्थवर्जितान् ॥
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणाऽपि नाऽर्चयेत् ।

श्रूयते च—'स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योऽर्थं, योऽर्थज्ञः स सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा'(१)इति । एतच्च स्वाध्यायविधौ प्रपञ्चितं जैमिनीयैरिति नाऽधिकं विविच्यते । अत्र च स्नानकाले स्वेच्छया गार्हस्थ्याद्याश्रयणम् । तथा च विष्णुपुराणम्—

गृहीतविद्यो गुरवे दत्त्वा तु गुरुदक्षिणाम् ।
गार्हस्थ्यमिच्छन् भूपाल ! कुर्याद्दारपरिग्रहम् ॥
गुरोः शुश्रूषणं कुर्यात्तत्पुत्रादेरथाऽपि वा ।
वैखानसो वाऽपि भवेत् परिव्राडथवेच्छया ॥

अनाश्रमी तु क्षणमपि न तिष्ठेत् ।

अनाश्रमी न तिष्ठेत क्षणमात्रमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः (२) ॥
जपे होमे तथा दाने स्वाध्याये निरतोऽपि सन् ।
नाऽसौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्यु(३)तः ॥

इति दक्षात् ।

योगी (४) च—

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिदेशिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥

तत्राऽपि व्युत्क्रमाश्र(५)माश्रयणमशास्त्रीयम् । 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्' इति देवला(६)द्व्यवस्थितम् ।

---

(१) पाप्मा—इति क० पुस्तके पाठः । (२) भार्याश्रितो यतेन्द्रियः—इति क० पु० पाठः ।
(३) च्युतिम्—इति क० पुस्तके पाठः । (४) च—इति क० पुस्तके नास्ति ।
(५) आश्रम—इति ख० पुस्तके नास्ति ।
(६) देवलाद्यथ्येवैकस्याश्रमोल्लङ्घनं लिखितविष्णुपुराणादिवलादिति व्यवस्थितम्—इति क० पुस्तकेऽधिकम् ।

( मिता० ) यः पुनर्वैवाहस्तस्य विवाहार्थं स्नानमाह—

गुरवे इति । पूर्वोक्तेन न्यायेन वेदं मन्त्रब्राह्मणात्मकम्, व्रतानि ब्रह्मचारिधर्मानतुक्रान्तान्, उभयं वा पारं नीत्वा समाप्य गुरवे पूर्वोकाय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात्। अशक्तौ तदनुज्ञया अदत्त्वरोऽपि । एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥ ५१ ॥

( वी० मि० ) तत्र यः समाप्तब्रह्मचर्यो गार्हस्थ्यमिच्छति तं प्रत्याह—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥
स्फीतादपि न सञ्चारिरोगदोषसमन्वितात् ॥ ५४ ॥

अविप्लुतमस्खलितं ब्रह्मचर्यं यस्य स तथा । अवकीर्ण्यपि चीर्णप्रायश्चित्तोऽस्खलितब्रह्मचर्यतयैव च विवक्षितः । दशान्मातृतः पञ्च पितृतश्च पञ्च पूरुषाः पुरुषा विख्याता यत्र तस्मात् 'वाहिताग्न्यादिषु' [पा०सू०२।२।३७] इति निष्ठाया परनिपातः । यद्वा दशभिः पूरुषैः विशुद्धत्वेन ख्यातात् । श्रोत्रियाणां सम्पूर्णशाखाध्यायिनां कुटुम्बबहुत्वेन महतः कुलात् । गोऽजाऽविधनधान्यैः समृद्धत्वेन स्फीतमुज्ज्वलमपि यत्सञ्चारिणः शुक्रशोणितद्वारेणाऽनुप्रवेशभाजो रोगाः कुष्ठापस्मारादयो दोषाश्च ।

हीनक्रियं निष्पुरुषं नि(१)श्छन्दोलोमशार्शसम् ।

इति मन्वाद्युक्ताः तद्युक्तं यदुत्कुलं तद्विषयात् । आहृत्येत्यध्याहार्यम् । यद्वा ल्यब्लोपे पञ्चम्या, कुले प्राप्येत्यर्थः । स्त्रियं कन्यामुद्वहेत् विवाहयेत् । अपिशब्देन ना(२)स्फीतस्य वर्जनं कैमुतिकन्यायेनाऽभिप्रैति । लक्षण्यां ।

(१) निश्छन्दो-इति ख० पुस्तके पाठः । (२) स्फीतस्य इति ख० पुस्तके पाठः ।

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंस(१)वारणगामिनीम्।
तनुलोम(२)केशदशनां मृद्वङ्गीं चारुहासिनीम्॥

इति मन्वाद्युक्तैर्बाह्यैः 'अष्टौ पिण्डान् कृत्वा' इत्याश्वलायनाद्युक्तप्रकारानुमितैरदृष्टविशेषरूपैराभ्यन्तरैश्च शुभलक्षणैर्युक्ताम्। उपलक्षणमेतत्, अशुभलक्षणहीनामित्यपि द्रष्टव्यम्। यदाह मनुः—

नोद्वहेत्कपिलां कन्यां नाऽधिकाङ्गीं न रोगिणीम्।
नाऽलोमिकां नाऽतिलोम्नीं न वाचालां न पिङ्गलाम्॥

इत्यादि। अनन्यपूर्विकां दानेनोपभागेन वा पुरुषान्तरापरिगृहीतां कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीमिति यावत्। तथा च आपस्तम्बः-'यस्यां मनश्चक्षुषोर्निर्बन्धस्तस्यामृद्धिः'। असपिण्डामिति स्वजनकसापिण्ड्यरहितामित्यर्थः। तथा च मनुः—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥

पिण्डश्चेह शरीरं तेन समान एकः पिण्डः साक्षात् परम्परया वाऽऽरम्भको येषान्ते सपिण्डाः स्ववंश्या इति यावत्। 'वान्यस्मिन् सपिण्डे०' [ पा० सू० ४। ४। १६५ ] इति निपातनात् समानस्य सभावः। यद्यप्ययं योगार्थो ऽष्टम्यादिसाधारणः, तथाऽपि वीजिनमारभ्य सप्ता(३)न्यतमत्वं प्रयोगोपाधिः। न्यायमते तु रूढ्यर्थ इति नाऽतिप्रसङ्गः।

न चैवं पितृवंश्यायाः सप्ताधिकाया विवाह्यत्वापत्तिः, सगोत्रत्वेन तन्निरासात्। एवं च मातृ(४)सपिण्डाचरणार्थमसपिण्डापदं सार्थकमिति मन्तव्यम्। अयं च सपिण्डशब्दस्यार्थः प्रकृते ग्रन्थसन्दर्भानुसारेणोक्तः। मुख्यस्तु तदर्थो निरूप्यते, तथा हि(५)सपिण्डपदस्य एकशरीरारब्धत्वं योगार्थः प्रयोगापाधिरूढ्यर्थो वा। वीजिनमारभ्य सप्तान्यतमत्वं च स्ववंश्यत्वं चेह न विवक्षितं गौरवात्। योगार्थस्य व्यावर्त्तकत्वेऽपि न शब्दार्थत्वक्षतिः पङ्कजादिपद इव तत्प्रकारकौत्सर्गिकानुभवबलात्। मातुलभागिनेयादीनां सपिण्डत्वेऽप्यशौचाऽपकर्षवचनबलात्। एवं च—

---

(१) चारण-इति क० पुस्तके पाठः। (२) भौम-इति क० पु० पाठः।
(३) सप्तान्यमत्वपा,धिः—इति ख० पु० पाठः। (४) मातृसपिण्डापदं—इति ख० पु० पाठः।
(५) तथापि—इति क० पु० पाठः।

सगोत्रे खलु सापिण्ड्यं विज्ञेयं साप्तपौरुषम् ।
विगोत्रे तत्तु सर्वत्र विज्ञेयं पाञ्चपूरुषम् ॥

इति वचनं मातृतः षष्ठ्यादिविवाहहतामात्रपरम् ।

सापिण्डता तु कन्यानां सवर्णानां त्रिपूरुषी ।

इति ब्रह्मपुराणम् । 'अप्रत्तानां कन्यानां(१)त्रिपुरुष'मिति वसिष्ठवचनं (२)त्वाशौचे शपथे च योज्यं, तेन त्रिपुरुषोर्ध्वं कन्यामरणे नाऽऽशौचं (३) भङ्गो वेत्येतावन्मात्रपरं, न तु सापिण्डतापदार्थव्युत्पादकम् ।

सापिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

इति बहुवचनविरोधात् नानार्थत्वे च गौरवात् । सपिण्डपदादुत्सर्गतः सप्तान्यतमस्यैव प्रतीतेः । एवं च—

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।
सपिण्ड(४)ता निवर्तेत सर्ववर्णेष्वयं विधिः ॥

इति शातातपवचनमर्थप्राप्तानुवादमात्रम् । पञ्चमादूर्ध्वमित्यस्याऽष्टमस्यात्रिपरत्वादिति । केचित्त्वेतद्वचनबलादेव मातृतःपञ्चान्यतमपितृतःसप्तान्यतमान्यतरत्वं प्रयोगोपाधिरूढ्यर्थं वा मन्यन्ते । अथैवमपि पत्न्याः पतिसापिण्ड्यं न स्यात्, एकबीज्यन्वयाभावादिति चेन्न, 'अस्थिभिरस्थीनि' इत्यादिश्रुति(५)बलेन पतिबीज्यन्वयात् । 'तत्सपिण्डैरपि तद्द्वारकमेव सापिण्ड्य'मिति हरिनाथोपाध्यायवाचस्पतिमिश्रादयः । वस्तुतस्तु स्ववंश्यभिन्नस्य बीज्यवयविक(६)सप्तान्यतमस्य सपिण्डपदार्थत्वे मानाभावः । न चोक्तयोगार्थसत्त्वमेव तत्र मानं, भूयः प्रयोगबलेन स्ववंश्यत्वस्यापि प्रयोगोपाधौ रूढ्यर्थे वा निवेशाऽवश्यकत्वात् ।

अथोक्तशातातपादिवचनविरोधान्न (७)वधिभेद इति चेन्मैवं, तथाऽपि विगोत्रयोः षष्ठसप्तमयोः सापिण्ड्यस्याऽनुप(८)पादनात् । न च शास्त्रे यावत्सु सपिण्डपदप्रयोगस्तावत्साधारण एव प्रयोगोपाध्यादिराद्रियताम् । अस्तु वा नानार्थतैवेति वाच्यम्, उभयथाऽपि गौरवात् ।

---

(१) कन्यानां इति ख० पुस्तके नास्ति । (२) पशौच—इति क० पु० पाठः ।
(३) कन्यामरणे चाशौच-इति क० पु० पाठः । (४) प्रवर्तेत—इति ख० पु० पाठः ।
(५) वचनेन—इति ख० पु० पाठः । (६) बीज्यवयव—इति ख० पु० पाठः ।
(७) विरोधान्न भेद—इति ख० पु० पाठः । (८) अनुपादनात्—इति ख० पु० पाठः ।

क्काचित्कप्रयोगमात्रस्य शक्त्यसाधकत्वात्। उक्तशातातपादिवचनानामशौचसङ्कोचावकाशादिमात्रपरत्वेन शक्तौ तात्पर्यभावा(१)त्। शक्तिसाधकस्य च भूयःप्रयोगस्य स्ववंश्यमात्रविषयकत्वात्।

किञ्च गोत्र(२)स्य सपिण्डत्वे 'सपिण्डास्तु सनाभयः' इत्यनुशासनविरोधः। तस्य नाभिः सप्तपुरुषावधिकं कुलत्वमानं येषान्ते सनाभयः इति प्रामाणिकनिबन्धृभिर्व्याख्यानात्। अत एव—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी।

इत्यत्र विगोत्रव्यावर्त्तकं वंशवाचि गोत्रपदं घटते। यवीयसीं वयोन्यूनां प्रमाणन्यूनां च। तथा च गर्गः—

उद्वहेद्वयसा न्यूनां न्यूनामाकारतोऽपि च।

अरोगिणीं कुष्ठापस्मारादिदीर्घरोगाननुपसृष्टां भ्रातृमतीमिति पुत्रिकाशङ्कानिरासार्थम्। यथाह मनुः—

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥

तेनाऽ(३)भ्रातृकापि पुत्रिकाशङ्काशून्या विवाह्यैव। भ्रातृपदेन पितृपुत्रः सामान्यत एव विवक्षितः, तन्मात्रेणैव पुत्रिकाशङ्कानिवृत्तेः। असमानेति। आर्षं प्रवर औवादिः, गोत्रं वत्सादि प्रसिद्धं, समानमेकं आर्षं गोत्रं यस्य स समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा तद्भिन्नामित्यर्थः। अत्र चाऽसमानार्षजामसमानगोत्रजामिति प्रत्येकं पर्युदासः। 'असमानप्रवरैर्विवाहः' इति गौतमेन 'असगोत्रा च या पितुः' इति मनुना चाऽभिधानात्। समानप्रवरता च नामतः सङ्ख्यातः समुच्चये भवति। यत्र चैकस्य द्वयोर्वाऽन्यत्वं [सङ्ख्याऽन्यत्वं (४) वा] तत्राऽप्यसमानतैव। अत्र च समानार्षगोत्रजापर्युदासस्त्रैवर्णिकपरः शूद्रस्य गोत्रादिशून्यत्वात्। यद्यपि क्षत्रियवैश्ययोरपि न गोत्रप्रवरौ, तथापि 'यजमान-

(१) तात्पर्यात्—इति क० पु० पाठः।
(२) विगोत्रस्य—इति क० पु० पाठः।
(३) तेन भ्रातृकापि—इति ख० पु० पाठः।
(४) सङ्ख्यानन्त्यं—इति ख० पुस्तके, संख्या न वृता-इति च क० पुस्तके पाठः।

स्यार्षेयान् . प्रवृणीते' इत्युक्त्वा 'पौरोहित्यान् राजविशां प्रवृणीते' इत्याश्वलायनात्पुरोहितगोत्रप्रवरयोरेव तत्र पर्युदास इति । अत्राऽसपिण्डामित्यनेन यथाव्याख्या । तेन मातृसपिण्डायाः (१)पितृसपिण्डाया अपि (२)असमानार्षजामित्यनेन स्ववंश्याया अपि समानप्रवराया विगोत्रायाः सगोत्रायाः अपि समानगोत्रजामित्यनेनाऽस्ववंश्यायाः असमानप्रवरायाः सगोत्रायाः स्ववंश्याया अपि प्रायशः समानप्रवराया अपि पर्युदासः। एकेन विशेषणेन वारितस्य(३)वारितवारकेण विशेषणे दोषाभावात् । एवं च एतद्विशेषणत्रयवत्याः · पितृबान्धवमातृबान्धवादिसुताया वारणार्थमाह पञ्चमादिति । मातृतः स्वमातृबीजितः पञ्चमादूर्ध्वं पञ्चमपर्यन्तभिन्नां पितृतः स्वबीजितः सप्तमादूर्ध्वं सप्तमपर्यन्तान्यसमुच्चयः । तेन स्वापत्यभूतायाः स्वसप्तम्या विगोत्राया अपि व्युदासः। अत्र च स्वबीजी स्ववंश्य एव विवक्षितः। तेन मातृमातामहादिपुत्र्या अपि विवाहत्वं ४)धर्मसंमतं न वि(५)रुध्येत। माता च स्वारम्भप्रयोजकत्वशोणिता बोध्या, तेन पितृमातामहपुत्र्यादेर्व्युदासः । एवं च पितृमातामहाद्यनधिकसप्तम्याः परिणयाचारोऽपि सङ्गच्छते ।

न चैवं तत्पुत्री परिणेयाऽप्यस्त्विति वाच्यं, इष्टत्वात् । अत एव पितृमातृपक्षस्तु मातृपक्षस्तु मातृपक्ष एवेति तत्पुत्र्यपि परिणेयेति प्रतिहस्तका अप्याहुः । तद्वर्जने तु शिष्टाचार एव मानम् । एवं—

पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृप ! ॥

इति विष्णुपुराणवचनम्—

उद्वहेत्पितृमात्रो(६)स्तु सप्तमी पञ्चमी च या ।

'इति मार्कण्डेयपुराणवचनं च निषेधप्रकरणान्नानात्तत्परमेवेति। हित्येतस्याहार्य्य योज्यम् । तेन प्रकृतवचनसमानार्थकतयैवाऽनयोर्गृहस्थपदं कृतसमावर्त्तनत्वे सति विवाहेच्छायत्त्वार्थकं निबन्धेषु तथाव्याख्यानादिति साम्प्रदायिकाः ।

(१) पितृसपिण्डाया—इति क० पुस्तके नास्ति ।
(२) समानार्षजामित्यसमानेन स्ववंश्याया—इति ख० पु० पाठ ।
(३) वारितस्य—इति क० पु० नास्ति । (४) सर्वसंमतं—इति ख० पु० पाठः ।
(५) विरुध्येत—इति क० पु० पाठः । (६) श्च इति ख० पु० पाठ ।

अन्ये तु विधायकमेवैतद्वचनद्वयम्, अध्याहारेणैकवाक्यत्वस्याऽतिप्रसञ्जकत्वात्। न च भोजनादिवद्विवाहस्य रागप्राप्तत्वेन विधेयत्वाभैतदिति वाच्यम्, आश्रमाङ्गत्वेन प्राप्ततया विधिसम्भवात्। न(१)च 'समानार्षेयीं कन्यां वरयेत् पञ्च मातृतः परिहरेत् सप्त पितृतस्त्रीन्मातृतः पञ्च पितृतः इति च' इति पैठीनसिवचनाविरोधः, अष्टम्याद्यलाभे वचनात्(२)। एवं च 'त्रीन्मातृतः' इत्यादि पञ्चमीसप्तम्याद्यलाभे द्रष्टव्यम्। अथवा समानजातीयापरं आसुरादिविवाहपरं वा 'त्रीन्मातृत' इत्यादि। मातृतः पञ्चम्या नियमतो वर्जनन्तु सङ्कराऽस्वीकृतिमात्रनिबन्धनमिति वदन्ति।

अत्र व्यासः—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।
जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः॥

मातृसगोत्रा मातृसमाननामधेया उपसंहारे नामकीर्तनात्। 'अक्ताः शर्कराः' इति(३)वत् 'गोत्रं तु नाम्नि च' इत्यमरकोषेण गोत्रपदस्य नाम्न्यनुशासनात् नाम्नो विज्ञानाभावात्। जन्मनः पञ्चमाभ्यन्तराज्ञानं अभावादेव। सुमन्तः—'पितृष्वसृसुतां मातुलसुतां समानार्षेयीं च विवाह्य चान्द्रायणं चरेत् परित्यज्य चैनां विभृयात्'। दाक्षिणात्यानां तु मातुलकन्यापरिणयाचारो दुराचार एव। न चाऽर्जुनादेः सुभद्रादिपरिणयाचारात्कथमेवमिति वाच्यं, एकस्या द्रौपद्याः पञ्चभिः परिणयवद्देवचरितकल्पत्वेनाऽन्यैरनादरणीयत्वात्। तथा मातृसम्बन्धादासप्तमादविवाह्याः कन्यका भवन्ति। आपञ्चमादन्येषां सर्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताः परिणीताः सङ्करकारिण्यस्तथाऽध्यापयितुरेतदेव। आसप्तमादिति मातृसपिण्डापरं लिखितमनुवचनात्।

मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः।

इति व्यासवचनात्। भ्रातरः सोदरा एव, तत्रैव भ्रातृपदशक्तेः। अत्र 'ता' इत्यनेन यदपत्यानीति नपुंसकोपस्थापितप्रत्ययमर्षस्याऽव्युत्पन्नत्वात् दुहितर एवाऽनुकृष्यन्ते, तेन तदपत्यानि भागिनेयानीति तु

(१) वा—इति ख० पु० पाठः। (२) विधा इति क० पु० पाठः।
(३) यावत्-इति ख० पु० पाठः।

दुहितृनिन्दामात्रार्थमिति । मातुलदौहित्रीपरिणये दोषाभाव इति केचित्, तन्न तदपत्यानि भागिनेयानीत्यनेन निन्दाया अप्रतीतेः, तस्मात्ता इत्यनेन कन्यात्वेन रूपेणोपस्थितानां तदपत्यानामपरामर्श (१) इति । नारदः—

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
ये च सन्तानिनः सर्वे पतिताः शूद्रसंमिताः ॥

गौतमः—'असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमात्' । बीजिनश्चेत्यत्र ऊर्ध्वं सप्तमादित्यनुषज्यते । एतच्च वाक्यान्तरस्वरसात् पितृपक्षपरम् । बीजी=स्वयंग्राहेतुबीजयोगी । परभार्यायां बीजयोजप्रक्षेपक इति केचित् । अन्यानि शुभलक्षणानि स्मृत्यन्तरेष्वनुसन्धेयानि विस्तरभयान्नेह लिखितानि । तत्राऽसमानार्षगोत्रजेत्यादिनिषेधानामदृष्टार्थानामतिक्रमे भार्यात्वमेव नोत्पद्यते भार्यापदस्य यूपाहवनीयादिपदवत्संस्कारविशेषविधि(२)द्वयवचनत्वात् । तस्य च कारणाभावनाऽनुपपत्तेः । सत्वारिरोगदोषेत्यादिदृष्टार्थनिषेधानां व्यतिक्रमे भार्यात्वमुत्पद्यत एव, किन्तु निषेधव्यतिक्रमात् प्रायश्चित्तमात्रमित्यवधेयम् ॥ ५२-५४ ॥

( मिता० ) स्नानानन्तरं किं कुर्यादित्यत आह—

अविप्लुतेत्यादि । अविप्लुतब्रह्मचर्योऽस्खलितब्रह्मचर्यः । लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि 'तनुलोमकेश(३)दशनाम्' इत्यादीनि ( ३ । १० ) मनुनोक्तानि । आभ्यन्तराणि 'अष्टौ पिण्डान् कृत्वा' इत्याद्याश्वलायनोक्तविधिना ज्ञातव्यानि । पूर्वस्यां रात्रौ गोष्ठवल्मीकफलितवस्थानह्रदेरिणक्षेत्रचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम् । तत्राऽनुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवेत् । द्वितीये स्पृष्टे पशुमती भवेत् । तृतीयेऽग्निहोत्रशुश्रूषणपरा भवति । चतुर्थे विवेकिनी चतुरा सर्वजनार्जनपरा भवति । पञ्चमे रोगिणी । षष्ठे वन्ध्या । सप्तमे व्यभिचारिणी । अष्टमे विधवा भवेदित्याश्वलायनस्मरणात् । स्त्रियं नपुंसकत्वनिवृत्तये, स्त्रीत्वेन परीक्षिताम् । अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम् । कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीम् । 'यस्यां मन-

(१) अपि परामर्श इति क- पु० पाठः । (२) विधि इति क० पुस्तके नास्ति ।
(३) केशादीति मनुनोक्तानि क० ।

अक्षुपोर्निर्बन्धस्तस्यामृद्धिः' इत्यापस्तम्बस्मरणात्। एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे। असपिण्डां समान एकः पिण्डो देहो यस्याः सा सपिण्डा ताम्। सपिण्डता च एकशरीरावयवान्वयेन भवति। तथा हि पुत्रस्य पितृशरीरावयवान्वयेन पि(१)त्रा सह। एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एवं मातृशरीरावयवान्वयेन मात्रा। तथा मातामहादिभिरपि मातृद्वारेण। तथा मातृष्वसृमातुलादिभिरप्येकशरीरावयवान्वयात्। तथा पितृव्यपितृष्वस्रादिभिरपि। तथा पत्या सह पत्न्या एकशरीरारम्भकतया। एवं भ्रातृभार्याणामपि परस्परमेकशरीरार(२)ब्धैः सहैकशरीरारम्भकत्वेन। एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः। यद्येवं मातामहादीनामपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्यविशेषेण प्राप्नोति। स्यादेतत्, यदि तत्र तत्र 'प्रत्तानामितरे कुर्युः' इत्यादिविशेषवचनं न स्यात्। अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति तत्र 'दशाहं शावमाशौचम्' इत्येतद्वचनमवतिष्ठते। अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम्। 'आत्मा हि जज्ञ आत्मनः' इत्यादिश्रुतेः। तथा 'प्रजामनु प्रजायसे' इति च। अथाऽपि 'स एवाऽयं विरूढः प्रत्यक्षेणोपलभ्यते' इत्यापस्तम्बवचनाच्च। तथा गर्भोपनिषदि—'एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानः त्वङ्मांसरुधिराणि मातृतः' इति तत्र तत्राऽवयवान्वयप्रतिपादनात्। निवा(३)प्यपिण्डान्वयेन तु सापिण्ड्येऽङ्गीक्रियमाणे मातृसन्ताने भ्रातृपु(४)त्रादिषु' च सापिण्ड्यं न स्यात्। समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहेऽवयवशक्तिस्तत्र तत्राऽवगम्यमाना परित्यक्ता स्यात्। (अ(५)सत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते, तत्रा(६)ऽन्यगतिकत्वेन समुदायः प्रसिद्ध्यति।) परम्परयैकशरीरावयवान्वयेन तु सापिण्ड्ये यथा नाऽतिप्रसङ्गस्तथा वक्ष्यामः। यवीयसीं वयसा (७)प्रमाणतश्च न्यूनां। उद्वहेत् परिणयेत् स्वगृह्योक्तविधिना ॥ ५२ ॥

---

(१) सह सापिण्ड्यं ख०। (२) एकशरीरारम्भैः क०।
(३) पिण्डनिर्वापणयुक्त्या० निर्वाप्यसपिण्डा०ख०।(४) भ्रातृपितृव्यादिषु क० भ्रातृव्यपितृव्या०ग०।
(५) क० पुस्तकेऽधिकमिदम्। (६) तथानन्यगतित्वेन क०। (७) प्रमाणेन च क०।

विशेषान्तराण्याह—

अरोगिणीमिति । अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टाम् । भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये । अनेनाऽपरिभाषिताऽपि पुत्रिका भवतीति गम्यते(१)। असमानार्षगोत्रजां ऋषेरिदमार्षं नाम प्रवर इत्यर्थः। गोत्रं वंशपरम्परा प्रसिद्धम्। आर्षं च गोत्रं च आर्षगोत्रे समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा न समानार्षगोत्रजा असमानार्षगोत्रजा ताम् । गोत्रप्रवरौ च पृथक्पृथक्पर्युदासनिमित्तम् । तेनाऽसमा(२)नार्षजामसमानगोत्रजामिति । तथा च 'असमानप्रवरैर्विवाहः' इति गौतमः। तथा 'असपिण्डा च या (३)मातुरसपिण्डा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' ॥ इति (३ । ५) मनुः । तथा मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति(४)।(५)'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव (६)त्यक्त्वा चान्द्रायणं चरेत्' ॥ इति प्रायश्चित्तस्मरणात् । अत्र चाऽसपिण्डामित्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः । तथा असगोत्रामित्यनेनाऽसपिण्डाया अपि भिन्नसन्तानजाया समानगोत्राया निषेधः। तथा असमानप्रवरामित्यनेनाऽप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः । तथा च असपिण्डामित्येतत्सार्ववर्णिकं सर्वत्र सापिण्ड्यसद्भावात् । असमानार्षगोत्रजामित्येतत्त्रैवर्णिकविषयम् । यद्यपि राजन्यविशां (७)प्रातिस्विकगोत्राभावात्प्रवराभावस्तथाऽपि पुरोहितगोत्रप्रवरौ वेदितव्यौ । तथा च 'यजमा-

---

(१) अत्र टिप्पणी—

> अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
> अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥

(२) असमानगोत्रजां असमानार्षजामित्यर्थे ख० ।  (३) असगोत्रा च ग० ग० ।

(४) अत्र क० पुस्तके 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञाने तूद्वहेदविशङ्कित' ॥ इति व्यास, इति विशेषः ।

(५)अत्र टिप्पणी—

तथा च मनुः—

> समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
> तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥

(६) गत्वा क० ।

(७) गोत्रप्रवर्तकपुरुषस्यत्वनयुक्तत्वमत्र प्रातिस्विकत्वम्० प्रातिस्विकगोत्राभावस्तथापि ख०

नस्यार्षेयान्प्रवृणीते' इत्युक्त्वा 'पौरोहित्यान् राजन्यविशां प्रवृणीते' इत्याहाऽऽश्वलायनः। सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते। रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि (१)दृष्टविरोध एव॥

असपिण्डामित्यत्रैकशरीरावयवान्वयद्वारेण साक्षात्परम्परया वा सापिण्ड्यमुक्तं, तच्च सर्वत्र सर्वस्य यथाकथञ्चिदनादौ संसारे सम्भवतीत्यतिप्रसङ्ग इत्यत आह—

पञ्चमादिति। मातृतो मातुः सन्ताने पञ्चमादूर्ध्वं पितुः सन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्तत इति शेषः। अतश्चाऽयं सपिण्डश(२)ब्दोऽवयवशक्त्या(३)सर्वत्र वर्तमानोऽपि निर्मन्थ्यपङ्कजादिशब्दवन्नियतविषय एव। तथा च पित्रादयः षट् सपिण्डाः पुत्रादयश्च षट् आत्मा च सप्तमः। सन्तानभेदेऽपि यतः सन्तानभेदस्तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयम्। (तथा च मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चम(४)सन्तानवर्तिनी मातृतः पञ्चमीत्युपचर्यते। एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसन्तानवर्तिनी पितृतः सप्तमीति। तथा च 'भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः। विवाहेऽद्व्या(५)दिभूतत्वाच्छाखाभेदोऽव(६)गण्यते'॥) यदपि वसिष्ठेनोक्तं—'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति 'त्रीनतीत्य मातृतः पञ्चाऽतीत्य च पितृतः' इति च पैठीनसिना, तदप्यर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः। एतच्च समानजातीये द्रष्टव्यम्। विजातीये तु विशेषः। यथाऽऽह शङ्खः—'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु'॥ एकस्मात् ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु भिन्नासु स्त्रीषु जाताः। पृथक् जनाः समानजातीयासु भिन्नासु स्त्रीषु जातास्ते एकपि(७)ण्डाः किन्तु पृथक्शौचाः। पृथक्शौचमाशौचप्रकरणे वक्ष्यामः। 'पिण्डस्त्वावर्तते त्रिषु' त्रिपुरुषमेव सापिण्ड्यमिति॥ ५३॥

---

(१) दृष्टदोषविरोध क०। (२) शब्दो योगेऽवयव० क०। (३) ययवशक्त्या प्रवर्त० क०।
(४) पञ्चमपुरुषवर्तिनो ग०। (५) त्र्यादि ख०। (६) नगम्यते क०।
(७) एकपिण्डाः सपिण्डाः ग०।

दशेति । पुरुषा एव पूरुषाः दशभिः पुरुषैः मातृतः पञ्चभिर्विख्यातं यत्कुलं तस्मात् । श्रोत्रियाणामधीतवेदानाम् । अध्ययनमुपलक्षणं श्रुताध्ययनसम्पन्नानाम् । महच्च तत्कुलं च महाकुलं पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्यका आहर्तव्येति नियम्यते ॥

एवं सर्वतः प्राप्तौ सत्यामपवादमाह—

स्फीतादिति । सञ्चारिणो रोगाः क्षयकुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणाऽनुप्रविशन्तो दोषाः । पुनः हीनक्रियनिःपौरुषत्वादयो मनुनोक्ताः। एतैः समन्वितात् स्फीतादपि पूर्वोक्तान्महाकुलादपि नाहर्तव्या ॥ ५४ ॥

( वी० मि० ) कन्याग्रहणे एवं नियममुक्त्वा कन्यादाने वरनियममाह—

एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ॥ ✓
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥ ५५ ॥

एतैर्गुणैः=अनन्यपूर्वकत्वयवीयस्त्वाऽभ्रातृमत्त्वव्यतिरिक्तैः सर्वैः पूर्वोक्तविशेषणैः। सवर्णोऽहीनवर्णः। श्रोत्रिय इति त्रैवर्णिकपरम् । यत्नादिति ।

यस्याऽप्सु प्लवते वीर्यं ह्रादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥

इत्यादिनारदाद्युक्तोपायेनेत्यर्थः युवाऽन वृद्धः । धीमान्=लौकिकवैदिकव्यवहारेषु निपु(१)णमतिः । जनप्रियोऽनुरक्तबहुतरजनः । अत्र युवत्वादीनि विशेषणानि प्रशंसार्थानि। पुंस्त्वे परीक्षित इत्यादीनि तु नियमार्थानीति यथायथमूह्यम् । अत्र सवर्णोऽहीनवर्ण इत्युक्तम् ॥ ५५ ॥

(मिता०) एवं कन्याग्रहणनियममुक्त्वा कन्यादाने वरनियममाह—

एतैरिति । एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति तस्याऽयमपरो विशेषः । सवर्णः उत्कृष्टो वा न हीनवर्णः । श्रोत्रियः स्वयं च श्रुताध्ययनसम्पन्नः । यत्नात्प्रयत्नेन पुंस्त्वे परीक्षितः। परीक्षोपायश्च नारदेन दर्शितः-'यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फे-

(१) निपुण -इति ख० पुस्तके पाठः ।

निलम् । पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु पण्डकः ॥ (ह्रादि(१)फेनिलमूत्रश्च गुरुशुक्रर्षभस्वरः । पुमान्स्यादन्यथा पाण्डुर्दुश्चिकित्स्यो मुखे भगः ॥ शुभवीजवति क्षेत्रे पुत्राः सन्तानवर्धनाः । निष्ठाविवाहमन्त्राणां तासां स्यात्सप्तमे पदे' ॥ ' ) इति । युवा न वृद्धः । धीमान् लौकिकवैदिकव्यवहारेषु निपुमतिः । जनप्रियः (२)स्मितपूर्वमृद्धभिभाषणादिभिरनुरक्तजनः ॥ ५५ ॥

( वी० मि० ) एवं च (३)द्विजातीनां शूद्रापरिणयप्रसक्तिमाशङ्क्याह—

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ॥
नैतन्मम मतं (४)यस्मात्तत्रात्मा जायते स्वयम् ॥ ५६ ॥

द्विजातीनां शूद्रापरिणयः ।

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाऽग्रजन्मनः ॥

इति मन्वादिभिर्यदुच्यते तन्न मम संमतमनुमतार्थकं न, यस्मात्तत्र दारेषु आत्मा उपसङ्ग्राहकस्य स्वयमेव जायते न तु परं जनयति। तथा च श्रुतिः 'तज्जायाया जायात्वं (५)भवति यदस्यां जायते पुनः' इति साम्प्रदायिकाः । परे तु जायते गर्भमाधत्त इत्यर्थः । तच्च गर्हितम् ।

आपद्यपि न कर्त्तव्या (६)शूद्रा भार्या द्विजेन तु ।
तस्यां तस्य प्रसूतस्य निःकृतिर्न विधीयते ॥

इति शङ्खवचनात् । नन्वेवं मन्वादिवचनविरोध इति चेन्न। मनुवचनस्याऽपूर्वो(७)पाधिवेदनत्वमिति सत्यामापदि तन्मात्रनिर्णयपरत्वात्। प्रकृतवचनस्य चाऽऽपद्यपि व्युत्क्रमेण शूद्राविवाहवर्जनाविषयत्वात्।

---

(१) अयं पाठः क० पुस्तकेऽधिकः ।
(२) स्मितमृदुपूर्वाभिभाषण- क० ।
(३) 'द्विजातीनां' इत्यारभ्य 'आशङ्क्याह' इत्यन्तो ग्रन्थः क० पु० नास्ति ।
(४) तस्मात्-इति ख० पुस्तके पाठः ।
(५) प्रभवति-इति क० पुस्तके पाठः ।
(६) 'शूद्रा'-इत्यत आरभ्य 'मन्वादि'-इत्यन्तो ग्रन्थः क० पुस्तके नास्ति ।
(७) वचनस्य पूर्वोपाधि इति ख० पु० पाठः ।

यदुक्तं माघे—

क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः ।
विवाह्या ब्राह्मणीं पश्चाद्विवाह्या क्वचिदेव तु ॥

क्वाचि(१)दधिवेदननिपाते । केचित्तु 'विवाहस्त्रिविधः–धर्मार्थः, प्रजार्थः,रत्यर्थश्चे'ति । तत्र गृहस्थाद्याश्रमविहिततत्तत्कर्माङ्गभूतपत्नी-सम्पादको धर्मार्थः सवर्णाविवाह एव । प्रजार्थस्तु सवर्णापुत्रा(२)सम्भवे । नित्यः काम्यश्च द्विविधोऽपि क्षत्रियवैश्यकन्ययोरपि । तत्राऽपि क्षत्रियकन्याभावे वैश्यकन्यायाः । रत्यर्थस्तु शूद्रकन्यायाः अपि ।

रत्यर्थमेव सा तस्य कामार्त्तस्य प्रकीर्त्तिता ।

इति विष्णुपुराणात् । एवं च प्रकृतवचने प्रजार्थं क्षत्रादिकन्याभ्यनुज्ञा, शूद्रायास्तु निरासः । स्मृत्यन्तराणामप्येतदनुसारेणैवाऽविरोधो द्रष्टव्य इति सर्वं चतुरस्रम् । न च शूद्रायां पारशवं पुत्रमभिधाय 'षिन्नास्वेष विधिःस्मृतः' इति ।

चतुस्त्रिद्व्येकभागानां वर्णशो ब्राह्मणात्मजाः ।

इति चाग्रे मुनिनाऽभिधानाद्विमिति वाच्यं,रत्यर्थं प्रवृत्तस्याऽऽनुषङ्गिकपुत्रोत्पत्तौ तयोः सावकाशत्वात् । एवं च—

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।

इत्यादिवचनान्यपि पुत्रोद्देश्यतदधिगमपराण्येवेत्याहुः। एत(३)च सति सम्भवेऽहीनवर्णैव परिणेयेति व्यवस्थितम् ॥ ५६ ॥

( मिता० ) रति–पुत्र–धर्मार्थत्वेन विवाहस्त्रिविधः । तत्र पुत्रार्थो द्विविधः–नित्यः काम्यश्च । तत्र नित्ये प्रजार्थे 'सवर्णः श्रोत्रियो वरः' इत्यनेन सवर्णा मुख्या दर्शिता । इदानीं काम्ये नित्यसंयोगे चाऽनुकल्पो वक्तव्य इत्यत आह—

यदिति । यदुच्यते 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः'॥ इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इति द्विजातीनां शूद्राविदनमिति । नैतद्याज्ञवल्क्यस्य मतम् । यस्मादयं द्विजातिस्तत्र स्वयं जायते । 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति-

(१) क्वचिदधिवेदननिमित्तनिपाते-इति क० पु० पाठः ।
(२) पुत्रसम्भवे-इति ख० पु० पाठः ।
(३) एत च- इति ख० पु० पाठः ।

श्रुतेः। अत्र च तत्रायं जायते स्वयमिति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये क्षत्रियस्य च वै(१)श्या भार्याऽभ्यनुज्ञाता भवति॥ ५६॥

(वी०मि०) यदा तूक्तलक्षणा सवर्णा न लभ्यते पूर्वा च(२)विनष्टाऽवश्यमविवेदनीया वाऽसामर्थ्यादिनाऽऽश्रमा(३)न्तरेऽसावधिक्रियते तदा क्षत्रियादिकन्यापरिणयप्राप्तावनुक्रमार्थमाह—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्॥
ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः॥ ५७॥

वर्णानुपूर्व्येण=वर्णानुलोम्येन तेन व्युत्क्रमेण विवाहो निषिद्धः। यथाक्रममिति ब्राह्मणस्य तिस्रः क्षत्रियस्य द्वे वैश्यस्यैकेत्यर्थः। स्वा शूद्रा। तेन सङ्करजाव्यावृत्तिः, ब्राह्मण्यादिव्यावृत्तेः सवर्ण इत्यनेनैव प्राप्तेः। शूद्रजन्मनः शूद्रजातीयजातस्य। एतेन पारशवोऽपि सङ्गृहीतः। एवं च ब्राह्मणादितः क्षत्रियादिकन्यासु जातानां स्वमा(४)तृजातीयानुत्कृष्टकन्ययैव विवाह इति सूचितम्॥ ५७॥

(मिता०) इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थामात्राभिकाङ्क्षिणः परिणयनक्रममाह—

तिस्र इति। वर्णक्रमेण ब्राह्मणस्य तिस्रो भार्याः। क्षत्रियस्य द्वे। वैश्यस्यैका। शूद्रस्य तु स्वैव भार्या भवति। सवर्णा पुनः सर्वेषां मुख्या स्थितैव। पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति। अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ। अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागसङ्कीर्तनं च, तथा 'विप्रान्मूर्धावसिक्तो हि' इत्युपक्रम्य 'विन्नास्वेष विधिः स्मृतः' इति च तद्रतिकामस्याश्रममात्राभिकाङ्क्षिणो वा (५)नान्तरीयकतयोत्पन्नस्य॥ ५७॥

(१) च-इति ख० पुस्तके नास्ति।
(२) आश्रमान्तरे-इति ख० पु० पाठः।
(३) वैश्याभ्यनुज्ञा ख०।
(४) स्वमातृ-इति ख०पु०पाठः।
(५) अन्यैर्हि रतिकामाद्यापादनैर्यदर्थत्वं, यदन्तरा नोद्देश्यमिच्छितत्त्वं वा नान्तरीयकत्वम्।

(वी०मि०) विवाहप्रभेदान् कथयन्नेव तल्लक्षणान्याह चतुर्भिः श्लोकैः—

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ॥
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥

यस्मिन् वरमाहूय तस्मै यथाशक्त्यलङ्कृता कन्या दीयते स विवाहो ब्राह्मसंज्ञः। अत्र विशेषमाह मनुः—

आच्छाद्य चार्हयित्वा च (१)श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥

बौधायनेऽपि—'श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने देयेति स ब्राह्मः'। व्यासः—

आच्छाद्याऽलङ्कृतां कन्यां त्रिः परिक्रम्य पावकम् ।
नामगोत्रे समुद्दिश्य दद्याद्ब्राह्मो विधिस्त्वयम् ॥
अद्भिर्या दीयते कन्या ब्रह्मदेयेति तां विदुः ।

शङ्खलिखितौ—'सवर्णः सवर्णाय विदितो विदिताय नग्नि(२)कां दद्यात्स ब्राह्मः'। हारीतः—'विधिवद्वस्त्रयुगं दत्त्वा सहधर्मं चर्यतामिति ब्राह्मः'। पैठीनसिः—'कन्यां सहिरण्यां दद्यादयं ब्राह्मो विवाहः'। ब्रह्मपुराणे—

अलङ्कृत्य यथाशक्त्या पूरयित्वा धनेन च ।

इति । उभयतो—मातृकुले पितृकुले च । एकविंशतिम् ।

दश पूर्वान् दशावरानात्मानं चैकविंशकम् ।

इति मनुनोक्तान् । एवं च निरुपाधिककन्यादानपूर्वकः सवर्णापरिणयो ब्राह्मो विवाह इति पर्यवस्यति । उपाधयश्च ऋत्विक्त्वद्रव्यग्रहणसम्बन्धादयः ॥ ५८ ॥

( मिता० ) विवाहानाह—

ब्राह्म इति। स ब्राह्माभिधानो विवाहः, यस्मिन्नुक्तलक्षणाय वरायाहूय यथाशक्त्यलङ्कृता कन्या दीयते उदकपूर्वकं, तस्यां जातः पुत्र उभयतः पित्रादीन्दश पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति सद्वृत्तश्चेत् ॥ ५८ ॥

यज्ञस्थायर्त्विजे दैव आदायार्षस्तु गो(३)द्वयम् ॥
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥

---

(१) श्रुति इति ख०पु०पाठः । (२) नग्निका इति क० पु० पाठः ।
(३) गोयुगम् इति क० पु० पाठः ।

(वी० मि०) ऋत्विजे यज्ञं कुर्वते । दक्षिणादानकाले ऋत्विक्कर्मकौशलजनितपारितोषे(१)पाधिना यत्र कन्या दीयते स विवाहो दैवः । तदाह बौधायनः—'दक्षिणासु दीयमानास्वन्तर्वेदि यदृत्विजे स दैवः' । हारीतोऽपि—'वेद्यन्ते गोमिथुनं दत्त्वा स दैवः' । वेद्यन्ते=वेद्या एकदेशे। गोमिथुनमत्र स्वीयमेव दात्रा वराय देयमुक्तम् । अस्य च विवाहस्य सोपाधिकत्वेन ब्राह्मान्न्यूनत्वं भेदश्च । गोमिथुनं वराद् गृहीत्वा तेनैव सह यत्र कन्यादानं स विवाह आर्षः । तथा च देवलः—

प्रदानं यत्र कन्यायाः सह गोमिथुनेन च ।
शस्ताय चाऽसगोत्राय तमार्षमृषयो विदुः ॥

'गोमिथुनं दक्षिणात्वेन वराय देय'मिति केचित् । 'कन्याधनार्थं तस्यै देय'मिति कल्पतरुः । तदर्थमेव गोमिथुनं वराद्ग्राह्यं न तु शुल्कत्वेन ।

एते विवाहाश्चत्वारो धर्म्यास्तोयप्रदापिकाः ।
अशुल्का ब्राह्मणार्षाश्च तारयन्ति द्वयोः कुलम् ॥

इति ब्राह्मादिचतुष्टयमुपक्रम्य देवलवचनात् । मनुः—

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षोऽयं धर्म उच्यते ॥

अत्र प्रथमजो दैवविवाहोत्पन्नश्चतुर्दश सप्त पूर्वान् सप्ताऽवरान् पुरु(२)षान् । उत्तरज आर्षविवाहोत्पन्नः त्रीन् पूर्वान् त्रीनवरान् पुरुषान् पुनाति आत्मानं च पुनाति । 'सहात्मने'त्यत्राऽभिधास्यमानस्याऽप्यत्राऽन्वयादिति ॥ ५९ ॥

(मिता०) दैवार्षविवाहौ—

यज्ञस्थ इति । स दैवो विवाहो यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यालङ्कृता कन्या दीयते । यत्र पुनर्गोमिथुनमादाय कन्या दीयते उदकपूर्वं स आर्षः । प्रथमजो दैवविवाहजश्चतुर्दश पुनाति सप्त वरान् सप्त परान् । उत्तरज आर्षविवाहजः षट् पुनाति त्रीन् पूर्वान् त्रीन् परान् ॥ ५९ ॥

(१) पारितोषप्रत्ययाधिना- इति प्र० पु० पाठः ।
(२) पुरुषान् इति क० पुस्तके नास्ति ।

सहो(१)भौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने ॥
स कायः पावयेत्तज्जः षट् षड् वंश्यान् सहाऽऽत्मना॥६०॥

( वी० मि० ) 'उभौ सह धर्मं चरता' मिति वाक्यमुच्चार्य नियमबन्धपूर्वकं यत्र कन्यादानं स विवाहः कायः प्राजापत्यः । ब्राह्मे च समयबन्धाभावान्नातिव्याप्तिः । तथा च देवलः—

सहधर्मक्रियाहेतोर्दानं समयबन्धनात् ।
अलङ्कृत्यैव कन्याया विवाहः स प्रजा(२)पते ॥

तज्जः प्राजापत्यविवाहजः पूर्वान् षट् अवरांश्च षट् आत्मानं चेति त्रयोदश पुरुषान् पुनातीत्यर्थः । 'षड् वंश्यांश्चे'ति केषाञ्चित्संमतः पाठस्तेषां (३)च मते त्रीन् पूर्वान् त्रीनवरानात्मानं चेति सप्त पुरुषानित्यर्थः ॥ ६० ॥

( मिता० ) प्राजापत्यविवाहलक्षणम्—

इत्येति । सह धर्मं चरतामिति परिभाष्य कन्यादानं स प्राजापत्यः । तज्जः षट् पूर्वान् षट् परान् आत्मना सहेत्येवं त्रयोदश पुनाति ॥ ६० ॥

आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ॥
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ ६१ ॥

( वी० मि० ) उक्तगोमिथुनातिरिक्तद्रवि(४)णग्रहणपूर्वकं यत्र कन्या दीयते स विवाह आसुरः । न चाऽऽर्षाऽऽसुरयोर्भेदेन धनदानं कन्यादातुश्च तद्ग्रहणमुक्तम् । तथा च कन्यायाः क्रयो विक्रयश्च पर्यवसन्नः । यदाह वसिष्ठः—'पणित्वा (५)धनक्रीती स मानुषः । तस्माद् दुहितृमते शतमधिरथं देयमिति क्रयो विज्ञायते' । 'पणित्वा पणनानुकूलव्यापारं कृत्वा स्थितस्य यत्र (६)विवाह्या कन्या धनक्रीता भवति स विवाहो मानुष आसुर इत्यर्थः । एवञ्च वसिष्ठादिवचनविरोधः । तथा हि—

(१) इत्युक्त्वा' चरतां धर्मं सह या—इति मुद्रितपुस्तके पाठः ।
(२) प्रजापति—इति ख० पु० पाठः । (३) च—इति ख० पुस्तके नास्ति ।
(४) द्रव्य—इति ख० पु० पाठः । (५) धन—इति ख० पुस्तके नास्ति ।
(६) विवाह्य—इति ख० पु० पाठः ।

क्रीता द्रव्येण या नारी न सा पत्नी विधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत्॥

आपस्तम्बः—

दानं विक्रयधर्मश्च अपत्यस्य (२)विधीयते।
न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि॥
गृह्णन् शुल्कं च लोभेन स्यान्नरो गत्यविक्रयी।
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्॥
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम्।
(३)नत्वेतद्भुमजातित्वे तत्पूर्वेष्वपि जन्मसु॥
शुल्कसंज्ञेन मूल्येन पापं दुहितृविक्रयम्।
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्॥
अल्पोऽप्ययं महान्वाऽपि तावानेव स विक्रयः।

कश्यपः—

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः।
आत्मविक्रायिणः पापा महाकिल्विषकारकाः॥
पतन्ति निरये घोरे घ्नन्ति चाऽऽसप्तमं कुलम्।

इति। अत्र कृते कन्यार्थं धनग्रहणे दोषाभावः, स्वार्थं तद्ग्रहणे च दोषो विवाहाऽनिष्पत्तिश्चेति वदन्ति। उक्तं चैतत्। तथा हि मनुः—

यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणं तत्कुमारीणामानृशंस्यं प्रयोजनम्॥

आनृशंस्यं=अनुकम्पा। आपस्तम्बोऽपि-'विवाहे दुहि(४)तृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद् दुहितृमतेऽधिरथं शतं देयं तन्मिथुनायाकुर्या'दिति। तस्यां क्रयशब्दः संस्तुतिमात्रं धर्माद्धि सम्बन्धः। काम्यं आनृशंस्यप्रयुक्तकामनाविषयः। अधिरथं शतं=रथाधिकं गोशतं। मिथुनायाकुर्यात् मिथुनीकुर्यात् पतिपत्नीभावं जनयेत्। छान्दसः प्रयोगः। गान्धर्व इति। त्वं मे पतिस्त्वं मे भार्येत्येवं कन्यावरयोः परस्परं नियमबन्धात् पित्रादिकर्तृकदा(१०)ननिरपेक्षाद्यो विवाहः

(१) न विद्यते-इति ख० पु० पाठः। (२) नन्वेतदिति पद्यं क० पुस्तके नास्ति।
(३) दुहितृमते-इत्यारभ्य, तस्मात्-इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति।
(४) दानापेक्षायो-इति ख० पु० पाठः।

स गान्धर्व इत्यर्थः । तथा च मनुः—

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो (१)मैथुन्यः कामसम्भवः ॥

संयोगः समागमः । एव च स्वयंवरोऽपि गान्धर्वविवाह एव । अत्राऽपि वैवाहिको विधिरस्ति ।

गान्धर्वादिविवाहेषु विधिर्वैवाहिको मतः ।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

इति वचनात् । अत एवोराऽनिरुद्धादेर्वैवाहिकविधिं स्मरन्ति । युद्धे बलात्कारोपलक्षणम् ।

प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ।

इति मनुवचनात् । तेन कन्यापक्षीयानभिभूय कन्याहरणं यत्र स राक्षसो विवाह इति पर्यवसितम् । कन्यकाया विवाहायाः छलनाद्यो विवाहः स पैशाचः । छलनमाह मनुः—

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचश्चाऽष्टमोऽधमः ॥

अपगच्छति आलिङ्गनादिना योजयति न तु स भुङ्क्ते, एवं क्षतयोनित्वेनाऽग्रे पाणिग्रहणजन्यसंस्काराभावापत्तेः । संस्कारश्चोक्तो बहृचपरिशिष्टे—

ब्राह्मेष्वार्षेषु दैवेषु प्राजापत्येषु याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात्परिणयः स्मृतः ॥
गान्धर्वासुरपैशाचविवाहा राक्षसश्च यः ।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥

एषां विवाहानां मध्ये कस्य वर्णस्य को धर्मः (२)कोऽधर्मः, इत्याह मनुः—

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥
पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाच आसुरश्चैव न कर्त्तव्यौ कदाचन ॥

(१) मैथुन—इति क॰ पु॰ पाठः । (२) को धर्म—इति ख॰ पु॰ पाठः ।

पृथक् पृथक् वा मिश्रौ वा विवाहौ पूर्वदेशितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

आनुपूर्व्या यथोक्तक्रमेण प्रथमान् । अवरान् इति पश्चादुक्तान् । विहितेष्वपि प्रशस्तानाह चतुर इति । 'ब्राह्मदैवार्षप्राजापत्याः ब्राह्मणस्य प्रशस्ताः यथापूर्वं तेष्वपि पूर्वः पूर्वः श्रेया'निति बौधायनात् । गान्धर्वस्तु (३)धर्माविरोधी । आसुरस्तु विहितनिषिद्धोऽतः पञ्चानामसम्भवे करणीयः । राक्षसपैशाचौ त्वतीव निषिद्धौ । क्षत्रियस्य तु राक्षसः प्रशस्तः । आर्षप्राजापत्यगान्धर्वास्तु धर्माविरोधिनः । आसुरपैशाचौ विहितनिषिद्धावापदि करणीयौ, तत्राऽप्यासुरासम्भवेऽन्त्यः पैशाचः । ब्राह्मदैवौ न सम्भवतः ।

ब्राह्मणानां सतामेष सदा धर्मो युधिष्ठिर ! ॥

इति ब्राह्मं प्रक्रम्य भारते नियमनात् । दैवस्य च ऋत्विक्त्वसापेक्षत्वात् क्षत्रियस्य तदभावादिति । वैश्यस्य त्वासुरः प्रशस्तः । आर्षप्राजापत्यगान्धर्वास्तु धर्माविरोधिनः तदभावे राक्षसः । 'गान्धर्वासुरौ राजन्यस्य राक्षसो वैश्यस्य पैशाचः शूद्रस्ये'ति पैठीनसिवचनात् । पैशाचस्त्वत्यन्तापदि ब्राह्मदैवौ त्वसम्भविनावेवेति । शूद्रस्य च राक्षसो विवाहो नास्ति । शेषं वैश्यवत् । एवेत्याखण्डलकार्थः ? ॥ ६१ ॥

( मिता० ) आसुरगान्धर्वादिविवाहलक्षणानि—

आसुर इति । आसुरः पुनर्द्रविणादानात् । गान्धर्वस्तु परस्परानुरागेण भवति । राक्षसो युद्धेनापहरणात् । पैशाचस्तु कन्यकाछलात् । छलेन छद्मना स्वापाद्यवस्थासु(४)पहरणात् ? ॥ ६१ ॥

( वी० मि० ) सवर्णादिपरिणये विशेषमाह—

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ॥
वैश्या प्रतोदमादद्यात् वेदने त्वग्रजन्मनः ॥ ६२ ॥

सवर्णासूह्यमानासु सर्ववर्णैर्विधिवत्पाणिरेव ग्राह्यः । अग्रजन्मनो वर्णोत्कृष्टस्य वेदने विवाहे क्षत्रिया वरधृतैकदेशं शरं, वैश्या तु तादृशं प्रतोदं गृह्णीयात् । तयोरेव पाणिस्थानीयत्वेन वरग्राह्यता । शूद्रापरिणयस्तु ग्रन्थकृता निषिद्ध एवेति न प्रकृते प्रदर्शितः । मनुना तु—

(३) धर्मा-इति घ० पुस्तके नास्ति । (४) यवस्थासु हरणात् क० ।

वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ।

इत्युक्तम् ॥ ६२ ॥

( मिता० ) सवर्णादिपरिणयने विशेषमाह—

पाणिरिति । सवर्णासु विवाहे स्वगृह्योक्तविधिना पाणिरेव ग्राह्यः । क्षत्रियकन्या तु शरं गृह्णीयात् । वैश्या प्रतोदमाददीत । उत्कृष्टवेदने शूद्रा पुनर्वसनस्य दशाम् । यथाह मनुः ( ३ । ४४ )-'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने' इति ॥ ६२ ॥

( वी० मि० ) कन्यादानाधिकारिक्रममाह—

पिता पितामहो भ्राता सकुल्यो जननी तथा ॥
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ॥
गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम् ॥ ६४ ॥

पूर्वनाशे पूर्वपूर्वासम्भवे प्रकृतिस्थ उन्मादपातित्यादिदोषशून्यः । अत्र पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः । 'पूर्वाभावे परः परः' इति विष्णुवचनात् । मातृत्वे सत्येऽपि मातामहस्य दानाधिकारो यद्यपि यथाश्रुत प्रतीयते तथापि व्यवहारानुसारात् सकुल्यान्तरस्य विष्णुवाक्यस्थपूर्वशब्दे प्रतिपाद्यतया मातुरभावे मातामहाधिकार इति रत्नाकरः । इत्युपनिबन्धे नारदवाक्यम्—

पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमतः पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते ।

अत्राऽपि पूर्वोक्तयुक्त्या पितृभ्रातृतुल्या एव, सर्वपदेन विवक्षिता इति स्मर्त्तव्यम् । कात्यायनः —

स्वयमेवौरसीं दद्यात्पिताऽभावे स्वबान्धवाः ।
मातामहस्ततोऽन्या तु माता वा धर्मजां सुताम् ॥

ततोऽन्यामौरसीमित्यर्थः । अत्र च मात्रा औरसी सर्वथैव न देयेति न विवक्षितम् । तथा च स एव—

अर्थप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसीमपि कन्यकाम् ॥

समये कन्यादानोचिते । अप्रयच्छन्निति कन्या(१)दानाधिकारी। तद्दानोचितसमये तामददत् । तस्या ऋतावृतौ ब्रह्मगर्भहत्याजनितपापतुल्यं पापं सम्पूर्णमाप्नोतीत्यर्थः । यत्तु—

काममारणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

इति मनुवचनं तद्गुणवद्वरासम्भवे गुणहीनाय सर्वथैव कन्या न देयेत्येतावन्मात्रपरं, न तु यथाश्रुतार्थकम्। 'वरं विषं भुङ्क्ष्व मा चाऽस्य गृहे भुङ्क्थाः' इतिवत् काममिति वचनसन्दर्भस्वरसात् ।

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः ।
न त्वेवं गुणहीनाय नोपरुध्याद्रजस्वलाम् ॥

इति यमादिनानास्मृतिविरोधाच्चेति । यदा पुनरुक्तदातृणामभावस्तदा स्वयं कन्यैव गम्यं अनपकृष्टवर्णे पातित्यादिदोषरहितं वरं भर्त्तारं कुर्यात् । एतच्च रजोदर्शनात्प्रागेवेति केचित् । परे तु जीवत्पितृकायां इव ऋतुत्रयाद्यन्तरमेव दातृहीनाया अपि स्वयंवराधिकार इत्याहुः ।
विष्णुः—

'ऋतुत्रयमतीत्यैव कन्या कुर्यात्स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥

बौधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

पित्रादीनां यत्नवतामपि केनचिन्निमित्तेन कन्यादानासम्भवे सतीदम् । विष्णुवचनन्तु यथोक्तवरसम्पत्तावप्युपेक्षादिना तदनदाने द्रष्टव्यमित्यविरोधः ।

अत्र विशेषमाह नारदः—

यदा तु नैव कश्चित्स्यात् कन्या राजानमाव्रजेत् ।
अनुज्ञया वरं तस्य परीक्ष्य वरयेत् स्वयम् ॥ ६३–६४ ॥

( मिता० ) कन्यादातृक्रममाह—

पितेति, अप्रयच्छन्निति च । एतेषां पित्रादीनां पूर्वस्य पूर्वस्याभावे परः परः कन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति ।

(१) कन्याया दानाधिकारी–इति क० पुस्तके पाठः ।

अतो यस्याऽधिकारः सोऽप्रयच्छन् भ्रूणहत्यामृतावृतावाप्नोति। एतच्चोक्तलक्षणवरसम्भवे वेदितव्यम्। यदा पुनर्दातॄणामभावस्तदा कन्यैव गम्यं गमनार्हमुक्तलक्षणं वरं स्वयमेव वरयेत् ॥ ६३ ॥ ६४ ॥

( वी० मि० ) कन्यादानाधिकारिणां समये तद्दानमिव दत्वा हरणमपि दोषावहमित्याह—

सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ॥

कन्या सकृदेव दीयते इति शास्त्रार्थः। मनुनारदबृहस्पतिकात्यायनैः—

सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥

इत्यभिधानात्। अतस्तामेकस्मै वराय दत्वा वरान्तराय तां दातुमपहरन् चौरवद्दण्ड्यः।

( मिता० ) कन्याहरणे दण्डः—

सकृदिति। सकृदेव कन्या प्रदीयत इति शास्त्रनियमः। अतस्तां दत्वा अपहरन् कन्यां चौरवद्दण्ड्यः ॥

( वी० मि० ) वाग्दानमात्रे तु कृते विशेषमाह—

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥

दत्तां दातुं प्रतिश्रुतां पूर्वाद्वरात् श्रेयान् विद्याकुलादिभिरधिकः आव्रजेत् कन्याविवाहत्वेन स्वीकुर्यात्। अत्र (१)च विशेषमाह नारदः—

ब्राह्मादिषु विवाहेषु पञ्चस्वेषु विधिः स्मृतः।
गुणापेक्षं (२)भवेद्दानमासुरादिषु च त्रिषु ॥

एष विधिर्वाग्दत्तापहाराभावविधिः, तेन गुणाधिकायाऽपि वराय दातुं ब्राह्मादिविवाहे (३)कन्या नाऽपहर्त्तव्येति कश्चित्। रत्नाकरकृतस्तु एष विधिः सकृत्कन्याप्रदानविधिरित्यर्थः। स च नाऽऽसुरराक्षसपैशाचेषु विवाहितायाः अपि गुणवद्वरलाभे पुनर्विवाहो न दोषायेत्याहुः ॥ ६५ ॥

(मिता०) एवं सर्वत्र प्रतिषेधे प्राप्तेऽपवादमाह—

दत्तामिति। यदि पूर्वस्माद्वराच्छ्रेयान्विद्याभिजनाद्यतिशययुक्तो वर आगच्छति। पूर्वस्य च पातकयोगो दुर्वृत्तत्वं वा। तदा दत्तामपि

(१) च इति क० पुस्तके नास्ति। (२) गुणापेक्षे—इति ख० पुस्तके पाठः।
(३) कन्या—इति ख० पुस्तके नास्ति।

हरेत्। एतच्च सप्तमपदात्प्राग्द्रष्टव्यम् ॥ ६५ ॥

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ॥
अदुष्टां (१)तु त्यजन् दण्ड्यो दूषयंस्तु मृषा शतम् ॥६६॥

(वी०मि०)कन्याप्रदो यदि कन्यादोषं जानन् वरेणाऽविदितमकथयित्वा तां प्रयच्छति तदा उत्तमसाहसं पणसहस्रं दण्डयः। एवमदुष्टां कन्यां परिणीय त्यजन् वरोऽपि पणसहस्रं दण्ड्यः। यस्तु वरो मृषा दोषैः अविद्यमानैरपस्मारादिभिः द्वेषादिना परिणयात्प्रागेव कन्यां दुष्टत्वेनाऽभिधत्ते स पणशतं (२)दण्ड्य इत्यर्थः। पणं च वक्ष्यति। वरस्याऽपि स्वदोषमनाख्याय विवाहे दण्डमाह नारदः—

गूह(३ यित्वाऽऽत्मनो दोषं विन्दते द्विगुणो दमः।
वरस्य दत्तनाशश्च भवेत् स्त्री च विवर्तते ॥

कात्यायनोऽपि—

वरो दोषमनाख्याय पाणिं गृह्णाति यो नरः।
याचनां वा प्रकुर्वीत तद्दत्तं नाप्नुयात्तु सः॥
कन्यादोषेऽप्ययं धर्मो दाता दण्ड्यो वरस्तथा।
दद्याद् गृहीतं दाता च न त्वेवाऽभिप्रजातयोः॥

अ(४)भिप्रजातयोः=जातापत्योः ॥६६॥

( मिता० ) अनाख्यायेति। यः पुनश्चक्षुर्ग्राह्यं दोषमनाख्याय कन्य प्रयच्छति असावुत्तमसाहसं दण्ड्यः। उत्तमसाहसं च व(५)क्ष्यते। अदुष्टां तु प्रतिगृह्य त्यजन्नुत्तमसाहसमेव दण्ड्यः। यः पुनर्विवाहात्प्रागेव द्वेषादिना असद्भिर्दोषैर्दीर्घरोगादिभिः कन्यां दूषयति स पणानां वक्ष्यमाणलक्षणानां शतं दण्ड्यः ॥ ६६ ॥

( वी० मि० ) अनन्यपूर्विकामुद्वहेदित्युक्तं, तत्राऽन्यपूर्विका कीदृशीत्यपेक्षायामाह—

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ॥
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ ६७ ॥

अनन्यपूर्विका द्विविधा पुनर्भूः स्वैरिणी चेति। तत्र पुनर्वैवाहिक-

(१) च—इति ख० पुस्तके पाठः। (२) सहस्रं—इति ख० पुस्तके पाठः।
(३) इदं पद्यं क० पुस्तके नास्ति। (४) इदं क० पुस्तके नास्ति। (५) अग्रे व्यवहाराध्याये।

विधिना संस्कृता पुनर्भूः । या तु कौमारं पतिं त्यक्त्वा सवर्णं कामतो वैवाहिकविधिं विनैव श्रयते सा स्वैरिणी । पुनर्भूरपि द्विवि(१)धा क्षता वाऽक्षता च । क्षता उपभुक्ता । एतच्चोपलक्षणम्, अविवाहिताऽपि परपुरुषोपभुक्ताऽन्यपूर्विकेत्यपि द्रष्टव्यम् । एवं च पुरुषान्तरेण परिणीता उपभुक्ता वा न परिणेये(२)ति पर्यवसितार्थः ॥ ६७ ॥

(मिता०) अनन्यपूर्विकामित्यत्रानन्यपूर्वा परिणेयोक्ता तत्राऽन्यपूर्वा कीदृशीत्याह—

अक्षतेति । अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति । पुनर्भूरपि द्विविधा क्षता चाऽक्षता च । तत्र क्षता संस्कारात्प्रागेव पुरुषसम्बन्धदूषिता । अक्षता पुनः संस्कारदूषिता । या पुनः कौमारं पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति ॥ ६७ ॥

( वी० मि० ) विवाहमैथुनयो(३)स्तुल्ययोगक्षेमत्वात् सर्वथाऽन्यपूर्विका यथा न परिणेया तथा न गम्याऽपीति सा(४)मान्यत एव प्रसक्तौ विशेषमाह—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ॥
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ ६८ ॥
आगर्भसम्भवाद्गच्छेत् पतितस्त्वन्यथा भवेत् ॥
अनेन विधिना जातः क्षेत्र(५)कस्य भवेत्सुतः ॥ ६९ ॥

अपुत्रां योग्यपुत्रहीनां स्त्रियाः पतिश्वशुरादिभिरनुज्ञातस्तस्यां पुत्रकाम्यया पुत्रोत्पादनेच्छया देवरः पत्युर्भ्राता तदभावे तत्सपिण्डस्तदभावेऽसपिण्डोऽपि सगोत्रोऽनपत्यः सवर्णः ऋतुसमये घृताभ्यक्तसर्वाङ्गो गच्छेत् । पुत्रकाम्ययेत्यनेन वन्ध्याया भोगार्थगमनं व्युदस्तम् । अत्र विशेषमाह मनुः—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥

---

(१) द्विधा—इति ख० पुस्तके पाठः ।
(२) परिणीया—इति ख० पुस्तके पाठः ।
(३) 'विवाह'—इत्यारभ्य 'परिणेया'—इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति ।
(४) सामान्यतयैव—इति ख० पुस्तके पाठः ।
(५) क्षेत्रजोऽस्य—इति मुद्रितपुस्तके पाठः ।

यमः—

ऋतौ तु तस्यां स्नातायां वाग्यतस्तामसे निशि।
स्वश्मश्रुनखरोमा(१)णां गन्धस्पर्शांश्च वेदयन्॥

विष्णुः—'नियुक्तायां सवर्णेनोत्तम(२)वर्णेन वोत्पादितः क्षेत्रजः सु(३)तः'। म(४)नुः—

यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा।
स्वधर्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः॥

विशेषमाह—आगर्भसम्भवादिति। एतेन गर्भसमये गमनं निषिद्धम्। प्रसवानन्तरन्तु जातस्य कन्यात्वाऽयोग्यत्वसद्योमरणादौ पुनर्गच्छेदेव मनावीप्सितपदस्मरणात्। ईप्सितत्वं च(५) वैदिकपुत्रकृत्यानधिकारप्रयो(६)जकरूपशून्यत्वम्, अन्यथा विध्युल्लङ्घनेन गमने। तथा च मनुः—

नियुक्तौ यौ विधिं हित्वा वर्त्तेयातां तु कामतः।
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ॥

अनेनेत्यादि। तथा चैतादृश्या अनन्यपूर्विकाया गमनेऽपि(७) न दोषः। क्षेत्रजपुत्रोत्पादनविध्यनुमतत्वादिति भावः। क्षेत्रिकस्येति प्रायोवादः। यदा तु निरपत्यो देवरादिः 'अत्र यदपत्यं भविष्यति तदावयोः समान'मिति व्यवस्थया गच्छति, तदा स पुत्रो बीजिक्षेत्रिणोरुभयोरपि भवति। तदाह मनुः—

क्रियाभ्युपगमार्थेन बीजार्थं यत्प्रदीयते।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च॥

स्यादेतत्—

नाऽन्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥

इति वचनमनेन विरुध्यत इति। अत्र समाहितं बृहस्पतिना—

उक्तो नियोगो मनुना निषिद्धः स्वयमेव च।
युगह्रासादशक्योऽसौ कर्तुमन्यैर्विधानतः॥

(१) लोमाणां—इति क० पुस्तके पाठः।
(२) सवर्णेनोत्तमेन वर्णेनोत्पादितः—इति ख० पुस्तके पाठः।
(३) सुतः—इति ख० पुस्तके नास्ति।
(४) मनुः—इति क० पुस्तके नास्ति।
(५) तु—इति ख० पुस्तके पाठः।
(६) प्रयोजकरूप—इति ख० पुस्तके नास्ति।
(७) अपि—इति ख० पुस्तके नास्ति।

तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानि(१)र्विनिर्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः ॥
इति दिक् ॥ ६८—६९ ॥

( मिता० ) एवं सर्वप्रकारेणान्यपूर्वापर्युदासे प्राप्ते विशेषमाह—

अपुत्रामिति, आगर्भेति च । अपुत्रामलब्धपुत्रां पित्रादिभिः पुत्रार्थमनुज्ञातो देवरो भर्तुः कनीयान् भ्राता सपिण्डो वा उक्तलक्षणः सगोत्रो वा । एतेषां पूर्वस्य पूर्वस्याऽभावे परः परः घृताभ्यक्तसर्वाङ्गः ऋतावेव वक्ष्यमाणलक्षणे स्यात् गच्छेत् आगर्भोत्पत्तेः । ऊर्ध्वं पुनर्गच्छन् अन्येन वा प्रकारेण तदा पतितो भवति । अनेन विधिनोत्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवेत् । एतच्च वाग्दत्ताविषयमित्याचार्यः । 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः' ॥ इति (९।६९) मनुस्मरणात् ॥६८॥६९॥

( वी० मि० ) विध्युल्लङ्घनेन परपूर्वागमने पुरुषस्येव पत्यतिरिक्तगमने स्त्रिया अपि दोष इति दर्शयितुं तस्या न्यक्कारमाह—

हृताधिकारां, मलिनां, पिण्डमात्रोपजीविनीम् ॥
परिभूतामधःशय्यां, वासयेद्व्यभिचारिणीम् ॥ ७० ॥

व्यभिचारिणीं अविधिपुरुषान्तरगामिनीं पत्नीं हृताधिकारां भृत्यभरणाद्यधिकाररहितां मलिनां अञ्जनाभ्यञ्जनशुक्लवस्त्राभरणादिशून्यां देहधारणमात्रक्षमाशनभोजनां परिभूतां धिक्कृतां क्षामाङ्गीं वा भूतलशायिनीं स्वगृह एव वासयेत् । इदं चाऽनपकृष्टे वर्णे व्यभिचारे । अन्यत्र त्वाह बृहस्पतिः—

हीनवर्णोपभुक्ता या त्याज्या वध्या च सा भवेत् ।

इदं (२)च पुनर्व्यभिचारनिवृत्त्यर्थं (३)न तु शुद्ध्यर्थम् ।

यत्पुंसः परदारे(४)षु तच्चैनां चारयेद्व्रतम् ।

इति मनुना पृथक् प्रायश्चित्तबोधनात् ॥ ७० ॥

---

(१) शक्तिहानिः प्रजायते—इति ख० पुस्तके पाठः ।
(२) तु—इति ख० पुस्तके पाठः । (३) न तु शुद्ध्यर्थम्-इति ख० पुस्तके नास्ति ।
(४) परदारेषु—इति ख० पुस्तके पाठः ।

) व्यभिचारिणीं प्रत्याह—

हृतेति। या व्यभिचरति तां हृताधिकारां भृत्यभरणाद्यधिकाररहिताम्। मलिनां अञ्जनाभ्यञ्जनशुभ्रवस्त्राभरणशून्याम्। पिण्डमात्रोपजीविनीं प्राणयात्रामात्रभोजनाम्। धिक्कारादिभिः परिभूतां भूतलशायिनीं स्ववेश्मन्येव वासयेत्। वैराग्यजननार्थं न पुनः शुद्ध्यर्थम्। 'यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्' इति पृथक्प्रायश्चित्तोपदेशात्॥ ७० ॥

( वी० मि० ) मानसादिव्यभिचारे तु स्वल्पापराधे स्त्रीणां नाऽयं प्रकार इति दर्शयितुं स्त्रीः स्तौति—

सोमः शौचं ददौ (१)तासां गन्धर्वाश्च शुभां गिरम् ॥
पावकः सर्वमेध्यत्वं मेध्या (२)वै योषितो ह्यतः ॥ ७१ ॥

सोमादिभिरवस्थाभेदेनोपभुज्य सन्तुष्टैः शौचं मधुरभाषित्वं सर्वयज्ञार्हत्वं च क्रमेण वरो दत्तः स्त्रीणामतस्ता मेध्या अल्पाशौचहेतुभिर्न च दुष्यन्तीत्यर्थः॥ ७१ ॥

( मिता० ) तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह—

सोम इति । परिणयनात्पूर्वं सोमगन्धर्ववह्नयः स्त्रीर्भु(३)क्त्वा यथाक्रमं तासां शौचमधुरवचनसर्वमेध्यत्वानि दत्तवन्तः। तस्मात्स्त्रियः सर्वत्र स्पर्शालिङ्गनादिषु मेध्याः शुद्धाः स्मृताः॥ ७१ ॥

( वी० मि० ) स्वल्पस्तु दोषो भवत्येव, स च ऋतुप्राप्तिमात्रेणैव नश्यति न तु प्रायश्चितं तत्र कार्यमित्याह—

व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ॥
गर्भभर्तृवधादौ च तथा महति पातके ॥ ७२ ॥

व्यभिचारात्, मानसादिव्यभिचारे छान्दसो विभक्तिव्यत्ययः। अत्रैव मनुः—रजसा स्त्री मनोदुष्टा।

एवं बला(४)त्कारेण परोपभुक्ताया अपि ऋतुप्राप्त्यैव शुद्धिरित्याहुः। केचित्तु शुद्धिरिति संव्यवहार्यत्वमात्रपरं, प्रायश्चित्तं त्वल्पं वर्त(५)त एव। 'मनसा भर्तुरतिचारे त्रिरात्रं यावकं

(१) ददावासां ख० ग० ददौ स्त्रीणां क०—इति मुद्रितपुस्तके पाठौ।
(२) तस्मान्मेध्या हि योषितः—इति ख० पुस्तके पाठः। (३) स्त्रियो भुक्त्वा क०।
(४) बलात्कारेणापि— इति ख० पु० पाठः। (५) वर्तत—इति ख० पुस्तके नास्ति।

क्षीरौदनं वा भुङ्क्तेऽध शयीत ऊर्ध्वं त्रिरात्रादप्सु नि(१)मज्य गायत्र्यष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायत' इति वसिष्ठ वचनादित्याहुः । अधिकापराधे तु (२)भर्त्रा वा बन्धुवर्गो वा तां न गृहे वासयेदित्याह–गर्भे इति । द्विजातिस्त्रियाः शूद्राद्गर्भे जाते त्यागो विधेयः । तदाह वसिष्ठ —

ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥

गर्भहनने भर्तृहनने च महापा(३)तके कृते स्त्रियस्त्यागः कार्यः । आदिपद शिष्यगागुरुगादिसङ्ग्रहार्थम् । तदाह वसिष्ठः—

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः प्रतिलोमजः । मनु (४)रु—

ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ॥ ७२ ॥

( मिता० ) न च तस्यास्तर्हि दोषो नास्तीत्याशङ्कनीयमित्याह–व्यभिचारादिति । अप्रकाशितात्मनो व्यभिचारात्पुरुषान्तरसम्भोगसङ्कल्पाद्यदपुण्यं तस्य ऋतौ रजोदर्शने शुद्धिः । शूद्रकृते तु गर्भे त्यागः । 'ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण सङ्गताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः' ॥ इति स्मरणात् । तथा गर्भवधे भर्तृवधे महापातके च ब्रह्महत्यादौ । आदिग्रहणाच्छिष्यादिगमने च त्यागः । 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता च या' ॥ इति व्यासस्मरणात् । प्रतिलोमजश्चर्मकारादिः । त्यागश्चोपभोगधर्मकार्ययोः, न तु निष्कासन गृहात्तस्याः । 'निरन्ध्यादेकवेश्मनि' इति नियमात् ॥७२॥

(वी०मि०)'अविप्लुतब्रह्मचर्य' इत्यादिना ब्रह्मचारिण एव विवाहाधिकारो यथाश्रुतो लभ्यते तत्रोपलक्षणत्वमभिप्रेत्य पुनर्विवाहमाह—

सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ॥
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥

---

(१) निमज्य—इति ख० पुस्तके नास्ति । (२) तु—इति क० पुस्तके नास्ति ।
(३) कृते महति पातके—इति ग० पु० पाठ । (४) च—इति ग० पुस्तके नास्ति ।

केचित्तु 'गर्भे त्यागो विधीयत' इत्युक्तमतः कथं वैराग्याभावादाश्रमान्तरानधिकारिणा स्थातव्यमनाश्रमित्वस्य निषिद्धत्वादित्याकाङ्क्षायामिमं श्लोकमवतारयन्ति।

सुरां पिबतीति सुरापी द्विजातिस्त्री। व्याधिता व्याधियुक्ता, व्याधयश्च कुष्ठादयो वैदिक(१)कर्मविरोधिनः,अपस्मारोन्मादादयश्च लौकिककर्मविरोधिनो द्रष्टव्याः। धूर्त्ता पतिवञ्चनशीला। वन्ध्या प्रसिद्धैव। अर्थघ्नी अतिव्ययादिना धननाशनशीला। अप्रियंवदा परुष(२)भाषणशीला। स्त्रीप्रसूः स्त्रीमात्रजनयित्री। तज्ज्ञानं च क्वचित् सामुद्रिकादिशास्त्रावलम्बिनिर्णयरूपमेव, क्वचिच्च भूयः स्त्रीजन(३)दर्शननिबन्धनमुत्कटकोटिकसंशयरूपमिति मन्तव्यम्। पुरुषद्वेषिणी पतिदोषशीला,पुरुषसङ्गमविमुखी वा। एताश्चाऽधिवेत्तव्याः सपत्नीयोजिताः कार्याः। अत्र विशेषमाह मनुः—

वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥

अष्टम इत्यादौ वर्ष इति पूरणीयम्।

आकाङ्क्षेताऽष्टवर्षाणि भर्त्ताऽतिप्रवां स्त्रियम्।

इत्यादिदेवलवचनात्। अतिप्रसवां उचितकालेऽप्यजातरजसम्। एतच्चाऽधिवेदननिमित्तनिश्चयार्थमिति प्रतिभाति। एवं च येष्वधिवेदननिमित्तेषु सम(४)यः श्रूयते तेषु तेषु यावता समयेन तन्निर्णयस्तावान् समयः प्रतीक्ष्य इति। इदं चाऽधिवेदननिय(५)तनिमित्तपरिगणनम्। इच्छया त्वन्यत्राऽप्यधिवेदनम्। तदाह देवलः—

एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढा(६)मपरां वहेत्॥

समर्थः सम्यगर्थः स्त्रीसन्तोषनिमित्तधनवानिति यावत्। यत्पुनरापस्तम्बेनोक्तं-'धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीताऽन्यतरापाये कुर्वीत' इति, तद्देवलोक्तातिरिक्तविषयतया नेयम्॥ ७३॥

( मिता० ) द्वितीयपरिणयने हेतूनाह—

सुरां पिबतीति सुरापि शूद्रापि। 'पतत्यर्धं शरीरस्य यस्य

(१) धर्म —इति ख० पु० पाठः। (२) परुषभाषिणी—इति ख० पु० पाठः।
(३) जननिं०-इति ख० पु० पाठः। (४) समयः श्रूयते तेषु तेषु -इति क० पुस्तके नास्ति।
(५) नियम-इति ख० पु० पाठः। (६) पूर्वोढामपि ता—इति ख० पु० पाठः।

भार्या सुरां पिबेत्' इति सामान्येन प्रतिषेधात् । व्याधिता दीर्घरोगग्रस्ता । धूर्ता विसंवादिनी । वन्ध्या निष्फला । अर्थघ्नी अर्थनाशिनी । अप्रियंवदा निष्ठुरभाषिणी । स्त्रीप्रसूः स्त्रीजननी । पुरुषद्वेषिणी सर्वत्राऽहितकारिणी । अधिवेत्तव्येति प्रत्येकम(१)भिसम्बध्यते । अधिवेदनं भार्यान्तरपरिग्रहः ॥ ७३ ॥

( वी० मि० ) अधिवेदननिमित्तदोषे सत्यप्यधिविन्नाऽवश्यं भर्तव्या, न तु तेन दोषेणाऽभावोऽपीत्याह—

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।

एनः पापम् । अन्यथाऽभरणे मनुः—

अधिविन्ना च या नारी निर्गच्छेत् दुःखिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥

तथा—

या रोगिणी स्याद् हुहिता सम्पन्ना चैव शीलतः ।
साऽनुज्ञाप्याऽधिवेत्तव्या नाऽवमान्या च कर्हिचित् ॥

किञ्चाऽधिविन्नाभरणे न केवलं पापपरीहारः, किं तु त्रिवर्गोपयुक्तायास्तस्याः पोषणे परस्परानुकूल्ये त्रिवर्गवृद्धिरपीत्याह—

यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ ७४ ॥

यत्र गृहस्थाश्रमे आनुकूल्यमैकमत्यं त्रिवर्गो धर्मार्थकामाः वर्द्धते पुनस्तद्धेतुकर्मनिष्पत्तेः । दम्पत्योः परस्परानुकूल्यस्योभयसाध्यत्वात् ॥ ७४ ॥

( मिता० ) किञ्च—

अधिविन्नेति । सा अधिविन्ना पूर्ववदेव दानमानसत्कारैर्भर्तव्या । अन्यथाऽभरणे महदपुण्यं वक्ष्यमाणो दण्डश्च । न च भरणे सति केवलमपुण्यपरिहारः । यतः—यत्र दम्पत्योरानुकूल्यं चित्तैक्यं तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिश्च ॥ ७४ ॥

( वी० मि० ) स्त्रीरपि तत्र प्रणा(२)यितुमसाधारणफलोपदर्शने-

(१) सर्वत्र सम्बध्यते क० ।
(२) प्रवर्तयितु—इति ख० पु० पाठ ।

न नियुङ्क्ते—

मृते जीवति वा पत्यौ या नाऽन्यमुपगच्छति ॥
सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥

यद्वा 'वर्णाश्रमेतराणा'मिति सामान्येनोपक्रमात् स्त्रीणाम(१)पि धर्मस्य वक्तव्यत्वात्तमाह 'मृत' इत्यादीत्यवतारिका। एवमन्यत्राऽप्यूह्यमिति। वाशब्दः समुच्चये। अन्यं पतिमुपपतिमित्यत्रेवोपगच्छतीति प्रकृतेऽप्युपशब्दो निन्दातात्पर्यकस्तेनाऽविधिगमनव्युदासात् क्षेत्रजोत्पादनार्थं पत्यन्यगमनमभ्यनुज्ञातमिति मन्तव्यम्। इह लोके उमया भवान्या सह मोदते हृष्यति क्रीडति वाऽर्थादमुत्र यद्यपि पत्यव्यभिचारो नित्य एव तथाऽप्यानुषाङ्गिकं फल(२)मिदम्। केचित्तु नोपगच्छति कायवाङ्मनोभिः, एवं च सतीफलमिदमित्याहुः ॥ ७५ ॥

( मिता० ) स्त्रियं प्रत्याह—

मृत इति। भर्तरि जीवति मृते वा या चापल्यादन्यं पुरुषं(३)नोपगच्छति सेह लोके विपुलां कीर्तिमवाप्नोति। उमया च सह क्रीडति पुण्यप्रभावात् ॥ ७५ ॥

( वी० मि० ) शास्त्रीयाऽधिवेदननिमित्ताभावे स्त्रियमधिविन्दन् शास्त्रीयत्यागनिमित्ताभावे त्यजन् वा दोषभागित्याह—

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ॥
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियः ॥ ७६ ॥

( वी० मि० ) आज्ञेति आदिष्टार्थकरणशीलामित्यर्थः। अनेनाऽधिवेदननिमित्तत्वेनोक्तस्य धूर्तत्वस्याऽभाव उक्तः। दक्षां गृहकृत्यादिसमर्थाम्। अनेन व्याधितत्वस्याऽभावो दर्शितः। वीरसूं पुत्रवतीम्। अनेन वन्ध्यात्वस्य स्त्रीप्रसूतस्य चाऽभावोऽभिप्रेतः। प्रियवादिनीं मधुरभाषणशीलाम्। अनेन 'सद्यस्त्वप्रियवादिनी' इति मनूक्तस्य कटुभाषित्वस्याऽत्रैवोक्तस्य पुरुषद्वेषित्वस्य वाऽभावोऽभिसंहितः। कटुभाषणस्य द्वेषनैयत्यात्। इदं च सर्वं प्रपञ्चमात्रमधिवेदननिमित्तसामान्याभावोपलक्षणं त्यागनिमित्तसामान्याभावोपलक्षणं च त्यजन्

(१) अपि—इति ख० पु० पाठः।
(२) फलमाह—इति ख० पु० पाठः। (३) नैवोपगच्छति क.।

आधिविन्दन् भरणादिना वियोजयन्वा भरणोपयोग्याधिकधनवान् स्ववित्तस्य तृतीय भागं,भरणमात्रपर्याप्तधनाधिकधनशून्यस्तु ग्रासाच्छादनादि स्त्रियै दाप्यो ऽयाद्दृशा तत्सामर्थ्यादित्यर्थ ॥ ७६ ॥

( मिता० ) अधिवेदनकारणाभावे अधिवेत्तार प्रत्याह—

आज्ञेति । आज्ञास(१)म्पादिनीमादेशकारिणीं, दक्षां शीघ्रकारिणीं, वीरसू पुत्रवतीं, प्रियवादिनीं, मधुरभाषिणीं यस्त्यजति अधिविन्दति स राज्ञा स्वधनस्य तृतीयांश दाप्य । निर्धनस्तु भरण ग्रासाच्छादनादि दाप्य ॥ ७६ ॥

( वी० मि० ) स्त्रीधर्मानाह—

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ॥
आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥

भार्याभि सति सम्भवे सदा भर्तृवाक्यप्रयोऽर्थ सम्पाद्य । न च स्त्रीणा कृत्यान्तरस्यापि शास्त्रे धर्मतयोपदेशात्तद्विरोधे का गतिरित्यनाऽऽह 'एष' इत्यादि । भर्तृवच करण भार्याया सर्वेभ्यो धर्मान्तरेभ्य पर उत्कृष्ट, उत्कृष्टस्वर्गादिसाधन त्वात् । तथा चैतद्विरोधि धर्मान्तर त्याज्यमिति सम्यक् । अत एव मनु —

नास्ति स्त्रीणा पृथक् यज्ञो न व्रत नाऽप्युपोषितम् ।
पतिं शुश्रूषयेत् यत्तु(२)तेन स्वर्गे महीयते ॥

पृथगित्युक्ते भर्तृसाहित्ये न दोष । अत एव विष्णु —'समानव्रतचारित्व स्त्रीधर्म ' इति । अविरोधे तु धर्मान्तरमपि कार्यमेव । यदाह शङ्ख 'काम भर्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यास स्त्रीधर्म ' इति । एतच्चाऽप्रोषितभर्तृकाविषयम् ।

भर्तर्येव प्रवसिते त्यक्ता वा पतिना शुभम् ।
कुर्वीताराधन नारी उपवासादिना हरेत् ॥

इत्यादिना प्रोषितभर्तृकाया उपवासाद्युपदेशात् । एव च—

पत्यौ जीवति या नारी उपोष्य (३)व्रतचारिणी ।
आयुः संहरते प(४)त्यु सा नारी नरक व्रजेत् ॥

इति विष्णुवचने जीवति अप्रोषिते चेति द्रष्टव्यमित्याहु । साम्प्रदा-

(१) अ दशसम्पादनीं ग० ।
(२) यत्तु तत ख०पु० पाठ ।
(३) व्रतमाचरेत् इति क० पु० पाठ ।
(४) भर्तु इति ख०पु० पाठ ।

यिकास्तु प्रोषितभर्त्तृकाया अप्युपवासव्रते सामान्यतः प्राक्तनी भर्त्रनुज्ञाऽपेक्षितैवेति वदन्ति। तत्किं महापातकिनोऽपि पत्युर्मैथुनाद्यर्थं वचः कार्यं? नेत्याह 'आशुद्धेः' इत्यादि। महापातकेन ब्रह्महत्यादिना दूषितो जातपापः। तेन तत्त्वज्ञानी व्यवच्छिन्नः। आशुद्धेः ब्रह्मवधादिजनितस्य पापस्य प्रायश्चित्तादिना अपगमपर्यन्तं सम्यक् प्रतीक्ष्योऽनुरोद्धव्यः। शास्त्राविरोधि तत्पारतन्त्र्यं कार्यं न त्वन्यदिति संशब्दोपादानपर्यवसितार्थः॥ ७७॥

( मिता० ) स्त्रीधर्मानाह—

स्त्रीभिरिति। स्त्रीभिः स(१)दा भर्तृवचनं कार्यम्। यस्मादयमेव पर उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात्। यदा तु महापातकदूषितस्तदा आशुद्धेः संप्रतीक्ष्यः। न तत्पारतन्त्र्यम्। उत्तरकालं तु पूर्ववदेव तत्पारतन्त्र्यम्॥ ७७॥

( वी० मि० ) उक्तविधिनोढायां स्त्रियां वोढुरनन्तरकृत्यमाह—

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।
यस्मात्तस्मात् स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः॥ ७८॥

लोकानन्त्यमिति समाहारः। यतो हेतोः पुत्रादिभिस्त्रिभिः क्रमेण(२) स्वर्गलोकस्तस्याऽऽनन्त्यं कल्पव्यापकता दिवः सूर्यविष्टपस्य प्राप्तिश्च भवति। (३)एतदेव मनुः—

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥

तस्मात् भार्याः सुरक्षिताः कर्तव्याः ऋतुकाले च सेव्याः उपभोक्तव्याः। पुत्रादिनिखिललोकप्राप्त्यादीनां सुरक्षितभार्योपगमसाध्यत्वात्। व्यभिचारिणीपुत्रादेरप्रमत्ता रक्षत तन्तुमेतमित्यादिलोकादिप्राप्तिहेतुत्वाभावावगमादिति। कर्त्तव्या इत्यत्र भर्त्तव्या इति क्वचित्पाठः। रक्षाप्रकारमाह मनुः—

अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मे च पक्त्यां च पारिणाह्यस्य(४) चेक्षणे॥

(१) सर्वथा क०।
(२) क्रमेण-इति ख० पुस्तके नास्ति। (३) अत एव-इति ख० पु० पाठः।
(४) पारिणाम्यस्य वेक्षणे—इति क० पु० पाठः।

प्रपञ्चमात्रमेतत्, अतो येन तेनोपायेन रक्षणीया इति गम्यते ॥ ७८ ॥

( मिता० ) शास्त्रीयदारसङ्ग्रहस्य फलमाह—

लोकानन्त्यमिति । लोके आनन्त्यं वंशस्याविच्छेदः, दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनम् । कथमित्याह-पुत्रपौत्रप्रपौत्रकैर्लोकानन्त्यम्, अग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः । यस्मात् स्त्रीभ्य एतद्द्वयं भवति तस्मात् स्त्रियः सेव्या उपभोग्या प्रजार्थम्, रक्षितव्याश्च धर्मार्थम् । तथा चापस्तम्बेन धर्मप्रजासम्पत्तिः प्रयोजनं दारसङ्ग्रहस्योक्तं 'धर्मप्रजासम्पन्नेषु दारेषु नान्यां कुर्वीत' इति वदता । रतिफलं तु लौकिकमेव ॥ ७८ ॥

( वी० मि० ) स्त्रियः सेव्याः इत्युक्तं तत्र विशेषमाह—

९ षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ॥
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ ७९ ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ॥
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान् ॥ ८० ॥

रजःसम्बन्धाधिकरणाहोरात्राद्यधिकाः षोडश निशा अहोरात्राणि स्त्रीणां ऋतुगर्भप्रयोजकः समयविशेषः । इयं(१) च स्मृतौ ऋतुशब्दस्य परिभाषा । अतः 'ऋतुः स्त्रीकुसुमेऽपि च' इति कोशविरोधो नाशङ्कनीयः । केचित्तु स्त्रियाः कुसुमं यस्मिन्काले स स्त्रीकुसुमं इत्येव प्रकृतकोशार्थः । अत एव 'स्याद्रजः पुष्पमार्तव'मिति सङ्गच्छते । अन्यथा 'ऋतुः' इत्येव स्यात् । 'ऋतुमत्यप्युदक्यापि' इत्यत्र रजःसम्बन्धविशेषतत्कालीयविलक्षणसम्बन्ध एव मतुबर्थ इत्याहुः । पक्षद्वयेऽपि ऋतुमतीशब्द उदक्यापर्याय एवेत्यवधेयम् ।। तस्मिन् ऋतौ युग्मासु द्विचतुरादिषु समासु रात्रिषु संविशेत् पुत्रार्थी भार्यां गच्छेत् । तथा च मनुः—

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥

अत्र ऋतौ गच्छेदिति 'अग्निहोत्रं जुहोति' 'अष्टकाः कर्त्तव्याः' इतिवन्न विधिः, गमनस्य रागप्राप्तत्वात् । न च स्वर्गजनकत्वेनाऽप्राप्त-

(१) इद इति क० पुस्तके पाठः ।

त्वात्तथाविधिः, 'ऋतौ (१)च गच्छन्विधिवच्च ब्राह्मणश्चय(२)वते ब्रह्मलोका'दिति वसिष्ठवचनादिति द्रष्टव्यम् । वक्ष्यमाणं भट्टाचार्या यदाहुः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्येति कथ्यते ॥

इत्यन्यत्र विस्तारः । नापि 'पञ्च पञ्चनखा भक्ष्याः' इति वत्परिसङ्ख्या, स्वार्थहानिपरार्थकल्पनाप्राप्तबाधात्मकदोषत्रयदुष्टत्वात् । किन्तु नियमविधिः । स चोभयरूपः । ऋतौ गच्छेदेव ऋतावेव गच्छेदिति । तथा च यमः—

भार्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥

देवलः—

यः स्वदारानृतुस्नातान् सन्निधौ नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विना(३)श्य सः ॥

बौधायनः—

ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोर्दोषमनृतौ यश्च गच्छति ॥

(४)तत्र ऋतौ गच्छेदेवेति फलितं नियमं प्रतिप्रसूते ब्रह्मचार्येवेति । पर्वाणि,

चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्ति(५)रेव च ॥

इति विष्णुपुराणपरिभाषितानि (६)व्याप्य ब्रह्मचार्येव मैथुन(७)निवृत्त एव स्यात् । कालाध्वनोरत्यन्तसंयोगे (पा० सू० २ । ३ । ५ ।) इति द्वितीया । क्वचित्तु पर्वणीति सप्तम्यन्तः पाठः । आद्याः पुष्पोद्गमदिनमारभ्य चतस्रश्च निशा वर्जयेत् । तुशब्दश्चार्थः । तेन—

पूर्णासु योपित्परिवर्जनीया
योपिन्म(८)घासूत्तरकृत्तिकासु ।

(१) च—इति ख० पुस्तके नास्ति । (२) ब्राह्मणः प्रच्यवेत—इति ख० पुस्तके पाठः ।
(३) विनश्य—इति क० पुस्तके पाठः । (४) अत्र—इति ख० पुस्तके पाठः ।
(५) संक्रम एव—इति ख० पु०पाठः । (६) मैथुन एव निवृत्तं स्यात्—इति ख०पु०पाठः ।
(७) व्याप्य—इति क० पुस्तके नास्ति ।
(८) योपिन्मघाकृत्तिकयोत्तरासु—इति क० पु० पाठः ।

बुधे च योषां न समाचरेत—

इत्यादिस्मृत्यन्तरादिष्युदस्तस्यात्र विशिष्यते इति पुनस्तस्य समुच्चयः । अत्र चतुर्थरात्रिनिषेध उत्कृष्टपुत्रोत्पत्त्यर्थिन एव । 'लक्षण्यं जनयेत्पुमा'निति वक्ष्यति । अन्यस्य तु—

स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ।

इति भारतवचनात् 'चतुर्थीप्रभृत्युत्तरोत्तरा'मित्यापस्तम्बवचनाच्चाऽनिषेध इति स्मर्त्तव्यम् । क्षामामिति रजस्वलाव्रतेन, तेनाऽप्यदौर्बल्ये अपूप्यल्पाहारादिना यत्नतः कृतेन दुर्बलामित्यर्थः । सुस्थे गोचारादिशुद्धे इन्दौ सकृदेकवारमेव गच्छन् लक्षण्यं शुभलक्षणयुक्तं पुत्रं जनयेदित्यन्वयः । सुस्थ इन्दाविति पुनर्जन्मग्रहसंस्थानां पुष्पनक्षत्राद्युपलक्षकम् । 'शस्त इन्दा'विति पाठेऽप्ययमेवार्थः ॥ ७९ ॥ ८० ॥

( मिता० ) पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तं तत्र विशेषमाह—

षोडशेति । स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः । स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्रस्तस्मिन् ऋतौ युग्मासु समासु रात्रिषु । रात्रिग्रहणाद्दिवसप्रतिषेधः । सकृदेव गच्छेत्पुत्रार्थम् । युग्मास्विति बहुवचनं समुच्चयार्थम् । अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् । एवं गच्छन्ब्रह्मचार्येव भवति । अतो यत्र ब्रह्मचर्यं श्रा(१)द्धादौ चोदितं तत्र गच्छतोपि न ब्रह्मचर्यस्खलनदोषोऽस्ति । किं च पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् । पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम् । यथाह मनुः ( ४ । १५५ )—'अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः' ॥ इति । अतोऽमावास्यादीनि, रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत् ॥ ७९ ॥

( मिता० ) एवमिति । एवमुक्तेन प्रकारेण स्त्रियं गच्छन् क्षामां गच्छेत् । क्षामता च तस्मिन्काले रजस्वलाव्रतेनैव भवति । अथ चेन्न भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थमल्पाऽस्निग्धभोजनादिना । 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः' इति वचनात् । यदा युग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्र्येव भवति पुरुषाकृतिः । अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः । का(२)लस्य

---

( १ ) भाद्धादिषु क । ( २ ) कालस्याग्नेयत्वात् क ।

निमित्तत्वात् शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात्। तस्मात्क्षामा कर्तव्या। मघामूलनक्षत्रे वर्जयेत्। चन्द्रे चैकादशादिशुभस्थानगते चकारात्पुंनक्षत्रशुभयोगलग्नादिसम्पत्तौ सकृदेकस्यां रात्रौ न द्विस्त्रिर्वा। ततो लक्षणैर्युक्तं पुत्रं जनयति। पुमानप्रतिहतपुंस्त्वः॥८०॥

(वी० मि०) ऋतावेव गच्छेदिति नियमं प्रति प्रसूयते—

यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्॥
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः॥ ८१ ॥

काममनतिक्रम्य यथा(१)कामं तदस्यास्तीति यथाकामी। एवञ्च स्त्रीणामिच्छामनतिक्रमन्नृतावपि गच्छेदित्यर्थः। वाशब्दो यथाश्रुतनियमव्यवच्छेदे विरोधकारणमात्रे वा, न तु विकल्पे। अत्र हेतुगर्भविशेषणं स्त्रीणामित्यादि। वरमिन्द्रदत्तम्। तथा चेन्द्रं स्त्रियश्च प्रकृत्य तैत्तिरीयके श्रूयते—"ता अब्रुवन् वरं वृणीमहे ऋत्वियाः प्रजां विन्दामहे काममाविजनितोः सम्भवामेति तस्मादृत्वियः स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सम्भवन्ति वरं वृतं ह्यासा"मिति। विजनितोरिति भावे तोसुन्। तेनाऽप्रसवान्मिथुनीभवामेत्यर्थः। वसिष्ठश्च—'विज्ञायते हि। इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाऽधर्मसम्बद्धोऽहमित्येवमात्मानममन्यत तं सर्वाणि भूतान्यभ्यक्रोशन् भ्रूणहन् भ्रूणहन्निति। स स्त्रिय उपाधावत्,अस्यै मे ब्रह्म(२)हत्यायै तृतीयं भागं प्रतिगृह्णीतेति। ता अब्रूवन् किन्नो भूयादिति। सोऽब्रवीत् वरं वृणीध्वमिति। ता अब्रूवन् ऋतौ प्रजां विन्दामह इति काममाविजनितोः सम्भावमेति'। तथेति'। अनुस्मरन् प्रकृतार्थानुगुणतया विचारयन् स्त्रियोऽपि ह्येतादृश्यो मैथुनार्थिन्यो यद् भ्रूणहत्याभागमपि तदर्थमङ्गीकृतवत्यः, तथा च तदसम्पादयितारं पतिं प्रायेण व्यभिचरेयु रिति विचाराकारः। किं च स्वदारनिरत एव भवेत्। स्वदारेष्वेव नितरां रतो मैथुनी स्यादित्यर्थः। स्वस्य भार्याव्यभिचारित्वे तस्या अपि स्वव्यभिचारस्य प्रायिकत्वादिति भावः। अत्र निशब्देन स्वदारानेव गच्छेदिति नियमप्रतिप्रसवः। तेन क्षेत्रजोत्पादनाय (३)देवर दारगमनमनुजानीते। एवं च मैथुनसंवर्द्धनीययो-

(१) यथाकामं तदस्यास्तीति—इति ख० पुस्तके नास्ति।
(२) भ्रूण—इति- Bom, S. S. पुस्तके पाठः।
(३) 'वेदस्वदारमन' मित्युभयपुस्तकपाठः।

गरहितत्वादिविशेषणविशिष्टः पर्वाद्यतिरिक्ते ऋतौ भार्यामुपगच्छेदेवेति प्रथमनियमपर्यवसितार्थः । स्त्रिया इच्छाविरहे ऋत्वतिरिक्तसमये न गच्छेदिति द्वितीयनियमपर्यवसितार्थः । क्षेत्रजोत्पादनाप्रवृत्तः स्वदारानेव गच्छेदिति तृतीयनियमार्थः । केचित्तु 'स्त्रियाः सेच्छत्वेऽनृतावप्यवश्यं गच्छेदिति अनृतुग(१)मने नियमं वर्णयन्ति । परे तु । विकल्पार्थवाशब्दात् स्त्रियाः सकामत्वे अनृतावपि गच्छेत् । अन्यथाऽनृतौ न गच्छेदिति व्यवस्थामङ्गीकुर्वते । युग्मास्वित्यादि तु 'पुत्रकामः पुत्रेष्टिं निर्वपे'(२)दितिवत्पुत्रार्थिनं प्रति, विरोध एवेति । इदन्तु स्मर्तव्यं—यदा युग्मायामपि रात्रौ रजसः आधिक्यं तदा स्त्र्येव जायते परन्तु पुरुषाकृतिः । तथाऽयुग्मायामपि शुक्राधिक्ये पुमानेव जायते परन्तु स्त्र्याकृतिः ।

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः ।

न चैव युग्माद्यनुसरणनरर्थक्यमाशङ्क्यम्, इच्छाकृतपुत्रस्यैव पुत्रत्वेनेष्टत्वात् । अत एवोक्तं 'लक्षण्यं जनये'दिति । एवं च कन्यादानजन्यस्वर्गविशेषार्थितया कन्योत्पत्तिकामं प्रति अयुग्मासु पुत्रीं गच्छेदित्यपि विधिरूह्य इत्यास्तां विस्तरः । यथाकामित्वे स्वदारनिरतत्वे चोभयत्र हेतुमाह स्त्रिय इत्यादि । रक्ष्याः स्मृताः, कर्तव्याश्च सुरक्षिता इति । अत्रेदं सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः 'स्त्रियो रक्ष्या विशेषतः' इति मन्वादौ चोक्ताः । वस्तुतस्तु स्वदारनिरतः स्वदारेषु निरन्तरोऽनृतावपि रतिशीलो भवेदिति प्रतिप्रसवः, तं विशिनष्टि यथाकामीति । तत्र हेतुः स्त्रियो रक्ष्या इति कथित इति तत्त्वम् ॥ ८१ ॥

( मिता० ) एवमृतौ नियममुक्त्वा इदानीमनृतौ नियममाह—

यथाकामीति । भार्याया इच्छानतिक्रमेण प्रवृत्तिरस्यास्तीति यथाकामी भवेत् । वाशब्दो नियमान्तरपरिग्रहार्थो न पूर्वनियमनिवृ-

( १ ) गमने-इति ख० पुस्तके नास्ति । ( २ ) निर्वपेत् इति क० पुस्तके पाठः ।

त्यर्थः। स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् 'भवतीनां कामविहन्ता पातकी स्यात्' इति। यथा 'ता अब्रुवन् वरं वृणीम(१)हा ऋत्वियात्प्रजां विन्दामहै काममाविजनितोः संभवामेति तस्मादृत्वियाः स्त्रियः प्रजां विन्दन्ते काममाविजनितोः संभवन्ति (२)वारे वृतं ह्यासाम्' इति। अपि च स्वदारेष्वेव निरतः नितरां रतस्तन्मनस्को भवेदित्यनुपद्यते। एवकारेण स्त्र्यन्तरगमनं निवर्तयति, प्रायश्चित्तस्मरणात्। उभयत्राऽपि दृष्टप्रयोजनमाह—स्त्रियो रक्ष्या यतः स्मृता इति। यस्मात्स्त्रियो रक्ष्याः स्मृता (३)उक्ताः 'कर्तव्याश्च सुरक्षिताः' इति। तत्र सुरक्षितत्वं यथाकामित्वेन स्त्र्यन्तरागमनेन च भवतीति। अत्राह—तस्मिन्युग्मासु संविशेदिति। किमयं विधिर्नि(४)यमः परिसंख्या वा। उच्यते न तावद्विधिः, प्राप्तार्थत्वात्। नापि परिसंख्या, दोष(५)त्रयसमासक्तेः। अतो नियमं प्रतिपेदिरे न्यायविदः। कः पुनरेषां भेदः? अत्यन्ताऽप्राप्तप्रापणं विधिः। यथा 'अग्निहोत्रं जुहुयात्' 'अष्टकाः कर्तव्याः' इति। पक्षे प्राप्तस्याऽप्राप्तपक्षान्तरप्रापणं नियमः। यथा 'समे देशे यजेत' 'दर्शपूर्णमासाभ्यां यजेत' इति यागः कर्तव्यतया विहितः। स च देशमन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः। स च द्विविधः समो विषमश्चेति। यदा यजमानः समे यियक्षते तदा समे यजेतेति वचनमुदास्ते, स्वार्थस्य प्रा(६)प्तत्वात्। यदा तु विषमे देशे यियक्षते तदा समे यजेतेति स्वार्थं विधत्ते, स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृत्तिस्त्वा(७)र्थिकी। चोदितदेशेनैव यागनिष्पत्तेरचोदितदेशोपादानेन यथाशास्त्रं यागो नाऽनुष्ठितः स्यादिति। तथा 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति। इदमपि स्मार्तमुदाहरणं पूर्वेण व्याख्यातम्। एकस्याऽनेकत्र प्राप्तस्याऽन्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या। तद्यथा 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः पुनरश्वाभिधानीमादत्त इत्यनेनाऽश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्याः निवर्तते। तथा(८)'पञ्च पञ्च-

(१) वृणीमहै ख०। (२) वरं वृतं तासां ख०। (३) उक्ताः पूर्वं ७८ श्लोके०।

(४) विध्यादयश्च-'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चाऽन्यत्र च प्राप्तौ परिसंख्या निगद्यते' इति। (५) दोषत्रयासक्तेः क०। (६) प्राप्तार्थत्वात् क०।

(७) त्वर्थान्सिद्धा क०। (८) यथा-इति मुद्रितपुस्तके पाठः।

मया भक्ष्याः' इत्यत्र हि यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो नि(१)वर्तत इति । किं पुनरत्र युक्तं परिसंख्येत्याह । तथा हि कृतदारसङ्ग्रहस्य स्वेच्छयैवर्तौ गमनं प्राप्तमिति न विधेरयं विषयः । नाऽपि नियमस्य । गृह्यस्मृतिविरोधात् । एवं हि स्मरन्ति गृह्यकाराः—'दारसङ्ग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यात्' इति । तत्र द्वादशरात्रसंवत्सरयोः पूर्वमेवर्तुसंभवे ऋतौ गच्छेदेवेति नियमाद्ब्रह्मचर्यस्मरणं बाध्येत । अपि च प्राप्ते भार्यायै वचनं विशेषणपरं युक्तं, प्राप्त ऋतौ भार्यागम(२)नमिच्छयैव । अतो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता । किं च नैयमिकात्पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यप्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात् । नियमे चाऽदृष्टं कल्पनीयम् । किं च ऋतौ गन्तव्यमेवेति नियमे असन्निहितस्य व्याध्यादिना असमर्थस्याग्निच्छोभ्राऽदर्थयोऽयं उपदिष्टः स्यात् । विध्यनुवादविरोधश्च नियमे । तथा हि एकः शब्दः सकृदुच्चरितस्तत्रैवार्थे पक्षेऽनुवदति पक्षेऽनुविधत्ते चेति । तस्मादृतावेव गच्छेन्नाऽन्यत्रेति परिसंख्यैव युक्ता । तदिदं(३)भारुचिविश्वरूपादयो नाऽनुमन्यन्ते । अतो नियम एव युक्तः । पक्षे स्वार्थविधिसंभवात्, अगमने दोषश्रवणाच्च । 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' ॥ इति । न च विध्यनुवादविरोधः, अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य । तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तदेवानुवदितव्यं, अप्राप्तत(४)याऽन्योद्देशेन विधातव्यं च । यथा वाजपेयाधिकरणपूर्वपक्षे 'वाजपेयेन स्वाराज्यकामो यजेते'ति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवादितव्यः, स एव स्वराज्यलक्षणफलोद्देशेन विधातव्यश्चेति । न चाऽनुवादेनेह कृत्यमस्ति । यत्तु नियमेऽदृष्टं कल्प्यमित्युक्तं तत्परिसंख्यायामपि समानम्, अनृतौ गच्छतो दोषकल्पनात् । यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेन नियम इति । त(५)दसत् । स एवाऽयं नैयमिकपुत्रोत्पादनाविधिः । स्यान्मतम् 'एवं ग-

(१) निवर्तयति ख० । (२) मर्यैच्छयैव क० । (३) मस्करि क० । (४) तया कर्त्रुद्देशेन क० । (५) त्वदसदिति क० नास्ति ।

च्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेत्' इति स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति । तन्न, ग(१)मनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदृश्यते । एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन यथाऽग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति । न चाऽसंनिहितादेरशक्यार्थविधिप्रसङ्गः सन्निहितशक्तयोरेवोपदेशात् । 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति' इति । 'यः स्वदारानृतुस्नातान्स्वस्थः सन्नोपगच्छति' इति विशेषोपादानात् । अनिच्छानिवृत्तिस्तु नियमविधानादेव । न च विशेषणपरतापि पक्षे भावार्थविधिसंभवात् । नापि गृह्यस्मृतिविरोधः संवत्सरात्पूर्वमेवर्तुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषो यथा श्राद्धादिषु । तस्मात्स्वर्थहानि–परार्थकल्पना—प्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता । एवं 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः शशादिषु, श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवस्तथाऽपि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः,श्वादिभक्षणे चाऽदोषप्रसङ्गेन प्रायश्चित्त(२)स्मृतिविरोध इति परिसंख्यैवाऽऽश्रिता । एतेन 'सायंप्रातर्द्विजातीनामशनं स्मृ(३)तिनोदितम्' इत्यत्रापि नियमो व्याख्यातः । 'नान्तरा भोजनं कुर्यात्' इति च पुनरुक्तं स्यात्परिसं(४)ख्यायाम् । एवं च नियमे सति ऋतावृताविति वीप्सा लभ्यते, 'निमित्तावृत्तौ नैमित्तिकमप्यावर्तते' इति न्यायात् । 'यथाकामी भवेदि'त्ययमपि नियम एव । अनृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेवेति । 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इत्येतदपि गौतमीयं सूत्रद्वयं नियमपरमेव । 'ऋतावुपे(५)यादनृतावपि स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमुपेयादेवे'त्यलमतिप्रसङ्गेन ॥ ८१ ॥

( वी० मि० ) स्वदारनिरतश्चेति चशब्देन समुच्चितं रक्षाप्रकारं च स्पष्टयति—

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ॥
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥

---

(१) यतस्तघ गमन० क० । (२) प्रायश्चित्तविरोधः क० । (३) श्रुतिचोदितं क० ।
(४) परिसंख्यायाम् । तस्मान्नियमपरमेवेति ग० । (५) मुपेयादेवानृतावपि क० ।

बन्धुभिः ।

आत्ममातुः स्वसुः पुत्रा आत्मपितृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

इति परिभाषितैः। पूज्याः सत्कार्याः। अत्र भर्त्रभिधानं प्रसङ्गेनाभिधानम् ॥ ८२ ॥

( मिता० ) किं च—

भर्त्रिति । भर्तृप्रभृतिभिः पूर्वोक्ताः साध्व्यः स्त्रियो यथाशक्त्यलङ्कारवसनभोजनपुष्पादिभिः सम्माननीयाः। यस्मात्ताः पूजिता धर्मार्थकामान्संवर्धयन्ति ॥ ८२ ॥

( वी० मि० ) अथ स्त्रीधर्ममाह पञ्चभिः श्लोकैः—

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ॥
कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥

संयतः स्वस्थाने सम्यक् स्थापित उपस्करो मुसलोलूखलशिलापट्टसंमार्जन्यादिर्यया सा तथा। दक्षा गृहव्यापारकुशला। हृष्टा हसन्मुखत्वादिहर्षव्यञ्जकवती । व्ययपराङ्मुखी असद्व्ययविमुखी। श्वशुरयोः श्वश्रूश्वशुरयोः। पादवन्दनं सति सम्भवे प्रत्यहमिति शेषः। भर्तृतत्परा भर्तृशुश्रूषणादिशीला ॥ ८३ ॥

( मिता० ) तया पुनः समर्पितगृहव्यापारया किंभूतया भवितव्यमित्यत आह—

संयतोपस्करेति । संयतः स्वस्थाननिवेशितः उपस्करो गृहोपकरणवर्गो यया सा तथोक्ता। यथोलूखलमुसलशूर्पादेः कण्डनस्थाने, दृषदुपलयोरवियोगेन पेषणस्थान इत्यादि। दक्षा गृहव्यापारकुशला। हृष्टा सदैव प्रहसितानना। व्ययपराङ्मुखी न व्ययशीला। सर्वत्र स्यादिति शेषः। किं च श्वश्रूश्च श्वशुरश्च श्वशुरौ 'श्वशुरः श्वश्र्वा' इत्येकशेषः। तयोः पादवन्दनं नित्यं कुर्यात्। श्वशुरग्रहणं मान्यान्तरोपलक्षणार्थम्। भर्तृतत्परा भर्तृवशवर्तिनी सती पूर्वोक्तं कुर्यात् ॥८३॥

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ॥
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥ ८४ ॥

( वी० मि० ) क्रीडां कन्दुकाक्षादिभिः। शरीरसंस्कारमुद्वर्तनादिभिः। समाजो जनसमूहः, उत्सवो विवाहादिः, तयोर्दर्शनम्। हास्यं,

विजृम्भणम्, परगृहे यानं च। प्रोषितभर्तृका विदेशस्थपतिका त्यजेदित्यर्थः॥ ८४॥

(मिता०) भर्तृसन्निधावुक्तं, प्रोषिते भर्तरि तया किं कर्तव्यमित्यत आह—

क्रीडामिति। देशान्तरगतभर्तृका क्रीडां कन्दुकादिभिः, शरीरसंस्कारमुद्वर्तनादिभिः, समाजो जनसमूहः उत्सवो विवाहादिः तयोर्दर्शनं, हास्यं विजृम्भणं, परगृहगमनं त्यजेदिति प्रत्येकं सम्बध्यते॥८४॥

रक्षेत्कन्यां पिता वि(१)न्नां पतिः पुत्रा(२)स्तु वार्द्धके॥

अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः॥ ८५॥

(वी० मि०) स्त्रिया इति कर्तव्यमित्यध्याहृतम्। कृद्योगात् षष्ठी। तेन कस्यामप्यवस्थायां स्त्रियाः स्वातन्त्र्यमपारवश्यं न विधेयमित्यर्थः। न चाऽऽवश्यकयोगक्षेमार्थं स्वातन्त्र्यमन्यथोपपत्तेरित्याह। यतः कन्यामनूढां पिता रक्षेत विभृयात् लोकवेदविरुद्धा(३)द्धर्षयेच्च। विन्नां विवाहितां पती रक्षेदिति। सर्वत्राऽन्वययोग्यविभक्तिसाचिव्येनाऽनुषज्यते। वार्द्धके तु रक्षणसमर्थस्य पत्युरभावे पुत्रभावे पुत्राः। एवं रक्षणसमर्थानां पित्रादिपुत्रान्तानामसत्त्वे तदतिरिक्ताः सपिण्डा रक्षेयुरेव स्वदोषपरिहारार्थम्। बहुवचनमिदमाद्यर्थे वेद, तेन पितृपक्षादिपरिग्रहः। तथा च नारदः—

तत्सपिण्डेष्वरक्षत्सु पितृपक्षः प्रभुः स्त्रियाः।
पक्षद्वयाऽवसाने तु राजा भर्ता प्रभुः स्त्रियाः॥
स तस्या भरणं कुर्यान्निगृह्णीयात् पथश्च्युताम्।

एषामित्यत्र क्वचित्तेषामिति पाठः। स निरुक्तार्थक एव। तासामिति पाठे तासां स्त्रीणां स्वातन्त्र्यमिति पर्यवसितार्थः। अन्ये तु पित्रादीन्प्रति पृथगेवैते विधेयाः, तानुपजीव्य 'स्वातन्त्र्यं न क्वचित् स्त्रिया' इत्युक्तमित्याहुः॥ ८५॥

(मिता०) किं च—

रक्षेदिति। पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत्। तत ऊर्ध्वं भर्ता। तदभावे पुत्राः वृद्धभावे च। तेषामुक्तानामभावे ज्ञातयः। ज्ञातीनामभावे राजा। 'पक्षद्वयावसाने तु राजा भर्ता प्र(४)·

(१) परिणीताम्। (२) पुत्राश्च–इति मुद्रितपुस्तके पाठः।
(३) धर्षयेच्च–इति ख० पु० पाठः। (४) पतिः स्त्रियाः क०।

मु' स्त्रिया ' इति वचनात् । अतः क्वचिदपि स्त्रीणां नैव स्वात न्त्र्यम् ॥ ८५ ॥

पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ॥
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥ ८६ ॥

( वी० मि० ) भर्त्रा विना पतिवियुक्ता स्त्री पित्रादीनामन्यतमेन हीना विरहिता तदनाश्रया न तिष्ठेत् । अन्यथा तादृशी तिष्ठन्ती शि० क्षाना निन्द्या भवेदित्यर्थः । अत्र पत्युर्वियोगो द्वे(१)धा, तस्य देशान्तरे वा लोकान्तरे प्राप्ते । त(२)त्र प्रथमे तदागमनं यावत् । द्वितीयेऽपि ब्रह्मच(३)र्यपक्षे यावज्जीवं तदाश्रितैव तिष्ठेदिति विधानमात्रनिबन्धन एव विशिष्टमानं । पत्यन्वारोहणपक्षे तु विशेष्याभावानिबन्धनं । तथा च वि(ष्णु) -'भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा'। अत्र च-

ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ।

इत्यादि ब्रह्मचारिप्रकरणोक्तब्रह्मचर्यफलश्रवणात् । ब्रह्मचर्यान्तर कामायास्तु गर्भिणीबालापत्याद्यतिरिक्तायाः पत्यन्वारोहणमिति व्यवस्था । तथा च गृह्यके(?)—

तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे ।
तावत्काले वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥

तथा—

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥
मृते भर्तरि या नारी समारोहेद् हुताशनम् ।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
यावच्चाऽग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ।
तावन्न मुच्यते सा हि स्त्रीशरीरात् कथञ्चन ॥

हारीतेऽपि—

मातृकं पैतृकं चाऽपि यत्र चैव प्रदीयते ।
पुनाति त्रिकुलं नारी भर्तारं याऽनुगच्छति ॥

ब्रह्मपुराणे—

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।

---

(१) द्विधा इति क० पुस्तके पाठः । (२) अत्र इति क० पुस्तके पाठः ।
(३) ब्रह्मचर्य इति क० पुस्तके पाठः ।

निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥
ऋग्वेदवादा साध्वी स्त्री न भवेदात्मघातिनी ।

व्यासः—

दयितं याऽन्यदेशस्थं मृतं (१)श्रुत्वा पतिव्रता ।
समारोहेत दीप्तेऽग्नौ तस्याः शक्तिं निबोधत ॥
यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
सम्प्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्टयमानः स्वकर्मभिः ।
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ॥
तद्वद्भर्तारमादाय तेनैव सह मोदते ।
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥

इत्याद्यलं विस्तरेणेति ।

परे पुनर्मृते पत्यौ ब्राह्मण्या ब्रह्मचर्यं क्षत्रियादिभिस्त्वन्वारोहणं कार्यमिति व्यवस्था । तथा च पैठीनसिः—

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः ॥

आङ्गिराः—

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नाऽऽत्मानं न पतिं नयेत् ॥

इत्याहुः, तच्चिन्त्यं लिखितवचनादीनां पृथगिति निषेधमात्रपरत्वात् । अत एव तमादायेति पूर्वलिखितवचने ब्राह्मण्या नियमः । तथा चोशनाः—

पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणामयं धर्मः परः स्मृतः ॥

अत एव कल्पकाराः—प्रेतस्योत्तरतः पत्नीसंवेशनमविशेषेणैवाऽभिदधति । अत एव च रामायणादौ ब्राह्मणीनां भर्तृशरीरालिङ्गनपूर्वकं स्वशरीरदहनमुपाख्यायते । ननु 'तस्माद्दुह न पुरायुषः स्वःकामी प्रेया'दिति श्रुतिः सर्वाः स्मृतीरनुगमनबोधिकाः सुदूरमुत्सारयतीति कथमेवमिति चेत्—उच्यते । स्वःकामी स्वर्गरूप(२)फलकामः ।

(१) वृत्तं—इति क० पुस्तके पाठः । (२) स्वर्गकामः—इति ग० पु० पाठः ।

आयुषः पुरा सत्यायुषि स्वेच्छयेति यावत् । प्रेयात् प्राणांस्त्यजेदिति हि श्रुतेरर्थः । एवं च 'न हिंस्यात्सर्वा भूतानी'ति श्रुतेः सामान्यमुखो 'वायव्यं श्वेतमालभेत' इत्यादिश्रौतस्मार्तविशेषविधिविषयीभूतां हिंसामिव प्रकृतश्रुतेरपि तादृशीं मृत पतिं भार्याऽनुगच्छेदिति विशेषविहितातिरिक्तं प्रमाणमवलम्बत इत्यविरोधान्न स्मृतिबाध इति निपुणमालोचनीयम् । इतरे तु पतिव्रतायाः पत्य(१)नुमरणमन्यस्यास्तु ब्रह्मचर्यमिति व्यवस्था । पत्यनुमरणपर्यन्तत्वात्पातिव्रत्यस्य च । हारीतः—

आर्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते या म्रियते पत्यौ सा विज्ञेया पतिव्रता ॥

यद्वा गर्भिण्यादीनामनुमरणनिषेधादन्यासां तद्विधिरित्याहुः, तन्न मनोरमं, सकलदेशीयशिष्टाचारविरोधात् । ये तु—

यावन्नाऽग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात् कथञ्चन ॥

इत्येवमङ्गिरोवचनं पठित्वा तत्प्रमाणयन्तः शिष्टाचारं विप्लावयन्ति, ते प्रकृतवचनाऽव्यवहितपूर्वं स्वयमेव लिखितं,—

सर्वासामेव नारीणामग्निप्रपतनादृते ।
नाऽन्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हि चित् ॥

इति अङ्गिरोवचनं द्रागेव विस्मृतवन्तः । 'सर्वासामेव नारीणा'मित्युपक्रमस्य बलवत्या'द्विदो वे'ति न्यायात् । तस्मात् गर्भिण्यादीनाममहापातकिनीनामा ब्राह्मणीमा च चाण्डालीं पत्यनुमरणेऽधिकारो व्यवस्था ब्रह्मचर्येण सम प्रागेव तस्य दर्शितेति सर्वं चतुरस्रम् ॥ ८६ ॥

( मिता० ) किञ्च—

पित्रित्यादि । भर्त्रा विना भर्तृरहिता पित्रादिरहिता वा न स्यात् । यस्मात्तद्र(२)हिता गर्हणीया निन्द्या भवेत् । एतच्च ब्रह्मचर्यपक्षे—'भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा' इति विष्णुस्मरणात् । अन्वारोहणे महानभ्युदयः । तथा च व्यासः कपोतिकाख्यानव्याजेन दर्शितवान्—'पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् । तत्र चित्राङ्गदधरं भर्तारं सान्वपद्यत ॥ ततः स्वर्गं गतः पक्षी भार्यया सह

(१) 'पत्यनु'—इत्यारभ्य 'व्यवस्था'—इत्यन्तो नास्ति ख० पुस्तके ।
(२) तद्रहिता पित्रादिरहिता क० ।

सङ्गतः। कर्मणा पूजित(१)स्तत्र रेमे च सह भार्यया' ॥ इति। तथा च शङ्खाङ्गिरसौ—'तिस्रः कोट्योऽर्धकोटी च यानि(२)लोमानि मानुषे। तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति' ॥ इति प्रतिपाद्य तयोरवियोगं दर्शयतः—'व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्। तद्वदुद्धृत्य सा नारी सह तेनैव मोदते ॥ तत्र सा भर्तृपरमा स्तूयमानाप्सरोगणैः। क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश' ॥ इति। तथा—'ब्रह्मघ्नो वा (३)कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः। पुनात्यविधवा नारी तमादाय मृता तु या ॥ मृते भर्तरि या नारी समारोहेद्धुताशनम्। सारुन्धतीसमाचारा स्वर्गलोके महीयते ॥ यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्। तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन' ॥ इति। हारीतोपि—'मातृकं पैतृकं चापि यत्र चैव प्रदीयते। कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति' ॥ इति। तथा—'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता' ॥ इति। (४)अयं च सकल एव सर्वासां स्त्रीणामगर्भिणीनामबालापत्यानामाचण्डा(५)लं साधारणो धर्मः। भर्तारं यानुगच्छतीत्यविशेषोपादानात्। यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि—'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। इतरेषु तु वर्णेषु तपः परममुच्यते ॥ जीवन्ती तद्धितं कुर्यान्मरणादात्मघातिनी। या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ॥ सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्' ॥ इत्येवमादीनि तानि पृथक्चि(६)त्यधिरोहणविषयाणि। 'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति' इति विशे(७)षस्मरणात्। अनेन क्षत्रियादिस्त्रीणां पृथक्चित्यभ्यनुज्ञा गम्यते। यत्तु कैश्चिदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादतिप्रवृद्धस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः श्येनवत्। यथा 'श्येनेनाभिचरन्यजेत' इति तीव्रक्रोधाक्रान्तस्वान्तस्य प्रतिषे(८)धशास्त्रमतिक्रामतः श्येनोपदेश इति तदयुक्तम्। ये तावत् श्येनकरणिकायां भावनायां भाव्यभूतहिंसायां

(१) पूजितस्तेन।
(२) रोमाणि। (३) वाथ मित्रघ्नः कृतघ्नो वा ख; ब्रह्मघ्नो वा सुरापो वा ग०।
(४) अयं सर्वासां ख०। (५) माचाण्डालानां ख०।
(६) चित्यन्वारोहण। (७) विशेषोपादानात् क०। (८) प्रतिषिद्धशास्त्र ग०।

विधिसंस्पर्शामात्रेण प्रतिषेधसंस्पर्शात्फलद्वारेण श्येनस्यानर्थतां व-र्णयन्ति तेषां मते हिंसाया एव स्वर्गार्थतया अनुगमनशास्त्रेण विधी-यमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयवत्स्पष्टमेवानुगमनस्यश्ये-नवैषम्यम् । यत्तु मतं हिंसानाम मरणानुकूलो व्यापार, श्येनश्च पर-मरणानुकूलव्यापाररूपत्वाद्धिंसैव, कामाधिकारे च करणांशे रागतः प्रवृत्तिसम्भवेन विधेरप्रवर्तकत्वात् । रागप्रयुक्तहिंसारूपत्वात् श्ये-नः प्रतिषिद्धः स्वरूपेणैवाऽनर्थकर इति, तत्राप्यनुगमनशास्त्रेण मरण-स्यैव स्वर्गसाधनतया विधानान्मरणे यद्यपि रागतः प्रवृत्तिस्तथा-पि मरणानुकूले व्यापारेऽग्निप्रवेशादावितिक(१)र्तव्यतारूपे विधित एव प्रवृत्तिरिति न निषेधस्यावकाश', 'वायव्यं श्वेतमालभेत भूति-कामः' इतिवत् । तस्मात्स्पष्टमेवानुगमनस्य श्येनवैषम्यम् । यत्तु 'त-स्मादुह न पुरायुषः (२)स्वःकामी प्रेयात्' इति श्रुतिविरोधादनुगम-नमयुक्तमिति । यद्य 'तदुह न स्वःकाम्यायुषः प्राङ् न प्रे(३)यात्' इति स्वर्गफलोद्देशेनायुषः प्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना, यस्मादा-युषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्ष(४)पितान्तःकरणकलङ्क-स्य श्रवणमनननिदिध्यासनसपत्तौ सत्यामात्मज्ञानेन निरतिशया-नन्दब्रह्मप्राप्तिलक्षणमोक्षसम्भवः । तस्मादनित्याल्पसुखरूपस्वर्गार्थमा-युर्व्ययो न कर्तव्य इत्यर्थः । अतश्च मोक्षमनिच्छन्त्या अनित्याल्पसु-खरूपस्वर्गार्थिन्या अनुगमनं युक्तमितरकाम्यानुष्ठानवदिति सर्वम-नवद्यम् ॥ ८६ ॥

( वि० मि० )

पतिप्रियहिते युक्ता स्वाचारा संयतेन्द्रिया ॥
इह कीर्तिमवाप्नोति प्रेत्य चाऽनुत्तमां गतिम् ॥ ८७ ॥

प्रियं तत्कालं मनोहरं, हितमुदर्कसुखदम्, अनयोर्द्वन्द्व इत्येके। वस्तुत-स्तु कर्मधारयः। युक्ता उद्युक्ता। सुष्ठु आचारो यस्याः सा स्वाचारा। सौष्ठवं चाहतुः शङ्खलिखितौ–'नाऽन्तराद्बहिर्गच्छेन्नाऽनुत्तरीया प-रिधावेन्नाऽनुत्सवे गन्धमाल्याभरणानि विकृतानि वासांसि बिभृया-न्न परपुरुषमभिलाषेताऽन्यत्र वणिक्प्रव्रजितवृद्धेभ्यो न नाभिं दर्श-

(१) कर्तव्यतारूप ख० ।
(२) स्वर्गकाम । (३) प्रेयादिति ख० । (४) क्षपितान्तःकरण ख० ।

येत् वधूरागुल्फाभ्यां वासः परिधापयेन्न स्तनौ विवृतौ कुर्यान्न हसेद- पावृतं न भर्तारं तद्बन्धून्वा द्विष्यात् न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायाकुहककारिणीभिः सहैकत्र तिष्ठेत संसर्गेण किल स्त्रीणां चरित्रं दुष्यती'ति । संयतेन्द्रिया वशीकृतश्रोत्रवाङ्मनःप्रभृतीन्द्रिया । इह लोके । प्रेत्य प्राणापगमानन्तरम् । अनुत्तमां उत्कर्ष(१)प्रतियोगिनीं स्वर्गमोक्षादिकाम् । अयं च सकल एव स्त्रीधर्मो विवाहानन्तरं बोध्यः । भर्तृपदादिसमभिव्याहारेण तथैवागतेः । पातिव्रत्यफलं त्वाह मनुः—

दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ।
सा भर्तुर्लोकमाप्नोति यथैवाऽरुन्धती तथा ॥ -॥ ८७ ॥

( मिता० ) किञ्च—

पतीत्यादि । प्रियमनवद्यत्वेन मनसोऽनुकूलम्, आयत्यां यच्छ्रेयस्करं तद्धितम् । प्रियं च तद्धितं च प्रियहितं पत्युः प्रियहितं पतिप्रियहितं तस्मिन् युक्ता निरता । स्वाचारा शोभन आचारो यस्याः सा तथोक्ता । शोभनश्चाऽऽचारो दर्शितः शङ्खेन—'नानुक्ता गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदप्रावृता भर्तारं तद्बन्धून्वा न द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्संसर्गेण हि कुलस्त्रीणां चा(२)रित्रं दुष्यति' इति । विजितेन्द्रिया विजितानि संयमितानि इन्द्रियाणि श्रोत्रादीनि वागादीनि च मनःसहितानि यया सा(३) । इह लोके कीर्तिं प्रख्यातिं परलोके चोत्तमां गतिं प्राप्नोति । अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः । 'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति स्मरणात् । 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' इति च ॥ ८७ ॥

( वी० मि० ) अनेकभार्यं प्रत्याह—

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ॥
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥

---

( १ ) उत्कर्षैकप्रतियोगिनीं—इति क० पुस्तके पाठः ।

( २ ) हि चरित्रं क० । ( ३ ) सा तथोक्ता इह क० ।

सवर्णायां भार्यायामसत्यामसवर्णभार्यासाहित्येन धर्माचरणमभ्यनुजानाति । शूद्रासाहित्येन तु तत्सर्वथैव निषिद्धम् । तथा च वसिष्ठः—'नष्टवर्णा वामा रमणायैव न धर्माय' इति । नष्टवर्णा शूद्रा न धर्माय द्विजानाम् । सवर्णास्विति बहुवचनमनेकत्वमात्रपरम्, तेन सवर्णानेकभार्यामध्ये ज्येष्ठया प्रथमोढया विनाऽन्यां न धर्मार्थके विधौ कारयेदित्यनुषज्यते व्यापारयेदिति तदर्थः । ज्ये(१)ष्ठान्यासाहित्येन धर्मं नाचरेदिति तदर्थः । ज्येष्ठान्यासाहित्येन धर्मकर्म नाचरेदिति फलितार्थः ।

अग्निहोत्रादियज्ञेषु द्वितीयां न सहाचरेत् ।
अन्यथा विफलं तस्य स्याद्दिष्टं क्रतुशतैरपि ॥

इति विष्णुवचनात् । अथवा ज्येष्ठया विना तत्साहचर्येणेत्यर्थः । तेन ज्येष्ठासाहचर्येणाऽन्यस्या अप्यधिकारो लभ्यते । अत एव कात्यायनः—

नैकयापि विना कुर्यादाधानं भार्यया बुधः ।
अकृतं (२) तद्विजानीयात् सर्वा नान्वारभन्ति यत् ॥

एवं च विष्णुवचने द्वितीयामसवर्णामित्यर्थः । वस्तुतो ज्येष्ठामात्रेणाऽनतिक्लेशनिर्वाहे धर्मकर्मण्यन्यस्या व्युदासोऽन्यत्राऽभ्यनुज्ञानम् । अत एव छन्दोगपरिशिष्टे कात्यायनः—

अग्निशिष्टादिकार्याणि बहुभार्यः सवर्णया ।
कारयेत्तदसत्त्वे तु ज्येष्ठया गर्हिता न चेत् ॥
या च स्याद्वीरसूरासामाज्ञासम्पादिता च या ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥
दिनक्रमेण वा कर्म यथाज्येष्ठमशक्तितः ।
विभज्य सह वा कुर्युर्यथाज्ञानमसाध्वसः ॥

गर्हिता धर्माचरणसाहित्यविरोधिनिमित्तवती पत्नी ।

धर्मपत्नी समाख्याता निर्दोषा यदि सा (३)भवेत् ।
दोषे सति न दोषः स्यादन्या कार्या गुणान्विता ॥

इति दक्षवचनेऽपि निर्दोषाशब्दस्याऽप्ययमेवार्थः । द्वितीयादिभार्याश्रयेऽ(४)न्वाधानादिकर्मविशेष एवेत्यप्याहुः ॥ ८८ ॥

(१) 'ज्येष्ठा—इत्यारभ्य 'तदर्थ' इत्यन्त ख० पुस्तके नास्ति ।
(२) अकृत इत्यारभ्य इत्यर्थ' इत्यन्त ख० पुस्तके नास्ति ।
(३) वा इति क० पुस्तके पाठः । (४) अन्वाधानादि इति पु० पा० ।

( मिता० ) अनेकभार्यं प्रत्याह—

सत्यामिति । सवर्णायां सत्यामन्यामसवर्णां नैव धर्मकार्यं कारयेत् । सवर्णास्वपि बह्वीषु धर्म्ये विधौ धर्मानुष्ठाने विना ज्येष्ठां मुक्त्वा इतरा मध्यमा कनिष्ठा वा न नियोक्तव्या ॥ ८८ ॥

( वी० मि० ) प्रमीतपतिकाया धर्मः प्रागुक्तः, इदानीं प्रमीतभार्यस्य तमाह—

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ॥
आहरेद्विधिवद्दारानग्नींश्चैवाऽविलम्बयन् ॥ ८९ ॥

वृत्तवतीं सदाचारसम्पन्नां भार्यामर्थान्मृतामग्निहोत्रेण श्रौतेन तदभावे स्मार्तेनाऽग्निना दाहयित्वा पुत्रादिना । अन्यथा तु स्वयमेव दग्ध्वा पतिः स्त्र्यन्तरपरिणयानिमित्तवान् दारान् सति सम्भवे सवर्णानेवाऽन्यथा शूद्रावर्ज्जमसवर्णानपि । यदाह विष्णुः—

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनाऽपि तत्कार्य्यं यावज्जीवं समापयेत् ॥

उपाधिनाऽसवर्णभार्यादिनेति निबन्धव्याख्यानात् । अग्नीन् श्रौतान् स्मार्तांश्च पुनरन्या आहरेदुपादद्यात् । अविलम्बयन्निति स्वार्थे णिच् विलम्बमकुर्वाणः । विलम्बे दारादिसाध्यधर्मशैथिल्यप्रसङ्गात्स्वेच्छामात्रेणाविलम्बेऽनाश्रमित्वापत्तेर्वा । तच्च विरुद्धम्—

अनाश्रमी न तिष्ठे(१)त क्षणमात्रमपि द्विजः ।

इति दक्षात् । ईदृशश्च दाहो यया सहजोऽग्निराहितो ज्येष्ठया कनिष्ठया वा तस्या एव भार्यायास्तेनैवाऽग्निना । एवं च—

द्वितायां चैव यो भार्यां दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत् ॥

तथा—

मृतायां वै द्वितीयायां योऽग्निहोत्रं समुत्सजेत् ।
ब्रह्मोज्झितं विजानीया(२)द्यस्तु कामात् समुत्सृजेत् ॥

तथा—

यो दहेदग्निहोत्रेण स्वेन भार्यां कथञ्चन ।
स स्त्री सम्पद्यते तेन भार्या चाऽस्य पुमान् भवेत् ॥

---

( १ ) तिष्ठेच्च दिन०-इति क० पुस्तके पाठः ।
( २ ) 'यस्तु'-इत्यारभ्य 'सम्पद्यते'—इत्यन्तो ग्रन्थः क० पुस्तके नास्ति ।

इत्यादिवचनानि, तदग्न्याधानसाहित्याप्रतियोगिन्यास्तेनाऽग्निना दाहे योजनीयानीति ॥ ८९ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने विवाहप्रकरणम् ॥

( मिता० ) प्रमीत(१)पतिकाया विधिमुक्त्वा इदानीं प्रमी(२)तभार्यं प्रत्याह —

दाहयित्वेति । पूर्वोक्तवृत्तवतीं आचारवतीं वि(३)पन्नां स्त्रियमग्निहोत्रेण श्रौतेनाऽग्निना तदभावे स्मार्तेन दाहयित्वा पतिः भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा आश्रमान्तरेष्वनधिकृतो वा स्त्र्यन्तराभावे पुनर्दारान् अग्नींश्च विधिवदाहरेत् । अविलम्बयन् शीघ्रमेव । 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज' इति दक्षस्मरणात् । एतच्चाऽऽधानेन सहाऽधिकृताया एव नाऽन्यस्याः । यत्तु—'द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां हि सुरापानसमं हि तत्' ॥ इति । तथा—'मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत् । ब्रह्मघ्नं तं विजानीयाद्यश्च कामात्समुत्सृजेत्' ॥ इत्येवमादि, तदाधानेन सहाऽनधिकृताया अग्निदाने वेदितव्यम् ॥ ८९ ॥

इति विवाहप्रकरणम् ।

( वी० मि० ) इह वर्णाश्रमधर्मेतरधर्मेषु वक्तव्येषु (४)प्रथमं ब्रह्मचर्यमुक्त्वा ब्राह्मणादीनां क्रमेण चतुर्षु वर्णेषु त्रिषु द्वयोरेकस्मिन् विवाहं पुत्रोत्पादनं चोक्तं, तत्र किंजातीयात् किंजातीयायां किंजातीयो जायत इति दिदृक्षायां पूरयन्नेव वर्णानामितरेतरद्वन्द्वोपजातानां सङ्कीर्णानां च सवर्णासवर्णस्त्र्युत्पत्तिमूलकत्वेन तत्प्रसङ्गात् तद्धर्माणां सुबोधाय शुद्धान् वर्णान् सङ्कीर्णांश्च विविनक्ति सार्द्धैः पञ्चभिः श्लोकैः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः ॥ ९० ॥

वर्णस्तावद् द्विविधः शुद्धः सङ्कीर्णश्च । तत्र शुद्धो ब्राह्मणादिश्चतुर्विधः पूर्वं निर्व्यज्योद्दिष्टः । सङ्कीर्णश्च (५)द्विविधः—मुख्यगौणभेदात् ।

---

(१) विधवाया । (२) विधुरं पतिं । (३) मृतां ।
(४) वक्तव्येषु—इति क० पुस्तके नास्ति । (५) च—इति क० पुस्तके नास्ति ।

भिन्नवर्णाभ्यां मातापितृभ्यां साक्षात्परम्परया चोत्पादितो मुख्यः। परम्परासाधारण्योत्पादनोपादानान्न सङ्करजसङ्कराव्याप्तिः। सोऽपि द्विविधोऽनुलोमजप्रतिलोमजभेदात् । उत्कृष्टवर्णादपकृष्टवर्णायां जातोऽनुलोमजः। वैपरीत्ये (१)प्रतिलोमजः। गौणस्तु व्रात्यादिः शुद्धवर्णमुख्यसङ्कीर्णभिन्नः सर्वोऽपि। यदाह मनुः—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायते वर्णसङ्करः ॥

वर्णानां व्यभिचारोऽसवर्णमैथुनम् । अवेद्या अविवाह्याः सपिण्डादिः। स्वकर्मणामुपनयनादीनाम्। चकारेण शुद्धवर्णताविरोधिनिमित्तान्तरपरिग्रहः। तेन सवर्णयोरपि दाम्पत्यानापन्नयोर्मैथुनसम्भवाः कुण्डगोलकानीनसहोढपौनर्भवादयः सङ्कीर्णेष्वेव प्रविशन्ति। अत एव श्रीमहाभारते—

स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः ।

इति। दुष्टास्विति सामान्येनैवोक्तम्। तत्र प्रथमतः शुद्धवर्णान् कारणप्रदर्शनमुखेन परिवाचयति। सवर्णेभ्योऽर्थात् भार्यायाः। सवर्णास्वर्थात् पत्युः। ये जायन्ते ते सजातयो जनकजातीयाः। एवमग्रेऽपि यत्तद्भ्यामध्याहृताभ्यामुद्देश्यविधेयभावेनाऽन्वयो बोद्धव्यः। जायन्त इति समान्योक्तेरपत्यमात्रं विवक्षितम्। एवमग्रेऽपि। एवं च ब्राह्मणात् ब्राह्मण्यां जातो ब्राह्मणः। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। अत्रैकेनैव सवर्णपदेन विवक्षितार्थलाभे द्वितीयसवर्णपदं स्पष्टार्थम्। अव्यभिचारबोधनार्थं तद्विलम्बे। अत्र मनुः—

ब्राह्मणादिषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनु(२)लोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥

तुल्यासु परिणेतृसवर्णासु पत्नीषु यथाविधि परिणीतासु अक्षतयोनिषु परेणाऽसम्भुक्तासु। अत्र सम्भोगः सम्भूतानां सम्भवहेतुर्द्रष्टव्यः। तेन व्यभिचारितास्वपि पत्युर्जातो जनकसवर्ण एव। अन्यथा व्यभिचारिण्यां कृतप्रायश्चित्तायामुत्पन्नस्य जनकजातीयत्वं सर्वशिष्टानुमतं विरुध्येत। अत एव—

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

---

(१) वैपरीत्ये प्रतिलोमजः—इति ख० पुस्तके नास्ति।
(२) 'आनुलोम्येन'—इत्यतः 'अक्षतयोनिषु'—इत्यन्तं क० पुस्तके नास्ति।

इति मनादपध्वंसजन्यमेव सङ्करधर्मनिमित्तत्वेनोक्तम्, अपध्वंसशब्दस्य व्यभिचारार्थत्वात् । सर्वथैव त्या(१)ज्यताप्रयोजकदोषविशिष्टायां जातस्य तु न तथात्वं शिष्टविगानादित्येषा दिक् ।

एवञ्च मूर्धाभिषिक्तादिभ्योऽपि मूर्द्धाभिषिक्तादिस्त्रीषु जाता मूर्द्धाभिषिक्तादय एव । सूतादिभ्यः सूत्यादिषु सूता एव । व्रात्यादिभ्यो व्रात्यादिषु व्रात्या एव भवन्ति । 'यो यादृशाज्जातः स तादृश एव भवती'ति न्यायात् । अयन्तु विशेषः शास्त्रानुमतेषु सजातीयेषु नेत्यपि सूचितमिति मन्तव्यम् । आनुलोम्येन वयसस्तेन वरापेक्षयाऽल्पवयसि स्त्रियामुत्पन्ना इत्यर्थः । 'गृहस्थोऽवरवयसं भार्यां विन्देत्' इत्यादिवचनबलेन वयोऽधिकाया अवेद्यत्वात्तस्यामुत्पादितस्य सङ्कीर्णप्रवेशात् 'अवेद्यावेदनेन च' इति लिखितवचनाच्चेत्याशयः । अन्ये त्वानुलोम्यग्रहणं व्युत्क्रमविवाहितासूत्पन्नानां व्यवच्छेदादाहुः । अत्र पत्नीष्वित्यादिदर्शनात्प्रकृतेऽपि 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनाऽभिधानात् पत्नीविन्नाशब्दयोः सम्बन्धिशब्दत्वेन वेत्तुर्जनकत्वपर्यवसानात् कुण्डगोलकादीनां जनकजातीयत्वाभावः स्पष्टमेव प्रतीयते । दर्शितश्चैषामनुपदमेव सङ्कीर्णातिरिक्तस्य तृतीयस्य प्रकारस्य प्रसक्तिः । अत एव देवलः—

द्वितीयेन तु यः पित्रा सवर्णासु प्रजायते ।
अव्यवाट इति ख्यातः शूद्रधर्मा स जातितः ॥

एवमादीनि वचनान्तराण्यपि तत्र द्रष्टव्यानि । क्षेत्रजस्तु मातृ(२)समानजातीयो नियोगस्मरणात् शिष्टाचाराच्च । तथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्याहुः । इदं पुनरत्राऽवधेयम् । सर्वमिदं यथायथं ब्रह्मत्वादिपरिचायकमात्रं, न तु तत्स्वरूपं ब्राह्मणत्वादिघटितत्वपर्यवसानेनाऽऽत्माश्रयापत्तेः । न च जनकयोरपि ब्राह्मण्याद्युक्तेनैव परिचेयमिति, अनवस्थाऽनादित्वात् परिचायकान्तरसम्भवात् व्यञ्जकाननुगमस्याप्रदोषत्वादित्यादि तत्तद्दर्शनचतुरैश्चिन्तनीयम् ।

जनकसवर्णानामपि स्वमध्ये किञ्चिद्वैलक्षण्यं प्रसङ्गादाह—'अनि-

(१) त्याज्यता—इति ख० पु० पाठः ।
(२) 'मातृसमानजातीय'-इत्यारभ्य 'सन्तो'-इत्यन्तोंऽशो नास्ति क० पुस्तके ।

न्द्येष्वि'ति । अनिन्द्येषु ब्राह्मादिषु चतुर्षु । सप्तमी अभिमतसम्बन्धमात्रे । तेनाऽनिन्द्याविवाहेनोढासु ये पुत्रा जायन्ते ते सन्तानवर्द्धनाः सन्ततिवृद्धिहेतवो भवन्ति । उपलक्षणमेतत्—

तथा च मनुः—

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥
(१)कामसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु तु शिष्टेषु नृशंसाऽनृतवादिनः ।
(२)जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥

ब्राह्मणविषयमेतदित्युक्तप्रायम् । तथा—

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत् ॥

अत्राऽवेद्यायामपि विवाहस्य निन्दितस्य सम्भवात्तज्ज्ञानामवेद्यावेदनामूलकत्वाज्जनकासवर्णत्वं सामान्यत एव नाशङ्कनीयमिति । केचित्तु 'अनिन्द्येष्वि'त्यादि पूर्वैकवाक्यतापन्नमेव । अनिन्द्येष्वनिषिद्धेष्वित्यर्थः । पुत्रपदं पुत्रमात्रपरं, सन्तानेत्यादिस्तुतिरित्याहुः ॥ ९० ॥

( मिता० ) ब्राह्मणस्य चतस्रो भार्या भवन्ति क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेत्युक्ता तासु च पुत्रा उत्पादयितव्या इत्युक्तम् । इदानीं कस्यां कस्मात् कः पुत्रो भवतीति विवेक्तु(३)माह—

सवर्णेभ्य इति । सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयो मातृपितृसमानजातीयाः पुत्रा भवन्ति । 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनोपसंहाराद्विन्नासु सवर्णास्विति सम्बध्यते । विन्नाशब्दस्य सम्बन्धिशब्दत्वाद्वो(४)ढृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः । अतश्चाऽयमर्थः संवृत्तः । उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजाती-

(१) इदं सार्द्धं पद्यं ख० पुस्तके नास्ति । रूप–इति मनौ ।
(२) अत्र कात्यायनः—इति ख० पुस्तकेऽधिकम् ।
(३) विवेकमाह. ख० । (४) वोढेभ्यः. क० ।

या भवन्ति । अतश्च कुण्डगोलककानीनसहो(१)ढजादीनामसवर्णत्वमुक्तं भवति । ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते । 'शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इति स्मरणात् । अपध्वसजा व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते । ननु कुण्डगोलकयोर(२)ब्राह्मणत्वात् श्राद्धे प्रतिषेधोऽनुपपन्नो, न्यायविरोधश्च । यो यज्जातीयाद्यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति । यथा गोर्गवि गौः, अश्वादश्वायामश्वः, तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम् । तथा कानीनपौनर्भवादीननुक्रम्य—'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' (३)इति वक्ष्यमाणवचनविरोधश्च । नैतत्सारम् । ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः । यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः । न च न्यायविरोधः । यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा । ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथास्मरणं भवति । यथा समानेऽपि ब्राह्मण्ये कुण्डिनो (४)वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रम्, तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्चैतदेव जातिलक्षणम् । न चाऽनवस्था अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् । 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति तूक्तानुवादत्वाद्यथासम्भवं व्याख्यास्यते । क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च । यथा धृतराष्ट्रपाण्डुविदुरा क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसङ्गेन । किं चाऽनिन्द्येषु ब्राह्मादिविवाहेषु पुत्राः सन्तानवर्धना अरोगिणो दीर्घायुषो धर्मप्रजासम्पन्ना भवन्ति ॥ ९० ॥

( वी० मि० ) अथ सङ्कीर्णेषु प्रदर्शनीयेषु प्रथममनुलोमजानाह द्वाभ्याम्—

विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां, विशः स्त्रियाम् ॥
जातोऽम्बष्ठस्तु(५)शूद्रायां निषादः पारशवोऽपि वा ॥९१॥

---

(१) सहोढ दीना क० । (२) ब्रह्मणत्वे ख० ।
(३) इति वचन ख० । (४) वसिष्ठो गोतम ख० ।
(५) अम्बष्ठ शूद्रयां निषादो जात पारशवोऽपि वा इति मुद्रितपुस्तके पाठः ।

ब्राह्मणाद्विन्नासु क्षत्रियावैश्याशूद्रासु जाता यथाक्रमं मूर्द्धाभिषिक्ताम्बष्ठनिषादसंज्ञा भवन्ति। निषादो नामाऽपरोऽपि मत्स्यघातकर्मा, तद्व्यवच्छेदाय प्रकृतनिषादस्य संज्ञान्तरमुक्तम्। 'पारशवोऽपि वा' इति नवाक्षरः पादः। वाशब्दश्चार्थेऽव्ययसमुदायोऽनतिरिक्तार्थः। केचित्तु पारशवो निषादोऽपि, चकारादन्योऽपि निषाद(१) इति व्याचक्षते। यत्तु 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एवे'ति शङ्ख(२)वचनं तत् क्षत्रियादिधर्मप्राप्त्यर्थमौपचारिकं न पुनर्मूर्द्धाभिषिक्तादिजातिनिषेधार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा विरोधात्। अत एव मनुः—

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते॥

अनन्तरस्त्रीजाः अनन्तरोक्तास्वनन्तरैकान्तरात् द्व्यन्तर(३)स्त्रीषु जाताः। मातृदोषात् मातृजातिदोषात् अनन्तरनाम्नः अनन्तरस्त्रीजातिनाम्नः। नामग्रहणात् मातापितृव्यतिरिक्तसङ्कीर्णजातित्वेन जनकजात्यभावेऽपि मातृजात्या व्यपदिश्यन्त इत्यर्थः। एतद्विषयमेव मातृतो जातिकल्पनेति। अतश्च मूर्द्धाभिषिक्तादीनां क्षत्रियाद्युक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादि कार्यमिति नि(४)बन्धारः। अत एव मूर्द्धाभिषिक्तो 'ही'ति हिशब्देनोक्तार्थमेवाऽवधारयति॥ ९१॥

( मिता० ) सवर्णानुक्त्वा इदानीमनुलोमानाह—

विप्रादिति। ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तो नाम पुत्रो भवति। वैश्यकन्यायां विन्ना(५)यामुत्पन्नोऽम्बष्ठो नाम भवति। (६)शूद्रायां विन्नायां निषादो नाम पुत्रो भवति। निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमः स माभूदिति पारशवोऽयं निषाद इति संज्ञाविकल्पः। विप्रादिति सर्वत्राऽनुवर्तते। यत्तु 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति। वैश्येन शूद्रायामुत्पादितः (१)शूद्र एव भवति'

---

( १ ) अत्र 'अपि'—इत्यधिकं ख० पुस्तके। ( २ ) शङ्खवचनं—इति-ख० पुस्तके नास्ति।
( ३ ) व्यतिरिक्तस्त्रीषु—इति ख. पुस्तके पाठः। ( ४ ) निबन्धात्—इति क. पुस्तके पाठः।
( ५ ) विन्नायामम्बष्टो. ख०। ( ६ ) शूद्रायां निषादो ख०।
( १ ) शूद्र इति क०।

इति शूद्रस्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा। अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादिकं कार्यम्। प्रागुपनयनात्कामचारादि पूर्ववदेव वेदितव्यम्॥ ९१॥

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ॥
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥ ९२॥

(वी० मि०) शूद्री शूद्रा। क्षत्रियात्तु वैश्यायां शूद्रायां जातः क्रमेण माहिष्यः उग्रश्च स्मृतिपूक्तौ। वैश्यात्तु शूद्रायां जातः करणः स्मृतः। 'सर्वेभ्यः सवर्णास्वि'त्यादावुक्ताः सर्वाः स्त्रीर्विशिनष्टि। विन्नास्विति विवाहितास्वित्यर्थः। अविन्नास्वपि जातानां क्षेत्रजादिपुत्राणां वर्णत्वाभ्युपगमाद्विन्नास्विति शास्त्रविहितपुत्रोत्पादनप्रकारोपलक्षणमिति केचित्। एष 'सवर्णेभ्य' इत्यत्रादावुक्तो विधिरपत्यजातिविवेकरूपः। अत्र गौतमः—'अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः'। अस्यार्थः—सवर्णभार्योत्पन्ना अनुलोमाः। तत्र ब्राह्मणस्याऽनन्तरा क्षत्रिया तस्यां तेनोत्पन्नः सवर्णसंज्ञः। क्षत्रियात्तदनन्तरायां वैश्यायामम्बष्ठः, वैश्यात्तदनन्तरायां शूद्रायामुग्रः, ब्राह्मणादेकान्तरायां वैश्यायां निषादः, क्षत्रियादेकान्तरायां शूद्रायां दौष्यन्तः, ब्राह्मणात् द्व्यन्तरायां शूद्रायां पारशवः इति। अत्र संज्ञाविकल्पेन स्मृतीनामविरोध इति। एवमनुलोमजाः सङ्कीर्णाः षडुक्ताः॥ ९२॥

(मिता०) वैश्याशूद्र्योरिति। वैश्यायां शूद्रायां च विन्नायां राजन्यान्माहिष्योग्रौ यथाक्रमं पुत्रौ भवतः। वैश्येन शूद्रायां करणो नाम पुत्रो भवति। एष सवर्णमूर्धावसिक्तादिसंज्ञाविधिर्विन्नासूढासु स्मृत उक्तो वेदितव्यः। एते च मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः॥ ९२॥

(वी० मि०) अथ विलोमजानाह द्वाभ्याम्—

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा॥
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः॥ ९३॥

ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहचाण्डाला

भवन्ति । तथेति स्पृश्यत्वादिना सूतसदृश इत्यर्थः । चाण्डालस्तु सर्वेषां वर्णानां धर्मेभ्यो बहिःकृतः तत्तद्वर्णधर्मानधिकारीत्यर्थः । न तु सामान्यत एव धर्मानधिकारीति स्वजा(१)तिशोधनम् । 'सर्वजनप्रणामस्तितिक्षा व्यवहारशुद्धिरपराऽवमानः स्वभृत्यपरिपोषणं प्रधानकर्मवर्ज्जनमिति चाण्डालधर्माः' इति देवलवचनविरोधात् ॥९३॥

( मिता० ) प्रतिलोमजानाह—

ब्राह्मण्यामिति । ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहकचण्डालाख्याः पुत्रा भवन्ति । तत्र चण्डालः सर्वधर्मबहिष्कृतः ॥ ९३ ॥

क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ॥
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९४ ॥

( वी० मि० ) क्षत्रिया वैश्यात् मागधं, शूद्रात् क्षत्तारं, वैश्या शूद्रादायोगवं सुतं जनयामासेति वृत्तकीर्त्तनेन पुराकल्परूपेण प्रकृतमर्थं द्रढयति । एवकारेण सर्वेषु प्रतिलोमजेषु व्यपदेशान्तरं व्यवच्छिनत्ति । तेनाऽनुलोमजानामौपचारिकमातृजातिव्यपदेशवत्प्रतिलोमजानां स नास्तीति पर्यवसितार्थः । यद्वा क्षत्रियैव शूद्रादेवेति भिन्नक्रमेणैवकारेण पुराणेषु क्षत्तृपदेनोच्यमानेऽपि विदुरे क्षत्तृत्वजात्यभावमभिप्रैति । अथवा क्षत्तारमेव । न तु प्रकृतपुराणविरोधेनाऽक्षत्तारं(२) क्षत्तृपदस्य नामाऽर्थत्वादित्याशयः । चैवशब्दौ क्षत्रियावैश्यान्वितावन्यव्यवच्छेदार्थौ । एतेषां च—

सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम् ।
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥
मत्स्यघातो निषादानां त्वष्टिस्त्वा(३) योगवस्य च ।
क्ष(४)त्त्रुग्रपुक्कसानां तु विलौकोवधबन्धनम् ॥
चण्डालश्वपचानान्तु बहिर्ग्रामात्प्रतिश्रयः ।
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ॥
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ।

( १ ) जाति—इत्याधिकं ख० पुस्तके । ( २ ) विरोधे क्षत्तारं—इति ख० पुस्तके पाठः ।
( ३ ) निषादानामायोगव्यस्य रक्षणम्—इति क० ख० पुस्तकयोः पाठः ।
( ४ ) क्षत्तुश्च पुक्कपुंसां च—इति क० ख० पुस्तकसंमतः पाठः ।

धिग्व(१)णानां चर्मकार्यं वेणानां भाण्डवादनम् ।

इत्यादिभिर्मनुनोशनसा च प्रदर्शयतैव(२) द्राक् परिचयप्रकारोऽपि दर्शित इत्यलं विस्तरेण ॥ ९४ ॥

(मिता०) किञ्च—

*क्षत्रियेति* । *क्षत्रिया योषित् वैश्यान्मागधं नाम पुत्रं जनयति । सैव शूद्रात्क्षत्तारं पुत्रं जनयति । वैश्ययोषिच्छूद्रादायोगवं पुत्रं जनयति ।* एते च सूतवैदेहकचण्डालमागधक्षत्त्राऽयोगवाः षट् प्रतिलोमजाः । एतेषां च सूनय औशनसे मानवे च द्रष्टव्याः ॥ ९५ ॥

(वी० मि०) एवं विलोमजाः षट् सङ्कीर्णा उक्ताः, इदानीं वर्णसङ्कीर्णाभ्यां जातं सङ्कीर्णतरं साक्षादेव वर्णजातत्वाद्वर्णसङ्करोदाहरणेनैवोपलक्षणरीत्योदाहृतं विव(३)क्षन् तमुपेक्ष्यैव सङ्कीर्णाभ्यां जातं सङ्कीर्णतममुदाहरति—

माहिष्येण करण्यान्तु रथकारः प्रजायते ॥

स रथकारसंज्ञ इत्यर्थः । 'वैश्यात् शूद्रायां जातो रथकारः' इति बौधायनोक्तं तु मतान्तरं रथकारशब्दस्य नामार्थत्वादिति स्मर्तव्यम् । तुशब्दो रथकार इत्यनन्तरं योज्यः । तेनाऽन्येऽपि सङ्कीर्णतमा लभ्यन्ते । आनन्त्यात्तु विशिष्य नोपदर्शिताः । रथकारस्तु प्रकर्षाधिदोषाद्विशिष्योक्तः, तत्प्रदर्शनार्थमे(४)व प्रजायत इति प्रशब्द उपात्तः । अत एव शङ्खः—'क्षत्रियवैश्यानुलोमानन्तरजो रथकारः, तस्य चेज्यादानोपनयनसंस्कारक्रियाः, अश्वप्रतिष्ठारथसूत्रवास्तुविद्याऽध्ययनवृत्तिता च' इति । तेषु केचित् शास्त्रे संज्ञासंव्यवहारज्ञापनायोपदर्श्यन्ते । तत्र मनुः—

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धि(५)ग्वणः ॥

उग्रा चाऽसौ कन्या चेति समासः । एवमग्रेऽपि । तथा—

जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः ।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः स्मृतः ॥

---

(१) धिग्वना—इति ख० पुस्तके, धिग्वना—इति च क० पुस्तके पाठौ ।
(२) दर्शतैव—इति क० पु० पाठः । (३) विवक्षन् —इति ख० पुस्तके नास्ति ।
(४) एव—इति क० पुस्तके नास्ति ।
(५) 'धिग्वण'—इत्यारभ्य 'निषाद्यां तु'—इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति ।

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते।
वैदेहकेन त्वम्बष्ठयामुत्पन्नो वेण उच्यते॥

गौणसङ्कीर्णमाह मनुः—

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्।
तान् सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत्॥
व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः।
आवन्त्यवाटधानौ च पुष्पधः शैख एव च॥

व्राह्मत्वादिति सवर्णास्वित्यनुषज्यते। तेन व्रात्याद्ब्राह्मणाद् व्रात्यायामेव ब्राह्मण्यामित्यर्थः। एकस्यैव भूर्जकण्टकादीनि पञ्च नामानि देशभेदेन प्रसिद्धानि। एवं व्रात्यक्षत्रियाज्जातेषु झल्लमल्लादिसप्तसु व्रात्यवैश्याज्जातेषु सुधन्वादिपञ्चसु च ज्ञेयमिति कुल्लूकभट्टः। नारायणस्तु भूर्जकण्टकः सवर्णयोरपत्यम्, भूर्जकण्टकस्त्रियां व्रात्याद्ब्राह्मणादावन्त्यः, आवन्त्यायां वाटधान इति पूर्वपूर्वजातिषु स्त्रीषु व्रा(१)त्येन ब्राह्मणेन जननमुत्तरोत्तरेषाम्। एवं झल्ल(२)मल्लादिषु सुधन्वादिषु च स्वयमूह्यमित्याह। तथा—

झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च।
नटश्च करणश्चैव खसो द्रविड एव च॥
वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च।
चारूपश्च विजन्मा च मैत्रः सात्वत एव च॥

नट इत्यत्र सत्य इति चारूप इत्यत्र कारुप इति क्वचित्पाठः
अथोपलक्षणतया कांश्चित्सङ्कीर्णाननुवृत्त्या सह दर्शयति मनुः—

मृतवस्त्रभृत्सु नारीषु गर्हितान्नाशनासु च।
सैरिन्ध्रं(३) वागुरावृत्तिं सूते दस्युरयोगवे॥
मैत्रेयकन्तु वैदेहो माधू(४)कं सम्प्रसूयते।
नॄन् प्रशंसत्यजस्रं यो घण्टा(५)ताडोऽरुणोदये॥
निषादो मार्गवं सूते दासं नौकर्मजीवनम्।
कैवर्त इति यं प्राहुरार्यावर्तनिवासिनः॥

(१) व्रात्येन-इति क० पु० पाठः। (२) झल्लादिषु च स्वय०-इति ख० पुस्तके पाठः।
(३) सैन्धवं वैधवं-इति क० ख० पुस्तकयोः पाठौ। (४) माधुका-इति ख० पु० पाठः।
(५) घण्टास्वेताऽरु०-इति क० पु० पाठः।

प्रसाधनोपचारज्ञमदासं दासजीवनम् ।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः ॥

दस्युर्वक्ष्यमाणः । माधूकं मधुरस्तुतिपाठकं, दासं दासापरनामानम् । तथा—

कारा(१)वरो निषादात्तु चर्मकारः प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥
चण्डालात्पाण्डुसोपाकः त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥
चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् ।
पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥
निषादस्त्री [illegible] चण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरं सूते बाह्यानामपि गर्हि(२)तम् ॥
सङ्करे जातयस्त्वेताः पितृमातृ(३)प्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥

गौणसङ्कीर्णान्तरमाह स एव—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदापह्लवाश्चीनाः किराता दरदाः खशाः ॥
मुखबाहूरुपज्जानां लोके ये जातय(४)पृथक् ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥

एते प्रसिद्धनामानः सङ्कीर्णाः संव्यवहारार्थमुदाहृताः ।

ये त्वनुलोमजाः षट् प्रतिलोमजाश्च षट् व्रात्यास्त्रयः इति पञ्चदश प्रकृतिभूतास्तेषामुच्चनीचासवर्णस्त्रीषु तुल्यासु च ये जायन्ते तेषां तासु तेषामपि तासु जायमानाः सङ्कीर्णप्रभेदा अनन्तप्रकारा इति ॥

---

(१) कारावरो इति कारवरो-इति च ख० क० पु० पाठौ ।
(२) गर्हित -इति क० पु० पाठः ।
(३) विगर्हिता—इत्युभयपुस्तकमतः पाठः ।
(४) या लोके जातयो बहिः—इति मुद्रितमनुपुस्तके पाठः ।

(वी० मि०) एवं सङ्कीर्णानुक्त्वा तद्धर्मानतिसङ्क्षेपेण विवक्षन्नाह—

असत्सन्तस्तु विज्ञेयाः प्रतिलोमाऽनुलोमजाः ॥ ९५ ॥

प्रतिलोमजाः सूतादयोऽनुलोमजा मूर्द्धाभिषिक्तादयः यथाक्रममसन्तोऽसाधवोऽनुलोमजादपकृष्टा मातृवर्णधर्मानधिकारात् सन्तः साधवः प्रतिलोमजादुत्कृष्टा मातृवर्णधर्माधिकारात् विज्ञेया मन्वादिशास्त्रानुसारतो वैविध्येन ज्ञेयाः। अत्र प्रतिलोमानुलोमजा इति साक्षात्परम्परासा(१)धारणं जन्यत्वमभिप्रेतम्। तेन मूर्धाभिषिक्तजातीयस्त्रीपुंसाद्योः सूतजातीयस्त्रीपुंसाद्योर्वा जातानामपि ग्रहणमित्युक्तप्रायम्। तुशब्देन चकारसमानार्थेन प्रतिलोमानुलोमजास्त्विति क्रमवता सपिण्डस्त्र्यादिवेदेन मूलकान् 'असपिण्डां यवीयसी'मित्यादिना विवाहप्रकरणीयवचनेन कटाक्षितान् 'सावित्रीपतिता व्रात्या' इत्यनेनोपनयनप्रकरणे सूचितान् व्रात्यानन्यांश्चैवंविधान् गौणसङ्कीर्णान् समुच्चिनोति। तेऽपि स्वमध्येऽसत्सन्तो विज्ञेया इत्यर्थः। अत्र शुद्धानां ब्राह्मणादिवर्णानां स्वस्वव(२)र्णधर्माधिकारः स्फुट एव। सङ्कीर्णानां तु धर्मान् वक्तुमाह मनुः—

स्त्रीष्व(३)नन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषेण दूषितान् ॥

स्त्रीषु विवाहितासु ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायामुत्पादितान् मातृदोषेण गर्हितानपि कथञ्चित्सदृशानेवाऽऽहुर्न तु पितृजातीयानपीत्यर्थः। यद्वा मातृदोषेण दूषितान् तत्सदृशान् मातृवर्णधर्माधिकारिण इति वचनात् पितृसदृशानपीति। तथा—

स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः।
शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥

स्वजातिजाः द्विजः सवर्णायामुत्पादितास्त्रयः। अनन्तरजाः ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायामुत्पादितास्त्रयो मूर्द्धाभिषिक्तमाहिष्यकरणाख्याः सङ्कीर्णाः। एते षट् द्विजधर्मिण

(१) साधनं-इति ख० पु० पाठः।

(२) स्वस्ववर्णाधिकारः-इति क० पु० पाठः।

(३) इदं पद्यं नास्ति ख० पुस्तके।

उपनयनमर्हन्तीत्यर्थः इति केचित्, तच्चिन्त्यम्। अन्ये तु स्वजातिजाः सवर्णायामुत्पन्नाः शुद्धवर्णाः अनन्तरजा अनुलोमजाः। तत्किं शूद्रजात्युत्पन्ना अपि नेत्याह षडिति द्विजात्योरेवोत्पन्ना इत्यर्थ इति व्याचक्षते। एतच्च 'पुत्रा येऽनन्तरस्त्रीजाः' इत्यादिवचनानुसारीति मन्तव्यम्। अपध्वंसजा व्यभिचारजाः। उपलक्षणमेतत्, तेन द्विजधर्माधिकारितया शूद्र(१)धर्मानधिकारितया च शास्त्रे प्रतिपादिता इति पर्यवसितार्थः। सर्वपदोपादानप्रयोजनमपीदमेव। सधर्माणः समानधर्माः। तथा—

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥

सदः सत्त्वं प्रजारूपं अपगताः प्रजाः अपसदा इति नारायण। अत्र वर्णानेकरूपेणाऽभिधान शुद्धशूद्रापेक्षयोत्कृष्टधर्मात्र सामान्यमादाय। अवान्तरधर्मविशेषस्त्वेषां दर्शित एवेति स्मर्तव्यम्॥९५॥

( मिता० ) सङ्कीर्णसङ्करजात्यन्तरमाह—

माहिष्येणेति। क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्व कार्य वचनात्। यथाह शङ्खः—'क्षत्रियवैश्यानुलोमान्तरो(२)त्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च' इति। एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्यादनुलोमसङ्करजात्यन्तरता उपनयनाश्रिप्राप्तिश्च वेदितव्या तयोर्द्वि(३)जातिरवात्। संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः। एतच्च प्रदर्शनमात्रमुक्तम्। सङ्कीर्णसङ्करजा(४)तीनामानन्त्याद्वक्तुमशक्यत्वात्। अत एतावदत्र विवक्षितम्—असन्तः प्रतिलोमजाः सन्तश्चाऽनुलोमजा ज्ञातव्या इति॥ ९५॥

( वी० मि० ) ननु प्रतिलोमजापेक्षयाऽनुलोमजानां सामान्यत एवोत्कृष्टत्वमुक्तं, तथाऽयुक्त निषादजातीयानां सूतादिजातीयेभ्यस्तदसम्भवादुभयेषामपि शूद्रधर्माधिकारादित्याशङ्कायां ब्राह्मणत्वादेः प्रयोजकरूपं परिचायकान्तरं दर्शयन्नेवाऽनुलोमजानां मूर्धाभिषिक्ता-

(१) शूद्रधर्मानधिकारितया-इति क० पु० पाठः।
(२) रोत्पन्नो ख०। (३) द्विजत्वात् क०। (४) जनना क० ग०।

दीनां सर्वेषामेव ब्राह्मण्यादिजातिप्राप्तियोग्यतारूपप्रतिलोमजादुत्कर्षान्तरं दर्शयति—

जात्युत्कर्षो युगे ज्ञेयः पञ्चमे (१)सप्तमेऽपि वा ॥
व्यत्यये कर्मणां साम्यं पूर्ववच्चाऽधरोत्तरम् ॥ ९६ ॥

सवर्णेभ्यः सवर्णास्वित्यादिना जातिप्राप्तौ कारणमुक्तमिदानीं कारणान्तरमप्याह जात्युत्कर्ष इत्यादीति केचिदवतारयन्ति । जातयो मूर्धाभिषिक्तादयस्तासामुत्कर्षो ब्राह्मणत्वादिप्राप्तिरूपः स सप्तमे पञ्चमे, अपिशब्दात् षष्ठे वा युगे बोद्धव्यः । 'युगे जन्मनी'ति विश्वरूपः । 'स्त्रीपुंसयुग्मम्' इति केचित् । वाशब्दो व्यवस्थिते विकल्पे । व्यवस्था च—निषादी ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति साऽपि ब्राह्मणेनाऽन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणम् । अम्बष्ठाप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणम् । मूर्द्धाभिषिक्ताऽप्यनेन प्रकारेण चतुर्थी ता(२)दृशी पञ्चमं ब्राह्मणं जनयति । एवमुग्रापि पञ्चमी क्षत्रियोढा षष्ठं क्षत्रियम् । माहिष्यापि चतुर्थी तादृशी पञ्चमं क्षत्रियं जनयति । एवं करण्यपि चतुर्थी वैश्योढा पञ्चमं वैश्यं जनयतीत्येवमन्यत्राऽप्यूह्यमिति मिताक्षरा । मनुटीकायां तु अपिशब्देन तृतीय इति पक्षान्तरं गृह्यत इत्युक्तमुदाहृतं च—क्षत्रिया(३)ज्जातस्य शूद्रस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ, वैश्याज्जातस्य तृतीये ताविति तुल्यन्यायत्वा(४)त् । ब्राह्मणाद्वैश्यायां जातस्य पञ्चमे क्षत्रियायां जातस्य तृतीये जन्मनि ताविति । एवमन्यत्रापि न्यायतौल्येनोहनीयमिति सङ्क्षेपः । क्षत्रियत्वादेः प्रयोजकं परिचायकान्तरं दर्शयन्नेव 'असत्सन्तास्त्वि'ति । चार्थतुशब्देन समुच्चितानां मध्ये उक्तप्रायान् व्रात्यादीनुपेक्ष्य सर्वथैवाऽनुजान् विवृणोति । कर्मणां व्यत्यर्थानां याजनादीनां व्यत्यये विपर्ययेऽन्यजातीयेनाऽन्यजातीयवृत्त्युपजीवने साम्यं यज्जातीयवृत्तिमत्तज्जातीयो य उपजीवति तज्जातीयत्वं तस्य भवति । एतच्चोत्कृष्टेनाऽपकृष्टवृत्त्युपजीवने । वैपरीत्ये तु वर्णबाह्यत्वमेव, तच्चशब्देन समुच्चिनोति । अत एव 'वृत्तिमातिष्ठेरन्नि'त्यनुवृत्तौ वसिष्ठः ।

(१) पञ्चमे सप्तमेऽपि ख० । (२) सप्तमे पञ्चमेऽपि वा—इति ख० पु० पाठः ।
(३) क्षत्रियादुत्पन्नस्य—इति ख० पु० पाठः । (४) च—इत्यधिकं क० पुस्तके ।

न च कदाचिज्ज्यायसीमिति। अत एवाह पूर्ववदित्यादि। पूर्ववद्वर्णसङ्कीर्णेष्विति प्रवृत्तिसङ्कीर्णेष्वपि। अधरत्वमपकृष्टत्वमुत्तरत्वमुत्कृष्टत्वं ज्ञेयम्। एकशब्दार्थो भावप्रधानो द्वन्द्वः। भवति नपुंसक एव वा 'स नपुंसकम्' [पा० २।४।१७]इति लिङ्गसङ्गः। यथा प्रातिलोम्येन वर्णसङ्कीर्णोऽपकृष्टः, आनुलोम्येन चोत्कृष्टस्तथा वृत्तिसङ्की(१)र्णेऽपि। यथा च पूर्वत्र सप्तमादौ जन्मनि ब्राह्मणत्वादिप्राप्तिस्तथोत्तरत्रापीत्यर्थः। तेन ब्राह्मणजाता कन्या शूद्रवृत्तिना ब्राह्मणेन कन्यां प्रसूयते साऽपि शूद्रवृत्तिना ब्राह्मणेन कन्यान्तरमित्येवम्प्रकारेण सप्तमस्य शूद्रत्वम्। एवं च क्षत्रियपरम्परायां षष्ठस्य वैश्यपरम्परायां पञ्चमस्येत्यादि स्वयमूह्यम्।

अन्ये तु शूद्रवृत्तिना ब्राह्मणेन जनितो ब्राह्मणस्तेनाऽपि तादृशेनैव जनितो ब्राह्मण इत्येवम्प्रकारेण सप्तमः शूद्रः। एवं क्षत्रियवैश्यपरम्परायां षष्ठः पञ्चम इत्येवमूह्यमित्याहुः। एतच्चाऽना(२)पदि।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥

इति मन्वादिभिरापदि हीनवृत्त्यभ्यनुज्ञानादिति।

अन्ये तु पूर्ववच्चेति यथा वर्णसङ्कीर्णा अनुलोम(३)जाः प्रतिलोमजाश्च तथा सङ्कीर्णजाता ये दर्शितास्तेषामप्युक्तन्यायेनोत्कर्षापकर्षौ द्रष्टव्यावित्यर्थ इति व्याचक्षते।

व्यत्यये कर्मणामित्यादि। कर्मव्यत्यये क्रियावैपरीत्ये साम्यम्। कस्य कर्मव्यत्यये केन सह साम्यं तत्राह-अधरोत्तरमिति। उत्तरस्याऽधरजातिसाम्यं तदपि पूर्ववद्विवाहपरम्परया सप्तमे पञ्चमे तृतीये वा जन्मनीत्यर्थ इत्यपरे। अत्र मनुः—

शूद्रायां ब्राह्मणाज्जातो ब्राह्मणोऽप्येति शूद्रताम्।
क्षत्रियाज्जात एवं हि वैश्याज्जातस्तथैव च॥

अत्र शङ्कते ब्राह्मणत्वादिप्रयोजकत्वेनोक्तानां कारणविशेषाणाम-

(१) वृत्तिसङ्कीर्णेऽपि इति क० पु० पाठः।
(२) अन्यापदि-इति ख० पु० पाठ।
(३) वर्णसङ्कीर्णा अनुलोमजाः इति क० पुस्तके नास्ति।

ननुगमात्कथं तथात्वमिति, तत्रोच्यते-तृणारणिमणीनां वन्हित्वा-वान्तरतत्तज्जात्यवच्छिन्ने वन्हाविव ब्राह्मणादीनामपि ब्राह्मणादि-कारणानां ब्राह्मणत्वाद्यवान्तरतत्तज्जात्यवच्छिन्ने ब्राह्मणादौ हेतुता। यदाहुर्न्यायकुसुमाञ्जलावुदयनाचार्याः-'उद्भि(१)दवृश्चिकवद्वर्णाः' इति। उद्भि-दस्तण्डुलीयकशाकादयः ते यथाऽऽद्यास्तण्डुलकरणादुत्तरे तण्डुली-यकात् वृश्चिका(२)द्या गोमयादुत्तरे वृश्चिकादेव वर्णा अपि ब्राह्म-णादयः आद्याः समयविशेषसचिवादृष्टविशेषादुत्तरे ब्राह्मणादिभ्यो जायन्त इत्यर्थः। इदं च प्रलयाङ्गीकर्तृणाम्। अन्यथा तु विश्वामित्रा-दय उदाहर्तव्याः। न चैवं ब्राह्मणादिसामान्येष्वनुगतानि कारणा-न्यसमर्थितान्येवेति शङ्काऽस्त्येव, तेष्वपि तत्तददृष्टविशेषत्वादीनां सा-धारणानां जनकतावच्छेदकत्वात्। नन्वेवमवान्तरकार्यतायां मा-नाभाव इति चेत् मैवं, वन्हौ प्रत्यक्षादिना तृणादीनामिव ब्राह्मणा-दिष्वपि स्मृत्यादिना ब्राह्मणादीनामननुगतानां कारणताबोधनादिति गौतमीयादयः। अननुगतेषु कारणेष्वेकजातीयशक्त्यभ्युपगमान्नाऽन-नुगमशङ्कापीति जैमिनीया इति कृतमतिप्रसक्तानुप्रसक्त्या ॥ ९६ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने वर्णजातिप्रकरणम्।

---

(मिता०) सवर्णेभ्यः सवर्णासु जायन्त इत्यादिना वर्णप्राप्तौ कारणमुक्तम्। इदानीं कारणान्तरमाह—

जात्युत्कर्ष इति। जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्म-णत्वादिजातिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे अपिशब्दा-त्षष्ठे वा बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च—ब्रा-ह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं काञ्चि-ज्जनयति, सापि ब्राह्मणेनोढान्यां जनयतीत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा। साप्यनेन

(१) उद्भिद-इति ख० पु० पाठः।
(२) वृश्चिकाद्याऽऽद्या गोमयादुत्तरे-इति क० पुस्तके नास्ति।

प्रकारेण पञ्चमी च (१)षष्ठं ब्राह्मणं जनयति । मूर्धावसिकाप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति । एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं च क्षत्रियं जनयति । यथा करणी वैश्येनोढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् । किञ्च कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो शू(२)द्रवृत्त्या वृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या तयाप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्याऽजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा स(३)प्तमे षष्ठे पञ्चमे वा जन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद्यथा-ब्राह्मणः शूद्रवृत्त्या जीवंस्तामपरित्यजन् यदि पुत्रमुत्पादयति सोऽपि तयैव वृत्त्या जीवन्पु(४)त्रान्तरमित्येवं परम्परया सप्तमे जन्मनि शूद्रमेव जनयति । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम् । क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम् । क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम् । वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम् । वैश्योऽपि शूद्रवृत्त्या जीवंस्तामपरित्यजन्पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति । पूर्ववच्चाधरोत्तरम् । अस्यार्थः—वर्णसङ्करे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः । सङ्कीर्णसङ्करजाताश्च रथकारनिदर्शनेन दर्शिताः । इदानीं व(५)र्णसङ्कीर्णसङ्करजाताः प्रदर्श्यन्ते । अधरे च उत्तरे च अधरोत्तरं यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाम्बष्ठायां वैश्यशूद्राभ्यां निषादीं शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमजाः । एवमन्यत्राप्यूहनीयम् । एवदधरोत्तरं पूर्ववदसत्सदिति वेदितव्यम् ॥ ९६ ॥

इति वर्णजातिविवेकप्रकरणम् ।

---

(१) प्रथम क० । (२) न स्ववृत्त्या ग० । (३) पञ्चमे षष्ठे सप्तमे ख० ।
(४) पुनरप्येवं ख० । (५) वर्णसङ्करजाता ख०।

(वी० मि०) गृहस्थस्य धर्मेषु प्रदर्शनीयेषु बहुतमधर्मोपयोगित्वेन प्रथमतः सप्रपञ्चो विवाहो दर्शितः, इदानीं धर्मान्तराण्यनुक्रमिष्यन्नग्निसाध्ये कर्मणि व्यवस्थामाह—

कर्म स्मार्तं विवाहाऽग्नौ कुर्वीत प्रत्यहं गृही ॥
दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ॥ ९७ ॥

स्मार्तमप्रचुरश्रुतिमूलकस्मृतिबोधितं कर्म, गृह्योक्तपाकयज्ञसायम्प्रातर्होमाष्टकादि लौकिकं च यत् प्रत्यहं कर्म पाकलक्षणं तदपि । गृही गृहस्थाश्रमी 'द्विजः' इत्यग्रे वाच्यमिहाप्यन्वेति । वैवाहिके विवाहसमयगृहीते विवाहसंस्कृते वा तदसम्भवे दायविभागकालगृहीते वाऽग्नावावसथ्याख्ये कुर्यादित्यर्थः । तथा च पारस्करः—'आवसथ्याधानान्तरकाले दायाद्यकाल एकेषा'मिति । दारकाले पाणिग्रहणोत्तरकाले दायविभागोत्तरकाले, अपिशब्दात् प्रेते वा हृते । एतेनाऽग्न्याधाने त्रयः काला दर्शितास्तदतिक्रमे प्रायश्चित्तमिति मन्तव्यम् । अत्र मनुः—

वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानं च पक्तिं चाऽन्वाहिकीं गृहे ॥

श्रौतमिति । प्रचुरश्रुतिप्रतिपादितमग्निहोत्रदर्शपूर्णमासादि कर्म वैतानिकाग्निषु वितानं यज्ञविस्तरः तत्प्रयोजकेषु गार्हपत्याहवनीयदक्षिणाग्निषु कुर्वीतेत्यर्थः । एतच्च श्रौतकर्मणां गृह्यकर्मणां च विधायकेभ्यः कल्पसूत्रेभ्यो गृह्यसूत्रेभ्यः प्राप्तमेव धर्मशास्त्रपुराणादिविहितानां ग्रहयज्ञादिकर्मणां वैवाहिकश्रौताग्निसम्बन्धनिवृत्त्यर्थमनूद्यते इति केचिदाहुः ॥ ९७ ॥

(मिता०) श्रौतस्मार्तानि कर्माणि अग्निसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह—

कर्मेति । स्मृत्युक्तं वैश्वदेवादिकं कर्म लौकिकं च यत्प्रतिदिनं पाकलक्षणं तदपि गृहस्थो विवाहाग्नौ विवाहसंस्कृते कुर्वीत । दायकाले विभागकाल (१)आहृते वा । 'वैश्यकुलादग्निमानीय' इत्यादिनोक्तसंस्कारसंस्कृते । अपिशब्दात्प्रेते वा गृहपतावाहृते संस्कृते एव । ततश्च कालत्रयातिक्रमे(२) प्रायश्चित्तीयते । श्रुत्युक्तमग्निहोत्रादिकं कर्म वैतानिकाग्निषु आहवनीयादिषु कुर्वीत ॥ ९७ ॥

(१) आहृत आहितः । (२) तिक्रमेण प्राय: ग० ।

( वी० मि० ) अथ गृहस्थधर्मेष्वभ्यर्हितत्वादिदानीमाह्निकाऽहोरात्रकृत्यानां यथापूर्वं वक्तव्यत्वेन रात्रिविशेषभागात्मकब्राह्ममुहूर्तकृत्य प्रबोधादिसर्वशेषे वक्तुमुचितमिति दिनप्रवृत्तिसमयकृत्यां शरीरचिन्तामेवोपक्रम्य तदाह 'शरीरचिन्तां निर्वर्त्य' इत्यादिना 'यथाशक्ति न हापये'दित्यन्तेन—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ॥
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्विकाम्(१) ॥ ९८ ॥

शरीरे चिन्ता 'वेगो वर्तते' इत्यादिनिदानविषयिणी यस्याः क्रियायास्तां मैत्रादिरूपां 'दिवा सन्ध्यास्वि'त्याद्युक्तविधिना कृत्वा । 'गृहीतशिश्न' इत्याद्युक्तरीत्या कृत शौचस्य विधिः प्रकारो मृज्जलग्रहणादिरूपो येन स । कृतशौच इति वाच्ये विधिग्रहण (२)शरीरशुद्धिहेतोः स्नानादेरप्युपग्रहाय । प्रातः पूर्वोक्तसमये सन्ध्यामुपासीत कुर्यात्प्रागुक्तविधिनैव । अनुक्तं तु विशेषमाह दन्तेति । दन्तधावन पूर्वं यस्याः तादृशीं सन्ध्यां कर्मकलापविशेषरूपाम् । इह ब्रह्मचर्यादिप्रकरणोक्तानां गृहस्थादेरपि गृहस्थादिप्रकरणोक्तानां च ब्रह्मचर्यादेरपि धर्मत्वेन स्मृत्यन्तरेऽभ्यनुज्ञातानामविशेषेणोभयथाऽन्वयं विवक्षन्नपि महर्षिर्यं(३)कञ्चित्प्रकरणे काञ्चिदेव, काञ्चित्तु प्रकरणान्तर एव दर्शयति । सेयं पुराणाचार्याणां ग्रन्थलाघवादिलक्षणं किञ्चित् सौष्ठवमपि सन्धत्तां शैलीति । शरीरचिन्तादिकं प्रागुक्तमिहापि प्राप्यत एव । ब्रह्मचारिधर्मानितरथाऽऽदिशन् गौतम -'इतरेषां चैतदविरोधी'ति तद्बीजमविरोधमेव पुरस्करोति यद्यपि, तथाप्यादेशापेक्षयोपदेशस्य लघूपायत्वमेव प्रकृते पुरस्कृत्य उक्तमप्युपदिशति । प्रदर्शितलाघवयोस्तु क्वचित्कस्यचिदेव पुरस्कारे विनिगमनार्बीजं स्वयमुत्प्रेक्षणीयं सूक्ष्मेक्षिभिरिति ।

केचित्तु शरीरचिन्ताद्यनुवादेन दन्तधावनपूर्वकत्वमात्रमिह प्रातः सन्ध्यायां विधीयते ब्रह्मचारिण्यप्राप्तत्वात् ।

खट्वासनं च शयनं वर्जयेत् दन्तधावनम् ।

(१) पूर्वकम्—इति ख० पुस्तके पाठः ।
(२) शरीरशुद्धिहेत्व—इत्यधिकं ख० पुस्तके वर्तते ।
(३) किञ्चित्—इति ख० पुस्तके पाठः ।

इति तस्य दन्तधावननिषेधात्। अनुवादप्रयोजनन्तु दन्तधावनस्य स्थानविशेषनियमनमेवेत्याहुः। अत्र--

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्॥

इति कात्यायनात्। प्रथमं दन्तधावनं ततः प्रातःस्नानं ततः प्रातःसन्ध्येति क्रमो लभ्यते, तद्बोधनार्थमेव दन्तान् प्रक्षाल्येति दन्तधावनपूर्विकामिति च। न तु स्नाने सन्ध्यायां च दन्तधावनस्याऽङ्गत्वप्रतिपत्तये।

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः।
तस्मात्पूर्वं प्रयत्नेन भक्षयेद्दन्तधावनम्॥

इति शातातपेनाऽऽचमनवत् स्वतन्त्रस्यैव दन्तधावनस्य शुद्धिहेतुताऽभिधानात्। अत एव--

अलाभे दन्तकाष्ठानां प्रतिषिद्धे तथाऽहनि।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते॥

इति नारसिंहे दन्तकाष्ठाऽलाभे प्रकारान्तरेण शुद्धिरुक्ता। तस्मात् 'क्त्वादेरिह निवृत्ता यूयं परिहरन्निवृत्ता यूयं परिवीयाऽऽग्नेयं पशुमुपाकरोती'त्यत्रेव कालमात्रे तात्पर्यं न त्वङ्गत्वेऽपि। तथा च भगवान् जैमिनिः-'कृतार्थयोः संयोगयोः' इति।

यत्र तु प्रयोजनं साकाङ्क्षं सन्निराकाङ्क्षस्य सन्निधौ पठ्यते तत्रैव क्त्वादेरङ्गाङ्गिभावे पर्यवसानम्। यदाहुः-'फलवत्सन्निधावफलं तदङ्ग'मिति। अत्र शयनादुत्थानं, रात्रिवासस्त्यागः, वासोयुगान्तरपरिधानं, पादहस्तमुखनेत्रप्रक्षालनं, द्विराचमनं, सति वेगे मूत्रपुरीषोत्सर्गः, यथाविधि शौचं, द्विराचमनं ततो दन्तधावनमिति क्रमः। तथा च कात्यायनः—

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।

महाभारते—

प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः।

दक्षः—

उषःकाले तु सम्प्राप्ते शौचं कुर्या(१)द्यथार्थवत्।

(१) कृत्वा यथार्थवत्--इति ख० पुस्तके पाठः।

कात्यायन:—

परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ।
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ॥
ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ।

मन्त्रेण 'आयुर्बल'मित्यादिना वक्ष्यमाणेन । अत्र—

दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरे ततः ।
प्राङ्मुखश्चोपविष्टश्च भक्षयेद्वाग्यतो नरः ॥

इति भारते ।

कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम् ॥

इति विष्णुपुराणादौ च भक्षयेदिति, 'दन्तधावनमधादुदङ्मुखः प्राङ्मुखो वे'ति विष्णुधर्मादावधादिति च दन्तघर्षणमात्रपरं प्राणं पूर्वोक्ताऽऽचमनादिरूपभोजनधर्मप्राप्त्यर्थम् । 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति कौण्डपायिनामयनेऽग्निहोत्रधर्मप्राप्त्यर्थमग्निहोत्रपदवत् । अत एव—

प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।

इति विष्णुना पश्चाद्दन्तधावनकाष्ठस्य त्याग उक्तः । अत एव—

नारदाद्युक्तवार्क्षमष्टाङ्गुल्यमपाटितम् ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत् ॥

इति छन्दोगपरिशिष्टे,

प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ।

इति नारसिंहे च विशोधयेत् धावयेदित्येवोक्तम् । कनीनी कनिष्ठा सकूर्चं चूर्णिताग्रं भुक्त्वेति यतिविषयमित्याहुः । नारदाद्युक्तवृक्षाः खदिरादयः । अष्टाङ्गुलमिति, अत्र द्वादशाङ्गुमिति प्रथमः कल्पः प्रादेशमात्रमिति मध्यमः, अष्टाङ्गुलमिति चरमः । केचित्तु—

द्वादशाङ्गुलं विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
अष्टाङ्गुलं तु वैश्यानां शूद्राणां तु षडङ्गुलम् ॥
चतुरङ्गुलमानेन नारीणां विधिरुच्यते ।
अन्तरप्रभवाणां तु षडङ्गुलमुदाहृतम् ॥

इति स्मृतिमञ्जूषालिखितवाक्यानुसारेण व्यवस्थामाहुः । अत्र नानास्मृतिषु दन्तधावने विहितानि खदिराम्रबिल्वाम्रातकापामार्गादि

रीपतिन्तिणीवेणुपृष्ठवटासनार्ककरञ्जकरवीरशालनिम्बमालत्यर्जुनकदम्बोदुम्बरकटुतिक्तकषायक्षीर(१)काष्ठानि। विहित(२)निषिद्धानि तु करञ्जतिन्तिणीनिम्बशालवटकाष्ठानि: निषिद्धचोद्धानि तु पलाशकोविदारश्लेष्मातकाबिल्वकातिन्दुकशाकवृ(३)क्षसिन्दुवाराशिखण्डीवेणुगर्भपूपमाषकवदरीशमीशिंशपाकपित्थहरीतक्यश्वकर्णामलकाविभीतकधन्वनपीलुपिप्पलेङ्गुदगुग्गुलुशोभाञ्जनपारिभद्रकदलीशाल्मलीमधुराम्लकाष्ठानि। विहितेष्वपि ओष्ठस्पर्शिग्रान्थिकं (४)वृन्तशुष्कं सच्छिद्रं(५)पूतिगन्धि चिक्कनं त्वग्विहीनं पाटितं सद्यश्छिन्नं सपत्रं रक्तकीटाग्निदूषितमशुच्यपरिचितं च निषिद्धम्। अत्र व्यवस्था—मुख्यतो विहितमुपादेयं तदलाभे विहितनिषिद्धं, तदलाभेऽप्यविहितानिषिद्धं सर्वथा नोपादेयम्। आद्यत्रयालाभे द्वादशगण्डूषैरेव शुद्धिः।

अलाभे दन्तकाष्ठानां प्रतिषिद्धे तथाऽहनि।

इत्यादिलिखितनरसिंहपुराणात्। प्रतिषिद्धे प्रतिपदादौ। अत्र नरसिंहपुराणम्—

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥

महाभारते—पर्वस्वपि च वर्जयेत्। गौडाः—

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्।

उपवासे उपवासदिने श्राद्धे श्राद्धदिने। एतद्वचनानुसारिणः सङ्काः श्राद्धादिपूर्वं तदुत्तरं च दन्तधावनं वर्जयन्ति। इहोपवासादौ यत्र दन्तकाष्ठसंयोगो निषिद्धस्तत्र पत्रादिना दन्तमार्जनमावश्यकत्वादेतत्परमेव च।

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्।
उपवासेन दुष्यन्ति दन्तधावनमञ्जनम्॥

इत्यादिवचनमपीति योगीश्वरः। तदाऽपि द्वादशगण्डूषैरेव सिद्धिः। इदन्तु दन्तधावनानन्तरमकाष्ठकरणकं मङ्गल्यमञ्जनादि सहचर्यादित्यन्ये। अङ्गुल्या दन्तधावनन्तु निषिद्धमेव 'नाऽङ्गुलीभिर्दन्तान् घर्षये'दित्युशनसो वचनादित्यास्तामधिकम्॥ ९८॥

(१)क्षीरि-इति ख० पु० पाठः। (२)विहितानिषिद्धानि-इति क० पु० पाठः। (३)वृन्त-इति ख० पु० पाठः। (४)वृक्षशुष्कं-इति क० पु० पाठः। (५) सच्छिद्रं-इति क० पुस्तके नास्ति।

(मिता०) गृहस्थधर्मानाह—शरीरचिन्तामिति। शरीरचिन्तामावश्य(१)कादिकां 'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः' इत्याद्युक्तविधिना निर्वर्त्य 'गन्धलेपक्षयकरम्' इत्यादिनोक्तेन विधिना कृतशौचाविधिर्द्विजो दन्तधावनपूर्वकं प्रातःसन्ध्यामुपासीत। दन्तधावनविधिश्च—'कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम्। कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चकम्॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा'॥ इति। अत्र वृक्षोत्थमित्यनेन तृणलोष्ठाङ्गुल्यादिनिषेधः। पलाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरोक्तो द्रष्टव्यः। दन्तधावनमन्त्रश्च—'आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो(२) देहि वनस्पते'॥ इति। ब्रह्मचारिप्रकरणोक्तस्यापि सन्ध्यावन्दनस्य पुनर्वचनं दन्तधावनपूर्वकत्वप्रतिपादनार्थम्, 'दन्तधावननृत्यगीतादि ब्रह्मचारी वर्जये'दिति तन्निषेधात्॥ ९८॥

हुत्वाऽग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः॥

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ ९९॥

(वी० मि०) अग्नीनाहवनीयादीन् श्रौतमौपासनं च स्मार्तं स्वशाखानुसारेण हुत्वा हवनक्रियायां (३)कथञ्चिदग्नीनां कर्मत्वं विवक्षित्वा 'पयसाऽग्निहोत्रं जुहोती'त्यादाविव,

सायं प्रातः सदाभ्यस्तं वैतानं जुहुयाद्द्विजः।

इत्यादाविव च द्वितीयानिर्देशः। अयं च होम आहिताग्न्यधिकारिको नित्यो यावज्जीवश्रुतेः। ननु 'अवश्य ब्राह्मणोऽग्नीनादधीते'त्यग्न्याधानस्यापि नित्यत्वादनाहिताग्नेः शास्त्राऽननुमतत्वात् कथमयं विवेक इति चेत् सत्यं, परं त्वरकृतदायत्वादिना शास्त्रीयनिमित्तेन लौकिकेन वाऽनाहिताग्निरपि गृहस्थः संभवति। अत एव साग्निनिरग्निपुरस्कारेण भूयांसः शास्त्रे धर्मविकल्पाः। अयं तु विशेषो गृहस्थस्य स्वेच्छामात्रेणाऽग्न्यनाधाने प्रायश्चित्तमिति कल्पसूत्रादौ स्फुटमिति। हुत्वेति सति संभवे स्वयमेव होमः कार्यः। यदाह दक्ष(४)—

सन्ध्याकर्माऽवसाने तु स्वयं होमो विधीयते।

ऋत्विगादिद्वारा तु तदाचरणमनुकल्पः। अत्र सन्ध्याकर्मावसान

---

(१)आवश्यकी दिशा० क०। (२)नो धेहि ग०।

(३) कथञ्चिदग्नीनो—इति क० पु० पाठः। (४) दक्ष—इति ख० पु० पाठः।

इत्युक्तेरनुदिते होमिना सूर्योदयात् प्रागेव सन्ध्या समापनीयेति लभ्यते।

गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्।

इत्यस्य तदितरपरत्वात्। सूर्योदयादितदस्तपर्यन्तमष्टधा विभक्तस्याऽन्हः प्रथमभागे कृत्यमाह—सूर्यदैवत्यान् सावित्र्यादीन् 'उदुत्यं जातवेदस' इत्यादीन् वा यथाश्रद्धं जपेत्। एतदभिप्रायकमेव बहुवचनं, न तु 'कपिञ्जल'न्यायेन त्रीन् सर्वानेव वाऽऽचारविरोधात्। एतज्जपाकरणपरैव च 'अजपी पूयशोणित'मित्यादि निन्देति केचित्। समाहिततदेकाग्रचित्तत्वादिसकलजपधर्मयोगी। यद्वा समाहितोऽवहितचित्तः। अनेन स्मृत्यन्तरोक्तसदाचारान्तराऽनुपरोधमभिप्रैति। तथा च वाराहे—

उदयाग्निः स्तुतं सूर्यं यस्तु भक्त्या नरो द्विजः।
दध्यक्षताञ्जलीभिस्तु त्रिभिः सम्पूजयेच्छुचिः॥
तस्य भावप्रपन्नस्याऽशुभं यत्समुपार्जितम्।
तत्क्षणादेव निर्दग्धं भस्मीभवति काष्ठवत्॥

एवं मध्यान्हाविहितेतरदेवपूजा, केशप्रसाधनं, आदर्शादिदर्शनम्।

स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम्।

इत्युक्ते घृते स्वशरीरदर्शनम्, दूर्वादध्यादि शुभद्रव्यालभनं सौवीराञ्जनादि।

गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना।
षडङ्गमेतत्परमं मङ्गलं सर्वदा गवाम्॥
शृङ्गोदकं गवां पुण्यं सर्वाघे (१)विनिषूदनम्।

इत्युक्तम्। गोमूत्राद्यालभनादीनि दिनस्य प्रथमभागे कृत्यानि। द्वितीयभागे कृत्यमाह—वेदार्थान् शास्त्राणि व्याकरणनिगमनिरुक्ततर्कमीमांसापुराणभारतादीनि वेदार्थनिर्णायकानि तदनुष्ठानोपयोगीनि शिक्षाकल्पज्योतिषच्छन्दःशास्त्रादीनि। तदेतदुक्तं विविधानीति। अधिगच्छेत् जानीयात् स्वरूपतोऽर्थतश्च। प्रथमचकारेण वेदाभ्यासपरिग्रहः। तथा च दक्षः—

द्वितीये च तथा भागे वेदाभ्यासो विधीयते।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः॥

---

(१) सर्वाघ.विनि०—इति ख० पु० पाठः।

तद्दान चैव शिष्येभ्यो वेदाभ्यासस्तु पञ्चधा ।
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥

स्वीकरणमध्ययनम्, एतश्च ब्रह्मचारिणः । गृहस्थस्यानधीतभागे । तथा चाऽऽपस्तम्ब—'यया विद्यया न विरोध्येत पुनराचार्यमुपेत्य साधयेत्' । मनु —

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति विज्ञानं चाऽस्य रोचते ॥

बुद्धिवृद्धिराणि तर्कमीमांसादीनि धन्यानि धनाय हितान्यर्थशास्त्राणि हितान्यायुर्वेदादीनि निगमाः पदार्थनिर्णायका निघण्ट्वादयः रोचते दीप्तं भवति । यमः—

दानेन तपसा यज्ञैरुपवासव्रतैस्तथा ।
न तां गतिमवाप्नोति विद्यया यामवाप्नुयात् ॥

विद्यया ब्रह्मविद्ययेति व्याख्यानमनुदं शास्त्राऽनुपक्रमे यमाऽभिधानादित्युपाध्यायाः । विविधानि चेति चकारेण समिदाद्युपादानपरिग्रह ॥ ९९ ॥

( मिता० ) हुत्वेति । प्रात सन्ध्यावन्दनानन्तरं अग्नीनाहवनीयादीन् यथोक्तेन विधिना हुत्वा औपासनाग्निं वा । तदनन्तरं सूर्यदैवत्यान् 'उदुत्यं जातवेदसम्' इत्यादीन्मन्त्रान् जपेत् । समाहितोऽविक्षिप्तचित्तः । तदनन्तरं वेदार्थानिरुक्तव्याकरणा(१)दींश्च श्रवणेनाऽधिगच्छेज्ज्ञानीयात् । चकारादधीतं चाऽभ्यसेत् । विविधानि च शास्त्राणि मीमांसाप्रभृतीनि धर्मार्थारोग्यप्रतिपादकान्यधिगच्छेत् ॥ ९९ ॥

( वी० मि० ) तृतीयभागे कृत्यमाह—

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ॥
स्नात्वा देवान् पितृंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥

अलब्धलाभो योगः, लब्धसंरक्षणं क्षेमः, तदुभयरूपोऽर्थः प्रार्थ-

(१) करणादिश्रवणेनाधि ख० ।

नीयस्तन्निर्वाहाय ईश्वरं तन्निर्वाहक्षमं राजानमन्यं वा उपासीत। अर्थग्रहणमावश्यकत्वप्रदर्शनाय। योगादेरन्यथैव सिद्धावप्रार्थनीयत्वे ईश्वरोपासनव्युदासाय च। गौतमः—'योगक्षेमार्थमीश्वरमधिगच्छेन्नाऽन्यमन्यत्र देवगुरुधार्मिकेभ्यः'। अन्यमनीश्वरम्। मनुः—

दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान्।
ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु॥

एवकारो गच्छेदित्यनन्तरं योज्यः। यद्वा एतद्वाच्योक्तदैवतान्ययोगव्यवच्छेद एवकारार्थः।

नरं च नारायणमेव चादौ सुतः सुतौ द्वौ जनयाम्बभूव।

इत्यत्र नरनारायणान्ययोगव्यवच्छेदवत्। एवं च मूलवाच्येऽप्येवकार उ(१)त्तरार्धे एवेति मन्तव्यम्। चकाराद्यथा—श्रुतक्रमात् दैवतादेरुपायाच्चेति योजितात् पोष्यवर्गार्थसाधनादेः समुच्चयः। तथा दक्षः—

तृतीये च तथा भागे पोष्यवर्गार्थसाधनम्।

पोष्यवर्गः—

माता पिता गुरुर्भ्राता प्रजा दीनः समाश्रितः।
अभ्यागतोऽतिथिश्चाऽग्निः पोष्यवर्ग उदाहृतः॥

इत्युक्तः। तस्याऽर्थसाधनं धनोपार्जनं कुर्यादिति शेषः।

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः॥
एतानि सततं पश्येन्नमस्येच्चाऽर्चयेच्च यः।
प्रदक्षिणं च कुर्वीत तथाऽस्याऽऽयुर्न हीयते॥

एतानि ब्राह्मणादिदर्शनादीनि तृतीयभाग (२)एव कर्तव्यत्वेन विहितानि। दिनाद्यभागे तु केवलं मङ्गलाद्यालभनमिति मिश्राः। चतुर्थभागकृत्यमाह सार्द्धश्लोकेन। स्नात्वेति स्नात्वा चतुर्थभागे। यदाह दक्षः

चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
समित्पुष्पकुशादीनि स्नानं चाऽकृत्रिमे जले॥

मृदम्—

शुचौ देशे तु सङ्ग्राह्या शर्कराश्मादिवर्जिता।
रक्ता गौरी तथा श्वेता मृत्तिका त्रिविधा स्मृता॥

(१) उक्तार्थ—इति क० पु० पाठः।
(२) 'एवे'त्यादिः 'चतुर्थभागे'त्यन्तो ग्रन्थः क० पुस्तके नास्ति।

इत्याद्युक्ताम् ।

घल्मीकाखूत्कराल्लिपाञ्जलाच्च पार्थिवृक्षयोः ।
कृतशौचावशिष्टा हि न ग्राह्याः सप्त मृत्तिकाः ॥
न मृदं नोदकं वाऽपि न निशायां तु गोमयम् ।
न गोमूत्रं प्रदोषे वा गृह्णीयाद् बुद्धिमान्नरः ॥

इति शातातपीये ।

मृत्तिकाः सप्त न ग्राह्याः वल्मीके मूषकोत्करे ।
अन्तर्जले श्मशाने च वृक्षमूले सुरालये ॥

इति दक्षीयादिनिषेधाऽस्पृष्टां, विहितालाभेऽन्यामपि ।

येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः ।
तत्र तन्नाऽवमन्येत धर्माचारश्च तादृशः ॥
येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका ॥

इति मरीचिवचनात् । समिधः प्रसङ्गादुक्ताः । पुष्पाणि सुरभीणि । कुशान् स्मृत्यन्तरे विहितान् । आदिपदात्प्रकृष्टतिलान् ।

अमेध्यसेविनी वन्ध्या प्रसूतानां च गोमयम् ।
जीर्णायाश्चोपलेपार्थं न हर्तव्यं कदाचन ॥

इति शाट्यायनादिनिषेधास्पृष्टमनिशाहृतमार्द्रं गोमयं च । अकृत्रिमे परकारितजलाशयासंस्पर्शिनि नद्यादौ । तथा च विष्णुः—'परकीय-निपातेषु न स्नानमाचरेत्। पञ्च पिण्डानुद्धृत्याऽऽपदि' । आपदि जलान्तरस्नानाऽसम्भवे । पञ्च पिण्डानिति सेतुकूपातिरिक्तज-लाशये ।

नियद्धासु च मृत्पिण्डान् कूपात्तु त्रीन् घटांस्तथा ।

इति बौधायनात् । पिण्डश्च योग्यश्रीफलप्रमाणकः । पिण्डपदा-न्निरुपधेस्तथैवाऽवगमादिति मिश्राः । हस्ताभ्यां यावानुद्धर्तुं शक्यते तावानिति रत्नाकरादयः । अत्राऽप्रतिष्ठितमात्रे पिण्डाद्युद्धारस्त(१)स्यैव परकीयत्वादिति प्राञ्चः । तत्र 'अनुत्सृष्टं वा मूत्रव'दित्यादिवचनै-स्तस्याऽकर्मण्यत्वेनिर्द्धारात् । परस्योपयोगे चोर्यापत्तेः ।

(१) तस्यैव-इति क० पु० पाठः ।

परकीयनिपातेषु न स्नायाद्धि कदाचन।
निपानकर्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते ॥

इति मनुवचनात्। परकृतानीति पैठीनसिबौधायनाऽनुसारेणापि परकृतत्वरूपपरकीयत्वाऽवगमाच्च। अत एव स्वकारितेषु पिण्डघटोद्धारो नास्तीत्युपाध्यायाः। कल्पतरुरत्नाकरादयोऽप्येवम्। मिश्रास्तु-सत्रदक्षिणावाधं सिद्धान्तसिद्धं दृष्टान्तीकुर्वाणास्तिर्यगधिकरणविरोधेन स्वत्यक्ते स्वोपादानं नाऽनुमन्यन्ते। तच्चिन्त्यमिति कृतं प्रसक्तानुप्रसक्त्या। स्नानं चेति चकारात्स्मृत्यन्तरानिषिद्धे देशे काले च स्नानं कार्यमिति शेषः। तत्र तावद्देशकालेतिकर्तव्यताविशेषविवेकाय स्मृतौ स्नानानि विभक्तानि। तथा च शङ्खः—

स्नानं तु द्विविधं प्रोक्तं मुख्यगौणप्रभेदतः।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥
अस्नातस्तु पुमान्नाऽर्हो जप्याग्निहवनादिषु।
प्रातःस्नानं तदर्थं तु नित्यस्नानं तदुच्यते ॥
चण्डालशवपूयादि स्पृष्ट्वाऽस्नातां रजस्वलाम्।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्य(१)स्नानादिकं यत्तु दैवज्ञविधि(२)चोदितम्।
तद्धि काम्यं समुद्दिष्टं नाऽकामस्तत्प्रयोजयेत् ॥
जप्तुकामः पवित्राणि अर्चिष्यन्देवताः पितॄन्।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तत्प्रकीर्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम्।
मलापकर्षणार्थन्तु प्रवृत्तिस्तत्र नाऽन्यथा ॥
सरस्सु देवखातेषु तीर्थेषु च नदीषु च।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रिया मता ॥

वारुणमेकस्मिन् काले वहिरवच्छेदेन सर्वाङ्गजलसंयोगः। 'अद्भिर्वारुणमुच्यते' इति हारीतात्। 'वारुणं चाऽवगाहम्' इति शङ्खोक्ते-

(१) पुष्पहस्तादिकं यत्तु-इति क० पु० पाठः।
(२) दैवज्ञमिति चो०-इति क० पु० पाठः।

रपि तन्मात्रपरत्वात्। अन्यथोद्धृतजलस्नानास्वद्ग्रहात्। प्रातः-स्नानमित्यादि परिभाषामात्रमतो नित्यस्याऽपि मध्याह्नस्नानस्य क्रियाङ्गत्वेनोक्तस्याऽत्र सङ्ग्रहो न दोषाय। गौणस्नानान्याह योगी—

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया।
मन्त्रस्नानादितः सप्त एक इच्छन्ति सूरयः॥
मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसं चैव सप्तस्नानी प्रकीर्तिता॥
'आपोहिष्ठे'ति वै मान्त्रं मृदालम्भस्तु पार्थिवम्।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते।
वा(१)रुणं चाऽवगाह्य स्यान्मानसं विष्णुचिन्तनम्॥
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु।
देशात्कालादसामर्थ्यात् सर्वं तुल्यफलं स्मृतम्॥

एवं च गौणमपि स्नानं योढैव। मुख्यं तु वारुणमन्तर्भाव्य सप्तेत्युक्तम्।

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम्।
आर्द्रेण वाससा वाऽपि मार्जनं दैहिकं विदुः॥

इति आकण्ठादिभिरशिरस्कादिकान्यधिकान्यपि गौ(२)णानि स्नानान्युक्तानि। गौणानि योगिनोक्तानि योढैव। एतानि तु गौणमुख्यपरिभाषानाक्रान्तानि पृथगेवेति केचित्। वारुणस्य चाऽस्य विभागः प्रपञ्चार्थः, तेन—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।
तर्पणं तु भवेत्तस्य अङ्गत्वेन प्रकीर्तितम्॥

इति ब्रह्मपु(३)राणेन न विरोधस्तत्र त्रिष्वेव सर्वान्तर्भावनात्। नित्यं प्रातर्मध्याह्नयोः। नैमित्तिकमुपरागादौ। काम्यं तीर्थादौ। एषां क्रमेणोपदेशः पूर्वपूर्वस्योत्तरोत्तरेण प्रसङ्गसिद्धिज्ञापनार्थः। तथा नित्ये पापानुत्पत्तिः फलम्। काम्ये स्वर्गादिः। तयोर्मध्ये नैमित्तिकस्य पाठस्तदुभयफलप्राप्त्यर्थं इत्यभिनववर्धमानादयः। गौणविभागस्तु

(१) 'वरुणमित्यादि पद्यमेकं नास्ति ग० पुस्तके।
(२) गौणानि स्नानान्युक्तानि इति क० पुस्तके नास्ति।
(३) अत इति ग० पु० पाठः।

न्यूनसङ्ख्याव्यवच्छेदमात्रपरः स्मृत्यन्तरानुसारात्। तथा च जाबा(१)लः—

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम्।
आर्द्रेण वाससा वाऽपि दैहिकं मार्जनं विदुः॥

दैहिकं घहिरवच्छेदेन देहव्यापकम्। स्नानाऽनुकल्पप्रकारेण ब्रह्मपुराणम्—

दक्षिणावर्तशङ्खेन पात्र औदुम्बरे स्थितम्।
उदकं यः प्रतीक्षेत शिरसा हृष्टमानसः॥
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति।

व्यासः—

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नित्यशः।
अभिषेकः समस्तेषां गवां शृङ्गोदकेन च॥

एतच्छक्ताशक्तसाधारणमिति केचित्। तथा—

स चैवाऽवभृथे स्नातः स च गङ्गाजलाप्लुतः।
विष्णुपादोदकं शङ्खे कृत्वा यः स्नाति मानवः॥

तत्र स्नानदेशमाह मनुः—

नदीषु देवखातेषु तडागेषु सरस्सु च।
स्नानं समाचरेन्नित्यं गर्तप्रस्र(२)वणेषु च॥

देवखातेषु तडागेषु देवसम्बन्धितया प्रसिद्धेषु इति रत्नाकरः। देवखातेषु सूर्यादिसमीपगतेषु शिवलिङ्गाश्रमखातेषु वा।

शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।
शिवगङ्गेति सा ज्ञेया तत्र स्नानाद्दिवं व्रजेत्॥

इति भविष्यादित्युपाध्यायाः। सरः तल्ल इति प्रसिद्धो जलाशयः। अल्पगर्त इति कल्पतरुः। गर्तः—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः॥

इति छन्दोगपरिशिष्टे लक्षितः। प्रस्रवणं निर्झरः। विष्णुः—'स्नायात्प्रस्रवणनदीदेवखातसरोवरेषूद्धृताद् भूमिष्ठमुदकं पुण्यं, स्थावरात्प्रस्रवत्,

(१) जाबालिः—इति क० पु० पाठः। (२) प्रश्रवणेषु—इति क० पु० पाठः।

तस्मान्नादेयं, तस्मादपि साधुपरिगृहीतं, सर्वत एव ग्राह्यम्' । साधवः श्रीरामादयस्तत्परिगृहीतं चित्रकूटादौ मन्दाकिन्यादि । शङ्खः—

सर्वतीर्थानि पुण्यानि पापघ्नानि तथा नृणाम् ।
परस्पराऽनपेक्षाणि कथितानि मनीषिभिः ॥
सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्या शिलोच्चयाः ।
नद्यः पुण्याः सदा सर्वा जाह्नवी तु विशेषतः ॥
नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ।
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥

योगी—

त्रिरात्र(१)फलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु मासस्य पक्षस्य सरितां पतिः ॥

विष्णुपुराणे—

कूपेषूद्धृततोयेन स्नानं कुर्वीत वै भुवि ।
स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे ॥

कूपेष्विति षष्ठ्यर्थे सप्तमी । कूपसम्बन्धिना उद्धृतेन तोयेन भुव्युपविष्टः स्नायादिति प्रथमखण्डार्थः । अन्यत्रापि जलाशयेऽपि प्रविश्य स्नानासम्भवे एवमेवेति द्वितीयखण्डार्थः । पाद्मे—

अनुद्धृतैरुद्धृतैश्च (२)जलैः स्नानं समाचरेत् ।

शङ्खः—

स्नातस्य वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवे(३)त् ॥

परवारिणा परकृतजलाशयसम्बन्धिना परोपाहृतेन च जलेन स्नानफलं स्वर्गादि । एतच्च विशेषवचनाभावे द्रष्टव्यम् । दक्षः—

मलापकर्षणं तीरे मन्त्रवत्तु जले स्थितम् ।
सन्ध्यास्नानमुभाभ्यां तु स्नानदेशाः प्रकीर्तिताः ॥

मलापकरणस्नानं तीरे एव, मन्त्रस्नानं जले एव कर्माङ्गमन्यतरकार्यमित्यर्थः । निषिद्धं देशमाह योगी—

(१) त्रिरात्रे—इति क० पु० पाठः ।
(२) र्वे—इति ख० पु० पाठः । (३) लभेत्—इति ख० पु० पाठः ।

प्रभूते विद्यमाने तु उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ॥

नदीमकृत्रिमजलाम् । छन्दोगपरिशिष्टे—

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
सूर्यचन्द्रग्रहे चैव रजोदोषो न विद्यते ॥

यव्यो मासः स कृष्णादिरिति हरिनाथोपाध्यायाः । शुक्लादिरिति बहवः ।

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।

इति मनुवचनैकमूलकत्वात् । सौरोऽत्र मास इति तत्त्वम् । समुद्रगा गङ्गाद्या एकादश ।

आदौ कर्कटके देवी त्र्यहं यावद्रजस्वला ।
चतुर्थेऽहनि सम्प्राप्ते शुद्धा भवति जाह्नवी ॥
तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।
रजसा न प्रदुष्यन्ति ये चाऽन्ये नदसंज्ञकाः ॥

इति वचनद्वयं प्रचरदपि संहितास्वदर्शनान्महाजनापरिग्रहाच्च नाऽऽद्रियन्ते । अत्र 'रजस्वला' इति 'तासु स्नानं न कुर्वीते'ति हेतुमन्निगदात् स्नानाऽनर्हत्वमात्रं विवक्षितम् । तस्याचमनाद्यनर्हत्वमपीति सम्प्रदायः । एवं च तास्वित्युक्तेर्नदीं प्रविश्यैव स्नानं निषिद्धं न तु तज्जलेनाऽपीत्यपि वदन्ति । पराशरः—

आचान्तमनुगर्ते वा निशि स्नानं न विद्यते ।
स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन च ॥

निशि अनुगर्ते जलाशयं प्रविश्य आचान्तमाचमनस्नानं वा न कर्तव्यमित्यर्थः । स्नानं चात्राऽप्रायत्यनिमित्तकमभिमतं, 'कथं शुद्धिर्विधीयते' इत्युपक्रमात् । तेन चाऽत्रोपरागादौ निशि जलाशयं प्रविश्य स्नानं निराबाधमिति स्मर्तव्यम् । योगी—

अग्राह्या आगता आपो नद्याः प्रथमवेगिकाः ।
प्रक्षोभिताश्च केनाऽपि याश्च तीर्थाद्विनिःसृताः ॥

प्रथमवेगिकाः शुष्कनद्यां प्रथमप्रवाहरूपाः । अत एव नद्या

इति प्राक् शुष्काया (१) इति कल्पतरु । केनाऽपि महिष्यादिना प्रक्षोभिता आविलीकृताः । तीर्थात् गङ्गाद्या(२)त् । निस्सृता न तु निःसारिताः । विशब्देन प्रवाहसामान्याद्विच्छेदमभिप्रैति । शिष्टाचारोपष्टम्भाच्चैव व्याख्यातमिति मन्तव्यम् । तीर्थाद्विनि:सृतास्तीर्थत्वेनाख्यायमाना इति कल्पतरु । पठन्ति चात्र—

गङ्गातो निःसृतं तोयं पुनर्गङ्गां न गच्छति ।
अपेयं तद् द्विजातीनां पीत्वा चान्द्रायणं चरे(३)त् ॥

आचारप्रदीपे—

प्रत्यावृत्त्योदके नद्यां वर्ज्यं स्नानं द्विजातिभिः ।
तथा रजकतीर्थे च दश हस्तान् परित्यजेत् ॥
प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम् ।
गङ्गायां न प्रदुष्यन्ति सा हि धर्मद्रवः स्वयम् ॥

स्मृतिः—

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तना(४)त् ॥

धर्मः पुण्यम् । उपनयनजनितः संस्कारोऽत्र धर्मः, तेनाऽत्राऽपि पुनः संस्कार इति केचित् । शङ्खलिखितौ—'अमेध्योदकं परिहरेदल्पोदके न स्नायात्, न समुद्रोदकमवगाहेत' । अमेध्यमशुचि परिहरेत् न तत्र किञ्चित् कुर्यात् । अल्पोदकनिषेधः । प्रभूतसुमनोहरसलिलसम्भवे न समुद्रोदकमवगाहेत । न अन्तः प्रविश्य समुद्रे स्नायादिति मिश्रादयः । रागप्राप्तावगाहमेतत् । न त्वेतद्धलादेवोद्धृतोदकद्वारा समुद्रस्य फलदातृत्वं न स्यादित्युपाध्यायाः । मनुः—'नाऽविज्ञाते जलाशये' । अविज्ञातेऽगाधतया नक्रादिरहिततया च । कृत्रिमे प्र(५)तिष्ठितत्वाप्रतिष्ठितत्वाभ्यामपि । शिवः—'अनुत्सृष्टे तु मूत्रवत्' । तथा—

अप्रतिष्ठितपानीयेष्वपेयं सलिलं भवेत् ।

मार्कण्डेये—

यत्र सर्वार्थमुत्सृष्टं यच्चाऽभोज्य(६)निपानजम् ।
तद्वर्ज्यं सलिलं तात ! सदैव पितृकर्मणि ॥

---

(१) शुद्धाया—इति क० पु० पाठः । (२) गङ्गाया—इति ख० पु० पाठः ।
(३) स्मरेत्—इति ख० पु० पाठः । (४) कीर्तनात्—इति क० पु० पाठः ।
(५) प्रति ष्ठितत्वाभ्यामपि—इति ख०पु० पाठः । (६) यच्चाभोज्यनिपानजम्—इति ख०पु०पाठः ।

'पितृ' इत्युपलक्षणम्। अक(१)र्मण्यत्वे तात्पर्यम्। एवं चविष्णु(?)-वापीजलोपादानं यथाचारविषयः शिष्टानां तत्प्रमाणकमेवेति मन्तव्यम्। योगी—'वृथा तूक्तोदकस्नानम्'। वृथा शरीरशुद्धिकर्माधिकाराद्यतिरिक्तस्वर्गादिफलाजनकं 'स्नातस्य वह्नितप्तेने'त्यादेः। हारीतः—'न चत्वरोपद्वारयोः स्नायात्'। चत्वरं भूतादिबलिस्थानं, उपद्वारं द्वारसमीपम्। स्नानानि विभज्य शङ्खः—

तत्र काम्यं तु कर्तव्यं यथावद्विधिचोदितम्।
नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम्॥
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः।
सरस्सु देवखातेषु तीर्थेषु च नदीषु च॥
स्नानमेव क्रिया यस्मात् स्नानात्पुण्यफलं स्मृतम्।

अनेन काम्यं पुष्पस्नानादि, क्रियास्नानं स्वर्गादिफलार्थं, उष्णोदकपरोदकाभ्यां न कार्यमित्युक्तम्। स्नाने विहितं कालमाह व्यासः—

स्नानं म(२)ध्यंदिने कुर्यात्सुजीर्णेऽन्ने निरामयः।

निरामयः स्नानसंवर्द्धनीयरोगशून्यः। एवं च—

स्वप्नमध्ययनं स्नानमुच्चारं भोजनं गतिम्।
उभयोः सन्ध्ययोर्नित्यं मध्यान्हे च विवर्जयेत्॥

इति देवलीयो निषेधो रागप्राप्तस्नाने मध्यान्हेऽभिजिद्वेलापञ्चमभागे भोजनविधानात्। सामान्यत एव दिने स्वप्नस्य निषिद्धत्वाद(३)त्र मध्यान्हग्रहणं दोषाधिक्यप्रदर्शनाय। केचित्तु एकमूलकत्वानिरोधेनाऽन्यत्र दिनानिपदं मध्यान्हपरमेव। अत एव महाभारतादौ भृगुरामजरत्कारुप्रभृतीनां दिवा शयनोपाख्यानं न विरुध्यत इत्याहुः। योगी—

उभे सन्ध्ये च स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः।
तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विना॥

उभे सन्ध्ये प्रातर्मध्याह्ने। तपस्विना वनस्थेन यतिना च। दक्षः—

सन्ध्यास्नानं निशान्ते तु मध्यान्हे च ततः पुनः।

---

(१) 'अकर्मण्यत्वे' इत्यारभ्य 'तत्प्रमाणकं' इत्यन्तो ग्रन्थः क० पु० नास्ति।
(२) मध्येदिनं—इति क० पु० पाठः। (३) यदुक्तमध्या०—इति क० पु० पाठः।

अथ 'न(१)रात्रौ न सन्ध्यायां प्रातःस्नायी(अरुण(२)करग्रस्तां प्रा-चीमवलोक्य स्नाया'दिति विष्णुविरोधात्कथं सन्ध्यायां स्नानमिति चेदुच्यते-'न सन्ध्याया'मिति विष्णुना सायंसन्ध्यायां गृहस्थस्य स्नानं निषिध्यते न तु सामान्यत एव, 'अरुणकरग्रस्ता'मिति स्ववचनविरोधात् । यदि तु 'सन्ध्ययो'रिति पाठस्तदा वैधातिरिक्तस्नानविषयतया निषेधः समर्थनीयः । नन्वेवं प्रकरणबाधः स्यादिति चेद्भवतु, अन्यथा नाऽत्र पर्युदासलक्षणा स्यादित्युपाध्यायाः । एवं चा-रुणकरग्रस्तामिति । प्रातःस्नानविधायकवाक्येषु सन्ध्यापदानि प्रातःसन्ध्याऽव्यवहितपूर्वकालस्योपलक्षकाणीत्यपि निरस्तं लक्षणा-पत्तेः, तस्यापि रात्रिस्नाननिषेधाक्रान्तत्वाच्च । केचित्तु तानि तदव्य-वहितोत्तरकालपराण्येव, अन्यथा—

सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः ।

इति मार्कण्डेयपुराणविरोधादिति वर्णयन्ति । तन्मन्दं लिखितवाक्येषु 'सन्ध्यास्नायी शोचपर' इति,

स्नातो यः पूर्वसन्ध्यायां सदा मामुपगच्छति ।

इत्यादिबहुतरवचनेषु मुख्यार्थबाधापेक्षयोक्तप्रकरणबाधस्यैव न्याय्यत्वात् । न च 'सन्ध्यापदस्य मुख्यार्थत्वेऽपि । 'आधारोऽधिक-रणम्' ( पा० १।४।४५ ) इति, 'सप्तम्यधिकरणे च' (पा० सू० २।३।३६) इत्यनुशासनसिद्धचतुर्विधाधारसाधुत्वकायां सप्तम्यां प्रकृते सामी-प्यकरूपाधारपरत्वस्यैवोपपत्तेः।(३)कथमेवमिति केषाञ्चित्कुदेश्यमिह न श्रद्धेयं सामीप्यकादिसाधारण्यस्यैकस्याधारत्वस्याभावाच्छन्दाद्प्रती-तेः 'गङ्गायां घोषः' इत्यादौ सामीप्यकादिप्रत्ययस्य लक्षणतयैवोपप-त्तेः । 'अन्याय्यश्चानेकार्थत्व'मिति न्यायात् । व्याकरणस्य साधुत्वमात्र-व्युत्पादकत्वादनन्यलभ्यत्वादिसौचित्येन शक्तेः पर्यवसानात् । मुख्या-धिकरणत्वे तु शक्तौ प्रयोगप्राचुर्येणैव विनिगमकमित्यन्यत्र वि-स्तरतः । किञ्च—

उपस्युपसि यत्स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥"

(१) च इति क० पुस्तके पाठः ।

(२) करग्रस्तामित्यन्तं वेदित्यन्तं नास्ति क० पुस्तके ।

(३) कथमेव मित्यारभ्य-शब्द इत्यन्तं नास्ति क० पुस्तके नास्ति ।

इति दक्षः सन्ध्यास्नानं स्फुटमेव द्रढयति तदुत्तरकालस्य पृथग्विधानात्। उषसि अरुणोदये। सन्ध्यायां प्रभाते प्रागुदयात्। उदिते रवावुदयादूर्ध्वं मुहूर्ते। एत(१)च्च पूर्वापूर्वासम्भवे द्रष्टव्यमिति निबन्धृभिर्व्याख्यानादिति नायं पन्थाः। 'सूर्योदयं विना नैवे'त्यादि तु विशेषविहितेतरपरम्, अन्यथा चन्द्रोपरागादौ रात्रिस्नानादेरपि बाधापत्तेरिति सर्वं चतुरस्रम्। मनुः—

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम्॥

स्नानं देवतानां च पूजनं च मध्यान्हादिविहितेतरदिति।

अथ निषिद्धकालः। (२)अत्र बौधायनः—'न निशि स्नायात्'।

मनुः—

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि।

अत्र भोजनोत्तरकाले स्नाननिषेधो रागप्राप्तलौकिकस्नानविषयः पर्यवस्यति। नित्यकाम्ययोस्तयोर्भोजनानन्तरमप्रसक्तेः।

ततः शरीरस्रोतोभ्यो मलान्निस्यन्दविस्रवात्।
अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः॥

इति वचनात्। नैमित्तिकस्य निषेद्धुमशक्यत्वात्।

नैमित्तिकानि कर्माणि निपतन्ति यदा यदा।
तदा तदैव कर्माणि न कालस्तु विधीयते॥

इति दक्षात्। आतुरस्य जलसंवर्द्धनीयव्याधिकस्य सदैव वारुणस्नानं (३)निषिद्धम्। महानिशा रात्रिमध्यप्रहरद्वयम्।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्।
तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते॥

इति देवल वचनात्। काम्यं महानिशाविहितम्। अत्र विवक्षितं यद्यपि स्नानं निशा सामान्यत एव निषिद्धा 'न रात्रा'विति 'न निशी'ति 'नास्त'मित्यादि भूयशः सामान्यनिर्देशात्।

दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते।
न प्रशस्तं निशास्नानं राहोरन्यत्र दर्शनात्॥

---

(१) एतच्च—इत्यारभ्य—सूर्योदयं विना नैवेत्यन्तो ग्रन्थः ख० पुस्तके नास्ति।

(२) तत्र—इति ख० पुस्तके पाठः।

(३) निषिद्धमित्यतः तस्यां स्नानमित्यन्तं नास्ति क० पुस्तके।

इति हेतुमग्निगदबलाचारानुग्रहार्थेति । तथाऽपि दोषाधिक्य-प्रतिपादनाय महानिशाग्रहणं दृष्टार्थं वा । अत्र देवल:-

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥

चकारात् 'मुक्त्वा च जन्म(२)र्क्षगतं शशाङ्क'मित्यादिभी रात्रि-निषेधे पर्युदस्तानां समुच्चयः । आपस्त-

त्रयोदश्यां तृतीयायां दशम्यां तु विशेषतः ।
शूद्रविट्क्षत्रियाः स्नानं माऽऽचरेयुः कथञ्चन ॥
अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम् ।

इत्यनेन विहितस्य निषेधोऽयमिति कल्पतरुप्रभृतयः । परमार्थस्तु रागप्राप्तस्यैव प्रतिषेधः । वैधनिषेधे विकल्पपर्युदासयोरन्यतरप्रस-ङ्गात् । एवं च गौडनिबन्धधृतो जीवत्पितृकाऽमावास्यास्नाननिषेधो यदि समूलस्तदा रागप्राप्तस्नानविषयो, नो चेन्नैव यथेत्युपाध्यायप्र-भृतयः । स्त्रीणां शतभिषास्नाननिषेधोऽप्येवमेव बोद्धव्यः । स्नानान्तर-निषेधोऽपि रागप्राप्तविषय एव । एकस्मिन् दिने नानातीर्थप्राप्तस्य वैधस्य निषेद्धुमशक्यत्वादिति । सायाह्नमुपक्रम्य—

राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ।

इति श्राद्धमात्रविषयं प्रकरणादिति मदन० । परिभाषारूपमिदं वचनमिति विशेषविहितेतरसकलवैदिककर्मपरं प्रकृते हेतुमग्नि-गदसम्पादकतयोपयुज्यत इति मिश्रादयः । अपाप्यापरस्यामाह्निके मध्या-ह्नोत्तरयासुरीं वेलां परित्यज्य स्नानमाचरन्तीत्युक्तम् । स्नानेतिकर्त-व्यतायाः संहितान्तरे प्रपञ्चितत्वात्तामदर्शयन्नेव मध्याह्नस्नं प्रधा-नभूतं स्नानमात्रं स्मारयति स्नात्वेति । एवं तर्पणादावपि द्रष्टव्यम् । स्नानादिप्रकारस्तु स्वप्रकरण एव मया संक्षिप्य दर्शित इति । देवान् पितॄन् चकारो यथाश्रुतक्रमो मनुष्यानुपौञ्च समुच्चिनोति । स्नात्वा चेति भिन्नमस्तु । पूर्वकथितसन्ध्यावन्दनादीन् । एवकारस्तु स्नान-सन्ध्यादिषु पञ्चमहायज्ञादिषु चाऽऽवश्यकेषु समुचितक्रमो नित्यतां दर्शयति । अर्चयेत् ब्राह्मणादीनिति शेषः । तथा च कात्यायनः -'नि-पीड्य वस्त्रमाचम्य ब्राह्मवैष्णवरौद्रसावित्रमैत्रावारुणैस्तल्लिङ्गैरर्चयेत्'

---

(२) जन्मदर्क गतं इति क० पुस्तके पाठः ।

इत्यादि। तथा तेन प्रकारेण तत्तद्देवप्रश्नप्रकाशकमन्त्रादिसाचिवेतिकर्त्तव्यतयेति यावत् ॥१००॥

(मिता०) उपेयादिति। तदनन्तरमीश्वरमभिषेकादिगुणयुक्तमन्यं वा श्रीमन्तमकुत्सितं योगक्षेमार्थसिद्धये। अलब्धलाभो योगः, लब्धपरिपालनं क्षेम(१) तदर्थमुपेयादुपासीत। उपेयादित्येन सेवां प्रतिषेधयति। वेतनग्रहणेनाज्ञाकरणं सेवा। तस्याः श्ववृत्तित्वेन निषेधात्, ('से(२)वा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति मनुस्मरणात्)। ततो मध्याह्ने शास्त्रोक्तविधिना नद्यादिषु स्नात्वा देवान्स्वगृह्योक्तान् पितॄंश्च चकाराद्दर्षींश्च देवादितीर्थेन तर्पयेत्। तदनन्तरं गन्धपुष्पाक्षतैः हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावासनमृग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराधयेद्यथोक्तविधिना ॥ १०० ॥

(वी० मि०) ब्रह्मयज्ञमाह—

वेदाथर्वपुराणानि(३) सेतिहासानि शक्तितः ॥
जपयज्ञ(४)प्रसिध्यर्थं विद्यां चाऽऽध्यात्मिकीं जपेत् ॥१०१॥

वेदपदं त्रयीपरमथर्वणः पृथ(५)गुपादानात्। वेदादयः प्रागेव लक्षिताः। शक्तितो यथाशक्ति। तेन समस्तवेदाध्यायिनाऽऽदावारभ्य वेदपाठेन स्वाध्यायः करणीयः। एकदेशाध्यायिना पुरुषसूक्तादिपाठेन, सावित्रीमात्राध्यायिना पुराणादिनेति पर्यवस्यति। जपयज्ञस्य ब्रह्मयज्ञस्य योऽर्थः प्रयोजनं तत्सिद्ध्यर्थमित्यर्थः। आध्यात्मिकीं विद्यामुपनिषदम्। तर्पणानन्तरं त्वत्र जपयज्ञाभिधानं जलस्थलतर्पणादिपक्षे द्रष्टव्यम्।

यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते।
स चाऽर्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥
वैश्वदेवाऽवसाने वा नाऽन्यत्रेते निमित्तकात्।

इति छन्दोगपरिशिष्टात् ॥ १०१ ॥

---

(१) क्षेमस्तदर्थं ग०। (२) सेवेत्याद्यधिकं क० ग० पुस्तकयोः।
(३) वेदार्थं च पुराणानि-इति क० पुस्तके पाठः।
(४) जपयज्ञार्थसिद्ध्यर्थम्-इति ख० पुस्तके पाठः।
(५) प्राक्-इति क० पुस्तके पाठः।

(मिता०) वेदेत्यादि । तदनन्तरं वे(१)दाथर्वेतिहासपुराणानि समस्तानि व्यस्तानि वा । आध्यात्मिकीं च विद्यां जपयज्ञसिद्ध्यर्थं यथोक्तेन विधिना यथाशक्ति जपेत् ॥ १०१ ॥

(वी० मि०) ननु कथं वेदादिजपेनाऽयज्ञरूपेण जपयज्ञसिद्धिरित्याशङ्क्य पारिभाषिकमस्य यज्ञत्वमिति दर्शयितुं पञ्च महायज्ञान् परिभाषते—

बलिकर्मस्वधाहोमस्वाध्यायाऽतिथिसत्क्रियाः ॥
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥

बलिकर्म बलिदानं, स्वधा नित्यश्राद्धादि, होमो वैश्वदेव, स्वाध्यायो वेदादिपाठः, अतिथिसत्क्रिया ब्राह्मणायाऽन्नदानम् । एतानि यथाक्रमं भूतपितृदेवब्रह्ममनुष्याणां महायज्ञा इत्यर्थः ॥१०२॥

(मिता०) बलीत्यादि । बलिकर्म भूतयज्ञः । स्वधा पितृयज्ञः । होमो देवयज्ञः । स्वाध्यायो ब्रह्मयज्ञः । अतिथिसत्क्रिया मनुष्ययज्ञः । एते पञ्च महायज्ञा अहरहः कर्तव्या नित्यत्वात् । यत्पुनरेषां फलश्रवणं तदेषां पावनत्वस्थापनार्थं न काम्यत्वप्रतिपादनाय ॥ १०२ ॥

(वी० मि०) एषां चाऽनुष्ठाने पाठिकः क्रमो न विवक्षित इत्यभिप्रायान एव पञ्चमभागरूपमाह—

देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ॥

अत्र हुताच्छेषं यदन्नं तेन पर्जन्यादि तत्तच्छास्त्रोक्तभूतबलिं दद्यात् इत्यर्थः । एते पञ्च महायज्ञा नित्याः । 'अहरहः पञ्च यज्ञान्निर्वपेदापवर्गशास्त्रोदितेभ्यः' इत्यादिवचनात् । अन्वहमित्यभिधास्यमानत्वाच्च । वैश्वदेवहोमस्य त्वत्र संस्कारत्वमपि केचिदिच्छन्ति । एषां चानुष्ठानं स्वशाखानुसारेणेति विशिष्य तत्प्रकारो नोक्तः ॥

(वी० मि०) नित्यबलिप्रसङ्गेन काम्यबलिदानमाह—

अन्नं भूमौ श्वच(२)ण्डालवायसानां विनिःक्षिपेत् ॥१०३॥

अत्र बहुवचनमाद्यर्थं तेन स्मृत्यन्तरोक्तपतितादिपरिग्रहः । केचित्तु वायसेभ्यश्चेति पठन्त्यश्चकारेणाऽनुक्तसमुच्चयमाहुः । भूमावित्ति नित्यबलावप्यन्वेति । विनिःक्षिपेदिति वदन्नुभयतः परिवेषणादिशून्ये त्यागमात्रमभिप्रैति । आचारोऽप्येवमेव ॥ १०३ ॥

---

(१) धर्मपुराण तिहासदं ते कृता क० । (२) तु चण्डाल—इति क० पु० पाठ ।

(मिता०) देवेभ्य इति । स्वगृह्योक्तविधिना वैश्वदेव(१)-होमं कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो वलिं हरेत्। अन्नग्रहणमपक्कव्युदासार्थम्। तदनन्तरं यथाशक्ति भूमावन्नं श्वचण्डालवायसेभ्यो निक्षिपेत्। चशब्दात्कृमिपापरोगिपतितेभ्यः। यथाह मनुः (३।९२)-'शुनां च पतितानां च श्वपचां पापरोगिणाम्। वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवि' ॥ इति। एतच्च सायम्प्रातः कर्तव्यम्। 'अथ सायम्प्रातःसिद्धस्य हविष्यस्य जुहुयात्' इत्याश्वलायनस्मरणात्। इह केचिद्वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वमन्नसंस्कारकर्मत्वं चेच्छन्ति। 'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादित्यन्नसंस्कारकर्मता प्रतीयते। अथातः पञ्च महायज्ञा इत्युपक्रम्य तानेतान्यज्ञानहरहः कुर्वीतेति नित्यत्वाभिधानात्पुरुषार्थत्वं चावगम्यते' इति। तदयुक्तं पुरुषार्थत्वेऽन्नसंस्कारकर्मत्वानुपपत्तेः। तथा हि-द्रव्यसंस्कारकर्मत्वपक्षेऽ(२)न्नार्थता वैश्वदेवकर्मणः, पुरुषार्थत्वे वैश्वदेवकर्मार्थता द्रव्यस्येति परस्परविरोधात्पुरुषार्थत्वमेव युक्तम्। 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति। तथा 'वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्। तस्मा अन्नं यथाशक्ति प्रदद्यान्न वलिं हरेत्' ॥ इति (३। १०८) मनुस्मरणात्। पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्तनीयम्। तस्मादथ सायंप्रातरित्यादिनोत्पत्तिप्रयोगौ दर्शितौ, तानेतान्यज्ञानहरहः कुर्वीतेत्यधिकारविधिरिति सर्वमनवद्यम् ॥१०३॥

(वी० मि०) अत्र सति सम्भवे स्वधादिकमन्येनैव कार्यमन्यथा तु जलादिनापीत्याह—

अन्नं पितृ(३)मनुष्येभ्यो देयमप्यन्वहं जलम् ॥
स्वाध्यायं सततं कुर्यान्न पचेदन्नमात्मने ॥ १०४ ॥

जलमपीत्यन्वयः। बहुवचनमत्राऽप्याद्यर्थं। पञ्चमहायज्ञाशक्तौ स्वाध्यायमात्रमपि कर्तव्यमिति बोधयितुं विहितमपि स्वाध्यायं पुनराह स्वाध्यायमिति। केचित्तु नित्यताबोधनार्थं पुनर्वचनमित्याहुः। अविस्मरणार्थं सततं स्वाध्यायं कुर्यादिति तु मिताक्षरा। एवमन्नस्य वैश्वदेवाद्यर्थतामुक्त्वा तदसम्भवे तदधिकारिणः पाकं निषेधयति न पचेदिति ॥ १०४ ॥

(१) अन्नं प्रति मनु०—इति क० पु० पाठः। (२) वैश्वदेवं कृत्वा क०।
(३) दम्पत्योः शेषभोजनम्—इति मुद्रितपुस्तके पाठः।

(मिता०) अन्नमिति । प्रत्यहमन्नं पितृभ्यो मनुष्येभ्यश्च यथाशक्ति देयम् । अन्नाभावे कन्दमूलफलादि । तस्याप्यभावे देयं जलमपि दद्यात् । स्वाध्यायं सततं कुर्यादविस्मरणार्थम् । न पचेदन्नमात्मार्थम् । अन्नग्रहणं सकलाऽदनीयद्रव्यप्रदर्शनार्थम् । कथं तर्हि देवताद्युद्देशेनैव ॥ १०४ ॥

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥
सम्भोज्याऽतिथिभृत्यांश्च(१)गृहस्थः शेषभुग्भवेत् ॥१०५॥

( वी० मि० ) स्ववासिनी परिणयानन्तरं पितृगृहावस्थिता । कन्यका कुमारी । सम्भोज्य भोजयित्वा । अतिथिर्वक्ष्यमाण । भृत्याः पोष्याः पुत्रादयः । शेषभोजनमित्यनन्तरं कर्तव्यमिति शेषः ॥ १०५ ॥

(मिता०) बालेति । परिणीता पितृगृहे स्थिता स्ववासिनी । शेषाः प्रसिद्धाः । बालादीनतिथिभृत्यांश्च सम्भोज्य भोजयित्वा दम्पत्योः शेषभोजनं कर्तव्यम् । '(२)प्राणाग्निहोत्रविधिनाऽदनीयादन्नमनापदि । मत्र विपक्वं विहितं भक्षणं प्रीतिपूर्वकम्' ॥१०५॥

( वी० मि० ) भोजनेतिकर्तव्यतामाह—

अपोशानेनोपरिष्टादधस्तादश्नता तथा ॥
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०६ ॥

'अमृतोपस्तरणमसि स्वाहा' इति मन्त्रेण जलपानं(३)भोजनारम्भकालीनमाद्यमपोशानम् । 'अमृतापिधानमसी'ति भोजनशेषे जलचुलकपानं चाऽपरमपोशानम् । ताभ्यामाच्छादनोपस्तरणरूपाभ्याम् । अनग्नममृतं पवित्रमिति यावत् । एवकारः कार्यमेवेत्यावश्यकत्वप्रदर्शनार्थं । अश्नता भुञ्जानेन । वर्तमानसामीप्ये प्रत्ययः । द्विजन्मना उपनीतेन ॥ १०६ ॥

( मिता० ) अपोशानेनेति । भुञ्जानेन द्विजन्मना उपरिष्टादधस्ताच्चाऽपोशानाख्येन कर्मणाऽन्नमनग्नममृतं च कार्यम् । द्विजन्मग्रहणमुपनयनप्रभृतिसर्वाश्रमसाधारणम् ॥ १०६ ॥

( वी० मि० ) उक्त एवाऽतिथिभोजने विशेषमाह—

अतिथित्वेन वर्णेभ्यो देयं शक्त्यानुपूर्वशः ॥

---

( १ ) एतेन कन्यास्वपि प्रीतिरादेत भवति ।

( २ ) अय-धारणमपोशानं —इति क० पुस्तके पाठः ।(३) भोजनापवेति क० पुस्तके ।

अतिथित्वेनोपस्थितानां ब्राह्मणादीनां वर्णानुपूर्व्येण यथाशक्त्यन्नं देयमित्यर्थः ॥

( वी० मि० )सायमतिथौ विशेषमाह—

अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥

सूर्यास्तसमयानन्तरमागतोऽतिथिरन्नदानासम्भवे वाचा सूनृतया तृणैरासनादिरूपैरुदकैश्च पानाद्यर्थैरप्यप्रणोद्योऽप्रत्याख्येयः ॥ १०७

(मिता०) अतिथित्वेनेति । वैश्वदेवानन्तरं वर्णानां ब्राह्मणादीनामतिथित्वेन युगपत्प्राप्तानां ब्राह्मणाद्यानुपूर्व्येण यथाशक्ति देयम् । सायङ्कालेऽपि, यद्यतिथिरागच्छति तदासावप्रणोद्योऽप्रत्याख्येय एव । यद्यप्यदनीयं किमपि नास्ति तथापि वाग्भूतृणोदकैरपि सत्कारं कुर्यात् । (१)यथाह मनुः ( ४।१०१ )-'तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन' ॥ इति ॥ १०७ ॥

( वी० मि० ) यत्यादिरूपेऽतिथौ विशेषान्तरमाह—

सत्कृत्य भिक्षवे भिक्षा दातव्या स(२)व्रताय च ॥

भिक्षवे संन्यासिने सव्रताय ब्रह्मचारिणे च सत्कृत्य स्वस्तिवाच्य जलं हस्ते दत्त्वा भिक्षा दातव्या ॥

( वी० मि० ) अतिथिवदन्येषामप्यवश्यभोजनीयतामाह—

भोजयेच्चाऽऽगतान् काले सखिसम्बन्धिबान्धवान् ॥ १०८ ॥

काले भोजनसमये । सखा मित्रम् । सम्बन्धिनः श्वशुरादयः । बान्धवा मातुलपुत्रादयः ॥ १०८ ॥

( मिता० ) सत्कृत्येति । भिक्षवे सामान्येन भिक्षा दातव्या । सुव्रताय ब्रह्मचारिणे यतये च सत्कृत्य स्वस्तिवाच्य भिक्षादानमपूर्वमित्यनेन विधिना भिक्षा दातव्या । भिक्षा च ग्राससंमिता । ग्रासश्च मयूराण्डपरिमाणः । 'ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् । हन्तस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत्' ॥ इति शातातपस्मरणात् । भोजनकाले चागतान् सखिसम्बन्धिबान्धवान् भोजयेत् । सखायो मित्राणि । सम्बन्धिनो येभ्यः कन्या गृहीता दत्ता वा । मातृपितृसम्बन्धिनो बान्धवाः(३) ॥ १०८ ॥

---

(१) यथेत्यादि मनुवचनं व० म० नवास्ति । (२) सुव्रताय-इति मुद्रितपुस्तके पाठः ।
(३) सम्बद्धा बान्धवा. क० ।

( वी० मि० ) श्रोत्रिये त्वतिथौ विशेषमाह—

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९ ॥

श्रोत्रियः पूर्वलक्षितस्तदर्थं महान्तमुक्षाणं वृषं महान्तमजं छागं वा उपकल्पयेत् पचेत् । 'राज्ञे वा ब्राह्मणाय वा महोक्षं (१)वा महाजं वा पचेत्' इति श्रुतेः । सत्क्रिया स्वागतवचनपाद्यार्घाचमनादिदानम् । अन्वासनं तस्मिन्नुपविष्टे पश्चादुपवेशनम् । स्वादु भोजनं मिष्टान्नम् । सूनृतं वचो धन्या वयं भवदागमनादित्यादिकम् । एतत्सर्वमुपकल्पनीयम् । विभक्त्यादिविपरिणामेनाऽर्थान्तरपुरस्कारेणोपकल्पयेदित्यस्याऽन्वयात् ॥ १०९ ॥

( मिता० ) महोक्षमिति । महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणायोपकल्पयेत् भवदर्थमयमस्माभिः परिकल्पित इति तत्प्रीत्यर्थं न तु दानाय व्यापादनाय वा । यथा सर्वमेतद्भवदीयमिति प्रतिश्रोत्रियमुक्षासम्भवात् ।'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' इति निषेधाच्च । तस्मात्सत्क्रिया(२)ह्येव कर्तव्या । सत्क्रिया स्वागतवचनासनपाद्यार्घ्याचमनादिदानम् । तस्मिन्नुपविष्टे पश्चादुपवेशनमन्वासनम् । स्वादु भोजनं मिष्टमशनम् । सूनृतं वचः धन्या वयमद्य भवदागमनादित्येवमादि । अश्रोत्रिये पुनः 'अश्रोत्रियस्योदकासने' इति गोतमोक्तं वेदितव्यम् ॥ १०९ ॥

( वी० मि० ) अतिथिप्रसङ्गेन गृहागतानां स्नातकादीनामर्घ्यत्वमाह—

प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ॥
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥११०॥

स्नातकस्त्रिविधः प्रागुक्तः । आचार्यश्चोक्तलक्षणः । पार्थिवो वक्ष्यमाणलक्षणः । प्रियो मित्रम् । विवाह्यो जामाता । चकारेण श्वशुरादिसमुच्चयः । तथा चाऽऽश्वलायनः—'ऋत्विजो वृ(३)त्वा मधुपर्कमाहरेत्स्नातकायोपस्थितायाचार्याय राज्ञे श्वशुरपितृव्यमातुलानां

(१) महाजं वा—इति क० पुस्तके नास्ति ।
(२) सत्क्रियैव कर्तव्या ग ।  (३) वृत्वा—इति क पु पाठः ।

श्चेति। एते गृहमागताः प्रतिवत्सरं अर्घ्या मधुपर्काख्येन कर्मणा पूज्याः। प्रतिसंवत्सरमित्यभिधानादेकस्मिन्वर्षे पुनःपुनरर्घो नास्तीति दर्शयति। ऋत्विजो याजकाः पुनर्वर्षमध्येऽपि प्रतियज्ञमर्घ्या इति विशेषः॥ १०॥

( मिता० ) प्रतिसंवत्सरमिति। स्नातको विद्यास्नातकः व्रतस्नातकः विद्याव्रतस्नातकः इति। ( स(१)माप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः। समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः। उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातकः )। आचार्य उक्तलक्षणः। पार्थिवो वक्ष्यमाणलक्षणः। प्रियो मित्रम्। विवाह्यो जामाता। चकाराच्छ्वशुरपितृव्यमातुलादीनां ग्रहणम्। 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाचार्याय च श्वशुरपितृव्यमातुलानां च' इत्याश्वलायनस्मरणात्। एते स्नातकादयः प्रतिसंवत्सरं गृहमागता अर्घ्याः मधुपर्केण संपूज्या वन्दितव्याः। अर्घशब्दो मधुपर्कं लक्षयति। ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः॥ ११०॥

( वी० मि० ) प्रागुक्तयोरतिथिश्रोत्रिययोर्लक्षणमाह—

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः॥

अध्वनि वर्तमानोऽतिथिर्ज्ञेयः। अध्वनीनत्वं तु—

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।

इत्यादिनानास्मृत्युक्तविशेषणानामुपलक्षणम्। वेदपारगः सम्पूर्णशाखाध्येता श्रोत्रियो ज्ञेयः॥

( वी० मि० ) अतिथिश्रोत्रिययोः पूजने फलमाह—

मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥१११॥

एतावतिथिश्रोत्रियौ ब्रह्मलोकमभीप्सतो ब्रह्मलोकप्राप्तिकामस्य मान्यौ पूज्यौ। नित्यस्याऽप्यतिथिपूजनस्य फलमिदमानुषङ्गिकमिति॥ १११॥

( मिता० )अध्वनीन इति। अध्वनि वर्तमानोऽतिथिर्वेदितव्यः। श्रोत्रियवेदपारगावध्वनि वर्तमानौ ब्रह्मलोकमभीप्सतो गृहस्थस्य

(१) धनुश्चिह्नगो भागः क. ग. नास्ति।

मान्यावतिथी वेदितव्यौ । यद्यप्यध्ययनमात्रेण श्रोत्रियस्तथापि श्रुताध्ययनसम्पन्नोऽत्र श्रोत्रियोऽभिधीयते । एकशा(१)खाध्यापनक्षमो वेदपारगः ॥ १११ ॥

( वी० मि० ) गृहस्थस्य धर्मान्तरमाह—

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ॥
वाक्पाणिपादचापल्यं वर्जयेच्चाऽतिभोजनम् ॥११२॥

परपाके रुचिर्येन्य स तथा न स्यात् । सति सम्भवे परान्नाऽशनं वर्जयेदिति । अ(२)त्र प्रतिप्रसवः–अनिन्द्यामन्त्रणादृते अनिन्द्यकृतामन्त्रणं विनेत्यर्थः । 'अनिन्द्येनाऽऽमन्त्रितो नाऽपक्रामे'दिति वचनात् । वाक्चापल्यमनृतभाषणादि । पाणिचापल्यं(३)परदारद्रव्यादानादि वृथास्फोटनादि । पादचापल्यं निर्माल्यलङ्घनादि वृथा क्षेपणादि । अतिभोजनम्—

जठरं पूरयेदर्धमन्नैर्भागं जलेन च ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥

इत्यादिविहितभोजनादधिकं भोजनम् । चकारान्नेत्रादिचापल्यसमुच्चय । 'न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्या'दिति गौतमवचनात् ॥ ११२ ॥

( मिता० ) परेति । परपाके रुचिर्यस्यासौ तथोक्तः परपाकरुचिः । नैवं परपाकरुचिः स्यात्, अनिन्द्येनामन्त्रणं विना । 'अनिन्द्येनामन्त्रितो नापक्रामेत्' इति स्मरणात् । वाक्पाणिपादचापल्यं वाक्च पाणी च पादौ च वाक्पाणिपादं तस्य चापल्यं वर्जयेत् । वाक्चापल्यमसम्बद्धानृतादिभाषणम् । पाणिचापल्यं व(४)ल्गनास्फोटनादि । पादचापल्यं लङ्घनोत्प्लवनादि । चकारान्नेत्रादिचापल्यं च वर्जयेत् ।'न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्यात्' इति गौतमस्मरणात् । तथा अतिभोजनं च वर्जयेत् । अनारोग्यहेतुत्वात् ॥ ११२ ॥

(१) अध्ययनक्षमो–ग । (२) अत्र इति क पु पाठः ।
(३) परदारेत्यारभ्य पादचापल्येत्यन्तं नास्ति क पुस्तके ।
(४) वल्गन ख ।

( वी० मि० ) पूर्वोक्तातिथिसत्कारे विशेषमाह—

अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ॥

तृप्तं निःपादिततृप्तिक्षमभोजनम् । आसीमान्तं स्वग्रामसीमापर्यन्तम् ॥

( वी० मि० ) षष्ठादिदिनभागकृत्यमाह—

अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥११३॥

अहःशेषमित्यन्तसंयोगे द्वितीया । शिष्टैः पुराणाद्यभिज्ञैः । इष्टैः प्रियैः । बन्धुभिः ज्ञात्यादिभिश्च । समासीत सुखेनासीत । तथा च दक्षः—

भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ॥
अष्टमे लोकयात्रा तु बहिः सन्ध्या ततः परम् ॥११३॥

( मिता० ) अतिथिमिति । पूर्वोक्तं श्रोत्रियातिथिं वेदपारगातिथिं च भोजनादिना तृप्तं सीमान्तं यावदनुव्रजेत् । ततो भोजनानन्तरमहःशेषं शिष्टैरितिहासपुराणादिवेदिभिः, इष्टैः काव्यकथाप्रपञ्चचतुरैः, बन्धुभिश्चानुकूलालापकुशलैः सहाऽऽसीत ॥ ११३ ॥

( वी० मि० ) सायंसन्ध्यादिकृत्यमाह सार्द्धश्लोकेन—

उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च ॥

भृत्यैः परिवृतो भुक्त्वा नाऽतितृप्तोऽथ संविशेत् ॥११४॥

उक्तविधिना सायंसन्ध्यावन्दनं कृत्वाऽग्नीन् श्रौतस्मार्तान् हुत्वा हवनक्रियायामग्नीनामपि कर्मत्वं, बहुशस्तथाप्रयोगदर्शनादित्यग्नीनित्युक्तम् । उपास्य उपस्थाय तद्दैवत्यमन्त्रजपादिनेति शेषः । चकाराद्वैश्वदेवहोमादिकं पुनःपाकपक्षे समुच्चिनोति । तथा च विष्णुपुराणम्—

पुनःपाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं तु पत्न्या सार्धं बलिं हरेत् ॥
तत्राऽपि श्वपचादिभ्यस्तथैवान्नापमा(१)र्जनम् ।

भृत्यैः पुत्रादिभिः परिवृतः सहितो भुक्त्वा नातितृप्तः अतितृप्तिशून्यः संविशेत् शयीत । भुक्त्वेत्यनेनैवानन्तर्याभिधानेऽथशब्देन वेदाभ्यासानन्तर्यमभिप्रैति ।

(१) पर्जनम्–इति ख. पु. पाठः ।

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्।
यामद्वयं शयानश्च ब्रह्मभूयाय कल्पते ॥

इति दक्षवचनात् ॥ ११४ ॥

(मिता०) उपास्येति। ततः पूर्वोक्तेन विधिना पश्चिमां सन्ध्यामुपास्य अ(१)हवनीयादीनग्नीनग्निं वा हुत्वा तानुपास्योपस्थाय भृत्यैः पूर्वोक्तैः स्वयासिन्यादिभिः परिवृतो नातितृप्य भुक्त्वा वकारादाय्व्ययादिगृहचिन्तां निर्वर्त्यानन्तरं संविशेत्स्वप्यात् ॥ ११४ ॥

ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ॥

( वी०मि० ) पञ्चदशधा विभक्ताया रात्रेश्चतुर्दशो भागो ब्राह्मो मुहूर्तः, तस्मिन्नुत्थाय निद्रां त्यक्त्वा आत्मनो हितं धर्मार्थकामरूपम्। यदाह मनुः—

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चाऽनुचिन्तयेत्।
कायक्लेशांश्च तन्मूलान् वेद तत्त्वार्थमेव च ॥

विष्णुपुराणे च—

अपीडया तयोः काममुभयोरपि चिन्तयेत् ॥

( वी० मि० ) चिन्तितांश्च धर्मादीन् यथाशक्ति निष्पादयेदित्याह—

धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥११५॥

स्वे धर्माद्याचरणाय विहिते न हापयेत् न त्यजेत्। तथा च गौतमः–'न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्याध्दर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्या'दिति ॥ ११५ ॥

( मिता० ) ब्राह्मे इति। ततो ब्राह्मे मुहूर्ते उत्थाय पश्चिमेऽर्धप्रहरे प्रबुध्यात्मनो हितं कृतं करिष्यमाणं च वेदार्थसंशयांश्च चिन्तयेत्। तदानीं चित्तस्याव्याकुलत्वेन तत्त्वप्रतिभा(२)नयोग्यत्वात्। ततो धर्मार्थकामान्स्वोचितकाले यथाशक्ति न परित्यजेत्। यथासम्भवं सेवेतेत्यर्थः पुरुषार्थत्वात्। यथाह गौतमः–'न पूर्वाह्णमध्याह्नापराह्णानफलान्कुर्यात् धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' इति। अत्र यद्यप्येतेषां सामान्येन सेवनमुक्तं तथापि कामार्थयोर्धर्माविरोधेनानुष्ठानं तयोर्धर्ममूलत्वादेवं प्रतिदिनमनुष्ठेयम् ॥ ११६ ॥

---

(१) अग्निमग्नीं-वा घ। (२) प्रतिभासन ख।

( वी० मि० ) गृहस्थधर्मान्तरमाह द्वाभ्याम्—

विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ॥
एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति ॥११६॥

विद्या उक्ताः । कर्म श्रौतं स्मार्त्तं च । वयः स्ववयसोऽधिकम् । सप्ततिवर्षोर्ध्वमिति केचित् । बन्धुर्बहुस्वजनसम्पत्तिः । वित्तं ग्राम्यपशुहिरण्यादि । एतैरुपलक्षिता यथाक्रमं पूर्वा मान्या मननीयाः । एतेन विद्याधिकानां पूर्वपूर्वस्य उत्तरोत्तरापेक्षया मान्यतायां गरीयस्त्वमुक्तम् । एतैर्विद्यादिभिः प्रभूतैः प्रत्येकं प्रचुरैः समस्तैर्व्यस्तैर्वा उपलक्षितः शूद्रोऽपि वार्द्धकेऽशीतिवर्षोर्ध्वं माननीय इत्यर्थः । यदाह गौतमः—'शूद्रोऽप्यशीतिको वर' इति ॥११६॥

( मिता० ) विद्येति । विद्या पूर्वोक्ता, कर्म श्रौतं स्मार्तं च, वयः आत्मनोऽतिरिक्तं सप्तत्या वा ऊर्ध्वं, ब(१)न्धुः स्वजनसम्पत्तिः, वित्तं ग्रामरत्नादिकम, एतैर्युक्ताः क्रमेण मान्याः पूजनीयाः । एतैर्विद्याकर्मबन्धुवित्तैः प्रभूतैः प्रवृद्धैः समस्तैर्व्यस्तैर्वा युक्तः शूद्रोऽपि वार्धके अशीतेरूर्ध्वं मानमर्हति । 'शूद्रोऽप्यशीतिको वरः' इति गौतमस्मरणात् ॥ ११६ ॥

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ॥
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ॥११७॥

(वी० मि०) वृद्धो नवतिवर्षाधिकवयस्कः। भारी भाराक्रान्तः। नृपो भूपतिः । स्नातः पूर्वोक्तः स्नातकः । स्त्री प्रसिद्धा। रोगी रोगपीडितः। वरो विवाहोद्यतः । चक्री शाकटिकः । एषां पन्था देयः पथि मिलितेष्वेच(२)तेषु तन्मार्गादपसर्तव्यमित्यर्थः । तेषां वृद्धादीनां मध्ये नृपो मान्यस्तेन वृद्धादिना राज्ञा सह पथि समवाये राज्ञः पन्था देय इत्यर्थः । भूपतेरपि स्नातको मान्यस्तेन राज्ञा स्नातकस्य पन्था देय इत्यर्थः । चकारान्मत्तान्धादिपरिग्रहः । तथा च शङ्खः—'बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तस्त्रीस्नातकप्रव्रजितेभ्यश्चे'ति । बौधायनश्च—

पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे ।

(१) बन्धुर्बहुस्वजन ग. ।
(२) मिलितेष्वेतेषु-इति-ख. पु. पाठः ।

ब्राह्मणायेत्यनेन सामान्यत एव ब्राह्मणस्य मान्यत्वमुक्तम् । यदाह शङ्खः-'अथ ब्राह्मणायाऽग्रे पन्था राज्ञ इत्येके, तद्यानिष्टं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्य पन्था' इति ॥ ११७ ॥

( मिता० ) वृद्धेति । वृद्धः प(१)क्वकेशः प्रसिद्धः । भारी भाराक्रान्तः । नृपो भू(२)पतिः, न क्षत्रियमात्रम् । स्नातो विद्याव्रतोभयस्नातकः । स्त्री प्रसिद्धा । रोगी व्याधितः । वरो विवाहोद्यतः । चक्री शाकटिकः । चकारान्मत्तोन्मत्तादीनां ग्रहणम् । 'बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तस्त्रीस्नातकप्रव्रजितेभ्यः' इति शङ्खस्मरणात् । एतेभ्यः पन्था देयः । एते(३)ष्वभिमुखायातेषु स्वयं पथोऽपक्रामेत् । वृद्धादीनां राज्ञा सह पथि समवाये राजा मान्य इति तस्मै पन्था देयः । भूपतेरपि स्नातको मान्यः । स्नातकग्रहणं स्नातकमात्रप्राप्त्यर्थं न ब्राह्मणाभिप्रायेण तस्य सदैव गुरुत्वात् । यथाह शङ्खः-'अथ ब्राह्मणायाग्रे पन्था देयो राज्ञ इत्येके । तद्यानिष्टं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्मै पन्था' इति । वृद्धादीनां पथि परस्परसमवाये वृद्धतराद्यपेक्षया विद्यादिभिर्वा विशेषो द्रष्टव्यः ॥ ११७ ॥

( वि० मि० ) धर्मार्थानां च कर्मणां गृहस्थकृत्यानां ब्राह्मणादिभेदेन व्यवस्थामाह चतुर्भिः—

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ॥
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥

इज्या यागः । अध्ययनं वेदपुराणादेः । दानं गवादेः । एतानि वैश्यस्य क्षत्रियस्य चकाराद्ब्राह्मणस्य च कर्माणि साधारणानि । ब्राह्मणस्य तु प्रतिग्रहयाजनाध्यापनान्यधिकानीत्यर्थः । याजनमार्त्विज्यम् । अत्र कर्मणां धर्मार्थत्वं वृत्त्यर्थं च यथायोग्यं मन्वाद्यनुसारेण नेयम् । तथापदेन कृष्यादेरापद्धर्मस्य परिग्रहः । तथा च गौतमः-'कृषिवाणिज्ये वाऽस्वयङ्कृते कुसीदं च' इति ॥ ११७ ॥

( मिता० ) इज्येति । वैश्यस्य क्षत्रियस्य च चकाराद्ब्राह्मणस्य द्विजानुलोमानां च यागाध्ययनदानानि साधारणानि कर्माणि । ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापनानि । तथेति स्मृत्यन्तरोक्तवृ-

(१) पक्वशीर्षः ख । (२) नृपो राजा न क. ।
(३) ष्वभिमुखमगतेषु ख ।

स्युपसङ्ग्रहः यथाह गौतमः-'कृषिवाणिज्ये वा स्वयं कृते कुसीदं च' इति। अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति न स्वेच्छया। 'आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा, समाप्ते ब्राह्मणो गुरुः' इति गौतमस्मरणात्। एतान्यनापदि ब्राह्मणस्य षट् कर्माणि। तत्र त्रीणीज्यादीनि धर्मार्थानि। त्रीणि प्रतिग्रहादीनि वृत्त्यर्थानि। 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' ॥ इति (१०।७६) मनुस्मरणात्। अत इज्यादीन्यवश्यं कर्तव्यानि न प्रतिग्रहादीनि। 'द्विजातीनामध्ययनमिज्या दानं, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमः' इति गौतमस्मरणात् ॥ ११८ ॥

प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ॥
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ॥११९॥

(वी० मि०) क्षत्रियस्य चौरादिभ्यः प्रजानां रक्षणं, दरिद्रादीनां वृत्तिकल्पनं च मुख्यं कर्म। कुसीदं वृद्ध्या धनप्रयोगः, कृषिर्भूकर्षणं, वाणिज्यं समर्घं क्रीत्वा लाभोपजीवनं, पाशुपाल्यं पशुपालनम्। एतानि विशः प्रधानकर्माणि स्मृतानि स्मृत्युक्तानि ॥ ११९ ॥

(मिता०) प्रधानमिति। क्षत्रियस्य प्रजापालनं कर्म धर्मार्थं वृत्त्यर्थं च। वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि वृत्त्यर्थानि कर्माणि। कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः। लाभार्थं क्रयविक्रयो वाणिज्यम्। शेषं प्रसिद्धम्। 'शस्त्रास्त्रभृत्त्वं क्षत्रियस्य वणिक् पशुकृषी विशः। आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः' ॥ इति (१०।७९) मनुस्मरणात् ॥ ११९ ॥

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् ॥
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥१२०॥
भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः(१) ॥
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥ १२१ ॥

(वी० मि०) द्विजशुश्रूषा त्रैवर्णिकसेवा शूद्रस्य प्रधानं कर्म। तत्र ब्राह्मणसेवा धर्मोऽपि, क्षत्रियवैश्यसेवा तु केवलं वृत्त्यर्थेति

(१) क्रियारतः—इति मुद्रितपुस्तके पाठः।

विवेकः। तया द्विजशुश्रूषयापि जीवितुमशक्नुवन् वणिग्भवेत् वणिज्यया जीवेत्। अथवा विविधैः शिल्पैश्चित्रकर्मभिर्द्विजातिहितं कुर्वन् जीवेत्। एवं च यैः शिल्पैर्द्विजातीनां हितन्तैरेव जीवनमनुज्ञातं, न तु तद्विपरीतैरिति। शिल्पपदं च, द्विजशुश्रूषणायोग्यत्वप्रयोजकान्यव्यापारसामान्यपरम्। यदाह देवलः—शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामृदङ्गमुरजवादनानी'ति। भार्यायामेव रतिरभिगमनं यस्य स तथोक्तः,शुचिर्बाह्याभ्यन्तरशौचवान्, भृत्यभर्ता पुत्रकलत्रादीनां पोषकः, श्राद्धक्रियापरः श्राद्धानुष्ठानपरः। यद्वा श्राद्धं क्रिया चेति द्वन्द्वः। तत्र चोक्तक्रियातिरिक्तशूद्राधिकारिकावश्यक्रियापरं क्रियापदम्। एते धर्माः साधारणा अपि द्विजातिहिताचरणोपयोगित्वेनाऽभिहिताः। अनीदृशां द्विजातिहिताचरणायोग्यत्वादित्यवधेयम्। नमस्कारेण नमःशब्दात्मकेन मन्त्रेण, न तु स्वधा(१)स्वाहाशब्देन न हापयेत् अवश्यं कुर्यात् ॥१२०॥१२१॥

( मिता० ) शूद्रस्येति। शूद्रस्य द्विजशुश्रूषा प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। तत्र ब्राह्मणशुश्रूषा परमो धर्मः। 'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते' इति ( १० । १२३ ) मनुस्मरणात्। यदा पुनर्द्विजशुश्रूषया जीवितुं न शक्नोति तदा वणिग्वृत्त्या जीवेत्। नानाविधैर्वा शिल्पैर्द्विजातीनां हितं कुर्वन् यादृशैः कर्मभिर्द्विजातिशुश्रूषायामयोग्यो न भवति तादृशानि कर्माणि कुर्वन्नित्यर्थः। तानि च देवलोक्तानि—'शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि' ॥ १२० ॥

( मिता० ) भार्येति। किं च भार्यायामेव न साधारणस्त्रीषु परस्त्रीषु वा रतिरभिगमनं यस्य स तथोक्तः। शुचिः बाह्याभ्यन्तरशौचयुक्तो द्विजवत्। भृत्यादिभर्ता। श्राद्धक्रियारतः—श्राद्धानि नित्यनैमित्तिककाम्यानि, क्रियाः व्रतक्रतवतान्यविरुद्धानि तेषु रतः। नम इत्यनेन मन्त्रेण पूर्वोक्तान्पञ्चमहायज्ञानहरहर्न हापयेदनुतिष्ठेत्। नमस्कारमन्त्रं च केचित्—'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।

(१) स्वधा इति क० पुस्तके नास्ति।

नमः स्वाहायै स्वधायै नित्यमेव नमोनमः' ॥ इति वर्णयन्ति । नम इत्यन्ये । तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यं न वैवाहिकेऽग्नावित्याचार्याः ॥ १२१ ॥

( वी० मि० ) अधुना सर्ववर्णसाधारणं गृहस्थधर्ममाह द्वाभ्याम—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥ १२२ ॥

अहिंसाऽविहितवधवर्जनं, सत्यं ब्राह्मणप्राणरक्षणाद्यनुपयोग्यनृतवचनाभावः, अस्तेयं शास्त्राननुमतचौर्याभावः, शौचं बाह्यमाभ्यन्तरं च, इन्द्रियनिग्रहः (१)शास्त्रानिषिद्धबहिरिन्द्रियव्यापारवर्जनम्, दानं प्रत्युपकाराद्यनपेक्षया पात्रे स्वधनप्रतिपादनम्, दमोऽन्तरिन्द्रियनिग्रहः, दया निरुपधिपरदुःखप्रहाणेच्छा, क्षान्तिरपकारिण्यपि को(२)पाभावः तत्कार्याभावो वा सर्वेषां वर्णानाम् ॥१२२॥

( मिता० ) इदानीं साधारणधर्मानाह—

अहिंसेति। हिंसा प्राणिपीडा तस्या अकरणमहिंसा। सत्यमप्राणिपीडाकरं यथार्थवचनम्। अस्तेयमदत्तानुपादानम् । शौचं बाह्यमाभ्यन्तरं च। बुद्धिकर्मेन्द्रियाणां नियतविषयवृत्तितेन्द्रियनिग्रहः। यथाशक्ति प्राणिनामन्नोदकादिदानेनार्तिपरिहारो दानम्। अन्तःकरणसंयमो दमः। आपन्नरक्षणं दया। अपकारेऽपि चित्तस्याविकारः क्षान्तिः। एते सर्वेषां पुरुषाणां ब्राह्मणाद्याच(३)ण्डालं धर्मसाधनम् ॥ १२२ ॥

वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ॥
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ १२३ ॥

( वी० मि० ) वयो बाल्ययौवनादि तत्सदृशीं वृत्तिं बालकः पांशुक्रीडनं युवा सुगन्धादिसेवनमित्यादि । बुद्धिप्रकर्षवान् महाभाष्यन्यायशास्त्राध्ययनमल्पबुद्धिः काव्यपुराणाध्ययनमर्थाधिक्यवान्महादानमल्पवित्तवानल्पान्नादिदानं, वाग्मी वाददौत्यादि, अवाग्मी तद्वैमुख्यं, सुवेषो राजसन्निधिं, मलिनवेषः शोकाद्यभिभूतानुसरणं,

(१) शास्त्रनिग्रहः—इत्यधिकं ख० पुस्तके।
(२) अपकारिणि विकोपाभावः—इति ख० पु० पाठः। (३) आचाण्डालान्तं ख.।

श्रुतमीमांसादिर्वेदार्थनिर्वचनं श्रुतालङ्कारशास्त्रः काव्यविवेचनमित्यादि । विशुद्धकुलः कुलीनकन्यावरणमविशुद्धकुलस्तादृशकन्यावरणं, यागादिकर्मकर्ता पशुहिंसनं, राज्यकर्ता प्रजासंरक्षणमित्यादिकां वृत्तिं वयःप्रभृतीनामुचितामाचरेत् । अजिह्मामवक्रामव्याजामिति यावत् । अशठां दम्भशून्याम् ॥ १२३ ॥

( मिता० ) वय इत्यादि । वयो बाल्ययौवनादि । बुद्धिर्नैसर्गिकी लौकिकवैदिकव्यव(१)हारेषु । अर्थो वित्तं गृहक्षेत्रादि । वाक् (२)कथनम् । वेदो वर्णमालयादिविन्यासः । श्रुतं पुरुषार्थशास्त्रश्रवणम् । अभिजनः कुलम् । कर्म वृत्त्यर्थं प्रतिग्रहादि । एतेषां वयःप्रभृतीनां सदृशीमुचितां वृत्तिमाचरणं आचरेत्स्वीकुर्यात् । यथा वृद्धः स्वोचितां न यौवनोचिताम् । एवं बुद्ध्यादिष्वपि योज्यम् । अजिह्मामवक्राम् । अशठाममत्सराम् ॥ १२३ ॥

( वी० मि० ) एवं स्मार्तानि कर्माण्यभिधाय श्रौतानि कर्माणि त्रैवर्णिकगृहस्थस्याह—

त्रैवार्षिकाधिकान्नो यः स तु (३)सोमं पिबेद् द्विजः ॥
प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥१२४॥

त्रैवार्षिकं वर्षत्रयनिर्वाहोचितं तदधिकं वाऽन्नं यस्य स सोमयागं कुर्यान्नातोऽल्पधनः । तदाह मनु —

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति ॥
अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि तस्य नाप्नोति तत्फलम् ॥

एतच्च काम्यपरं नित्यस्याऽऽवश्यकत्वेन त्रैवार्षिकाद्यभावेऽपि कर्तव्यत्वात् । सोमात् प्राक् प्राक्सोमं तत्र भवाः क्रियाः प्राक्सौमिकयस्ताः अग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यात्मिका वर्षपर्यन्तनिर्वाहोचितान्नवानेव कुर्यान्न ततोऽल्पधनः ॥ १२४ ॥

( मिता० ) एवं स्मार्तानि कर्माण्यनुक्रम्येदानीं श्रौतानि कर्माण्यनुक्रामति—

त्रैवार्षिकेत्यादि । त्रिवर्षजीवनपर्याप्तं त्रैवार्षिकमधिकं वा अन्नं

(१) व्यवहारेषु ज्ञान क । (२) वचनम् ग । (३) स हि-इति मुद्रितपुस्तके पाठः ।

यस्य स एव सो(१)मपानं कुर्यान्न ततोऽल्पधनः । ( मनुः ११ । ८ ) 'अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः । स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलम्' ॥ इति दोषश्रवणात् । एतच्च काम्याभिप्रायेण । नित्यस्य चावश्यकर्तव्यत्वान्न नियमः । यस्य वर्षजीवनपर्याप्तमन्नं भवति स प्राक्सौमिकीः सोमात्प्राक् प्राक्सोमं प्राक्सोमं भवाः प्राक्सौमिक्यः, कास्ताः? अग्निहोत्रदर्शपूर्णमासा(२)ग्रयणपशुचातुर्मास्यानि क(३)र्माणि तद्विकाराश्चैताः क्रियाः कुर्यात ॥१२४॥

(वी०मि०) एवं काम्यानि श्रौतानि कर्माण्यभिधाय नित्यान्याह—

प्रतिसम्वत्सरं सोमः पशुः प्रत्ययनं तथा ॥
कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥ १२५ ॥
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ॥

संवत्सरे संवत्सरे सोमयागः कार्यः । अयनेऽयने पशुयागः कार्यः । सस्योत्पत्तौ सस्योत्पत्तौ आग्रयणेष्टिः कार्या । चातुर्मास्येष्टयस्तिस्रः ऋतुषु वत्सरस्य त्रिष्वग्र्यृतुषु कार्याः । यथा जाबालः—

दर्शेन चाऽर्द्धमासान्ते पूर्णमासेन चैव हि ।
सस्यपक्तौ नवेष्टया च चातुर्मास्यैस्त्वृतोर्मुखे ॥
अयनादौ निगूढेन पशुना वत्सरेण वा ।
समान्ते सोमयागेन त्विष्ट्वा युक्तो न संशयः ॥
सायंप्रातः सदाऽभ्यस्तं वैतानं जुहुयान्नरः ।

एषां सोमादीनामभावे करणाशक्तौ वैश्वानरीमिष्टिमनुकल्पत्वेन कुर्यात् । एषामभाव इत्युक्तम् ॥

(वी०मि०) एषां सम्भवे तु न वैश्वानरेष्टिः कार्या हीनकल्पत्वादित्याह—

हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥१२६॥

न कुर्वीतेत्यत्र हेतुः सतीत्यादिः । द्रव्यपदं मुख्यकल्पोपयुक्तसर्वाङ्गसम्पत्तिपरम । य(४)स्मिन्सत्येव समर्थस्य फलप्रदं मुख्यं कर्म न त्वनुकल्परूपमित्यर्थः । यद्वा सति द्रव्ये न कुर्वीत यतोऽफलप्रदं हीनकल्पाचरणमिति योज्यम् ॥ १२५ ॥ १२६ ॥

(१) सोमयागं क. ग. । (२) पूर्णमासपशु ख. पूर्णमासचातुर्मास्यानि ग. ।
(३) काम्यानि क. । (४) तस्मिन्–इति ख० पु० पाठः ।

(मिता०) एवं याग्यानि श्रौतानि कर्माण्यभिधायेदानीं नित्यान्याह—

प्रतीत्यादि । संवत्सरे संवत्सरे सोमयागः कार्यः । पशुः प्रत्ययनं अयने अयने दक्षिणोत्तरसंज्ञते निरूढपशुयागः कार्यः । तथा प्रतिसंवत्सरं वा । 'पशुना संवत्सरे संवत्सरे यजेत षट्सु वा मासेष्वित्येके' इति श्रवणात् । आग्रयणेष्टिश्च सस्योत्पत्तौ कर्तव्या । चातुर्मास्यानि च प्रतिसंवत्सरे कर्तव्यानि ॥ १२५ ॥

( मिता० ) एषामिति । एषां सोमप्रभृतीनां पूर्वोक्तानां नित्यानां कथञ्चिदसम्भवे तत्काले वैश्वानरीमिष्टिं कुर्यात् । किं च योऽयं हीनकल्प उक्तः सति द्रव्येऽसौ न कर्तव्यः यच्च फलप्रदं काम्यं तद्धीनकल्पं न कुर्वीत न कर्तव्यमेव ॥ १२६ ॥

( वी० मि० ) यज्ञोपयुक्तं द्रव्यार्जनोपायनियमं यज्ञार्जितद्रव्याणां यज्ञेऽशेषविनियोगनियमं चाह—

चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ॥

यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् ॥ १२७ ॥

शूद्राद्भिक्षितेन द्रव्येण यज्ञाचरणात् जन्मान्तरे चण्डालो भवति । यज्ञार्थं त्रैवर्णिकादपि लब्धं द्रव्यं (१)सर्वं यज्ञेऽविनियुञ्जानोऽपि जन्मान्तरे भासो पक्षकुक्कुटः काको वा भवेदित्यर्थः । तथा च मनु —

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित् ।
यजमानो हि भिक्षित्वा चाण्डालः प्रेत्य जायते ॥

तथा—

यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ।
स याति भासतां विप्रः काकतां वा शतं समाः ॥

गृहस्थस्तावद्द्विविधः शालीनो यायावरश्च । यदाह हारीत —'द्विविधमेव गृहस्थमाहुः शालीनं यायावरं च' । शालीनात्पुण्यतरो यायावरः । यस्योऽस्य शाला इति शालीनः । शालाया वा इति वा शालीनः । दश रात्रीर्वसन् प्रयातीति यायावरः । देवलेऽपि—'द्विविधो गृहस्थो यायावरः शालीनश्च तयोर्यायावरः प्रवरो याजनाऽध्यापनप्रतिग्रहरिक्थवर्जनात् षट्कर्माधिष्ठितः प्रेष्यचतुष्पद्गृहग्रामधान्ययुक्तो लोकानुवर्ती शालीनः' ।(२)तत्र 'प्रतिग्रहोऽधिको विप्र' इत्यादिना शालीनस्य वृत्तयो दर्शिताः ॥ १२७ ॥

(१) यत्-इति क० पु० पाठः । (२) तत्र-इति क० पु० पाठः ।

( मिता० ) चण्डाल इति । यज्ञार्थं शूद्रधनयाचनेन जन्मान्तरे चण्डालो जायते । यः पुनर्यज्ञार्थं याचितं (१) न सर्वं प्रयच्छति न त्यजति स भासः काकोऽपि वा वर्षशतं भवेत् । यथाह मनुः ( ११ । २५ )—'यज्ञार्थमर्थं भिक्षित्वा यः सर्वं न प्रयच्छति । स याति भासतां विप्रः काकतां वा शतं समाः' ॥ इति । भासः शकुन्तः । काकः प्रसिद्धः ॥ १२७ ॥

( वी०मि० ) इदानीमुभयसाधनं वृत्तिकृतधनसञ्चयनिबन्धनं चातुर्विध्यं दर्शयन्नेव यायावरस्य वृत्तिमाह—

कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा ॥
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः ॥ १२८ ॥

द्वादशदिनपर्यन्तकुटुम्बभ(२)रणक्षमधान्यक्षमा कोष्ठी कुशूलं, तत्परिमितधान्यवान् कुशूलधान्यकः । (३)षड्दिनपर्यन्तकुटुम्बभरणक्षमधान्यधारणयोग्या कलशी कुम्भी, तत्परिमितधान्यवान् कुम्भीधान्यकः । त्र्यहपर्याप्तं धान्यं यस्य सः त्र्याहिकः । श्वस्तनं श्वो भवं तादृशं धान्यं यस्य न विद्यते सोऽश्वस्तनः । एवं चतुर्विधो यायावरगृहस्थः शिलोञ्छेन जीवेत् । एषां चतुर्णां मध्ये शालीनो यायावरो वा परः परः श्रेयान् प्रशस्ततरः । शाल्यादेः क्षेत्रखलादिनिपतितपरित्यक्तवल्लरीग्रहणं शिलं तादृशैकैकशाल्यादिकणग्रहणमुञ्छः । वाशब्दः प्रागुक्तशालीनवृत्त्यपेक्षया । अपिशब्देन नीवाराद्युपादानसमुच्चयः । तथाचाऽऽपस्तम्बः—'शिलोञ्छौ चाऽन्यच्चाऽपरिगृहीत'मिति ॥ १२८ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने गृहस्थप्रकरणम् ॥

---

( मिता० ) कुशूलेति । कुशूलं कोष्ठकं, कुम्भी उष्ट्रिका, कुशूलं च कुम्भी च कुशूलकुम्भ्यौ ताभ्यां परिमितं धान्यं यस्य स तथोक्तः कुशूलधान्यः स्यात्कुम्भीधान्यो वा । तत्र स्वकुटुम्बपोषणे द्वादशा-

(१) न परित्यजति क. ।

(२) 'भरणक्षम'–इत्यत्र 'रक्षण'–इति घ० पु० पाठः ।

(३) 'षड्दिन'–इत्यारभ्य 'कुम्भीधान्यकः'–इत्यन्तं घ० पुस्तके नास्ति ।

दृमात्रपर्याप्तं धान्यं यस्यास्ति स कुशूलधान्यः। कुम्भीधान्यस्तु स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्यः। त्र्यहपर्याप्तं धान्यमस्यास्तीति त्र्याहिकः। श्वोभवं धान्यमस्यास्तीति श्वस्तनः। न विद्यते श्वस्तनं यस्य सोऽश्वस्तनः॥

( मिता० ) कुशूलधान्यादिसञ्चयोपायमाह—

जीवेदिति। शाल्या(१)दिनिपतितपरित्यक्तवल्लरीग्रहणं शिलम्, एकैकस्य परित्यक्तस्य कणस्योपादानमुञ्छः, शिलं चोञ्छश्च शिलोञ्छं तेन शिलेनोञ्छेन वा। कुशूलधान्यादिश्चतुर्विधो गृहस्थो जीवेत्। एषां कुशूलधान्यादीनां ब्रा(२)ह्मणानां गृहस्थानां चतुर्णां परः परः पश्चात्पश्चात्पठितः श्रे(३)यान्प्रशस्यतरः। एतच्च यद्यपि द्विजः प्र(४)कृतस्तथापि ब्राह्मणस्यैव भवितुमर्हति विद्योपशमादियोगात्। तथा च मनुना ( ४। २ )—'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि'॥ इति विप्रमेव प्र(५)स्तुत्य ( मनुः ४। ७ )—'कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा' इत्याद्यभिहितत्वात्। एतच्चातिसंय(६)तं यायावर प्रत्युच्यते न विप्रमात्राभिप्रायेण। तथा सति—'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः' इत्यनेन न विरोधः। तथा च गृहस्थानां द्वैविध्यं तत्र तत्रोक्तम्। यथाह देवलः—'द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसञ्चयवर्जनात् षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीनः' इति। शालीनोऽपि चतुर्विधः—याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजनादिभिस्त्रिभिरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैव। तथाह मनुः ( ४। ९ )—'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति'॥ इति। अत्र च 'प्रतिग्रहोऽधिको विप्रे' इत्यादिना शालीनस्य वृत्तयो दर्शिताः। यायावरस्य 'जीवेद्वापि शिलोञ्छेने'ति॥ १२८॥

इति गृहस्थधर्मप्रकरणम्।



(१) शाल्यादेर्नैतन्नि क (२) ब्राह्मणानां चतुर्णां ख (३) श्रेयानुत्कृष्टतम ख
(४) प्रकृत प्रकरणात् प्राकृत ख (५) पुरस्कृत्य क (६) नतिसंयमसंयत क

(वी० मि०) इदानीं पूर्वोक्तस्य त्रिविधस्य स्नातकस्य विधिनिषेधरूपान् धर्मानाह—

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः॥
न विरुद्धप्रसङ्गेन सन्तोषी च भवेत्सदा॥ १२९॥

स्वाध्यायाभ्यासविरोधिनमत्यन्तेश्वरोपसर्पणादिसाध्यमर्थं धनं नेहेत नान्विच्छेत्। यतस्ततः अविदिताचारात्पतितादेश्च नाऽर्थमीहेत। विरुद्धद्यूतादिप्रसङ्गो गीताद्यासङ्गः। यदि न दास्यसि तदा तवेदमनिष्टं भविष्यतीत्यनिष्टप्रदर्शनं, तेन नार्थमीहेत। तथा च मनुः—

नेहेतार्थं प्रसङ्गेन न विरुद्धेन कर्मणा।

सन्तोषी(१)अर्थालाभेऽपि तृष्णाशून्यः। चकारात्संयतश्च भवेत्। तथा च मनुः—

सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्॥ १२९॥

(मिता०) एवं श्रौतस्मार्तानि कर्माण्यभिधायेदानीं गृहस्थस्य स्नानादारभ्य ब्राह्मणस्यावश्यकर्तव्यानि विधिप्रतिषेधात्मकानि मानससङ्कल्परूपाणि स्नातकव्रतान्याह—

नेति। ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपाया दर्शितास्तत्र विशेष उच्यते। स्वाध्यायविरोधिनमर्थमप्रतिषिद्धमपि नेहेत नान्विच्छेत् न यतः कुतश्चिदविदिताचारात्। न विरुद्धप्रसङ्गेन विरुद्धम याज्ययाजनादि, प्रसङ्गो नृत्यगीतादिः। विरुद्धं च प्रसङ्गश्च विरुद्धप्रसङ्गं तेन। नार्थमीहेतेति सम्बध्यते। नञ्शब्दः प्रत्येकं पर्युदासार्थ एव। किंच अर्थालाभेऽपि संतोषी परितृप्तो भवेत्। चकारात्संयतश्च 'संतोषं परमास्थाय सुखार्थी संयतो भवेत्' इति (४। १२) मनुस्मरणात्॥ १२९॥

(वी०मि०) येभ्योऽर्थ ईहितव्यस्तानाह—

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा॥

क्षुधा बुभुक्षया। उपलक्षणमेतत्। शीतादिनाऽपि द्रष्टव्यम्। सीदन् पीड्यमानः। राज्ञो विदितसच्चरित्रात्। अन्तेवासिनो वक्ष्यमा-

(१) सन्तोषी—इति क० पुस्तके नास्ति।

णात् । याज्यात् आर्त्विजो याजनार्हात् । धनमिच्छेत गृहीयादिति तात्पर्यम् ॥

(वी०मि०) किञ्च—

दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥

दम्भी लोकवञ्चनार्थे कर्मानुष्ठानशीलः । हैतुकः कुयुक्तिबलेन सर्वत्र वैदिकादौ कर्मणि परेषां संशयोत्पादनशीलः । पाखण्डी त्रैविद्यबाह्यपरिगृहीतमतकारी । बकवृत्तिः—

अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः ॥

इति मनुना लक्षितः । एतान् सर्वकार्येषु लौकिकेषु वैदिकेषु च वर्जयेत् परिहरेत् स्नातकः । चकारेण विकर्मस्थादिपरिग्रहः । तथा च मनुः—

पाखण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणाऽपि नार्चयेत् ॥

तथा—

धर्मध्वजी सदा लुब्धः छाद्मिको लोकदाम्भिकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥

(मिता०) कुतस्तर्हि धनमभिवाञ्छेदित्याह—

राजेत्यादि । क्षुधा सीदन्पीड्यमानः स्नातकः राज्ञो विदितवृत्तान्तात्, अन्तेवासिनो वक्ष्यमाणलक्षणात्, याज्यात् याजनार्हाच्च धनमाददीत । क्षुधा सीदन्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चि(१)दर्थमभिवाञ्छेदिति गम्यते । किञ्च दम्भिहैतुकादीन्सर्वकार्येषु लौकिकवैदिकशास्त्रीयेषु वर्जयेत् । चकाराद्विकर्मस्थवैडालव्र(२)तिकान् शठान्वर्जयेत् । यथाह मनुः—(४ । ३०) 'पाषण्डिनो विकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' ॥ इति । लोकरञ्जनार्थमेव कर्मानुष्ठायी दम्भी । युक्तिबलेन सर्वत्र संशयकारी हैतुकः । त्रैविद्यविरुद्धपरिगृहीताश्रमिणः पाषण्डिनः । बकवदस्य वर्तनमिति बकवृत्तिः । यथाह मनुः—'अधोदृष्टिर्नै(३)ष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्यावि-

(१) कुतश्चिद्धनमभि० क० । (२) व्रतिकशठान् क० ग० । (३) नैष्कृतिकः ग० ।

नीतश्च बकवृत्तिरुदाहृतः'॥ इति। प्रतिषिद्धसेविनो विकर्मस्थाः। बिडालो मार्जारस्तस्य व्रतं स्वभावो यस्यासौ वैडालव्रतिकः। तस्य लक्षणमाह मनुः—( ४। १९५ ) 'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः' ॥ इति। शठः सर्वत्र वक्रः। एतैः संसर्गनिषेधादेव स्वयमेवम्भूतो न भवेदिति गम्यते॥ १३०॥

(वी० मि०) किञ्च—

शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः॥

शुक्ले अम्बरे वाससी धारयतीति शुक्लाम्बरधरः। इदं च सति सम्भवे।

न जीर्णमलवद्वासा भवेच्च विभवे सति।

इति वचनात्। नीचानि कल्पितानि केशादीनि यस्य सः। शुचिराभ्यन्तरबाह्यशौचवान् भवेदिति शेषः॥

(वी० मि०) किञ्च—

न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः॥१३१॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्॥
नाहितं नानृतं चैव न स्तेनः स्यान्न (१)वार्धुषिः॥१३२॥

भार्यादर्शने भार्यया दृश्यमानः। भार्यां पश्यन् इति केचित्। संस्थितः उर्द्धस्थितः। परे तु भार्यायां पुरोऽवस्थितायामित्यर्थः। तथा च श्रुतिः—'जायाया अन्ते नाऽश्नीयादवीर्य्यवदपत्यं भवती'ति व्याचक्षते। अश्नीयादिति त्रिष्वपि सम्बध्यते। संशयं प्राणविपत्तिसंशयावहं चौरव्याघ्राद्युपहतदेशाक्रमणादि कर्म न कुर्यात्। अकस्मात् शास्त्रीयकारणं विना। अप्रियं श्रूयमाणपरोद्वेगकरं वाक्यं न वदेत्। अहितमुदर्कानिष्टफलम्, अनृतमसत्यं वाक्यं च न वदेत्। अकस्मादिति वदेदिति त्रिषु सम्बध्यते। चकारात्परपातकादिसूचकवाक्यपरिग्रहः। एवकारः सर्वत्र नियमबोधनार्थस्तेन शास्त्राननुमतपरस्वग्रहणवान्। वार्धुषिः—

समर्घं धान्यमादाय महार्घं यः प्रयच्छति।
स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत्॥

(१) वार्धुषी-इति ख० पुस्तके मुद्रितपुस्तके न पाठः।

इति यमेन लक्षितः । क्वचिद्वार्धुषीतिपाठः ॥ १३१-१३२ ॥

( मिता० ) शुक्लेत्यादि । शुक्ले धौते अम्बरे वाससी धरतीति शुक्लाम्बरधरः । केशाश्च श्मश्रूणि च नखाश्च केशश्मश्रुनखं नीचं निकृत्तं केशश्मश्रुनखं यस्यासौ तथोक्तः । शुचिरन्तर्बहिश्च स्नानानुलेपनधूपस्रगादिभिः सुगन्धी च भवेत् । यथाह गौतमः-'स्नातको नित्यशुचिः सुगन्धिः स्नानशील' इति । सुगन्धित्वविधानादेव निर्गन्धमाल्यस्य निषेधः । तथा च गोभिलः-'नागन्धां स्रजं धारयेदन्यत्र हिरण्यरत्नस्रजः' इति । सदा स्नातक एवंभूतो भवेत् । एतच्च सति संभवे-'न जीर्णमलवद्वासा भवेच्च विभवे सति' इति स्मरणात् । न च भार्यादर्शने तस्यां पुरतोऽवस्थितायामश्नीयात् । अवीर्यवदपत्योत्पत्तिभयात् । तथा च श्रुतिः-'जायाया अन्ते नाश्नीयादवीर्यवदपत्यं भवति' इति । अतस्तया सह भोजनं दूरादेव निरस्तम् । न चैकवासाः नाऽपि संस्थितः उत्थितः अश्नीयादिति सम्बध्यते ॥ १३१ ॥

( मिता० ) नेति । कदाचिदपि संशयं प्राणविपत्तिसंशयावहं कर्म न प्रपद्येत न कुर्यात् । यथा व्याघ्रचौराद्युपहतदेशाक्रमणादि । अकस्मान्निष्कारणं कञ्चिदपि (१)पुरुषं स्त्रियं वा अप्रियमुद्वेगकरं वाक्यं न वदेत् । न चाहितं नानृतं वा प्रियमपि । चकारादश्लीलमसभ्यं बीभत्सकरं चाकस्मान्न वदेदिति सम्बध्यते । एतच्च परिहासादिव्यतिरेकेण-'गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना' इति स्मरणात् । न च स्तेनः अन्यदीयस्यादत्तस्य ग्रहीता न स्यात् । न वार्धुषी स्यात् । प्रतिषिद्धवृद्ध्युपजीवी वार्धुषी ॥ १३२ ॥

( वी० मि० ) किञ्च—

दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः ॥

दाक्षायणं सुवर्णं ब्रह्मसूत्रमुपवीतं, वेणुर्वेणुयष्टिः, कमण्डलुश्च सजलः । सति सम्भवे सर्वमेतच्चतुष्टयधारी स्यादिति शेषः । उपलक्षणं चैतत् । तथा च मनुः—

वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

---

(१) पुरुषमेव ख० ।

एवं च दाक्षायणपदमपि कुण्डलपरमेव । वेदो दर्भमुष्टिः । अत्र ब्रह्मचारिप्रकरणोक्तस्याऽपि यज्ञोपवीतस्य पुनर्वचनं द्वितीययज्ञोपवीतप्राप्त्यर्थम् । यदाह वसिष्ठः—

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः ॥

( वी० मि० ) किञ्च—

कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥

देवं देवतार्चाशिवलिङ्गादिकं, मृदमुद्धृतां गां विप्रं वनस्पतिं च । तेषां सन्निधिगमनप्रसक्तौ प्रदक्षिणं कुर्यात् । दक्षिणपार्श्वं कृत्वा गच्छेत् ॥ १३३ ॥

( मिता० ) किञ्च—

दाक्षायणीति । दाक्षायणं सुवर्णं (१)तदस्यास्तीति दाक्षायणी । ब्रह्मसूत्रं यज्ञोपवीतं तदस्यास्तीति ब्रह्मसूत्री । वैणवयष्टिमान् । कमण्डलुमान् स्यादिति सर्वत्र सम्बन्धनीयम् । अत्र च ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्त्यर्थम् । यथाह वसिष्ठः—'स्नातकानां तु नित्यं स्यादन्तर्वासस्तथोत्तरम् । यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः' । इति । अत्र च दाक्षायणीति सामान्याभिधानेऽपि कुण्डलधारणमेव कार्यम् । 'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले' । इति ( ४ । ३६ ) मनुस्मरणात् । (२)तथा देवं देवतार्चां, मृदं तीर्थादुद्धृतां, गां, ब्राह्मणं, वनस्पतींश्चाऽश्वत्थादीन्प्रदक्षिणं कुर्यात् । एतान्द(३)क्षिणतः कृत्वा व्रजेदित्यर्थः । एवं चतुष्पथादीनपि ।'मृदं गां देवतां विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्' ॥ इति ( ४ । ३९ ) मनुस्मरणात् ॥ १३३ ॥

( वी० मि० ) किञ्च—

न मेहेत (४)नदीछायावर्त्मगोष्ठाम्बुभस्मसु ॥
न प्रत्यर्का(५)ग्निगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः ॥१३४॥

---

(१) तद्दान, तद्धारणात क० । (२) एवं देवं क० । (३) प्रदक्षिणतः ख० ।
(४) न तु गेहेन्नदी-इति मुद्रितपुस्तके पाठः । (५) न प्रत्यग्न्यर्कगो-इति मु० पु० पाठः ।

नेक्षेताऽर्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ॥
न च मूत्रं पुरीषं (१)वा नाशुची राहुतारकाः ॥ १३५ ॥

नदी तत्तीरं, अम्बुनः पृथगुपादानात्। छाया पथिकाद्युपजीव्या, वर्त्म मार्गः, गोष्ठं प्रायेण गवावस्थितिस्थानं, अम्बु जलं, भस्म प्रसिद्धम्, एषु न मेहेत न मूत्रपुरीषोत्सर्गं कुर्यात्। तथाऽर्कादीन् प्रति अर्काद्यभिमुखं न मेहेत। सन्ध्या मुख्या। निषेधस्तु सन्ध्यायां मेहननिषेधपर्यासः। अर्कं उदयाद्यवस्थापन्नम्। तदाह मनुः—

नेक्षेतोद्यन्तमादित्यं नाऽस्तं यान्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्॥

स्वयमुपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत न नग्नां स्त्रियमीक्षेताऽन्यत्र मैथुनादित्याश्वलायनात्। संसृष्टमैथुनां अचिरकृतोपभोगाम्। चकाराद्भोजनाद्याचरन्तीं भार्याम्। तथा च मनुः—

नाऽश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाऽश्नतीम्।
क्षुवन्तीं जृम्भमाणां वा न चाऽऽसीनां यथासुखम्॥
नाऽञ्जयन्तीं स्वके नेत्रे न चाऽभ्यक्तामनावृताम्।
न पश्येत्प्रसवन्तीं च श्रेयस्कामो द्विजोत्तमः॥

मूत्रं पुरीषं वा शौचानन्तरं नेक्षेत। 'शौचं कृत्वा मूत्रपुरीषोच्चारं न पश्ये'दिति वचनात्। चकारादुदके स्वप्रतिबिम्बादि।

न चोदके निरीक्षेत स्वरूपमिति धारणा।

इत्यादिवचनात्। अशुचिर्मूत्राद्युच्छिष्टः सन् राहुं तारकाश्च नेक्षेत ॥१३४–१३५॥

(मिता०) नेति। नद्यादिषु न मेहेत् न मूत्रपुरीषोत्सर्गं कुर्यात्। एवं श्मशानादावपि। यथाह शङ्खः—'न गोमयकृष्टोप्तशाद्वलचितिश्मशानवल्मीक(२)वर्त्मखलगोष्ठबिलपर्वतपुलिनेषु मेहेत भूताधारत्वात्'। तथाग्न्यादीन्प्रति अग्न्यादीनामभिमुखे न मेहेत्। नाप्येतान्पश्यन्। यथाह गौतमः—'न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येन्नै(३)तान्प्रति पादौ प्रसारयेत्' इति। एतद्देशव्यतिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मू(४)त्रपुरीषे

(१) च—इति क० पु० पाठः। (२) श्मशानवल्मीक क०।
(३) नैता देवता प्रति ख०। (४) मेहन कार्यं क० ग०।

कुर्यादिति । यथाह वसिष्ठः—'परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैर-न्तर्धाय मूत्रपुरीषे कुर्यात्' इति ॥ १३४ ॥

(मिता०,नेक्षेतेति। नैवार्कमीक्षेतेति यद्यप्यत्र सामान्येनोक्तं तथा-प्युदयास्तसमयराहुग्रस्तोदकप्रतिबिम्बमध्याह्नवर्तिन एवादित्यस्यावेक्ष-णं निषिध्यते न सर्वदा । यथोक्तं मनुना( ४।३७ )-'नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्' ॥ इति । उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत । 'न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात्' इत्याश्वलायनः । संसृष्टमैथुनां कृतोपभोगाम् । उपभोगान्तेऽन-ग्नामपि नेक्षेत । चकाराद्भोजनादिकमाचरन्तीम् । तथा च मनुः ( ४ ४३ )-'नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च न चासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च श्रेयस्कामो द्विजोत्तमः' ॥ इति । मूत्रपुरीषे च न पश्येत् । तथा अशुचिः सन् राहुतारकाश्च न पश्येत् । चकारादुदके स्वप्रतिबिम्बं न पश्येत् । 'न चोदके निरीक्षेत स्वं रूपमिति धारणा' इति वचनात् ॥ १३५ ॥

( वी० मि० ) किञ्च—

अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन् (१) ॥
वर्षत्यप्रावृतो गच्छेत् स्वपेत्प्रत्यक्शिरा न च ॥ १३६ ॥

देवे वर्षति सति अप्रावृतोऽनाच्छादितः । 'अयं मे वज्रः पाप्मा-नमहन्'दिति सम्पूर्णं मन्त्रमुच्चारयन् गच्छेत् न तु धावेत । 'न धावेच्च वर्षती'ति वचनात् । तथा प्रत्यक्शिराः पश्चिमशिराः न स्वपेत् न निद्रां कुर्यात् । चकारादुदक्शिरसश्च ग्रहणम् तथा च मार्कण्डेयपुराणम्—

पश्चिमे प्रबला चिन्ता हानिर्मृत्यु(२)स्तथोत्तरे ।

हारीतः 'न तिर्यगुदक्प्रत्यक्शिराः' ॥ १३६ ॥

(मिता०) अयमिति । वर्षति सति 'अयं मे वज्रः पाप्मानमप-हन्तु' इति मन्त्रमुच्चारयेत् । वर्षति अप्रावृतोऽनाच्छादितो न गच्छे-न्न धा(३)वेत् । 'न प्रधावेच्च वर्षति' इति प्रतिषेधात् । न च प्रत्य-

(१) उदीरयेत—इति मुद्रितपुस्तके पाठः ।

(२) हानिर्मृत्युस्थोत्तरे—इति ख० पु० पाठः । (३) च्छादितो न दधात् क० ।

शिरसः स्वप्यात् । चकारान्नग्नो न शयीत । एकश्च शून्यगृहे न च नग्नः शयीतेति । 'नैकः स्वपेच्छून्यगृहे' इति च (४।५७) मनुस्मरणात् ॥ १३६ ॥

(वी० मि०) किञ्च—

ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ॥

ष्ठीवनं मुखेन त्यज्यमानं लालादि, असृक् रक्तं, शकृत्पुरीषं, मूत्ररेतसी प्रसिद्धे । विषाणीति क्वचित्पाठः । तत्र विषं कृत्रिमाकृत्रिमम् । एतानि जले न क्षिपेत् ॥

(वी०मि०) अपि च—

पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥

अग्नौ प्रत्यग्नि पादप्रतापनं न कुर्यात् । एनमग्निं न लङ्घयेत् । चकारान्मुखधमनादिपरिग्रहः । तथा च मनुः—

*नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।*
*नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥*
*अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् ।*
*न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत् ॥ १३७ ॥*

(मिता०) ष्ठीवनेत्यादि । ष्ठीवनमुद्गिरणं, असृग्रक्तं, शकृत् पुरीषं, शेषं प्रसिद्धं, एतान्यप्सु न निक्षिपेत् । एवं तुषादीनपि । यथाह शङ्खः— 'तुषकेशपुरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न निक्षिपेन्न पादेन पाणिना वा जलमभिहन्यात्' इति । अग्नौ च पादौ न प्रतापयेत् । नाप्यग्निं लङ्घयेत् । चकारात् ष्ठीवनादीन्यग्नौ न निक्षिपेत् । मुखोपधमनादि चाग्नेर्न कुर्यात् । तथा च मनुः (४।५३)—'नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् । अधस्तान्नोपदध्याच्च न चैनम(१) भिलङ्घयेत् । न चैनं पादतः कुर्यान्न प्राणि(२)वधमाचरेत्' ॥ इति ॥ १३७ ॥

(वी० मि०) किञ्च—

जलं पिबेन्नाऽञ्जलिना न शयानं प्रबोधयेत् ॥
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १३८ ॥

---

(१) मनुलङ्घयेत् ग० । (२) प्राणाबाध० ख० ।

अञ्जलिना संहतपाणिभ्यां जलं न पिबेत्, शयानं निद्रावस्थं न प्रबोधयेत् निद्रारहितं न कुर्यात्। अपि च अक्षैः पाशकैः न क्रीडेत्। धर्मघ्नैः पतितादिभिर्व्याधितैर्वा सह न शयीतेत्यर्थः। केचित्तु धर्मघ्नैर्न क्रीडेदित्येवं योजयन्ति ॥ १३८ ॥

( मिता० ) जलमिति। जलमञ्जलिना संहताभ्यां हस्ताभ्यां न पिबेत्। जलग्रहणं पेयमात्रोपलक्षणम्। विद्यादिभिरात्मनोऽधिकं शयानं न प्रबोधयेन्नोत्थापयेत्। 'श्रेयांसं न प्रबोधयेत्' इति विशेषस्मरणात्। अक्षादिभिर्न क्रीडेत्। धर्मघ्नैः पशुलम्भनादिभिर्न क्रीडेत्। व्याधितैर्ज्वराद्यभिभूतैरेकत्र न संविशेन्न शयीत ॥ १३८ ॥

( वी०मि०) किञ्च—

विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ॥
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥

अत्र विशिष्यानिषिद्धं मन्वादिना निषिद्धं 'न छिन्द्यान्नखलोमानी'त्यादिना यत्कर्म देशकुलाचारविरुद्धं वा कर्म वर्जयेत्। प्रेतधूमं प्रेतधूमस्पर्शनादिकं, बाहुभ्यां नदीतरं च केशादिष्ववस्थानं च वर्जयेदित्यर्थः। चकारेण कार्पासास्थ्यादिसमुच्चयः। तथा च मनुः—

अधितिष्ठेन्न केशांस्तु न भस्माङ्गारकपालिकाः।
न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः ॥ १३९ ॥

( मिता० ) विरुद्धमिति । जनपदग्रामकुलाचारविरुद्धं कर्म वर्जयेत्। प्रेतधूमं बाहुभ्यां नदीतरणं च वर्जयेदिति सम्बध्येत। केशादिषु संस्थितिं वर्जयेत्। चकारादस्थिकार्पासामेध्येषु च ॥ १३९ ॥

( वी० मि० ) अपि च—

नाचक्षीत धयन्तीं गां नाद्वारेण विशेत् क्वचित् ॥
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥

धयन्तीं वत्सं पाययन्तीं गां परकीयां नाचक्षीत न परस्मै कथयेत्। अद्वारेण द्वारतया लोकैरव्यवह्रियमाणेन ग्रामनगरगृहादिकं न विशेत्। उच्छास्त्रवर्तिनः अतिक्रान्तशास्त्रमर्यादस्य, लुब्धस्य सत्यपि धने व्ययाकरणशीलस्य, राज्ञः क्षत्रियनृपतेः सकाशान्न प्रतिगृह्णीयात् ॥ १४० ॥

( मिता० ) नाचक्षीतेति । परस्य क्षीरादि पि(१)बन्तीं गां परस्मै नाचक्षीत न च निवर्तयेत् । अद्वारेण कापथेन क्वचिदपि नगरे ग्रामे मन्दिरे वा न प्रविशेत् । न च कृपणस्य शास्त्रातिक्रमकारिणो राज्ञः सकाशात् प्रतिगृह्णीयात् ॥ १४० ॥

(वी० मि०) उक्तस्य राजप्रतिग्रहस्य निषिद्धतमत्वं दर्शयति—

प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ॥
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथोत्तरम् ॥ १४१ ॥

सूना प्राणिवधस्थानं तत्र यथार्थमधिकृतः सूनी, चक्री तैलिकः, ध्वजी शौण्डिकः, वेश्या वेशोपजीविनी स्त्री, नराधिपोऽभिषिक्तः क्षत्रियः पूर्वोक्तलुब्धत्वादिविशिष्टः एते प्रतिग्रहेऽपादानतामापन्नाः पूर्वात्पूर्वाद्दशगुणं यथोत्तरं दुष्टाः प्रतिग्रहीतुः पापसम्पादकाः । तथा च मनुः—

दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमो वेश्या दशवेश्यासमो नृपः ॥
दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥
यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः ।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रं च महानरकमेव च ॥
सञ्जीवनं महावीचिं तपनं सम्प्रतापनम् ।
संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥
लोहशङ्कुमृजीषं च पन्थानं शाल्मलीं नदीम् ।
असिपत्रवनं चैव लोहं कारकमेव च ॥
एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवादिनः ।
न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोऽभिकाङ्क्षिणः ॥-॥ १४१ ॥

( मिता० ) प्रतिग्रह इति । (२)प्रतिग्रहे साध्ये सून्यादयः पञ्च पूर्वस्मात्पूर्वस्मात्परः परो दशगुणं दुष्टः । सूना प्राणिहिंसा सास्या-

(१) क्षीरादि धयन्तीं गां क० । (२) प्रतिग्रहेतु साध्येषु ख० ।

स्तीति सूनी प्राणिहिंसापरः। चक्री तैलिकः। ध्वजी सुराविक्रयी। वेश्या पण्यस्त्री। नराधिपोऽनन्तरोक्तः॥ १४१॥

( वी० मि० )अथ वेदाध्ययनाङ्गमुपाकर्माख्यमुत्सर्गाख्यं च कर्माह द्वाभ्याम्—

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा॥
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु॥ १४२॥

अधीयन्त इत्यध्याया वेदाः तेषां संस्कारकमुपाकर्माख्यं कर्म श्रावण्यां श्रावणपौर्णमास्यां, श्रवणेन नक्षत्रेण युक्ते वा दिने, श्रावणस्य हस्तेन नक्षत्रेण युक्तायां पञ्चम्यां वा स्वगृह्योक्तविधिना कुर्युः ओषधिभाव इति चतुर्थ्यन्वेति तदर्थञ्च व्रीहिप्रभृतीनामङ्कुरोदय इति। तुशब्देन श्रावण ओषधिप्रादुर्भावे उपाकर्मणः कालान्तरं व्यवच्छिनत्ति। यदा तु श्रावणेऽनावृष्टिवशादोषधीनां न प्रादुर्भावः तदा भाद्रपदे श्रवणनक्षत्रयुक्ते दिने वा पौर्णमास्यां वा तत्कार्यम्। तथा च बह्वृचगृह्यपरिशिष्टम्—

अवृष्ट्योषधयस्तस्मिन् मासे न तु भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणे(१) च तदिष्यते॥

मनुः—

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान्॥

इति मिताक्षराकारादीनां स्वरसः। वस्तुतस्तु शाखाभेदेनाऽयं व्यवस्थितो विकल्पः।

उपाकर्म तु कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः।
ग्रहसङ्क्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु॥

इति वचनात्। तेन भाद्रपदस्य हस्तः सामगानां, श्रावणस्य श्रवणं ऋग्वेदिनां, तदसम्भवे भाद्रश्रवणं, यजुर्वेदिनां तु श्रावणी, तदसम्भवे श्रावणशुक्लपञ्चमी। अत्राऽप्यसम्भवे मनूक्ता भाद्री उपाकर्मकालः।

हस्तनक्षत्रयोगस्तु पञ्चम्यां (२)न विवक्षितः।

(१) श्रवणेन—इति ख० पुस्तके पाठः।
(२) 'न विवक्षितः'—इत्यारभ्य 'पञ्चम्यां'—इत्यन्तं ख० पुस्तके नास्ति।

तथा च वृद्धगार्ग्यः—

यदि स्याच्छ्रावणं पर्वग्रहसङ्क्रान्तिदूषितम्।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥
सङ्क्रान्तिग्रहणं वापि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥

यजुर्वेदिनामुपाकरणे कालान्तरमप्याह बौधायनः—'श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्य छन्दांस्यधीयीत'। भविष्योत्तरे—

उपाकर्मदिने प्रोक्तमृषीणां चैव तर्पणम्।
कुर्वीत ब्राह्मणैः सार्द्धं देवानुद्दिश्य भक्तितः ॥

तथा—

घनावृतेऽम्बरे पार्थ शाड्वले धरणीतले।
सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ॥
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः।
ततो देवानृषींश्चैव तर्पयेत्परमाम्भसा ॥
उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन् दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः ॥
गौतमादीनृषीन्सप्त कृत्वा दर्भमयान्पुनः।
पूजयित्वा यथाशक्ति तर्पयेद्वंशमुद्धरेत् ॥

वंशं ऋषिवंशम्। उद्धरेत् पठेत्। छन्दोगपरिशिष्टम्—

ऋषीणां सिच्यमानानामन्तरालं समाश्रितः।
संपिबेद्यः शरीरेण पर्णमुक्ताजलच्छटाः ॥
देवान् ब्राह्मणपुत्रादीन् (शूद्रादीन्?)वाप्यपि ध्रुवम्।
आमुष्मिकाण्यपि फलान्याप्नुयान्नात्र संशयः ॥

संपिबेत्प्रतीच्छेत्, पर्ण तर्पणकर्तृसमुदायः। अन्तरालं तर्पणकर्त्तुः कुशमयगौतमादेश्च मध्यम्। अत्र मध्यपातरूपे कर्मणि शूद्रस्याप्यधिकारः ॥ १४२ ॥

(मिता०) अथाध्ययनधर्मानाह—

अध्यायानामिति। अधीयन्त इत्यध्याया वेदास्तेषामुपाकर्म उपक्रमओषधीनां प्रादुर्भावे सति श्रावणमासस्य पौर्णमास्यां, श्रवणनक्षत्रयुते वा दिने, हस्तेन युतायां पञ्चम्यां वा स्वगृह्योक्तविधिना कुर्या-

त् । यदा तु श्रावणे मासि ओषधयो न प्रादुर्भवन्ति तदा भाद्रपदे मासि श्रवणनक्षत्रे कुर्यात् । तत ऊर्ध्वं सार्धचतुरो मासान्वेदानधीयीत । तथा च मनुः ( ४.९५ ) 'श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्' ॥ इति॥१४२॥

पौषमासस्य रोहिण्यामष्टकायामथाऽपि वा ॥
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥

( वी० मि० ) पौषमासीयशुक्लपक्षे रोहिण्यां पौषकृष्णाष्टम्यां वा ग्रामाद्बहिः जलान्ते जलसमीपे छन्दसामुत्सर्गाख्यमध्ययनपरित्यागरूपं कर्म विधिवत् स्वगृह्योक्तविधिना कुर्यादित्यर्थः । कुर्युरिति बहुवचनं ब्राह्मणमेलकाभिप्रायेण । 'कुर्वीत ब्राह्मणैः सार्द्ध'मित्यादिप्राग्लिखितवचनात् । अत्र च रोहिण्यामिति बह्वृचपरमिति मिश्राः । इदं च श्रावणे उपाकर्मपक्षे । यदा तु भाद्रे उपाकर्म तदा माघशुक्लप्रतिपद्युत्सर्गः, अर्धपञ्चमानित्येतद्वचनात् ।

माघमासस्य सम्प्राप्ते पूर्वाह्णे प्रथमेऽहनि ।
यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ॥

इति वचनाच्च । इदं च कर्मद्वयं मनुवचने निःप्रतिपक्षकाश्रवणादध्ययनाङ्गतया प्रतीतमपि अनधीयाना अपि शिष्टा आचरन्तीति । उत्सर्गश्चेदुत्सर्गकाले न कृतस्तदा श्रावण्यामपि कार्यो नित्यत्वादिति मिश्राः । उत्सर्गानन्तरं कृत्यमाह मनुः—

यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ॥
अत ऊर्ध्वं तु छन्दांसि शुक्ले तु नियतः पठेत् ।

हारीतः—'अर्धपञ्चमान्मासानतीत्योत्सृजति, पञ्चार्द्धषष्ठान्वा त्र्यहमनध्यायः, पञ्चरात्रमेकेषाम्' ॥ १४३ ॥

( मिता० ) उत्सर्जनकालः—

पौषमासस्येति । पौषमासस्य रोहिण्यामष्टकायां वा ग्रामाद्बहिर्जलसमीपे छन्दसां वेदानां स्वगृह्योक्तविधिनोत्सर्गं कुर्यात् । यदा पुनर्भाद्रपदे मासि उपाकर्म तदा माघशुक्लप्रथमदिवसे उत्सर्गं कुर्यात् । यथोक्तं मनुना ( ४.९६ ) 'पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्वि-

जः। माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि' ॥ इति। तदनन्तरं पक्षिणीमहोरात्रं वा विरम्य शुक्लपक्षेषु वेदान् कृष्णपक्षेष्वङ्गान्यधीयीत। यथाह मनुः (४।९७) 'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः। विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ॥ अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्' ॥ इति ॥ १४३ ॥

(वी० मि०) उपाकर्मोत्सर्गानन्तरमनध्यायमभिदधानः प्रसङ्गेनाऽनध्यायान्तरमप्याहाऽष्टभिः—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ॥
उपाकर्मण्यथो(१)त्सर्गे स्वशाखाश्रोत्रिये (२)मृते ॥१४४॥

उपाकर्मण्युत्सर्गे च कृते तथा(३)शिष्यादिषु मृतेषु स्वशाखाध्यायिनि श्रोत्रिये च मृते तत्तन्निमित्तावधिकस्त्र्यहमनध्यायः। बन्धुः सकुल्यः। चकारेण जननमरणनिमित्ताशौचान्तरप्रतिग्रहः ॥ १४४ ॥

(मिता०) अनध्यायानाह—

'त्र्यहमिति। उक्तेन कर्ममार्गेणाधीयानस्य द्विजस्य शिष्यर्त्विग्गुरुबन्धुषु प्रेतेषु मृतेषु त्र्यहमनध्यायस्त्रीनहोरात्रानध्ययनं वर्जयेत्। उपाकर्मणि उत्सर्गाख्ये च कर्मणि कृते त्र्यहमनध्यायः। उत्सर्गे तु मनूक्तपक्षिण्यहोरात्राभ्यां सहाऽस्य विकल्पः। स्वशाखाश्रोत्रिये स्वशाखाध्यायिनि प्रेते च त्र्यहमनध्यायः ॥ १४४ ॥

'सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥

(वी० मि०) सन्ध्या प्रातःसन्ध्या, गर्जिते मेघध्वनौ, निर्घातेऽन्तरिक्षभवोत्पातध्वनौ, भूकम्पे उत्पातरूपे भूमिचलने, उल्कापतने च तादृशे सति द्युनिशमहोरात्रमाकालिकमिति यावत् अनध्यायः, निमित्तकालादारभ्य परदिने यावत्स एव कालस्तावत्कालमाकालस्तत्र भवमाकालिकम्। 'आकालिका भूकम्पनिर्घातोल्का' इति गौतमस्मर-

(१) उपाकर्मणि चोत्सर्गे-इति मुद्रितपुस्तके पाठः।
(२) तथा-इति मुद्रितपुस्तके पाठः।
(३) यथा इति क० पु० पाठः।

णात्। सायंसन्ध्यागर्जिते तु रात्रिमात्रमनध्यायः। 'सायंसन्ध्या- स्तनिते रात्रिः प्रातःसन्ध्यास्तनितेऽहोरात्रम्' इति हारीतवचनात्। वेदं मन्त्रभागं ब्राह्मणभागं च समाप्यारण्यकमुपनिषद्भागं चाऽधीत्य स्थितस्य चाऽहोरात्रमेवाऽनध्यायः॥ १४५॥

( मिता० ) सन्ध्येति। सन्ध्यायां मेघध्वनौ, निर्घाते आकाशे उत्पातध्वनौ, भूमिचलने, उल्कापतने, मन्त्रस्य ब्राह्मणस्य वा समाप्तौ आरण्यकाध्ययने च द्युनिशमहोरात्रमनध्यायः॥ १४५॥

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके॥
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च॥ १४६॥

( वी० मि० ) राहुसूतके राहुदर्शननिमित्तसूतके चन्द्रसूर्योप- राग इति यावत्। ऋतूनां वसन्तादीनां सन्धिषु मध्यवर्त्तिनीषु प्रतिपत्सु द्युनिशमनध्याय इत्यनुषज्यते। यत्तु—

त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके।

इति वचनं तद् ग्रस्तास्तविषयम्। श्राद्धिकं श्राद्धसम्बन्धि अन्ना- दिकं भुक्त्वा परिगृह्य वा स्थितस्य द्युनिशमनध्यायः। इदं च पार्वणा- दिविषयम्।

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।
त्र्यहन्न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके॥

इति मनुवचनात्। अत्र राहुसूतके आकालिकोऽनध्यायः, उक्तगौतम- वचनादिति स्मर्त्तव्यम्॥ १४६॥

( मिता० ) पञ्चदश्यामिति। पञ्चदश्याममावास्यायां पौर्णमास्यां चतुर्दश्यामष्टम्यां राहुसूतके चन्द्रसूर्योपरागे च द्युनिशमनध्यायः। यत्तु-'त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके' इति तद्ग्रस्तास्तमय- विषयम्। ऋतुसन्धिगतासु च प्रतिपत्सु श्राद्धिकभोजने तत्प्रति- ग्रहे च द्युनिशमनध्यायः। एतच्चैकोद्दिष्टव्यतिरिक्तविषयम्। तत्र तु त्रिरात्रम् ( मनुः ४। ११० ) 'प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्। त्र्यहं न कीर्तयेद्ब्रह्म' इति स्मरणात्॥ १४६॥

पशुमण्डूकनकुलश्वाऽहिमार्जारमूषकैः॥
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये॥ १४७॥

( वी० मि० ) अन्तरं शिष्योपाध्याययोः पाठकाले मध्यतो गमनं तस्मिन्, पश्वादिभिः कृत शक्रपाते इन्द्रध्वजपाते, उच्छ्रये इन्द्रध्वजोच्छ्राये वाऽहोरात्रमनध्यायः। यत्तु—'श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्चे'ति गौतमवचनं तत्प्रथमाध्यापनविषयम्। अत्र तुशब्देनाऽऽकालिकत्वव्यवच्छेदः ॥ १४७ ॥

( मिता० ) पश्वित्यादि। अध्येतॄणां पश्वादिभिरन्तरागमने कृते शक्रध्वजस्यावरोपणदिवसे (१)उच्छ्रायदिवसे चाहोरात्रमनध्यायः। श्वनिशमिति ग्रहणे पुनरहोरात्रग्रहणं सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातनेष्वाकालित्वज्ञापनार्थम्। 'आकालिका निर्घातभूकम्पराहुदर्शनोल्काः' इति गौतमवचनात्। निमित्तकालादारभ्यापरेद्युर्यावत्स एव कालस्तावत्कालः आकालः तत्र भव आकालिकोऽनध्यायः। एतच्च प्रातःसन्ध्यास्तनिते। सायंसन्ध्यास्तनिते तु रात्रिमेव। 'सायंसन्ध्यास्तनिते तु रात्रिं प्रातःस(२)न्ध्यास्तनितेऽहोरात्रम्' इति हारीतस्मरणात्। यत्पुनर्गौतमेनोक्तं—'श्वनकुलसर्पमण्डूकमार्जारा(३)णामन्तरागमने त्र्यहमुपवासो विप्रवासश्चे'ति तत्प्रथमाध्य(४)यन एव ॥ १४७ ॥

श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने ॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८ ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ॥
भुक्त्वार्द्रपाणिरम्भोन्तरर्द्धरात्रेऽतिमारुते ॥ १४९ ॥
पांसुवर्षे(५)दिशां दाहे सन्ध्यानीहारभीतिषु ॥
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ॥
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥

( वी० मि० ) श्वा कुक्कुरः, क्रोष्टा शृगालः, गर्दभः प्रसिद्धः, उलूकः पेचकः, साम गीयमानो वेदभागः, बाणः सप्ततन्तुवीणाविशेषः, आर्त्तः शोकादिपीडितः एषां सप्तानां निःस्वने। षष्ठ्यर्थश्च य-

(१) उत्सवदिवसे। (२) सन्ध्यामहरेव ख०। (३) मार्जाराणां त्र्यह ग०।
(४) ध्ययनविषय एव घ०। (५) पांसुवर्षे दिग्दाहे—इति मुद्रितपुस्तके पाठः।

थायोग्यमवगन्तव्यः । अमेध्यं मूत्रादि, शवो गतप्राणं शरीरं, शूद्रः प्रसिद्धः, अन्त्यः शूद्रान्निकृष्टः, श्मशानं शवदहनस्थानं, पतिताः पातकिनः एषां षण्णामन्तिके सन्निधाने । देशेऽध्ययनार्थमभिमतेऽशुचौ, आत्मनि अध्येतृत्वाभिमते चाऽशुचौ । विद्युतः सौदामिन्याः संप्लवे पुनःपुनरुद्भवे । स्तनितस्य मेघनिर्घोषस्य सम्भवे भुक्त्वा यदाचमनेनाऽर्द्रपाणिस्तदा । अम्भोन्तर्जलमध्ये । अर्द्धरात्रे रात्रेर्मध्यमयामद्वये । अतिमारुतेऽतिशयेन वाति वायौ । पांशूनां वर्षे उत्पातरूपे । तादृशे च दिशां दाहे । सन्ध्या प्रातःसायंरूपा, नीहारो धूमिका कुभेस इति प्रसिद्धा, भीतिश्चौरादिभयम् , एषु त्रिषु धावतः वेगेन स्वस्य गच्छतः सतः षष्ठी च सप्तमी समानार्थो । 'धावत उपाध्यायादि'ति तु शूलपाणिः । पूतिगन्धे सुरादिदुर्गन्धे । आगत इत्यग्रे तेनान्वयः, उपलभ्यमान इति तदर्थः । शिष्टे च प्रागुक्तलक्षणे गृहमागते क्षेत्रावस्थितिस्थानं प्राप्ते । खरस्य गर्दभस्य, उष्ट्रस्य प्रसिद्धस्य, यानस्य रथादेः, हस्तिनोऽश्वस्य च प्रसिद्धस्य, नावो नौकायाः, वृक्षस्य प्रसिद्धस्य, इरिणस्य ऊपरस्य मरुभूमेर्वा एषामष्टानां मध्येऽत्राऽभिमते त्वारोहणे आक्रमणे च सति एतान् श्वनिःस्वनादिनिमित्तकान् सप्तत्रिंशदनध्यायान् तात्कालिकान् निमित्तकालमात्रव्यापकान् विदुर्मुनय आहुः । एतच्च—

शयानः प्रौढपादश्च कृत्वा चैवाऽवसक्थिकाम् ।
नाधीयाताऽऽमिषं जग्ध्वा सूतकान्नाद्यमेव च ॥

इति मन्वाद्युक्ताऽनध्यायान्तराणामप्युपलक्षकम् । यत्तु—

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाऽशुद्धामात्मानं वाऽशुचिं द्विजः ॥

इति मनुवचनं, तद्ब्रह्मयज्ञपरं प्रकरणादिति ॥ १४८–१५१ ॥

( मिता० ) श्वेत्यादि । श्वा कुक्कुरः क्रोष्टा शृगालः । गर्दभो रासभः । उलूको घूकः । साम सामानि । बाणो वंशः । आर्तो दुःखितः । एषां श्वादीनां निःस्वने तावत्कालमनध्यायः । एवं वीणादिनिःस्वनेऽपि । 'वेणुवीणाभेरीमृदङ्गगन्त्र्यार्तशब्देषु' इति गौतमवचनात् । गन्त्री शकटम् । अमेध्यादीनां संनिधाने तावत्कालिकोऽनध्यायः ॥ १४८ ॥

( मिता० ) देश इति । अशुचौ देशेऽशुचावात्मनि च । तथा विद्युत्संप्लवे पुनःपुनर्विद्योतमानायां विद्युति, स्तनितसंप्लवे प्रहरद्वयं पुनःपुनर्मेघघोषे तावत्कालिकोऽनध्यायः । भुक्त्वार्द्रपाणिर्नाधीयीत । जलमध्ये च । अर्धरात्रे महानिशाख्ये मध्यमप्रहरद्वये, अतिमारुतेऽहन्यपि तावत्कालं नाधीयीत ॥ १४९ ॥

( मिता० ) पांसुवर्ष इति । औत्पातिके रजोवर्षे । दिग्दाहे यत्र ज्वलिता इव दिशो दृश्यन्ते । सन्ध्ययोः, नीहारे धूमिकायां, भीतिषु चौरराजादिकृतासु तत्कालमनध्यायः । धावतस्त्वरितं गच्छतोऽनध्यायः । पूतिगन्धे अमेध्यमद्यादिगन्धे । शिष्टे च श्रोत्रियादौ गृहं (१)प्राप्ते तदनुज्ञावध्यनध्यायः ॥ १५० ॥

( मिता० ) खरोष्ट्रेत्यादि । यानं रथादि । इरिण(२)मूषरं मरुभूमिर्वा । खरादीनामारोहणे तावत्कालमनध्यायः । एवं श्वक्रोष्टुगर्दभेत्यस्मादारभ्य सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्निमित्तसमकालान्विदुरन(३)ध्यायविधिज्ञाः । विदुरित्यनेन स्मृत्यन्तरोक्तानन्यानपि सङ्गृह्णाति । यथाह मनुः—( ४ ११२ ) 'शयानः प्रौढपादश्च कृत्वा चैवावस(४)क्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च' ॥ इत्यादि ॥ १५१ ॥

( वी० मि० ) एवं प्रसङ्गप्राप्ताननध्यायानुक्त्वा प्रकृतं स्नातकधर्ममाह—

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ॥
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि (५)च ॥ १५२ ॥

देवस्य देवप्रतिमाया ऋत्विगादीनां च छायां, रक्तं रुधिरं, विष्ठां, मूत्रं, ष्ठीवनं मुखप्रच्युतं लालादि, उद्वर्तनमङ्गोत्सादनविनियुक्तद्रव्यम्, एतानि नाक्रामेत् । 'कामतो नाधितिष्ठेत् न लङ्घयेच्च देवद्विजगुरुराजस्नातकाचार्यमन्त्रिणां नाक्रामेत्कामतः छायां कपिलस्य च गोरपी' ति यमवचनात् ॥ १५२ ॥

---

(१) गृहमागते क० । (२) ऊषर क० । (३) ध्ययन क० ध्यायने ग० ।
(४) कृतावसक्थिक उदयमत्र नं गतः । (५) द्वितीय दि च इति मुद्रितपुस्तके पाठः । –

( मिता० )एवमनध्यायानुक्त्वा प्रकृतानि स्नातकव्रतान्याह—

देवेत्यादि। देवानां देवार्च्चानामृत्विक्स्नातकाचार्यराज्ञां परस्त्रियाश्च छायां नाक्रामेन्नाधितिष्ठेन्न लङ्घयेद्बुद्धिपूर्वकम्। यथाह मनुः—( ४।१३० ) 'देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा। नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च'॥ इति। बभ्रुणो नकुलवर्णस्य कस्यचिद्गोरन्यस्य वा श्यामा(१)देः, बभ्रुण इति नपुंसकलिङ्गनिर्देशात्। रक्तादीनि च नाधितिष्ठेत। आदिग्रहणात्स्नानोदकादिग्रहणम्। ( मनुः ४ १३२ ) 'उद्वर्तनमपस्नानं विण्मूत्रं रक्तमेव च। श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः'॥ इति॥ १५२॥

( वी० मि० ) किं च—

विप्राहिक्षत्रियात्मानो नाऽवज्ञेयाः कथञ्चन (२)॥

विप्रः सर्पः क्षत्रिय आत्मा च नावमन्तव्याः। अत्र मनुः—

क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्।
नावमन्येत वै भूष्णुः कृशानपि कदाचन॥
एतत्त्रयं हि पुरुषान्निर्दहत्यवमानितम्।—॥

( वी० मि० ) अपि च—

आमृत्योः श्रियमाकाङ्क्षेन्न कञ्चिन्मर्माणि स्पृशेत् ॥१५३॥

यावज्जीवं श्रियमिच्छेत् श्रीसिद्धनिमित्तमुत्तमं यावद् गृहस्थाश्रमं कुर्यादिति यावत्। तथा कञ्चिन्मित्रमुदासीनं शत्रुं वा मर्मणि गोप्यदोषे न स्पृशेत् न वचनादिविषयीकुर्यात् परस्य गोप्यदोषं न प्रकाशयेदिति पर्यवसितार्थः॥ १५३॥

( मिता० ) विप्राहीत्यादि। विप्रो बहुश्रुतो ब्राह्मणः, अहिः सर्पः, क्षत्रियो नृपतिः, एते कदाचिदपि नावमन्तव्याः। आत्मा च स्वयं नावमन्तव्यः। आमृत्योर्यावज्जीवं श्रियमिच्छेत्। न कञ्चिदपि पुरुषं मर्माणि स्पृशेत् कस्यचिदपि मर्म दुश्चरितं न प्रकाशयेत्॥ १५३॥

---

(१) श्यामादे ग०।
(२) कदाचन-इति मुद्रितपुस्तके पाठः।

( वी० मि० ) किञ्च—

दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ॥
श्रुतिस्मृत्युदितं सम्यङ् नित्यमाचारमाचरेत् ॥१५४॥

गृहाद् दूरे उच्छिष्टादीनि प्रक्षिपेत्। पादाम्भः पादप्रक्षालनजलं, तथा श्रुतिस्मृतिभ्यां विहितमावश्यकमाचारमग्निहोत्रस्नानादिरूपं नित्यं तत्तद्विहितकालमभिव्याप्य(१)सम्यक् शक्यसर्वाङ्गोपेतं आचरेत् कुर्यात्। अत्र सम्यगिति विधेयम् ॥ १५४ ॥

( मिता० ) दूरादिति। भोजनाद्युच्छिष्टं विण्मूत्रे पादप्रक्षालनोदकं च गृहाद् दूरात्समुत्सृजेत्। श्रौतं स्मार्तं चाचारं नित्यं सम्यगनुतिष्ठेत् ॥ १५४ ॥

( वी० मि० ) अपि च—

गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ॥
न निन्दाताडने कुर्यात्सुतं (२)शिष्यं च ताडयेत् ॥ १५५ ॥

उच्छिष्टोऽशुचिः सन् गोब्राह्मणाग्न्योदनान् न स्पृशेत्। शुचिरपि पदा चरणेन तान् स्पृशेत्। स्पर्शे तु—

स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्।
गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु ॥

इति मनूक्तमाचरेत्। युद्धाद्यतिरिक्तकाले परस्परनिन्दाताडने न कुर्यात्। अत्र प्रतिप्रसवः सुतमित्यादिना। चकारेण भार्यादासयोः समुच्चयः।

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः।
प्राप्तापराधा दण्ड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥

इति मनुवचनात्। ताडयेत् शिक्षार्थम् ॥ १५५ ॥

---

(१) तत्तद्विहितकालमभिव्याप्य-इति क० पु० पाठः।
(२) पुत्र-इति मुद्रितपुस्तके पाठः।

( मिता० ) गोब्राह्मणेत्यादि । गां ब्राह्मणमग्निं अन्नमदनीयं विशेषतः पक्वमशुचिर्न स्पृशेत् । पादेन त्वनुच्छिष्टोऽपि । यदा पुनः प्रमादात्स्पृशति तदा आचमनोत्तरकालम्—'स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् । गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु' ॥ इति ( ४।१४३ ) मनूक्तं कार्यम् । एवं प्राणादीनुपस्पृशेत् । कस्यचिदपि निन्दाताडने न कुर्यात् । एतच्चानपकारिणि । (मनुः ४।२६७)—'अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः । दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः' ॥ इति । पुत्रशिष्यौ शिक्षार्थमेव ताडयेत् चकाराद्दासादीनपि । ताडनं च रज्ज्वादिनोत्तमाङ्गव्यतिरेकेण । 'शिष्यशिष्टिरव(१)धेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यते' इति गौतमवचनात् । 'पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन' इति ( ८।३०० ) मनुवचनात् ॥ ॥ १५५ ॥

( वी० मि० ) किञ्च—

कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ॥
अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥ १५६ ॥

कर्मणा कायेन । अत्र यत्नादिति विधेयम् । अत्राऽपवादः—अस्वर्ग्यमित्यादिः । धर्ममिष्टसाधनत्वेन वेदादिविहितमप्यस्वर्ग्यं बलवदनिष्टजनकमभिचारादि लोकविद्विष्टं राजादेर्मध्यदेशीयानामविधिमांसभक्षणनिवर्तनादि च नाचरेत् । तुशब्देन धर्मं समाचरेदित्युक्तं व्यवच्छिनत्ति ॥ १५६ ॥

( मिता० ) कर्मणेति । कर्मणा कायेन यथाशक्ति धर्ममनुतिष्ठेत् तमेव मनसा ध्यायेत् वाचा च वदेत् । धर्म्यं विहितमपि लोकविद्विष्टं लोकाभिशस्तिजननं मधुपर्के गोवधादिकं नाचरेत् । यस्मादस्वर्ग्यं(२)मग्नीषोमीयवत्स्वर्गसाधनं न भवति ॥ १५६ ॥

( वी० मि० ) अपि च—

मातृपित्रतिथिभ्रातृजामिसम्बन्धिमातुलैः ॥
बाल(१)वृद्धातुराचार्यवैद्यसंश्रितबान्धवैः ॥ १५७ ॥

---

(१) रवधेन बोधनाशक्तौ ख० । (२) न मग्नीषोमीय ख० ।

(१) वृद्धबालातुरा०—इति मुद्रितपुस्तके पाठः ।

ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ॥
विवादं वर्जयित्वा तु सर्वान् लोकान् जयेद् गृही(१)॥१५८॥

जामयो भगिनीप्रभृतयः, सम्बन्धिनो जामात्रादयः, बालः षोडशवर्षानधिकवयस्कः, वृद्धः सप्ततिवर्षोर्द्धवयस्कः, आतुरो रोगार्त्तः, वैद्यो भिषक् विद्यावानिति केचित्, संश्रिताः स्वोपजीविनः शिष्यादयः, बान्धवा मातृपक्ष्याः, पुरोहितः शान्त्यादिकर्ता वैदिककर्मप्रयोगप्रदर्शको वा, सनाभयः सपिण्डा भ्रात्रादिषु । केचित्सुप्रसिद्धाः केचित्पूर्वं लक्षिताः । अत्र सामान्यत उक्तस्यापि कस्यचिद्विशिष्योक्तिरादरातिशयादिद्योतनाय । मात्रादिभिर्विवादं कलहं वक्ष्यमाणलक्षणं व्यवहारं वर्जयन् गृहस्थः सर्वान् ब्रह्मादीन् लोकान् जयति प्राप्नोति । तस्मादेभिर्विवादं नाचरेदिति तात्पर्यम् ॥१५७-१५८॥

( मिता० ) मात्रित्यादि । ऋत्विगित्यादि च । माता जननी । पिता जनकः । अतिथिरध्वनीनः । भ्रातरो भिन्नोदरा अपि । जामयो विद्यमानभर्तृकाः स्त्रियः । संबन्धिनो वैवाह्याः । मातुलो मातुर्भ्राता । वृद्धः सप्तत्युत्तरवयस्कः । बाल आषोडशाद्वर्षात् । आतुरो रोगी । आचार्य उपनेता । वैद्यो विद्वान् भिषग्वा । संश्रितः उपजीवी । बान्धवाः पितृपक्ष्या मातृपक्ष्याश्च । मातुलस्य पृथगुपादानमादरार्थम् । ऋत्विग्याजकः । पुरोहितः शान्त्यादेः कर्ता । अपत्यं पुत्रादि । भार्या सहधर्मचारिणी । दासः कर्मकरः । सनाभयः सोदराः । भ्रातृभ्यः पृथगुपादानमजामिभगिनीप्राप्त्यर्थम् । एतैर्मात्रादिभिः सह वाक्कलहं परित्यज्य सर्वान्प्राजापत्यादीन् लोकान्प्राप्नोति ॥ १५७-१५८ ॥

( वी० मि० ) किञ्च—

पञ्च पिण्डाननुद्धृत्य न स्नायात्पर(२)वारिणि ॥
स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥ १५९ ॥

परवारिणि परकृतनिपानजले पञ्च मृत्पिण्डाननुद्धृत्य ततो बहिरक्षिप्य न स्नानमाचरेत् । किं तु नद्यादिषु स्नायात् । नदी धनुरष्टसहस्रावच्छिन्नदेशाव्यापिगतिमज्जलं, देवसम्बन्धितया प्रसिद्धं

(१) जयेद् बुध -इति ख० पु० पाठः । (२) परवारिषु इति मुद्रितपुस्तके पाठः ।

देवह्रदादि सूर्यादिसमीपस्थखातं वा, ह्रदः सरः कचिद्वर्तते पाठः। तत्र धनुःसहस्रगतिशून्या नद्याकारा आपो गर्तः, प्रस्रवणं निर्झरः स्नाने विहिता निषिद्धा देशा गृहस्थप्रकरण एव प्रपञ्चिता इति नेह उच्यन्ते ॥ १५९ ॥

( मिता० ) पञ्चेति। परवारिषु परसम्बन्धिषु सर्वसत्त्वोद्देशेनात्यक्तेषु तडागादिषु पञ्च पिण्डाननुद्धृत्य न स्नायात्। अनेनात्मीयोत्सृष्टाभ्यनुज्ञातेषु पिण्डोद्धारमन्त(१)रापि स्नानमभ्यनुज्ञातम्। नद्यादिषु कथं तर्हीत्याह—स्नायान्नदीति। साक्षात्परम्परया वा समुद्रगाः स्रवन्त्यो नद्यः। देवखातं पुष्करादि। उदकप्रवाहाभिघातकृतसजलो महानिम्नप्रदेशो ह्रदः। पर्वताद्युच्चप्रदेशात्प्रस्रुतमुदकं प्रस्रवणम्। एतेषु पञ्चपिण्डानुद्धरणेनैव स्नायात्। एतच्च नित्यस्नानविषयं सति संभवे। (मनुः ४। २०३) नदीषु देवखातेषु तडागेषु सरःसु च। स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च' ॥ इति नित्यग्रहणात्। शौचार्थे तु यथासंभवं परवारिषु पिण्डानुद्धरणे सर्वस्य न निषेधः ॥ १५९ ॥

( वी० मि० ) अपि च--

परशय्यासनोद्यानगृहयानानि वर्जयेत् ॥
अदत्तान्यग्निहीनस्य नाऽन्नमद्यादनापदि ॥ १६० ॥

अदत्तानि स्वामिना स्वस्वत्वानास्पदीकृतानीति यावत्। परोपभुक्तानि शय्यादीनि नोपभुञ्जीत। अनापद्यन्नान्तरसम्भवे अग्निहीनस्य उत्सृष्टश्रौतस्मार्ताग्नेरन्नं नाद्यादित्यर्थः ॥ १६० ॥

( मिता० ) परेत्यादि। शय्या कशिपुः। आसनं पीठादि। उद्यानमाम्रादिवनम्। गृहं प्रसिद्धम्। यानं रथादि। परसम्बन्धीन्येतान्यदत्तान्यननुज्ञातानि वर्जयेत् नोपभुञ्जीत। अभोज्यान्नान्याह—अग्निहीनस्येति। अग्निहीनस्य श्रौतस्मार्ताग्न्यधिकाररहितस्य शूद्रस्य प्रतिलोमजस्य च अधिकारवतोऽप्यग्निरहितस्यान्नमनापदि न भुञ्जीत प्रतिगृह्णीयाच्च। 'तस्मात्प्रशस्तानां स्वकर्मणा शुद्धजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च' इति गौतमवचनात् ॥ १६० ॥

---

(१) मन्तरेणापि क०।

( वी० मि० ) किञ्च—

कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ॥
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१ ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ॥
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ १६२ ॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ॥
शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ॥ १६३ ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ॥
चैलधावसुराजीवि(१)सहोपपतिवेश्मनाम् ॥ १६४ ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥

कदर्यः—

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ।
लोभाद्यः प्रचिनोत्यर्थान् स कदर्य इति स्मृतः ॥

इति देवलेन परिभाषितः । बद्धो निगडादिना, रङ्गावतारी नटमल्लादिः, वैणो वेणुच्छेदनोपजीवी, अभिशस्तः पातककारित्वेनाक्षिप्तः, वार्धुष्यः निषिद्धवृद्ध्युपजीवी, गणिका वेश्या, गणः समुदायः, दीक्षी दीक्षावान् । अयं चाऽग्नीषोमीयवपाहोमात्प्रागेवाभोज्यान्नः । 'अशितव्यं वपायां हुताया'मिति श्रुतेः । गणदीक्षी गणयाजक इति शूलपाणिः, तन्न ग्रामयाजिपदेन पौनरुक्त्यापातात् । चिकित्सकः चिकित्सावृत्तिः, आतुरोऽपस्मारादिमहारोगग्रस्तः, क्रुद्धो विद्यमानकोपः, पुंश्चली व्यभिचारिणी, मत्तो मद्यादिना गर्वितश्च, विद्विट् शत्रुः, क्रूरः मर्मघाती, उग्रः परोद्वेजनशीलः, पतितो ब्रह्महा(२)दिः, व्रात्यो दाम्भिकश्च उक्तः, उच्छिष्टभोजी परभुक्तोज्झिता-

(१) सुराजीव इति मुद्रितपुस्तके पाठः ।
(२) ब्रह्महन्त्रादि-इति क० पु० पाठः ।

शनशीलः, अवीरा स्त्री निष्पतिपुत्रा स्त्री, स्वर्णकारः स्वर्णालङ्कारादिघटकः, स्त्रीजितः स्त्रीवशतया मातापित्रादिनिर्भर्त्सनादिशीलः, ग्रामयाजी बहुयाजनशीलो बहूनामुपनेता वा, शस्त्रविक्रयी खड्गादिविक्रयवृत्तिः,कर्मारो लोहकारः, तथा च तन्तुवायः सूत्रीशिल्पवृत्तिः, श्वजीवी कुक्कुरवृत्ताखेटकाद्युपजीवी। केचित्तु श्ववृत्तीनामिति पठित्वा सेवावृत्तीनामिति व्याचक्षते। नृशंसो निर्दयः, रजको वस्त्रादिरञ्जनकर्ता, कृतघ्नः परकृतस्योपकारस्य हन्ताऽनादर्ता, वधजीवी प्राणिहिंसावृत्तिः, चैलधावो वस्त्रनिर्णेजनवृत्तिः, सुराजीवी सुराविक्रयवृत्तिः, सहोपपति वेश्याजारेण सहैकवेश्मनि वर्त्तमानः, पिशुनः परदोषसूचनशीलः, अनृती मिथ्यावचनशीलः, चाक्रिकः चक्रोपजीवी शाकटिकादिः, वन्दी स्तुतिपाठवृत्तिः। एषां पूर्वोक्तानां सर्वेषां सोमविक्रयिणः सोमलताविक्रेतुश्चाऽन्नं न भोक्तव्यमिति। तथाशब्देन शूद्रवृषलीपत्यादीनां स्मृत्यन्तरोक्तानामभोज्यान्नानां परिग्रहः। ते च विस्तरभयान्न लिख्यन्ते॥ १६१-१६५॥

(मिता०) कदर्येत्यादि। कदर्यो लुब्धः—'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्। लोभाद्यः पितरौ भृत्यान्स कदर्य इति स्मृतः'॥ इत्युक्तः। बद्धो निगडादिना वाचा संनिरुद्धश्च। चौरो ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापहारी। क्लीबो नपुंसकः। रङ्गावतारी नटचारणमल्लादिः। वेणुच्छेदजीवी वेणः। अभिशस्तः पतनीयैः कर्मभिरभियुक्तः। वार्धुष्यो निषिद्धवृद्ध्यु(१)पजीवी। गणिका पण्यस्त्री। गणदीक्षी बहुयाजकः। एतेषामन्नं नाश्नीयादित्यनुवर्तते॥ १६१॥

(मिता०) चिकित्सकेत्यादि। चिकित्सको भिषग्वृत्त्युपजीवी। आतुरो महारोगोपसृष्टः। 'वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः। अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः' इति। क्रुद्धः कुपितः। पुंश्चली व्यभिचारिणी। मत्तो विद्यादिना गर्वितः। विद्विट् शत्रुः। क्रूरो दृढाभ्यन्तरकोपः। वाक्कायव्यापारेणोद्वेजक उग्रः। पतितो ब्रह्महादिः। व्रात्यः पतितसावित्रीकः। दाम्भिको वञ्चकः। उच्छिष्टभोजी परभुक्तोज्झिताशी। एतेषां चिकित्सकादीनामन्नं नाश्नीयात्॥ १६२॥

---

(१) वृत्त्युपजीवी क०।

( मिता० ) अवीरेत्यादि । अवीरा स्त्री स्वतन्त्रा व्यभिचारमन्तरेणापि । पतिपुत्ररहितेत्यन्ये । स्वर्णकारः सुवर्णस्य विकारान्तरकृत् । स्त्रीजितः सर्वत्र स्त्रीवशवर्ती । ग्रामयाजी ग्रामस्य शान्त्यादिकर्ता बहूनामुपनेता वा । शस्त्रविक्रयी शस्त्रविक्रयोपजीवी । कर्मारो लोहकारः तक्षादिश्च । तन्तुवायः सूचीशिल्पोपजीवी । श्ववृत्तिर्वर्तनं जीवनमस्यास्तीति श्ववृत्ती । एतेषामन्नं नाश्नीयात् ॥ १६३ ॥

( मिता० ) नृशंसेत्यादि । नृशंसो निर्दयः । राजा भूपतिः । तस्माद्वर्योरपुरोहितश्च । यथाह शङ्खः—'भीतावगीतरुदिताक्रन्दिताबघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्' इति । रजको वस्त्रादीनां नील्या(१)दिरागकारकः । कृतघ्न उपकृतस्य हन्ता । वधजीवी प्राणिनां वधेन वर्तकः । चेलधावो वस्त्रनिर्णेजनकृत् । सुराजीवी मद्यविक्रयजीवी । उपपतिर्जारः । सहोपपतिना वेश्म यस्यासौ सहोपपतिवेश्मा । पिशुनः परदोषस्य ख्यापकः । अनृती मिथ्यावादी । चाक्रिकस्तैलिकः । शाकटिकश्चेत्येके । अभिशस्तः पतितश्चाक्रिकस्तैलिक इति भेदेनाभिधानात् । वन्दिनः स्तावकाः । सोमविक्रयी सोमलताया विक्रेता । एतेषामन्नं न भोक्तव्यम् । सर्वे चैते कर्दयादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः । इतरेषां प्राप्त्यभावात्प्राप्तिपूर्वकत्वाच्च निषे(२)धस्य ॥ १६४–१६५ ॥

( वी० मि० ) तथाशब्देनाऽभोज्यान्नत्वेनाऽभिहिते शूद्रे । प्रतिप्रसवमाह—

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ॥
भोज्यान्ना नापितश्चैव यश्चाऽऽत्मानं निवेदयेत् ॥ १६६ ॥

शूद्रेष्विति निर्द्धारणे सप्तमी, तेन शूद्राणां मध्ये दासादय एव भोज्यान्ना इत्यर्थः । दासो गृहदासादिः पञ्चदशविधो । नारदोक्त स च स्वकीय ।

स्वदासो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्ना पञ्चैते शूद्रयोनयः ॥

इति देवलवचनात् । गोपालो गोरक्षण(३)वृत्तिः, कुलमित्र

---

(१) नील्यादिरागकर क ।  (२) प्रतिषेधस्य क ।
(३) गोरक्षवृत्ति -इति क० पु० पाठ ।

पितामहादिक्रमागतमित्रम्, अर्द्धसीरी संभूयसमुत्थायितयाऽर्धक· र्षकः, नापितः क्षुरकर्मादिवृत्तिः चकारेण कुम्भकारादिपरिग्रहः। एवकारः शूद्रान्तरव्यवच्छेदार्थः। आत्मानं निवेदयेत्तवाऽहमित्युप· गच्छेत्। द्वितीयचकारो नापितविशेषणत्वभ्रमवारणार्थः॥ १६६॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने स्नातकप्रकरणम्।

( मिता० ) अग्निहीनस्य नान्नमद्यादनापदीत्यत्र शूद्रस्याभोज्या· न्नत्वमुक्तं तत्र प्रतिप्रसवमाह—

शूद्रेष्विति। दासा गर्भदासादयः। गोपालो ग(१)वां पालनेन यो जीवति। कुलमित्रं पितृपितामहादिक्रमायातः। अर्धसारी हलपर्या· यसीरोपलक्षितकृषिफलभागग्राही। नापितो गृहव्यापारका(२)रयि· ता नापितश्च। यश्च वाङ्मनःकायकर्मभिरात्मनं निवेदयति तवाह· मिति। एते दासादयः शूद्राणां मध्ये भोज्यान्नाः। चकारात्कुम्भ· कारश्च। 'गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भो· ज्यान्नाः' इति वचनात्॥ १६६॥

इति स्नातकव्रतप्रकरणम्।

---

(वी० मि०) इदानीं गृहस्थस्य द्विजातेर्भक्ष्याभक्ष्यान्याह पञ्चदश· भिः श्लोकैः 'मुनिर्मांसविवर्जना'दित्यन्तैः—

अनर्चितं वृथामांसं केशकीटसमन्वितम्॥
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्॥ १६७॥
उदक्यास्पृष्टसङ्घुष्टं पर्यायान्नं च वर्जयेत्॥
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः॥ १६८॥

अनर्चितमवज्ञया दत्तं, वृथामांसं देवपित्रर्चनादिप्रयोजनशून्यं मांसं, केशेन कीटेन वा समन्वितं दुष्टं, शुक्तं स्वयमनम्लं द्रव्यान्तर· संसर्गादिवशादम्लतां प्राप्तं, पर्युषितं सावितं रात्र्यन्तरितं, उच्छिष्टं प्रसि(३)द्धम्। केचित्–'उच्छिष्टमगुरोरभोज्य'मिति वसिष्ठनाम्ना वचनं

---

(१) गवां पालकः गवां पालनेन ग. । (२) कर्मस्थायी क. ।
(३) प्रसिद्धमित्यारभ्य स्पृष्टमित्यन्तं नास्ति क० पुस्तके ।

लिखन्ति । उदक्यया रजस्वलया स्पृष्टं, संघुष्टं च को भोजनर्थीति उद्घुष्य दत्तं, पर्यायान्नं अन्यसम्बन्धि यदन्नमन्यव्यपदेशेन दत्तम् । यथाहुः—

ब्राह्मणान्नं दृदच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।
उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥

पर्याचान्तमिति क्वचित्पाठः । तत्र प्रत्यपोशानानन्तरं गुण्डूषपर्याचमनात्प्रागुपात्तमित्यर्थः । पार्श्वाचान्तमिति पाठे तु एकस्यां पङ्क्तौ पार्श्वस्थे आचान्ते यदुपात्तमित्यर्थः । गवा आघ्रातं, शकुनेन काकादिना उच्छिष्टं, कामत इच्छया, पदा चरणेन स्पृष्टम् । अत्र प्रथमचकारेण अप्रयतोपहतादिपरिग्रहः । तदाहाऽऽपस्तम्बः—'अप्रयतोपहतमन्नमप्रयतमभोज्य'मिति । एवं वचनान्तराण्यपि स्मृत्यन्तरेषु द्रष्टव्यानि । द्वितीयचकारेण तु—'अमेध्यपतितचण्डालरजस्वलाकुनखिकुष्ठिसंस्पृष्ट'मिति शङ्खादिवचनबलात् चण्डालादिस्पृष्टपरिग्रहः ॥ १६७—१६८ ॥

( मिता० ) न स्वाध्यायविरोध्यर्थमित्यत आरभ्य ब्राह्मणस्य स्नातकस्य व्रतान्यभिधायेदानीं द्विजातिधर्मानाह—

अनर्चितमिति । उदक्येत्यादि च । अनर्चितं शर्चाहाय यदवज्ञया दीयते । वृथामांसं वक्ष्यमाणप्राणात्ययादिव्यतिरेकेण देवाद्यर्चनावशिष्टं च यन्न भवति आत्मार्थमेव यत्साधितम् । केशकीटादिभिश्च समन्वितं संयुक्तम् । यत्स्वयमनम्लं केवलं कालपरिवासेन, द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वाम्लीभवति तच्छुक्तं दध्यादिव्यतिरेकेण । 'न पापीयसोऽन्नमश्नीयान्न द्विःपक्वं न शुक्तं न पर्युषितं अन्यत्र ' इति शङ्खस्मरणात् । श्वस्पृष्टं शुना स्पृष्टम् । पतितेक्षितं पतितादिभिरीक्षितम् । उदक्या रजस्वला तया स्पृष्टम् । उदक्याग्रहणं चण्डालाद्युपलक्षणार्थम् । 'अमेध्यपतितचण्डालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेत्' इति शङ्खस्मरणात् । को भुङ्क्ते इति यदाघुष्य दीयते तत्संघुष्टान्नम् । अन्यसंबन्ध्यन्यव्यपदेशेन यद्दीयते तत्पर्यायान्नम् । यथा—'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् । उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत्' ॥ इति । पर्याचान्तमिति पाठे परिगतमाचान्तं गण्डूषग्रहणं यस्मिन्

तत्पर्याचान्तं तन्न भोक्तव्यम्। एतदुक्तं भवति—गण्डूषग्रहणादूर्ध्वं आचमनात्प्राक् न भोक्तव्यमिति। पार्श्वाचान्तमिति पाठे एकस्यां पङ्क्तौ पार्श्वस्थे आचान्ते न भोक्तव्यं भस्मोदकादिविच्छेदेन विना। वर्जयेदिति प्रत्येकं संबध्यते। तथा गोघ्रातं गवा आघ्रातम्। शकुनोच्छिष्टं शकुनेन काकादिना भुक्तमास्वादितम्। पदा स्पृष्टं बुद्धिपूर्वं पादेन स्पृष्टं वर्जयेत्॥ १६७—१६८॥

( वी० मि० ) अत्र पर्युषिते प्रतिप्रसवमाह—

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्॥
अस्नेहा अपि गोधूमयवगोरसविक्रियाः॥ १६९॥

गोरसविक्रिया इत्यग्रे दर्शनादन्नपदमत्राऽदनीयमात्रपरं, तेन सर्वं पर्युषितं चिरसंस्थितमपि घृतादिस्नेहाक्तं सद्भोक्तव्यमित्यर्थः। न केवलमेकरात्र्यन्तरितमेव भोज्यमपि तु द्वित्रादिरात्र्यन्तरितमपि स्नेहाक्तं भक्ष्यमिति चिरसंस्थितमित्यनेन दर्शयति। गोधूमादिविकारास्तु पर्युषिता अस्नेहाक्ता अपि भोज्याः। इदमुपलक्षणं शुक्तमपि दध्यादि भोक्तव्यम्।

दधि भक्ष्यं च शुक्तेषु यच्चैव दधिसम्भवम्।

इति बृहस्पतिवचनात्। अदनीयादित्यनुवृत्तौ 'न द्विःपक्वं न शुक्तं न पर्युषितमन्यत्र रागखाण्डवचुक्रदधिगुडगोधूमयवपिष्टविकारेभ्य' इति शङ्खवचनाच्च।

पिप्पली शुण्ठीयुक्तश्च मुद्गयूषस्तु खाण्डवः।
रागखाण्डवतां याति शर्करासहितश्च सः॥

दध्याद्यतिरिक्तं च शुक्तं केवलमभक्ष्यं द्रव्यान्तरसंसृष्टं तु भक्ष्यमेव, 'शुक्तन्तु केवल'मिति गौतमवचनात्—इत्यपि द्रष्टव्यम्॥ १६९॥

( मिता० ) पर्युषितस्य प्रतिप्रसवमाह—

अन्नमिति। अन्नमदनीयं पर्युषितं घृतादिस्नेहसंयुक्तं चिरकालसंस्थितमपि भोज्यम्। गोधूमयवगोरसविक्रियाः मण्डसक्तुकिलाटकूर्चिकाद्या अस्नेहा अपि चिरकालसंस्थिता भोज्याः, यदि विकारान्तरमनापन्नाः। 'अपूपधानाकरम्भसक्तु(१)यावकतैलपायसशाकानि शुक्तानि वर्जयेत्' इति वसिष्ठस्मरणात्॥ १६९॥

---

(१) सक्तुपाचकतैल० ख।

(वी० मि०) किञ्च--

सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ॥
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १७० ॥
देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा ॥
अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७१ ॥
क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ॥
सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः ॥ १७२ ॥
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ॥
वृथा १७३ ॥
फला ॥
जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥ १७४ ॥
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ॥
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १७५ ॥

सन्धिनी वृषभेण सन्धियोग्या ऋतुमती, अनिर्दशा प्रसवानन्तरमनिःक्रान्तदशाहा, अवत्सा क्षीरपायित्वाऽपत्यरहिता । आसां गवां प्रत्येकं पयो वर्जयेत् न भक्षयेत् । गोरिति छान्दसत्वात्समासान्तविधेरनित्यत्वाद्वा समाधेयम् । एकवचनं जात्यभिप्रायम् । 'गोक्षीरमनिर्दशायाः सूतकेऽजामहिष्योश्चे'ति गौतमवचनादजामहिष्योरपि दशाहपर्यन्तं पयोऽभक्ष्यमिति द्रष्टव्यम् । पय इति तद्विकारस्याप्युपलक्षकम् ।

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात्तेषु यत्परिकीर्तितम् ॥

इति भवदेवलिखितवचनात् । इदमेवाभिप्रेत्य परिवर्जयेदित्यत्र परीत्युपसर्गोपादानं कृतम् । औष्ट्रमुष्ट्रीभवं, ऐकशफं एकशफा वडवादयस्तत्प्रभवं, स्त्रैणं मानुषस्त्रीसम्भवम् । केचित्तु अजाव्यतिरिक्तद्विस्तनीपरं स्त्रीपदं, 'सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्ज'मिति शङ्खवचनादित्याहुः । आरण्याः चमरीमृग्यादयस्तत्सम्बन्धि आरण्यकम् ।

आरण्यानां च सर्वेषां मृगाणां महिषीं विना।

इति मनुः। अथशब्देन स्यन्दिनीयमलसूसन्धिनीनां च क्षीरमित्यादिनिषिद्धपयोऽन्तरसमुच्चयः। देवतार्थं होमनैवेद्याद्यर्थं हविः पुरोडाशादि, तच्च होमादेः प्राक् तदुत्तरं प्रतिपत्तेर्विहितत्वात्। शिग्रुः शोभाञ्जनः, लोहिता वृक्षनिर्यासा, अलोहिता अपि व्रश्चनप्रभवा वृक्षच्छेदनोद्भवाः, तथेत्यनेन चाऽयमेव भेदः स्पष्टीकृतः। तथा च मनुः—

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।

लोहितग्रहणात्कर्पूरहिङ्ग्वादीनामनिषेधः। अनुपाकृतं मांसं मन्त्रेणाऽप्रोक्षितस्य पशोर्मांसं, विड्जानि साक्षाद्विष्ठाभवानि तण्डुलीयकादानि, कवकानि छत्राकसदृशानि, क्रव्यादपक्षिणो गृध्रादयः, दात्यूहश्चातकः, चञ्च्वा प्रतुद्य भक्षयन्तीति प्रतुदाः श्येनाद्याः, टिट्टिभः टिट्टिभ इति शब्दानुकारी, एकशफा अश्वादयः, ग्रामवासिनः पारावतादयः, कोयष्टिः कावकः प्लवो जलकुक्कुटः,? चक्राह्वः चक्राङ्गः, बलाका अल्पबकी, नखैर्विकीर्य भक्षयन्तीति विष्किराश्चकोरादयो विशिष्य भक्ष्यत्वेनाऽविहिताः, कृसरः तिलमुद्गसाधितौदनः, संयावो घृतक्षीरगोधूमचूर्णसाधितः, पायसं परमान्नं, अपूपः तण्डुलादिचूर्णगुडसाधितः पूअ इति मिथिलादौ प्रसिद्धः, शष्कुली गोधूमविकारः स्नेहपक्वः, वृथा देवताद्यनुद्देशेन साधिताः। एतच्च कृसरादौ शष्कुल्यन्तेऽन्वेति। कलविङ्को ग्रामचटकः, काकोलो द्रोणकाकः तत्सहित इति कलविङ्कविशेषणं, तेन कलविङ्कं काकोलं चेति पर्यवस्यति। कुरर उत्क्रोशः, रज्जुदालको वृक्षकुक्कुटकः कठफोडा इति मध्यदेशे प्रसिद्धः, जालपादा जालाकारचरणाः शरारिप्रभृतयः। एवं च हंसादेः पृथगुपादानं निन्दातिशयार्थम्। अज्ञाताः जातितो रसवीर्यविपाकतो वाऽपरिचिताः। एतच्च मृगद्विजविशेषणम्। मृगाः आरण्यपशवो, द्विजाः पक्षिणः, चाषः किकीदिविः, रक्तपादाः कादम्बप्रभृतयः, सौनं प्राणिवधस्थानभवं मांसं. वल्लूरं शुष्कमांसं, मत्स्याः विशेषतो विहिताः सिंहतुण्डादिव्यतिरिक्ता विशिष्य स्मृत्यन्तरनिषिद्धा वा सर्वानेतान्वर्जयेदित्यन्वयः। अवर्जने प्रायश्चित्तमाह एतान्कामतः स्वतन्त्रेच्छया जग्ध्वा सोपवासो दिनत्रयं तिष्ठेत्। अकामतस्त्वेकाहम्। 'शेषेषूपवसेदह'रिति मनुवचनात्। अत्र चकाराः परस्परसमुच्चयार्थाः। एवकारश्च परिवर्जयेदित्यत्राऽन्वितः॥१७०-१७५॥

( मिता० ) सन्धिनीति । गौः या वृषेण सन्धीयते सा सन्धिनी 'वशां वन्ध्यां विजानीयाद्वृषाक्रान्तां च सन्धिनीम्' इति त्रिकाण्डीस्मरणात् । या चैकां वेलामतिक्रम्य दुह्यते, या च वत्सान्तरेण सन्धीयते सापि सन्धिनी । प्रसूता अनतिक्रान्तदशाहा अनिर्दशा । अवत्सा मृतवत्सा । सन्धिनी च अनिर्दशा च अवत्सा च सन्धिन्यनिर्दशावत्सास्ताश्च गावश्च तासां पयः क्षीरं परिवर्जयेत् । सन्धिनीग्रहणं स्यन्दिनीयमलस्वोरुपलक्षणार्थम् । यथाह गौतमः—'स्यन्दिनीयमलसूसन्धिनीनां च' इति । स्रवत्पय स्तनी स्यन्दिनी । यमलसूर्यमलप्रसविनी । एवमजामहिष्योश्चानिर्दशयोः पयो वर्जयेत् । 'गोमहिष्यजानामनिर्दशानाम्' इति वसिष्ठस्मरणात् । पयोग्रहणात्तद्विकाराणामपि दध्यादीनां निषेधः । न हि मांसनिषेधे तद्विकाराणामनिषेधो युक्तः । विकारनिषेधे प्रकृतेरनिषे(१)धः । पयोनिषेधाच्छकृन्मूत्रादेरनिषेधः । उष्ट्राज्जातमौष्ट्रं पयोमूत्रादि । एकशफा वडवादयः तत्प्रभवमैकशफम् । स्त्रीभवं स्त्रैणम् । स्त्रीग्रहणमजाव्यतिरिक्तसकलद्विस्तनीनामुपलक्षणार्थम् । 'सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्जम्' इति शङ्खस्मरणात् । अरण्ये भवा आरण्यकास्तदीयमारण्यकं क्षीरं माहिषव्य(२)तिरेकेण । 'आरण्यानां च सर्वेषां मृगाणां माहिषं विना' इति वचनात् । अवेर्जातमाविकम् । वर्जयेदिति प्रत्येकमभिसम्बध्यते । औष्ट्रमित्यादिविकारप्रत्ययनिर्देशात्तद्विकारमात्रस्य पयोमूत्रादेः सर्वदा निषेधः । 'नित्यमाविकमपेयमौष्ट्रमैकशफं च' इति गौतमस्मरणात् ॥ १७० ॥

( मिता० ) देवतार्थमिति । देवतार्थं बल्युपहारनिमित्तं साधितम् । हविः हवनार्थं सिद्धं प्राक् होमात् । शिग्रुः शोभा(३)ञ्जनः । लोहितान् वृक्षनिर्यासान् । व्रश्चनप्रभवान् वृक्षच्छेदनजातानलोहितानपि । यथाह मनुः—'लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा' इति । लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः । अनुपाकृतमांसानि यज्ञेऽहुतस्य पशोर्मांसानि । विड्जानि मनुष्यादिजग्धबीजपुरीषोत्पन्नानि पुरीषस्थाने उत्पन्नानि तन्दुलीयकप्रभृतीनि च । कवकानि छत्रकाणि । वर्जयेदिति प्रत्येकमभिसम्बध्यते ॥ १७१ ॥

(१) रनिषेधो युक्त ख० । (२) माहिषेतरेकेण क० । (३) शोभाञ्जन क० ।

(मिता०) क्रव्यादेति। क्रव्यादा आममांसादनशीलाः। पक्षिणो गृध्रादयः। दात्यूहश्चातकः। शुकः कीरः। चञ्च्वा प्रतुद्य भक्षयन्तीति प्रतुदाः श्येनादयः। टिट्टिभस्तच्छब्दानुकारी। सारसो लक्ष्मणः। एकशफा अश्वादयः। हंसाः प्रसिद्धाः। ग्रामवासिनः पारावतप्रभृतयः। एतान्क्रव्यादादीन्वर्जयेत्॥ १७२॥

(मिता०) कोयष्टीति। कोयष्टिः क्रौञ्चः। प्लवो जलकुक्कुटः। चक्राह्वश्चक्रवाकः। बलाकाबकौ प्रसिद्धौ। नखैर्विकीर्य भक्षयन्तीति विष्किराश्चकोरादय एव गृह्यन्ते। लावकमयूरादीनां भक्ष्यत्वात्, ग्रामकुक्कुटस्य ग्रामवासित्वादेव निषेधाच्च। एतान्कोयष्ट्यादीन्वर्जयेत्। वृथा देवताद्युद्देशमन्तरेण साधिताः कृसरसंयावपायसाऽपूपशष्कुलीर्वर्जयेत्। कृसरं तिलमुद्गसिद्ध(१) ओदनः। संयावः क्षीरगुडघृतादिकृत उत्करिकाख्यः पाकविशेषः। पायसं पयसा शृतमन्नम्। अपूपः स्नेहपक्वगोधूमविकारः। शष्कुली स्नेहपक्वो गोधूमविकारः। 'न पचेदन्नमात्मने' इति कृसरादीनां निषेधे सिद्धे पुनरभिधानं प्रायश्चित्तगौरवार्थम्॥ १७३॥

(मिता०) कलविङ्कमिति। कलविङ्को ग्रामचटकः। ग्रामनिवासित्वेन प्रतिषेधे सिद्धे सत्यु(२)भयचारित्वात्पुनर्वचनम्। काकोलो द्रोणकाकः। कुरर उत्क्रोशः। रज्जुदालको वृक्षकुट्टकः। जालपादो जालाकारपादः। अजालपादा अपि हंसाः सन्तीति हंसानां पुनर्वचनम्। खञ्जरीटः खञ्जनः। जातितो ये अज्ञाता मृगाः पक्षिणश्च। एतान्कलविङ्कादीन्वर्जयेत्॥ १७४॥

(मिता०) चाषानिति। चाषाः किकीदिवयः। रक्तपादाः कादम्बप्रभृतयः। सूनिनां त्यक्तं सौनं वातस्थानभवं मांसं भक्ष्याणामपि। वल्लूरं शुष्कमांसम्। मत्स्या मीनाः। एतांश्चापादीन्वर्जयेत्। चकारान्नालिकाशणछत्राककुसुम्भादीन्। 'नालिकाशणछत्राककुसुम्भालाबुविड्भवान्। कुम्भी(३)कन्दुकवृन्ताककोविदारांश्च वर्जयेत्'॥ इति, 'तथाऽकालप्ररूढानि पुष्पाणि च फलानि च। विकारवच्च यत्किंचित्प्रयत्नेन विवर्जयेत्'॥ तथा-'वटप्लक्षाश्वत्थक(४)कपित्थनीपमातुलिङ्गफलानि वर्जयेत्' इति स्मरणात्। एतान् सन्धिनीक्षीरप्र-

(१) तिलमुद्गमिश्र ओदनः क०। (२) उभयपरत्वात ख०।
(३) कम्बुक क०। (४) दाधित्थ क०।

भृतीननुक्रान्तान् कामतो भक्षयित्वा त्रिरात्रमुपवसेत् । अकामतस्त्वहोरात्रम् । 'शेषेषूपवसेदहः' इति मनुस्मरणात् । यत्पुनः शङ्खेनोक्तम्-'चक्रयलाकाहंसप्लवचक्रवाककारण्डवगृहचटककपोतपारावतपाण्डुशुकसारिकासारसटिट्टिभोलूककङ्करक्तपादचाषभासवायसकोकिलशार्ङ्गलिकुक्कुटहारीतभक्षणे द्वादशरात्रमनाहारः पिबेद्गोमूत्रयावकम्' इति, तद्बहुकालाभ्यासे मतिपूर्वे समस्तभक्षणे वा वेदितव्यम् ॥ १७१ ॥

( वी० मि० ) किञ्च—

पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ॥
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७२ ॥

पलाण्डुः लशुनानुकारी रक्तकन्दः पिआजुरिति मध्यदेशे प्रसिद्धः, विड्वराहो ग्राम्यशूकरः, छत्राकं छत्रसदृशं भूमिजं काष्ठजं वा(१), ग्रामकुक्कुटलशुने प्रसिद्धे, गृञ्जनं गाजर इति प्रसिद्धं, तस्य च पलाण्डुत्वेपि पुनरुपादानं गोबलीवर्दन्यायात् , लोके पलाण्डुत्वेनाऽप्रसिद्धेः । जग्ध्वा कामतः सकृद्भक्षयित्वा । कामतो भक्षणाभ्यासे तु मनुः—

छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥

तथा—

अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥

इद चाऽमतिपूर्वकभक्षणाभ्यासपरम् । अमत्या सकृद्भक्षणे तु शङ्खः—'लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटकुम्भीकभक्षणे द्वादशरात्रं पयः पिबेत्' । 'छत्राकमित्यादि मनूक्तं मतिपूर्वकचिरतराभ्यासे, यद्योक्तं त्वमतिपूर्वाभ्यासे' इति तु मिताक्षरा ॥ १७६ ॥

( मिता० ) पलाण्डुमिति । पलाण्डुः स्थूलकन्दनालो लशुनानुकारी । विड्वराहो ग्रामसूकरः । छत्राकं सर्पछत्रम् । ग्रामकुक्कुटः प्रसिद्धः । लशुनं रसोनं सूक्ष्मदवेतकन्दनालम् । गृञ्जनं लशुनानुकारिलोहितसूक्ष्मकन्दम् । एतानि षट् सकृत्कामतो जग्ध्वा भक्षयित्वा चान्द्रायणं वक्ष्यमाणलक्षणं चरेत् । ग्रामकुक्कुटछत्राकयोः पूर्व(२)प्रति-

(१) च इति ख० पु० पाठः । (२) प्रतिषिद्धे क० ।

षेधितयोरिहाभिधानं पलाण्ड्वादिसमानप्रायश्चित्तार्थम् । मतिपूर्वं चिरतराभ्यासे तु—'छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्विजः' ॥ इति ( ५।१९ ) मनूक्तम् । अमतिपूर्वाभ्यासे—'अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्' । तृतीयाध्याये वक्ष्यमाणं—'यतिचान्द्रायणं वापि' इति द्रष्टव्यम् । अमतिपूर्वाभ्यासे तु शङ्खोक्तं—'लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटकुम्भीकभक्षणे द्वादशरात्रं पयः पिबेत्' इति ॥ १७६ ॥

( वी० मि० ) अपि च—

भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्य(१)काः ॥
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७७ ॥
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ॥

सेधादयः पञ्चैव पञ्चनखा द्विजातिभिर्भक्ष्याः । सेधा शल्लकीसदृशः, गोधा स्थलचारिणी सनगोह इति मध्यदेशे प्रसिद्धा, कच्छपः कूर्मः, शल्यकः सेही इति प्रसिद्धा, (२)शशः प्रसिद्धः, चकारेण खड्गिपरिग्रहः ।

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु राघव ।
शशकः शल्लकी गोधा कूर्मः खड्गी च पञ्चमः ॥

इति रामायणवचनात् । 'खड्गे तु विवदन्त्येके' इति शङ्खवचनं तु चतुर्नखखड्गविषयम् । 'श्राद्धादन्यत्रे'ति तु मिताक्षरा । मत्स्येष्विति निर्द्धारणे सप्तमी । अपिशब्देन पञ्चनखेषु इति पूर्ववाक्यार्थघटकमवधारणं समुच्चीयते । हिशब्देन निश्चयार्थेन मत्स्यानां सामान्यत एवाभक्ष्यत्वमिति दाक्षिणात्याभिधानादिमूलशङ्काव्युदासः । सिंहतुण्डा अलिप्रभृतयः, रोहित ईषल्लोहितवर्णो रोहु इति प्रसिद्धः, पाठीनः सहस्रदंष्ट्रः, राजीवो राजीयुक्तः राइखट् इति ख्यातः, सशल्काः शल्को मत्स्यानां स्थूलरोम खुलिचा इति प्रसिद्धः, तद्युक्ताः शफरादयः ।

उक्तमेतत्तु सर्वेषां भक्ष्याभक्ष्यमशेषतः ।
वर्णानां सानुलोमानां सङ्कीर्णानां च विशेषतः ॥

अत्र सशल्कपदेनैव प्राप्तस्य रोहितस्य पृथगुपादानं पवित्र्या-

(१) शल्लकाः—इति मुद्रितपुस्तके पाठः । (२) शशः प्रसिद्धः—इति क० पुस्तके नास्ति ।

तिशयज्ञापनार्थम् ॥

(वी० मि०) इह मत्स्यमांसयोर्भक्षणे विधिनिषेधावुक्ताविति परस्परविरोधमाशङ्कमानानन्तेवासिनः सम्यक् बोधितुं व्यवस्थामाह—

अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ॥१७८॥
प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ॥
देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दोषभाक् ॥१७९॥
वसेत्स नरके घोरे दिनानि पशुरोमभिः ॥
संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८० ॥
सर्वान्कामानवाप्नोति हयमेधफलं तथा ॥
गृहेऽपि निवसन्विप्रो मुनिर्मांसविव(१)र्जनात् ॥ १८१ ॥

भक्षणे वर्जने च विधिं प्रकारमतः परं शृणुध्व, तत्र प्रथमतो भक्षणप्रकारमाह प्राणात्यये इति श्लोकेन । भक्षव्यतिरेकेण मांसभक्षणनिवर्तनीयव्याधिवशेन प्राणात्यये संभाविते । श्राद्धे श्राद्धनियोगे । तथाशब्देन प्राणात्यय इव श्राद्धनियोगे भोजनावश्यकत्वं दर्शयति । तथा च (२) मनु —

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥

प्रोक्षितं पशुयागाद्यर्थं प्रोक्षितस्य पशोः सम्बन्धि च, अभक्षणे यागवैगुण्यात् । द्विजकाम्यया प्रत्याख्येयब्राह्मणानुरोधेन । इदं च सकृदेव 'सकृद्ब्राह्मणकाम्यये'ति यमवचनात् । देवान्पितॄन् वा समभ्यर्च्य च मांसवर्जनसङ्कल्पाभावे मांसं खादन् दोषभाग्भवति गृहीतसङ्कल्पस्तेष्वपि निमित्तेषु मांसं भक्षयन्दुष्यति । यथाह यम —

भक्षयेत्प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत् ॥

भृत्यभरणावशिष्टं च मांसं देवपित्रर्चनायशिष्टवद्भक्ष्यमेव । तथा च मनु —

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।

(१) विसर्जनाद्—इति क० पु० पाठ । (२) तथा च—इति ख- पुस्तके नास्ति ।

भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥

वध्या इत्येननाऽष्टविधं घातनमनुज्ञातं, पूर्वं वृथामांसपदेनैतन्निमित्तविनाकृतं मांसं वर्ज्यमुक्तमित्याविरोध इत्यभिप्रेत्याह वसेदित्यादि। अविधिना शास्त्रानुमतनिमित्तव्यतिरेकेण यो हन्ति स दुराचारः पशुरोमसमसङ्ख्यानि दिनानि नरके वसेदित्यर्थः। हन्तीत्यनेन भोजनमपि विवक्षितम्।

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥

इति मनुवचनात्। विहितस्यापि मांसभक्षणस्य वर्जने फलमाह सर्वानित्यादिना। सर्वानश्वमेधफलातिरिक्तान् कामान् अभिलषितार्थान् अश्वमेधफलं चाप्नोति। गृहस्थोऽपि सन्मांसस्य विशिष्य सङ्कल्पपूर्वकं वर्जनात् मुनितुल्यो वानप्रस्थतुल्यो भवतीत्यर्थः ॥ १७७-१८१ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने भक्ष्याभक्ष्यप्रकरणम् ॥

( मिता० ) भक्ष्या इति। तथेति च। सेधा श्वावित्। गोधा कृकलासानुकारिणी महती। कच्छपः कूर्मः। शल्लकः शल्ल(१)की। शशः प्रसिद्धः। पञ्चनखादीनां श्वमार्जारवानरादीनां मध्ये एते सेधादयो भक्ष्याः। चकारात्खड्गोऽपि। यथाह गौतमः—'पञ्चनखाः शशशल्लकश्वाविड्गोधाखड्गकच्छपाः' इति। यथाह मनुरपि—'श्वाविधं शल्ल(२)कं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः' ॥ इति। यत्पुनर्वसिष्ठेन 'खड्गे तु विवदन्ते' इत्यभक्ष्यत्वमुक्तं तच्छ्राद्धादन्यत्र। 'खड्गमांसैर्भवेद्दत्तमक्षय्यं पितृकर्मणि' इति श्राद्धे फलश्रुतिदर्शनात्। तथा मत्स्यानां मध्ये सिंहतुण्डादयो भक्ष्याः। सिंहतुण्डः सिंहमुखः। रोहितो लोहितवर्णः। पाठीनश्चन्द्रकाख्यः। राजीवः पद्मवर्णः। सह शल्कैः शुक्त्याकारैर्वर्तत इति सशल्कः। एते च सिंहतुण्डादयो नियु(३)क्ता एव भक्ष्याः। 'पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः' ॥ इति ( ५।१६ ) मनुस्मरणात्। द्विजातिग्रहणं शूद्रव्युदासार्थम् ॥ १७८ ॥

---

(१) शल्लकः शल्ली। (२) शल्यकम्। (३) नियुक्तस्यैव क०।

( मिता० ) अनर्चितं वृथामांसमित्यारभ्य द्विजातिधर्मानुक्त्वेदानीं (१)चातुर्वर्ण्यधर्मानाह—

अत इति । मांसस्य प्रोक्षितादेर्भक्षणे तद्व्यतिरिक्तस्य च निषिद्धस्य वर्जने प्रोक्षितादिव्यतिरेकेण मांसं न भक्षयामीत्येवं सङ्कल्परूपेण विधिं सामश्रवःप्रभृतयः हे मुनयः शृणुध्वम् ॥ १७८ ॥

( मिता० ) तत्र भक्षणे विधिं दर्शयति—

प्राणात्यय इति । अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमन्तरेण यदा प्राणबाधा भवति तदा मांसं नियमेन भक्षयेत् । 'सर्वत एवात्मानं गोपायेत्' इत्यात्मरक्षाविधानात् । 'त(२)स्मादु ह न पुरायुषः स्वःकामी प्रेयात्' इति मरणनिषेधाच्च । तथा श्राद्धे मांसं निमन्त्रितो नियमेन भक्षयेत् । अभक्षणे दोषश्रवणात् । 'यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः । स प्रेत्य पशुतां याति संभवानेकविंशतिम्' ॥ इति मनुस्मरणात् । प्रोक्षणाख्यश्रौतसंस्कारसंस्कृतस्य पशोर्यागार्थस्याग्नीषोमीयादेर्हुतावशिष्टं मांसं प्रोक्षितं तद्भक्षयेत् । अभ(३)क्षणे यागानिष्पत्तेः । द्विजकाम्यया ब्राह्मणभोजनार्थं च यत्साधितं तेन तानभ्यर्च्यावशिष्टं भक्षयन्न दोषमाग्भवति । एवं भृत्यभरणावशिष्टमपि । 'यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पु(४)रा' ॥ इति ( ५।२२ ) मनुस्मरणात् । न दोषमागिति दोषाभावमात्रं वदता अतिथ्याद्यर्चनावशिष्टस्याभ्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितम् । एवमप्रतिषिद्धानामपि शशादीनां प्राणात्ययव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि मांसप्रतिषेधः सर्वविधिनिषेधाधिकारोऽवगम्यते ॥१७९॥

( मिता० ) इदानीं प्रोक्षितादिव्यतिरिक्तस्य वृथामांसमित्यनेन प्रतिषिद्धस्य भक्षणे निन्दार्थवादमाह—

वसेदिति । अविधिना देवताद्युद्देशमन्तरेण यः पशून् हन्ति स तस्य पशोर्यावन्ति रोमाणि तावन्ति दिनानि घोरे नरके वसेत् । हन्तीत्यष्टविधोऽपि घातको गृह्यते । यथाह मनुः—( ५।५१ ) 'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः' ॥ इति ॥ १८० ॥

(१) चतुर्वर्गे प्रत्यह क० । (२) तस्मादिह ख० । (३) अभक्षणेऽपग० ख० ।
(४) ह्याचरत्तथा ख० ।

( मिता० ) इदानीं वर्जने विधिमाह—

सर्वानिति। यः प्रोक्षितादिव्यतिरेकेण मया मांसं न भक्षितव्यमिति सत्यसङ्कल्पो भवति स सर्वान्कामान् प्रवृत्तो निर्विघ्नं प्राप्नोति विशुद्धाशयत्वात्। यथाह मनुः—( ५४७ ) 'यद्धयायते यत्कुरुते रतिं वध्नाति यत्र च। तदवाप्नोत्यविघ्नेन यो हिनस्ति न किञ्चन'॥ इति। एतच्च सांवत्सरिकसङ्कल्पस्य। 'वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः। मांसानि च न खादेद्यस्तयोः पुण्यफलं समम्'॥ इति (५।५३) मनुस्मरणात्। तथा गृहेऽपि निवसन्ब्राह्मणादिश्चातुर्वर्णिको मुनिवन्माननीयो भवति मांसत्यागात्। एतच्च न प्रतिषिद्धमांसविषयं नापि प्रोक्षितादिविषयम्, किंतु (१)पारिशेष्यादतिथ्याद्यर्चनावशिष्टाभ्यनुज्ञातविषयमिति॥ १८१॥

इति भक्ष्याभक्ष्यप्रकरणम्।

——:——

(वी० मि०) अथ वर्णाश्रमे(२)तराणां धर्मः प्रायशो द्रव्यशुद्धिनिबन्धन इत्यनेनाचमनरूपो धर्मः शुद्धिहेतुरपीत्यनेन वा प्रसङ्गेन सौवर्णरजतादीनामपि द्रव्याणां शुद्धिहेतून् स्वभावशुद्धिं चाऽभिदधान इवाचमनरूपं धर्ममाह 'सौवर्णराजताब्जाना'मित्यादिना 'पक्वेष्टकचितानि च'त्यन्तेन शुद्ध्यभिधानबाहुल्याल्लब्धशुद्धिप्रकरणाभिधानेन प्रकरणेन—

सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम्॥
शाकरज्जुमूलफलवासोविदलचर्मणाम्॥ १८२॥
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते॥

सौवर्णराजते सुवर्णरजतविकारौ, अब्जं शङ्खशुक्त्यादि, ऊर्ध्वपात्रं यज्ञियं द्रोणकलशोलूखलादि ग्रहसाहचर्यात्, ग्रहाः षोडशिप्रभृतयो यज्ञपात्रविशेषाः, अश्मा पाषाणः, शाको वास्तुकादिः, रज्जुर्बल्वजादिरचिता, विदलं वंशादि, विदलचर्मणी तन्निर्मितछत्र-

(१) परिशेषात् ख०।

(२) वर्णाश्रमेतराणामित्यारभ्य प्रसङ्गेनेत्यन्तं क० पुस्तके नास्ति।

भस्मादेरप्युपलक्षणे, पात्राणि प्रोक्षिणीपात्रादीनि, चमसा होतृचमसादयो यज्ञपात्रविशेषाः । एषामुच्छिष्टस्य घृतादिस्नेहस्य वा लेपाभावे केवलेन वारिणा क्षालनाच्छुद्धिः ॥

चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥

चरुः स्थाली, स्रुक् जुह्वादिः, स्रुव प्रसिद्धः, सस्नेहानि आज्यादिलिप्तानि पात्राणि आज्यपात्रादीनि । एतान्युच्छिष्टलेपरहितानि उष्णोदकेन क्षालनात् शुध्यन्तीति शेषः । सलेपानां तु—

तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

इति मनूक्ता शुद्धिः । अत्र मृद्भस्मनोर्विकल्पः एककार्यत्वात् । जलेन तु समुच्चयः, व्यापारभेदात् ॥ १८२-१८३ ॥

( मिता० ) इदानीं द्रव्यशुद्धिमाह—

सौवर्णेति । पात्राणामिति च । सौवर्णं सुवर्णकृतम् । अब्जं मुक्ताफलशङ्खशुक्त्यादि । ऊर्ध्वपात्रं यज्ञियोलूखलादि, ग्रहादिसाहचर्यात् । ग्रहाः षोड(१)शिग्रभृतयः । अश्मा दृषदादिः । शाकं वास्तुकादि । रज्जुः वल्कजादिनिर्मिता । मूलमार्द्रकादि । फलमाम्रादि । वासो वस्त्रम् । विदलं वैणवादि । चर्म अजादीनाम् । विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवल्कादीनामुपलक्षणार्थम् । पात्राणि प्रोक्षणीपात्रप्रभृतीनि । चमसा होतृचमसादयः । एतेषां सौवर्णादीनां लेपरहितानामुच्छिष्टस्पर्शमात्रे वारिणा प्रक्षालनेन शुद्धिः । चरुश्चरुस्थाली । स्रुक्स्रुवौ प्रसिद्धौ । सस्नेहानि पात्राणि प्राशित्रहरणादीनि । एतानि च लेपरहितान्युष्णेन वारिणा शुध्यन्ति । 'निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति । अब्जमश्ममयं चैव राजतं चानुपस्कृतम्' ॥ इति (५।११२) मनुस्मरणात् । अनुपस्कृतमलातपूरितम् । सलेपानां तु—'तैजसानां मणीनां च सर्वस्याश्ममयस्य च । भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः' ॥ इति (५।१११) मनूक्तं द्रष्टव्यम् । मृद्भस्मनोरेककार्यत्वाद्विकल्पः । आपस्तु समुच्चीयन्ते । काकादिमुखोपघाते तु—'कृष्णशकुनिमुखा(२)वमृष्टं पात्रं निर्लिखेत्, श्वापदमुखावमृष्टं पात्रं न प्रयुञ्जीत' इति द्रष्टव्यम् । एतच्च मार्जारा-

(१) षोडशी यज्ञियपात्रविशेषः । (२) मुखावघृष्ट ख० ।

दन्यत्र। 'मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः'। इति मनुस्मरणात् ॥१८२-१८३॥

स्फ्यशूर्पाऽजिनधान्यनां मुसलोलूखलाऽनसाम् ॥
प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८४ ॥

(वी०मि०) स्फ्यः खादिरखड्गः, शूर्पं प्रसिद्धं, अजिनं चर्म, तदतिरिक्तस्य शुद्ध्यन्तरकथनात्। धान्यं व्रीह्यादि यज्ञियं खल्वपि, मुसलोलूखले प्रसिद्धे, अनः शकटं, संहतं राशीकृतं, बहु अनेकपुरुषोद्वाह्यं यद्धान्यं वासश्चायज्ञियमपि, एषां प्रोक्षणं शुद्धिहेतुः। तदाह बौधायनः–'चण्डालादिस्पर्शेऽनेकपुरुषहार्याणां प्रोक्षणम्'। अत्र मिताक्षरायां व्यवस्थान्तरम्। तथा हि–यदा धान्यानि वस्त्राणि च राशीकृतानि तत्र चण्डालादिस्पृष्टान्यल्पानि अस्पृष्टानि बहूनि तदा स्पृष्टानामुक्तैव शुद्धिरस्पृष्टानां तु प्रोक्षणाच्छुद्धिः। यदा पुनः स्पृष्टानि बहूनि अल्पान्यस्पृष्टानि तदा सर्वेषामेव क्षालनम्। यदा पुनः स्पृष्टानामस्पृष्टानां च तुल्यता तदा प्रोक्षणमेव। इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव। पाक्षिकस्यापि दोषस्य परिहर्तव्यत्वादिति लिखितानि तत्रैव तद्व्यवस्थायां कानिचिद्वचनानीति ॥ १८४ ॥

( मिता० ) यज्ञपात्रादीनां प्रोक्षणेन शुद्धिः—

स्फ्यशूर्पेत्यादि। स्फ्यो वज्रो यज्ञाङ्गम्। अनः शकटम्। शेषं प्रसिद्धम्। एतेषामुष्णेन वारिणा शुद्धिः। पुनरजिनग्रहणं यज्ञाङ्गाजिनप्राप्त्यर्थम्। संहतानामशुद्धिद्रव्या(१)रब्धावयविनां बहूनां धान्यानां वाससां च। वासोग्रहणमुक्तशुद्धीनामुपलक्षणार्थम्। उक्तशुद्धीनां धान्यवासःप्रभृतीनां बहूनां राशीकृतानां प्रोक्षणेनैव शुद्धिः। बहुत्वं च स्पृष्टापेक्षया। एतदुक्तं भवति—यदा धान्यानि वस्त्रादीनि वा राशीकृतानि तत्र चण्डालादिस्पृष्टान्यल्पानि बहूनि चास्पृष्टानि तत्र स्पृष्टानामुक्तैव शुद्धिरितरेषां प्रोक्षणमिति। तथा च स्मृत्यन्तरम्–'वस्त्रधान्यादिराशीनामेकदेशस्य दूषणात्(२)। तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति' ॥ इति। यदा पुनः स्पृष्टानां बहुत्वं अस्पृष्टानां चाल्पत्वं तदा सर्वेषामेव क्षालनम्। यथाह मनुः ( ५।११८ )—'अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधी-

(१) द्रव्याणां बहूनां पा०। (२) दूषणे—इति मुद्रितपुस्तक पाठः।

यते' । इति । स्पृष्टानामस्पृष्टानां च समत्वेऽपि प्रोक्षणमेव । बहूनां प्रोक्षणविधानेनाल्पानां क्षालने सिद्धे पुनरल्पानां क्षालनवचनस्य समेषु (१)क्षालननिवृत्त्यर्थत्वात् । इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव । पाक्षिकस्यापि दोषस्य परिहर्तव्यत्वात् । अनेकपुरुषैर्धार्यमाणानां तु धान्यवासःप्रभृतीनां स्पृष्टानामस्पृष्टानां च प्रोक्षणमेवेति निबन्धकृतः ॥ १८४ ॥

तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम् ॥
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८५ ॥

दारु काष्ठं, शृङ्गं मेषमहिषादिसम्बन्धि, अस्थि करिवराहादिसम्बन्धि । अस्थिपदं दन्तादेरप्युपलक्षकमिति मिताक्षरा । एषां मूत्रादिभिरेकदेशोपघाते तक्षणमुपहतभागमात्रस्याऽपनयनं शुद्धिहेतुः । सम्पूर्णोपघाते तु मनु —

अलाबुदारुपात्राणां वेदलानां तथैव च ।
अत्यन्तोपहतानां च परित्यागो विधीयते ॥

फलसम्भुवां बिल्वालाबुप्रभृतिफलनिष्पन्नानां पात्राणामुच्छिष्टाद्युपघाते गोवालैर्गोपुच्छवालैर्घर्षणाच्छुद्धिः । तेषां च मूत्रादिभिरेकदेशोपघाते वायुपुराणम्—

तथा चर्मास्थिदारूणां शृङ्गाणां चावलेखनम् ।

मूत्रादिना सम्पूर्णोपघाते तु प्राग्लिखितमनुवचनात्परित्याग एव । यज्ञकर्मणि विनियुज्यमानानां यज्ञपात्राणां स्रुवादीनां पाणिना मार्जनं लेपापकर्षणं शुद्धिहेतुस्तदनन्तरं चोष्णोदकेन क्षालनं प्रागभिहितमिति कल्पतरुः । प्रक्षालनेन शुद्धानां दर्भैर्दशापवित्रेण वा यथा शास्त्रं मार्जनं संस्कारार्थमिति मिताक्षरा ॥ १८५ ॥

( मिता० ) निर्लेपानां स्पर्शमात्रदुष्टानां शुद्धिमुक्त्वेदानीं सलेपानां शुद्धिमाह—

तक्षणमिति । दारूणां मेषमहिषादिशृङ्गाणां करिवाराहशङ्खाद्यस्थ्नाम् । अस्थिग्रहणेन दन्तानामपि ग्रहणम् । उच्छिष्टस्नेहादिभिर्लिप्तानां मृद्भस्मोदकादिभिरनपगतलेपानाम् । ( मनुः ५ । १२६ )— 'यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि चादेयं स-

(१) क्षालनवचनमनु० घ०

र्वासु द्रव्यशुद्धिषु' ॥ इति सामान्यतः शुद्धिविधानात्। तक्षणं तावन्मात्रावयवापनयनं शुद्धिः । फलसम्भुवां विल्वालावुनालिकेरादिफलसम्भूतानां पात्राणां गोवालैरुद्धर्षणाच्छुद्धिः। यज्ञपात्राणां स्रुक्स्रुवादीनां यज्ञकर्मणि प्रयुज्यमानानां दक्षिणेन हस्तेन दर्भैर्दशापवित्रेण वा यथाशास्त्रं कर्माङ्गतया मार्जनं कर्तव्यम्। एतच्च श्रौतमुदाहरणमन्येषामपि सौवर्णादीनां पात्राणां स्मार्तलौकिककर्मसु कृतशौचानामेवाङ्गत्वमिति दर्शयितुम्। यज्ञाङ्गानां पुनः कृतशौचानामिदं दशापवित्रादिभिर्मार्जनं संस्कारार्थमिति विशेषः ॥ १८५ ॥

सोपैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ॥
सश्रीफलैरंशुपट्टैः सारिष्टैः कुतपं तथा ॥ १८६ ॥
सगौरसर्षपैः क्षौमं पुनः पाकेन(१)मृण्मयम् ॥

( वी० मि० ) ऊपः क्षारमृत्तिका तत्सहितैरुदकैर्लेपाधिक्ये गोमूत्रैर्वा। आविकमूर्णामयं, कौशिकं कोशप्रभवं त्रसरपट्टादि क्षालनेन शुद्धयति। अंशुपट्टमतसीभिन्नवल्कलतन्तुनिर्मितं, सश्रीफलैर्विल्वफलसहितैरुदकगोमूत्रैः कुतपः कम्बलविशेषश्छागलोमनिर्मितः, अरिष्टफलफेणकयुक्तैरुदकगोमूत्रैः। क्षुमाऽतसी तत्सूत्रनिर्मितं श्वेतसर्षपपिष्टसहितैरुदकगोमूत्रैः शुद्धयति। इदं चात्यन्तोपघाते। अन्यथा तु देवलः—

ऊर्णापट्टांशुकक्षौमदुकूलानां च कर्पणात्।
अल्पाशौचे भवेच्छुद्धिः शोषणप्रोक्षणादिभिः ॥
तान्येवाऽमेध्यलिप्तानि निर्णिज्यात् क्षारवर्पणैः।

अत्र 'क्षालयेच्छोधनैः स्वकैः'।

धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि।

इति लिखितं मिताक्षरायाम्। मृण्मयं च भाण्डं पुनरग्निपक्केन शुद्धयति। एतच्चोच्छिष्टाद्युपघाते तु म(२)नुः—

मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः।
संस्पृष्टं नैव शुद्धयेत पुनःपाकेन मृण्मयम् ॥

---

(१) पुन पाकान्महीमयम्—इति मुद्रित पुस्तके पाठ।
(२) यमः—इति क० पु० पाठः।

अत्रैव देवल —

> तूलिकामुपधानं च पुष्परक्ताम्बरं तथा।
> शोषयित्वातपे किञ्चित्करैः संमार्जयेन्मुहुः॥
> पश्चात्तु वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि।
> तान्यप्यतिमलिप्तानि यथावत्परिशोधयेत्॥

(वी० मि०) स्वभावशुद्धिमाह—

**कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा॥ १८७॥**

कारुः शिल्पी मालाकारनापितादिस्तद्धस्तः प्रक्षालनादिहेतूपनिपातेऽपि विनैव प्रक्षालनादिकं शुचिस्तत्तत्कर्मार्हः। पण्यं विक्रयदेशे प्रसारितं विक्रय्यं सिद्धान्तव्यतिरिक्तं यवव्रीह्यादि अशुचिस्पृष्टमपि शुचि। भैक्षं भिक्षासमूहस्तद्द्रव्याक्रमणेऽपि शुचि।

> ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः।

इति मनुः। योषिन्मुखं रतिकाले शुचि 'स्त्रीमुखं रतिचुम्बने' इति पैठीनसिवचनात्। योषित् स्वकीया भार्या। तथाशब्देन—

> अदोषं च मुखं स्त्रीणां गवां पृष्ठमजामुखम्।
> एतानि नित्यशुद्धानि यच्च वाचा प्रशस्यते॥

इति समबोधितगोपृष्ठादिसमुच्चयः॥ १८६-१८७॥

(मिता०) इदानीं सलेपानामेव केषांचिल्लेपापकर्षणे विशेष(१)हेतुनाह—

सोषैरिति। ऊषरमृत्तिकासहितेन गोमूत्रेणोदकेन वा लेपापेक्षया। आविकमूर्णामयम्, कौशिकं कौशप्रभवं तसरीपट्टादि, प्रक्षालितं शुद्ध्यति। उदकगोमूत्रैरिति बहुवचनं पश्चादप्युदकप्राप्त्यर्थम्। अंशुपट्टं वल्कलतन्तुकृतम्। सश्रीफलैर्बिल्वफलसहितैः। कुतपः पार्वतीयच्छागरोमनिर्मितकम्बलः,—अरिष्ट(२)सहितैरुदकगोमूत्रैः शुद्ध्यतीत्यनुवर्तते। एतच्चोच्छिष्टस्नेहादियोगे सति वेदितव्यम्। अल्पोपघाते तु प्रोक्षणादि क्षालनासहत्वात्। सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात्। तथा च देवलः—'ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः। अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः'॥ इत्यभिधायाह—'तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः। धान्यकल्कैस्तु फलजै रसैः

(१) हेतुन्यमेनाह क०। (२) अनिष्टफलसहितैः ख० अरिष्टसहितै फलसहिते ग०।

क्षारानुगैरपि' ॥ इति । क्षौमवदेव शाणस्य समानयोनि(१)त्वात् । ऊर्णादिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थम् । अतस्तस्याल्पोपघाते-नैव क्षालनं कार्यम् । अमेध्यलेपादन्यत्र—'तूलिकामुपधानं च पुष्प-रक्ताम्बरं तथा । शोषयित्वातपे किंचित्करैः संमार्जयेन्मुहुः ॥ पश्चा-च्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि । तान्यप्यतिमलिष्टानि य-थावत्परिशोधयेत्' ॥ इति देवलस्मरणात् । पुष्परक्तानि कुङ्कुमकु-सुम्भादिरक्तानि । पुष्परक्तग्रहणमन्यस्यापि हरिद्रादिरक्तस्य क्षालना-सहस्य प्राप्त्यर्थं न मञ्जिष्ठादेः, तस्य क्षालनसहत्वात् । शङ्खेनाप्यु-क्तम्—'रागद्रव्याणि प्रोक्षितानि शुचीनि' इति ॥ १८६ ॥

( मिता० ) सगौरेति । गौरसर्षपसहितैरुदकैर्गोमूत्रैः क्षौमं क्षुमा अतसी तत्सूत्रनिर्मितं पटादि शुध्यति । पुनःपाकेन मृण्मयं घटादि । एतच्चोच्छिष्टस्नेहलेपे वेदितव्यम् । मनुः ( ५।१२३ )—'(२)मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः । संस्पृष्टं नैव शुद्ध्येत पुनःपाकेन मृण्मयम्' ॥ इति स्मरणात् । चण्डालाद्युपघाते तु त्याग एव । यथाह पराशरः—'चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा । प्रक्षालनेन शुध्येत परित्यागान्महीमयम्' ॥ इति । कारवो रजकचैलधावकसूप-काराद्यास्तेषां हस्तः सदा शुचिः । शुचित्वं तत्साध्ये कर्मणि । वस्त्र-धावनादौ सूतकादिसम्भवेऽपि । तथा च स्मृत्यन्तरम्—'कारवः शिल्पिनो वैद्या दास्यो दासास्तथैव च । राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिताः' ॥ इति । पण्यं पणार्हं विक्रेयं यवव्रीह्यादि । अनेक-क्रेतृजनकरपरिघट्टितमप्यप्रयतं न भवति । सूतकादिनिमित्तेन च वणिजाम् । भिक्षाणां समूहो भैक्षं तद्ब्रह्मचार्यादिहस्तगतं अनाचान्त-स्त्रीप्रदानाऽशुचिरथ्याक्रमणादिना निमित्तेनापि न दुष्यति । तथा योषिन्मुखं संभोगकाले शुचि । 'स्त्रियश्च रतिसंसर्गे' इति स्मर-णात् ॥ १८७ ॥

भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ॥
सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात् ॥ १८८ ॥

मार्जनमवकरापनयनं, दाहः परितोऽग्निसंयोगः, कालो यावता कालेनाऽपावित्र्यहेतुलेपक्षयो भवति तावान्, गोक्रमणं गवां पाद-

(१) योनित्वात् ख० । (२) मद्यमूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः क० ।

परिघट्टनं, सेको वृष्टिजलेन क्षालनं, उल्लेखनं तक्षणं, लेपो गोमयाद्युपलेपनम् । एतैर्मार्जनादिभिर्व्यस्तैः समस्तैर्वा भूमेः शुद्धिः ।

तथा हि, भूमिस्तावत्त्रिविधा अमेध्या दुष्टा मलिना चेति । तत्राऽमेध्याया दहनादिभिः पञ्चभिश्चतुर्भिर्वा, दुष्टाया दहनादिभिस्त्रिभिः खननलेपनाभ्यां वा, मलिनायास्तूपलेपनेनैकेन शुद्धिः । तदाह देवलः—

पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शोध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपनवापनम् ।
पर्जन्यवर्षणं चेति शौचं पञ्चविधं स्मृतम् ॥

अमेध्यादिस्वरूपमाह स एव—

प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः ।
चण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ॥
विण्मूत्रोपहतं यत्र कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते ॥
कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
कृष्टापकर्षणैः क्षिप्तैर्वान्तैर्वा दुष्टतां व्रजेत् ॥
नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।

खननाच्छुद्धिः । मार्जनोपलेपने तु सर्वत्र समुच्चीयेते इति तु मिताक्षरा । गृहं तु मार्जनलेपनाभ्यां शुध्यति । गृहस्य पृथगभिधानं मार्जनोपलेपनयोः प्राप्त्यर्थम् । शवदूषितगृहशुद्धौ विशेषमाह संवर्तः—

गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते ।
प्रोत्सृज्य मृण्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ।
गोमयेनोपलिप्याऽथ छागेन घ्रापयेद् बुधः ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ।
सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्यत्यसंशयम् ॥

शवोऽत्र गोमनुष्यादिलक्षणः शिष्टाचारानुसारादिति प्रतिभाति ॥ १८८ ॥

( मिता० ) गोघ्रात इति । गोघ्राते गोनि:श्वासोपहतेऽन्ने अदनीयमात्रे । तथा केशमक्षिकाकीटैर्दूषिते । केशग्रहणं लोमादिप्राप्त्यर्थम् । कीटाः पिपीलिकादयः । उदकं भस्म मृद्वा यथासम्भवं प्रक्षेप्तव्यं शुद्ध्यर्थम् । यत्तु गौतमेनोक्तम्—'नित्यमभोज्यं केशकीटावपन्नम्' इति, तत्केशकीटादिभिः सह यत्पक्वं तद्विषयम् ॥ १८९ ॥

त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ॥
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥१९०॥

( वी०मि० ) त्रपु रङ्गम् । सीसकादीनि प्रसिद्धानि । एषां क्षारादिभिः कांस्यलोहानां (१)तु भस्माद्भिः शुद्धिः । क्षारो भस्म । अम्लोदकं जम्बीरादिरसवारि । अत्रोपघातापेक्षया व्यस्तानां वा शुद्धिहेतुत्वमवसेयम् । अत्र मत्स्यपुराणम्—

सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च ।
निर्लेपानि तु शुद्ध्यन्ति केवलेन जलेन तु ॥
शूद्रोच्छिष्टानि शोध्यानि क्षाराम्लोदकवारिभिः ।
सूतिकाशवविण्मूत्ररजस्वलहतानि च ॥
प्रक्षेप्तव्यानि तान्यग्नौ यच्च यावत्सहेदपि ।

बौधायनः—'तैजसानां तु पात्राणामुच्छिष्टोपहतानां निःसप्तकृत्वः परिमार्जनं, परिमार्जनद्रव्याणि शकृन्मृद्भस्मानि' । मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनः करणं गोमूत्रे वा सप्तरात्रं परिस्थापनं महानद्यां वा । यद्वा—

सूतिकोच्छिष्टभाण्डस्य सुराम्द्यहतस्य च ।
निःसप्तमार्जनैः शुद्धिर्न तु कांस्यस्य भाजने ॥

तेन कांस्यस्य सकृदुपघातेऽग्नौ प्रतापनमसकृदुपघाते तु पुनर्घटनम् । अङ्गिराः—

गण्डूषं पादशौचं तु यः कुर्यात्कांस्यभाजने ।
भूमौ निःक्षिप्य षण्मासान् पुनराकरमाविशेत् ॥

आकरमाविशेदग्नौ दहेत् । स्मृतिः—

गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ।
शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥

---

(१) तु—इत्यस्य स्थलात्—इत्यत क- पुस्तके नास्ति ।

मनुः—

ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च।
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः॥

यथार्हं यस्य येन मलापकर्षणं तस्य तेनेत्यर्थः।

मलसंयोगजं तज्जं यस्य येनोपहन्यते।
तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत्॥

इति वचनादित्यास्तां विस्तरः। विशिष्टव्यवस्था पश्चाल्लिखनीया। प्लावो द्रवस्य त्विति। द्रवस्य द्रवद्रव्यस्य घृतादेः श्वकाकाद्युपहतस्य प्लावः समानजातीयद्रवद्रव्येण तदाधार भाण्डस्य यावन्निस्सरणमभिपूरणं शुद्धिरित्यनुपज्यते। शुद्धिहेतुरिति तदर्थः। इयं च शुद्धिः प्रभूतस्य घृतादेः।

द्रवद्रव्याणि भूरीणि परिप्लाव्यानि चाम्भसा।

इति ब्रह्मपुराणात्। अत्राम्भःपदं समानजातियद्रवद्रव्यपरमन्यथा शोधनीयस्य कार्याक्षमत्वापत्तेः। अल्पस्य त्याग एव। भूरित्वं च देशकालाद्यपेक्षया द्रष्टव्यम्।

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्॥

इति बौधायनवचनात्। कीटाद्युपहतस्य तूत्पवनमाह मनुः—

द्रव्याणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम्।

उत्पवनं वस्त्रान्तरितभाण्डे प्रक्षेपः, अन्यथा कीटाद्युपगमासम्भवात्। शूद्रादिभाण्डस्थितस्य तु मध्वादेः शौचमाह बौधायनः—'मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयनाच्छुद्धिः'। यमश्च—

आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता दुष्या निःक्रान्ताः शुचयः स्मृताः॥

अत्र चोत्पवनमप्यावश्यकम्। 'अभ्यवहार्याणां घृताधारितानां पुनः पवनमेव स्नेहानां स्नेहवद्रसानाम्' इति शङ्खवचनात्॥ १९०॥

( मिता० ) त्रपुसीसकेत्यादि। त्रपुप्रभृतीनि प्रसिद्धानि तेषां क्षारोदकेनाम्लोदकेन(१) वारिणा वोपघातापेक्षया समस्तैर्व्यस्तैर्वा शुद्धिः कार्या। कांस्यलोहानां भस्मोदकेन। ताम्रग्रहणाद्रीतिका-

(१) दकवारिणा क.।

वृत्तलोह(१)योर्ग्रहणं, एकयोनित्वात्। एतच्च ताम्रादीनामम्लोदकादिभिः शुद्ध्यभिधानं न नियमार्थम्। 'मलसंयोगजं तज्जं यस्य येनोपहन्यते। तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत्' ॥ इत्यविशेषेण स्मरणात्। अतो न ताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसम्भवे नियमेनाम्लोदकादिना(२)शुद्धिः कार्या। अत एव मनुना सामान्येनोक्तम्—'ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च। शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः' ॥ इति। यत्तु 'भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति' इति, तत्ताम्रादेः शौचस्य परां काष्ठां प्रतिपादयितुं नान्यस्य निषेधाय। यद्वा तूपघातातिशयस्तदाम्लोदकादीनामावृत्तिः। 'गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च। शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च' ॥ इति स्मरणात्। दश(३)क्षारानाह—'तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः। काकजङ्घा तथापामार्गाश्वत्थवटस्य च ॥ एभिस्तु दशभिः क्षारैः शुद्धिर्भवति कांस्यके'। शुद्धिः प्लावो द्रवस्य त्विति। द्रवस्य द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य श्वकाकाद्युपहतस्य अमे(४)ध्यसंस्पृष्टस्य च प्लावः प्लावनं समानजातीयेन द्रवद्रव्येण भाण्डस्यातिपूरणं यावन्निःसरणं शुद्धिरित्यनुवर्तते। ततोऽल्पस्य त्यागः। बह्वल्पत्वं च देशकालाद्यपेक्षयापि वेदितव्यम्। यथाह बौधायनः—'देशं काल(५)तथा मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्' ॥ इति। कीटाद्युपहतस्य तूत्पवनम्। यथाह मनुः—'द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम्' इति। उत्पवनं चात्र वस्त्रान्तरिते पात्रे प्रक्षेपः। अन्यथा कीटाद्यपगमस्यासंभवात्। शूद्रभाण्डस्थितस्य मधूदकादेः पात्रान्तरानयनाच्छुद्धिः। 'मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयने शुद्धाः' इति बौधायनस्मरणात्। मधुघृता(६)देर्वर्णापसदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनःप(७)वनं च कार्यम्। यथाह शङ्खः—'अभ्यवहार्याणां घृतेनाभिघारितानां पुनःपवनमेवं स्नेहानां स्नेहवद्रसानाम्' इति॥१९०॥

---

(१) पित्तलयोरिति मुद्रितपुस्तकपाठः। (२) दकादिभि क.।
(३) इदं क पुस्तकेऽधिकम्.। (४) अमेध्यदृष्ट क।
(५) तथामान ख। (६) घृतादेर्निवर्णा क.।
(७) पवनं कार्यं ख।

अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादि(१)कर्षणात् ॥

( वी० मि० ) अमेध्याः—

वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः॥
मानुष्यास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा।
स्वेदाश्रुदूषिका श्लेष्मं मद्यं चाऽमेध्यमुच्यते॥

इति मनुदेवलाद्युक्ताः। तैरक्तं लिप्तं भाण्डं शरीरादि तस्य मृदा तोयैश्च। गन्धस्य आदिपदाल्लेपस्य कर्षणादपनयनाच्छुद्धिः। अत्र विशेषो द्वादशमनभिधाय मनुदेवलोक्तः—

आददीत मृदो यश्च पट्सु पूर्वेषु शुद्धये।
उत्तरेषु च पट्स्वाद्भिः केवलाभिर्विशुध्यति॥

अमेध्यत्वं च वसादीनां स्वस्थानच्युतानामेव। 'देहाच्चैव मलाश्च्युता' इति मनुवचनात्। परकीयमलस्पर्शे तु देवलः—

मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी।
मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्॥
स्नात्वापमृज्य लेपादीनाचम्य च शुचिर्भवेत्।
तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात्॥

इति॥

( वी० मि० ) विशेषानुक्ते शुद्धिमाह—

वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि ॥ १९१ ॥

वाक्शस्तं शुद्धमिति चातुर्वर्णेन प्रतिपादितम्। शुद्धं भवत्विदमिति वाचा शस्तमिति मिताक्षरा। अम्बुना निर्णिक्तं क्षालितं भाण्डादि। चकारात् प्रोक्षितक्षालनाद्यसहं शर्करादि। अज्ञातं स्वयमपवित्रतयाऽज्ञातम्। सदा शुचि अशौचनिमित्ते जातेऽपि क्षारादिसम्बन्धं विना शुचि। एतच्चाल्पोपयोगयोग्यविषयम्।

संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः॥

इत्यज्ञातेपि भुक्ते प्रायश्चित्ताभिधानात्॥ १९१॥

---

( १ ) शुद्धिर्गन्धापकर्षणात्-इति क० पु० पाठः।

(मिता०) एवं सौवर्णराजतादीनां एतत्प्रकरणप्रतिपादितानां सर्वेषामुच्छिष्टस्नेहाद्युपघाते शुद्धिमुक्त्वेदानीं तेषामेवामेध्योपहतानां शुद्धिमाह—

अमेध्याक्तस्येति । अमेध्याः शरीरजा मला वसाशुक्रादयः । 'वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः । श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः' ॥ तथा 'मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा । स्वेदाश्रुदूषिका श्लेष्म मद्यं चामेध्यमुच्यते' ॥ इति अमेध्यादयो मला मन्वादिभिः प्रतिपादिताः । तैर्वसादिभिरक्तं लिप्तममेध्याक्तं तस्य मृदा तोयेन च शुद्धिः कर्तव्या गन्धा(१)पकर्षणेन । आदिग्रहणाल्लेपस्यापि ग्रहणम् । यथाह गौतमः—'लेपगन्धापकर्षणे शौचममेध्यलिप्तस्य' इति । सर्वशुद्धिषु च प्रथमं मृत्तोयैरेव लेपगन्धापकर्षणं कार्यम् । यदि गन्धादि मृत्तोयैर्न गच्छति तदान्येन । 'अशक्तावन्येन मृदद्भिः पूर्वं मृदा च' इति गौतमस्मरणात् । वसादिग्रहणं च सर्वेषाममेध्यत्वं प्रतिपादयितुं न समानोपघाताय । 'मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुद्ध्येत पुनःपाकेन मृन्मयम्' ॥ इत्युपघाते विशेषाभिधानात् । 'अमेध्यत्वं चेत्तमेवा देहाच्चैव मलाश्च्युताः' इति वचनाद्देहच्युतानामेव मं स्वस्थानावस्थितानाम् । पुरुषस्य नाभेरूर्ध्वं करव्यतिरिक्तादी(२)नामन्यामेध्यस्पर्शे स्नानम् । यथाह देवलः—'मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत्' ॥ इति । 'तान्येव स्वानि स्पृष्ट्वा प्रक्षाल्याचम्य शुद्ध्यति' इति । तथा—'ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानमधस्तात्तु प्रक्षाल्याचम्य शुद्ध्यति' ॥ इति । कृतेऽपि यथोक्तशौचे मनसोऽपरितोषाद्यत्र शुद्धिसन्देहो भवति तद्ब्राह्मणवाक्येन शुचि, शुद्धमेतदस्त्विति ब्राह्मणवचनेन शुद्धं भवतीत्यर्थः । अम्बुनिर्णिक्तं यत्र प्रतिपदोक्ता शुद्धिर्नास्ति तस्य प्रक्षालनेन शुद्धिः । प्रक्षालनासहस्य प्रोक्षणेन । अज्ञातं च सदा यत्काकाद्युपहतमु(३)पयुक्तं न कदाचिदपि ज्ञायते तच्छुचि । तदुपयोगाददृष्टदोषो नास्तीत्यर्थः । न(४)न्वेतद्विरुध्यते । 'संवत्सरस्यैकमपि चरेत्कृ

(१) गन्धापकर्षणात् क । (२) द्विनामन्या क ।
(३) उपभुक्तं ख । (४) न तु तद्विरु ख ।

च्छं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः' ॥ इत्यदुष्टदोषेऽपि प्रायश्चित्तप्रतिपादनात् । नैतत्, प्रायश्चित्तस्य जग्धविषयत्वात् दोषाभाव(१)स्य चान्योपयोगिविषयत्वात् ॥ १९१ ॥

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥
तथा मांसं श्वचण्डालक्रव्यादादिनिपातितम् ॥ १९२ ॥

( वी० मि० ) अशुचि महीगतमपि जलं गोतृप्तिक्षमं प्रकृतिस्थं शुचि । प्रकृतिस्थत्वं च—

अव्याप्ताश्चेदमेध्येन गन्धरूपरसान्विताः ।

इति मनूक्तम् । चण्डालाद्यस्पृष्टत्वमपीह विशेषणमिति मिताक्षरा। देवलः—

तत्राक्षोभ्यतडागानि नदीवाप्यः सरांसि च ।
कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत् ॥

कश्मलं शवादि, अशुचि मूत्रादि । तीर्थे इति सप्तम्यन्तात्तसिः, तेन कश्मलादिस्पृष्टघट्ट इत्यर्थः । उशनाः—

नद्यः कूपतडागानि सरांसि सरितस्तथा ।
असंवृतान्यदोषाणि मनुः स्वायंभुवोऽब्रवीत् ॥

विष्णुः—

मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा ।
आपः समुद्धरेत्सर्वाः शेषं शस्त्रेण शोधयेत् ॥
वह्निप्रज्वलनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्न च तोयं समुद्धरेत् ॥
जलाशयेषु चान्येषु दूषितेषु विशोधनम् ।
घटानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत् ॥

यमः—

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ॥

तथा मांसमित्यादि । श्वादिभिः स्पर्शपूर्वकं निपातितमपि मांसं शुचि । क्रव्यादा गृध्रादयः । आदिशब्देन पुक्कसादिपरिग्रहः ॥१९२॥

(१) भावस्य चान्यपयोग क. ।

( मिता० ) शुचीति । महीगतं भूमिस्थमुदकं पर्याप्तगवीतृप्तिजननसमर्थं चण्डालादिभिरस्पृष्टं प्रकृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं शुचि आचमनादियोग्यं भवति । महीगतमित्यशुचि । भूगतस्य शुचित्वनिषेधार्थं नत्वान्तरिक्षोदकस्य शुद्धत्वव्यावृत्त्यर्थम् । वाप्युद्धृतस्य—'उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः । एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम्' ॥ इति देवलवचनात् । तथा चण्डालादिकृते तडागादौ न दोषः । 'अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते' ॥ इति शातातपस्मरणात् । तथा मांसं श्वचण्डालक्रव्यादादिभिर्निपातितं शुचि । आदिग्रहणात्पुल्कसादेरपि ग्रहणम् । निपातितग्रहणं मारितस्य निराकरणार्थम् ॥ १९२ ॥

रश्मिरग्नी रजः छाया गौरश्वो वसुधानिलः ॥
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवणे(१)शुचिः ॥१९३॥

चण्डालमेध्यादिस्पृष्टोऽपि रश्म्यादिः स्पर्शे शुचिः । तत्र रश्मिः सूर्यादिकिरणः । रजः—

श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् ।
अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते ॥

इति विशिष्य निषिद्धव्यतिरिक्तम् । अग्निरज इति पाठेऽजः छागः, छाया वृक्षादेः । चण्डालादिच्छाया तु स्पर्शे निषिद्धा ।

चण्डालपतितच्छायास्पर्शे दुष्टा तनुर्भवेत् ।

इति ब्रह्मपुराणात् । एतच्च छायाया द्रव्यत्वमाभिप्रेत्य । विप्रुषोऽवश्यायबिन्दवः । मुखजानामग्रे वक्ष्यमाणत्वात् । मक्षिकापदं च दंशमशकादीनामप्युपलक्षकम् । प्रस्रवणे ऊधःस्थक्षीराकर्षणे वत्सः शुचिः, तेन वत्सोच्छिष्टस्तननिःसृतं क्षीरं नाऽशुचीति तात्पर्यम् । वत्सपदं बालोपलक्षकम् ।

बालैरनुपरिक्रान्तं नित्यं मेध्यमिति स्थितिः ।

इति वचनात् ॥ १९३ ॥

( मिता० ) रश्मिरिति । रश्मयः सूर्यादेः प्रकाशकद्रव्यस्य । अग्निः प्रसिद्धः । रजः अजादिसम्बन्धव्यतिरेकेण । तत्र—'श्वकाकोष्ट्रख-

(१) प्रस्रवे—इति मुद्रितपुस्तके पाठः ।

रोलूकसूकरग्राम्यपक्षिणाम्। अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते'॥ इति दोषश्रवणात्तत्स्पर्शे संमार्जनादि कार्यम्। छाया वृक्षादेः। गौः। अश्वः। वसुधा भूमिः। अनिलो वायुः। विप्रुषोऽवश्यायबिन्दवः। मुखजानां वक्ष्यमाणत्वात्। मक्षिकाश्च। एते चण्डालादिस्पृष्टा अपि स्पर्शे शुचयः। वत्सः प्रस्रवने ऊधोगतदुग्धापकर्षणे शुचिः। वत्सग्रहणं बालस्योपलक्षणार्थम्। 'बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत्। अविज्ञातं च यत्किंचिन्नित्यं मेध्यमिति स्थितिः'॥ इति वचनात्॥ १९३॥

अजा(१)श्वं मुखतो मेध्यं न गौर्न नरजा मलाः॥

अजश्चाश्वश्च मुखप्रदेशे मेध्यः। अजस्यापि कथञ्चित्सेनाङ्गत्वादजाश्वमित्येकवद्भावः। गौर्मुखेन मेध्या मेध्यो वा नरो मनुष्यस्तज्जा मलाः पुरीषादयः। नरपदं च स्मृत्यन्तरे विशिष्योपात्तानां शर्करादीनामप्युपलक्षकम्। 'न नरजा मला' इति भङ्ग्या गोपुरीषादेर्मेध्यत्वं दर्शयति। तथा च यमः—

पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा।
नृणां मूत्रपुरीषे च अमेध्ये मलमेव च॥
गोः पुरीषं च मूत्रं च नित्यमेध्यमिति स्थितिः।

बृहस्पतिः—

पादौ शुची ब्राह्मणानामजाश्वानां मुखं शुचि।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्॥

पन्थानश्च विशुद्ध्यन्ति सोमसूर्यांशुमारुतैः॥ १९४॥

चण्डालादिस्पर्शे पन्थानः यथासम्भवं सूर्यांशुप्रभृतिभिः शुद्ध्यन्ति। चकाराज्जलसमुच्चयः।

सूर्येन्दुरश्मिपातेन मारुतस्पर्शनेन च।
गवां मूत्रपुरीषेण शुद्ध्यन्त्यपि इति स्मृतिः(२)॥ १९४॥

( मिता० ) अजाश्वयोरिति। अजाश्वयोर्मुखं मेध्यम्। न गोः। न नरजा मलाः। नरशब्दो लक्षणया देहमभिधत्ते। नरजा मला वसादयो मेध्या न भवन्ति। पन्थानो मार्गाः श्वचण्डालादिभिः स्पृ-

(१) अजाश्वयोर्मुखं मेध्यं—इति मुद्रितपुस्तके पाठः।
(२) स्थितिः—इति ख० पु. पाठः।

एता अपि रात्रौ सोमांशुभिर्मारुतेन च शुध्यन्ति । दिवा तु सूर्यांशुभिर्मारुतेन च ॥ १९४ ॥

> मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
> श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १९५ ॥

(वी० मि०) मुखजा उदबिन्दवो भूमिपतनेनास्पृष्टा अपि मेध्याः शुद्धाः । अङ्गलग्नास्तु योनङ्गपङ्क्तिसमया आचमनहेतवः । तथा च भूमिगता बिन्दवः परान्स्पृष्टा विप्रुषः शुद्धाः । द्विपोमक्षि नपरा- घमेव् । आचमनबिन्दव —

> स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
> भूमिगैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

इति मनूक्त आचमनसम्बन्धिनः । श्मश्रु स्वस्थानस्थितमास्यप्राप्तमपि हस्तास्पृष्टं न दुष्टम् । हस्तस्पृष्टे त्वाशौचमेव । तदाहापस्तम्ब —'न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति' । दन्तव्यञ्जनादि स्वतश्च्युतं त्यक्त्वा ततः त्यागमात्रेण शुचिर्भवति अच्युतं तु दन्तसक्ते समम् । 'दन्तवल्लग्नदन्तवदन्यत्र जिह्वाभिमर्षणात्' इति गौतमवचनात् । दन्तलग्नं जिह्वास्पृष्टमाचमनार्थमाकर्षणीयं यदि च्यवते तदा दन्तलग्ने सत्यप्याचमनं कार्यम् । तथा देवल —

> भोजने दन्तलग्नस्यानिर्हृत्याचमनं चरेत् ।
> दन्तलग्नमसंहार्यं लेपमन्यं तु दन्तवत् ॥
> न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ।
> भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥

एतच्चानुपलभ्यमानरसविषयम् । उपलभ्यमानरसे त्वशौचमेव । 'दन्तलग्नेषु रसवर्ज'मिति शङ्खवचनात् ॥ १९५ ॥

(मिता०) मुखजा इति । मुखे जाता मुखजाः श्लेष्मविप्रुषो मेध्या नोच्छिष्टं कुर्वन्ति अनिपतिताश्चेदङ्गे । 'न मुखविप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निपतन्ति' इति गौतमवचनात् । तथा च ये आचमनतोयबिन्दवः पादौ स्पृशन्ति ते मेध्याः । श्मश्रु चास्यगतं मुखप्रविष्टमुच्छिष्टं न करोति । दन्तसक्तं चान्नादिकं स्वयमेव च्युतं त्य

त्वा शुचिर्भवति । अच्युतं दन्तस(१)मम् । तथा च गौतमः—दन्तश्लिष्टं तु दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक् च्युतेरित्येके । 'च्युतेष्वास्त्राववद्विद्यान्निगिर(२)न्नेव तच्छुचि' इति । निगरणं पुनरनेन याज्ञवल्क्योक्तेन त्यागेन विकल्प्यते । निगिरन्नेवेत्येवकारः—'चर्वणे त्वाचमेन्नित्यं मुक्त्वा ताम्बूलचर्वणम् । ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च' ॥ इति विष्णूक्ताचमननिषेधार्थः । ताम्बूलग्रहणं फलाद्युपलक्षणार्थम् । यथाह शातातपः—'ताम्बूले च फले चैव भुक्ते स्नेहावशिष्टके । दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः'॥ इति ॥१९५॥

( वी० मि० ) प्रकृतमाचमनरूपं धर्ममाह—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ॥
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १९६ ॥

स्नानादौ कृते सति आचान्त आचामेत्, द्विराचामेदित्यर्थः । पुनःशब्दस्त्वर्थः, तेन श्मश्रुगते तदसक्ते च पूर्वोक्त आचमनव्यवच्छेदः । पीत्वेत्यपोशानातिरिक्तपरम् ।

मधुपर्के च सोमे च अप्सु(३)प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनं तथा ॥

इत्यङ्गिरोवचनात् । रथ्योपसर्पणे राजमार्गगमने । विपरिधानं विशेषेण परिधानं, तेनाऽधरीयवस्त्रपरीधान एवाचमनं न तूत्तरीयपरीधाने । आचारोऽप्येवम् । चकारेण 'भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामे'दित्यापस्तम्बवचनादिसिद्धानां च सकृदाचमनानां शुद्ध्यर्थे कर्माङ्गनैमित्तिकभेदेन विविधानां च सङ्ग्रहः । विशिष्य च तेषामनभिधानमतिप्रसिद्धत्वात् ॥ १९६ ॥

( मिता० ) स्नात्वेति । स्नानपानक्षुतस्वप्नभोजनरथ्योपसर्पणवासोविपरिधानेषु कृतेष्वाचान्तः पुनराचामेत्, द्विराचामेदित्यर्थः । चकाराद्रोदनाध्ययनारम्भ(४)चापल्यानृतोक्त्यादिषु । तथा च वसिष्ठः—'सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा रुदित्वा चाचान्तः पुनराचामेत्' इति । मनुरपि—'सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः । पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्' ॥ इति ।

(१) दन्तेभ्यः पतितं त्यजति गिलति वा एतावता शुध्यति विना आचमनं इति ग० पु० विशेषः ।
(२) निगिरन्नेव क० निगरन्नेव ख० । (३) अप्सुप्रा०— इति घ० पुस्तके पाठः । (४) चाल्पानृतो घ० ।

भोजने स्वादावपि द्विराचमनम्, 'भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्' इत्यापस्तम्बस्मरणात्। स्नानपानयोरादौ सकृत्। अध्ययने त्वारम्भे द्विः। शेषेष्वन्ते एव यथोक्तं द्विराचमनम् ॥ १९६ ॥

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ॥
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकाचितानि च ॥ १९७ ॥

( वी० मि० ) रथ्या मार्गमात्रं, तद्गताः कर्दमाः, तोयानि च, पक्वेष्टकाचितानि मठादीनि चाऽन्त्यादिभिः स्पृष्टानि मारुतेनैव शुध्यन्ति। एवकारेण तत्स्प्रष्टुराचमनव्यवच्छेदः स्पृश्यस्य शोधकान्तरव्यवच्छेदश्च। अन्त्याश्चण्डालादयः। चकारेण—

रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥

इति व्यासोक्तनौकादिसमुच्चयः। एवं च—

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वाऽप्यथ।
नाभेरूर्ध्वं नरः स्पृ(१)ष्टः सद्यः स्नानेन शुद्ध्यति ॥

इति शङ्खवाक्यमुपलभ्यमानगन्धलेपामेध्यसम्बन्धपरम्।

सकर्दमन्तु वर्षासु प्रविश्य ग्रामसङ्करम्।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणाः स्मृताः ॥

इति यमवचनं च स्वरूपतो गन्धतश्चाऽनुपलभ्यमानस्याऽमेध्यस्य सम्बन्धे सति शुद्धिप्रतिपादकमित्यविरोधः ॥ १९७ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने द्रव्यशुद्धिप्रकरणम्।

( मिता० ) रथ्येत्यादि। रथ्या मार्गमात्रम्। कर्दमः पङ्कः। तोयमुदकम्। रथ्यास्थितानि कर्दमतोयानि अन्त्यैश्चण्डालादिभिः श्वभिर्वायसैश्च स्पृष्टानि मारुतेनैव शुद्ध्यन्ति शुद्धिमुपयान्ति। बहुवचनं तद्गतगामयशर्करादिप्राप्त्यर्थम्। पक्वेष्टकादिभिश्चितानि प्रासादधवलगृहादीनि चण्डालादिस्पृष्टानि मारुतेनैव शुद्ध्यन्ति। एतच्च 'प्रोक्षणं संहतानाम्' इत्युक्तप्रोक्षणनिषेधार्थम्। तृणकाष्ठपर्णादिमयानां तु प्रोक्षणमेवेति ॥ १९७ ॥

इति द्रव्यशुद्धिप्रकरणम्।

---

(१) स्पृष्टः—इत्यस्य मक्षिका—इत्यन्तं नास्ति ख० पुस्तके।

( वी . मि० ) पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणमित्युक्तं, पात्रे दातव्यमर्चितमिति च वक्ष्यतीति वक्तव्यदानरूपधर्माङ्गस्य पात्रस्य ब्राह्मणत्वं मुख्यं विशेषणमिति ब्राह्मणान् प्रशंसति—

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ॥
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९८ ॥
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः(१) ॥
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः॥१९९॥

ब्रह्मा तपस्तप्त्वा विधाय तपसैव प्रधानसहकारिणा तदव्यवधानेनैव ब्राह्मणानसृजत। किमर्थं ? वेदस्य मन्त्रब्राह्मणात्मकस्य गुप्तये अध्यापनादिना सम्प्रदायरक्षणार्थम्। पितृणां श्राद्धादौ पात्रादिभावेन देवानां यज्ञादौ ऋत्विगादिभावेन च तृप्त्यर्थं प्रीतिनिष्पत्त्यर्थम्। धर्मस्य कर्तृत्वेन उपदेष्टृत्वेन रक्षणार्थम्। चकारेणादेवपित्र्यकर्मण्युपनयनादावाचार्यादिभावार्थं च। विप्राः सर्वस्य क्षत्रियादेः प्रभवः ईश्वराः श्रेष्ठा इति यावत्। तेष्वपि श्रुतं वेदार्थानां गुरुद्वाराऽवधारणम्। अध्ययनं तत्प्रयोजको वेदपाठः तद्युक्ताः। श्रेष्ठा इत्यग्रतनं सर्वत्रान्वेति। तेभ्यः केवलं श्रुताध्ययनशालिविप्रेभ्यः क्रियापरा विहितकर्मानुष्ठा विप्राः श्रेष्ठाः। तेभ्योपि केवलं श्रुताध्ययनशालिक्रियापरेभ्योऽप्यध्यात्म आत्मतत्त्वं तद्विदामुत्कृष्टाः।

तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिः स्थिरा भवेत् ॥

इत्युक्तमनोनाशादिविशिष्टाः ॥ १९९ ॥

( मिता० ) इदानीं दानधर्मं प्रतिपादयिष्यंस्तदङ्गभूतपात्रप्रतिपादनार्थं तत्प्रशंसामाह—

तप इति। ब्रह्मा हिरण्यगर्भः कल्पादौ तपस्तप्त्वा ध्यानं कृत्वा कान्सृ(२)जामीति पूर्वं ब्राह्मणान्सृष्टवान्। किमर्थम् वेदगुप्तये वेदरक्षणार्थम्। पितृणां देवतानां च तृप्त्यर्थम् अनुष्ठानोपदेशद्वारेण धर्मसंरक्षणार्थं च। अतस्तेभ्यो दत्तमक्षय्यफलं भवतीत्यभिप्रायः॥१९८॥

( मिता० ) सर्वस्येति। सर्वस्य क्षत्रियादेर्विप्राः प्रभवः श्रेष्ठाः जात्या कर्मणा च। ब्राह्मणेष्वपि श्रुताध्ययनशीलिनः श्रुताध्ययनसं-

(१) श्रुताध्ययनशीलिनः—इति मुद्रितपुस्तके पाठः। (२) कृत्वा मुख्यान् सृजामीति ख०।

पन्ना उत्कृष्टाः । तेभ्योऽपि क्रियापरा विहितानुष्ठानशीलाः । तेभ्योऽप्यध्यात्मवित्तमाः वक्ष्यमाणमार्गेण शमदमादियोगेनात्मतत्त्वज्ञाननिरताः । श्रेष्ठा इत्यनुषज्यते ॥ १९९ ॥

( वी० मि० ) एवं ब्राह्मणान् प्रशंस्य प्रकृतपात्रलक्षणमाह—

न विद्यया केवलया तपसा वापि पात्रता ॥
यत्र वृत्तमिमे चोभे तद्धि पात्रं(१)प्रकीर्तितम् ॥ २०० ॥

विद्यया श्रुताध्ययनसंपत्त्या, केवलया तपोवृत्तराहितया, तपसा शमदमादिरूपेण,वा, केवलेन श्रुताध्ययनवृत्तरहितेन । अपिशब्दात् केवलेन(२)वृत्तेन ब्राह्मणत्वेन वा न पात्रता लोके, वेदे च न पात्रत्वेन व्यवह्रियमाणत्वम्(३) । हि यतः, यत्र यस्मिन्विप्रे, वृत्तमाचारनिष्ठत्वमिमे च श्रुताध्ययनतपसी तत्पात्रमिति मन्वादिभिः प्रकीर्तितम् । प्रचक्षत इति क्वचित्पाठः ॥ २०० ॥

( मिता० ) एवं जातिविद्यानुष्ठानतपसां प्रशंसामुखेनैकैकयोगे(४)न पात्रतामभिधायाधुना तेषां समुच्चये संपूर्णपात्रतामाह—

नेति । केवलया विद्यया श्रुताध्ययनसंपत्त्या नैव संपूर्णपात्रत्वम् । नापि केवलेन तपसा शमदमादिना । अपिशब्दात्केवलेनानुष्ठानेन केव(५)लया जात्या वा नैव संपूर्णपात्रता । कथं तर्हि ? यत्र पुरुषे वृत्तमनुष्ठानं इमे चोभे विद्यातपसी स्तः चशब्दाद्ब्राह्मणजातिश्च तदेव मन्वादिभिः संपूर्णपात्रं प्रकीर्तितम् । हि यस्मादितः परमुत्कृष्टं पात्रं नास्ति । अत्र जातिविद्यानुष्ठानतपःसमुच्चयानामुत्तरोत्तरप्राशस्त्येन फलतारतम्यं द्रष्टव्यम् ॥ २०० ॥

कन्यादानन्तु क्षत्रियादिभ्योऽपि विशेषवचनात्, पात्रलक्षणमुक्त्वाऽपात्रे दानं व्युदस्यन्नेव पात्राङ्कन्यादानमाह—

गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ॥ २०१ ॥

आदिपदेन सर्वेषां देयानां विशिष्यानुक्तानां परिग्रहः । अर्चितं

---

(१) प्रचक्षते—इति क० पु० पाठः ।

(२) केवलवृत्तेन केवलब्राह्मणत्वेन वा—इति ख० पुस्तके पाठः । (३) व्यवह्रियमाणत्व—इति ख० पु० पाठः । (४) योगे पात्रतां ग० । (५) केवलजात्या क० ।

पूजितम्। इदं च देयविशेषणम्।

योऽर्चितः प्रतिगृह्णाति योऽर्चयित्वा प्रतीच्छति।

इति वचनात्। अर्चितं शास्त्रोक्तेतिकर्त्तव्यतया विशिष्टतया प्रशस्तं यथास्यादिति क्रियाविशेषणं वा। एवं च प्रतिग्रहविषय एव पात्रनियम इत्येतादृशदाने पात्रदोषेण दातुर्न दोषसङ्क्रान्तिरिति विवेक्तव्यम्। तथा च यमः—

सममब्राह्मणे दानं द्विगुणं ब्राह्मण(१)ब्रुवे।
प्राधीते शतसाहस्रमनन्तं वेदपारगे॥
शूद्रे समगुणं दानं वैश्ये द्विगु(२)णमुच्यते।
क्षत्रिये पड्गुणं प्रोक्तं विप्रे दशगुणं स्मृतम्॥
अन्नस्य क्षुधितः पात्रम्—

इत्यादि। सति संभवे क्षुधिताय याचमानायाऽब्राह्मणायाऽपि यथाकथञ्चिदवश्यमन्नं दातव्यमित्येतत्परम्। अत एवानुपदं प्रतिग्रह इत्यादि वक्ष्यति। यथोक्तपात्रासंपत्तावपात्रताप्रयोजकदोषशून्यायाऽन्यस्मा अपि दातव्यमित्यभिप्रेत्य निषेधति नापात्र इत्यादि। विदुषा ज्ञानवता। श्रेयः स्वर्गादिकम्॥ २०१॥

( मिता० ) सत्पात्रे गवादिदानं देयम्—

गोभूतीत्यादि। पूर्वोक्ते पात्रे गवादिकमर्चितं शास्त्रोक्तो(३)दकदानादीतिकर्तव्यतासहितं देयम्। अपात्रे क्षत्रियादौ ब्राह्मणे च पतितादौ विदुषा पात्रविशेषेण फलविशेषं जानता श्रेयः संपूर्णफलमिच्छता किंचिदल्पमपि न दातव्यम्। श्रेयोग्रहणादपात्रदानेऽपि किम(४)पि तामसं फलमस्तीति सूचितम्। यथाह कृष्णद्वैपायनः—'अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्'॥ इति। अपात्रे न दातव्यमिति वदता विशिष्टदेशकालद्रव्यसन्निधौ पात्रस्यासन्निधाने द्रव्यस्य वा तदुद्देशेन त्यागं तस्मै प्रतिश्रवणं वा कृत्वा समर्पयेत् न त्वपात्रे दातव्यमिति सूचितम्। तथा प्रतिश्रुतमपि पश्चात्पातकादिसंयोगे ज्ञाते न देयम्, 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' इति निषेधात्॥ २०१॥

---

(१) ब्राह्मणाब्रुवे—इति ख० पु० पाठः। (२) त्रिगुणमुच्यते—इति ख० पु० पाठः।
(३) दकपायादीति क०। (४) किंचित्तामसं क०।

( वी०मि० ) न केवलमपात्रप्रतिग्रहणाच्छ्रेयोऽनुत्पत्तिमात्रमपि तु दातुर्नरकोऽपीति दर्शयन् प्रतिग्रहीतुरपि तादृशस्य दोषमाह—

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ॥
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥ २०२ ॥

विद्यातपोभ्यामितियुक्तस्याप्युपलक्षकम् । तुशब्देन प्रतिग्रहातिरिक्तस्य ग्रहणस्य निषेधो व्यवच्छिन्नः । प्रतिग्रहः प्रतिगृह्यमाणद्रव्यं, कर्मव्युत्पत्तेः । अत्र हेतुमाह गृह्णन् प्रतिगृह्णन् प्रदातारं प्रकर्षेण दातारं प्रतिग्राहयितारमिति यावत् । अधो नयति नरकं प्रापयति । एवकारोऽध इत्यत्रान्वितः, तेनेदं फलं व्यवच्छिनत्ति । चो हेतौ॥२०२॥

( मिता० ) अपात्रे दातुर्निषेधमुक्त्वा प्रतिग्रहीतारं प्रत्याह—

विद्यातपोभ्यां हीनेन प्रतिग्रहः सुवर्णादिर्न ग्राह्यः । यस्माद्विद्यादिहीनः प्रतिगृह्णन् दातारमात्मानं चाधो नरकं नयति प्रापयतीति॥२०२॥

( वी० मि० ) दानस्य कालमाह—

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥

प्रत्यहं प्रतिदिवसं शक्तितो दातव्यं, निमित्तेषु संक्रान्त्यादिषु विशेषतोऽतिप्रयत्नेनादरेण च ॥

( वी० मि० ) दाने श्रद्धायाः प्रधानाङ्गत्वमाह—

याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥२०३॥

श्रद्धया फलावश्यंभावनिश्चयरूपया ।
स्वरहितरनसूया च सदा श्रद्धेति कीर्त्यते ।

इति देवलपरिभाषितया अनसूयया च पूतं निर्दोषं गुणवदिति यावत् । एवं यथास्यात्तथा दातव्यम् । शक्तितः शक्त्यनुसारेण याचितेन संप्रदानप्रेरितेन । अपिकारोऽयाचितदानादपकर्षं सूचयति । तथा च शातातपः—

अभिगम्य तु यद्दानं यत्तु दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते ॥

तथा—

गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूय याचिते तु तदर्द्धकम् ॥

तुशब्देन श्रद्धापूर्वकदानं सम्पूर्णदानफलार्थिनो व्यवच्छिनत्ति २०३

( मिता० ) गवादिपात्रे दातव्यमित्युक्तं तत्र विशेषमाह—

दातव्यमिति । प्रतिदिवसं शक्त्यनुसारेण यथोक्तविधिना पात्रे गवादिकं स्वकुटुम्बाविरोधेन दातव्यम् । निमित्तेषु चन्द्रोपरागादिषु विशेषेणोऽधिकं यत्नेन दातव्यम् । याचितेनापि श्रद्धापूतमनसूयापवित्रीकृतं शक्त्या दातव्यम् । याचितेनापि दातव्यमिति वदता यथोक्तं पात्रं स्वयमेव गत्वा आहूय वा यद्दानं तन्महाफलमुक्तम् । तथा च स्मरणम्—'गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुणमाहूय याचिते तु तदर्धकम्' ॥ इति ॥ २०३ ॥

( वी० मि० ) गोदानरूपं धर्ममाह पञ्चभिः—

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ॥

सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥२०४॥

हेमयुक्ते शृङ्गे यस्याः सा हेमशृङ्गी । रौप्यैः रूप्यमयैः शफैः खुरैरुपलक्षिता । सुशीला प्रहरणादिप्राङ्मुखा । वस्त्रसंयुता वस्त्राच्छादिता । सकांस्यपात्रा कांस्यमयदोहनपात्रसहिता गौर्दातव्या ॥२०४॥

( मिता० ) गवादिकं देयमित्युक्तं तत्र गोदाने विशेषमाह—

हेमशृङ्गीति । हेममये शृङ्गे यस्याः सा हेमशृङ्गी शफैः खुरैः रौप्यैः राजतैः संयुता वस्त्रेण च संयुता कांस्यपात्रसहिता बहुक्षीरा(१) सुशीला गौर्यथाशक्तिदक्षिणासहिता दातव्या ॥ २०४ ॥

✓ दाताऽस्याः स्वर्गमाप्नोति वत्सरान्लोम(२)संमितान् ॥

अस्या उक्तसकलविशेषणविशिष्टाया गोर्दाता, तस्या लोमभिः संमितान् वत्सरानभिव्याप्य स्वर्गमाप्नोति ॥

( वी० मि० ) सफलं कपिलादानमाह—

कपिला चेत्तारयति भूयश्चासप्तमं कुलम् ॥ २०५ ॥

उक्तविशेषणविशिष्टा सा चेत् कपिला तदा सप्तपुरुषपर्यन्तं दातुः कुलं तारयति । भूयःशब्दोऽप्यर्थः, तेन पूर्वोक्तफलसमुच्चयः । चशब्दः कपिलागतपूर्वोक्तविशेषणार्थः ॥ २०५ ॥

( मिता० ) गोदानफलमाह—

दातेति । अस्या गोः रोमसंमितान् रोमसंख्याकान्वत्सरान्स्वर्ग-

---

(१) बहुक्षीरा गौर्यथा० क० ख० । (२) वत्सरान्लोमसंमितान्—इति मु द्रितपुस्तके पाठः ।

प्राप्नोति दाता । सा यदि कपिला तदा न केवलं दातारं तारयति किं तु कुलमपि आसप्तम सप्तममभिव्याप्य पित्रादीन् षट् आत्मानं च सप्तमम । अप्यर्थे भूयःशब्दः ॥ २०५ ॥

( वी० मि० ) उभयतोमुखीदानमाह—

सवत्सारोमतुल्यानि युगान्युभयतोमुखीम् ।
दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥२०६॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्र(१)दृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥२०७॥

उभयतोमुखीं पूर्वेण प्रागुक्तेन कपिलात्वव्यतिरिक्तविशेषणसमुदायेन विशिष्टां गां कपिलामकपिलां वा विधिना शास्त्रोक्तेतिकर्तव्यतया ददद्स्या गोर्दाता दीयमानसवत्सगोरोमतुल्यानि युगान्यभिव्याप्य स्वर्गमाप्नोति । उभयतोमुखीत्वं महिष्या साधारणमतस्तव्द्यावर्तनार्थकमस्या इतीति । उभयतोमुखीलक्षणं सूचयन्नेव वाक्यमानविशेषणविशिष्टां गां स्तौति । फलाधिक्यौचित्यप्रतिपादनाय फलान्तरसूचनाय यावदिति । वत्सस्य द्वौ पादौ मुखं च गोर्योनिस्थं प्रदृश्यते स्पष्टं द्रष्टुं शक्यते तावत्सा गौः पृथिवी तुल्या ज्ञेया । एतेन पृथिवीदानजन्यफलसमानमपि फलं तद्दाने सूचितम् ।

यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति ।
तावद्गौः पृथिवी ज्ञेया सशैलवनकानना ॥
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ।

इति [illegible]

( मिता० ) उभयतोमुखीदानफलम्—

सवत्सेत्यादि । सवत्सारोमतुल्यानि वत्सेन सह वर्तत इति सवत्सा तस्या रोमतुल्यानि वत्सस्य गोश्च यावन्ति रोमाणि तावत्संख्याकानि युगानि कृतत्रेतादीनि उभयतोमुखीं ददत्स्वर्गमाप्नोत्यनुभवति पूर्वेण विधिना दाता चेत् ॥ २०६ ॥

(१) च दृश्यते —इति मुद्रितपुस्तक पाठः ।

लिगोधूमादीनि । अभयं भीतत्राणम् । उपानहौ । छत्रम् । माल्यं मल्लिकादेः । अनुलेपनं कुङ्कुमचन्दनादि । यानं रथादि । वृक्षमुपजीव्यमाम्रादिकम् । प्रियं यद्यस्य प्रियं धर्मादिकम् । शय्यां च दत्वात्यन्तमतिशयेन सुखी भवति । न च हिरण्यादिवद्धस्ते दातुमशक्यत्वा(१)द्धर्मस्य दानासंभवः। भूमिदानादावपि समानत्वात् । स्मृत्यन्तरेऽपि धर्मदानश्रवणात् । 'देवतानां गुरूणां च मातापित्रोस्तथैव च । पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्' ॥ अपुण्यदा(२)ने तदेव वर्धते प्रतिग्रहीतुरपि लोभादिना प्रवृत्तस्य—'यः पाप(३)मबलं ज्ञात्वा प्रतिगृह्णाति दुर्मतिः । गर्हिताचरणात्तस्य पापं तावत्समाश्रयेत् ॥ समद्विगुणसाहस्रमानन्त्यं च प्रदातृषु' ॥ इति स्मरणात् । इह च सर्वत्र देशकालपात्रविशेषाद्दातृविशेषात्-( 'दाने फलं मया प्रोक्तं हिंसायां तद्वदेव हि' ) इति प्रतिग्रहीतृवृत्तिविशेषाच्च दातृप्रतिग्रहीत्रोः फलतारतम्यं द्रष्टव्यम् ॥ २११ ॥

सर्वदानमयं(४)ब्रह्म प्रदानेभ्योऽधिकं यतः ॥
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥

(वी०मि०)दानप्रदानपदे कर्मव्युत्पादयपरे। यतः सर्वदानमयं सर्वदेयप्रयोज्यफलप्रयोजकमतः प्रत्येकं सर्वदेयेभ्योऽधिकं ब्रह्म वेदः तद्ददत् अध्यापनादिना परस्मिन् सङ्क्रामयन् अविच्युतं कल्पपर्यन्तावस्थायि यथास्यात्तथा ब्रह्मलोकमवाप्नोति ॥ २१२ ॥

(मिता०) दानात्फलमुक्तमिदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतूनाह—

सर्वधर्मेत्यादि । यस्मात्सर्वधर्ममयं ब्रह्म अवबोधकत्वेन तस्मात्तद्दानं सर्वदानेभ्योऽधिकमतस्तद्ददध्यापनादिद्वारेण ब्रह्मलोकमवाप्नोति । अविच्युतं विच्युतिर्यथा न भवति । आ भूतसंप्लवं ब्रह्मलोकेऽवतिष्ठत इत्यर्थः । अत्र च ब्रह्मदानं परस्वत्वापादनमात्रं दानं, स्वत्वनिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥

---

(१) द्धर्मादीनामसंभवः ग. ।
(२) दानेन क. ।
(३) प्रबलं ज्ञात्वा ग. ।
(४) सर्वधर्ममयं ब्रह्म—इति मुद्रितपुस्तकस्थः पाठः ।

(वी० मि०) दानप्रसङ्गेन प्रतिग्रहनिवृत्तिरूपं धर्मं फलसहितमाह—

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ॥
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥२१३॥

विद्यावृत्ततपोभिः प्रतिग्रहे समर्थोऽपि अधिकृतोपि । एतेनाऽसामर्थ्यनिबन्धनं प्रतिग्रहाभावं व्यवच्छिनत्ति । प्रतिग्रहमिति कर्मव्युत्पत्त्या । नादत्ते स्वामिना दीयमानं न प्रतिगृह्णाति यद्द्रव्यदातॄणां ये ये लोकास्तत्तद्द्रव्यप्रतिग्रहनिवृत्तः स तान् तान् लोकान् पुष्कलान् सम्पन्नानाप्नोति ॥ २१३ ॥

(मिता०) दातुः फलमुक्तम्, इदानीं दानव्यतिरेकेणापि दानफलावाप्तेर्हेतुमाह—

प्रतिग्रहेत्यादि । यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नादत्ते न स्वीकरोति असौ यत्प्रमाप्त नोपादत्ते तत्तद्दानशीलानां ये लोकास्तान्सम्प्रानाप्नोति ॥ २१३ ॥

(वी०मि०) 'न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः' इत्यनेनाऽभिशस्तादेः प्रतिग्रहः प्राङ् निषिद्धस्तत्र प्रतिप्रसवमाह—

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ॥
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ॥
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥
देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ॥
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥

कुशादिकं त्रयोदशविधं वस्तु दुष्कृतकर्मणोऽपि सम्बन्धि अयाचितमाहृतमुपनीतं न प्रत्याख्येयं नोपेक्ष्यम् । अनुपेक्षाप्रकारमेवाह ग्राह्यमिति । पयो दुग्धं, गन्धाश्चन्दनादयः, क्षितिर्भूमिः, धाना भ्रष्टयवाः । शेषं प्रसिद्धम् । चकारेण—

शय्यां गृहं कुशान् गन्धानपः पुष्पं मणीन् दधि ।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत् ॥

लिगोधूमादीनि। अभयं भीतत्राणम्। उपानहौ। छत्रम्। माल्यं मल्लिकादेः। अनुलेपनं कुङ्कुमचन्दनादि। यानं रथादि। वृक्षमुपजीव्यमाम्रादिकम्। प्रियं यद्यस्य प्रियं धर्मादिकम्। शय्यां च दत्त्वात्यन्तमातिशयेन सुखी भवति। न च हिरण्यादिवद्धस्ते दातुमशक्यत्वा(१)द्धर्मस्य दानासंभवः। भूमिदानादावपि समानत्वात्। स्मृत्यन्तरेऽपि धर्मदानश्रवणात्। 'देवतानां गुरूणां च मातापित्रोस्तथैव च। पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्' ॥ अपुण्यदा(२)ने तदेव वर्धते प्रतिग्रहीतुरपि लोभादिना प्रवृत्तस्य—'यः पाप(३)मबलं ज्ञात्वा प्रतिगृह्णाति दुर्मतिः। गर्हिताचरणात्तस्य पापं तावत्समाश्रयेत् ॥ समद्विगुणसाहस्रमानन्त्यं च प्रदातृषु' ॥ इति स्मरणात्। इह च सर्वत्र देशकालपात्रविशेषाद्दातृविशेषात्–( 'दाने फलं मया प्रोक्तं हिंसायां तद्वदेव हि' ) इति प्रतिग्रहीतृवृत्तिविशेषाच्च दातृप्रतिग्रहीत्रोः फलतारतम्यं द्रष्टव्यम् ॥ २११ ॥

सर्वदानमयं(४)ब्रह्म प्रदानेभ्योऽधिकं यतः ॥
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥

(वी०मि०)दानप्रदानपदे कर्मव्युत्पादयपरे। यतः सर्वदानमयं सर्वदेयप्रयोज्यफलप्रयोजकमतः प्रत्येकं सर्वदेयेभ्योऽधिकं ब्रह्म वेदः तद्ददत् अध्यापनादिना परस्मिन् सङ्क्रामयन् अविच्युतं कल्पपर्यन्तावस्थायि यथास्यात्तथा ब्रह्मलोकमवाप्नोति ॥ २१२ ॥

(मिता०) दानात्फलमुक्तमिदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतूनाह—

सर्वधर्मेत्यादि। यस्मात्सर्वधर्ममयं ब्रह्म अवबोधकत्वेन तस्मात्तद्दानं सर्वदानेभ्योऽधिकमतस्तद्ददद्ध्यापनादिद्वारेण ब्रह्मलोकमवाप्नोति। अविच्युतं विच्युतिर्यथा न भवति। आ भूतसंप्लवं ब्रह्मलोकेऽवतिष्ठत इत्यर्थः। अत्र च ब्रह्मदानं परस्वत्वापादनमात्रं दानं, स्वत्वनिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥

---

(१) द्धर्मादीनामसंभवः ग.।

(२) दानेन क.।

(३) मबलं ज्ञात्वा ग.।

(४) सर्वधर्ममयं ब्रह्म—इति मुद्रितपुस्तकस्थः पाठः।

(वी० मि०) दानप्रसङ्गेन प्रतिग्रहनिवृत्तिरूपं धर्मं फलसहितमाह—

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्॥
ये लोका दानशीलानां स तानाप्नोति पुष्कलान्॥२१३॥

विद्यावृत्ततपोभिः प्रतिग्रहे समर्थोऽपि अधिकृतोपि। एतेनाऽसामर्थ्यनिबन्धनं प्रतिग्रहाभावं व्यवच्छिनत्ति। प्रतिग्रहमिति कर्मव्युत्पत्तम्। नादत्ते स्वामिना दीयमानं न प्रतिगृह्णाति यद्यद्द्रव्यदातॄणां ये ये लोकास्तत्तद्द्रव्यप्रतिग्रहनिवृत्तः स तान् तान् लोकान् पुष्कलान् समग्रानाप्नोति॥ २१३॥

(मिता०) दातुः फलमुक्तम्, इदानीं दानव्यतिरेकेणापि दानफलावाप्तेर्हेतुमाह—

प्रतिग्रहेत्यादि। यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नादत्ते न स्वीकरोति असौ यत्प्राप्तं नोपादत्ते तत्तद्दानशीलाना ये लोकास्तान्समग्रानाप्नोति॥ २१३॥

(वी०मि०) 'न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः' इत्यनेनाऽभिशस्तादेः प्रतिग्रहः प्राक् निषिद्धस्तत्र प्रतिप्रसवमाह—

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः॥
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥ २१४॥

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः॥
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः॥ २१५॥

देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च॥
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च॥ २१६॥

कुशादिकं त्रयोदशविधं वस्तु दुष्कृतकर्मणोऽपि सम्बन्धि अयाचितमाहृतमुपनीतं न प्रत्याख्येयं नोपेक्ष्यम्। अनुपेक्षाप्रकारमेवाह, ग्राह्यमिति। पयो दुग्धं, गन्धाश्चन्दनादयः, क्षितिर्भूमिः, धाना भ्रष्टयवाः। शेषं प्रसिद्धम्। चकारेण—

शय्यां गृहं कुशान् गन्धानपः पुष्पं मणीन् दधि।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत्॥

( मिता० ) का पुनरुभयतोमुखी कथं तावत्तद्दानं महाफलमित्यत आह—

यावदिति। गर्भान्निर्गच्छतो वत्सस्य द्वौ पादौ मुखं च यावत्कालं योन्यां दृश्यते तावत्कालं उभयतोमुखमस्या अस्तीत्युभयतोमुखी। यावत्कालं गर्भं न मुञ्चति तावत्सा गौः पृथिवीसमा ज्ञेया। अतः फलातिशयो युक्तः॥ २०७॥

(वी० मि०) पूर्वोक्तहेमशृङ्गत्वादिविशेषणविशिष्टाया गोर्दानं सफलमाह—

यथाकथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा॥
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते॥ २०८॥

यथाकथञ्चित्पूर्वोक्तविशेषणमपुरस्कृत्यापि धेनुं क्षीरिणीमक्षीरिणीं वा। एवकारो वन्ध्याव्यवच्छेदकः। अरोगां स्वौरकादिरोगरहिताम्। अपरिक्लिष्टामनतिदुर्बलाम्। गां दत्त्वा दाता स्वर्गे महीयते पूजितो भवति। अस्मिन्नधेनुधेनुसाधारणे फले धेनुदानफलभूमा न्यायादवगन्तव्यः। कर्त्राकाङ्क्षापूरणाय दातेत्युक्तम्॥ २०८॥

( मिता० ) सामान्यगोदाने फलम्—

यथाकथञ्चिदिति। यथाकथञ्चिद्धेमशृङ्गाद्यभावेऽपि यथासंभवं पूर्वोक्तेन विधिना धेनुं दोग्ध्रीं, अधेनुं वा अवन्ध्यां, अरोगां रोगरहितां, अपरिक्लिष्टां अत्यन्तादुर्बलां गां दत्त्वा दाता स्वर्गे महीयते पूज्यते॥ २०८॥

( वी० मि० ) गोदानफलमन्यत्राप्यतिदिशति—

श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम्॥
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत्॥ २०९॥

श्रान्तस्य परिश्रान्तस्य संवाहनमासनशयनदानादिना श्रमापनयनं, रोगिणः परिचर्या औषधादिना, सुराणां हरिहरदुर्गादीनामर्चनं पूजनं, पादशौचं द्विजस्य पादावनेजनं, समस्तस्यापि द्विजशब्दस्य निष्कृष्यानुषङ्गः। द्विजोच्छिष्टस्य मार्जनमपनयनं च प्रत्येकं गोप्रदानवत् गोप्रदानफलसमफलमित्यर्थः॥ २०९॥

( मिता० ) गोदानसमान्याह—

१. श्रान्तसंवाहनमिति । श्रान्तस्यासनशयनादिदानेन श्रमापनयनं श्रान्तसंवाहनम् । रोगिणां परिचर्या यथाशक्त्यौषधादिदानेन । सुरार्चनं, हरिहरहिरण्यगर्भादीनां गन्धमाल्यादिभिराराधनम् । पादशौचं द्विजानां समानामधिकानां च । तेषामेवोच्छिष्टस्य मार्जनम् । एतान्यनन्तरोक्तेन गोदानेन समानि ॥ २०९ ॥

( वी०मि० ) दानान्तराणि फलसहितान्याह त्रिभिः—

भूदीपा(१)श्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ॥
नैवेशिकं(२)स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते ॥ २१० ॥

भ्वादयोऽष्टौ सिद्धाः, प्रतिश्रयो वासगृह, नैवेशिकं परस्य विवाहार्थं द्रव्य, स्वर्णं सुवर्णं, धुर्यो भारक्षमो बलीवर्दः ॥ २१० ॥

( मिता० ) भूर्दीपेत्यादि । भूः फ(३)लप्रदा । दीपा देवायतनादिषु । प्रतिश्रयः प्रवासिनामाश्रयः । निवेशनार्थं गार्हस्थ्यार्थं यत्कन्या दीयते तन्नैवेशिकम् । स्वर्णं सुवर्णम् । धुर्यो भा(४)रसहो बलीवर्दः । शेषं प्रसिद्धम् । एतान्भूदीपादीन्दत्त्वा स्वर्गलोके महीयते पूज्यते । स्वर्गफलं च भूमिदानादीनां न फलान्तरव्युदासार्थम् । मनुः (४।२२९)—'यत्किंचित्कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा । अपि गोचर्ममात्रेण भूमिदानेन शुध्यति' ॥ तथा—'वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम्' ॥ इत्यादि फलान्तरश्रवणात् । गोचर्मलक्षणं च बृहस्पतिना दर्शितम्—'सप्तहस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनम् । दश तान्येव गोचर्म दत्त्वा स्वर्गे महीयते' ॥ इति ॥ २१० ॥

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ॥
यानं वृक्षं प्रियं शय्यां दत्त्वाऽत्यन्तं सुखी भवेत् ॥२११॥

( वी० मि० ) अभयस्य दानं परस्य भयाभावसम्पादनमात्रं विवक्षितम् । वृक्षमुपभोगार्हम् । यद् ग्रहीतुः प्रियम् । अत्यन्तं सुखी स्वर्गभागी ॥ २११ ॥

( मिता० ) गृहधान्येत्यादि । गृहं प्रसिद्धम् । धान्यानि च शा-

(१) भूर्दीपाश्च इति क० पुस्तके पाठः । (२) नैवेशिकस्वर्णधुर्यान् इति ■ पुस्तके पाठः ।
(३) भू. कृषिफलप्रदा ग । (४) भारवाहो ग ।

लिगोधूमादीनि । अभयं भीतत्राणम् । उपानहौ । छत्रम् । माल्यं मल्लिकादेः । अनुलेपनं कुङ्कुमचन्दनादि । यानं रथादि । वृक्षमुपजीव्यमाम्रादिकम् । प्रियं यद्यस्य प्रियं धर्मादिकम् । शय्यां च दत्त्वात्यन्तमतिशयेन सुखी भवति । न च हिरण्यादिवद्धस्ते दातुमशक्यत्वा(१)द्धर्मस्य दानासंभवः। भूमिदानादावपि समानत्वात्। स्मृत्यन्तरेऽपि धर्मदानश्रवणात् । 'देवनानां गुरूणां च मातापित्रोस्तथैव च । पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्' ॥ अपुण्यदा(२)ने तदेव वर्धते प्रतिग्रहीतुरपि लोभादिना प्रवृत्तस्य—'यः पाप(३)मवलं ज्ञात्वा प्रतिगृह्णाति दुर्मतिः । गर्हिताचरणात्तस्य पापं तावत्समाश्रयेत् ॥ समद्विगुणसाहस्रमानन्त्यं च प्रदातृपु' ॥ इति स्मरणात् । इह च सर्वत्र देशकालपात्रविशेषाद्दातृविशेषात्–( 'दाने फलं मया प्रोक्तं हिंसायां तद्वदेव हि' ) इति प्रतिग्रहीतृवृत्तिविशेषाच्च दातृप्रतिग्रहीत्रोः फलतारतम्यं द्रष्टव्यम् ॥ २११ ॥

सर्वदानमयं(४)ब्रह्म प्रदानेभ्योऽधिकं यतः ॥
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥

(वी०मि०)दानप्रदानपदे कर्मव्युत्पादयपरे। यतः सर्वदानमयं सर्वदेयप्रयोज्यफलप्रयोजकमतः प्रत्येकं सर्वदेयेभ्योऽधिकं ब्रह्म वेदः तद्ददत् अध्यापनादिना परस्मिन् सङ्क्रामयन् अविच्युतं कल्पपर्यन्तावस्थायि यथास्यात्तथा ब्रह्मलोकमवाप्नोति ॥ २१२ ॥

(मिता०) दानात्फलमुक्तमिदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतूनाह—

सर्वधर्मेत्यादि । यस्मात्सर्वधर्ममयं ब्रह्म अवबोधकत्वेन तस्मात्तद्दानं सर्वदानेभ्योऽधिकमतस्तद्ददध्यापनादिद्वारेण ब्रह्मलोकमवाप्नोति । अविच्युतं विच्युतिर्यथा न भवति । आ भूतसंप्लवं ब्रह्मलोकेऽवतिष्ठत इत्यर्थः । अत्र च ब्रह्मदानं परस्वत्वापादनमात्रं दानं, स्वत्वनिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥

(१) द्गर्गादीनामसंभवः ख. ।
(२) दानेन क. ।
(३) मवलं ज्ञात्वा ग. ।
(४) सर्वधर्ममयं ब्रह्म—इति मुद्रितपुस्तकस्यः पाठः ।

(वी० मि०) दानप्रसङ्गेन प्रतिग्रहनिवृत्तिरूपं धर्मं फलसहितमाह—

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ॥
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥२१३॥

विद्यावृत्ततपोभिः प्रतिग्रहे समर्थोऽपि अधिकृतोपि । एतेनाऽसामर्थ्यनिबन्धनं प्रतिग्रहाभावं व्यवच्छिनत्ति । प्रतिग्रहमिति कर्मव्युत्पन्नम् । नादत्ते स्वामिना दीयमानं न प्रतिगृह्णाति यद्द्रव्यदातॄणां ये ये लोकास्तत्तद्द्रव्यप्रतिग्रहनिवृत्तः स तान् तान् लोकान् पुष्कलान् समग्रानाप्नोति ॥ २१३ ॥

(मिता०) दातुः फलमुक्तम्, इदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतुमाह—

प्रतिग्रहेत्यादि । यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नादत्ते न स्वीकरोति असौ यस्यप्राप्त नोपादत्ते तत्तद्दानशीलानां ये लोकास्तान्समग्रानाप्नोति ॥ २१३ ॥

(वी०मि०) 'न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः' इत्यनेनाऽभिशस्तादेः प्रतिग्रहः प्राङ् निषिद्धस्तत्र प्रतिप्रसवमाह—

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ॥
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ॥
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥
देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ॥
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥

कुशादिकं त्रयोदशविधं वस्तु दुष्कृतकर्मणोऽपि सम्बन्धि अयाचितमाहृतमुपनीतं न प्रत्याख्येयं नोपेक्ष्यम् । अनुपेक्षाप्रकारमेवाह ग्राह्यमिति । पयो दुग्धं, गन्धाश्चन्दनादयः, क्षितिर्भूमिः, धाना भ्रष्टयवाः । शेषं प्रसिद्धम् । चकारेण—

शय्यां गृहं कुशान् गन्धानपः पुष्पं मणीन् दधि ।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत् ॥

एधोदकं मूलफलमन्नमभ्युद्यतं च यत्।
सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्॥

इति मनूक्तमण्यादिसमुच्चयः। कुलटा स्वैरिणी, षण्ढः क्लीबः, पतितो ब्रह्महादिः, द्विट् शत्रुः। तथाशब्देन चण्डालादिसमुच्चयः। एभ्योऽन्यत्र विना एतेषां कुशादिकमपि न ग्राह्यमित्यर्थः। देवेति। देवस्यातिथेर्वाऽर्चनार्थं, गुरवः मातापित्राद्यः, भृत्याः भार्याद्याः तदर्थं च, आत्मनो वृत्तिर्वर्तनोपायो भोजनाच्छादनादिः तदर्थं च सर्वतो दुष्कृतकर्मादेरपि प्रतिगृह्णीयादित्यर्थः। प्रथमचकारादवश्यकर्तव्यं ऋणापाकरणाद्यर्थमिति। द्वितीयचकारादात्मरोगानिवृत्त्याद्यर्थमिति समुच्चीयते। प्रथम एवकारो विशेषविहितातिरिक्तं सर्वतः प्रतिग्रहव्यवच्छेदार्थः। द्वितीयस्तु प्रतिगृह्णीयादित्यत्राऽन्वितः, तेनैतेषु निमित्तेषु पापान्तरासम्भवे दुष्कृतकर्मणोपि प्रतिग्रह आवश्यक इत्येतत्प्रदर्शनार्थः। अत्र कुलटेत्यादिकमप्राप्यन्वेति। तदाह विष्णुः—

गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन्।
सर्वतः प्रतिगृह्णीयान्न तृप्येत स्वयं ततः॥
एतेष्वपि च कार्येषु समर्थस्तत्प्रतिग्रहे।
नादद्यात्कुलटाषण्ढपतितेभ्यस्तथा द्विषः॥

अत्र च दानान्तराणि दानसामान्येतिकर्तव्यतापात्रगुणदोषादयश्च विस्तरभयान्नात्र प्रपञ्चिता अन्ये वाच्याः॥ २१४—२१६॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने दानप्रकरणम्।

(मिता०) इदानीं सर्वप्रतिग्रहनिवृत्तिप्रसक्तेऽपवादमाह—

कुशा इति। धानाः (१)भ्रष्टयवाः। क्षितिर्मृत्तिका। शेषं प्रसिद्धम्। एतच्च कुशादिकं स्वयमुपानीतं न प्रत्याख्येयम्। चकाराद् गृहादि। (मनुः ४।२५०)—'शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि। धाना मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत्'॥ तथा—'एधोदकं मूलफलमन्नमभ्युद्यतं च यत्। सर्वतः प्रतिगृह्णी(२)यान्मध्वथाभयदक्षिणाम्'॥ इति (४।२४७) मनुस्मरणात्॥ २१४॥

(मिता०) किमिति न प्रत्याख्येयमित्याह—

अयाचिताहृतमिति। यस्मादयाचिताहृतमेतत्कुशादि दुष्कृत-

(१) भ्रष्टतण्डुला क. ग.। (२) मध्वाज्याभय ग.।

कारिणोऽपि संबन्धि ग्राह्यं, किमुत यथोक्तकारिणः । तस्मान्न प्रत्याख्येयम् । अन्यत्र कुलटाषण्ढपतितेभ्यः शत्रोश्च । कुलात्कुलमटतीति कुलटा स्वैरिण्यादिका । षण्ढस्तृतीयाप्रकृतिः ॥ २१५ ॥

( मिता० ) प्रतिग्रहनिवृत्तेरपवादान्तरमाह—

देवेत्यादि । देवातिथ्यर्चनादेरावश्यकत्वात्सदर्थमना(१)त्मकारणात् पतितादयन्तवुस्तितवर्जं सर्वतः प्रतिगृह्णीयात् । गुरवो मातापित्रादयः । भृत्याः भरणीयाः भार्यापुत्रादयः ॥ २१६ ॥

इति दानप्रकरणम् ।

( वी०मि० ) अथ साङ्गसपरि(२)वारकं श्राद्धरूपं धर्ममभावास्याष्टकेत्यादिना प्रीता नृणां पितामहा इत्यन्तेनाऽभिदधानः प्रथमं श्राद्धकालानाह—

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ॥
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥ २१७ ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ॥
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ २१८ ॥

अमावास्या कृष्णपञ्चदशी सर्वैव । अष्टका पौषमाघफाल्गुनाश्विनेषु कृष्णाष्टमी । वृद्धिः पुत्रजन्मादि । कृष्णपक्षः सर्वमासीयः । सम्भवे पूर्णः, असम्भवे पञ्चम्यादि(३)स्तदसम्भवेपि या काचित्कृष्णपक्षीया तिथिः । अयनद्वयं उत्तरायणदाक्षिणायनसङ्क्रान्तिदिनम् । द्रव्यं खड्गिमांसादि । ब्राह्मणसम्पत्तिः पङ्क्तिपावनादिब्राह्मणलाभः । विषुवत् मेषतुलयोः सूर्यसङ्क्रान्तिः, सूर्यस्य एकस्माद्राशे राश्यन्तरगमनं विषुवत् । अयनयोः सङ्क्रान्तित्वेपि पृथगभिधानं फलातिशयार्थम् । व्यतीपातो विष्कुम्भादिषु परिपठितो योगविशेषः । सूर्याचन्द्रमसोः सङ्क्रान्तिसाम्यमित्यन्ये । गजच्छाया—

योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां संस्थेच शशिन्यर्के करे स्थिते ॥

इति लक्षितः कालः । चन्द्रसूर्ययोर्ग्रहणं राहूपरागः । श्राद्धं प्रति

(१) मनपत्कारणात क । (२) साङ्गपरिकरं—इति ख० पु० पाठ. ।
(३) पञ्चम्यादिदर्शभ्यादि — इति क० पु० पाठ ।

रुचिः श्राद्धेच्छा। चकारेणाऽऽग्रहायणीश्रावण्यादीनामत्रानुक्तानां समुच्चयः। श्राद्धकाला इति। एवञ्च वृद्ध्यादिशब्दे (१)तत्कालपरा इति द्रष्टव्यम्। एवकारेण परस्परसाहित्यव्यवच्छेदः। तेन प्रत्येकममावास्यादेः श्राद्धकालत्वं पर्यवस्यति॥ २१७-२१८॥

(मिता०) इदानीं श्राद्धप्रकरणमारभ्यते। श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः। तच्च द्विविधं पार्वणमेकोद्दिष्टमिति। तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणम्। एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम्। पुनश्च त्रिविधं नित्यं नैमित्तिकं काम्यं चेति। तत्र नित्यं नियतनिमित्तोपाधौ चोदितं यथाऽहरहरमावस्याष्टकादिषु। अनियतनिमित्तोपाधौ चोदितं नैमित्तिकं यथा पुत्रजन्मादिषु। फलकामनोपाधौ विहि(२)तं काम्यं यथा स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु (तिथिषु च)। पुनश्च पञ्चविधं–'अहरहःश्राद्धं पार्वणं वृद्धिश्राद्धमेकोद्दिष्टं सपिण्डीकरणं चे'ति। तत्राहरहःश्राद्धं--'अन्नं पितृमनुष्येभ्यः' इत्यादिनोक्तम्। तथा च मनुः—(३।८२) (३)'कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा। पयोमूलफलैर्वापि पितृभ्यः प्रीति(४)मावहन्'॥ इति॥

अधुना पार्वणं वृद्धिश्राद्धं च दर्शयिष्यंस्तयोः कालानाह--

अमावास्येति। व्यतीपात इति च। यत्र दिने चन्द्रमा न दृश्यते सा अमावास्या तस्यामहर्द्वयव्यापिन्यामपराह्णव्यापिनी ग्राह्या। 'अपराह्णः पितृणाम्' इति वचनात्। अपराह्णश्च पञ्चधाविभक्ते दिने चतुर्थो भागस्त्रिमुहूर्तः। अष्टकाश्चतस्रः 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इत्याश्वलायनोक्ताः। वृद्धिः पुत्रजन्मादिः। कृष्णपक्षोऽपरपक्षः। अयनद्वयं दक्षिणोत्तरसंज्ञकम्। द्रव्यं कृस(५)रमांसादिकम्। ब्राह्मणसंपत्तिर्वक्ष्यमाणा। विषुवद्द्वयं मेषतुलयोः सूर्यगमनम्। सूर्यसंक्रम आदित्यस्य राशेः राश्यन्तरगमनम्। अयनविषुवतोः संक्रान्तित्वे सिद्धेऽपि पृथगुपादानं फलातिशयप्रतिपादनार्थम्। व्यतीपातो योगविशेषः। गजच्छाया—'यदेन्दुः पितृदैवत्ये

(१) वृद्ध्यादिशब्दात्—इति ख० पु० पाठः। (२) चोदितं क.।

(३) दद्यादिति मुद्रितपुस्तकस्थः पाठः।

(४) प्रीतिमक्षयामिति मुद्रितपुस्तके पाठः, प्रीतिमुद्वहन्निति क्वचिदन्यत्र।

(५) कृष्णसारमांसादि ख.।

हंसश्चैवं करे स्थितः। (१)यस्यां तिथिर्मघेत्सा हि गजच्छाया प्रकीर्तिता' ॥ इति परिभाषिता । हस्तिच्छायेति केचित्। सेह न गृह्यते, कालप्रक्रमात् । ग्रहणं सोमसूर्ययोरुपरागः । यदा च कर्तुः श्राद्धं प्रति रुचिर्भवति तदापि । चशब्दाद्युगादिप्रभृतयः । एते श्राद्धकालाः । यद्यपि 'चन्द्रसूर्यग्रहे नाद्यात्' इति ग्रहणे भोजननिषेधस्तथापि भोक्तुर्दोषो दातुरभ्युदयः ॥ २१७—२१८ ॥

(वी० मि०) श्राद्धीयब्राह्मणान् कथयन्नेव पूर्वोक्तां ब्राह्मणसम्पत्तिं विवृणोति—

अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद् युवा ॥
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः(२) ॥ २१९ ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ॥
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥ २२० ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ॥
पितृमातृपराश्चैव ब्राह्मणाः श्राद्ध(३)सम्पदः ॥ २२१ ॥

सर्वेषु ऋगादिषु वेदेषु अग्र्या अस्खलिताध्ययनाः, श्रोत्रियः प्राक् लक्षितः, ब्रह्मवित् आत्मतत्त्वज्ञः, युवा नातिबालो नातिवृद्धः, वेदस्य मन्त्रब्राह्मणात्मकस्यार्थवित्, ज्येष्ठसामा ज्येष्ठसाम सामविशेषस्तद्योगात्पुरुषो ज्येष्ठसामा, त्रिमधुः (४)मध्वारभ्यर्ग्वेदैकदेशाध्यायी, त्रिसुपर्णः ऋग्यजुषोरेकदेशस्तदध्येता त्रिसुपर्णः, स्वस्रीयो भागिनेयः, ऋत्विक् प्राग्लक्षितः, जामाता दुहितुः पतिः, याज्यः आर्त्विज्येन सम्पाद्ययागकः, त्रिणाचिकेतोऽध्वर्युवेदभागस्तदध्येता त्रिणाचिकेतः, सम्बन्धिनो मातामहादयः, बान्धवा मातृष्वस्रेयादयः, कर्मनिष्ठा नित्यनैमित्तिकानुष्ठानपराः, तपोनिष्ठाश्चान्द्रायणाद्याचरणशीलाः, पञ्चाग्निः सत्यावसथ्याहवनीयगार्हपत्यदक्षिणाग्निपञ्चकवान्, पितृमातृपराः पितृभक्ता मातृभक्ताश्च, चकारात् ज्ञाननिष्ठादयः। ब्राह्मणा एव न क्षत्रियादयः। श्राद्धे सम्पत् अक्षयपितृतृप्तिरतद्धेतवः ॥ २१९—२२१ ॥

---

(१) यस्यां तिथिं' ख ग । (२) त्रिसुपर्णक—इति मुद्रितपुस्तके पाठ ।

(३) श्राद्धसम्पदे—इति क० पुस्तके पाठ ।

(४) त्रिम ध्वध्य०— इति ख० पु० पाठ ।

(मिता०) अहरहः श्राद्धव्यतिरिक्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसम्पत्तिमाह—

अग्न्या इति। सर्वेषु वेदेषु ऋग्वेदादिषु अन्यमनस्कतयाप्यजस्रास्खलिताध्ययनक्षमा अग्न्याः। श्रोत्रियः श्रुताध्ययनसंपन्नः। वक्ष्यमाणं ब्रह्म यो वेत्ति असौ ब्रह्मवित्। युवा मध्यमवयस्कः। सर्वस्येदं विशेषणम्। मन्त्रब्राह्मणयोरर्थं वेत्तीति वेदार्थवित्। ज्येष्ठसामेति सामविशेषस्तदध्ययनाङ्गव्रतं च तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा। त्रिमधुः ऋग्वेदैकदेशस्तद्व्रतं च तद्व्रताचरणेन (१)तदधीते इति त्रिमधुः। त्रिसुपर्णं ऋग्यजुषोरेकदेशस्तद्व्रतं तद्व्रताचरणेन यस्तदधीते स त्रिसुपर्णिकः। एते ब्राह्मणाः श्राद्धसंपद इति (२)वक्ष्यमाणेन संबन्धः॥ २१९॥

(मिता०) स्वस्रीय इति। स्वस्रीयो भागिनेयः। ऋत्विगुक्तलक्षणः। जामाता दुहितुर्भर्ता। त्रिणाचिकेतं यजुर्वेदैकदेशः तद्व्रतं च तद्व्रताचरणेन यस्तदध्यायी स त्रिणाचिकेतः। अन्यत्प्रसिद्धम्। एते च पूर्वोक्ताग्न्यश्रोत्रियाद्यभावे वेदितव्याः। 'एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्त्वयं प्रोक्तः सदा सद्भिरगर्हितः'॥ इत्यभिधाय [३।१४७] मनुना स्वस्रीयादीनामभिहितत्वात्॥ २२०॥

(मिता०) कर्मनिष्ठा इति। कर्मनिष्ठा विहितानुष्ठानतत्पराः। तपोनिष्ठास्तपःशीलाः। सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सन्ति स पञ्चाग्निः पञ्चाग्निविद्याध्यायी च। ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च। पितृमातृपरास्तत्पूजापराः। चकारात् ज्ञाननिष्ठादयः। ब्राह्मणाः न क्षत्रियादयः। (३)श्राद्धसंपदः श्राद्धस्याक्षय्यफलसंपत्तिहेतवः॥ २२१॥

(वी० मि०) श्राद्धे पात्रत्वानर्हानाह—

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा॥
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः॥ २२२॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः॥
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः॥ २२३॥

(१) तदध्यायी क. ग.। (२) वक्ष्यमाणक्रियासंबन्ध ख. ग.।
(३) श्राद्धसंपदे क. ग.।

मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ॥
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४ ॥

रोगी महारोगवान्, हीनमतिरिक्तं वाङ्गं यस्य स तथा, काणो विकलचक्षु, तेनाऽन्धस्याप्यसाधारण्यम्, पौनर्भवो द्विरूढापुत्रः, तथापदेन माहिष(१)कादिपरिग्रहः, अवकीर्णी स्खलितब्रह्मचर्यः, कुण्डगोला-

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डस्तु मृते तस्मिंस्तु गोलकः ॥

इति मनुनोक्तौ, कुनखी सङ्कुचितनखः, श्यावदन्तकः स्वभावश्यावदशन, भृतकाध्यापकः वेतनग्रहणेनाऽध्यापक, क्लीब:-

षण्ढको वामनः पण्ड पण्ड. क्लीबो नपुंसकः ।
कीलकश्चेति षोढाऽसौ क्लीबमद उदाहृतः ॥

इति देवलोक्तः, कन्यादूषी दोषख्यापनेन समोगादिना वा कन्याया दूषणकारी, अभिशस्तकः ब्रह्महत्यादिकारित्वेनाक्षपात्सन्दिह्यमान, मित्रधुक् मित्रद्रोहकारी, पिशुनः परदोषप्रकाशनशील', सोमविक्रयी सोमलताविक्रेता, परिविन्दकः-

परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।

इत्युक्तः, शास्त्रानुमतत्यागनिमित्तं विना मातुः पितुर्गुरोर्वा त्यागकर्ता, कुण्डाशी-

यतु'पचिगलै' प्रस्थः कुण्डं प्रस्थचतुष्टयम् ।
तावदाहारको विप्रः कुण्डाशीत्युच्यते बुधै' ॥

इति देवलोक्तः । (२)कुण्डगोलकानुपधाय-

यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते ।

इति देवलोक्तश्च, वृषलो धर्मत्यागी तदात्मजः, परपूर्वा पुनर्भूस्तस्याः परिणेता, स्तेनः चौर्यशील, कर्मदुष्टा निषिद्धवाणिज्यादिकरणशीलाः चकाराङ्कितदेवलकादीनां स्मृत्यन्तरोक्तानां परिग्रहः ॥ २२२-२२४ ॥

*( मिता० )* वर्ज्यानाह—

रोगीति । रोगी महारोगोपसृष्टः । हीनमतिरिक्तं वाङ्गं यस्यासौ

(१) माहिषिकादिपरिग्रह इति ख पु० पाठ ।
(२) कुण्डगोलकौ इत्यारभ्य धर्मत्यागी इत्यन्तं नास्ति ख० पुस्तके ।

हीनातिरिक्ताङ्गः। एकेनाक्ष्णा यः पश्यति स काणः। एतस्मादेवान्धबधिर(१)विद्धप्रजननख(२)लतिदुश्चर्मप्रभृतयो निरस्ताः। पुनर्भूरुक्तलक्षणा तस्यां जातः पौनर्भवः। अवकीर्णी ब्रह्मचर्य एव स्खलितब्रह्मचर्यः। कुण्डगोलौ–'परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः'॥ ( मनुः ३। १७४ ) इत्येवमुक्तलक्षणकौ। कुनखी कु(३)त्सितनखः। श्यावदन्तकः स्वभावात्कृष्णदशनः। एते श्राद्धे निन्दिता इति वक्ष्यमाणेन सम्बन्धः॥ २२२॥

( मिता० ) भृतकेत्यादि। वेतनग्रहणेन योऽध्यापयति स भृतकाध्यापकः। वेतनदानेन च योऽधीते सोऽपि। क्लीबो नपुंसकः। असद्भिः सद्भिर्वा दोषैर्यः कन्यां दूषयति स कन्यादूषी। असता सता वा ब्रह्महत्यादिनाभियुक्तोऽभिशस्तः। मित्रध्रुक् मित्रद्रोही। परदोषसंकीर्तनशीलः पिशुनः। सोमविक्रयी यज्ञे सोमस्य विक्रेता। परिविन्दकः परिवेत्ता। ज्येष्ठेऽकृतदारेऽकृताग्निपरिग्रहे वा यः कनीयान् दारपरिग्रहमग्निपरिग्रहं वा कुर्यात्स परिवेत्ता। ज्येष्ठस्तु परिवित्तिः। यथाह मनुः ( ३।१७१ )–'दाराग्निहोत्रसंयोगं (४)यः करोत्यग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः'॥ इति। एवं दातृयाजकावपि। 'परिवित्तिः परिवेत्ता यया च परिविद्यते। सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः'॥ इति ( ३। १७२ ) मनु(५)वचनात्॥२२३॥

( मिता० ) मातेत्यादि। विना कारणेन मातापितृगुरून्यस्त्यजति स मातापितृगुरुत्यागी। एवं भार्यापुत्रत्याग्यपि। 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्'॥ इति समाननिर्देशात्। कुण्डस्यान्नं योऽश्नात्यसौ कुण्डाशी। एवं गोलकस्यापि। 'यस्तयोरन्नमश्नाति स कुण्डाशी प्रकीर्तितः' इति वचनात्। वृषलो निर्धर्मस्तत्सुतो वृषलात्मजः। परपूर्वा पुनर्भूः तस्याः पतिः परपूर्वापतिः। अदत्तादायी स्तेनः। कर्मदुष्टाः शास्त्रविरुद्धकारिणः। चकारात्कितवदेवलकप्रभृतयः।

---

(१) वृद्धप्रजन ग. घ.। (२) खलतिर्निष्केशशिराः खल्वाटः.। (३) संकुचितनखः घ.।
(४) कुरुते योऽग्रजे स्थिते क.। (५) इति समानदोषश्रवणात् ग.।

एते श्राद्धे निन्दिताः प्रतिषिद्धाः। अन्ये वाः सर्वेषु वेदेष्वित्यादिना श्राद्धयोग्यब्राह्मणप्रतिपादनेनैव तद्व्यतिरिक्तानामयोग्यत्वे सिद्धेऽपि पुनः केषांचिद्रोग्यादीनां प्रतिषेधवचनमुक्तलक्षणब्राह्मणासम्भवे प्रतिषेधरहितानां प्राप्त्यर्थम् ॥ २२४ ॥

(वी० मि०) इदानीं श्राद्धाङ्गनिमन्त्रणमाह—

निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः ॥

आत्मवान् क्रोधाद्यनाक्रान्तमनस्कः, शुचिरशुद्धिरहितः, ब्राह्मणान् श्राद्धपात्रतौपयिकविशेषणवतः पूर्वेद्युः श्राद्धपूर्वदिने पूर्वत्रिवसीयरात्राविति यावत्। निमन्त्रयेत श्राद्धे नियुञ्जीत। पूर्वदिननिमन्त्रणाभावे श्राद्धदिनेऽपि (१)निमन्त्रणम्।

> श्वः कर्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्।
> निरामिषं सकृद् भुक्त्वा सर्वभुक्तजने गृहे ॥
> असंभवे परेद्युर्वा ब्रह्मणांस्तान्निमन्त्रयेत्।

इति देवलवचनात्। परेद्युः श्राद्धदिने प्रातः श्राद्धाव्यवहितपूर्वकाले वा ॥

(वी० मि०) श्राद्धकर्तुः श्राद्धनिमन्त्रितब्राह्मणस्य च नियममाह—

तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥

मनसा वाचा कायकर्मणा च यः संयमः श्राद्धे निषिद्धानाचमनाचरणं तद्युक्तैस्तैर्ब्राह्मणैः। चकारात् श्राद्धकर्त्राऽपि संयतेन भाव्यम्। अधिकारेण कर्मभिः पञ्चान्वितेन चक्षुरादिव्यापारसमुच्चयः ॥२२५॥

(मिता०) एवं श्राद्धकालान्ब्राह्मणांश्चाभिधायाऽधुना पार्वणप्रयोगमाह—

निमन्त्रयेतेति। पूर्वोक्तान्ब्राह्मणान् श्राद्धे क्ष(२)णः क्रियतामिति पूर्वेद्युर्निमन्त्रयेत प्रार्थनया क्षणमभ्युपगमयेत्। अपरेद्युर्वा। 'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते। निमन्त्रयेत त्र्यवरान्सम्यग्विप्रान्यथोदितान्' ॥ इति (३।१८७) मनुस्मरणात्। आत्मवान् शोकोन्मादादिरहितः सन् दोषवांश्च भवति। यद्वा आत्मवान्नियतेन्द्रियो भवेत्। शुचिः प्रयतश्च। तैरपि निमन्त्रितैर्ब्राह्मणैर्मनोवाक्कायव्यापारैः संयतैर्नियतैर्भवितव्यम् ॥ २२५ ॥

---

(१) अपि— इति क० पुस्तके नास्ति। (२) अवसर उत्सवो वा क्षण ग.।

( वी० मि० ) श्राद्धाव्यवहितपूर्वकृत्यमाह—

अपराण्हे समभ्यर्च्य स्वागतेनागतांस्तु तान् ॥
पवित्रपाणिराचान्तानासनेपूपवेशयेत् ॥ २२६ ॥
दैवे (१)युग्मान् यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ॥
परिस्तृते शुचौ देशे दक्षिणा(२)प्लवने तथा ॥ २२७ ॥

अपराह्णे पञ्चधा विभक्तस्यान्हश्चतुर्थभागे त्रिमुहूर्तात्मके काले देशे च शुचौ अमेध्याद्यनुपहते परितो वस्त्रादिना वेष्टिते दक्षिणाप्लवने यथादक्षिणमवनते तथाशब्दाद्गोमयोपलेपादिसंस्कृते आसनेपु ब्राह्मणोपवेशनार्थमुपकल्पितेपु कुतपवृष्यादिपु पवित्रं पूर्वलक्षितं कुशाश्च पाणौ यस्य तादृशः श्राद्धकर्ता तानागतान् ब्राह्मणान् आचान्तान् कृताचमनान् इदं च स्नानादेरुपलक्षकं, स्वागतेन स्वागतप्रश्नादिना समभ्यर्च्य सत्कृत्य उपवेशयेत् । ब्राह्मणान् संख्यया विशिनष्टि । दैवे विश्वेदेवश्राद्धे यथाशक्ति युग्मान् द्विचतुरादिकान् पित्र्ये प्रमीतोद्देशकश्राद्धे यथाशक्ति अयुग्मानेकत्र्यादीन् विषमसंख्यकान् । तुशब्देनाचान्तानित्यनन्तरमान्वितेनाऽनाचान्तादिव्यवच्छेदः । एवकारार्थो युग्मानित्यत्रान्वेति । तथाशब्देन चाऽयुग्मानित्यत्र तदन्वयः समुच्चीयते । सति सम्भवे चायं नियमः । असम्भवे तु पक्षान्तरमग्रिमश्लोके स्पष्टम् । चकारेण—

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥

इति शङ्खोक्तस्यैकब्राह्मणपक्षस्य समुच्चयः । अपराह्ण इति तच्छ्राद्धाव्यवहितपूर्वकालोपलक्षकम् ॥ २२६-२२७ ॥

( मिता० ) अपराह्ण इति । अपराह्णे उक्तलक्षणे समभ्यर्च्य तान्निमन्त्रितान्ब्राह्मणानाहूय स्वागतवचनेन पूजयित्वा कृतपादधावनानाचान्तान् क्लृप्तेष्वासनेपु पवित्रपाणिः पवित्रपाणिरुपवेशयेत् । यद्यप्यत्र सामान्येनापराह्ण इत्युक्तं तथापि कुतपे प्रारभ्य तदादि पञ्चसु मुहूर्तेपु परिसमापनं श्रेयस्करम् । 'अह्नो मुहूर्ता वि(३)ख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥

(१) युग्मान्दैवे—इति मुद्रितपुस्तके पाठः ।
(२) दक्षिणाप्रवणे—इति मुद्रितपुस्तके पाठः । (३) विज्ञेया क. ।

मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः । तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥ ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते' ॥ इति वचनात् । तथान्यदपि श्राद्धोपयोगि कुतपसप्तकमुक्तम् । 'मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः । अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः' ॥ इति ॥ २२६ ॥

( मिता० ) युग्मानिति । दैवे आभ्युदयिके श्राद्धे युग्मान् समान् ब्राह्मणानुपवेशयेत् । कथं यथाशक्ति शक्तिमनतिक्रम्य । तत्र वैश्वदेवे द्वौ द्वौ, मात्रादीनां तिसृणामेकैकस्या द्वौ द्वौ, तिसृणां वा द्वौ । एवं पित्रादीनामेकैकस्य द्वौ द्वौ त्रयाणां वा द्वौ । एवं मातामहादीनां च वर्गत्रये वैश्वदेवं पृथक् तन्त्रं वा । पित्र्ये पार्वणश्राद्धे अयुग्मानित्युपमानुपवेशयेदिति सम्बध्यते । एतच्च परिस्तृते सर्वतः प्रच्छादिते शुचौ गोमयादिनोपलिप्ते दक्षिणाप्रवणे दक्षिणतोऽवनते देशे कार्यम् ॥२२७॥

( वी० मि० ) दैवे युग्मानित्याद्युक्तमेव न प्रसज्येत विस्तरे इति वचनानुसारेण विवृण्वानो लघुतरादिकल्पानप्याह—

दैवे द्वौ प्राक् त्रयः पित्र्य उदगेकैकमेव वा ॥
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८ ॥

दैवे विश्वेदेवश्राद्धे एकस्मिन्द्वौ प्राक् पूर्वाभिमुखौ नियोज्यौ । पित्र्ये पित्रादिश्राद्धत्रये प्रत्येकमेकैको ब्राह्मण इति मिलित्वा त्रयो ब्राह्मणा उदक् उदङ्मुखा नियोज्याः अथवा एकस्मिन् दैवे एकः, पित्रादित्रये चैकः । मातामहानां मातामहादित्रयस्य श्राद्धत्रये, एवं तदीयदैवे द्वौ, तत्र प्रत्येकमेकैकमिति त्रयो ऽथवा तदीयविश्वेदेवश्राद्धे एकः । तेषु च मिलितेष्वेक इत्यर्थः । तन्त्रं वेति विश्वेदेवसम्बन्धिब्राह्मणनिमन्त्रणं तन्त्रं, पित्रादित्रयोद्देशेनैकमेव तेन विश्वेदेवश्राद्धयोरेक एव ब्राह्मणः, पित्रादित्रयश्राद्ध एकः, मातामहादित्रयश्राद्धे चैक इत्युक्तमेवाऽत्राऽपि कल्पे बोध्यम् । इहाऽऽश्वलायन —'एकैकमेकैकस्ये'ति । प्रतिश्राद्धमेकैको ब्राह्मण इत्यर्थः । अत्र कल्पाः । पित्रादिसम्बन्धिविश्वेदेवश्राद्धे द्वौ, मातामहादिसम्बन्धिविश्वेदेवश्राद्धे च द्वौ, पित्रादिषु चैकैकः, मातामहादिषु त्रिषु चैकैक इति दश ब्राह्म-

णाः । (१)तदसम्भवे प्रतिश्राद्धमेकैक इत्यष्टौ ब्राह्मणा आश्वलायनोक्ताः । तदसम्भवे पित्रादिसम्बन्धिविश्वेदेवश्राद्धे एकः, मातामहादिसम्बन्धिविश्वेदेवश्राद्धे चैकः, पित्रादित्रयश्राद्धे चैकः, मातामहादित्रयश्राद्धेप्येकः इति चत्वारो ब्राह्मणाः । तदसम्भवेऽपि विश्वेदेवश्राद्धद्वये एकः, पित्रादिश्राद्धत्रय एक इति त्रयो ब्राह्मणाः । एषां चतुर्णां कल्पानामसम्भवे तु षट्पुरुषश्राद्ध एको ब्राह्मणो दैवे तु नास्त्येव ब्राह्मण इत्यपिशब्दस्याऽर्थः । यदाह शङ्खः—

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥

नैवेद्यं कृत्वाऽन्नं सङ्कल्प्य । अत्र कल्पे वैश्वदेवान्नस्य—

प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ।

इति वाचनिको विनियोगः। अत्र वाशब्दोऽनास्थायां, तेन जलप्रक्षेपादिकमप्यनुमतम् । एवं च विश्वेदेवश्राद्धेऽपात्रकत्व(२)दर्शनादेकस्याऽपि ब्राह्मणपात्रतायोग्यस्याऽलाभे पित्रादिश्राद्धेऽप्यपात्रकत्वं न्यायतौल्यात् लिखितवचनस्यापि सर्वशक्तिन्यायमूलकत्वात् । अन्यथाऽदृष्टार्थतापत्तेरित्यवधेयम् । एकैकमेवेत्येवकारो न प्रसज्येत विस्तर इति वचनस्वरसाद्विस्तरे दोषशङ्कायां तं व्यवच्छिनत्ति । विस्तरे दोषशङ्काविरहे तु ब्राह्मणाधिक्यमपि न्याय्यम् । 'एकैकस्य द्वौ द्वौ च त्रीन् त्रीन् वा वृद्धौ फलभूयस्त्व'मित्याश्वलायनवचनादिति दिक् । अत्र तन्त्रं वा वैश्वदेविकमित्यभिधानात्पित्रादिश्राद्धानां प्रयोगैक्यं स्फुटमवगम्यते । प्रयोगभेदे तन्त्रत्वासम्भवादिति द्रष्टव्यम् ॥ २२८ ॥

( मिता० ) अयुग्मान् पित्र्य इति पार्वणश्राद्धाङ्गभूते वैश्वदेवेप्ययुग्मप्रसक्त इदमारभ्यते—

द्वौ दैव इति । दैवे वैश्वदेवे द्वौ ब्राह्मणौ प्राङ्मुखावुपवेश्यौ । पित्र्ये अयुग्मानित्यविशेषप्रसंगे विशेष उच्यते पित्र्ये त्रय इति । पित्र्ये पित्रादिस्थाने त्रय उदङ्मुखा उपवेश्याः । पक्षान्तरमाह—एकैकमेव वा । वैश्वदेवे पित्र्ये च एकमेकमुपवेशयेत् । सम्भवतो विकल्पः । मातामहानामप्येवं श्राद्धे निमन्त्रणादि । द्वौ दैवे प्राक् त्रयः पित्र्ये उदग-

(१) एतद०-इति ख. पु. पाठः ।

(२) दर्शनात्–इत्यारभ्य श्राद्धेऽप्यपात्रकत्वं–इत्यन्तं क. पुस्तके नास्ति ।

कैकमेव घेत्येव मतं पितृश्राद्धवत्कर्तव्यम्। पितृश्राद्धं मातामहश्राद्धे च वैश्वदेविकं पृथक् तन्त्रेण वा कर्तव्यम्। तन्त्रशब्दः समुदायवाचकः। यदा तु द्वावेव ब्राह्मणौ लब्धौ तदा वैश्वदेवे पात्रं प्रकल्प्य उभयत्रैकैकं ब्राह्मणं नियुञ्ज्यात्। यथाह वसिष्ठः—'यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्। अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत्। प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे' ॥ इति ॥ २२८ ॥

(वी० मि०) प्रागुक्तोपवेशनानन्तरकृत्यं श्राद्धप्रयोगान्तर्गतं चाह 'रजनीं ब्राह्मणैः सह' इत्यन्तेन—

पाद(१)प्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ॥
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥ २२९ ॥

पादप्रक्षालनं ततः स्नात्वा भिक्षुभ्यः प्रत्युपस्थाय कृताञ्जलिः।
पाद्यमाचमनीयं च सम्प्रयच्छेद्यथाक्रमम्।

इति देवलाद्युक्तं पाद्यादि पादप्रक्षालनाय दत्त्वा विष्टरार्थं ब्राह्मणस्य श्राद्धस्थलोपवेशनार्थोपकल्पितद्रव्यादुपर्यासनार्थम्, अपिशब्दात् पादयोः कुशान् दत्त्वा आस्तीर्य। कुशानिति बहुवचनमासनत्वाभिप्रायेण। यदाह देवलः—

ये चात्र विश्वेदेवार्थं विप्राः पूर्वं निमन्त्रिताः।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च॥
दक्षिणामुखयुक्तानि पितॄणामासनानि च।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः॥

केचित्तु विश्वेदेवविप्राद्यासनार्थं कुशानुत्सृजेत् इति व्याचक्षते। तन्मतेऽपि तत्पूर्वकृत्यगायत्रीजपादेः समुच्चयः। अनुज्ञातो विश्वान् देवान् आवाहयिष्य इति पृष्टेन विश्वेदेवब्राह्मणेनाऽऽवाहयेत्यनुज्ञातः श्राद्धकर्ता 'विश्वेदेवास आगत' इत्यादिकया ऋचा विश्वेदेवानावाहयेत्। तथा च कात्यायनः—'आसनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति
त्यनयावाहयर्कीये
अनभिधानेऽपि सर्वशाखाधिकरणन्यायेन तत्समुच्चयोऽवगन्तव्यः।

(१) पाणिप्रक्षालन—इति मुद्रितपुस्तके पाठः।

ग्रन्थकृता तु श्राद्धप्रयोगस्यातिप्रसिद्धत्वादेकदेशप्रदर्शनेन कटाक्षित इति मन्तव्यम् ॥ २२९ ॥

(मिता०) पाणिप्रक्षालनमिति। तदनन्तरं वैश्वदेवार्थब्राह्मणहस्ते जलं दत्त्वा विष्टरार्थं कुशांश्च युग्मान् अद्भिर्गुणितानासने दक्षिणतो दत्त्वा विश्वान्देवानावाहयिष्ये इति ब्राह्मणान् पृष्ट्वा तैरावाहयेत्यनुज्ञातो 'विश्वेदेवास आगत' इत्यनयर्चा 'आगच्छन्तु महाभागाः' इत्यनेन च स्मार्तेन मन्त्रेण तानावाहयेत्। एतच्च यज्ञोपवीतिना(१) प्रदक्षिणं च कार्यम्। 'अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्' इति पित्र्ये विशेषस्मरणात् ॥ २२९ ॥

यवैरन्ववकीर्याऽथ भाजने सपवित्रके ॥
शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा ॥ २३० ॥
या दिव्या इति मंत्रेण हस्तेष्वर्घ्यं विनिःक्षिपेत् ॥
दत्त्वोदकं गन्धमाल्यं धूपं (२)वस्त्रं सदीपकम् ॥ २३१ ॥
तथाच्छादनदानं च करशौचार्थमम्बु च(३) ॥

(वी० मि०) अथावाहनानन्तरं यवैर्दैवश्राद्धभूमीमन्ववकीर्य सपवित्रके पूर्वलक्षितपवित्रवति भाजनेऽर्घपात्रे शन्नोदेवीरित्यादिकया ऋचा पयो जलं क्षिप्त्वा यवोसि यवयेत्यादियजुषा यवान् क्षिप्त्वा।

अर्घ्यैर्गन्धैश्च पुष्पैश्च ताः प्रपूज्याः प्रयत्नतः।

इति मत्स्यपुराणवचनात्। ब्राह्मणानां हस्तेषु उदकान्तरं दत्त्वा उक्तःपयोरूपमर्घ्यं 'या दिव्या आपः पयसे'त्यादिमन्त्रेण विनिःक्षिपेत् दद्यादित्यर्थः। तदाह कात्यायनः—'एकैकस्यैकेन ददाति सपवित्रेषु हस्तेषु या दिव्या आप इत्यसावेष तेऽर्घ' इति। गन्धेति। गन्धादिपञ्चकं विनिःक्षिपेदित्यनुषज्यते। धूपं वस्त्रमित्यत्र धूपदानमिति पाठे तु कर्तव्यमिति शेषः। सदीपकमिति च गन्धमाल्यविशेषणम्। अत्र च 'गन्धपुष्पधूपदीपवाससां च प्रदान'मिति कात्यायनवचनाद्वस्त्रोत्तरं गन्धपूर्वमिति वचनाद्वस्त्रोल्लेखः पश्चादवगन्तव्यः। एतच्चाग्नौ-

(१) वीतिना सव्येन च ग. ।
(२) धूपदानं इति मुद्रितपुस्तके पाठः।
(३) इदमर्धं क. ख. पुस्तकयोर्नास्ति।

त्सर्गान्तकर्मोपलक्षकम् । अत्र यद्यपि पदार्थानुसमयः श्राद्धेषु कात्यायनादिभिरुक्तः, तथापीह काण्डानुसमयप्रतिपादनं सपिण्डनपरमित्यविरोधः ।

सपिण्डीकरणं श्राद्धं देवपूर्वं निवेदयेत् ।

इति शातातपेन प्रकृतिविकृति(१)न्यायप्राप्तस्य देवपूर्वत्वस्य काण्डानुसमयबाधनार्थमभिधानात् । वैश्वापक्षे तु स्फुट एव सपिण्डीकरणे काण्डानुसमयः ॥

अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम् ॥ २३२ ॥

द्विगुणांस्तु कुशान्दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ॥

आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः ॥ २३३ ॥

( वी० मि० ) ततो देवकर्मानन्तरं अपसव्यं प्राचीनावीतं कृत्वा द्विगुणान्मोटितान् कुशान् पितृणामर्थे आसनरूपान् अप्रदक्षिणं वामावर्तेन दत्त्वा उत्सृज्य पितॄनावाहयिष्य इति पृष्टेन पितृब्राह्मणेनावाहयेत्यनुज्ञातः श्राद्धकर्ता 'उशन्तस्त्वा निधीमही'त्यनया ऋचा पितॄनावाह्य ततस्तिलावकिरणानन्तरमिति बुद्धिस्थपरामर्शः । 'आयन्तु नः पितर' इत्यादिमन्त्रं जपेत् ॥ २३०—२३३ ॥

( मिता० ) यवैरिति । ततो वै(२)श्वदेवार्थं ब्राह्मणसमीपे भूमिं प्रादक्षिण्येन यवैरन्ववकीर्य अनन्तरं तैजसादिभाजने सपवित्रके कुशयुग्मान्तर्हिते 'शन्नोदेवीरभिष्टय' इत्यनयर्चापः क्षिप्त्वा 'यवोसि धान्यराजो वा' इत्यादिना मन्त्रेण यवान् ततो गन्धपुष्पाणि च क्षिप्त्वाऽनन्तरं अर्घ्यपात्रपवित्रान्तर्हितेषु ब्राह्मणहस्तेषु 'या दिव्या आपः पयस' इत्यादिना मन्त्रेण विश्वेदेवा इद योऽर्घ्य इत्यर्घ्योदकं विनिक्षिपेत् ॥

( मिता० ) दत्त्वेति । अथ करशौचार्थमुदकं दत्त्वा 'यथाक्रमं गन्धपुष्पधूपदीपदानं कुर्यात् तथाच्छादनदानं च । गन्धादीनां स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः । 'चन्दनकुङ्कुमकर्पूरागरुपद्मकान्युपलेपनार्थम्' इति विष्णुनोक्तम् । पुष्पाणि च-'श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्' ॥

(१) विकृति—इति क० पुस्तके नास्ति ।

(२) विश्वदेवार्थं ख. ।

इत्युक्तानि । वर्ज्यानि च—'उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च' ॥ 'न कण्टकिजं, (१)कण्टकिजमपि शुक्लं सुगन्धि यत्तद्दद्यात्, न रक्तं दद्यात्, रक्तमपि कुङ्कुमजं जलजं च दद्यात्' इत्यादीनि द्रष्टव्यानि । धूपे च विशेषो विष्णुनोक्तः–'प्राण्यङ्गं सर्वं धूपार्थे न दद्यात् । घृतमधुसंयुक्तं गुग्गुलश्रीखण्डागरुदेवदारुसरलादि दद्यात्' इति । दीपे च विशेषः शङ्खेनोक्तः—'घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्' ॥ आच्छादनं च शुभ्रं नवमहतं सदशं दद्यादिति । एतच्च सर्वं वैश्वदेवानुष्ठानकाण्डमुदङ्मुखः कुर्यात् । पित्र्यं काण्डं दक्षिणामुखः । यथाह वृद्धशातातपः–'उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः । प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानतः' ॥ इति ॥

( मिता० ) अपसव्यमिति । ततो वैश्वदेवकाण्डानन्तरमपसव्यं यज्ञोपवीतं प्राचीनावीतं कृत्वा । अत्र तत इति वदता काण्डानुसमयो दर्शितः । पित्रादीनां त्रयाणामयुग्मान्कुशान्द्विगुणभुग्नान् अप्रदक्षिणं वामतो विष्टरार्थमासनेपूदकपूर्वकं दत्त्वा पुनरुदकं दद्यात् । 'अपः प्रदाय (२)दर्भान्द्विगुणभुग्नानासनं प्रदायापः प्रदाय' इत्याश्वलायनस्मरणात् । एतच्चाद्यन्तयोरुदकदानं वैश्वदेवे पित्र्ये च प्रतिपदार्थं प्रतिपादनार्थं द्रष्टव्यम् । अथ पितॄन् पितामहान् प्रपितामहानावाहयिष्य इति ब्राह्मणान्पृष्ट्वा आवाहयेति तैरनुज्ञातः 'उशन्तस्त्वा निधीमहि' इत्यनयर्चा पित्रादीनावाह्य 'आयन्तु नः पितरः' इत्यादिना मंत्रेणोपतिष्ठते ॥ २३०–२३३ ॥

अपहता इति तिलान् विकीर्य च समन्ततः(३) ॥
यवार्थास्तु तिलैः कार्या दद्यादर्घ्यादि पूर्ववत् ॥ २३४ ॥

( वी० मि० ) दैवे यवसाध्या अर्थाः क्रियास्तास्तिलैः कार्याः । अर्घ्यादि तु पूर्ववद्दैवश्राद्धवत् दद्यात् । आदिश(४)ब्देन उत्तरकालदेयस्यापि गन्धादेः सङ्ग्रहः । कुर्यादिति पाठे त्वर्घ्यदानाद्याच्छादनान्तं

---

( १ ) अकण्टकिजं ख. । ( २ ) द्विगुणभुग्नान्कुशान्दत्वापः ख. ग. ।
( ३ ) इदं पद्यार्धं क० ख० पुस्तकयोर्नास्ति । ( ४ ) पदेन—इति ख० पुं० पाठ ।

मर्घ्यादित्यस्यार्थः। तुशब्देन यवोसीति (१)मन्त्रस्यव्यवच्छेदः। तिलानावपति, तिलोऽसीति पित्र्ये कात्यायनेन मंत्रान्तरोपदेशात् ॥ २३४ ॥

( वी० मि० ) पित्र्यार्घ्येषु विशेषमाह—

दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥ २३५ ॥

तेषां पितॄणामर्घ्यं दत्त्वा संस्रवानर्घ्यशेषजलानि अर्थात्पितामहादिब्राह्मणस्य पात्रे पितृपात्रे विधानतः प्रादक्षिण्यक्रमेण कृत्वा निधाय पितृभ्यः स्थानमसीति मन्त्रेण पितृपात्रमधो न्युब्जं करोति कुर्यादित्यर्थः। एवं पृच्छतीत्यत्रापि विध्यर्थकताऽवगन्तव्या। अथ इत्यभिधानात्पितृपात्रोपरि पितामहपात्रस्य तदुपरि प्रपितामहपात्रस्य न्युब्जीकरणं सिध्यति। मत्स्यपुराणे—

पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत्।

यमः—

प्रथमं पैतृकं पात्रं तत्र पैतामहं न्यसेत्।
प्रपैतामहं ततो न्यस्य नोद्धरेन्न च चालयेत् ॥ २३५ ॥

( मिता० ) अपहता इति। दत्त्वेति च। यवार्थाः यवसाध्यानि कार्याण्यवकिरणादीनि तिलैः कर्तव्यानि। ततोऽर्घ्यपात्रासादनाच्छादनान्तं पूर्ववत्कुर्यात्। तत्रायं विशेषः—तिलान् 'अपहता असुरा रक्षांसि' इत्यादिना मन्त्रेण ब्राह्मणान्परितोऽप्रदक्षिणमन्ववकीर्य राजतादिषु पात्रेषु त्रिष्वयुग्मकुशानिर्मितकूर्चान्तर्हितेषु 'शंनोदेवीः' इति मन्त्रेणापः क्षिप्त्वा 'तिलोसि सोमदैवत्य' इत्यादिमन्त्रेण तिलान् गन्धपुष्पाणि च क्षिप्त्वा स्वधार्घ्या इति ब्राह्मणानां पुरतोऽर्घ्यपात्राणि स्थापयित्वा 'या दिव्या' इति मन्त्रान्ते पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमिति ब्राह्मणानां हस्तेष्वर्घ्यं दद्यात्। एकैकमुभयत्र वेत्यस्मिन्नपि पक्षे पात्रत्रयं कार्यम्। प्रथमर्घ्यं दत्त्वा तेषामर्घ्याणां संस्रवान्ब्राह्मणहस्तगलितार्घोदकानि पि(२)तृपात्रे गृहीत्वा दक्षिणाग्रं कुशस्तम्बं भूमौ निधाय तस्योपरि 'पितृभ्यः स्थानमसि' इत्यनेन मन्त्रेण तत्पात्रं न्युब्जमधोमुखं कुर्यात्।' तस्यो-

(१) मन्त्र इत्यस्य तिलोऽसीति—इत्यन्तं क० पुस्तके नास्ति।
(२) पात्रे प्रथमे गृहीत्वा ग०।

परि अर्घ्यपात्रपवित्राणि निदध्यात् । अनन्तरं गन्धपुष्पधूपदीपाच्छादनानि पितरयं ते गन्धः पितरिदं ते पुष्पमित्यादिना प्रयोगेण दद्यात् ॥ २३४-२३५ ॥

अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ(१)पितृयज्ञवत् ॥ २३६ ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ॥ २३७ ॥

( वी० मि० ) घृतप्लुतं घृताक्तं अन्नमादाय श्राद्धीयादन्नादुद्धृत्य अग्नौ करिष्य इति पितृब्राह्मणं पृच्छति, अथ कुरुष्वेति ब्राह्मणेनाऽनुज्ञातः पितृपक्षवत् पिण्डपितृयज्ञ इव अग्नौ हुत्वा हुतशेषमन्नं भाजनेषु समाहितोऽनन्यचित्तः प्रदद्यात् परिविष्यात् । भाजनानि विशिनष्टि यथेति । यथालाभमुपपन्नेषूपक्लृप्तेषु विशेषतः फलातिशयार्थितायां तु रौप्येषु रूपमयेषु । अग्नाविति साग्निपरं निरग्नेः(२)परिवेषणार्थमनग्नेस्तु विप्रपाण्यादौ होमः ।

अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा ।

इति वचनात् । तुशब्देन श्रुतशेषमित्यत्रान्वितेनाग्न्यभावेऽपि पात्रे होमो व्यवच्छिन्नः ॥ २३६-२३७ ॥

( मिता० ) अग्नौकरणमाह द्वाभ्याम्—

अग्नौकरिष्यन्निति । हुतशेषमिति च । अनन्तरमग्नौकरिष्यन्घृतप्लुतं घृताक्तमन्नमादाय ब्राह्मणान् पृच्छेदग्नौकरिष्ये इति । घृतग्रहणं सूपशाकादिनिवृत्त्यर्थम् । ततस्तैः कुरुष्वेत्यभ्यनुज्ञातः प्राचीना(३)वीती शुद्धमन्नमुपसमाधाय मेक्षणेनादायावदानसंपदा जुहुयात् 'सोमाय पितृमते स्वधानमः । अग्नये कव्यवाहनाय स्वधानमः' इति पिण्डपितृयज्ञकल्पेनाग्नौ हुत्वा मेक्षणमनुप्रहृत्य हुतशेषं मृन्मयवर्जं यथालाभोपपन्नेषु विशेषतो रौप्येषु पित्रादिभाजनेषु दद्यात् न वैश्वदेवभाजनेषु । समाहितोऽनन्यमनस्कः । अत्र यद्यप्यग्नावित्यविशेषेणोक्तं तथाप्याहिताग्नेः सर्वाधानपक्षे औपासनाग्नेरभावात् पिण्डपितृयज्ञानन्तरभाविनि पार्वणश्राद्धे विहृ(४)तदक्षिणाग्नेः संनि-

(१) हुत्वाग्नि—इति क० पु० पाठः । (२) निरग्निपरि०—इति ख० पु० पाठः ।
(३) वीतीध्ममुप क. वीत्यग्निमुप. । (४) विहित ग. ।

धानाद्दक्षिणाग्नौ होमः 'कर्म स्मार्तं विवाहाग्नौ' इत्यस्यापवाददर्शनात् । यथाह मार्कण्डेयः—'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः । अनाहिताग्नि(१)स्त्वौपसथेऽग्न्यभावे द्विजेऽप्सु वा' ॥ इति । अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहिताग्नेरनाहिता(२)ग्नेरिवौपासनाग्नावेवाग्नौकरणहोमः । एवमन्वष्टकादिषु त्रिष्वपि पिण्डपितृयज्ञ(३)कल्पातिदेशात् । काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः । यदाहुर्गृह्यकाराः—'अन्वष्टक्यं च पूर्वेद्युर्मासिमास्यथ पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥ चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते । पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि' ॥ अस्यार्थः—'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इत्यष्टका विहिता । तत्र नवम्यां यत्क्रियते तदन्वष्टक्यम् । सप्तम्यां क्रियमाणं पूर्वेद्युः । मासिमासि कृष्णपक्षे पञ्चमीप्रभृतिषु यस्यां कस्यांचित्तिथावन्वष्टक्यातिदेशेन यद्विहितम् । अमावास्यायां पिण्डपितृयज्ञानन्तरं यद्विहितं तत्पार्वणम् । स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु यद्विहितं तत्काम्यम् । अभ्युदये पुत्रोत्पत्त्यादिषु तडागारामदेवताप्रतिष्ठादिषु च यद्विहितं तदाभ्युदयम् । अष्टम्यां अष्टका विहिताः । एकोद्दिष्टम् । अत्रैकोद्दिष्टशब्देन सपिण्डीकरणं ल(४)क्षयति, तत्रैकोद्दिष्टस्यापि सद्भावात्, साक्षादेकोद्दिष्टे वह्न्यभावात् । अथवा गृह्यभाष्यकारमते साक्षादेकोद्दिष्टेऽपि पाणिहोमस्य सद्भावा(५)त्साक्षादेकोद्दिष्टमेव । एतेषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः । उत्तरेषु चतुर्षु पित्र्यब्राह्मणहस्ते । निरग्निकस्यापि प्रमीतपितृकस्य द्विजस्य पार्वणं नित्यमिति तस्यापि पाणावेव होमः । 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः' ॥ इति वचनात् । एवं काम्याभ्युदयैकाष्टकैकोद्दिष्टेषु पाणावेव होमः । 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' इति मनुस्मरणात् । पाणिदत्तस्य पृथग्ग्रास(६)प्रतिषेध उच्यते । यथाहुर्गृह्यकाराः—'अन्नं पाणितले दत्तं पू(७)र्वमद्यन्त्यबुद्धयः । पितरस्तेन तृप्यन्ति शेषान्न लभन्ति ते ॥ यच्च पाणितले दत्तं यच्चान्यदु-

(१) स्त्वौपसनेऽग्न्यभावे [illegible] । (२) ग्नेरप्यौपासना ख ग । (३) कल्पेनेति निर्देशात् क. ।
(४) लक्षयते ख । (५) सद्भावदेको क० । (६) प्रतिषेधश्च इष्यते ग० ।
(७) पूर्वमश्नन्त्यबुद्ध० ग० ।

पक्लिपतम्। एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते' ॥ इति ॥ २३६-२३७ ॥

दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ॥
कृत्वेदंविष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २३८ ॥

(वी० मी०) अन्नं हुतशेषातिरिक्तमपि पुरुषतृप्तिक्षमं दत्त्वा भाजनेषु 'परिविष्य पृथिवी ते पात्र'मिति मंत्रेण पात्रस्याऽन्नभाजनस्याऽभिमन्त्रणं कृत्वा परिविष्टेऽन्ने द्विजस्य श्राद्धब्राह्मणस्याङ्गुष्ठं 'इदंविष्णुरि'ति मन्त्रेण निवेशयेत्। एतदनन्तरमन्नोत्सर्गोऽन्नामिष्टमित्यादिश्लोकेनाऽन्यार्थपरेणापि वक्ष्यते । इह तदनभिधानं चानुत्सृष्टद्विजेष्टान्नपरिवेषणप्रतिपादकेनैव तदभिधाने ग्रन्थलाघवार्थम् ॥ २३८ ॥

(मिता०) अन्ननिवेदनम्—

दत्त्वान्नमिति। अन्नमोदनसूपपायसघृतादिकं भाजनेषु (१)दत्त्वा 'पृथिवी ते पात्र'मित्यादिना मन्त्रेण पात्राभिमन्त्रणं कृत्वा 'इदं विष्णुर्विचक्रमे' इत्यनयर्चा अन्ने द्विजाङ्गुष्ठं निवेशयेत्। तत्र च वैश्वदेवे यज्ञोपवीती विष्णो हव्यं रक्षेति। पित्र्ये प्राचीनावीती विष्णो कव्यं रक्षेति। 'विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात्'। इति मनुस्मरणात् ॥ २३८ ॥

सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम् ॥
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ २३९ ॥

(वी० मि०) व्याहृतित्रययुक्तां सावित्रीमृचं मधुवाता इत्यादित्र्यृचं च जप्त्वा यथासुखं जुषध्वमिति ब्राह्मणानुद्दिश्य श्राद्धकर्त्रा वाच्यम्। तेऽपि ब्राह्मणा वाग्यता मौनयुक्ता भुञ्जीरन्। (२)अपिशब्देन हास्यवर्जनादि समुच्चिनोति।

प्रहसन्निव यो भुङ्क्ते स नाप्याययते पितॄन्।

इत्यादिदेवलवचनात् ॥ २३९ ॥

(मिता०) सव्याहृतिकामिति। अनन्तरं विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेरिति यवोदकेन देवे निवेद्य, तथा पित्रे अमुकगोत्रायामुकशर्मणे इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेरिति तिलोदकप्रदानेन पित्रे निवेद्य, एवं पितामहाय प्रपि-

(१) कृत्वा ग०। (२) अपिशब्देन-इत्यारभ्य-वचनात्-इत्यन्तं क० पुस्तके नास्ति।

तामहाय च निवेद्यानन्तरमापोशानं दत्त्वा पूर्वोक्ताभिर्व्याहृतिभिः सहितां गायत्रीं 'मधुवाता' इति तृचं मधुमधुमध्विति त्रिवारं जप्त्वा यथासुखं जुषध्वमिति ब्रूयात्। 'सङ्कल्प्य पितृदेवेभ्यः सावित्रीं मधुमज्जपः। श्राद्धं निवेद्यापोशानं जुषध्वेऽपोऽथ भोजनम्' ॥ तथा— 'गायत्रीं त्रिः सकृद्वापि जपेद्व्याहृतिपूर्विकाम्। मधुवाता इति तृचं मध्वित्येतत्त्रिकं तथा' ॥ इति पारस्करादिवचनात्। भुञ्जीरंस्तेऽपि वाग्यताः। तेऽपि ब्राह्मणा वाग्यता मौनिनो भुञ्जीरन् ॥ २३९ ॥

अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥

(वी० मि०) इष्टं स्वस्य ब्राह्मणस्य तदपि हविष्यमेव श्राद्धयोग्यमेवाऽक्रोधस्त्वरारहितश्च सन् ब्राह्मणेभ्यो दद्यात्। चकाराद्व्यञ्जनाद्युपकरणान्तरपरिग्रहः ॥

आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ २४० ॥
अन्नमादाय तृप्ताः स्थ शेषं चैवाऽनुमान्य च ॥
तदन्नं विकिरेद् भूमौ दद्याच्चाऽपः सकृत्सकृत् ॥२४१॥
सर्वमन्नमुपादाय सलिलं दक्षिणामुखः ॥
उच्छिष्टसन्निधौ पिण्डान् (१)दद्याद्वै पितृयज्ञवत् ॥२४२॥

आतृप्तेः ब्राह्मणतृप्तिपर्यन्तं पूर्वजपं व्याहृतिगायत्रीमधुवातादिरूपं जप्त्वा पवित्राणि पुरुषसूक्तादीनि तथाशब्दाद्रक्षोघ्न्यादीनि, जप्त्वा श्राद्धशेषमन्नमादाय भूमौ विकिरेत् अग्निदग्धा इति मन्त्रेण प्रक्षिपेत्ततः सकृत्सकृत् इदं ते प्रत्यपोशानमित्यपो दद्यात्। ततः तृप्ताः स्थेति पृष्टेति शेषः, अर्थात् तृप्ताः स्मेति तैरुत्तरिते शेषं तच्छ्राद्धपाकीयमन्नं अनुमान्य शेषमन्नं किं क्रियतामिति श्राद्धकर्तृप्रश्नानन्तरमिष्टैः सह भुज्यतामिति ब्राह्मणान् प्रतिविषयतां प्राप्य सर्वं सर्वविधं सकलजातीयव्यञ्जनादिसहितमन्नं सतिलमुपादाय पिण्डाकारं कृत्वा ब्राह्मणोच्छिष्टसन्निधौ पितृयज्ञरीत्या पिण्डान् दक्षिणाभिमुखः प्रदद्यात्। तुशब्देन तृप्त्यनन्तरं जपव्यवच्छेदः। शेषं चेति चकारो व्यञ्जनादिसमुच्चयः। एवकारो अनुमान्येत्यनेनाऽन्वितोऽनुमत्याऽऽवश्यकत्वप्रदर्शनाय। द्वितीयचकारेण पिण्डमह

(१) प्रदद्यात्–इति ख० पुस्तके पाठः।

करिष्य इति प्रश्नसमुच्चयः । प्रश्नसामर्थ्यादुत्तरमपि बोध्यम् । दद्याच्चेति चकारेणाऽन्नविकिरिणोत्तरमाचमनं समुच्चिनोति । अत एवाचमने दक्षिणामुखत्वनिवृत्तेः । पुनस्तत्प्राप्त्यर्थं दक्षिणाभिमुख इत्युक्तम् । तच्चापो दद्यादित्यादौ सर्वत्रान्वितम् ॥२४०-२४२॥

(मिता०) अन्नमिष्टमिति । अन्नं भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पञ्चविधं इष्टं यद्ब्राह्मणाय प्रेताय कर्त्रे वा रोचते । हविष्यं श्राद्धहविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकमहाशल्कैलाशुण्ठीमरीचहिङ्गुगुडशर्कराकर्पूरसैन्धवसांभरपनसनालिकेरकदलीबदरगव्यपयोदधिघृतपायसमधुमांसप्रभृति स्मृत्यन्तरप्रसिद्धं वेदितव्यम् । हविष्यमित्यनेनैवायोग्यस्य स्मृत्यन्तरप्रतिषिद्धस्य कोद्रवमसूरचणककुलित्थपुलाकनिष्पावराजमाषकूष्माण्डवा(१)र्ताकबृहतीद्वयोपोदकीवंशाङ्कुरपिप्पलीवचाशतपुष्पो(२)षधविडलवणमाहिषचामरक्षीरदधिघृतपायसादीनां निवृत्तिः । अक्रोधनः क्रोधहेतुसंभवेऽपि । अत्वरोऽव्यग्रः । आतृप्तेर्दद्यादिति सम्बन्धः । तुशब्दाद्यथा किञ्चिदुच्छिष्यते तथा दद्यात् । उच्छेषणस्य दासवर्गभागधेयत्वात् । 'उच्छेषणं भूमिगतमजिह्मस्याशठस्य च । दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते' ॥ इति ( ३ । २४६ ) मनुस्मरणात् । तथा आतृप्तेः पवित्राणि पुरुषसूक्तपावमानीप्रभृतीनि जप्त्वा तृप्तान् ज्ञात्वा पूर्वोक्तं जपं च सव्याहृतिकामित्युक्तं जपेत् ॥ २४० ॥

(मिता०) अन्नमादायेति । अनन्तरं सर्व(३)मन्नमादाय तृप्ताः स्थ इति तैरुक्तः शेषमप्यस्ति, किं क्रियतामिति पृष्ट्वा इष्टैः सहोपभुज्यतामित्यभ्युपगम्य तदन्नं पितृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसंनिधौ दक्षिणाग्रदर्भान्तरितायां भूमौ तिलोदकप्रक्षेपपूर्वकं 'ये अग्निदग्धा' इत्यनयर्चा निक्षिप्य पुनस्तिलोदकं निक्षिपेत् । तदनन्तरं ब्राह्मणहस्तेषु गण्डूषार्थं सकृत्सकृदपो दद्यात् ॥ २४१ ॥

(मिता०) पिण्डप्रदानम्—

सर्वमिति । पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादायाग्निसंनिधौ पिण्डान्दद्यात् । तदभावे ब्राह्मणार्थं (४)कृतमन्नं सर्वमुपादाय सतिलं तिलमिश्रं दक्षि-

(१) र्तुनाकबृहती क० । (२) पुष्पोषधिविड क० पुष्पोपरविड ग० ।
(३) मविरत क० । (४) सार्ववर्णिकमन्नमुपादाय क० ।

णामुख उच्छिष्टसंनिधौ पिण्डपितृयज्ञकल्पेन पिण्डान् दद्यात् ॥२४२॥

(वी० मि०) पित्रादिकश्राद्धकर्म मातामहादित्रयश्राद्धेऽप्यतिदिशति—

मातामहानामप्येवं दद्यादाचमनं ततः ॥

आद्यर्थकबहुवचनेन त्रिकसद्भावः । अपिशब्देनाभ्युदयिके मात्रादित्रिकसद्भावः । ततः पिण्डदानानन्तरं श्राद्धिब्राह्मणेभ्य आचमनीयं दद्यात् ।

गन्धादीन्निःक्षिपेत्तूष्णीं तत आचामयेद् द्विजान् ।

इति वचनात् ॥

स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ॥ २४३ ॥

(वी० मि०) ततो ब्राह्मणाचमनानन्तरं स्वस्तिपदं वाच्यं ब्राह्मणद्वारा वाचनीयं यत्र तत् स्वस्तिवाच्यं स्वस्तिवाचनमिति यावत् । अत्र स्वस्त्युच्यतामिति प्रैषानन्तरं ब्राह्मणैरस्तु स्वस्तीति वाच्यम् । इदन्तु स्वस्तिवाचनं आश्वलायनमतेऽधिकं कात्यायनादिभिरलिखितत्वात् । अक्षय्योदकं ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणे दत्तदन्नपानादिकमक्षय्यमस्त्वित्यादि वाक्यैः तिलाज्यमधुयुकोदकदानं पित्रादिभ्यः षड्भ्यः कुर्यात् । अक्षय्यमुदकमास्मिन्निति व्युत्पत्त्यादानक्रियैवाऽक्षय्योदकशब्दार्थः । चो वार्थः । एवकारश्च स्वस्तिवाचनव्यवच्छेदार्थः । तेन स्वस्तिवाचनपूर्वकं तदपूर्वकं वाऽक्षय्योदकदानं कुर्यादिति पर्यवस्यति ॥ २४३ ॥

(मिता०) अक्षय्योदकदानम्—

मतामहानामिति । मातामहानामपि विश्वेदेवावाहनादि पिण्डप्रदानपर्यन्तं कर्म(१)मेवमेव कर्तव्यम् । अनन्तरं ब्राह्मणानामाचमनं दद्यात् । स्वस्तिवाच्यं ततः कुर्यात् स्वस्ति—इति ब्रूतेति ब्राह्मणान्स्वस्ति वाचयेत् । तैश्च स्वस्तीत्युक्ते अक्षय्यमस्त्विति ब्रूतेति ब्राह्मणहस्तेपूदकदानं कुर्यात् । तैश्चाक्षय्यमस्त्विति वक्तव्यम् ॥ २४३ ॥

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥

वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥ १४४ ॥

(१) कर्मेव कर्तव्यं ग. ।

ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥

( वी० मि० ) अनन्तरं स्वशक्त्यनुसारेण हिरण्यरजतरूपां देवपितृश्राद्धयोर्दक्षिणां ब्राह्मणेभ्यो दत्त्वा स्वधाकारमुदाहरेत् । स्वधां वाचयिष्य इति ब्राह्मणान् प्रतिवदेत् । ततो वाच्यतामिति ब्राह्मणैरनुज्ञातः प्रकृतेभ्यः पितृपितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्वधोच्यतामिति ब्राह्मणान् प्रतिवदेत् । एवमुक्ते सति च ब्राह्मणा अस्तु स्वधेति ब्रूयुः । भूमौ भूमिसंलग्नेषु सपवित्रकुशाच्छादितेषु पिण्डेषु 'जलमूर्जं वहन्ति'रित्यादिमन्त्रेण सिञ्चेत् । दक्षिणाभिमुखधारारूपेण क्षिपेत् । यदाह छन्दोगपरिशिष्टम् —

पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ।

अत्र स्वधावाचनात्पूर्वं दक्षिणादानं कल्पान्तरं कात्यायनादिभिर्विपरीतक्रमाभिधानात् ॥

विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥२४५॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो माविगमद्बहु देयं च नोऽस्त्विति ॥ २४६ ॥

(वी० मि०) विश्वेदेवाः प्रीयन्तां इत्युदाहरेदिति सम्बध्यते। चकारेणैतत्पूर्वकृत्यं पिण्डोत्थापनं समुच्चीयते । अथ श्राद्ध(१)विप्रैः प्रीयन्तामित्युक्ते सति 'दातार' इत्यादिकं जपेत् । चकारेण 'गोत्रं नो वर्द्धता'मिति श्राद्धकर्तृवचनं वर्द्धतामिति ब्राह्मणेन प्रतिवचनं समुच्चिनोति । इतिकारो न समाप्त्यर्थः किन्तूपक्रमार्थकः । तेन—

अन्नं (२)च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥

एताः सत्याशिषः सन्तु—

इत्येतत्पर्यन्तस्य जपः सिद्ध्यति ॥ २४४–२४६ ॥

( मिता० ) स्वधावाचनम्—

दत्त्वेति । अनन्तरं यथाशक्ति हिरण्यरजतादिदक्षिणां दत्त्वा स्वधां वाचयिष्य इत्युक्त्वा तैर्ब्राह्मणैर्वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः

(१) श्राद्धविप्रैः —इति ख० पु० पाठः ।
(२) अन्नं च—इत्यारभ्य सन्तु-इत्येतत्पर्यन्तं कं० पुस्तके नास्ति ।

पित्रादिभ्यो मातामहादिभ्यश्च स्वधोच्यतामिति स्वधाकारमुदाहरेत् ॥ २४४ ॥

( मिता० ) ब्रूयुरिति । ते च ब्राह्मणा अस्तु स्वधेति ब्रूयुः । तैरेवमुक्ते अनन्तर कमण्डलुना उदक भूमौ सिञ्चेत् । ततो विश्वेदेवाः प्रीयन्तामिति ब्रूयात् । ब्राह्मणैश्च प्रीयन्तां विश्वेदेवा इत्युक्ते इदमनन्तरोच्यमानं जपेत् ॥ २४५ ॥

( मिता० ) ब्राह्मणप्रार्थना—

दातार इति । दातारो हिरण्यादेः नोऽस्माकं कुलेऽभिवर्धन्तां बहवो भवन्तु । वेदाश्च वर्धन्तां अध्ययनाध्यापनतदर्थज्ञानानुष्ठान द्वारेण । सन्ततिश्च पुत्रपौत्रादिपरम्परया । श्रद्धा च विहिते कर्मण्यास्था नोऽस्माक मा व्यगमत् मा गच्छतु । 'न माङ्योगे' इत्यडभाव । देय च हिरण्यादि बहु अपर्यन्तं अस्माक भवत्विति जपेदित्यन्वय. २४६

इत्युक्त्वोक्त्वा(१) प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥
वाजेवाज इति प्रीतान् पितृपूर्वं विसर्जनम् ॥ २४७ ॥

इति दातार इत्याद्युक्ताः प्रियाश्च ब्राह्मणप्रीतिकराश्च वाच उक्त्वा दक्षिणाग्रहणेन प्रीतान् ब्राह्मणान् प्रणिपत्य 'वाजे वाजेवत' इत्यादि मन्त्रेण विसर्जयेत् स्वस्थानगमनार्थमभ्यनुजानीयात्। देवपूर्वकत्यस्य औत्सर्गिकस्याऽपवादार्थमाह-पितृपूर्वमिति। विसर्जन पितृब्राह्मणपूर्वक कार्यमित्यर्थ । प्रीतानित्यत्र प्रीत इति क्वचित्पाठ. ॥ २४७ ॥

( मिता० ) इत्युक्त्वेति । एव पूर्वोक्त प्रार्थनामन्त्र जप्त्वा, उक्त्वा च प्रिया वाचः धन्या वय भवच्चरणयुगलरज पवित्रीकृतमस्मन्मन्दिर शाकाद्यन्नक्लेशमविगणय्य भवद्भिरनुगृहीता वयमित्येवरूपाः । प्रणिपत्य प्रदक्षिणापूर्वं नमस्कृत्य विसर्जयेत् । कथ विसर्जयदित्याह- 'वाजे वाजेवत वाजिनोन' इत्यनयर्चा पितृपूर्वं प्रपितामहादि विश्वे देवान्त दर्भान्वारम्भेण 'उत्तिष्ठन्तु पितर' इति प्रीत सुप्रीतमना विसर्जन कुर्यात् ॥ २४७ ॥

( वी० मि० ) उक्त एव विसर्जनेऽर्घ्यपात्रोत्तानीकरणोत्तरकालक-

(१) इत्युक्त्वा च—इति ख० पुस्तके पाठ ।

तन्यत्वरूपं विशेषमाह—

यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ॥
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥ २४८ ॥

यस्मिन्नर्घ्यपात्रे तेऽर्घ्यसम्बन्धिनः संस्रवाः शेषजलरूपाः पूर्वं निवेशिता धृतास्तत्पितृपात्रं पूर्वं न्युब्जीकृतमुत्तानं कृत्वा विप्रान्विसर्जयेदित्यर्थः । पितृपात्रोत्तानीकरणनाऽर्थतः पितामहप्रपितामहपात्रयोर्मातामहानामप्येवमतिदेशता मातामहादिपात्राणामुत्तानीकरणमिति स्पष्टत्वाद्विशिष्य ग्रन्थकृता नोक्तम् ॥ २४८ ॥

( मिता० ) यस्मिन्निति । यस्मिन्नर्घ्यपात्रे पूर्वमर्घ्यदा(१)नान्ते संस्रवा ब्राह्मणहस्तगलितार्घ्योदकानि निवेशिताः स्थापितास्तदर्घ्यपात्रं न्युब्जं तदुत्तानमूर्ध्वमुखं कृत्वा विप्रान्विसर्जयेत् । एतच्चाशीर्मन्त्रजपादूर्ध्वं वाजेवाजे इत्यतः प्राग्द्रष्टव्यम् । कृत्वा विसर्जयेदिति क्त्वाप्रत्ययश्रवणात् ॥ २४८ ॥

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥

( वी० मि० ) (२)विसृष्टान् ब्राह्मणान् गच्छतः प्रदक्षिणं यथा स्यादेवमनुव्रज्याऽनुगम्य पितृसेवितं श्राद्धावशिष्टान्नं भुञ्जीत । अत्र विशेषो मत्स्यपुराणे—

बहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् ।
बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः ॥

अत्र चैकादश्यादौ शेषान्नस्य भोजनाभावेऽप्याघ्राणमात्रेण शास्त्रार्थनिर्वाहः । 'एकादश्यादौ पित्र्यमाघ्रेयं तच्चैव प्राशितं नैवाप्राशितं भवती'ति कालादर्शेलिखितश्रुतेरित्याहुः ॥

ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥ २४९ ॥

( वी० मि० ) तां रजनीं तदहोरात्रं व्याप्य ब्रह्मचारी—

स्मरणं कीर्त्तनं केलीः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।

(१) दानानन्तरं ते संस्रवा ग. ।
(२) वि ष्टान्—इत्यारभ्य पितृसेवितं-इत्येतावान् ग्रन्थः क० पुस्तके नास्ति ।

त्युक्ताऽष्टविधमैथुननिवृत्तिमान् श्राद्धिब्राह्मणैः सह भवेदित्यर्थः । श्राद्धीयब्राह्मणा अपि ब्रह्मचारिणो भवेयुरिति यावत् । तुशब्देन ऋतुमत्या अपि भार्याया गमनं तस्यां रजन्यां व्यवच्छिद्यते । एवञ्च ऋतुगमनयोग्यरात्र्यन्तरासंभवे श्राद्धकर्त्रा श्राद्धिब्राह्मणैश्च तदनुगमनं न कार्यमेव । शिष्टाचारोऽप्येवमिति नात्र युक्त्यन्तरगवेषणं क्रियत इति दिक् ॥ २४९ ॥

( मिता० ) प्रदक्षिणमिति । अनन्तरमासीमान्तं ब्राह्मणाननुव्रज्य तैरास्यतामित्यनुज्ञातस्तान्प्रदक्षिणीकृत्य प्रतिनिवृत्तः पितृसेवितं श्राद्धशिष्टमिष्टैः सह भुञ्जीत । नियम एवायं न परिसंख्या । मांसे तु यथारुचीति द्विजकाम्ययेत्यभोक्तम् । यस्मिन्दिने श्राद्धं कृतं तत्सम्बन्धिनीं रात्रिं भोक्तृभिर्ब्राह्मणैः सह कर्ता ब्रह्मचारी भवेत् । तुशब्दात्पुनर्भोजनादिरहितोऽपि भवेत् । 'दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम् । रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत् ॥ पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत् ॥ इति वचनात् ॥ २४९ ॥

( वी० मि० ) सर्वश्राद्धप्रकृतित्वेन प्रथमं पार्वणमभिधाय तद्वि[illegible] पञ्चमि—

[illegible]

[illegible] ॥२५०॥

एवं पार्वणरीत्या वृद्धौ पुत्रजन्मकन्याविवाहादौ । अत्र तु विशेषः प्रदक्षिणा आवृत् अनुक्रमो यस्य स यजमानः । तेनाऽप्रदक्षिणत्वस्य पार्वणोक्तस्य बाधः एतच्च सकलपित्र्यधर्मनिषेधोपलक्षणम् । नान्दीमुखानित्यनेन नान्दीमुखत्वविशिष्टानां पित्रादीनां देवतात्वमुक्तं, तेन 'नान्दीमुखपित'रित्यादिप्रयोगः सिद्ध्यति । दधि प्रसिद्धं, कर्कन्धूर्बदरीफलं, ताभ्यां मिश्रान् । पिण्डान् प्रकृतश्राद्धद्रव्यनिर्मितान् कुर्यात् । पिण्डरहितमप्याभ्युदयिकश्राद्धमाधुनिकशिष्टा आचरन्ति । हारीतस्तु पक्षे—

अग्नौकरणमर्घ्यं चाऽऽवाहनं चाऽवनेजनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत् ॥

इति वचनादग्नौकरणादिबाधः । यवैश्च तिलसाध्याः सर्वाः

कार्याः 'यवैस्तिलार्थे' इति कात्यायनोक्तेः । पितृशब्देन चात्र मात्रादिनिक्रमप्युपलक्ष्यते ।

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम् ॥

इति शातातपवचनात् । मातॄणां श्राद्धं मातृश्राद्धम् । अत्र चाऽन्ये स्वधापदस्थाने स्वाहापदप्रयोगाद्या विशेषाः स्मृत्यन्तरेभ्योऽवगन्तव्याः । एवं वक्ष्यमाणैकोद्दिष्टसपिण्डनयोरपि पार्वणविशेषरूपास्ते ते शेषा इहाऽनुक्ता ग्रन्थान्तरेषु द्रष्टव्याः । विशिष्य तु ग्रन्थगौरवभयान्नेह प्रदर्श्यन्ते ॥ २५० ॥

( मिता० ) एवं पार्वणश्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह—

एवमिति । वृद्धौ पुत्रजन्मादिनिमित्ते श्राद्धे । एवमुक्तेन प्रकारेण पितॄन्यजेत पूजयेत् । तत्र विशेषमाह-प्रदक्षिणावृत्क इति । प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्यस्यासौ प्रदक्षिणावृत्कः प्रदक्षिणप्रचार इति यावत् । नान्दीमुखानिति पितॄणां विशेषणम् । अतश्चावाहनादौ नान्दीमुखान्पितॄनावाहयिष्ये नान्दीमुखान्पितामहानित्यादिप्रयोगो द्रष्टव्यः । कथं यजेतेत्याह-दधिकर्कन्धूमिश्रान । कर्कन्धूर्बदरीफलम् । दध्ना बदरीफलैश्च मिश्रान्पिण्डान्दत्त्वा यजेतेति सम्बध्यते । तिलसाध्याः सर्वाः क्रिया यवैः कर्तव्याः । अत्र च ब्राह्मणसंख्या दर्शितैव 'युग्मान्दैवे यथाशक्ति' इत्यत्र । प्रदक्षिणावृत्कत्वादिपरिगणनमन्येषामपि स्मृत्यन्तरोक्तानां विशेषधर्माणां प्रदर्शनार्थम् । यथाहाऽऽश्वलायनः-'अथाभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात् । यवोसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहा' इति यवावपनम् । विश्वेदेवा इदं वोऽर्घ्यं, नान्दीमुखाः पितर इदं वोर्घ्यमिति यथालिङ्गमर्घ्यदानम् । पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति । 'मधुवाता ऋतायत' इति तृचस्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत् । 'अक्षन्नमीमदन्त' इति षष्ठीम् । आचान्तेषु भुक्ताशयान्गोमयेनोपलिप्य प्राचीनाग्रान्दर्भान्संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यादित्यादि । यद्यपि पितॄन्यजेतेति सामान्येनोक्तं

तथापि श्राद्धत्रय क्रमश्च स्मृत्यन्तरादवगन्तव्य । यथाह शातातप – 'मातु श्राद्ध तु पूर्वं स्यात्पितॄणा तदनन्तरम् । ततो मातामहाना च वृद्धौ श्राद्धत्रय स्मृतम्' ॥ इति ॥ २५० ॥

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २५१ ॥

उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ॥
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥ २५२ ॥

( वी०मि० )एकमेवोद्देशविषयो यस्मिन् तदेकोद्दिष्ट प्रेतश्राद्ध सांवत्सरिकादि, दैव विश्वेदेवश्राद्ध, तद्वर्जित एक एवार्घ्यो यत्र तदेकार्घ्यं,एकमेव पात्रन्यसनीय पवित्र यत्र तदेकपवित्रक,अनयो कर्मधारय । आवाहनेनाऽग्नौकरणेन रहित, अपसव्यवत् अपसव्यादिपार्वणधर्मयुक्तम् । अनेन सन्निहितवृद्धिश्राद्धप्रकृतिकत्वस्युदास । अत्र च दैवश्राद्धादे प्रकृतिविकृतिन्यायेन प्रसक्तस्या निषेध । यद्वा तत्पर्युदासे पार्वणधर्मान्तराभ्यनुज्ञानमिति बोध्यम् । अत्र चाऽर्घैक्यादेव पवित्रैक्यलाभे (१)तदभिधानमेकपात्रात्मकपवित्रलाभार्थमित्यपव्याख्यान श्रुतिप्राप्तेऽर्थे व्याख्यानस्यावकाशात् । अन्यथैकोद्दिष्टत्वादेवार्घैक्ये लब्धे एकार्घ्यमिति व्यर्थं स्यादिति दिक् । हिशब्दो हेतौ, एकोद्दिष्टस्य एकार्घ्यैकपवित्रकत्वबीजत्वात् । उपतिष्ठतामित्यादि । तत्र चाऽक्षय्योदकदानवाक्यस्थितस्याऽक्षय्यमस्त्वित्यस्य स्थाने उपतिष्ठतामिति वदेत् । विप्रविसर्जने वाजेवाज इति मन्त्रस्थानेऽभिरम्यतामिति वदेत । च श्राद्धिब्राह्मणपक्षे । हशब्द पादपूरणे, 'तु हि च स्म ह वै पादपूरणे' इत्यमरकोशात् ॥ २५१–२५२ ॥

( मिता० ) एकोद्दिष्टमाह—

एकोद्दिष्टमिति । एकोद्दिष्ट एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टमिति कर्मनामधेयम् । शेष पूर्ववदाचरेदित्युपसहारात् । पार्वणसकलधर्मप्राप्तौ विशेषोऽभिधीयते । दैवहीन विश्वेदेवरहित एकार्घ्यं पात्रमेकदर्भपवित्रक च आवाहनेनाग्नौकरणहोमेन च रहितम् ।

(१) भाव—इति क० पु० पाठ ।

अपसव्यवत् प्राचीनावीतब्रह्मसूत्रवत्। अनेनानन्तरोक्ताभ्युदयिके यज्ञोपवीतित्वं सूचयति ॥ २५१ ॥

(मिता०) किंच—

उपतिष्ठतामिति। यदुक्तं—'स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च' इति तत्राक्षय्यस्थाने उपतिष्ठतामिति वदेत्। विप्रविसर्जने कर्तव्ये 'वाजेवाजे' इति जपान्ते दर्भान्वारम्भेणाभिरम्यतामिति ब्रूयात्। ते चाभिरताः स्म इति ब्रूयुः। इह प्रसिद्धम्। शेषं पूर्ववदिति यावत्। एतच्च मध्याह्ने कर्तव्यम्। यथाह देवलः—'पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्' ॥ इति। भुञ्जीत पितृसेवितमित्यस्यैकोद्दिष्टविशेषे निषेधो दृश्यते। 'नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत्। दंपत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन' ॥ इति। नवश्राद्धं च दर्शितम्। 'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥ इति ॥ २५२ ॥

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २५३ ॥

ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥
एतत्सापिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५४ ॥

(वी० मि०) पात्रचतुष्टयं गन्धोदकतिलैर्युक्तमर्घ्यार्थं सपिण्डीकरणे कुर्यात्। तत्र पात्रचतुष्टयमध्ये पितॄणां यैः सह प्रेतस्य सपिण्डीकरणं तेषां पात्रेषु संस्रववत्सु प्रेतपात्रस्थं संस्रवं 'ये समानाः समनस' इत्यादिभ्यां तृग्भ्यां प्रसेचयेत् योजयेत्। प्रेतपात्रास्थितत्वविशिष्टस्यैव संस्रवस्य सेचनलाभाय प्रेतपात्रपदेन लक्षणया संस्रवो बोधितः। प्रशब्देन सामान्यतो विहितार्घ्योत्सर्गाबाधपुरस्सरत्वलक्षणः। जलविभागपूर्वकत्वलक्षणश्च प्रकर्ष उक्तः।

ये समाना इति द्वाभ्यामाद्यन्तु विभजेत्त्रिधा।

इति पिण्डं प्रक्रम्याऽभिधाय—

एष एव विधिः पूर्वमर्घ्यपात्रचतुष्टये।

इति वचनात्। शेषमविरुद्धमाकाङ्क्षितं च धर्मं पूर्ववत् पार्वण-

वदाचरेत् कुर्यात् । ननु पात्रचतुष्टयमित्यादिनाऽनेकोद्देश्यकत्वला-
भात्सपिण्डीकरणस्य पार्वणत्वे प्रसक्ते श्रीकर्तृकत्वाभाव स्त्र्युपदेश्य-
कत्वाभावं च स्मृत्यन्तरसिद्धमापद्येतेति शङ्कायामस्यैकोद्दिष्टत्वमाह।
एतत्सपिण्डीकरण प्रेतोद्देश्यकद्रव्यत्यागरूपमेकोद्दिष्टमतः स्त्रियाः
कलापम्(?)। अपिशब्दात् स्त्रियैव ॥ २५३-२५४ ॥

( मिता० ) सपिण्डीकरणमाह—

गन्धोदकतिलैरिति । ये समाना इति । गन्धोदकतिलैर्युक्तं पात्रचतुष्टय अर्घ्यसिद्धयर्थं पूर्वोक्तविधिना कुर्यात्। तिलैर्युक्त पात्रच-तुष्टयमिति वदता पितृवर्गे चत्वारो ब्राह्मणा दर्शिताः। वद्वदैवे द्वौ स्थितावेव । अत्र प्रेतपात्रोदक किञ्चिदवशेष त्रिधा विभज्य पितृपा-त्रेषु सेचयेत् 'ये समाना समनस' इति द्वाभ्यां मन्त्राभ्याम्। शेष निवृत्तेद्यावाहनादिविसर्जनान्तं पूर्ववत्पार्वणवदाचरेत् । प्रेता-र्घ्यपात्रावशिष्टोदकेन प्रेतस्थानब्राह्मणहस्तेऽर्घ्यं दत्त्वा शेषमेकोद्दि-ष्टवत्समापयेत्। पित्र्येषु त्रिषु पार्वणवत् एतत्सपिण्डीकरणमनन्त-रोक्तमेकोद्दिष्टं च । तत अयुक्त स्त्रिया अपि मातुरपि कर्तव्यम्। एवं वदता पार्वण मातृश्राद्ध पृथक्कर्तव्यमित्युक्त भवति। अत्र प्रेतशब्द पितु प्रपितामहविषयं केचिद्वर्णयन्ति। तस्य त्रिष्वन्तर्भावेन सपि-ण्डीकरणोत्तरकाल पिण्डदानादिनिवृत्त्युपपत्तेः। समनन्तरमृत(१)-स्योत्तरत्र पिण्डोदकदानानुवृत्तेरन्तर्भावो न युक्तः । अत एवाह यम—'य सपिण्डीकृत प्रेत पृथक्पिण्डे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते' ॥ इति। प्रकर्षेण इत प्रेत इति चतुर्थे-ऽपि प्रेतशब्दोपपत्तेः । 'प्रेतेभ्य एव निपृणीयात्' इति च प्रयोग-दर्शनात् । अपि च—'सपिण्डीकरण श्राद्ध देवपूर्व नियोजयेत्। पितॄनेवाशयेत्तत्र पुनः प्रेत न निर्दिशेत्' ॥ इति सपिण्डीकरणोत्त-रकाल प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते स चानन्तरमृतस्य न सम्भवति अमावास्यादौ श्राद्धविधानात्। 'सापिण्डता तु पुरुषे सप्तमे विनिवर्तते' इत्येतदपि वचन चतुर्थस्य त्रिष्वन्तर्भाव एव घटते 'चतुर्थस्य पिण्डत्रयव्यापित्वं पञ्चमस्य पिण्डद्वयव्यापित्वं षष्ठस्यै-कपिण्डव्यापित्व सप्तमे विनिवृत्ति.' इति । पितृपात्रेष्वित्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे घटते नान्यथा, पितामहप्रमुखत्वात् ।

---

(१) इदं पदं नास्ति क ।

तस्मात्पितृपात्रेषु प्रसेचयेदिति, पितुः प्रपितामहपात्रं पित्रादिपात्रेषु प्रसेचयेदिति तदयुक्तम्। न ह्यत्र पिण्डसंयोजनमुत्तरत्र पिण्डदानादिनिवृत्तिप्रयोजकम्, अपि तु पितुः प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थम्। प्रेतत्वं च क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था। यथाह मार्कण्डेयः—'प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता। क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन' ॥ इति। पितृत्वप्राप्तिश्च वस्वादिश्राद्धदेवतासम्बन्धः। प्राक्तनैकोद्दिष्टसहितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते। 'यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश। प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि' ॥ इति। तथा—'चतुरो निर्वपेत्पिण्डान् पूर्वं तेषु स(१)मावपेत्। ततःप्रभृति वै प्रेतः पितृसामान्यमश्नुते' ॥ इत्यादिवचनात्। 'यः सपिण्डीकृतं प्रेतम्' इत्यनेनापि पृथगेकोद्दिष्टविधानेन पिण्डदाननिषेधात्पार्वणविधानेन सह पिण्डदानमवगम्यते। त(२)च्च सांवत्सरिकपाक्षिकैकोद्दिष्टविधा(३)नेनापोद्यते। यदपि पुनः प्रेतं न निर्दिशेदिति, तदपि प्रेतशब्दं नोच्चारयेत् अपि तु पितृशब्दमेवेत्येवमर्थम्। न च प्रकर्षगमनात्तत्रैव प्रेतशब्दः। यतो विशिष्टदुःखानुभवावस्था प्रेतशब्देन रूढ्याभिधीयत इत्युक्तम्। योऽपि प्रमीतमात्रे प्रेतशब्दप्रयोगः सोऽपि भूतपूर्वगत्या। 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति च प्रथमस्य पिण्डस्य चतुर्थव्यापित्वात् द्वितीयस्य पञ्चमव्यापित्वात् तृतीयस्य षष्ठव्यापित्वात् सप्तमे विनिवर्तत इत्येवमपि घटते। अपि च निर्वाप्यपिण्डान्वयेन न सापिण्ड्यम(४)व्यापकत्वात्, अपित्वेकशरीरावयवान्वयेनेत्युक्तम्। पितृशब्दश्च प्रेतत्वनिवृत्त्या श्राद्धदेवता(५)भूयं गतेषु वर्तत इति पितृपात्रेष्वित्यविरुद्धम्। तस्मादनन्तराचार्येण पूर्वपक्षद्वारेण परमतं दर्शितमित्यर्थः। मृतपात्रोदकस्य तत्पिण्डस्य च पितृपात्रेषु तत्पिण्डेषु च संसर्जनमिति स्थितम्। आचार्यस्तु परमतमेवोपन्यस्तवान्। एतच्च पितुः सपिण्डीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यम्। पितरि प्रेते पितामहे प्रपितामहे वा जीवति सपिण्डीकरणं नास्त्येव। 'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता' इति वच·

(१) समानयेत् क. समायपेत् ख.। (२) एतच ख०।
(३) विधानेनोपपद्यते क० विधानायोपपाद्यते ख०। (४) अव्यापित्वादपि तु क०।
(५) देवतात्वमुपगतेषु ख०।

नात्। यत्तु मनुवचनं (३।२२१)—'पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः। पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्' ॥ इति, तदपि पितृशब्दप्रयोगनियमाय न पिण्डद्वयदानार्थम्। कथम्—'ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्। पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः' ॥ सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः। पक्षद्वयेऽपि कथं निर्वपेदित्याह—'पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्' इत्याद्यन्तग्रहणेन सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इत्येवं प्रयोगो न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वान्तत्वम्। अतश्च पित्रादिशब्दानां सम्बन्धिवचनत्वात् ध्रियमाणेऽपि पितरि पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति, पितामहे ध्रियमाणे पितामहस्य पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति। अतश्च पिण्डपितृयज्ञे 'शुन्धन्तां पितर–'इत्यादिमंत्राणामूहो न भवति। यदपि विष्णुवचनं—'यस्य पिता प्रेतः स्यात्स पितृपिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्' इति। तस्यायमर्थः—पितामहे ध्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय पितुर्यः पितामहस्ततः पराभ्यां द्वाभ्यां दद्यात्। पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति। शब्दप्रयोगनियमस्तु पूर्वोक्त एव। एवं गोब्राह्मणादिहतस्यापि सपिण्डीकरणाभावो वेदितव्यः। यथाह कात्यायनः—'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ' ॥ इति। गोब्राह्मणहतस्य पितुः सपिण्डीकरणसम्भवे तमुल्लंघ्य पितामहादिभ्यः पार्वणविधानमनुपपन्नमिति सपिण्डीकरणाभावोऽवगम्यते। स्मृत्यन्तरेऽपि-'ये नराः सन्ततिच्छिन्ना नास्ति तेषां सपिण्डता। न चैतैः सह कर्तव्यान्येकोद्दिष्टानि षोडश' ॥ इति। मातुः पिण्डदानादौ गोत्रे विप्रतिपत्तिः। भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति उभयत्र वचनदर्शनात्। 'स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे। स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया' ॥ इत्यादिभर्तृगोत्रविषयं वचनम्। 'पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः। जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम्' ॥ इत्यादिपितृगोत्रविषयम्। एवं विप्रतिपत्तावासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव। तत्र तत्र विशेष-

वचनात् दानस्यानिवृत्तेश्च। ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथन्तरसामवत् विकल्प एव। तत्र च 'येनास्य पितरो याता येन याताः पितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति'॥ इति वचनात् वंशपरम्परायातसमाचरणेन व्यवस्था। एवंविधविषयव्यतिरेकेणास्य वचनस्य विषयान्तराभावात्। यत्र पुनः शास्त्रतो न व्यवस्था नाप्याचारतस्तत्र 'आत्मनस्तुष्टिरेव वा' इति वचनादात्मनस्तुष्टिरेव व्यवस्थापिका, यथा-'गर्भाष्टमेऽष्टमे वाब्दे' इति। मातुः सपिण्डीकरणेऽपि वि(१)रुद्धानि वाक्यानि दृश्यन्ते तत्र-'पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम्'। तथा भर्त्रापि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणं कर्तव्यमिति पैठीनसिराह-'अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्'॥ इति। पत्या सह सपिण्डीकरणं यम आह-'पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः। सा मृ(२)तापि हि तेनैक्यं गता मंत्राहुतिव्रतैः'॥ इति। उशनसा तु मातामहेन सह सपिण्डीकरणमुक्तम्। 'पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः। मातुर्मातामहे तद्वदेषा कार्या सपिण्डता'॥ तथा-'पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः। माता मातामहे तद्वादित्याह भगवाञ्छिवः'॥ इत्येवं विविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात्। अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात्। आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव। ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात्। अत्रापि यदि नियतो वंशसमाचारस्तदानीं तथैव कुर्यात्। वंशसमाचारोऽप्यनियतश्चेत्तदा 'आत्मनस्तुष्टिरेव च' इति यथारुचि कुर्यात्। तत्र च येन केनापि मातुः सापिण्ड्येऽपि यत्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितम्—'अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि। मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह'॥ इति, तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम्। अन्यत्र पतिना सहेति पतिसापिण्ड्ये तदंशभागित्वात्। मातामहसापिण्ड्ये तदंशभागित्वात्तेनैव सह। यथाह शातातपः-'एकमूर्तित्वमायाति सपिण्डीकरणे कृते। पत्नी पतिपितॄणां च तस्मादंशेन भागिनी'॥ इति। एवं सति

(१) विरुद्धानीवं ख०। (२) मृतापीदंतेनैक्यं क०।

मातामहेन मातुः सापिण्ड्ये मातामहश्राद्धं पितृश्राद्धवन्नित्यमेव। पत्या पितामह्या वा मातुः सापिण्ड्ये मातामहश्राद्धं न नित्यम्। कृते अभ्युदय', अकृते न प्रत्यवाय इति निर्णयः॥ २५३-२५४॥

(वी० मि०) सोदकुम्भान्नदानरूपं प्रेतोद्देश्यकं श्राद्धमाह—

अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत्॥
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे॥ २५५॥

वृद्ध्यादिना निमित्तेन संवत्सरादर्वाक् मरणदिनावधिकवत्सराभ्यां यस्य सपिण्डनं भवेत् तस्य प्रेतस्य सोदकुम्भमन्नं संवत्सरं द्विजे प्रतिपत्तिस्थाने दद्यात्। अपिशब्दात्सुतरामकृतसपिण्डीकरणे दद्यादिति सिद्ध्यति। प्रेतश्राद्धप्रकरणे पारस्करेण सोदकुम्भदानकथनात्सपिण्डीकरणेन निवृत्ते प्रेतत्वे श्राद्धमिदं न कार्यमिति भ्रमवारणार्थमेतद्वचनारम्भः। पारस्करवचने प्रेतपदं मृतमात्रपरमिति भावः २५५॥

(मिता०) अर्वागिति। संवत्सरादर्वाक्सपिण्डीकरणं यस्य कृतं तस्य तदुद्देशेन प्रतिदिवसं प्रतिमासं वा यावत्संवत्सरं शक्त्यनुसारेणान्नमुदकुम्भसहितं ब्राह्मणाय दद्यात्। अर्वाक्संवत्सरादिति वदता सपिण्डीकरणं संवत्सरे पूर्णे प्राग्वेति दर्शितम्। यथाहाश्वलायनः—'अथ सपिण्डीकरणं संवत्सरान्ते द्वादशाहे वा' इति। कात्यायनोऽप्याह—'ततः संवत्सरे पूर्णे सपिण्डी(१)करणं त्रिपक्षे वा(२)द्वादशाहे यदहर्वा वृद्धिराप(३)द्यते' इति। द्वादशाहे त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वेति चत्वारः पक्षा दर्शिताः। तत्र द्वादशाहे पितुः सपिण्डीकरणं साग्निकेन कार्यम्। सपिण्डीकरणं विना पिण्डपितृयज्ञासिद्धेः। 'साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत्। द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः'॥ इति वचनात्। निरग्निकस्तु त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वा कुर्यात्। यदा प्राक्संवत्सरात्सपिण्डीकरणं तदा षोडश श्राद्धानि कृत्वा सपिण्डीकरणं कार्यम्, उत सपिण्डीकरणं कृत्वा पश्चात् स्वस्वकाले तानि कर्तव्यानीति संशयः, उभयथा वचनदर्शनात्। 'श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डताम्। श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्'॥ इति। षोडश श्राद्धानि च—'द्वादशाहे त्रि-

(१) करणं भवेद् ख। (२) त्रिपक्षे वा यदा चार्पं वृद्धिरिति मुद्रितपुस्तकस्थ पाठः।
(३) यते तदेत ख०।

पक्षे च षण्मासे मासि चाब्दिके। श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः'॥ इति दर्शितानि। तथा—'यस्यापि वत्सरादर्वाक्सपिण्डीकरणं भवेत्। मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्'॥ इति। तत्र सपिण्डीकरणं कृत्वा स्वकाले एवैतानि कर्तव्यानीति प्रथमः कल्पः। अप्राप्तकालत्वेन प्रागनधिकारात्। यदपि वचनं 'षोडश श्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात्प्रागपि कर्तव्यम्' इति सोऽयमापत्कल्पः। यदा त्वापत्कल्पत्वेन प्राक्सपिण्डीकरणात् प्रेतश्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात्। यदा तु मुख्यकल्पेन स्वकाल एव करोति तदाब्दिकं श्राद्धं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात। 'सपिण्डीकरणादर्वाक्कुर्वन् श्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥ सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि'॥ इति स्मरणात्। एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेषु बहुषु भ्रातृषु सत्स्वप्येकेनैव कृतेनालं न सर्वैः कर्तव्यम्। 'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि'॥ इति स्मरणात्। इदं च प्रेतश्राद्धसहितं सपिण्डीकरणं असंन्यासिनां पुत्रादिभिर्नियमेन कर्तव्यं प्रेतत्वविमोक्षार्थत्वात्। संन्यासिनां तु न कर्तव्यम्। यथाहोशनाः—'एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणं तु विधीयते॥ सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः। त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते'॥ इति। पुत्रासंनिधाने येन सगोत्रादिना दाहसंस्कारः कृतस्तेनैवाद्दशाहान्तं तत्प्रेतकर्म कर्तव्यम्। 'असगोत्रः सगोत्रो वा स्त्री दद्याद्यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्'॥ इति स्मरणात्। शूद्राणामप्येतत्कर्तव्यममन्त्रकं द्वादशेऽह्नि। 'एवं सपिण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽह्नि' इति विष्णुस्मरणात्। सपिण्डीकरणादूर्ध्वं सांवत्सरिकपार्वणादीनि पुत्रस्य नियमेनैव कार्याणि। अन्येषामनियतानि॥ २५५॥

(वी०मि०) मासिकादिकालान् प्रदर्शयन्नेव मासिकादिश्राद्धान्याह—

मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्॥
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि॥ २५६॥

मर(१)णवत्सरं व्याप्य प्रतिमासं मृताहनि मरणपक्षीयमरणतिथौ श्राद्धं कर्तव्यमिति प्रकरणाद्बोध्यते । तदेव च मासिकमित्युच्यते । तुशब्देन षाण्मासिकयोर्मृताहकर्तव्यत्वव्यवच्छेदः ।

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनं संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥

इति तत्र कालान्तरबोधनात् । द्वितीयतुशब्देन वत्सरोत्तरं प्रतिसंवत्सरं वर्षे वर्षे चकारेण मृताहनीत्यनुकर्षति । 'अत ऊर्ध्वं संवत्सरे संवत्स(२)रे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यादिति कात्यायनोक्तेः । एवमुक्तैकोद्दिष्टरीत्या एतच्च त्रिष्वप्यन्वेति । आद्यं षोडशप्रेतश्राद्धानां प्रथमं श्राद्धं मरणादेकादशेऽहनि प्रवृत्ताशौचव्यपगमे इति यावत् । 'आशौचव्यपगमे' इति विष्णुवचनात् ॥ २५६ ॥

( मिता० ) एकोद्दिष्टकालानाह—

मृतेऽहनीति । मृतेऽहनि प्रतिमासं संवत्सरं यावदेकोद्दिष्टं कार्यम् । सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरमेकोद्दिष्टमेव कर्तव्यम् । आद्यं सर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्टमेकादशेऽहनि । मृतदिवसापरिज्ञाने तच्छ्रवणदिवसे अमावास्यायां वा कार्यम् । 'अपरिज्ञाते मृतेऽहनि अमावास्यायां श्रवणदिवसे वा' इति स्मरणात् । अमावास्यायामिति गमनमाससम्बन्धिन्याममावास्यायाम् । 'प्रयासदिवसे देयं तन्मासेन्दुक्षयेऽपि वा' इति स्मरणात् । मृतेऽहनीत्यत्राहिताग्नेर्विशेषो जातूकर्ण्येनोक्तः—'ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृतेऽहन्येव तद्भवेत् । अधस्तु कार्यं दाहादाहिताग्नेर्द्विजन्मनः' ॥ इति । तत्र त्रिपक्षादर्वाग्यत्प्रेतकर्म तद्दाहदिवसादारभ्याहिताग्नेः कार्यम् । त्रिपक्षादूर्ध्वं यच्छ्राद्धं तन्मरणदिवस एवेत्यर्थः । अनाहिताग्नेस्तु सर्वं मृताह एव । आद्यमेकादशेऽहनी(३)त्याशौचापगमोपलक्षणमिति केचित् । 'शुचिना कर्म कर्तव्य' इति शुद्धेरङ्गत्वात् । अथाशौचापगम इति सामान्येन सर्वेषां वर्णानामुपक्रमैकोद्दिष्टस्य विष्णुना विहितत्वाच्च । तदयुक्तम्—'एकादशे हि यच्छ्राद्धं तत्सामान्यमुदाहृतम् । चतुर्णामपि वर्णानां सूतकं च पृथक्पृथक्' ॥ इति पैठीनसिस्मरणविरोधात् । 'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तु

(१) मरणवत्सर—इत्यारभ्य मृताहनि इत्यन्तं क० पुस्तके नास्ति ।
(२) संवत्सरे इत्यधिकं ख० पुस्तके । (३) इत्यन्तं त्याशौचाप क० ।

स्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः' ॥ इति शङ्खवचनविरोधाच्च । सामान्योपक्रमं विष्णुवचनं दशाहाशौचविषयमपि घटते इति । 'प्रतिसंवत्सरं चैवम्' इति प्रतिसंवत्सरं मृतेऽहन्येकोद्दिष्टमुपदिष्टं योगीश्वरेण । तथा च स्मृत्यन्तरम्—'वर्षे वर्षे च कर्तव्या मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत्' ॥ इति । यमोऽप्याह—'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः । मातापित्रोः पृथक्का(१)र्यमेकोद्दिष्टं मृतेऽहनि' ॥ इति । व्यासस्तु पार्वणं प्रतिषेधति—'एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीया(२)त्स भवेत्पितृघातकः' ॥ इति । जमदग्निस्तु पार्वणमाह—'आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि' ॥ इति । शातातपोऽप्याह—'सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः' ॥ इत्येवं वचनविप्रतिपत्तौ दाक्षिणात्या ह्येवं व्यवस्थामाहुः—'औरसक्षेत्रजाभ्यां मातापित्रोः क्षयाहे पार्वणमेव कर्तव्यं दत्तकादिभिरेकोद्दिष्टम्' इति जातूकर्ण्यवचनात्, 'प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश' ॥ इति, तदसत् । न ह्यत्र क्षयाहवचनमस्ति, अपि तु प्रत्यब्दमिति । सन्ति च क्षयाहव्यतिरिक्तानि प्रत्यब्दश्राद्धान्यक्षय्यतृतीयामाघीवैशाखीप्रभृतिषु, अतो न क्षयाहविषयपार्वणैकोद्दिष्टव्यवस्थापनयालम् । यत्तु पराशरवचनम्—'पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेकगोत्राणामेकस्यैव मृतेऽहनि' ॥ इति, तदपि न व्यवस्थापकम् । यस्मादस्यायमर्थः—देवत्वं गतस्य सपिण्डीकृतस्य पितुः सर्वत्रौरसेन त्रिपौरुषं पार्वणं कार्यम् । अनेकगोत्राणां भिन्नगोत्राणां मातुलादीनां क्षयेऽहनि यच्छ्राद्धं तदेकस्यैवैकोद्दिष्टमेवेति । किं च 'सपिण्डीकरणादूर्ध्वमप्येकोद्दिष्टमेव कर्तव्यमौरसेनापि' इत्युक्तं पैठीनसिना । 'एकोद्दिष्टं हि कर्तव्यमौरसेन मृतेऽहनि । सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम्' ॥ इति । उदीच्याः पुनरेवं व्यवस्थापयन्ति—अमावास्यायां भाद्रपदकृष्णपक्षे वा मृताहे पार्वणमन्यत्र मृताह एकोद्दिष्टमेवेति । 'अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन' ॥ इति स्मरणात् । तदपि नाद्रियन्ते वृद्धाः । अनि-

(१) पृथक्कुर्वीत ग० । (२) जानीयाद्भवेच्च ग० ।

श्चितमूलेनानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनानाममावास्याप्रेतपक्षमृताहविषयत्वेनातिसङ्को(१)चस्यायुक्तत्वात्, सामान्यवचनानर्थक्याच्च । तत्र हि सामान्यवचनस्य विशेषवचनेनोपसंहारो यत्र सामान्यविशेषसम्बन्धज्ञानेन वचनद्वयमर्थवत् । यथा सप्तदशसामिधेनीरनुब्रूयादित्यनारभ्याधीतस्य विकृतिमात्रविषयस्य सप्तदशवा(२)क्यस्य सामिधेनीलक्षणद्वारसम्बन्धबोधेनार्थवत्ता मित्रविन्दादिप्रकरणपठितेन सप्तदशवाक्येन मित्रविन्दाद्यधिकारापूर्वसम्बन्धबोधेनार्थवत्ता मित्रविन्दादिप्रकरणे उपसंहारः । इह तु द्वयोर्मृताहमात्रविषयत्वान्नार्थवत्तेति । अतोऽत्र पाक्षिकैकोद्दिष्टनिवृत्तिफलकतया पार्वणनियमविधानं युक्तम् । नचैकोद्दिष्टवचनानां मातापितृक्षयाहविषयत्वेन पार्वणवचनानां च तदन्यक्षयाहविषयत्वेन व्यवस्था युक्ता । उभयत्रापि मातापितृग्रहणस्य विद्यमानत्वात् । 'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि' ॥ इति । तथा—'आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि' ॥ इति । यदपि कैश्चिदुच्यते—मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यान्निरग्निरेकोद्दिष्टमिति । 'वर्षे वर्षे सुतः कुर्यात्पार्वणं यो ऽग्निमान्द्विजः । पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि' ॥ इति सुमन्तुस्मरणादिति । तदपि सत्प्रतिपक्षत्वादुपेक्षणीयम् । 'ब्रह्मचर्यस्तु ये विप्रा ये चैकाग्नय एव च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्' ॥ इति स्मरणात् । तत्रैव निर्णयः—सन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम् । 'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा' ॥ इति प्रचेतःस्मरणात् । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव । 'अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनः' इत्यादिवचनस्योक्तरीत्या नियमपरत्वात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव । तथापि देशसमाचारव्यवस्थायां सत्यां व्यवस्थितो विकल्पोऽसत्यामैच्छिक इत्यलमतिप्रसङ्गेन ॥ २५६ ॥

(१) सङ्कोच स्यादि युक्तत्वात् ग० ।
(२) सप्तदशपदस्य क० ।

( वी० मि० ) श्राद्धीयपिण्डानां प्रति(१)पादकमाह—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥
प्रक्षिपेत् सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥ २५७ ॥

गवेऽजाय छागाय विप्राय वा पिण्डान् दद्यात्, अग्नौ जले वा प्रक्षिपेत्। अपिशब्देन मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेत्याद्युक्तप्रतिपत्त्यन्तरपरिग्रहः। तुशब्देन श्राद्धीयान्नस्य पात्रसंभवे प्रतिपत्त्यन्तरं व्यवच्छिनत्ति। किं च श्राद्धिब्राह्मणेषु श्राद्धस्थले विद्यमानेषु द्विजोच्छिष्टं न मार्जयेत् नाऽपनयेत् ॥ २५७ ॥

( मिता० ) नित्यश्राद्धव्यतिरिक्तसर्वश्राद्धशेषमिदमभिधीयते—

पिण्डानिति। पूर्वदत्तानां पिण्डानां पिण्डस्य वा प्रतिपत्तिरियम्। गवे अजाय ब्राह्मणाय वा तदर्थिने पिण्डान्दद्यात्। अग्नावगाधे जलेऽपि वा प्रक्षिपेत्। किंच सत्सु विप्रेषु भोजनदेशावस्थितेषु द्विजोच्छिष्टं न मार्जयेन्नोद्वासयेत् ॥ २५७ ॥

( वी० मि० ) श्राद्धीयद्रव्यविशेषेण देशकालविशेषेण च तृप्तिकालमाह चतुर्भिः—

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ २५८ ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ॥
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः ॥ २५९ ॥

हविष्यं हविर्योग्यमन्नं तिलव्रीह्यादि, तेन दत्तेनेति वचनविपरिणामेनाऽन्वयः। एवमग्रेऽपि पितामहा मासं मासपर्यन्तं अभि सर्वतोभावेन तृप्यन्ति। पितामहपदेन पितॄणां सर्वेषां प्रतिपादनम्। तथा च मनुः—

तिलव्रीहियवैर्माषैर्मूलैरद्भिः फलेन(२)वा।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥

वैशब्दः पादपूरणे। पायसेन परमान्नेन वत्सरमाभिव्याप्य पितामहा अभितृप्यन्तीति सर्वत्रान्वेति। तुशब्देन न्यूनं कालं व्यवच्छिनत्ति। मत्स्यादिभिरिह श्राद्धे दत्तैर्यथाक्रममुत्तरोत्तरं मासवृद्ध्या

(१) प्रतिपत्त्यादिकमाह-इति ख० पु० पाठः। (२) च-इति ख० पु० पाठः।

एकैकमासवृद्ध्या उपलक्षितं कालमभिव्याप्याऽभितृप्यन्ति, तेन मात्स्यैर्मत्स्यसम्बन्धिभिर्मांसैर्मासं तृप्यन्ति, हारिणैर्हरिणसम्बन्धिभिर्मांसैर्मासद्वयं तृप्यन्तीत्यादिक्रमेण बोध्यम्। औरभ्रं मेषसम्बन्धि, शाकुनं भक्ष्यपक्षिसम्बन्धि, छागं छागसम्बन्धि, पृषत् चित्रमृगस्तदीयं पार्षतं, एणः कृष्णमृगस्तदीयमैणं, रुरुर्मृगविशेषस्तत्सम्बन्धि रौरवं, वाराहमारण्यशूकरसम्बन्धि,शाशं शशसम्बन्धि॥२५८-२५९॥

( मिता० ) भोज्यविशेषेण फलविशेषमाह—

हविष्यान्नेनेति। पेणेत्यादि च। हविष्यं हविर्योग्यं तिलव्रीह्यादि। यथाह मनुः ( ३।२६७ )—'तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफ(१)लेन वा। दत्तेन मासं तृप्य(२)न्ति विधिवत्पितरो नृणाम्' ॥ इति। तदन्नं हविष्यान्नं तेन मासं पितरस्तृप्यन्तीत्यना(३)गतेनान्वयः। पायसेन गव्यपयःसिद्धेन संवत्सरम्। 'संवत्सरं तु गव्येन पयसा पायसेन वा' इति ( मनुः ३।२७१ ) स्मरणात्। मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं मात्स्यम्। हरिणस्ताम्रमृगः। एणः कृष्णः। 'एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यते' इत्यायुर्वेदस्मरणात्। तस्येदं हारिणकम्। अविरुरभ्रस्तत्सम्बन्धि औरभ्रम्। शा(४)कुनिस्तित्तिरिस्तत्सम्बन्धि शाकुनम्। छागोऽजस्तदीयं छागम्। पृषच्चित्रमृगस्तन्मांसं पार्षतम्। एणः कृष्णमृगस्तत्पिशितमैणम्। रुरुः शंबरस्तत्प्रभवं रौरवम्। वराह आरण्यशूकरस्तज्जं वाराहम्। शशस्येदं शाशम्। एभिर्मांसैः पितृभ्यो दत्तैर्हविष्यान्नेन वै मासमित्युक्तत्वात्तत ऊर्ध्वं यथाक्रममेकैकमासवृद्ध्या पितरस्तृप्यन्ति ॥ २५८-२५९ ॥

> खड्गामिषं महाशल्कं मधु मुन्यन्नमेव(५)च ॥
> लौहामिषं महाशाकं मांसं वार्ध्रीणसस्य(६)च ॥ २६० ॥
> यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥
> तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ २६१ ॥

( वी० मि० ) खड्गस्य गण्डकस्य आमिषं मांसं, महाशल्का रोहितादयो मत्स्यास्तत्सम्बन्धिमांसं महाशल्कं, 'महाशल्कः शल्यकः'

(१) फलैस्तथा ग०। (२) मासं प्रीयन्ते ग०। (३) अनागतलेन० ग०।
(४) शकुनं भक्ष्यपक्षिसम्बन्धि क० ग०। (५) वा—इति पुस्तके पाठः।
(६) वार्धीनसस्य-इति क० ख० पु० पाठः।

इति मेधातिथिः । मधु प्रसिद्धं, मुन्यन्नं नीवारादि, चकारान्मधुसंयुक्तमदनीयमात्रम्—

यत्किंचिन्मधुसंयुक्तं तदानन्त्याय कल्पते ।

इति यमवचनात् । लोहो लोहितच्छागस्तस्यामिषं मांसं, महाशाकं कालशाकं शाकविशेषं लडिचो इति ख्यातं, वार्ध्रीणसस्य—

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥
कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥

इति निगमलक्षितस्य वृद्धच्छागस्य मांसं, चकारान्निगमलक्षितस्यैव पक्षिविशेषस्य द्वितीयवार्ध्रीणसस्य मांसं,यद्दाति तत्खड्गामिषादि सर्वं यत्किञ्चिद्गयास्थितो ददाति, वर्षात्रयोदश्यामपरपक्षत्रयोदश्यां मघासु वा यद्द्रव्यं ददाति तत्सर्वं विशेषत उत्कर्षेणानन्त्यं कल्पव्यापिपितृतृप्तिहेतुत्वं अश्नुते व्याप्नोति । पञ्चकारश्च खड्गमांसादेः परस्परनिरपेक्षफलहेतुत्वबोधनार्थः सर्वत्रान्वेति । गयास्थश्चेति चकारेण गयासमत्वेनोक्ते कृतशौचादौ तीर्थेऽवास्थितस्य परिग्रहः। तथापदेन—

आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वं तु तदस्याऽक्षयमुच्यते ॥

इति यमोक्तकालसमुच्चयः । मघास्विति बहुवचनं बहुतारकत्वाभिप्रायेण व्यक्त्यभिप्रायेण वा । चकारेण—

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।

इति यमोक्तराहूपरागकालसङ्ग्रहः ॥ २६०–२६१ ॥

( मिता० ) किंच—

खड्गामिषमिति । यद्ददातीति च । खड्गो गण्डकस्तस्य मांसम् । महाशल्को मत्स्यभेदः । मधु माक्षिकम् । मुन्यन्नं सर्वमारण्यं नीवारादि । लोहो रक्तश्छागस्तदामिषं लोहामिषम् । महाशाकं कालशाकम् । वार्ध्रीणसो वृद्धः श्वेतच्छागः । 'त्रिपिबं त्विन्द्रियक्षीणं वृद्धं श्वे(१)तमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः

(१) 'लडिवा' इति ख० पु० पा० । (२) श्वेतं वृद्धमजापतिं ख० ।

श्राद्धकर्माणि' ॥ इति याज्ञिकप्रसिद्धः । त्रिपिबः पिबत' कर्णौ जिह्वा च यस्य जलं स्पृशन्ति सः त्रिभि' पिबतीति त्रिपिब. तस्य वार्ध्रीणसस्य मांसम् । यद्ददाति गयास्थश्च यत्किंचिच्छाकादिकमपि गयास्थो ददाति । चशब्दाद्गङ्गाद्वारादिषु च—'गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे । सन्निहत्यां गयायां च श्राद्धमक्षय्यतां व्रजेत्' ॥ आनन्त्यमश्नुते इति आ(१)नन्त्यफलहेतुत्वं प्राप्नोति । आनन्त्यमश्नुत इति प्रत्येकमभिसंबध्यते । तथा वर्षात्रयोदश्यां भाद्रपदकृष्णत्रयोदश्यां विशेषतो मघायुक्तायां यत्किंचिद्दीयते तत्सर्वमानन्त्यमश्नुते इति पातेन सम्बन्ध । अत्र यद्यपि मुन्यन्नमांसमत्स्यादीनि सर्ववर्णानां सामान्येन श्राद्धे योग्यानि दर्शितानि तथापि पुलस्त्योक्ता व्यवस्थाऽदरणीया । 'मुन्यन्न ब्राह्मणस्योक्त मांस क्षत्रियवैश्ययो । मधुप्रदान शूद्रस्य सर्वेषां चाविरोधि यत्' ॥ इति । अस्यार्थः—मुन्यन्न नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदम् । यच्चं मांसमुक्तं तत्क्षत्रियवैश्ययोः प्रधानम् । यत्क्षौद्रमुक्त तच्छूद्रस्य । एतद्व्यतिरिक्तं यदविरोधि यदप्रतिषिद्धं वास्तुकादि, यच्च विहितं हविष्य कालशाकादि तत्सर्वेषां समग्रफलदमिति ॥ २६०-२६१ ॥

( वी० मि० ) अथ तिथिषु काम्यश्राद्धानि फलानि चाहुः—

कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ॥
द्यूतं कृषिं वणिज्यां च(२)द्विशफैकशफांस्तथा ॥ २६२ ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ॥
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ २६३ ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ २६४ ॥

एकां चतुर्दशीं वर्जयित्वा सदा सर्वासु तिथिषु प्रत्येकं प्रतिपत्प्रभृतिषु श्राद्धद श्राद्धकर्ता कन्यादीन् यथाक्रममाप्नोति । अत्राऽपरप(३)क्षीयास्तिथयो बोध्याः । 'अमावास्यां सर्वकाम' इति वचनात् । कन्या स्त्रीरूपमपत्य, कन्यावेदिनो जामातर, पशवोऽजादयः मुख्याः,

(१) आनन्त्यफल ख० । (२) द्यूत कृषिं च वाणिज्य द्विशफैकशफ—इति क० पु० पाठ ।
(३) अत्र परपक्षीयास्तिथय—इति ख० पु० पाठ ।

सुताः औरसाः पुत्राः 'पशून्वै सा सुतानपी'ति पाठे न्यायवर्तित्वं सत्पदार्थः, द्यूतं द्यूतजयः, कृपिवणिज्यापदे तत्कृतलाभातिशयपरे, द्विशफा गवादयः, एकशफा अश्वादयः। अत्र समासेपि प्रत्येकं तिथ्योरन्वयः। ब्रह्मवर्चसं वेदाध्ययनजनिततेजोविशेपस्तद्वन्तो ब्रह्मवर्चस्विनः पुत्राः, स्वर्णरूप्ये हेमरजते मिलिते, कुप्यं स्वर्णरजतभिन्नं त्रपुसीसकादि तत्सहिते सकुप्यके। अत्र कुत्र कुप्यस्य तिथ्यन्तेऽन्वयः, साहित्यं चाऽपरपक्षसम्बन्धमात्रेण। ज्ञातिश्रैष्ठ्यं स्ववंशोत्कृष्टत्वम्। सर्वे कामा अत्रोक्ताः कन्यादयस्त्रयोदश। अत्राऽपिशब्दतथाशब्दैर्बहुभिर्मुनिभिरुक्तानां बहुविधानां फलानां समुच्चयः। ते चात्र विस्तरभयान्न प्रदर्श्यन्ते। शस्त्रेण त्विति। शस्त्रपदं विषाद्युपलक्षकम्। तदाह मरीचिः—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्दश्यां भवेत्पूजा अन्येषां तु विगर्हिता॥

अत्र विषादिमृतत्वेन रोगव्यतिरेकमृतत्वमुपलक्ष्यते। गुर्वनुगमनाचारस्थल इव लाघवेनैकश्रुतिकल्पनात्। एवं च प्रसवमृतायाः कृतपत्यनुमरणायाश्च शस्त्रहतश्राद्धं सिध्यति। तच्च चतुर्दश्यां प्रदीयते श्राद्धे। अत्र तुशब्देनाऽशस्त्रहतानां व्यवच्छेदः। वैशब्दः पादपूरणे। इदं च शस्त्रहतश्राद्धमेकोद्दिष्टरूपम्।

तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिनाम्।

इति वचनात्। काम्यप्रकरणाम्नातस्याऽस्य फलं 'चतुर्दश्यां तु भूतिकामः' इति हारीतोक्तं द्रष्टव्यम्। अत एव 'अथ काम्यानी'त्युपक्रम्य कात्यायनेन 'शस्त्रहतस्य चतुर्दश्या'मित्युक्तम्। आश्विनापरपक्षचतुर्दश्यां श्राद्धं नित्यमपि।

आहवेषु विपन्नानां-जलाग्निभृगुपातिनाम्।
चतुर्दश्यां भवेत्पूजाऽमावास्यायान्तु कामिकी॥

इति वचनात्॥ २६२-२६४॥

( मिता० ) तिथिविशेपात्फलाविशेषमाह—

कन्यामिति। ब्रह्मवर्चस्विन इति। प्रतिपत्प्रभृतिष्विति च। कन्यां रूपलक्षणशीलवतीम्। कन्यावेदिनो जामातरो बुद्धिरूपलक्षणसम्पन्नाः। पशवः क्षुद्रा अजादयः। सत्सुताः सन्मा(१)र्गवर्तिनः। द्यूतं

(१) सन्मार्गगाः ग०।

द्यूतविजयः । कृषिः कृषिफलम् । वाणिज्या वाणिज्यलाभः । द्विशफा गवादयः । एकशफा अश्वादयः । ब्रह्मवर्चस्विनः पुत्राः, वेदाध्ययनतदर्थानुष्ठानजनितं तेजो ब्रह्मवर्चसं तद्वन्तः । स्वर्णरूप्ये हेमरजते । तद्व्यतिरिक्तं त्रपुसीसकादि कुप्यकम् । ज्ञातिश्रैष्ठ्यं ज्ञातिपूत्कृष्टत्वम् । सर्वकामाः काम्यन्त इति कामाः स्वर्गपुत्रपश्वादयः । एतानि कन्यादीनि चतुर्दशफलानि कृष्णपक्षप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशीवर्जितासु चतुर्दशसु तिथिषु श्राद्धदो यथाक्रममाप्नोति । ये केचन शस्त्रहतास्तेभ्यः कृष्णचतुर्दश्यामेकोद्दिष्टविधिना श्राद्धं दद्याद्यदि ब्राह्मणादिहता न भवन्ति । 'समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालयः' ॥ इति स्मरणात् । समत्वमागतस्य सपिण्डीकृतस्य महालये भाद्रपदकृष्णचतुर्दश्यां शस्त्रहतस्यैव श्राद्धं नान्यस्येति नियम्यते न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति । अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धम् । न च भाद्रपदकृष्णपक्ष एवायं श्राद्धविधिरिति मन्तव्यम् । 'प्रौष्ठपद्यामपरपक्षे मासि मासि चैवम्' इति शौनकस्मरणात् ॥२६२-२६४॥

( वी० मि० ) कृत्तिकादिश्राद्धानि काम्यान्याह—

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ॥
पुत्रान् ज्यैष्ठ्यं ससौभाग्यं(१)समृद्धिं मुख्यतां शुभम्॥२६५॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीन(२)पि ॥
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ २६६ ॥
धनं वेदान्भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ॥
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ २६७ ॥
कृत्तिकादिभरण्यन्ते स कामानाप्नुयादिमान् ॥
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ २६८ ॥

आस्तिकः स्वीकृतवेदप्रामाण्यः, श्रद्दधानः वैदिके कर्मणि फलावश्यंभावनिश्चयवान्, मदो गर्वो मत्सर ईर्ष्यारूपः तौ व्यपेतौ यतः

(१) पुत्रान् श्रेष्ठ्य च सौभाग्य–इति ख० पुस्तके, पुत्रं श्रैष्ठ्यं च सौभाग्य–इति मुद्रितपुस्तके पाठौ । (२) वाणिज्यप्रभृतींस्तथा–इति ख० पु० पाठः ।

स व्यपेतमदमत्सरः, चकारेण शुचित्वसमुच्चयः। एवंभूतो यः कृत्तिकादिभरण्यन्तं श्राद्धं विधिवत् शास्त्रोक्तविधियुक्तं सम्यक् विशिष्टपात्रादिप्रतिपादनविशिष्टं प्रयच्छति ददाति करोतीति यावत्। स इमान्कामानाप्नुयात्। इमान् कानित्याकाङ्क्षायां स्वर्गमित्यादि। ओजस्तेजो, बलं सामर्थ्यं, शौर्यं निर्भयत्वं, श्रैष्ठ्यं ज्ञातिपूत्कृष्टत्वं, सौभाग्यं जनप्रियत्वं, समृद्धिर्धनाद्युपचयः, मुख्यता गणेषु प्रधानत्वं, शुभं कल्याणं, प्रवृत्तचक्रताऽप्रतिहताज्ञता, वाणिज्यप्रभृतयो वाणिज्यादिकृष्यादिफलानि, परमा गतिर्ब्रह्मलोकावाप्तिः, वेदाः सकलवेदज्ञानं, भिषक्सिद्धिः औषधफलावाप्तिः, अजाविकमिति प्रत्येकं द्वयोर्नक्षत्रयोरन्वेति। अजा छागः, अविर्मेषः स्वार्थे कः। आयुर्दीर्घजीवित्वं, अन्यत्प्रसिद्धम्। हिशब्दः छन्दोरक्षणार्थः। तथाशब्दाश्चकाराश्च पूर्ववद्ध्यन्तरोक्तफलसमुच्चयार्थाः। एवकारो भिन्नक्रमो नास्तिकादेः कर्तुर्व्यवच्छेदाय ॥ २६५-२६८ ॥

( मिता० ) नक्षत्रविशेषात्फलविशेषमाह—

स्वर्गमिति। प्रवृत्तचक्रतामिति। धनमिति। कृत्तिकादिभरण्यन्तमिति च। कृत्तिकामादिं कृत्वा भरण्यन्तं प्रतिनक्षत्रं यः श्राद्धं ददाति स यथाक्रमं स्वर्गादीनायुःपर्यन्तान्कामानवाप्नोति, यद्यास्तिकः (१)श्रद्दधानो व्यपेतमदमत्सरश्च भवति। आस्तिको विश्वासवान्। श्रद्दधान आदरातिशययुक्तः। व्यपेतमदमत्सरः मदो गर्वः मत्सर ईर्ष्या ताभ्यां रहितः। (२)स्वर्गं निरतिशयसुखम्। अपत्यमविशेषेण। ओज आत्मशक्त्यतिशयः। शौर्यं निर्भयत्वम्। क्षेत्रं फलवत्। बलं शारीरम्। पुत्रो गुणवान्। श्रैष्ठ्यं ज्ञातिषु। सौभाग्यं जनप्रियता। समृद्धिर्धनादेः। मुख्यता अग्र्यता। शुभं सामान्येन। प्रवृत्तचक्रता अप्रतिहताज्ञता। वाणिज्यप्रभृतयो वाणिज्यकुसीदकृषिगोरक्षाः। अरोगित्वं अ(३)नामययोगित्वम्। यशः प्रख्यातिः। वीतशोकता इष्टवियोगादिजनितदुःखाभावः। परमा गतिर्ब्रह्मलोकप्राप्तिः। धनं सुवर्णादि। वेदा ऋग्वेदादयः। भिषक्सिद्धिरौषधफलावाप्तिः। कुप्यं सुवर्णरजतव्यतिरिक्तं ताम्रादि। गावः प्रसिद्धाः। अजाश्च अवयश्च अश्वाश्च। आयुर्दीर्घजीवनम् ॥२६५-२६८॥

---

(१) श्रद्धानश्चेत् ख०। (२) स्वर्गोऽतिशयसुखं क०। (३) अनामयित्वं ग०।

(वी० मि०) अत्र पित्रादयो वस्वादिरूपेण ध्येया इति श्राद्धेतिकर्तव्यतामभिप्रेत्य तत्फलमाह—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ २६९ ॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥
प्रयच्छन्ति तथा राज्यं प्रीता नृणां (१)पितामहाः ॥२७०॥

अदितिसुता आदित्याः वस्वादित्रयः श्राद्धदेवताः पितरो ध्यानवशात् स्वपित्रादिरूपत्वेन कल्पिताः सन्तः तावन्मात्रेण तर्पिता प्रीणिता मनुष्याणां श्राद्धकर्तॄणां पितॄन् श्राद्धेन यजमानकृतेनैव रक्षोनिवारणादिभिः स्वव्यापारैरनुगृहीतेन प्रीणयन्ति । तथा वस्वादिप्रीतिप्रकारेण जातप्रीतयश्च नृणां श्राद्धकर्तॄणां पितामहाः पित्रादयः आयुःप्रभृतीनि फलानि श्राद्धकर्तृभ्यः प्रयच्छन्ति प्राजापत्यम् । चकारात् स्मृत्यन्तरोक्तानां श्राद्धफलानां समुच्चयः ॥ २६९ ॥ २७० ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने श्राद्धप्रकरणम् ।

---

(मिता०) 'मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः' इत्यनेन पितॄणां श्राद्धेन तृप्तिर्भवतीत्युक्तं तदनुपपन्नम्, मातिदिनकृतमात्मु(१)भकर्मवशेन स्वर्गनरकादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात् । संभवेऽपि स्वयमात्मनाऽप्यनीशाः कथं स्वर्गादिफलं प्रयच्छन्तीत्यत आह—

वसुरुद्रादितिसुता इति । आयुरिति च । न ह्यत्र देवदत्तादय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते किं त्वधिष्ठातृवस्वादिदेवतासहिता एव । यथा देवदत्तादिशब्दैर्न शरीरमात्रं नाप्यात्ममात्रं किंतु शरीरविशिष्टा आत्मान उच्यन्ते । एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते । अतश्चाऽधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनाऽन्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति कर्तॄंश्च पुत्रादीन्फलेन संयोजयन्ति । यथा माता ग(२)-

(१) प्रयच्छन्ति यथा राज्यं नृणां पितृपितामहाः—इति क. पु पाठः ।
(२) गर्भधारणपोषणाय ग ।

र्भपोषणायाऽन्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमप्यपत्यं तर्पयति दोहदान्नादिप्रदायिनश्च प्रत्युपकारफलेन संयोजयति तद्वद्वसवो रुद्रा अदितिसुताः आदित्या एव ते पितरः पितृपितामहप्रपितामहशब्दवाच्याः न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रदानभूताः । किं तु मनुष्याणां पितृन्देवदत्तादीन् स्वयं श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्त्यतिशययोगेन । किं च न केवलं पितृंस्तर्पयन्ति, अपि तु श्राद्धकारिभ्य आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि राज्यं च । चकारात्तत्र तत्र शास्त्रोक्तमन्यदपि फलं स्वयं प्रीताः पितामहा वस्वादयः प्रयच्छन्तीति ॥ २६९-२७० ॥

इति श्राद्धप्रकरणम् ।



( वी० मि० ) विघ्नोपशमद्वारा सफलमहादानादिरूपधर्माङ्गभूतां विनायकस्य ग्रहादीनां च पूजामभिधास्यन् प्रकृतोपयिकविघ्नज्ञानहेतूनुपदर्शयन्नेव विनायकस्य विघ्नमूलकत्वेन विनायकाप्रीतेर्विघ्नहेतुत्वमाह—

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ॥
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा त(१)था ॥ २७१ ॥
तेनोपसृष्टो यस्तस्य लक्षणा(२)नि निबोधत ॥
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २७२ ॥
कापायवाससश्चैव क्रव्यादांश्चाऽधिरोहति ॥
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्राऽवतिष्ठते ॥ २७३ ॥
व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः ॥
विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७४ ॥
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ॥
कुमारी न च भर्तारं नाऽपत्यं गर्भमङ्गना ॥ २७५ ॥

---

(१) पुरा- इति ख. पु. पाठः ।
(२) लक्षणं विनिबोधत--इति क. पु. पाठः ।

आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥
वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः ॥ २७६ ॥

कर्मणाममीष्टानां लौकिकवैदिकरूपाणां विघ्नस्वरूपस्य फलस्य या निष्पत्तिस्तत्सिद्ध्यर्थं गणानां पुष्पदन्तप्रभृतीनामाधिपत्ये च पुरा पूर्वकल्पे ब्रह्मणा रुद्रेण चकाराद्विष्णुना च कर्मानुसारेण प्राणिनामिष्टानिष्टफलदानाय प्रवृत्तेश्च । विनायको हेरम्बः । विशेषेणाऽत्यन्तिशयेन विनायकग्रहाय पूजकानामनिष्टं तत्पूजकानां चेष्टं कुर्वन्नेवंरूपेण च नियोजितः आज्ञप्तः । तेन विनायकेनाप्रीतेन उपसृष्टं आस्कन्दितो यस्तस्य लक्षणानि हे मुनयः । निबोधत जानीध्वम् । लक्षणान्येवाह स्वप्न इत्यादि । विनायकोपसृष्टः स्वप्ने निद्रादशायां जलमत्यर्थमतिशयेनाऽवगाहते जले मज्जति । प्रवाहेण ह्रियते । स्वाप्निकानि सर्वाणि बुद्धिसिद्धान्यवगन्तव्यानि । मुण्डमशिरस्कः । काषायवाससो धूसरवर्णादिरक्तवस्त्रांश्च पश्यति । क्रव्यादान् आममांसाशिनो गृध्रादीन् व्याघ्रादीन् वाऽधिरोहति आरोहति । अन्त्यजैश्चाण्डालैर्गर्दभैरुष्ट्रैर्वा सहैकस्मिन् स्थानेऽवतिष्ठते तैरप्युपस्तिष्ठति । स्वाप्निकानि लक्षणान्यभिधाय जाग्रद्दशापन्नान्याह व्रजन्नित्यादि । वस्तुगत्यापि व्रजन् आत्मानं परैरनुगतं क्रियमाणपश्चाद्गमनं मन्यते भ्रान्त्या विपर्याकरोति । केचित् इदमपि स्वाप्निकमेव वर्णयन्ति । परैः शत्रुभिर्वाव- [illegible] स्वस्ते । विमना वि- [illegible] निमित्तनः कारणं [illegible] लाभ्यन्नादीनां तत्र तत्राऽभिहितानां लक्षणानां सङ्ग्रहः । एवं लिङ्गान्युक्त्वा कर्मविघ्नांस्तत्प्रयुक्तानाह तेनोपसृष्टो लभते इत्यादि । तेनोपसृष्ट इति व्याख्यातम् । राजनन्दनः राज्ञः पुत्रो राज्यप्राप्त्यर्होऽपि राज्यं न लभते । न लभत इत्यध्ययनान्ते सर्वत्राऽन्वेति । कुमारी गर्भिणीत्यत्र उपसृष्टेति लिङ्गविपरिणामेनाऽन्वयः । श्रोत्रियश्छान्दसः । आचार्यत्वं उपनीयाध्यापकत्वजन्यसंस्कारविशेषरूपः । शेषं स्पष्टम् । चकारास्त्वौत्सर्गिकाभीष्टलाभकाले तत्तदभीष्टानामलाभं प्रतिषिद्धनिवारणोपायेऽप्यनिष्टलाभं च समुच्चिन्वन्ति ॥ २७१–२७६ ॥

( मिता ) दृष्टादृष्टफलसाधनानि कर्माण्यभिहितान्यप्यभिधास्यन्ते-

च। तेषां स्वरूपनिष्पत्तिः फलसाधनत्वं चाऽविघ्नेन भवतीत्यविघ्नार्थं कर्म विधास्यन् विघ्नस्य कारकज्ञापकहेतूनाह—

विनायक इति। विनायकः कर्मविघ्नसिद्ध्यर्थमित्यादिना। उभयविधहेतुपरिज्ञानाद्विघ्नस्य प्रागभावपरिपालनायोपस्थितस्य प्रध्वंसाय वा प्रेक्षापूर्वकारिणः प्रवर्तन्ते, रोगस्येवोभयविधहेतुपरिज्ञानात्। विनायको विघ्नेश्वरः पुरुषार्थसाधनानां कर्मणां विघ्नसिद्ध्यर्थं स्वरूपफलसाधनत्वाव(१)घातसिद्धये विनियोजितः नियुक्तः। रुद्रेण ब्रह्मणा चकाराद्विष्णुना च। गणानां पुष्पदन्तप्रभृतीनामाधिपत्ये स्वाम्ये ॥२७१॥

( मिता० ) एवं विघ्नस्य कारकहेतुमुक्त्वा ज्ञापकहेतुप्रदर्शनार्थमाह—

तेनेत्यादि। तेन विनायकेनोपसृष्टो गृहीतो यस्तस्य लक्षणानि ज्ञापकानि निबोधत जानीध्वं हे मुनयः। पुनर्मुनीनां प्रत्यवमर्शः शान्तिप्रकरणप्रारम्भार्थः। स्वप्ने स्वप्नावस्थायां जलमत्यर्थमवगाहते स्रोतसा ह्रियते निमज्जति वा। मुण्डितशिरसः पुरुषान्पश्यति। काषायवाससो रक्तनीलादिवस्त्रप्रावरणांश्च। क्रव्यादान् आममांसाशिनः पक्षिणः गृध्रादीन्मृगांश्च व्याघ्रादीनधिरोहति। तथाऽन्त्यजैश्चण्डालादिभिः गर्दभैः खरैरुष्ट्रैः क्रमेलकैः सह परिवृतास्तिष्ठति। व्रजन्गच्छन्नात्मानं परैः शत्रुभिः पृष्ठतो धावद्भिरनुगतमभिभूयमानं म(२)न्यते ॥ २७२-२७३ ॥

( मिता० ) एवं स्वप्नदर्शनान्युक्त्वा प्रत्यक्षलिङ्गान्याह—

विमना इत्यादि। विमना विक्षिप्तचित्तः। विफलारम्भः विफला आरम्भा यस्य स तथोक्तः, न क्वचित्फलमाप्नोति। संसीदत्यनिमित्ततः विना कारणेन दीनमनस्को भवति। राजनन्दनो राजकुले जातः श्रुतशौर्यधैर्यादिगुणयुक्तोऽपि राज्यं न लभते। कुमारी रूपलक्षणाभिजनादिसम्पन्नापीप्सितं भर्तारम्। अङ्गना गर्भिण्यपत्यम्। ऋतुमती गर्भम्। अध्ययनतदर्थज्ञाने सत्यपि आचार्यत्वं श्रोत्रियः। विनयाचारादियुक्तोऽपि शिष्योऽध्ययनं श्रवणं वा। न लभत इति सर्वत्र सम्बध्यते। वणिक् वाणिज्योपजीवी तत्र कुशलोऽपि धान्यादिक्रयविक्रयादिषु लाभम्। कृषीवलः कर्षकस्तत्राभियुक्तोऽपि कृषिफलं नाप्नोति। एवं

(१) विधानसिद्धये क०। (२) अनुमन्यते ग०।

यो यया वृत्त्या जीवति स तत्र निष्फलारम्भश्चेत्तेनोपसृष्टो वेदितव्यः ॥ २७४-२७६ ॥

(वी० मि०) अथ विघ्नोपशमहेतुशान्तिमाह सम्पूर्णेन प्रकरणेन। तत्रादौ विनायकोपसृष्टस्य स्नपनमाह—

स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥
गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥
सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥
भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः ॥ २७८ ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥
मृत्तिकां रोचनां गन्धान् गुग्गुलं चाप्सु निक्षिपेत् ॥२७९॥
या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥
चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥ २८० ॥
सहस्राक्षं शतधारमृषिभिः पावनीकृतम् ॥
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ २८१ ॥
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २८२ ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ॥ २८३ ॥

तस्य विनायकोपसृष्टस्य। पुण्ये चन्द्रतारकाद्यनुकूलेऽह्नि दिवसे। विधिपूर्वकं शास्त्रोक्तविधिपुरस्सरं स्नपनं कर्तव्यम् । विधिमेवाह साज्येन घृतालोलितेन श्वेतसर्षपस्य कल्केन चूर्णेन उत्सादितस्य उद्वर्तितस्य ।

सुरामांसी वचा कुष्टं शैलेयं रजनीद्वयम् ।
शटीचम्पकमुस्तं च सर्वौषधिगणः स्मृतः ॥

इति परिभाषितैः—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥

इति परिभाषितैर्वा सर्वौषधैः,

कस्तूरिकाया द्वौ भागौ चत्वारः कुङ्कुमस्य च ।
षोडशश्चन्दनस्यैकः कर्पूरस्य चतुष्टयम् ॥
सर्वगन्ध इति प्रोक्तः समस्तसुरवल्लभः ।

इति पारिभाषिकैश्च सर्वगन्धैर्विलिप्तशिरसः।'कुङ्कुमागुरुकर्पूरजातिफलरूपः सर्वगन्ध' इति कल्पतरुः। भद्रासनं शुचि स्वनुलिप्तस्थण्डिलोपरि रचितपञ्चवर्णस्वस्तिके देशे आस्तीर्णवक्ष्यमाणचर्मणि स्थितं काश्मरीनिर्मितं वस्त्राच्छादितमासनं, तत्रोपविष्टस्य सतः द्विजास्त्रयः शुभाः सौम्यमूर्तयः श्रुताध्ययनवृत्तसम्पन्नाः 'स्वस्ति भवन्तो ब्रुवन्त्वि'ति वाच्याः। गुरुणा गृह्योक्तक्रमेण पुण्याहवाचनं कुर्य्यादिति पर्यवसितार्थः। 'चत्वारः स्वस्तिवाच्या' इति मिताक्षरा। तत्र भद्रासनोपवेशनपूर्वकृत्यं श्लोकद्वयेनाह—अश्वस्थानादिति। अश्वस्थानादिभ्यः पञ्चभ्य आहृतां मृत्तिकां, पञ्चविधां रोचनां, गन्धान् चन्दनागुरुप्रभृतीन्, गुग्गुलम्, एकवर्णैरेकजातीयवर्णैश्चतुर्भिः कलशैर्ह्रदादाहृता या आपस्तास्वप्सु कलशस्थाने च निक्षिपेत्। ह्रदोऽशोष्यो जलाशयविशेषः। चकारात्तादृशान् कलशान् चूतादिपल्लवोपेतान् नानास्रग्दामवेष्टितकण्ठान् चन्दनचर्चितान् नववस्त्राच्छादितान् पूर्वादिषु चतसृषु दिक्षु स्थापयेदिति स्मृत्यन्तरसिद्धस्य समुच्चयः। तत उक्तरूपे देशे स्थापितं यद्रक्तं लोहितमानडुहं प्राग्ग्रीवमुत्तरलोम चर्म तस्मिन्नास्तृते भद्रं मनोरममासनं श्रीपर्णीनिर्मितं स्थाप्यम्। अस्मिन्नेव भद्रासन उपविष्टस्य सतः स्वस्तिवाच्याः। तथा (१)पतिपुत्रवतीभिः कृतमङ्गलं भद्रासनोपविष्टं पूर्वदिगादिस्थैश्चतुर्भिः कलशैः सहस्राक्षमित्यादिश्लोकत्रयात्मकमन्त्रेण प्रतिकलशमावृत्तेन गुरुः स्नापयेत्। एवं च कर्मपूर्वं गुरोर्वरणमप्यायाति। अत एवाभिषिञ्चामीति मन्त्रलिङ्गसङ्गतिः। केचित्तु एकैकश्लोकात्मकैस्त्रिभिमन्त्रैः कलशत्रयेण प्रत्येकं स्नपनं मिलितश्लोकमन्त्रेण, चतुर्थकलशेन स्नानं सर्वैर्मन्त्रैश्चतुर्थमिति स्मृत्यन्तरादित्याहुः।

मन्त्रार्थस्तु सहस्राक्षं सहस्रशक्तिकं शतधारमनेकप्रवाहं यदुदकमृषिभिर्मन्वादिभिः पावनं पावित्र्यकरं कृतमुत्पादितं तेनोदकेन त्वां विनायकोपसृष्टमुपसर्गशान्त्यर्थमभिषिञ्चामि। पावमान्यश्चैता आ-

(१) ततः—इति ख० पु० पाठः।

पः ते त्वां पुनन्तु इति। भगं ते कल्याणं वरुणो राजा सूर्यो बृहस्पतिश्च भगं, इन्द्रो वायुश्च भगं, सप्तर्षयश्च भगं ददुर्दधुरिति। केशेषु, सीमन्ते, मूर्द्धनि ललाटे, कर्णयोरक्ष्णोर्यत्ते दौर्भाग्यमकल्याणं तदापो देवताः सदाघ्नन्तु शमयन्तु ॥ २७७–२८३ ॥

(मिता०) एवं कारकज्ञापकहेतूनभिधाय विघ्नोपशान्त्यर्थं कर्मविधानमाह—

स्नपनमिति। तस्य विनायकोपसृष्टस्याऽनागतविनायकोपसर्गपरिहारार्थिनो वा स्नपनमभिषेचनं कर्तव्यम्। पुण्ये स्वानुकूलनक्षत्रादियुक्ते। अहि दिवसे न रात्रौ। विधिपूर्वकं शास्त्रोक्तेतिकर्तव्यतासहितम् ॥

(मिता०) स्नपनविधिमाह—

गौरसर्षपेत्यादि। गौरसर्षपकल्केन, सिद्धार्थपिष्टेन साज्येन घृत(१)लोलीकृतेनोत्सादितस्योद्वर्तिताङ्गस्य तथा सर्वौषधैः प्रियङ्गुनागकेसरादिभिः सर्वगन्धैश्चन्दनागुरुककस्तूरिकादिभिर्विलिप्तशिरसो वक्ष्यमाणभद्रासनोपविष्टस्य पुरुषस्य द्विजा ब्राह्मणाः शुभाः श्रुताध्ययनवृत्तसम्पन्नाः सौमनस्कतयश्चत्वारोऽस्य स्वस्ति भवन्तो ब्रुवन्त्विति वाच्याः। अस्मिन्समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्यादित्यर्थः ॥ २७७–२७८ ॥

(मिता०) किञ्च—

अश्वस्थानादिति। या इति च। अश्वस्थानगजस्थानवल्मीकसरित्सङ्गमाशोष्यहृदेभ्य आहृतां पञ्चविधां मृदं गोरोचनं गन्धान् चन्दनकुङ्कुमागुरुप्रभृतीन् गुग्गुलं च तास्वप्सु विनिक्षिपेत्। या आप आहृता एकवर्णैः समानवर्णैश्चतुर्भिः कु(२)म्भैरव्रणैरस्फुटितैरकालकैर्ह्रदादशोष्यात् सङ्गमाद्वा। ततश्चानडुहे चर्मणि रक्ते लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवे भद्रं मनोरममासनं श्रीपर्णीनिर्मितं स्थाप्यम्। तत उक्तोदकमृत्तिकागन्धादिसहितांश्चूतादिपल्लवो(३)पशोभिताननान् स्रग्दामवेष्टितकण्ठांश्चन्दनचर्चि(४)तान्नवाहतवस्त्रविभूषितांश्चतसृषु पूर्वादिदिक्षु स्थापयित्वा शुचौ सुलिप्ते स्थण्डिले रचितपञ्चव

(१) घृतमिश्रेण। (२) कुम्भैः शुभैरव्रणा० ख०। (३) शोभितान् नान स्रग्दाम ख०। (४) तान्नवहत ग०।

णस्वस्तिके लोहितमानडुहं चर्मोत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्रप्रच्छादितमासनं स्थापयेदित्येतद्भद्रासनम्। तस्मिन्नुपविष्टस्य स्वस्तिवाच्याः द्विजाः॥ २७९-२८० ॥

(मिता०) किञ्च—

सहस्राक्षमिति। स्वस्तिवाचनानन्तरं जीवत्पतिपुत्राभिः रूपगुणशालिनीभिः सुवेषाभिः कृतमङ्गलं पूर्वदिग्देशावस्थितं कलशमादायानेन मन्त्रेणाऽभिषिञ्चेद्गुरुः। सहस्राक्षमनेकशक्तिकं शतधारं बहुप्रवाहमृषिभिर्मन्वादिभिर्यदुदकं पावनं पवित्रं कृतं उत्पादितं तेनोदकेन त्वां विनायकोपसृष्टं विनायकोपसर्गशान्तये अभिषिञ्चामि। पावमान्यश्चैता आपस्त्वां पुनन्तु ॥ २८१ ॥

(मिता०) भगं ते इति। तदनन्तरं दक्षिणदेशावस्थितं द्वितीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत्। भगं कल्याणं ते तुभ्यं वरुणो राजा भगं सूर्यो भगं बृहस्पतिः भगमिन्द्रश्च वायुश्च भगं सप्तर्षयश्च ददुरिति ॥ २८२ ॥

(मिता०) यत्ते इति। ततस्तृतीयं कलशमादायानेन मन्त्रेणाऽभिषिञ्चेत्। ते तव केशेषु यद्दौर्भाग्यमकल्याणं सीमन्ते मूर्धनि च ललाटे कर्णयोरक्ष्णोश्च तत्सर्वमापो देव्यो घ्नन्तु उपशमयन्तु सर्वदेति२८३

(वी० मि०) स्नानोत्तरकृत्यमाह—

स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥
जुहुयान्मूर्धनि कुशान् सव्येन परिगृह्य तु ॥ २८४ ॥
मितश्च संमितश्चैव तथा शालकटङ्कटौ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ २८५ ॥

उक्तप्रकारेण स्नातस्य विनायकोपसृष्टस्य मूर्धनि सव्येन पाणिना कुशान् परिगृह्य अन्तर्धायकान् विधाय सार्षपं तैलं मितः संमितः शालः कटङ्कटः कूष्माण्डो राजपुत्र इत्येतैः षड्भिर्विनायकनामभिरन्ते स्वाहाकारसमन्वितैः चकाराभ्यामोङ्काराद्यैश्चतुर्थ्यन्तैस्तथा शास्त्रोक्तविधिना जुहुयात्। एवकार इतिकारेणाऽन्वितस्तेन इतिनामभिरेव न तु विनायकनाम्नेति व्यवच्छिद्यते। पूर्वश्लोकस्य चकाराभ्यां तैलं च मूर्द्धनि चेति योजिताभ्यां मूर्धाधिकरणकतैलहोमा·

नन्तरं षड्भिर्नामभिर्लौकिकाग्निपक्वस्थालीपाकहोमो लौकिकाग्नौ स्मृत्यन्तरेण बोधितः समुच्चीयते । मितश्चेति चकारेण प्रत्येकं षण्णां नाम्नां मन्त्रत्वमुक्तम् ॥ २८४-२८५ ॥

( वी० मि० ) ततः—

नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ॥
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २८६ ॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥
मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु ॥ २८७ ॥
पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥
मूलकं पूरिकापूपांस्तथैवोण्डेरि(१)कास्रजः ॥ २८८ ॥
दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् ॥
एतान्सर्वानुपा(२)हृत्य भूमौ कृत्वा ततः शिरः ॥ २८९ ॥
विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥
दूर्वासर्षपपुष्पाणां दत्त्वाऽर्घ्यं पूर्णमञ्जलिम् ॥ २९० ॥
रूपं देहि यशो देहि भगं भगवति(३)देहि मे ॥
पुत्रान्देहि ध(४)नं देहि सर्वान्कामांश्च(५)देहि मे ॥२९१॥

इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तरूपैर्नामभिर्बलिमन्त्रभूतैर्नमोन्तैश्च चकारादोङ्कारादिचतुर्थ्यन्तैर्दद्यात् । हुतशेषं स्थालीपाकरूपबलिमिन्द्रादिभ्य इत्यर्थात् । ततः कृताकृतानित्याद्युक्तानेतानेव सर्वान्विनायकस्यस्तज्जनन्यै चोपाहृत्य उपायनीकृत्य भूमौ शिरः कृत्वा ततः नमस्कृत्य शूर्पे कुशानास्तीर्य तत्रार्थात् उपहारद्रोपमास्तीर्य निधाय चतुष्पथे दद्यादित्यनुषज्यते । शूर्पस्थितमेव निदध्यादित्यर्थः । विनायकनमस्कारे मन्त्रः तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् । आम्बिकानमस्कारे तु मन्त्र सुभगायै विद्महे, काममालिन्यै धीमहि तन्नो गौरी प्रचोदयात् ।

( १ ) तथैवैण्डेरिकास्रज—इति मुद्रितपुस्तके पाठ ।
( २ ) समाहृत्य—इति मुद्रिते पाठ । ( ३ ) भगवन्—इति मु० पु० पाठ ।
( ४ ) धनम्—इति मु० पु० पाठ । ( ५ ) सर्वकामांश्च—इति मु० पु० पाठ ।

चतुष्पथनिधाने मन्त्रास्तु—

बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ।
मरुतोऽथाश्विनौ देवाः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधानाश्च पिशाचोरग मातरः ।
शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥
जृम्भकाः (१)सिद्धगन्धर्वा नागा विद्याधरा नराः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ।
मा विघ्नो मा च मे पापं मा सन्तु परिपन्थिनः ॥
सौम्या भवन्तु तृप्तास्तु भूताः प्रेताः शुभावहाः ।

कृताकृताः सकृदवहतास्तण्डुलाः, पललं तिलपिष्टं तन्मिश्र ओदनः पललौदनः, पक्वा आमाश्च मत्स्याः, मांसं एतावत् पक्वमपक्वं च, चित्रं रक्तपीतादिना नानावर्णं पुष्पं, सुगन्धश्चन्दनादिः, त्रिविधा सुरा गौडी पैष्टी माध्वी च, मूलकं, पूरिकापूपश्च प्रसिद्धः, तुण्डेरिकाः पिष्टमय्यस्तासां स्रजः, दध्यन्नं दधिमिश्रमन्नं, पायसं परमान्नं, गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टं मोदका लड्डुकास्तत्सहितम् । चकारादयोऽव्ययशब्दाः परस्परसाहित्यावश्यकत्वार्थाः । ततः शूर्पनिधानानन्तरं सकुसुमजलेनार्घ्यं दत्वा दूर्वया सर्षपेण पुष्पेण पूर्णमञ्जलिं दत्वाऽथाद्विनायकजनन्यै उपस्थानीयायै 'रूपं देही'त्यादिमन्त्रेण विनायकजननीमम्बिकामुपतिष्ठेदित्यर्थः । अत्र विनायकायाऽर्घं दत्त्वा पूर्ववदञ्जलिं दत्त्वा विनायकमप्युपतिष्ठेत् । मन्त्रे च भगवन्निति पुंल्लिङ्गोहः कार्य इति साम्प्रदायिकाः । अत्रोपहारादिकं सर्वं कर्म यजमानकृत्यं, उपहर्तव्यमन्त्रलिङ्गादिति वदन्ति ॥ २८६-२९१ ॥

ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २९२ ॥

( वी० मि० ) ततो यजमानः शुक्लाम्बरमाल्यादियुक्तः । ब्राह्मणान् भोजयेत् गुरोश्च वस्त्रयुग्मं दद्यात् । अपिशब्देन कर्माङ्गदक्षिणासमुच्चयः । वस्त्र एव दक्षिणा, अपिशब्दस्तु भोजनसमुच्चयार्थ इत्यप्याहुः ॥ २९२ ॥

---

(१) जृम्भकाश्च गन्धर्वाः—इति ख० पु० पाठः ।

( मिता० ) स्नातस्येति। ततश्चतुर्थं कलशमादाय पूर्वोक्तैस्त्रिभिर्मन्त्रैरभिषिञ्चेत्। 'सर्वमन्त्रैश्चतुर्थम्' इति म(१)न्त्रलिङ्गात्। उक्तेन प्रकारेण कृताभिषेकस्य मूर्धनि सव्यपाणिगृहीतकुशान्तर्हिते सार्षपं तैलं उदुम्बरवृक्षोद्भवेन स्रुवेण वक्ष्यमाणैर्मन्त्रैर्जुहुयादाचार्यः॥२८४॥

( मिता० ) मितश्चेति। मितसम्मितादिभिर्विनायकस्य नामभिः स्वाहाकारान्तैः प्रणवादिभिर्जुहुयादिति गतेन सम्बन्धः। स्वाहाशब्दयोगाच्चतुर्थी विभक्तिः। अतश्च ॐ मिताय स्वाहा ॐ संमिताय स्वाहा ॐ शालाय स्वाहा ॐ कटङ्कटाय स्वाहा ॐ कूष्माण्डाय स्वाहा ॐ राजपुत्राय स्वाहेति षड् मन्त्रा भवन्ति। अनन्तरं लौकिकेऽग्नौ स्थालीपाकविधिना चरु श्रपयित्वा एतैरेव षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ हुत्वा तच्छेषं बलिमन्त्रैरिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिश्चतुर्थ्यन्तैर्नमोऽन्वितैस्तेभ्यो बलिं दद्यात्॥ २८५॥

( मिता० ) अनन्तरं किं कुर्यादित्या(२)ह—

दद्यादित्यादि। कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य संनिधानात्तज्जनन्याश्च शिरसा भूमिं गत्वा 'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्' इत्यनेन मन्त्रेण विनायकं, 'सुभगायै विद्महे काममालिन्यै धीमहि। तन्नो गौरी प्रचोदयात्' इत्यनेनाम्बिकां च नमस्कुर्यात्। तत उपहारशेषमास्तीर्णकुशे शूर्पे निधाय चतुष्पथे निदध्यात्। 'बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा। मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः॥ असुरा यातुधानाश्च पि(३)शाचोरगमातरः। शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः॥ जृम्भकाः सिद्धगन्धर्वा माया(४)विद्याधरा नराः। दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः। मा विघ्नो मा च मे पापं मा सन्तु परिपन्थिनः॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः'॥ इत्येतैर्मन्त्रैः॥ कृताकृताः सकृदवहतास्तन्दुलाः। प(५)ललं तिलपिष्टं तन्मिश्र ओदनः पललौदनः। मत्स्याः पक्का अपक्काश्च। मांसमेतावदेव पक्वमपक्वं च। पुष्पं चित्रं रक्तपीतादिनानावर्णम्। चन्दनादि सुगन्धि द्रव्यम्। सुरा त्रिविधा गौडी माध्वी पैष्टी च। मूलकं मूलकः कन्दा-

(१) स्मृतिलिङ्गात् ग०। (२) दित्याह दद्यादित्यादिचतुर्भि ग०।
(३) पिशाचा मातरोरगा क.। (४) माया विद्या- क.। (५) पललं पिष्टक।

कारो भक्ष्यविशेषः । पूरिका प्रसिद्धा । अपूपः स्नेहपक्वो गोधूमविकारः । उण्डेर(१)काः पिष्टादिमय्यस्ताः प्रोताः स्रजः । दध्यन्नं दधिमिश्रमन्नम् । पायसं क्षैरेयम् । गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टम् । मोदकाः लड्डुकाः । अनन्तरं विनायकं तज्जननीमम्बिकां वक्ष्यमाणमन्त्रेणोपतिष्ठेत ॥

( मिता० ) किं कृत्वेत्याह—

दूर्वेति । सकुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाणां पूर्णमञ्जलिं दत्त्वोपतिष्ठेदिति गतेन सम्बन्धः ॥ २९० ॥

( मिता० ) उपस्थानमन्त्रमाह—

रूपमिति । तत इति च । (२)अम्बिकोपस्थाने भगवतीत्यूहः । ततोऽभिषेकानन्तरं यजमानः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणान्भोजयेद्यथाशक्ति । गुरवे श्रुताध्ययनवृत्तसम्पन्नाय विनायकस्नपनविधिज्ञाय वस्त्रयुग्मं दद्यात् । अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च । तत्रायं प्रयोगक्रमः—चतुर्भिर्ब्राह्मणैः सार्धमुक्तलक्षणो गुरुर्मन्त्रज्ञो भद्रासनरचनानन्तरं तत्संनिधौ विनायकं तज्जननीं चोक्तमन्त्राभ्यां गन्धपुष्पादिभिः समभ्यर्च्य चरुं श्रपयित्वा भद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः कलशैरभिषिच्य सार्षपं तैलं शिरसि हुत्वा चरुहोमं विधायाऽभिषेकशालायां चतुर्दिक्षु इन्द्रादिलोकपालेभ्यो बलिं दद्यात् । यजमानस्तु स्नानानन्तरं शुक्लमाल्याम्बरधरो गुरुणा सहितो विनायकाम्बिकाभ्यामुपहारं दत्त्वा शिरसा भूमिं गत्वा कुसुमोदकेनार्घ्यं दत्त्वा शिरसा भूमिं गत्वा कुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाञ्जलिं च दत्त्वा विनायकमम्बिकां चोपतिष्ठेत् । गुरुरुपहारशेषं शूर्पे कृत्वा चत्वरे निदध्यात् । अनन्तरं वस्त्रयुग्मं दक्षिणां ब्राह्मणभोजनं च दद्यादिति । इति विनायकस्नपनविधिः ॥ २९१—२९२ ॥

( वी० मि० ) उक्तायाः शान्तेः फलमाह—

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥
कर्मणां फलमाप्नोति श्रियं चा(३)प्नोत्यनुत्तमाम् ॥२९३॥

---

(१) उण्डेरकाः क्षुद्रापूपा इति कौस्तुभे ।
(२) विनायकोपस्थाने भगवन्नित्यूहः क० ख० । (३) महपूजां लभति ग० ।

एवमुक्तप्रकारेण विनायकं सम्पूज्य कर्मणां फलं विघ्नोपशमद्वारेणाप्नोति । न केवलं शान्तिकमिदं कर्म, किन्तु पौष्टिकमपीत्याह श्रियं चेति । न विद्यते उत्तमा यतस्तादृशीमनुत्तमां श्रियं धनादिसम्पत्तिमाप्नोति । चकाराद् प्रत्यक्षवक्ष्यमाणफलान्तराणां समुच्चयः । कर्मफलसिद्धे वक्ष्यमाणग्रहपूजाफलत्वमाह ग्रहांश्चेति । विधानतो वक्ष्यमाणप्रकारेण ग्रहान् सम्पूज्य कर्मणां फलमाप्नोति । पूजयेति छान्दसः प्रयोगः । चकारेण ग्रहपूजायां ब्राह्मणभोजनाद्युत्तराङ्गसमुच्चयः । एवकारोऽवधारणे, तेन प्राप्नोत्येवेत्यन्वयः ॥ २९३ ॥

( मिता० ) अस्यैव विनायकस्नपनस्योक्तोपसंहारेण संयोगान्तरं दर्शयितुमाह—

एवमिति । एवमुक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमविघ्नेनाप्नोतीत्युक्तोपसंहारः । संयोगान्तरमाह श्रियं चेतकृष्टतमामाप्नोतीति । श्रीकामश्चानेनैव विधानेन विनायकं पूजयेदित्यर्थः । आदित्यादिग्रहपीडाशान्तिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन् ग्रह(१)पूजामुपक्षिपति ग्रहांश्चैव विधानत इति । ग्रहानादित्यादीन्वक्ष्यमाणेन विधिना संपूज्य कर्मणां सिद्धिमाप्नोति श्रियं चाप्नोति ॥ २९३ ॥

( वी० मि० ) विनायकशान्तिप्रसङ्गेन तत्फलीभूतकर्मसिद्धिफलकान् धर्मानाह—

आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ॥
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥ २९४ ॥

सदा प्रत्यहं सूर्यस्य गणपतेश्च पूजां, स्वामिनः कार्तिके गोरोचनादिमाङ्गल्येन तिलकं तथापदेन पूजां च कुर्वन् कर्मणामारब्धानामपेक्षितानां वा सिद्धिं निष्पत्तिमवाप्नोतीत्यर्थः । महत्पदं च महाभारतवत्प्रशंसार्थं महेन्द्रवद्वा महागणपतिर्देवतान्तरस्तुतशस्तनयात् । चकारेण पूजा, फलान्तरस्य तत्तत्पुराणाद्युक्तस्य समुच्चयः । एवकारः क्रियान्वयी फलावश्यंभावपरः । मिताक्षरायान्तु सिद्धिपदं मोक्षपरतया व्याख्यातम् । सुवर्णतिलकस्य पूजायाश्चादित्यादौ सर्वत्र सम्बन्ध उक्तः । तिलकस्य प्रकरणेन तद्दानमप्याक्षिप्यते॥२९४॥

---

( १ ) मार्गेणनुत्तमाम्—इति क० पु० पाठः ।

(मिता०) नित्यकाम्यसंयोगानाह—

आदित्यस्येति। आदित्यस्य भगवतः सदा प्रतिदिवसं रक्तचन्दनकुङ्कुमकुसुमादिभिः पूजां कुर्वन् स्कन्दस्य महागणपतेश्च नित्यं पूजां कुर्वन् सिद्धिं मोक्षमात्मज्ञानद्वारेण प्राप्नोतीति नित्यसंयोगः। आदित्यस्कन्दगणपतीनामन्यतमस्य सर्वेषां वा तिलकं स्वर्णादिनिर्मितं रूप्यनिर्मितं वा कुर्वन् सिद्धिमभिलषितामाप्नोति। तथा चक्षुषी चेति काम्यसंयोगः॥ २९४॥

(वी० मि०) ग्रहांश्चैव विधानत इत्युक्तं, तत्र विधानं दर्शयिष्यन् कर्मसिद्धेः प्रागुक्ताया अतिरिक्तं फलमाह—

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत्॥
वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि॥ २९५॥

श्रीर्विख्याता, शान्तिर्धर्मद्वारा ऐहिकानिष्टनिवृत्तिः, वृष्टिर्वर्षं, आयुरपमृत्युजयेन दीर्घकालजीवनं, पुष्टिरपूर्वाभीष्टलाभोपलब्धपरिरक्षणं च, एतदन्यतरकामः अभिचरन् अदृष्टोपायेन परपीडां कामयमानो वा ग्रहयज्ञं ग्रहोद्देश्यकं सम्यक् शास्त्रोक्तेन विधिना आचरेत्कुर्यात्। वाकाराभ्यामेकस्मिन् प्रयोग एकमेव फलमिति यागसिद्धिन्यायसिद्धमभिहितम्। अपिशब्देनाऽऽरोग्यसमुच्चयः। तथैवेत्यनेनाऽभिचारकामस्यापि श्रीकामादिवदेवेतिकर्तव्यता, न तु अभिचारेऽपि विशेष इति दर्शितम्॥ २९५॥

(मिता०) 'ग्रहांश्चैव विधानतः। कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम्' इत्यनेन ग्रहपूजया कर्मणामविघ्नेन फलसिद्धिः श्रीश्च फलमित्युक्तम्। इदानीं फलान्तराण्याह—

श्रीकाम इति। श्रीकाम इति पूर्वोक्तस्यानुवादः। शान्तिकाम आपदुपशान्तिकामः। सस्यादिवृद्ध्यर्थं प्रवर्षणं वृष्टिः। आयुरपमृत्युजयेन दीर्घकालजीवनम्। पुष्टिरनवद्यशरीरत्वम् एताः कामयत इति वृष्ट्यायुःपुष्टिकामः। एते श्रीकामादयो ग्रहयज्ञं ग्रहपूजां समाचरेयुः। तथाऽभिचरन्नपि अदृष्टोपायेन परपीडा अभिचारस्तत्कामश्च ग्रहयज्ञं समाचरेत्॥ २९५॥

( वी० मि० ) ग्रहानाह—

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ॥

शुक्रः शनैश्चरो राहुः केतुश्चैव ग्रहाः स्मृताः ॥२९६॥

स्मृताः स्मृतावुक्ताः । चकारात् श्रुतावुक्ताश्च । एवकारेणाऽन्येषां ग्रहत्वं व्यवच्छिनत्ति । एषां महीपुत्रादिशब्देनोपासानामपि देवतात्वं महादानानुरूपेण वाच्यम् । केतुरित्येकवचनं गणाभिप्रायेण केतूनां बहुत्वात् ॥ २९६ ॥

( मिता० ) ग्रहानाह—

सूर्य इति । एते सूर्यादयो नवग्रहाः ॥ २९६ ॥

( वी० मि० ) ग्रहपूजायां प्रतिमासाध्यत्वात्तत्र द्रव्याण्याह—

ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ॥

रजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥ २९७ ॥

अत्र पञ्चम्यस्तृतीयार्थाः । ग्रहप्रतिमाकारास्तु स्मृत्यन्तरे द्रष्टव्याः, विस्तरभयान्नेह लिखिताः ॥ २९७ ॥

( वी० मि० ) इदं च चिरकालव्यापिनोऽयुतहोमादेः करणपक्षे, इतरथा तु पटादिलिखितेष्वेव ग्रहेषु पूजा कार्येत्याह—

स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेऽथवा (१) ॥

स्ववर्णैस्तत्तद्ग्रहसमानवर्णैर्वर्णकैः पटे वस्त्रे ग्रहा लेख्याः । अथवा गन्धैश्चन्दनादिभिः मण्डलके सम्यक् संस्कृतभूभागे लेख्याः । प्रथमथाकारेणानुक्तेस्ताम्रपात्रादिभिर्विकल्पमाह । तथा च देवीपुराणम्—

ताम्रपात्रे च कर्तव्या ग्रहा भागविकल्पिताः ।

श्यामे वा मण्डले वापि सर्वकामफलप्रदाः ॥

इति ॥

( वी० मि० ) पूजाविधिमाह—

यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ २९८ ॥

गन्धाश्च वलयश्चैव धूपो देयश्च गुग्गुलुः ॥

कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥ २९९ ॥

गन्धाश्च यथावर्णं तत्तद्ग्रहवर्णानुसारेण देयाः । वलयो वक्ष्य-

( १ ) मण्डलकेषु वा—इति मुद्रितपुस्तके पाठः ।

माणा देयाः । धूपश्चाऽसम्भवे सर्वेषां गुग्गुलुर्देयः । सम्भवे तु चिन्तामणौ विशेषः—

रवेः कुन्दुरकं धूपः शशिनस्तु घृतं य(१)था ।
भौमे सर्जरसं चैव अगुरुश्च बुधे स्मृतः ॥
सिह्लं(२)गुरवे दद्याच्छुक्रे बिल्वागुरु स्मृतम् ।
गुग्गुलं मन्दवारे तु लाक्षा राहोश्च केतवे ॥

प्रतिदैवतं तं तं ग्रहमुद्दिश्य 'सूर्याय त्वा जुष्टं निर्वपामी'त्यादिनिर्वापमन्त्रवन्तश्चरवोऽम्बरचाण्पासिद्धौदनाः कर्तव्याः । कुसुमानि चेति चकारेणाऽक्षताश्च यथावर्णं देया इत्युक्तम् । गन्धाश्चेति चकारो दीपसमुच्चयार्थः । वलयश्चेति नैवेद्यसमुच्चयार्थः । एवकार आवश्यकत्वार्थः । देयश्चेति चकारेण फलाधिक्यार्थकताम्बूलादेः परिग्रहः । मन्त्रवन्तश्चेति चकारेण चतुर्मुष्टिपरिमितत्वादिचतुर्धर्मसमुच्चयोर्थः ॥ २९८—२९९ ॥

( मिता० ) ग्रहाः पूज्या इत्युक्तं, किं कृत्वेत्याह—

ताम्रकादिति । सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः, तदलाभे स्ववर्णैर्वर्णकैः पटे लेख्याः । गन्धैर्मण्डलकेषु वा । गन्धैः रक्तचन्दनादिभिर्यथावर्णं लेख्या इत्यन्वयः । द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः । यथा—'पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । स(३)प्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥ श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नी(४)लः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ सर्वे किरीटिनः कार्या ग्रहा

---

( १ ) तथा—इति ख० पु० पाठः । ( २ ) सिह्लक—इति ख० पु० पाठः ।
( ३ ) सप्ताश्वः सप्तरज्जुश्च क० । ( ४ ) नीलसिंहासनः क० ग० ।

लोकरि तावहा: । स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा' इति ॥ एतेषां स्थापनदेशश्च तत्रैवोक्तः-'मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । उत्तरेण गुरुं विद्याद् बुधं पूर्वोत्तरेण तु ॥ पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके । पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे ॥ पश्चिमोत्तरतः केतुं स्थाप्या वै शुक्लतण्डुलैः' ॥ इति ॥ २९७ ॥

( मिता० ) ग्रहपूजाविधिमाह—

यथावर्णमिति । यथावर्णं यस्य ग्रहस्य यो वर्णस्तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि । फलयश्च । धूपश्च सर्वेभ्यो गुग्गुलुर्देयः । चरवश्च प्रतिदैवतमग्निप्रतिष्ठापनान्वाधानादिपूर्वकं 'चतुरश्चतुरो मुष्टीन्निर्वपस्यमुष्मै त्वा जुष्टं निर्वपामी'त्यादिविधिना कार्याः । अनन्तरं सुसमिद्धे(१)ग्नावध्माधानाद्याघारान्तं कर्म कृत्वा आदित्याद्युद्देशेन यथाक्रमं वक्ष्यमाणमन्त्रैर्वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारेण हुत्वा चरवो होतव्याः ॥ २९९ ॥

( वी० मि० ) पूजाबलिदानयोर्वक्ष्यमाणहोमे च सूर्यादीनां क्रमेण मन्त्रानाह—

आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत् ॥
उद्बुध्यस्वेति च ऋचो यथासङ्ख्यं प्रकीर्तिताः ॥ ३०० ॥
बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ॥
शंनोदेवीस्तथा काण्डात्केतुं कृण्वन्निमास्तथा ॥ ३०१ ॥

'आकृष्णेन रजसे'ति, 'इमं देवा' इति, 'अग्निर्मूर्द्धा दिवः ककु'दिति, 'उद्बुध्यस्वाग्ने' इति, 'बृहस्पते अतियदर्य' इति, 'अन्नात्परिस्रुतो रस'मिति, 'शन्नोदेवीरभिष्टय' इति, 'काण्डात्काण्डात्प्ररोहन्ती'ति, 'केतुं कृण्व'न्नितीमा ऋचः सूर्यादीनां यथासङ्ख्यं प्रकीर्तिताः । तथाशब्दैश्चकारेण तत्तच्छाखोक्तान् मन्त्रान् शाखाविशेषव्यवस्थितानभिप्रैति । एवकारेणाऽपरशाखीयमन्त्रव्यवच्छेदः ॥ ३००-३०१ ॥

( मिता० ) ग्रहमन्त्रानाह—

आकृष्णेनेति । बृहस्पते इति च । आकृष्णेन रजसा वर्तमान इत्यादयो नव मन्त्रा यथाक्रममादित्यादीनां वेदितव्याः ॥ ३००-३०१ ॥

(१) ऽग्न्यन्वाधानं तदनन्तरं कर्म कृत्वा क० ।

( वी० मि० ) तत्तद्ग्रहसमिधां विशेषं दर्शयन्नेव तद्धोमसङ्ख्यादिविशिष्टमाह—

अर्कः पलाशः खदिर(१)स्त्वपामार्गोऽथ पिप्पलः ॥
उदुम्बरः(२)शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ ३०२ ॥
एकैकस्य त्वष्ट(३)शतमष्टाविंशतिरेव वा ॥
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥ ३०३ ॥

सूर्यादेः क्रमादेकैकस्याष्टशतमष्टाधिकं शतमष्टाविंशतिर्वाऽर्काद्याः समिधो मधुघृताभ्यां युक्तेन दध्ना क्षीरेण वा संयुताः सत्यो होतव्याः । समित्संख्या चाहुतिसंख्यामेवोपलक्षयति । क्षीरेणेत्यादौ 'चैव समन्विताः' इति साम्प्रदायिकः पाठः । अपामार्गः 'चटचडी'ति (४)प्रसिद्धः । एवकारेण सर्वत्र ग्रहहोमे संख्येयमावश्यकीत्युक्तम् । अयुतहोमादौ तु आज्यतिलव्रीहियवक्षीरसमिद्भिः समसंख्यका एव होमाः कार्याः 'समं स्या'दिति न्यायात । यद्वा तत्रापि समिधामुक्तैव सङ्ख्या । आज्यादिभिश्च यथालाभमयुतादिसङ्ख्या पूरणीयेति । अथशब्देन एकस्य ग्रहस्याऽशेषसमिद्धोमानन्तरमपरस्य ग्रहस्य समिद्धोम इति क्रमं दर्शयति । चकारेणाऽयुतहोमादावाज्यादिद्रव्यसमुच्चयः । तुशब्दौ पादपूरणार्थौ । चिन्तामणौ तु ग्रहहोमप्रकरणे—

अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा ।
अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् ॥
प्रादेशमात्रा अशिखाः अशुष्काश्च पलाशिनीः (?) ।
समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥
देवानामपि सर्वेषां पालाशीं परमार्थवित् ।

इत्यादिस्मृत्यन्तरीयाः समिधां विशेषास्तत्र तत्राऽवगन्तव्याः ॥ ३०२—३०३ ॥

( मिता० ) इदानीं समिध आह—

अर्क इति । अर्कपलाशादयो यथाक्रमं सूर्यादीनां समिधो भव-

---

( १ ) खदिर अपामार्गोऽथ—इति मुद्रितपुस्तके पाठः ।
( २ ) औदुम्बरः—इति क० पु० पाठः ।
( ३ ) एकैकस्याष्टशतकं—इति क० पु० पाठः, एकैकस्याप्यष्टशतं—इति मुद्रितपुस्तके पाठः ।
( ४ ) अस्मिन् ग्रन्थेऽधुनातनं 'चिचिडा' इति भाषायामुच्यते सं० ।

न्ति । ताश्चार्द्रा अमग्नाः सत्वच' प्रादेशमात्राः कर्तव्याः ॥ ३०२ ॥

( मिता० ) किञ्च—

एकैकस्येति । आदित्यादीनामेकैकस्याऽष्टशतसंख्या अष्टाविंशतिसंख्या वा यथासम्भवं मधुना सर्पिषा दध्ना क्षीरेण वा युता अक्ता अर्कादिसमिधो होतव्याः ॥ ३०३ ॥

( वी० मि० ) बलिद्रव्याणि कथयस्तेषां विनियोगमाह—

गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ॥

दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥ ३०४ ॥

दद्याद्ग्रहक्रमादेत(१)द्ग्रहेभ्यो भोजनं बुधः ॥

शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥ ३०५ ॥

शक्तितः शक्तौ सत्यामेतत् गुडौदनादि सूर्यादिग्रहक्रमेण । गुडौदनाद्यसम्भवे वा यथालाभं घृतपायसाद्येकजातीयमेव सर्वग्रहेभ्यो विधिपूर्वकं बलिरूपतयोत्सृज्य तदेव ब्राह्मणेभ्यो भोजनं सत्कृत्य दद्यात् । क्षीरषाष्टिकं क्षीरमिश्रं षाष्टिकौदनं, हविः सघृतौदनं, चूर्णं तिलचू(२)र्णमिश्रौदनं, चित्रान्नम्—

तिलतण्डुलमुद्गं च अजाक्षीरं च शोणितम् ।
कर्णनासागृहीतं स्याच्चित्रौदनमुदाहृतम् ॥

इति परिभाषितं, शेषं प्रसिद्धम् । एवकारेण शक्तावुक्तद्रव्यविशेषाणामावश्यकत्वं दर्शयति । चकारेण स्मृत्यन्तरोक्तद्रव्याण्यभ्यनुजानीते । यथा—

गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ।
अङ्गारके मसूरान्नं क्षीरान्नं सोमसूनवे ॥
दध्योदनं च जीवाय शुक्राय च घृतौदनम् ।
शनैश्चराय कृसरमाजमांसं च राहवे ॥
चित्रौदनं च केतुभ्यः सर्वभक्षैरथाऽर्चयेत् । —३०४-३०५ ॥

( मिता० ) इदानीं भोजनान्याह—

गुडौदनमिति । दद्यादिति च । गुडमिश्र ओदनो गुडौदनः । पायसम् । हविष्यं मुन्यन्नादि । क्षीरषाष्टिकं क्षीरमिश्रं षाष्टिकौदनः ।

( १ ) दद्याद् ग्रहक्रमादेव—इति मुद्रितपुस्तके पाठः ।

( २ ) तिलपूर्णमिश्रौदनं—इति ख० पु० पाठः ।

दध्ना मिश्र ओदनो दध्योदनः। हविर्घृतौदनः। चूर्णं तिलचूर्णमिश्र ओदनः। मांसं भक्ष्यमांसमिश्र ओदनः। चित्रौदनो ननावर्णौदनः। एतानि गुडौदनादीनि यथाक्रममादित्याद्युद्देशेन भोजनार्थं द्विजेभ्यो ब्राह्मणेभ्यो दद्यात्। ब्राह्मणसंख्या यथाविभवं द्रष्टव्या। गुडौदनाद्यभावे तु यथालाभमोदनादि पादप्रक्षालनादिविधिपूर्वकं सत्कृत्य संमानपुरःसरं दद्यात्॥ ३०४–३०५॥

(वी० मि०) ग्रहयज्ञदक्षिणामाह—

धेनुः शङ्खस्तथाऽनड्वान हेम वासो हयः क्रमात्॥
कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः॥३०६॥

धेन्वादिकं क्रमात् सूर्यादिग्रहयज्ञदक्षिणात्वेन तत्तद्ग्रहप्रीतिकामो द्विजेभ्यो दद्यादिति पूर्वश्लोकस्थमनुषज्यते। तथाशब्देनाऽसम्भवे हिरण्यस्य सर्वत्र दक्षिणात्वमुक्तम्। वैशब्दः पादपूरणाय॥ ३०६॥

(मिता०) दक्षिणामाह—

धेनुरिति। धेनुर्दोग्ध्री। शङ्खः प्रसिद्धः। अनड्वान् भारस(१)हो बलीवर्दः। हेम सुवर्णम्। वासः पीतम्। हयः पाण्डुरः। कृष्णा गौः। (२)आयसं शस्त्रादि। छागः प्रसिद्धः। एता धेन्वादयो यथाक्रममादित्याद्युद्देशेन ब्राह्मणानां दक्षिणाः स्मृताः उक्ता मन्वादिभिः। एतच्च सम्भवे सति। असम्भवे तु यथालाभं शक्तितोऽन्यदेव यत्किञ्चिद्देयम्॥३०६॥

(वी० मि०) शान्तिकामो ग्रहयज्ञं समाचरेदित्यनेन सर्वग्रहाणां सति सम्भवे पूज्यत्वमुक्तम्, असम्भवे त्वाह—

यस्य यश्च यदा दुःस्थः स तं यत्नेन पूजयेत्॥
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ॥ ३०७॥

यस्य पुंसो यो ग्रहो यदा दुःस्थः अष्टमादिस्थानस्थः स तं ग्रहं तदा यत्नेन उक्तसकलाङ्गसम्पादनेन पूजयेत्। चकारस्त्वर्थः, तेन दुःस्थभिन्नस्य विशिष्टपूजावश्यकं व्यवच्छिद्यते। स्वल्पा तु पूजाऽन्येषामपि ग्रहाणां कार्यैव।

यस्तु पीडाकरो नित्यमल्पवित्तस्य वा पुनः।
तं तु यत्नेन सम्पूज्य शेषानप्यर्चयेद् बुधः॥

(१) भारवाही क० ग०।
(२) आयसमस्त्रादि, आयसं नाराचादि क०।

इति वचनात् । ग्रहपूजनेन शान्तिर्भवनीत्यत्र हेतुत्वमाह ग्रह्मणेति । पूजिताः सन्तो भवन्त पूजकान् पूजयिष्यथ शान्त्यादिरूपैष्टलाभेन प्रीणयिष्यथ इति एषां एभ्या ग्रहेभ्यो ब्रह्मणा वरो दत्त इत्यर्थः ॥ ३०७ ॥

( मिता० ) शान्तिकामेनाविशेषेण सर्वे ग्रहा पूजयितव्या इत्युक्तं तत्र विशेषमाह—

यस्येति । यस्य पुरुषस्य यो ग्रहो यदा दुःस्थोऽष्टमादिदुष्टस्थानस्थितः स तं ग्रहं तदा यत्नेन विशेषेण पूजयेत् । यस्मादेषां ग्रहाणां ब्रह्मणा पूर्वं वरो दत्तः पूजिता सन्तो यूयमिष्टप्रापणेनाऽनिष्टनिरसनेन च पूजयितारं पूजयिष्यथेति ॥ ३०७ ॥

( वी० मि० ) ग्रहपूजनं शान्त्याद्यर्थं सर्वेषामधिकारविशेषेऽपि राज्ञा राज्याभ्युदयार्थं विशेषतस्ते पूज्या इत्याह—

ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ॥
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥ ३०८ ॥

नरेन्द्राणां अभिषिक्तक्षत्रियाणामुच्छ्रायाः ऐश्वर्यादयः पतनानि तद्ध्वंशादयश्च ग्रहाधीनाः । जगत तत्परिपालनीयस्य लोकसमूहस्य भावाभावौ जन्ममरणे ग्रहाधीनौ । तस्माद्राज्ञा स्वीयसाधारणयोगक्षेमार्थं परिपालनीयलोकहितार्थं च ग्रहाः पूज्यतमाः । यथाऽन्येषां पूज्यास्ततोऽप्यतिशयेन पूज्या इत्यर्थ ॥ ३०८ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने शान्तिप्रकरणम् ।

( मिता० ) अविशेषेण द्विजानधिकृत्य शान्तिकपौष्टिकादीनि कर्माण्यनुक्रान्तानि तत्राभिषे(१)कगुणयुक्तस्य राज्ञो विशेषेणाधिकार इत्याह—

ग्रहाधीना इति । नरेन्द्राणामभिषिक्तक्षत्रियाणां ग्रहाः पूज्यतमाः । अनेना(२)न्येषामपि पूज्या इति गम्यते । उभयत्र कारणमाह— प्राणिनामभ्युदयविनिपाता ग्रहाधीना यस्मात्तस्मादधिकारिभिः पूज्याः । किं च जगतः स्थावरजङ्गमात्मकस्य भावाभावावुत्पत्तिनिरोधौ ग्रहाधीनौ । तत्र यद्येते पूजितास्तदा स्व(३)काल एवोत्पत्तिनि-

(१) निषेकयुक्तस्य ख० । (२) अथ वा येषामपि ख० ।
(३) स्वक लादुत्पत्ति ग० ।

रोधौ भवतः। अन्यथा उत्पत्तिसमये नो(१)त्पादोऽनिरोधकाले निरोधश्च। जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षेमकारिणां पूज्यतमा ग्रहा इति तेषां विशेषेण शान्तिकादिष्वधिकारः। तथा च गौतमेन— 'राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्' इति राजानमधिकृत्य 'वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्च। 'तनश्चैतान्स्वधर्मे स्थापयेत्' इत्यादीन्कांश्चिद्धर्मानुक्त्वा—'यानि च देवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत तदधीनमपि ह्येके योगक्षेमं प्रतिजानते' इति शान्तिकपौष्टिकाद्यनुष्ठानहेतुमभिधाय शान्तिकपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणः स्त(२)म्भनाभिचारद्विषद्व्यृद्ध्युक्तानि च शालाग्नौ कुर्यादिति शान्तिकादीनि दर्शितानि ॥ ३०८॥

इति ग्रहशान्तिप्रकरणम्।



( वी० मि० ) साधारणान् गृहस्थधर्मानभिधाय वक्ष्यमाणं सप्ताङ्गं राज्यं यथायथं प्रपञ्चयन्नेव नरेन्द्रपदेन प्रक्रान्तस्य राज्ञो गृहस्थस्य विशेषधर्मानाह सम्पूर्णप्रकरणेन—

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ॥
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥ ३०९॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ॥
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥ ३१० ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ॥
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥ ३११ ॥

कुलीनः क्षत्रियकुलोत्पन्नो नराधिपो राज्याभिषिक्तः सन्महोत्साहादिः स्यादित्यर्थः। महानुत्साहः पुरुषार्थसाधनं तत्तत्कर्माध्यवसायो यस्य स महोत्साहः। स्थूलं प्रचुरं लक्षं ब्राह्मणादिभ्यो देयत्वेनेच्छाविषयो यस्य स स्थूललक्षः। कृतज्ञः परकृतोपकाराविस्मरणशीलः। वृद्धानां ज्ञानवयस्तपोऽधिकानां सेवक उपासनकर्ता। विनीतो वशीकृतेन्द्रियः। सत्त्वं सम्पद्विपदोर्हर्षशोकातिशयाभावस्तत्सम्पन्नः तद्युक्तः। सत्यवाक् शास्त्रानभ्यनुज्ञातानृताभिधानशून्यः। शुचिः बा-

(१) तस्य नोत्पादो न काले क०। (२) संवननाभिचार ग०।

ह्याभ्यन्तरशौचयुक्तः । अवश्यकर्तव्यानां कर्मणामारम्भे आरब्धानां च समाप्तावविलम्बकारी अदीर्घसूत्रः । स्मृतिमान् राज्याद्युपयुक्तार्थाविस्मरणशीलः । अक्षुद्रः सद्गुणद्वेषशून्यः । अपरुषः शास्त्राननुमतपरुषाभिधानशून्यः । धार्मिको वर्णाश्रमधर्माचरणशीलः । अव्यसनः मृगयाऽक्षपानाद्यासङ्गशून्यः । प्राज्ञः इतिहासादिश्रवणेन । शूरोऽकातरः । रहस्यवित् मन्त्रणाचतुरः । स्वरन्ध्रं स्वस्य सप्ताङ्गराज्यस्य यत्परप्रवेशनद्वारं तस्य गोप्ता आच्छादयिता । आन्वीक्षिक्यां तर्कविद्यायाम् । दण्डनीत्यामर्थशास्त्रे । त्रय्यां ऋग्यजुःसामवेदरूपायाम् । वार्तायां कृषिवाणिज्यादिरूपायां यतनहेतुभूतायां विनीतस्तद्‌भिज्ञैः प्रवीणतां नीतः । यदाह मनुः—

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च तद्विदः ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥

एषकारैर्बहूनामेषामवश्यकत्वं तथाशब्दाभ्यां चकारैश्च अप्यन्तरोक्तानां राज्ञोऽन्तरङ्गधर्माणां समुच्चयो दर्शितः । एतेन स्वामिनो राज्याङ्गस्य प्रपञ्चनं कृतमित्यवधेयम् ॥ ३०९–३११ ॥

( मिता० ) साधारणान्गृहस्थधर्मानुक्त्वेदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह—

महोत्साह इति । अदीर्घसूत्र इति । स्वरन्ध्रगोप्तेति च । पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः, महानुत्साहो यस्यासौ महोत्साहः । बहुदेयार्थदर्शी स्थूललक्षः । परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः । तपोज्ञानादिवृद्धानां सेवकः । विनयेन युक्तो विनीतः । विनयशब्देनाविरुद्धः पूर्वोक्तस्नातकधर्मकलाप उच्यते–'न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्' इत्यादिनोक्तः । सत्त्वसंपन्नः सम्पदापदोर्हर्षविषादरहितः । मातृतः पितृतश्चाभिजनवान्कुलीनः । सत्यवाक्स(१)त्यवचनशीलः । शुचिर्बाह्याभ्यन्तरशुचियुक्तः । अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बतेऽसावदीर्घसूत्रः । अधिगतार्थाऽविस्मरणशीलः स्मृतिमान् । अक्षुद्रोऽसद्गुणद्वेषी । अपरुषः परदोषाकीर्तनः । धार्मिको वर्णाश्रमधर्मान्वितः । न विद्यन्ते व्यसनानि यस्यासावव्यसनः । व्यसनानि चाष्टादश । यथाह मनुः

(१) सत्यवादन ग० ।

( ७।४७-४८ )-'मृ(१)गयाऽक्षा दिवा स्वप्नः परिवादः स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पै(२)शुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' ॥ इति। तत्र च सप्त कष्टतमानि। यथाह (मनुः७।५०-५१) 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्। एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे। क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा' ॥ इति। प्राज्ञो गम्भीरार्थावधारणक्षमः। शूरो निर्भयः। रहस्यवित् गोपनीयार्थगोपनचतुरः। स्वरन्ध्रगोप्ता स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत्स्वरन्ध्रं तस्य गोप्ता प्रच्छादयिता। आन्वीक्षिक्यामात्मविद्यायां दण्डनीत्यामर्थयोगक्षेमोपयोगिन्यां, वार्तायां कृषिवाणिज्यपशुपालनरूपायां धनपचयहेतुभूतायां, त्रय्यां ऋग्यजुःसामा(३)ख्यायां च विनीतस्तत्तदभिज्ञैः प्रावीण्यं नीतः। यथाह मनुः-( ७ ४३ )-'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च(४)शाश्वतीम्। आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः' ॥ इति। नराधिपो राज्याभिषिक्तः। स्यादिति सर्वत्र सम्बन्धः ॥ ३०९-३११ ॥

( वी० मि० ) एवं राज्ञोऽन्तरङ्गान् धर्मानभिधाय अमात्यं राज्याङ्गं दर्शयन्नेव बहिरङ्गानाह 'विनीय स्थापयेत्पथी'त्यन्तेन—

**स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन् ॥**
**तैः सार्धं चिन्तयेद्राज्यं विप्रेणाऽथ ततः स्वयम् ॥ ३१२ ॥**

स राजा पूर्वोक्तगुणविशिष्टः सन् प्राज्ञान् हिताहितविवेककुशलान्, मौलान् कुलक्रमेण सेवकान्, स्थिरान् कदाचिदपि पराऽनाश्रितान्, बाह्याभ्यन्तरशुद्धियुक्तान्, मन्त्रिणः सचिवान् प्रकुर्वीत। मन्त्रिण इति बहुवचनेन सप्ताऽष्टौ वा मन्त्रिणः कार्या इत्युक्तम्। तथा च मनुः—

---

(१) आखेटकाख्यो मृगवधो मृगया, अक्षादिक्रीडा, दिवानिद्रा, परदोषकथनं, स्त्रीसम्भोगः, मद्यपानजनितो मदः, नृत्यगीतवादित्राणि त्रीणि, वृथाभ्रमणं-इति दश।

(२) पैशुन्यमविज्ञातदोषाविष्करणं, साहसं साधोर्बन्धनिग्रहः, द्रोहश्छद्मवधः, ईर्ष्यान्यगुणासहिष्णुता, असूया परगुणेषु दोषाविष्करण, अर्थदूषणमर्थानामपहरणं देयानामदान च, वाक्पारुष्यमाक्रोशादि, दण्डपारुष्यं ताडनादि इत्यष्टौ।

(३) साममय्यां पा०। (४) च तद्विदः पा०।

सचिवान् सप्त चाऽष्टौ वा कुर्वीत सुपरीक्षितान् ।

तैर्मन्त्रिभिर्व्यस्तैः समस्तैश्च सह राज्यं राज्ञोपयोगिसन्धिविग्रहादि कार्यं चिन्तयेत् विचारयेत् ॥ ३१२ ॥

( मिता० ) एवमभिषेकगुणयुक्तस्यान्तरङ्गान्धर्मानभिधायेदानीं बहिरङ्गानाह—

स मन्त्रिण इति । महोत्साहादिगुणैर्युक्तो राजा मन्त्रिणः कुर्वीत कथम्भूतान्? प्राज्ञान् हिताहितविवेककुशलान् । मौलान् स्ववंशपरम्परायातान् । स्थिरान्महत्यपि (१) दुर्विपादस्थाने विकाररहितान् । शुचीन् धर्मार्थकामभयोपधाशुद्धान् । तेच सप्ताष्टौ वा कार्याः । यथाह मनुः (७।५४)–'मौला(२)ञ्शास्त्रविदः शूरान्ल(३)ब्धलक्षान्कुलोद्भवान् । सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान्' ॥ इति । एवं मन्त्रिणः पूर्वं कृत्वा तैः सार्धं राज्यं सन्धिविग्रहादिलक्षणं कार्यं चिन्तयेत् समस्तैर्व्यस्तैश्च । अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन ब्राह्मणेन पुरोहितेन सह कार्यं विचिन्त्य ततः स्वयं बुद्ध्या कार्यं चिन्तयेत् ॥३१२ ॥

( वी० मि० ) कीदृक् स पुरोहितो विप्रः कार्य इत्यत आह—

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ॥

दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥ ३१३ ॥

पुरोहितं सर्वत्र दृष्टेऽदृष्टे च कार्ये पुरतो निहितं दानसत्कारादिभिरात्मीयं कुर्वीत । कीदृशं दैवज्ञं ग्रहोत्पाततच्छमनादेर्ज्ञातारं, उदितैः शास्त्रोक्तैरध्ययनानुष्ठानादिभिरुदितमभ्युदयशालिनं, दण्डनीत्यामर्थशास्त्रेऽथर्वाङ्गिरसेऽभिचारशान्तिकप्रधानेऽथर्वभागविशेषे च कुशलं निपुणम् । तथाशब्देन श्रेयःसमुच्चयः । प्रथमचकारेण मन्त्रिप्रकृतस्य गुणस्य शुचित्वस्य, द्वितीयचकारेणाऽऽन्वीक्षिक्याः समुच्चयः ॥ ३१३ ॥

( मिता० ) कीदृशं पुरोहितं कुर्यादित्याह—

पुरोहितमिति । पुरोहितं च सर्वेषु दृष्टादृष्टार्थेषु कर्मसु (४) पुरतो निहितं दानमानसत्कारैरात्मसम्बद्धं कुर्यात् । कथम्भूतम्? दैवज्ञं ग्रहो

(१) हर्षविकारस्थाने विषादरहितान् क० । (२) मौलान् पितृपैतामहक्रमेण सेवकान् ।
(३) लब्धलक्षान् लक्ष्यादच्युतशरादान् । (४) कर्मसु पुरः निहितं क० ।

त्पाततच्छमनादेर्वेदितारम् । उदितोदितं विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैरुदितं समृद्धम् । दण्डनीत्यामर्थशास्त्रे कुशलम् । अथर्वाङ्गिरसे च शान्त्यादिकर्मणि ॥ ३१३ ॥

( वी० मि० ) किञ्च—

श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ॥
यज्ञांश्चैव प्रकुर्वीत विधिवद् भूरिदक्षिणान् ॥ ३१४ ॥

श्रौ(१)त्यग्निहोत्रादिका, स्मार्ता महादानादिरूपा क्रिया तदर्थमृत्विजो वृणुयात् । वरणेन ऋत्विगाख्यसंस्कारयुक्तान् विप्रान् कुर्यात् । एवकारेण ऋत्विग्वरणस्याऽऽवश्यकत्वं, चकारेण पूर्वोक्तपुरोहितस्व वरणं समुच्चीयत इत्याहुः । ऋत्विग्वरणस्य प्रयोजनमाह यज्ञानिति । भूरिदक्षिणान् स्वशक्त्यनुसारिदक्षिणायुक्तान् । एवकारोऽत्र विधिवदित्यत्रान्वेति ।

अन्नहीनो दहेद्राष्ट्रं विधिहीनस्तु ऋत्विजः ।
यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः ॥

इति वचनात् । यज्ञान् यागाङ्गक्रियान् । चकारेण पशुयागपरिग्रहः ॥ ३१४ ॥

( मिता० ) श्रौतेति । श्रौतमग्निहोत्रादि । स्मार्तमौपासनादि । तत्क्रियाहेतोर्यागाऽनुष्ठानसिद्ध्यर्थम् । ऋत्विजो वृणुयात् । यज्ञांश्च राजसूयादीन्विधिवद्यथाविधानं भूरिदक्षिणान्बहुदक्षिणानेव कुर्यात् ॥ ३१४ ॥

( वी०मि० ) अपि च—

भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ॥
अक्षयोऽयं निधी राज्ञां यद्विप्रेपूपपादितम् ॥ ३१५ ॥

भोगान् भोग्यान् । गृहशय्यादीन् । वसूनि हिरण्यादीनि । चकाराभ्यामौषधाभययोः परिग्रहः । अत्रहेतुमाह विप्रेषु यदुपपादितं प्रतिपादितं गृहादि । अयमक्षयो राज्ञां निधिरभिलपितार्थदानायत्त इत्यर्थः ॥ ३१५ ॥

( मिता० ) किञ्च—

भोगांश्चेति । ब्राह्मणेभ्यो भोगान् सुखानि तत्साधनद्वारेण दद्यात् ।

(१) श्रौतीत्यारभ्य संस्कारयुक्तानित्यन्तं नास्ति ख० पुस्तके ।

वसूनि च सुवर्णरूप्यभूप्रभृतीनि विविधानि नानाप्रकाराणि। यस्मादेष राज्ञामक्षयो निधिः वेदविद्‌भ्यो ब्राह्मणेभ्यो दीयते । साधारणधर्मत्वेन दानप्राप्तौ सत्यां राज्ञां दानप्राधान्यप्रतिपादनार्थं पुनर्वचनम् ॥३१५॥

( वी० मि० ) हुत्वन्तरमाह—

अस्कन्नमव्यथ(१)चैव प्रायश्चित्तैरदूषितम् ॥

अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥ ३१६ ॥

अग्नेः सकाशादग्निसाध्याद्राजसूयादौ हुतादपि यो विप्ररूपेऽग्नौ हुतं श्रेष्ठमिह धर्मशास्त्रे उच्यते । श्रेष्ठत्वे हेतुः—अस्कन्नं क्षरणरहितं, अव्ययमप(२)शुष्यमाण, अव्ययमिति पाठे प्राणिहिंसाशून्यमित्यर्थः । प्रायश्चित्तैः प्रायश्चित्ताचरणकृद्भिरदूषितम् ॥ ३१६ ॥

( मिता० ) किञ्च—

अस्कन्नमिति। अग्नेः सकाशादग्निसाध्याद् भूरिदक्षिणाद्राजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमिहोच्यते। एतदस्कन्नं क्षरणरहितं अ(३)व्ययं पशुहिंसारहितं प्रायश्चित्तैरदूषितं प्रायश्चि(४)त्तरहितम् ॥ ३१६ ॥

( वी० मि० ) ब्राह्मणसम्प्रदानस्य चरमफलत्वमभिधाय एवं न्यायोपार्जितधनस्य दानाङ्गत्वमाह—

धर्मेण लब्धु(५)मीहेत लब्धं यत्नेन पालयेत् ॥

पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥ ३१७ ॥

धर्मेण धर्मोपायेन धनं लब्धुं स्वीकर्तुमीहेत चेष्टेत । लब्धं च धनं यत्नेन तत्परतया पालयेत् । पालितं च धनं नीत्या नीत्यनुसारिशास्त्राविरुद्धधनवर्धनोपायेन वर्धयेत् । एवं वृद्धिमाप्तं धनं पात्रेषु ब्राह्मणेषु निक्षिपेत् दद्यादित्यर्थः ॥ ३१७ ॥

( मिता० ) वसूनि विप्रेभ्यो दद्यादित्युक्तं, कया परिपाट्या दद्यादित्याह—

अलब्धमिति । अलब्धलाभाय धर्मशास्त्रानुसारेण यतेत । यत्नेन लब्धं तत्परिपालयेत् स्वयमवेक्षया रक्षेत् । पालितं तत्परतया र

( १ ) अस्कन्नमव्यथ—इति मु इतपुस्तके पाठः ।
( २ ) अशुष्यमाण इति ख० पु० पाठः ।
( ३ ) अव्यय ख० ।  ( ४ ) प्रायश्चित्तप्रसक्तरहित ख० ।
( ५ ) अलब्धमीहेद्धर्मेण—इति मु द्रितपुस्तके पाठः ।

क्षितं नीत्या वणि(१)क्पथादिकया वृद्धिं नयेत् । वृद्धं च पात्रेषु त्रिविधेषु धर्मार्थकाममयुक्तेषु निक्षिपेद्दद्यात् ॥ ३१७ ॥

( वी० मि० ) तत्र भूमिदाने तत्प्रसङ्गान्निबन्धप्रकरणे च विशेषमाह—

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ॥
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ३१८ ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिन्हितम् ॥
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥ ३१९ ॥
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ॥
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ॥ ३२० ॥

भूमिं ब्राह्मणादिभ्यो दत्त्वा निबन्धं अस्यां भूमावियान् करो ग्राह्य इत्यादिव्यवस्थां च कृत्वा आगामिनां भविष्यतां भद्राणां समीचीनानां नृपतीनां परिज्ञानाय लेख्यं दानादिप्रतिपादक(२)लिपिरूपं कारयेत् । कथं कारयेदित्यत आह पट इत्यादि । पटे वस्त्रे ताम्रपट्टे वा ताम्रफलके स्वमुद्रया स्वासाधारणचिन्हेन उपरि लिखिताक्षराणां मूर्द्धभागे चिन्हितं शासनं दानाद्याज्ञाप्रतिपादकं लेख्यमात्मनो वंश्यानात्मानं च प्रतिग्रहस्य प्रतिग्राह्याया भूमेः परीमाणं, दानस्य दत्तभूमेः छेदे आच्छिद्य ग्रहणे उपवर्णनम्—

षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ।
आच्छेत्ता वाऽनुमन्ता च तान्येव नरके वसेत् ॥

इत्यादिफलप्रतिपादकं वाक्यं अभिलेख्य स्वहस्तचिन्हेन दानकाललिखनेन च सम्पन्नमत एव स्थिरं अप्रामाण्यशङ्कानास्कन्दनीयं महीपतिः कारयेत् । तुशब्देनाऽन्यत्र दाने लेख्यावश्यकत्वं व्यवच्छिद्यते । आत्मानं चेति चकारेण प्रतिग्रहीतृसमुच्चयः ॥३१८-३२०॥

( मिता० ) पात्रे निक्षिप्य किं कुर्यादित्याह—

दत्त्वेति । यथोक्तविधिना भूमिं दत्त्वा स्वत्वनिवृत्तिं कृत्वा निब(३)न्धं वा एकस्य भाण्डभरकस्येयन्तो रूपकाः, एकस्य पर्णभरक-

---

( १ ) वाणिज्यादिकया ग० । ( २ ) प्रतिबन्धकलिपिरूपं-इति क० पु० पाठ ।

( ३ ) अस्मिन्ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्येवमादिनियमो निबन्धः. अपरार्कः ।

स्येयन्ति पर्णानीति वा निबन्धं कृत्वा लेख्यं कारयेत्। किमर्थम्। आगामिनः पश्यन्तो ये भद्राः साधवो नृपतयो भूपास्तेषामनेन दत्तमनेन प्रतिगृहीतमिति परिज्ञानाय। पार्थिवो भूपतिः। अनेन भूपतेरेव भूमिदाने निबन्धदाने वाऽधिकारो न भोगपतेरिति दर्शितम् ॥ ३१८ ॥

[ मिता० ] लेख्यं कारयेदित्युक्तं कथं कारयेदित्याह—

पटे इति। प्रतिग्रहपरिमाणमिति च। कार्पासिके पटे ताम्रपट्ट[१]फलके वा आत्मनो वंश्यान्प्रपितामहपितामहपितॄन्। बहुवचनस्यार्थवत्त्वाय यथावीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्य आत्मानं च शब्दात्प्रतिग्रहीतारं प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं चाभिलेख्य। प्रतिगृह्यत इति प्रतिग्रहो निबन्धस्तस्य रूपकादिपरिमाणम्। दीयत इति दानं क्षेत्रादि, तस्य छेदः छिद्यतेऽनेनेति छेदः [२]नद्याघाटौ नि-(३)वर्तनं तत्परिमाणं च तस्योपवर्णनं, अमुकनद्या दक्षिणतोऽयं ग्रामः क्षेत्रं वा, पूर्वतोऽमुकग्रामस्यैतावन्निवर्तनमित्यादिनिवर्तनपरिमाणं च लेख्यम्। एवं आघाटस्य भवीनगरवर्त्मादेः संचारित्वेन भूमेन्यूनाधिकभावसम्भवात्तन्निवृत्त्यर्थम्, स्वहस्तेन स्वहस्तलिखितेन मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितमित्यनेन सम्पन्नं युक्तं, कालेन च द्विविधेन शकनृपातीतरूपेण संवत्सररूपेण च कालेन चन्द्रसूर्योपरागादिना संपन्नं स्वमुद्रया गरुडवराहादिरूपयोपरि बहिश्चिह्नितमङ्कितं स्थिरं दृढं शासनं शि(४)ष्यन्ते भविष्यन्तो नृपतयोऽनेन दानाच्छ्रेयोऽनुपालनमिति शासनं कारयेत्। महीपतिर्न भोगपतिः। सन्धिविग्रहादिकारिणा न(५) येन केनचित्। 'सान्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः। स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम्' ॥ इति स्मरणात्। दानमात्रेणैव दानफले सिद्धे शासनकरणं तत्रैव भोगाभिवृद्ध्या फलातिशयार्थम् ॥ ३१९—३२० ॥

( वी० मि० ) राज्य आवश्यकप्रजापरिपालनाद्युपयोगीनि कृत्यान्तराण्याह—

रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ॥

(१) वजफलके क० ग०। (२) नद्याघटौ ग०। (३) न्निर्वर्तनपरिमाण च क०।
(४) शास्यन्ते ग०। (५) न-येन ग०।

तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ ३२१ ॥

रम्यं रमणीयं पशव्यं पशुभ्यो हितं आजीव्यं कन्दमूलफलाद्यर्थं प्रजादिभिरुपजीवनीयं जाङ्गलं सुजलतरुपर्वतं उच्चप्रायमिति केचित्। एतादृशं देशमावसेत् तादृशे देशे वसेदित्यर्थः। "उपान्वध्याङ्वसः" ( पा० सू० १।४।४८ ) इति सप्तम्यर्थे द्वितीया। तत्र तादृशदेशे जनानां स्वराष्ट्रवासिनां कोशस्य सुवर्णादेः आत्मनश्च रक्षार्थं दुर्गाणि कुर्वीत। दुर्गाण्याह मनुः—

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम् ॥

एतेन दुर्गरूपं राज्याङ्गं दर्शितम् ॥ ३२१ ॥

( मिता० ) इदानीं राज्ञो निवासस्थानमाह—

रम्यमिति। रम्यं रमणीयं अशोकचम्पकादिभिः। पशव्यं पशुभ्यो हितं पशुवृद्धिकरम्। आजीव्यमुपजीव्यं कन्दमूलपुष्पफलादिभिः। जाङ्गलं यद्यप्यल्पोदकतरुपर्वतोद्देशो जाङ्गलस्तथाप्यत्र स(१)माधिकजलतरुपर्वतो देशो जाङ्गलशब्देनाऽभिधीयते तं देशमावसेदधिवसेत्। तथैवंविधे देशे जनानां कोशस्य सुवर्णादेरात्मनश्च रक्षणार्थं दुर्गं कुर्वीत। तच्च षड्विधम्। यथाह मनुः (७ ७०)—'ध(२)न्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्' ॥ इति ॥ ३२१ ॥

( वी० मि० ) किञ्च—

तत्र तत्र च निष्णातानध्यक्षान् कुशलान् शुचीन् ॥
प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥ ३२२ ॥

तत्र तत्र धर्मकोशहस्त्यश्वादिस्थानान्तःपुरादिषु अध्यक्षान्

---

( १ ) समजल क० ।

( २ ) धन्वदुर्गं अमंवेष्टितं चतुर्दिशं पञ्चयोजनमनुदकम्। महीदुर्गं पाषाणेष्टकायुतद्वादशहस्तोच्छ्रितेन युद्धार्थमुपरिभ्रमणयोग्येन सावरणगवाक्षादियुक्तेन प्राकारेण समन्ताद्वेष्टितं मह्यारम्। जलदुर्गमगाधोदकेन समन्ततो वेष्टितम्। वार्क्षं बहिः सर्वतो योजनमात्रं व्याप्य तिष्ठन्महावृक्षकण्टकिगुल्मलतायाचितम्। नृदुर्गं चतुर्दिगवस्थापितहस्त्यश्वरथयुक्तबहुपादातरक्षितम्। गिरिदुर्गं सर्वतः पृष्ठमतिदुरारोहं संकीर्णैकमार्गोपेतं अन्तर्नदीप्रस्रवणाद्युदकयुक्तं बहुसस्योत्पन्नक्षेत्रवृक्षान्वितम्।

अधिकारिणः प्रकुर्यान्नियुञ्जीत । यदा(१)हु —

धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् ।
क्लीबान् स्त्रीषु नियुञ्जीत नीचान्नीचेषु धर्मवित् ॥

कीदृशान् निष्णातान् अनन्यव्यापारान् । कुशलान् तत्तद्व्यापारचतुरान् । शुचीन् परद्रव्यग्रहणादिजन्याशौचरहितान् । चकारात् पूर्वोक्तास्यस्तस्यसमुच्चयः । आये सुवर्णाद्युत्पादने, कर्मान्ते आरब्धकर्मनिर्वाहे, व्ययकर्मणि आवश्यकदुर्गादिरक्षणोपयोगिधनव्यये च कर्मणि । चकारादायस्थानरक्षणादिके उद्यतानुद्युक्तान् ॥ ३२२ ॥

(मिता०) किंच—

तत्रेति । तत्र तत्र ध(२)र्मार्थकामादिषु अध्यक्षान् योग्यानधिकारिणः प्रकुर्यान्नियुञ्जीत । यथाहु —'धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् । स्त्रीषु क्लीबान्नियुञ्जीत नीचान्नीचेषु कर्मसु' । इति कीदृशान् निष्णातानन्यव्यापारान् । कुशलान् तत्तद्व्यापारचतुरान् । शुचीन् चतुर्विधोपधाशुद्धान् । आयकर्मसु सुवर्णाद्युत्पत्तिस्थानेषु व्ययकर्मसु सुवर्णादिदानस्थानेषु च उद्यतानलसान । चशब्दात्प्राज्ञत्वादिगुणयुक्तान् । उक्तं च—'प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता । कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता' ॥ इति ॥ ३२२ ॥

(वी० मि०) दानान्तराद्रणार्जितधनदानस्य प्रजाभ्योऽभयदानस्य चातिशयमाह—

नाऽतः परतरो धर्मो नृपाणां यद्रणार्जितम् ॥
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभय (३)सदा ॥ ३२३ ॥

रणे युद्धेऽर्जितं यद्द्रव्यं विप्रेभ्यो दीयते यच्च प्रजाभ्यः सदाऽभयं सार्वकालिकमभयं दीयतेऽतः परतर उत्कृष्टो धर्मो नृपाणां नास्तीत्यर्थः । चकारेण रणार्जितशरणागतादिसमुच्चयः ॥ ३२३ ॥

(मिता०) 'भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च' इति सामान्येन स्वस्वदानमुक्तम्, इदानीं नृपाणां विक्रमार्जितस्य दानफलातिशयमाह—

नात इति । अस्मादुत्कृष्टतरो धर्मो नृपाणां न विद्यते यद्रणार्जित

(१) तथा—इति क० पु० पाठः ।
(२) धर्मादस्यादिषु ग० ।
(३) तथा इति क० पु० पाठः ।

द्रव्यं विप्रेभ्यो दीयते। यच्च प्रजाभ्योऽभयदानम् ॥ ३२३ ॥

(वी० मि०) रणार्जितदानमुक्तं, तत्र युक्तं 'न संशय प्रपद्येते'-त्यादिवचने रणस्याऽकर्तव्यत्वप्रतिपादनादित्याशङ्कायां शास्त्राननु-मतसाहसपरमेवाऽकर्तव्यत्वप्रतिपादनमित्यभिप्रेत्याह—

य आहवेषु वध्यन्ते भूम्यर्थमपराजिताः(१) ॥
अकूटै रायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३२४ ॥
पदानि क्रतुतुल्यानि भग्नेष्वप्यनिवर्तिनाम्(२) ॥
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ ३२५ ॥

अपराजिता अपराङ्मुखा भूम्यर्थमाहवेषु अकूटैरविषादिग्धैरा-युधैः क्रियमाणेषु वध्यन्ते ते योगिनो योगाभ्यासरता इव स्वर्गं यान्ति। योगिनां च स्वर्ग उक्तो भगवद्गीतायाम्—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥

इति। भग्नेषु पराभूतेषु स्वसैन्येषु अनिवर्तिनां अपराङ्मुखानां यदा नियुद्धे दीयमानानि प्रत्येकमश्वमेधतुल्यानीत्यर्थः। विनिवर्ति-नामिति पाठे भग्नसैन्याद्विनिवर्ततामित्यर्थः। राज्ञा युद्धे पलायनं न कर्तव्यमित्यभिप्रेत्य पलायिनां दोषमाह राजा सुकृतमिति। हतानां युद्धे शस्त्रादिपीडितानामत एव विपलायिनां सुकृतं राजा प्रतिपक्ष आदत्ते पलायिनां सुकृतं नश्यतीत्यर्थः ॥ ३२४-३२५ ॥

(मिता०) रणार्जितं द्रव्यं देयमित्युक्तं, द्रव्यार्जनाय रणे प्रवृत्त-स्य विपत्तिरपि सम्भवतीति न धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रे(३)यसीत्यत आह—

य इति। ये भूम्याद्यर्थमाहवेषु प्रवृत्ता अपराङ्मुखा अभिमुखा वध्यन्ते मार्यन्ते ते स्वर्गं यान्ति। योगाभ्यासरता यथा। यद्यकूटैर-विषदिग्धादिभिरायुधैर्योद्धारो भवन्ति ॥ ३२४ ॥

(मिता०) किञ्च—

पदानीति। स्वबलेषु करितुरगरथपदातिषु भग्नेष्वविनिवर्तिनां

(१) भूम्यर्थमपराङ्मुखाः—इति मुद्रितपुस्तके पाठः।
(२) भग्नेष्वविनिवर्तिनाम्—इति ,, ,, ,,।
(३) श्रेयसी ग०।

परबलाभिमुखयायिनां पदानि क्रतुतुल्यान्यश्वमेधतुल्यानि । विपर्यये दोषमाह-विपलायिनां पराङ्मुखानां हतानां राजा सुकृतमादत्ते ॥३२५॥

( वी० मि० ) राज्ञो युद्धे धर्मान्तरमाह—

तवाहंवादिनं क्लीवं निर्हेतिं परसङ्गतम् ॥
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ॥ ३२६ ॥

तवाऽहमिति वादिनं, क्लीवं नपुंसकं, निर्हेतिं निरायुधं, परसङ्गतमन्येन सह युद्ध्यमानं, विनिवृत्तं आरब्धयुद्धात्, युद्धप्रेक्षणकं युद्धदर्शनमात्रपरं, आदिपदेन दन्ततृणग्राहिपरिग्रहः । कः स्वार्थे । चकारो व्यसनसारथ्यादिपरिग्रहार्थः । तदाह गौतमः—'न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षाधिरूढदूतगोब्राह्मणवादिभ्यः'। शङ्खः—'न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिनं न दूतं न ब्राह्मणं न राजानमराजा हन्यात्'॥३२६॥

( मिता० ) अपि च—

तवेति । तवाहमिति यो वदति तं, क्लीवं नपुंसकं, निर्हेतिं निरायुधं परसङ्गतमन्येन सह युध्यमानं विनिवृत्तं युद्धाद्विनिवृत्तं युद्धप्रेक्षणकं युद्धदर्शिनं ॥ हन्यादिति सर्वत्र सम्बन्धः । आदिग्रहणादश्वसारथ्यादीनां ग्रहणम् । यथाह गौतमः—'न दोषो हिंसायामाहवेऽन्यत्र अश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढोन्मत्तदूतगोब्राह्मणादिभ्यः' इति । शङ्खोप्याह—'न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिनं न सूतं न दूतं न ब्राह्मणं न राजानमराजा हन्यात्' इति ॥ ३२६ ॥

( वी० मि० ) एकपूर्वाह्णकृत्यमारभ्याऽपरपूर्वाह्णकृत्यपर्यन्तं राज्ञ आह सप्तभिः—

कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ॥
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥ ३२७ ॥

कृता रक्षा रक्षणोपायो दैवमानुषभेदेन द्विविधो येन स कृतरक्षः । समुत्थाय सावधानीभूय । स्वयमायव्ययौ पश्येत् । ततो व्यव-

हारान्। अग्रे वक्ष्यमाणान् भाषोत्तरादिरूपचतुष्पादान् जयभङ्गपर्यन्तान्। दृष्ट्वाऽवधार्य मध्यन्दिने स्नात्वा कामतो यथारुचि निषिद्धवर्जं भुञ्जीत ॥ ३२७ ॥

(मिता०) कृतरक्ष इति। कृतरक्षः पुरस्यात्मनश्च रक्षां विधाय प्रतिदिनं प्रातःकाल उत्थाय स्वयमेवायव्ययौ पश्येत्। ततो व्यवहारान् दृष्ट्वा मध्याह्नकाले स्नात्वा कामतो यथाकालं(१) भुञ्जीत ॥ ३२७ ॥

(२)हिरण्यव्यापृतानीतं (३)भाण्डागारे क्षिपेत्ततः ॥
पश्येच्चारांस्ततो दूतान् प्रेषयेन्मन्त्रिसङ्गतः॥ ३२८ ॥

(वी० मि०) ततो व्यापृतैरधिकारिभिरानीतं हिरण्यादिकं भाण्डागारे कोशस्थाने निदध्यात् स्वयमधिकारिद्वारा वा यथौचित्यम्। एतेन कोशाख्यं राज्याङ्गं दर्शितम्। ततश्चारान् प्रच्छन्नान्वार्ताहरान् प्रत्यागतान् पश्येत। तदुक्तमवगच्छेदिति यावत्। ततो मन्त्रिसङ्गतः सन् दूतान् चारोक्तशत्रुबलाबलानुसारेण सन्धिविग्रहादिसन्देशहरान् गूढान् प्रेषयेत्। दूतानिति बहुवचनं निसृष्टार्थसन्दिष्टार्थशासनहस्तभेदेन त्रिविधत्वं दूतानां दर्शयितुम्। तत्र स्वयमेव राजकार्याणि देशकालोचितानि योऽभिधत्ते स निसृष्टार्थः। वाचिकं परस्मै यो निवेदयेति स सन्दिष्टार्थः। राजलेख्यं यः प्रापयति स शासनहस्त इति ॥ ३२८ ॥

(मिता०) हिरण्येति। तदनन्तरं हिर(४)ण्यव्यापृतैर्हिरण्याद्यानयननियुक्तैरानीतं स्वयमेव निरीक्ष्य भाण्डागारेषु निक्षिपेत्। ततश्चा(५)रान्स्पशान्प्रत्यागतान्पश्येत्। ये परराज्ये वृत्तान्तपरिज्ञानाय परिव्राजकतापसादिरूपेण गूढचारिणः प्रेपितास्तांश्चारान्दृष्ट्वा क्वचिन्निवेशयेत्। दूताश्च ये प्रकटमेव राजान्तरं प्रति गतागतमाचरन्ति। ते च त्रिविधाः निसृष्टार्थाः सन्दिष्टार्थाः शासन(६)हराश्चेति। तत्र निसृष्टार्था राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः। उक्तमात्रं ये परस्मै निवेदयन्ति ते सन्दिष्टार्थाः। शासनहरास्तु राज-

(१) यथारुचि—इति क्वाचित्क उत्तमः पाठः।
(२) हिरण्यं व्यापृतानीतं—इति पाठः सर्वत्र।
(३) भाण्डागारेषु निक्षिपेत्—इति मुद्रितपुस्तके पाठः।
(४) हिरण्यादिक ग.। (५) चारानिश्चस्तान् ख.।
(६) शासनहस्ताश्चेति क.।

लेखहारिणः तान्पूर्वप्रेषितानागतान्मन्त्रिसहितः पश्येत् । दृष्ट्वा तद्वार्तामाकलय्य पुनः पुनः प्रेषयेत् ॥ ३२८ ॥

ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ॥
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥ ३२९ ॥

(वी० मि०) ततोऽपराह्णे स्वैरं यथेष्टं विहारी अन्तःपुरस्त्रीभिस्सह एकाकी क्रीडायुक्तः स्यात् । अथवा मन्त्रिभिर्विश्वासास्पदैर्नर्मसचिवैः समन्वितः सन् विहारी स्यात् । ततश्च बलानां हस्त्यश्वादीनां दर्शनं कृत्वा सेनान्या सेनाध्यक्षेण सह बलरक्षणादिदेशकालोचितं चिन्तयेत् । यदाह मनुः—

भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च यथाकामं पुनः कार्याणि चिन्तयेत् ॥

इति । एतेन खण्डपदेनाग्रे वक्ष्यमाणं बलरूपं राज्याङ्गं दर्शितम् ॥ ३२९ ॥

(मिता०) तत इति । तदनन्तरमपराह्णे स्वैरं यथेष्टमेकोऽन्तःपुरविहारी स्यात् । मन्त्रिभिर्वा विदग्धैर्विटैः कलाकुशलैः परिहासवेदिभिः परिवृतः स्त्रीभिश्च रूपयौवनवैदग्ध्यशालिनीभिः । 'भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह । विहृत्य तु यथाकामं पुनः कार्याणि चिन्तयेत्' ॥ इति (७।२२१) मनुस्मरणात् । ततो विचित्रैर्वस्त्रकुसुमविलेपनालङ्कारैरलङ्कृतः हस्त्यश्वरथपदातिबलानि दृष्ट्वा सेनान्या सेनापतिना सह तद्रक्षणादि देशकालोचितं चिन्तयेत् ॥३२९॥

सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥
गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ॥ ३३० ॥

(वी० मि०) सायंसन्ध्यामुपास्याऽपराह्णाऽनन्तरमागतानां चाराणां रहस्यभाषितं शृणुयात् । ततो गीतनृत्यक्रीडनैरुपलक्षितोऽनन्तरं भुञ्जीत । स्वाध्याय वेदमभ्यासार्थमेव पठेदित्यर्थः । चकारेण वाद्यश्रवणपरिग्रहः ॥ ३३० ॥

(मिता०) सन्ध्यामिति । ततः सायङ्काले सन्ध्यामुपास्य । सामान्येन प्रातस्याऽपि पुनर्वचनं कार्याकुलत्वादविस्मरणार्थम् । अनन्तरं ये पूर्वदृष्टाः क्वचित्स्थाने निवेशितास्तेषां चाराणां गूढभाषितमन्तर्वेश्मनि शस्त्रपाणिः शृणुयात् । उक्तं च मनुना (८।२२३) —'स-

न्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् । रहस्याख्यायिनां चैव प्राणिधीनां च चेष्टितम्' ॥ इति । ततो नृत्यगीतादिभिः कांचित्कालं क्रीडित्वा कक्षान्तरं प्रविश्य भुञ्जीत । 'गत्वा कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं जनम् । प्रविशेद्भोजनार्थं च स्त्रीभिरन्तःपुरं सह' ॥ इति ( मनुः ८।२२४) स्मरणात् । ततोऽविस्मरणार्थं यथाशक्ति स्वाध्यायं पठेत् ॥ ३३० ॥

संविशेत्तूर्यघोषेण प्रतिबुद्ध्येत्तथैव च ॥

शास्त्राणि चिन्तयेद् बुध्या सर्वकर्तव्यतां (१)तथा ॥३३१॥

( वी० मि० ) तूर्यघोषेण वादित्रशब्देनोपलक्षितः शयीत । तथैव तूर्यघोषेणैव प्रतिबुध्येत् जागृयात् । चकाराद्बन्दिमागधस्तुत्यादिभिः प्रतिबुद्धयेच्च । स्वबुद्धया शास्त्राणि । तथा शास्त्रानुसारेण सर्वं च कर्तव्यसमुदायं च चिन्तयेत् विचारयेत् ॥ ३३१ ॥

( मिता० ) संविशेदिति । तदनन्तरं तूर्यशङ्खघोषेण संविशेत्स्वप्यात् । तथैव तूर्यादिघोषेण प्रतिबुध्येत् । प्रतिबुद्ध्य च शास्त्रविद्भिर्विश्वासिभिः सह एकाकी वा पश्चिमे यामे शास्त्राणि चिन्तयेत् । सर्वकर्तव्यताश्च सर्वकार्याणि च । एतच्च स्वस्थं प्रत्युच्यते । अस्वस्थः पुनः सर्वकार्येष्वन्यं नियोजयेत् । यथाह मनुः—'एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः । अस्वस्थः सर्वमेवैतन्मान्त्रिमुख्ये निवेशयेत्' ॥ इति ॥ ३३१ ॥

प्रेषयेच्च ततश्चारान् स्वेष्वन्येषु च सादरम्(२) ॥

(वी० मि०) ततस्तत्रस्थ एव स्वेष्वन्तःपुरादिषु अन्येषु परराष्ट्रेषु चारान् सादरं दानमानादिपुरस्सारं यथास्यात्तथा प्रेषयेत् । चकाराभ्यामावश्यकश्रौतस्मार्तयोरग्निहोत्रादिसन्ध्यावन्दनाद्योः परिग्रहः ॥

( वी० मि० ) ततः—

ऋत्विक्पुरोहिताचार्यैराशीर्भिराभिनन्दितः ॥३३२॥

दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ॥

नैवेशिकानि च(३)तथा श्रोत्रियेभ्यो (४)गृहाणि च॥३३३॥

---

(१) कर्तव्यता यथा—इति ग० पुस्तके, कर्तव्यतास्तथा—इति मुद्रितपुस्तके पाठः ।

(२) सादरान्—इति मुद्रितपुस्तके पाठः । (३) ततः—इति मुद्रितपुस्तके पाठः ।

(४) श्रोत्रियाणां—इति क० ख० पुस्तकयोः पाठः ।

ऋत्विगादय उक्तास्तैराशीर्भिरभिनन्दितः संवर्धितो, ज्योतिर्विदो ज्योतिषिकान् वैद्यान् भिषजः दृष्ट्वा तैः सह ग्रहादेः शरीरस्य स्थितिं ज्ञात्वेति यावत् । अर्थाद्ग्रहशान्त्याद्युपयोगीनि ग्रहयागादीनि शरीरस्थित्युपयोगीनि भेषजादीनि च पुरोहितादिभ्य आदिश्य श्रोत्रियेभ्यः गां काञ्चनं भूमिं विवाहोपकरणानि कन्यालङ्कारादीनि गृहाणि च दद्यात् । आद्यचकारेणोपनयनाद्युपयोगिवस्तूनां तथाशब्देन श्रोत्रियभिन्नानामपि ब्राह्मणानां सङ्ग्रहः । द्वितीयचकारेण गृहोपकरणसमुच्चयः । एतानि च कर्माणि प्रत्यहकृत्यानि शक्तौ स्वयमेव कुर्वीत । असम्भवे तु कानिचिद्योग्यब्राह्मणद्वारा सम्पाद्यानि । यदाहुः—

एतद् वृत्तं समातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेतत्तु मन्त्रिमुख्ये नियोजयेत् ॥

इति ॥ ३३२-३३३ ॥

( मिता० ) प्रेषयेदिति । दृष्ट्वेति च । अनन्तरं तत्रस्थ एव विद्वस्तान् चारान् दानमानसत्कारैः पूजितान्स्वेषु सामन्ताद्यधिकारिषु अन्येषु च महीपतिषु प्रेषयेत्तच्चिकीर्षितपरिज्ञानाय । ततः प्रातःसन्ध्यामुपास्याग्निहोत्रं हुत्वा पुरोहितर्त्विगाचार्यादिभिराशीर्भिरभिनन्दितो ज्योतिर्विदो दृष्ट्वा तेभ्यश्च ग्रहादिस्थितिं विदित्वा शान्तिकादीनि च पुरोहितायादिश्य(१) वैद्यांश्च दृष्ट्वा तेभ्यश्च स्वशरीरस्थितिं निवेद्य प्रतिविधानं चादिश्य गां दोग्ध्रीं काञ्चनं महीं च नैवेशिकानि विवाहोपयोगीनि कन्यालंकारादीनि गृहाणि च सुधाधवलितादीनि श्रोत्रियेभ्योऽधीतवेदेभ्यो ब्राह्मणेभ्यो दद्यादिति प्रत्येकं सम्बध्यते ॥३३२-३३३॥

( वी० मि० ) राज्ञः सर्वाधिकं धर्मान्तरमाह—

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ॥
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ ३३४ ॥

राजा ब्राह्मणेषु कृतापराधेष्वपि क्षमावान्, स्निग्धेषु मित्रभ्रात्रादिषु अजिह्मोऽकुटिलः, अरिषु क्रोधनः क्रोधशीलः, भृत्यवर्गेषु पुत्रसेवकादिषु, प्रजासु पौरादिषु चकारात् शरणागतेषु पितेव पालनविनयाधानादिकारी स्यादित्यर्थः ॥ ३३४ ॥

(१) पुरोहितायानदिश्य-इ मुद्रितपुस्तके पाठ ।

( मिता० ) किंच—

ब्राह्मणेष्विति । ब्राह्मणेष्वधिक्षिपत्स्वपि क्षमी क्षमावान् स्निग्धेषु स्नेहवत्सु मित्रादिष्वजिह्मः अवक्रः । अरिषु क्रोधनः । भृत्यवर्गेषु प्रजासु च हिताचरणेनाहितनिवर्तनेन च पितेव दयावान् । स्यादिति प्रत्येकं सम्बन्ध्यते ॥ ३३४ ॥

( वी० मि० ) प्रजापालनस्य राजधर्मेषु प्राधान्यं दर्शयितुमुक्त एव प्रजापालने फलातिशयमाह—

पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन् ॥
सर्वदानाधिकं यस्मात् प्रजानां परिपालनम् ॥३३५॥
चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ॥
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ ३३६ ॥

राजा न्यायेन शास्त्रानुमतवर्त्मना प्रजाः परि सर्वतोभावे हिताचरणेनाऽनिष्टवारणेन च पालयन् कृतात् पुण्यात् षड्भागं षष्ठमंशमादत्ते प्राप्नोति । यतः यतश्च प्रजानां परिपालनं सर्वदानेभ्यस्तुलापुरुषदानादिभ्योऽधिकमधिकफलप्रदं, तस्माच्चाटादिभिर्विशेषतश्च राजाधिकृतैर्लेखकैः कायस्थैः पीड्यमानाः प्रजा रक्षेत्पीडारहिताः कुर्वीत । चाटाः वञ्चनेन परधनग्राहिणः, तस्कराः चौराः, दुर्वृत्ता द्यूतकारिप्रभृतयः, महासाहसिकाः परप्राणोपरोधिसाहसकारिणः । आदिपदेन 'उत्कोचकाश्चोपधिका' इति मनूक्तादीनां सङ्ग्रहः । चकाराद्गणनाधिकृतसमुच्चयः । एतेन जनपदेन वक्ष्यमाणं राष्ट्ररूपं राज्याङ्गं दर्शितम् ॥ ३३५-३३६ ॥

( मिता० ) प्रजापालनफलमाह—

पुण्यादिति । यस्मान्न्यायेन (१)शास्त्रोक्तमार्गेण प्रजाः परिपालयन् परिपालितप्रजोपचितपुण्यात् षड्भागं षष्ठं भागमादत्ते । यस्माच्च सर्वेभ्यो भूम्यादिदानेभ्यः प्रजानां परिपालनमधिकफलम् । तस्मात्प्रजासु यथा पिता तथैव स्यादिति गतेन सम्बन्धः ॥ ३३५ ॥

( मिता० ) चाटेति । चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति । प्रच्छन्नापहारिणस्तस्कराः । दुर्वृत्ता (२)इन्द्रजालिककितवादयः । सहो बलं सहसा बलेन कृतं साहसं महच्च तत्साहसं च

(१) धर्मशास्त्रोक्तेन० ग० । (२) ऐन्द्रजालिक० ग० ।

महासाहसं तेन वर्तन्ते इति महासाहसिकाः प्रसह्य(१)पहारिणः । आदिशब्दान्मौलिककुहककर्तृचौराः । एतैः पीड्यमाना बाध्यमानाः प्रजा रक्षेत् । कायस्था लेखका गणकाश्च तैः पीड्यमाना विशेषतो रक्षेत् । तेषां राजवल्लभतयाऽतिमायावित्वाच्च दुर्निवारत्वात् ॥ ३३६ ॥

( वी० मि० ) प्रजापरिपालनस्याऽकरणे दोषमाह—

अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित्किल्बिषं प्रजाः ॥
तस्मात्तु नृपतेरर्धं यस्माद् गृह्णात्यसौ करान् ॥ ३३७ ॥

अरक्ष्यमाणाः प्रजा यत्किञ्चिच्चौर्यादिकं किल्बिषं पापं कुर्वन्ति । तस्मात्किल्बिषादर्धं किल्बिषं नृपतेर्भवति । पञ्चमी षष्ठ्यर्थे । तुशब्देन पुण्यात् षड्भागो व्यवच्छिद्यते । ननु पुण्यस्य षड्भागं पापस्याऽर्धं नृपतिराप्नोतीति वैषम्यं कृतमित्यत आह—यस्मादसौ राजा रक्षणार्थं करान् गृह्णाति, तस्मादुचितमेवार्धपापसङ्क्रमणम् । पुण्ये तु राज्ञः परिपालनरूपव्यापारेऽपि द्रव्यदानाभावात् षड्भागपुण्यसङ्क्रमणमेवेति ॥ ३३७ ॥

( मिता० ) अरक्ष्यमाणा इति । अरक्ष्यमाणाः प्रजाः यत्किञ्चित्किल्बिषं चौर्यपरदारगमनादि कुर्वन्ति तस्मात्पापादर्धं नृपतेर्भवति । यस्मादसौ राजा रक्षणार्थं प्रजाभ्यः करान् गृह्णाति ॥ ३३७ ॥

( वी० मि० ) किञ्च—

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ॥
साधून् संमानयेद्राजा विपरीतांस्तु घातयेत् ॥ ३३८ ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ॥
सद्दानमानसत्कारैः(२) श्रोत्रियान् वासयेत्सदा ॥ ३३९ ॥

राष्ट्रे राज्ञः करग्रहणदोषेऽधिकृतास्तेषां चारैर्विविधं सम्यग्वा चेष्टितं ज्ञात्वा साधून् सम्यक् चेष्टायुक्तान् राजा दानसत्कारादिभिः पूजयेत् । विपरीतान् असाधून् घातयेत् हन्यात् । एतच्च वधार्हापराधे । अन्यत्र त्वपराधानुसारेण दण्डयेदिति तात्पर्यम् । अत एव तुशब्दस्तेषां पातनव्यवच्छेदायेति । उक्तं च व्यवहारदर्शनादिकार्येषु न्यायेन धनग्रहणं, तेन जीविनस्तदुपजीविनोऽधिकृतान्

(१) अपहारिण ग० । । (२) सद्दानमानसत्कारान्—इति मुद्रितपुस्तके पाठः । ।

सर्वस्वहीनान् कृत्वा प्रवासयेत् स्वराष्ट्रान्निष्कासयेत् । श्रोत्रियान् शाखाध्येतॄन् संमानादिभिः सदा वासयेत् । संमानोऽभ्युत्थानाऽभिवादनानुगमनादिभिः प्रीणनं, सत्कारो यज्ञादौ वरणादिरूपः ३३८-३३९

( मिता० ) ये इति । उत्कोचजीविन इति च । राष्ट्रे राजा अधिकारेषु ये नियुक्तास्तेषां विचेष्टितं चरितं चारैरुक्तलक्षणैः सम्यक् ज्ञात्वा साधून्सुचरितान् संमानयेत् दानमानसत्कारैः पूजयेत् । विपरीतान्दुष्टचरितान्सम्यग्विदित्वा घातयेत् अपराधानुसारेण । ये पुनरुत्कोचजीविनस्तान्द्रव्यरहितान्कृत्वा स्वराष्ट्रात्प्रवासयेत् । श्रोत्रियान्सद्दानमानसत्कारैः सहितान्कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत् ॥ ३३८-३३९ ॥

( वी० मि० ) अन्यायेन प्रजाभ्यो धनं राजा न गृह्णीयान्न च बन्धनताडनादिना पीडयेदित्यभिप्रेत्याह—

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ॥
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ ३४० ॥
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ॥
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा(१) विनिवर्तते ॥ ३४१ ॥

अन्यायेन अदण्ड्यदण्डनाधिककरग्रहणादिना यो नृपः स्वस्वकोशं धनं वर्धयेत् स शीघ्रं सबान्धवः पुत्रादिसहितो विगतश्रीको भ्रष्टराज्यो भूत्वा नश्यति । प्रजेति । प्रजानां बन्धनताडनादिना पीडनेन यः सन्तापो दुःखं तेन समुद्भूतोऽतिप्रौढः सन्नुत्पन्नो हुताशनः प्रजाक्रोधरूपो नृपाधर्मरूपो वा राज्ञः कुलादीन्यदग्ध्वाऽविनाश्य न विनिवर्तते न शाम्यति ॥ ३४०-३४१ ॥

( मिता० ) अन्यायेनेति । योऽसौ राजा स्वराष्ट्रादन्यायेन द्रव्यमादाय स्वकोशं अभिवर्धयेत् सोऽचिराच्छीघ्रमेव विगतश्रीको विनष्टलक्ष्मीको बन्धुभिः सह नाशं प्राप्नोति ॥ ३४० ॥

( मिता० ) प्रजेति । प्रजानां तस्करादिकृतपीडनेन यः सन्तापस्तस्मादुद्भूतो हुताशन इव । सन्तापकारित्वादपुण्यराशिर्हुताशनशब्देनोच्यते । स राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा नाशमनीत्वा न निवर्तते नोपशाम्यति ॥ ३४१ ॥

( १ ) प्राणांश्चाऽदग्ध्वा न निवर्तते—इति मुद्रितपुस्तके पाठः ।

(वी० मि०) ननु परराष्ट्रप्रजापीडनेऽप्यनिष्टापत्त्या कथं विहितं परराज्योपरोधादिकं घटेतेत्यत आह—

य एव धर्मो(१)नृपतेः स्वराष्ट्रपरिपालने ॥
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ३४२ ॥

वशं नयन्स्वसात्कुर्वन् । तथा च विहितपरराष्ट्रवशीकरणार्थं तत्प्रजापीडनमपि यागीयपशुहिंसावद्वैधत्वादनिषिद्धमेवेति भावः ३४२

(मिता०) य एवेति । न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणलक्षणन्यायेन परराष्ट्रं वशं नयन् आत्मसात्कुर्वन्प्राप्नोति धर्मषड्भागं च ॥ ३४२ ॥

(वी० मि०) वशीकरणानन्तरन्तु तासां प्रजानां पीडनमवैधत्वादैयमवत्यभिप्रायेणैव वशीकृते राष्ट्रे राजकृत्यमाह—

किन्तु (२)यस्मिन् य आचारो व्यवहारः कुलस्थितिः ॥
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ ३४३ ॥

यदासौ परकीयो देशः स्वस्य वशमुपागतस्तदवधि यस्मिन् परदेशे य आचारो मातुलकन्यापरिणयादिस्तद्देशनियतस्तस्मिन्देशे स आचारस्तथैव प्राक्तनतद्देशीयैरिव परिपाल्यः । यस्मिन्देशे यो व्यवहारः करग्रहणादिरूपः स तत्र तथैव परिपाल्य इति ॥ ३४३ ॥

(मिता०) किञ्च—

यस्मिन्निति । यदा परदेशो वशमुपागतस्तदा न स्वदेशाचारादिसङ्करः कार्यः, किं तु यस्मिन्देशे य आचारः कुलस्थितिर्व्यवहारो वा यथैव प्रागासीत्तथैवासौ परिपालनीयो यदि शास्त्राविरुद्धो न भवति । यदा वशमुपागत इत्यनेन वशोपगमनात्प्रागनियम इति दर्शितम् । यथोक्तम् (मनुः ७।१९५)—'उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्' ॥ इति ॥ ३४३ ॥

(वी० मि०) किञ्च—

मन्त्रमूलं यतो राज्यं ततो मन्त्रं सुरक्षितम् ॥
कुर्याद्यथाऽस्य न विदुः कर्मणामाफलोदयात् ॥ ३४४ ॥

मन्त्रो वक्ष्यते तन्मूलं तदधीनस्थिति राज्यं यतो भवति तस्मान्मन्त्रं सुरक्षितं सुमन्त्रं कुर्यात् । सुरक्षणमेव विवृणोति यथाऽस्य

(१) य एव नृपतेर्धर्म —इति मुद्रितपुस्तके पाठः ।
(२) यस्मिन्देशे य आचार—इति मुद्रितपुस्तके पाठः ।

राज्ञः कर्मणां सन्धिविग्रहादीनां फलसिद्धिपर्यन्तं न विदुर्मन्त्रमन्ये मन्त्रणायामप्रविष्टाः ॥ ३४४ ॥

( मिता० ) मन्त्रमूलमिति । यस्मात्तैः सार्धं चिन्तयेद्राज्यमित्याद्युक्तं मन्त्रमूलं राज्यं तस्मान्मन्त्रं यत्नेन तथा सुरक्षितं कुर्यात्, यथास्य राज्ञः कर्मणां सन्धिविग्रहादीनामाफलोदयात् फलनिष्पत्तेः प्रा(१)गन्ये मन्त्रं न जानन्ति ॥३४४॥

( वी० मि० ) मन्त्रमेवाह—

अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ॥
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥ ३४५ ॥

अनन्तरः स्वराज्याव्यवहितदेशाधिपोऽरिः तत्परोऽरिदेशानन्तरदेशाधिपतिर्मित्रं मित्रदेशानन्तरदेशस्थितो राजा उदासीनः एते त्रयः क्रमशः पूर्वादिषु चतसृषु दिक्षु स्थिता द्वादशात्मकं मण्डलं तत्सामादिभिश्चतुर्भिरुपक्रमैरुपायैर्यथायोग्यं स्वापकाराक्षमं कर्तुं चिन्त्यं विचारेणाऽवधारणीयम्। अनेनोपायेनाऽयं वशीकर्तव्य इत्यवधारणीयमिति यावत् । इदमेव चाऽवधारणपूर्वोक्तं मन्त्रपदार्थ इति विवेक्तव्यम्। अरिप्रभृतिपरपरदेशस्थाः पार्ष्णिग्राहा एष्वेवान्तर्भवन्तीत्यभिप्रेत्य ग्रन्थकृता पृथङ्नोक्ताः। बहुधा मण्डलानि च तत्र निरूपितानि विस्तरभयान्नेह तन्यन्ते ॥ ३४५ ॥

( मिता० ) किञ्च—

अरिरिति। अरिः शत्रुः। मित्रं सुहृत्। उभयविलक्षण उदासीनश्च। ते च त्रयस्त्रिविधाः सहजा कृत्रिमाः प्राकृताश्चेति। तत्र सहजोऽरिः सापत्नपितृव्यतत्पुत्रादिः। कृत्रिमोऽरिः यस्यापकृतं येन चापकृतम्। प्राकृतस्त्वनन्तरदेशाधिपतिः। सहजं मित्रं भागिनेयपैतृष्वस्रीयादि। कृत्रिमं मित्रं येनोपकृतं यस्य चोपकृतम्। प्राकृतमित्रमेकान्तरितदेशाधिपतिः। सहजकृत्रिममित्रशत्रुलक्षणरहितौ सहजकृत्रिमोदासीनौ। प्राकृतोदासीनो (२)द्व्यन्तरितदेशाधिपतिः। अरिः पुनश्चतुर्विधः—यातव्यो(३)च्छेत्तव्यपीडनीयकर्शनीयभेदेन। तत्र यातव्योऽनन्तरभूमिपतिः, व्यसनी, हीनबलो, विरक्तप्रकृतिः, विदुर्गो, मित्रहीनो, दुर्बलश्चोच्छेत्तव्यः। पीडनीयो मन्त्रबलहीनः। प्रबलमन्त्रबलयुक्तः कर्शनीयः। 'निर्मूलनात्समुच्छेदं पीडनं बलनिग्रहम्। क-

(१) प्राग्यावदन्ये ख।

र्शनं तु पुनः प्राहुः कोशदण्डापकर्(१)शनात्' -॥ इति॥ मित्रं द्विविधं बृंहणीयं कर्शनीयमिति। कोशबलहीनं बृंहणीयम्। कोशबलाधिकं कर्शनीयम्। अनन्तरस्तत्परः पर इति प्राकृतारिमित्रोदासीनानाह। अनन्तरः प्राकृतोऽरिः, तत्परः प्राकृत मित्र, तस्मात्परः प्राकृत उदासीन', शेषा पुनः प्रसिद्धत्वान्नोक्ताः। एतद्राजमण्डलं क्रमशः पूर्वादिदिक्क्रमेण चिन्त्यं तेषां चेष्टितं ज्ञातव्यम्। ज्ञात्वा च सामादिभिरुपायैर्वक्ष्यमाणैरनु(२)सन्धेयम्। एवं पुरतः पृष्ठतः पार्श्वतश्च त्रयस्त्रय आत्मा चैक इति त्रयोदशराजकमिदं राजमण्डलं पद्माकारम्। पार्ष्णिग्राहाक्रन्दासाराद्यस्त्वरिमित्रोदासीनेष्वेवान्तर्भवन्ति-इति । संज्ञाभेदमात्रं ग्रन्थान्तरे दर्शितमिति योगीश्वरेण न (३)पृथगुक्ता ॥३४५॥

( वी० मि० ) सामादीन् कथयन्नेव मन्त्रस्य फलमाह—

उपायाः साम दानं च भेदो दण्डस्तथैव च ॥

सम्यक् प्रयुक्ताः सिद्ध्येयुर्दण्डस्त्वगतिका गतिः ॥ ३४६ ॥

सामादय उपायाः सम्यक् मन्त्रानुसारेण प्रयुक्ता आचरिताः सिद्ध्येयु स्वफलपर्यान्ता भवन्ति। परन्तु दण्डस्तेषां मध्येऽगतिका गत्यन्तरासत्त्वनिबन्धना गतिरुपाय-। तथा चोपायान्तरसत्त्वे दण्डो न प्रयोज्य इति तात्पर्यम्। साम प्रियभाषणादिरूपं, दानं सुवर्णादेः, भेदः शत्रुसामन्तादीनामन्योन्यवैरोत्पादन, दण्डो राज्याक्रमणवधादिरूपः। चकारादिभिश्चतुर्भिरव्ययैश्चतुर्णामुपायानां यथासम्भवं परस्परं नैरपेक्ष्येण क्वचित् क्वचिच्च परस्परसापेक्षतया फलनिष्पादकत्वमुक्तम् ॥ ३४६ ॥

( मिता० ) सामादिभिरुपक्रमैरित्युक्तं, इदानीं तानुपायानाह—

उपाया इति। साम प्रियभाषणम्। दानं सुवर्णादेः। भेदो भेदकरणं, तत्सामन्तादीनां परस्परतो वैरस्यो(४)त्पादनेन। दण्ड उपांशुप्रकाशाभ्यां धनापहारादिवधपर्यन्तोऽपकारः। एते सामादयः परिपन्थ्यादिसाधनोपायाः। एते च देशकालाद्यनुसारेण सम्यक्प्रयुक्ताः सिद्ध्येयुः। तेषां च मध्ये दण्डस्त्वगतिका गतिः, उपायान्तरसम्भवे सति न प्रयोक्तव्यः। एतच्च पीडनीयकर्शनीयाभिप्रायेण। यातव्योच्छेत्तव्ययोस्तु दण्ड एव मुख्यः। एते सामादयो न केवलं राज्यव्यवहारविषयाः, अपि तु सकललोकव्यवहारविषयाः। यथा—'अधीष्व पुत्रकाधीष्व दास्यामि तव मोदकान्। यद्वान्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते' ॥ इति ॥ ३४६ ॥

---

(१) पर्कर्षण्वत , । (२) रभिसंधेय क. । (३) न पृथगुक्तम् ग.। (४) स्योत्पादनेन् घ ।

( वी० मि० ) किञ्च—

सन्धिं च विग्रहं यानमासनं संश्रयं तथा ॥
द्वैधीभावं गुणानेतान् यथावत्परिकल्पयेत् ॥३४७॥

आवाभ्यामन्योन्यस्य नापकर्त्तव्यमिति व्यवस्थाकरणं सन्धिः, विग्रहो युद्धं, यानमरिं प्रति प्रस्थानं, आसनमुपेक्षणं, संश्रयो बलवतो नृपान्तरस्याश्रयणं, द्वैधीभावो बलवतोर्विरुद्धयोर्द्वयोर्वचनादिना पृथक् पृथगात्मनाऽनुसरणम्। यदाहुः—

बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः॥

इति। एतान् षाड्गुण्यपदेन शास्त्रे परिभाषितान्। यथावत् यथोक्तं कालदेशशक्तिमित्रादिवशेन परिकल्पयेत् विभज्य कुर्यात्। तथेत्यनेन पूर्वश्लोकोक्तस्य सम्यक्त्वस्याऽभिधानं, चकारेण गुणानामुपायासाचिव्यं दर्शितम् ॥ ३४७ ॥

( मिता० ) किंच—

सन्धिमिति। सन्धिर्व्यवस्थाकरणम्। विग्रहोऽपकारः। यानं परं प्रति यात्रा। आसनमुपेक्षा। संश्रयो बलवदाश्रयणम्। द्वैधीभावः स्वबलस्य द्विधाकरणम्। एतान्सन्धिप्रभृतीन्गुणान्यथावद्देशकालशक्तिमित्रादिवशेन कल्पयेत् ॥ ३४७ ॥

( वी० मि० ) सन्ध्यादिकालान् स्फुटत्वादुपेक्ष्य यानकालमाह—

यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ॥
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ ४४८ ॥

सस्यैर्व्रीह्यादिभिः, गुणैर्जलेन्धनादिभिः परराष्ट्रं यदोपेतं स्यात् परश्च हीनो वाहनादिभिः स्यात्, आत्मा चोत्साहशालिवाहयोधोपेतः स्यात्तदा वशीकर्तुं व्रजेत्। प्रथमचकारेण परमित्रस्य, द्वितीयचकारेणाऽऽत्ममित्रस्य समुच्चयः ॥ ३४८ ॥

( मिता० ) यानकालानाह—

यदेति। यदा परराष्ट्रं सस्यैर्व्रीह्यादिभिर्गुणैश्च समजलेन्धनतृणादिभिरुपेतं संपन्नं, शत्रुश्च हीनो बलादिभिः, आत्मा च हृष्टवाहनपूरुषः वाहनानि हस्त्यश्वादीनि तानि च पूरुषाश्च वाहनपूरुषाः हृष्टा वाहनपूरुषा यस्य स तथोक्तः। तदा परराष्ट्रमात्मसात्कर्तुं व्रजेत् ॥ ३४८ ॥

( वी० मि० ) ननु मन्त्र उपायप्रयोगः षाड्गुण्यपरिकल्पनं च

व्यर्थं प्राणिनामभ्युदयविपर्ययोर्दैवाधीनत्वादित्यत आह—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ॥
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ३४९ ॥
केचिद्दैवात्स्वभावाच्च(१) कालात्पुरुषकारतः ॥
संयोगात् (२) केचिदिच्छन्ति फलं कुशलबुद्धयः ॥३५०॥
यथा ह्येकेन चक्रेण न रथस्य ग(३)तिर्भवेत् ॥
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ ३५१ ॥

दैवे पुरुषकारे कर्मसिद्धिः कर्मफलप्राप्तिर्व्यवस्थिता या भेदेन नियता। तत्र तयोर्मध्ये पौर्वदेहिकं पूर्वदेहोपार्जितमदृष्टविशेषरूपं दैवम्। अभिव्यक्तमस्मिन् देहे प्रत्यक्षीक्रियमाणं युद्धादिपुरुषव्यापाररूपं पौरुषमुच्यते। चकारः कालस्वभावयोर्वक्ष्यमाणयोः सङ्ग्रहार्थः। तयोर्लक्षणं स्पष्टत्वादुपेक्षितम्। वादिद्वैतमेव दर्शयति केचिदिति। केवलाद्दैवात्फलं केचिदिच्छन्ति दैवमात्राधीनं फलमित्यङ्गीकुर्वन्ति। केचित्स्वभावात्कारणं विनैव फलमिच्छन्तीति सर्वत्राऽन्वेति। केचित् कालात्कालमात्रात्। केचिच्च पुरुषव्यापाराद्यागपाकादेः केवलात्। केचिच्च कुशलबुद्धयो विचारनिपुणधियः कालदैवपुरुषकाराणां संयोगात्परस्परमिलनात्फलमिच्छन्ति। कार्यवस्तुस्वभावस्य फलत्वेन तद्धेतुत्वानुपपत्तिरिति द्रष्टव्यम्। तथा च मात्स्ये—

दैवं पुरुषकारश्च कालश्च पुरुषोत्तम।
त्रयमेतन्मनुष्यस्य पिण्डितस्य फलाय वै ॥

कुशलबुद्धय इत्यनेन चरमकल्पस्य सिद्धान्तत्वं दर्शितम्। अत एव दृष्टान्तेन द्रढयति यथा हीति। हिशब्दश्चार्थो दैवमित्यत्राऽन्वित, तेन कालसमुच्चयः। न सिद्ध्यति न फलं जनयति। एतच्च प्रस्तुतोपयोगित्वादुक्तम्। वस्तुतस्तु त्रयाणामेकैकं विना परस्परं न सिद्ध्यतीति बोध्यम् ॥ ३४९-३५१ ॥

(मिता०) प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा स्वयमेव परराष्ट्रादि वशीभविष्यति, अथ नास्ति कृतेऽपि पौरुषे न भविष्यति, अतो व्यर्थ एवाय यात्राप्रयास इत्यत आह—

दैव इति। कर्मसिद्धिः कर्मफलप्राप्तिः इष्टानिष्टलक्षणा। सा न केवलं दैवे व्यवस्थिता। अपि तु पुरुषकारेऽपि। लोके तथादर्शनात्

(१) स्वभावाद्वा—इति मुद्रितपुस्तके पाठः।
(२) सयोगे—इति मुद्रितपुस्तके पाठः। (३) रथस्य न—इति मु० पु० पाठः।

च्चिकित्सकादिशास्त्रवैयर्थ्याच्च। अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह—तत्र दैवमिति। यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते। अल्पपुरुषकारानन्तरं महाफलोदयाभिव्यक्तं पौरुषं पौर्वदेहिकं कर्म। तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुषकारे यत्नो विधातव्यः॥ ३४९॥

( मिता० ) इदानीं मतान्तराण्याह—

केचिदिति। केचिदिष्टानिष्टलक्षणं फलं दैवादेवेच्छन्ति। केचित्स्वभावात्स्वयमेव भवति न कारणमपेक्षत इति। केचित्कालात्। केचित्पुरुषकारत एवेति। स्वमतमाह-दैवादीनां संयोगे समुच्चये फलं भवतीति कुशलबुद्धयो मन्वादयो मन्यन्ते॥ ३५०॥

( मिता० ) एकैकस्मात्फलं न भवतीत्यत्र दृष्टान्तमाह—

यथेति। नात्र तिरोहितमस्ति॥ ३५१॥

(वी० मि०) मित्ररूपराज्याङ्गं दर्शयन्नेव तत्सङ्ग्रहावश्यकर्तव्यत्वमाह—

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः॥
अतो यतेत तत्प्राप्तौ (१)रक्षेत्सत्यं समाहितः॥ ३५२॥

हिरण्यलाभाद् भूमिलाभाच्च मित्रलब्धिर्वरा, अतः तत्प्राप्तौ मित्रत्वविशिष्टस्य प्राप्तौ यतेत। तत्र मुख्यं व्यापारमाह समाहितः सावधानः सन् मित्रायोक्तं वचनं सत्यं रक्षेत्सत्यत्वविशिष्टं कुर्यात्। उक्ताविसंवादो न कार्य इति यावत्। भूमिलाभेभ्य इति बहुवचनममात्यर्थकममात्यादिलाभप्राप्त्यर्थकम्॥ ३५२॥

( मिता० ) लाभाय परराष्ट्रं गन्तव्यमित्युक्तम्। लाभश्च त्रिविधः—हिरण्यलाभो भूमिलाभो मित्रलाभश्चेति। तेषु मित्रलाभो ज्यायान्। ततस्तत्प्राप्त्युपाये यत्नो विधातव्यः। तत्प्राप्त्युपायश्च सत्यवचनमित्याह—

हिरण्येति। हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा उत्कृष्टा तस्मात्तत्प्राप्त्यै यतेत यत्नं कुर्यात् सामादिभिः। सत्यं च रक्षेत् समाहितः सावधानः सत्यमूलत्वान्मित्रलाभस्य॥ ३५२॥

( वी० मि० ) उक्तान्येव सप्ताङ्गानि सङ्क्षिप्य प्रदर्शयन् राज्ञस्तत्प्राप्त्युत्तरकृत्यमाह—

स्वाम्यमात्या जनो दुर्गं कोषो(२) दण्डस्तथैव च॥
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते॥ ३५३॥

---

(१) तत्प्राप्त्यै—इति मु० पु० पाठः। (२) कोशो—इति मु० पु० पाठः।

तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ॥
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥ ३५४ ॥

स्वामी महोत्साहत्वादिविशेषणविशिष्टो महीपतिः । तदवान्तिश्च विशेषणायामिपर्यवसिता । अमात्या मन्त्रिपुरोहितादयः । जनः प्रजावर्गः राष्ट्रशब्दवाच्यः । दुर्गं धन्वदुर्गादि । कोषः सुवर्णादिराशिः । दण्ड्यतेऽनेनेति दण्डो हस्त्यश्वादिसमुदायः । मित्राणि सहज(१)प्राकृतकृत्रिमरूपाणि । एताः स्वाम्यादयः प्रकृतयो राज्यमूलकारणानि । एताभिरेव सप्तप्रकृतिभिरङ्गरूपाभिर्युक्तं राज्यं सप्ताङ्गमुच्यते । तच्च सप्ताङ्गं राज्यमवाप्य दुर्वृत्तेषु परदारपरद्रव्यापहारादिपरेषु दण्डं यथापराधं सर्वस्वापहारवधादिरूपं निपातयेत् योजयेत् । ननु प्रजानुरञ्जनपरस्य राज्ञो दण्डपातनं कथमत आह धर्मो हीति । हि यतो धर्म एव दण्डरूपेणोपलक्षितः पुरा ब्रह्मणा निर्मितः । एतच्चाधिष्ठानाधिष्ठेययोरभेदोपचारादुक्तम् । तथा च धर्मात्मकत्वात्सर्वलोकानुरञ्जनमेव दण्डपातनम् । असाधूनामनुरञ्जनं तु न राजधर्म इति भावः । एवकारेण साहित्यापन्नानामङ्गपदार्थत्व व्यवच्छिनत्ति । तथाशब्दचशब्दाभ्यां परस्परसाहित्येन मूलनिर्वाहकत्वमभिप्रैति ॥ ३५३-३५४ ॥

( मिता० ) इदानीं राज्याङ्गान्याह—

स्वाम्यमात्या इति । महोत्साह इत्याद्युक्तलक्षणो महीपतिः स्वामी । अमात्या मन्त्रिपुरोहितादयः । जनो ब्राह्मणादिप्रजाः । दुर्गं धन्व(२) दुर्गादि । कोशः सुवर्णादिधनराशिः । दण्डो हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गबलम् । मित्राणि सहजकृत्रिमप्राकृतानि । एताः स्वाम्याद्याः राज्यस्य प्रकृतयो मूलकारणानि । एवं राज्यं सप्ताङ्गमुच्यते ॥ ३५३ ॥

( मिता० ) तदवाप्येति । तदेवंविधं राज्यं प्राप्य दुर्वृत्तेषु वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु नृपो दण्डं पातयेत्प्रयोजयेत् । हि यस्माद्धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः । तस्य च दण्ड इति यौगिकी संज्ञा—'दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत्' इत्याङ्गिगौतमस्मरणात् ॥ ३५४ ॥

(१) सहज-इति क. पुस्तके नास्ति ।
(२) विवृतमेतत्सविस्तरं ३२१ तमपद्यटिप्पण्याम् । .

(वी० मि०) स च दण्डो यथाशास्त्रं कार्योऽन्यथा राज्ञो दोषमाह—

स नेतुं न्यायतः शक्योऽलुब्धेनकृतबुद्धिना(१) ॥
सत्यसन्धेन शुचिना सुसहायेन धीमता ॥ ३५५ ॥
यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानुषम् ॥
जगदानन्दयेत्सर्वमन्यथा(२) तत्प्रकोपयेत् ॥ ३५६ ॥
अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ॥
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥३५७॥

स धर्मस्वरूपो दण्डोऽलुब्धेन लोभशून्येन, कृतबुद्धिना स्थिरबुद्धिना, सत्यसन्धेन यथार्थप्रतिज्ञेन, शुचिना जितारिषड्वर्गेण, सुसहायेन समीचीनामात्यादिमता, धीमता नीतिविज्ञेन, राज्ञा न्यायतः शास्त्रानुसारेण नेतुं दण्ड्येषु प्रापयितुं शक्यः। तथा लोभत्यागादिपुरःसरं न्यायतः ससहायो दण्डयेदिति तात्पर्यम्। मिताक्षरायां तु 'स नेतुं न्यायतोऽशक्योलुब्धेनाऽकृतबुद्धिने'ति पठित्वा पृथगेवायं वाक्यार्थः। सत्यसन्धेनेत्यादि तु वाक्यान्तरमित्यभिप्रेत्य व्याख्यातम्। तथाप्रयुज्यमानस्याऽतथाप्रयुज्यमानस्य च दण्डस्य फलमिष्टमनिष्टं च क्रमेणाह यथाशास्त्रमित्यादि। यथाशास्त्रं शास्त्रानतिक्रमेण प्रयुक्तः स दण्डः देवासुरसहितं मानुषसहितं जगत्सर्वमशेषं विश्वजातमानन्दयेत् हर्षयति। अन्यथा शास्त्रातिक्रमेण प्रयुक्तः स दण्ड उक्तलक्षणं जगत्प्रकोपयेत् क्रोधयुक्तं करोति। एवं च जनानुरागप्रभवाः सम्पद इत्यादिकथितसम्पत्तिदानत्वतद्विपर्ययरूपफलद्वयमुक्त्वा दण्डस्य फलान्तरमप्याह अधर्मेति। स्वर्गो यन्न दुःखेनेत्यादिलक्षितः सुखविशेषः। कीर्तिः सम्यक्त्वख्यातिः। लोकः प्रजारूपः। तद्विनाशनं तद्विरोधिराज्ञोऽधर्मेण दण्डनं भवति प्रजाविनाशनं युद्धपराजयेन तदप्रभुत्वापादनं पर्यवसन्नं तुशब्देन ॥ ३५५–३५७ ॥

(मिता०) स इति। स पूर्वोक्तो दण्डो लुब्धेन कृपणेनाऽकृतबुद्धिना चञ्चलबुद्धिना न्ययतो न्यायानुसारेण नेतुं प्रयोक्तुं शक्यो न भवति। कीदृशेन तर्हि शक्य इत्याह—सत्यसन्धेनाप्रतारकेण। शुचिना जितारिषड्वर्गेण। सुसहायेन पूर्वोक्तसहायसहितेन। धीमता नयानयकुशलेन स दण्डो न्यायतो धर्मानुसारेण नेतुं शक्यः ॥३५५॥

(१) स नेतुं न्यायतोऽशक्यो लुब्धनाऽकृतबुद्धिना–इति मु० पु० पाठः।
(२) तु प्रको०–इति क० पु० पाठः।

(मिता०) यथाशास्त्रमिति । स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितं इदं सर्वं जगदानन्दयेत् हर्षयेत् । अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्प्रकोपयेत् ॥ ३५६ ॥

(मिता०) न केवलमधर्मदण्डेन जगत्प्रकोपः(१), अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह—

अधर्मदण्डनमिति । यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृ(२)तो धर्महेतुत्वात्स्वर्गकीर्तिजयानां हेतुर्भवति ॥३५७॥

(वी० मि०) दण्डौदास्यं व्यवच्छिनत्ति । तदेव स्पष्टयति—

अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ॥
नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्॥३५८॥

भ्रात्रादयः प्रसिद्धाः । अर्घ्योऽर्घार्ह आचार्यादिः । अपि चेत्यनेन पितृमात्रादिसमुच्चयः । भ्रात्रादिरपि स्वीयात् धर्माद्विचलितस्तद्विरुद्धकारी राज्ञो नाम सम्भावनायामदण्ड्यो नास्तीत्यर्थः । अपि भ्रातेत्यपिकारेण किमुतोदासीनः शत्रुर्वेति सूचितम् ॥ ३५८ ॥

(मिता०) अपीति । अर्घ्योऽर्घार्ह आचार्यादिः । शेषः प्रसिद्धः । एते भ्रातृसुतादयोऽपि स्वधर्माच्चलिता दण्ड्याः किमुतान्ये । यतः स्वधर्माच्चलित अदण्ड्यो नाम राज्ञः कोऽपि नास्ति । एतच्च मातापित्रादिव्यतिरेकेण । तथा च स्मृत्यन्तरे—'अदण्ड्यौ मातापितरौ स्नातक(३)पुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिण' इति ॥ ३५८ ॥

(वी० मि०) दण्डादिफलेन, स्वर्गेणैव सफलं दण्डप्रयोजकं व्यवहारदर्शनमिति व्यवहारो राज्ञा द्रष्टव्य इत्याह—

यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ॥
इष्टं स्यात्क्रतुभिस्तेन सहस्रशतदक्षिणैः(४) ॥ ३५९ ॥
इति मत्त्वा स्वयं नृपतिः क्रतुतुल्यफलं पृथक् ॥
व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥ ३६० ॥

यो राजा दण्ड्यान् वधव्यतिरिक्तदण्डार्हान् सम्यक् शास्त्रानुसारेण दण्डयेत् अर्थाद्वधातिरिक्तेन वध्यान् वधार्हान् सम्यक् शा-

(१) प्रकोपनमपि तु क० । (२) कृत सोऽपहतुत्वात् क० ग० ।
(३) परिव्राजकपुरोहित ग० । (४) सभासदाचरेत्—इति मुद्रितपुस्तके पाठ ।

स्वोक्तप्रकारेण वीरणवेष्टनपूर्वकदाहादिना घातयेत् । चकारेणाऽकार्यिणां सन्देहादिमतां सन्देहाद्यपाकरणं समुच्चीयते । तेन राज्ञा सहस्रशतसुवर्णरूपभूरिदक्षिणैः क्रतुभिरिष्टं स्यात् । तादृशक्रतुजन्यफलभाजा भवितव्यमिति यावत् । समाप्तवरदक्षिणैरिति क्वचित् पाठः । तत्र समाप्ता पर्याप्ता (१) वरा भूयसी दक्षिणा येषां तैरित्यर्थः । इति क्रतुतुल्यफलं सञ्चिन्त्याऽवधार्य सभ्यैः परिवृतः सहितः स्वयं व्यवहारान् भाषोत्तररूपान् पृथक् पृथक्प्रत्यहं पश्येत् निर्णयार्थं विचारयेत् । स्वयमिति सति सम्भवे । अन्यथा तु 'अपश्यता कार्यवशा'दित्यग्रिमाध्याये वक्ष्यते । इमामेव व्यवस्थामभिप्रेत्य(२) बृहस्पतिरपि—

राजा कार्याणि सम्पश्येत् प्राड्विवेकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रहं कृत्वा सभ्यशास्त्रमते स्थितः ॥

इति । मनुः—

यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥

व्यासः—

द्विजान् विहाय यः पश्येत् कार्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोपश्च नश्यति ॥

एतेन शूद्रसहायताऽपि निरस्ता ॥ ३५९-३६० ॥

( मिता० ) किञ्च—

य इति । यस्तु दण्ड्यान्स्वधर्मचलनादिना दण्डयोग्यान्सम्यक् शास्त्रदृष्टेन मार्गेण धिग्धनदण्डादिना दण्डयति, वध्यान्वधार्हान्घातयति तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति । बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः । न च फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम् । अकरणे प्रायश्चित्तस्मरणात् । यथाह वसिष्ठः—'दण्डोत्सर्गे राजैकरात्रमुपवसेत्त्रिरात्रं पुरोहितः कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा' इति ॥ ३५९ ॥

( मिता० ) दुष्टे सम्यग्दण्डः प्रयोक्तव्य इत्युक्तं, दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह—

इतीति । इत्येवमुक्तप्रकारेण क्रतुतुल्यं फलं दण्ड्यदण्डेन, स्व·

---

( १ ) पर्याप्ता- इति क० पुस्तके नास्ति ।

( २ ) अभिप्रेत्य इत्यारभ्य स्थितः-इत्यन्तं नास्ति ख० पुस्तके ।

गोदिनाशं चादण्ड्यदण्डेन सम्यग्विचिन्त्य पृथक्पृथग्वर्णादिक्रमेण सभ्यैर्वक्ष्यमाणलक्षणैः परिवृतः प्रतिदिनं व्यवहारान्वक्ष्य(१)माणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत् ॥ ३६० ॥

( वी० मि० ) कुलादीनां दण्डनानन्तरमपि तद्विषयकं राजकर्त्यान्तरमाह—

कुलानि जातीः श्रेणीश्च गणान् जनपदानपि ॥
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥ ३६१ ॥

कुलं ब्राह्मणादिसमूहः जातिर्मूर्द्धाभिषिक्तादिवर्णसङ्करः। श्रेणिर्वणिगादिसमूहः। गणो नरादिसमुदायः। जनपदः कर्षकादिप्रभृति। चकारो गोरक्षकादिसमुच्चयार्थः। अपिकारः स्वराज्यवर्तिनामनुक्तानां समुच्चयार्थः। एतान् स्वधर्माच्चलितान् स्वधर्मविरुद्धकारिणो विनीय यथार्हं दण्डयित्वा पथि धर्म्ये मार्गे राजा स्थापयेत् स्थिरीकुर्यात् स्वधर्मं कारयेदिति यावत् ॥ ३६१ ॥

( मिता० ) कुलानीति। कुलानि ब्राह्मणादीनाम्। जातयो मूर्धावसिक्तप्रभृतयः। श्रेणयस्ताम्बूलिकादीनाम्। गणा हेला(२)बुक्कादीनाम्। जानपदा कारुकादयः। एतान्स्वधर्माच्चलितान्प्रच्युतान् राजा यथापराधं विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत्। दण्डं दुर्वृत्तेषु निपातयेदित्युक्तं, स च दण्डो द्विविधः शारीरोऽर्थदण्डश्चेति। यथाह नारदः—'शारीरश्चार्थदण्डश्च दण्डो हि द्विविधः स्मृतः। शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च' ॥ इति। द्विविधोऽप्यपराधानुसारेणानेकधा भवति। आह स्म—'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा' इति ॥ ३६१ ॥

( वी० मि० ) चतुर्विधो दण्डो वक्ष्यते, तत्र दण्डस्य धनपरिमाणविशेषज्ञानाधीनत्वात्तत्परिमाणते—

जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ॥
तेऽष्टौ लिक्षास्तु तास्तिस्रो राजसर्षप उच्यते ॥ ३६२ ॥
गौरस्तु ते त्रयः, षट् ते यवो, मध्यस्तु ते त्रयः ॥
कृष्णलः, पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥ ३६३ ॥

---

१ (१) वक्ष्यमाणमर्गेण क। (२) हेलाबुक्का अन्त्यव्यवहाराणि।

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ॥
द्वे कृष्णले रूप्यमाषो,धरणं षोडशैव ते ॥ ३६४ ॥
शतमानं तु दशभिर्धरणैः पलमेव (१) तु ॥
निष्कं सुवर्णाश्चत्वारः,कार्षिकस्ताम्रिकः पणः ॥ ३६५॥
साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ॥
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ ३६६ ॥

जाले गवाक्षे यः सूर्यमरीचिः तत्रस्थं तत्रैव प्रत्यक्षीक्रियमाणं यद्रजः सूक्ष्मधूलिरूपं तत् त्रसरेणुरिति स्मृतम् । तथा च मनुः—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥

ते तु त्रसरेणवोऽष्टौ लिक्षा स्मृता । ता लिक्षास्तिस्रः शास्त्रे राजसर्षप उच्यते । ते तु राजसर्षपास्त्रयो गौरसर्षप उच्यते । ते गौराः षट् मध्यो मध्यावधो यव उच्यते । मध्ये इति राजसर्षपादावप्य(२)न्वेति । मध्ययवास्त्रयः कृष्णल उच्यते । ते कृष्णलाः पञ्च माष उच्यते । ते तु माषाः षोडश सुवर्ण उच्यते । चत्वारः पञ्च वा सुवर्णाः पलं प्रकीर्तितम् । पञ्चेत्याह यवादिकं कल्पान्तरम् । अपिकारेण पलस्य वैद्यकोक्तं परिमाणान्तरं समुच्चिनोति । रजतपरिमाणे विशेषमाह द्वे इत्यादि । कृष्णलं प्रागुक्तम् । ते द्वे रूप्यमाषः । ते रूप्यमाषाः षोडश धरणम् । धरणस्यैव पुराणमिति संज्ञान्तरम् । तथा च मनुः—

ते षोडश स्याद्धरणं पुराणश्चैव राजतः ।

इति ।

दशभिर्धरणैः शतमानं तदेव रूप्यपलम् । सुवर्णाः प्रागुक्ताश्चत्वारो निष्को राजत उच्यते । अत्र चकारतुकारवकारैरुक्तपरिमाणे न्यूनाधिकशङ्कां व्यच्छिनत्ति । ताम्रपरिमाणे विशेषमाह । ताम्रिकस्ताम्रसम्बन्धी विकारः । कार्षिकः पलचतुर्थांशरूपेण लोकप्रसिद्धेन कर्षेणोन्मितः पणः स्मृतः । स एव कार्षापण इति संज्ञान्तरेणापि व्यवह्रियते । तथा च मनुः—

कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ।

इति । नारदः—

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु ॥

---

( १ ) च-इति ख० पु० पाठः । ( २ ) न्वेतु-इति क० पु० पाठः ।

तथा--

काकिनी तु चतुर्भागो माषस्य च पणस्य च ।

साशीतिरशीतिपणसाहतः । पणानां सहस्रं परिमाणमस्येति पणसाहस्रः स दण्डरूप उत्तमसाहसः । तेनाऽशीत्यधिकपणसहस्रमुत्तमसाहसो दण्डः प्रोक्त इति पर्यवस्यति। तदर्धमुत्तमसाहसार्धं मध्यमसाहसो दण्ड प्रोक्तः शास्त्रे कथितः । मध्यमसाहसार्धं त्वधमसाहसो दण्डः स्मृतः स्मृतावुक्तः । मनौ तु--

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्चविज्ञेयः सहस्रं त्वेव चोत्तमः ॥

इति परिमाणितम् ॥ ३६२-३६६ ॥

(मिता०) तत्र कृष्णलमाषसुवर्णपलादिशब्दैरर्थदण्डा वक्तव्यास्ते च प्रतिदेशं भिन्नपरिमाणार्था इत्येकरूपापराधेऽपि देशभेदेन न्यूनाधिकदण्डो माभूदिति कृष्णलादिशब्दानां नियतपरिमाणविषयत्वं दण्डव्यवहारे दर्शयितुमाह--

जालेत्यादि । जालकान्तरप्रविष्टादित्यरश्मिस्थितं यद्रजस्तत् त्रसरेणुरित्युक्तं योगीश्वरादिभिस्तत्त्वदर्शिभिः । ते च त्रसरेणवोऽष्टौ लिक्षा स्वेदजयूकाण्डम् । ता लिक्षास्तिस्रो राजसर्षपो राजिका। ते राजसर्षपास्त्रयो गौरसर्षपः सिद्धार्थः । ते गौरसर्षपाः षट् यवो मध्यः मध्यमो न स्थूलो न सूक्ष्म । एतेन गौरसर्षपा अपि मध्यमा इति गम्यते । तथा राजसर्षपा अपि । मध्यमशब्देन सर्षपादिशब्दाः न केवलमुन्मानवचनाः किं तु तदुन्मितद्रव्यवचना इति गम्यते । यथा प्रस्थपरिमिता यवाः प्रस्थ उच्यते । एवं सर्षपाद्युन्मितं द्रव्यं सर्षपादिशब्दः । सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरे(१)णुतुपर्यन्तस्योन्मातुमशक्यत्वात्तद्द्वारेण कृष्णलादिव्यवहारो न स्यात् । तत्र स्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतमभमध्यसर्षपाद्युन्मानभेदेन प्रतिदेशं व्यवहारभेदे स्थिते दण्डव्यवहारे मध्य इति नियम्यते । ते मध्यमा यवास्त्रय एकः कृष्णल । ते कृष्णलाः पञ्चैको माषः । ते माषाः षोडशैकः सुवर्णः । ते सुवर्णाश्चत्वारः पलमिति संज्ञा कथिता इति । पञ्च वापि पलं प्रकीर्तितं नारदादिभिः । तत्र स्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशाद्यः कृष्णलो भवति । तैः पञ्चभिर्माषः । माषैः षोडशभि सुवर्णः । स च

(१) रेणुत्रयसहस्रक ।

व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति। ते चत्वारः पलमिति। निष्काणां विंशतिः पलम्। यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते तदा व्यावहारिकनिष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति। तस्मिन्पक्षे सुवर्णः सार्धं निष्कद्वयं भवति। पलं च दशनिष्कम्। यदा तु मध्यमयवैः कृष्णलपरिकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः, सुवर्णश्चतुर्निष्कः, षोडशनिष्कं पलम्। एवं पञ्चसुवर्णं पलमिति। पक्षे विंशतिनिष्कं पलम्। एवमन्यदपि निष्कस्य चत्वारिंशो भागः कृष्णलः, द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादिलोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयम् ॥ ३६२–३६३ ॥

(मिता०) एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह—

द्वे कृष्णल इति। द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसम्बन्धी माषः। ते रूप्यमाषाः षोडश धरणम्। पुराण इत्यस्यैव संज्ञान्तरम्। 'ते षोडश स्याद्धरणं पुराणश्चैव राजतः' इति (८।१३८) मनुस्मरणात्। दशभिर्धरणैः शतमानं पलमिति चाभिधीयते। पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति ॥ ३६४ ॥

( मिता० ) इदानीं ताम्रस्योन्मानमाह—

कार्षिक इति। पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः। कर्षेणोन्मितः कार्षिकः। ताम्रस्य विकारस्ताम्रिकः। कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च। 'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः' इति (८।१३६) मनुवचनात्। पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति। तथा सति 'माषो विंशतिमो भागः पणस्य परिकीर्तितः' इत्यादिव्यवहारः सिद्धो भवति। चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति। अस्मिंश्च पक्षे सुवर्णकार्षापणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दौ ताम्रविषयावेव। एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तं, दण्डव्यवहारोपयोगित्वात्। कांस्यरीतिकादीनामपि लोकव्यवहाराङ्गभूतानामेवमेवोन्मानं द्रष्टव्यम् ॥३६५॥

( मिता० ) स्वशास्त्रपरिभाषामाह—

साशीतिरिति। पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः। अशीत्या सह वर्तत इति साशीतिः। अशीत्यधिकपणसहस्रपरिमितो यो दण्डः स उत्तमसाहससंज्ञो वेदितव्यः। तदर्धं मध्यमः तस्य साशीतिपणसहस्रस्यार्धं चत्वारिंशदधिकपणपञ्चशतपरिमितो दण्डो मध्यमसाहससंज्ञः। तदर्धमधमः तस्य चत्वारिंश-

दधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डोऽधमसाहससंज्ञः स्मृत उक्तो मन्वादिभिः । यत्तु 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्चविज्ञेयः सहस्रं त्वेव चोत्तम.' इति (८।३८) मनुनोक्तं, तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम् ॥३६६॥

( वी० मि० ) अथ दण्डान् विभजन् तत्प्रयोगविकल्पानाह—

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ॥
योज्या व्यस्ताःसमस्ता वा ह्यपराधवशादिमे ॥ ३६७ ॥
ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ॥
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥ ३६८ ॥

धिग्दण्डो धिक् त्वामिति भर्त्सनम् । वाग्दण्डः त्वं पापिष्ठोऽसि त्वां ताडयिष्यामीत्यादिर्यथेष्टपरुषभाषणरूपः । धनदण्डो धनदानरूपः । वधोऽङ्गादिच्छेदरूप', मारणरूपश्च । तथाशब्देन बन्धनताडनसमुच्चयः । इमे दण्डाः समस्ताः समुदिता व्यस्ता एको द्वौ त्रयो वाऽपराधानुसारेण दण्ड्येषु योज्याः । हिशब्दोऽवधारणे, तेनाऽपराधानुसारिदण्डव्यवच्छेदः । न केवलमपराधानुसारादेव दण्डः, किं त्वपराधवद्देशादिरप्यनुसर्तव्य इत्याह ज्ञात्वेति । अपराध सकृदसकृत्कृतं लघुगुरुरूपं च, देशमुपद्रुतानुपद्रुत, कालं सुभिक्षदुर्भिक्षादियुक्तं, बलं शरीरसामर्थ्यमुत्कृष्टं च, वयो बाल्यादि, कर्म अग्निहोत्रादि सूनाधिष्ठानादि च दण्ड्यस्य ज्ञात्वा सम्यग्विचार्य दण्ड्येषु अपराधकारिषु दण्डं पातयेत् योजयेदिति ॥ ३६७—३६८ ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिनीराजितचरणकमल-
श्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजचतुरुदधि-
वसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजि-
तश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूरिसूनुसकलवि-
द्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते
श्रीवीरमित्रोदयाख्याने श्रीयाज्ञवल्क्य-
व्याख्याने राजधर्मप्रकरणं
नाम प्रथमोऽध्यायः ॥

( मिता० ) दण्डभेदानाह--

धिग्दण्ड इति । धिग्दण्डो धिग्धिगिति कुत्सनम् । वाग्दण्डस्तु परुषशापवचनात्मकः । धनदण्डो धनापहारात्मकः । वधदण्डः शारीरोऽवरोधादिजीवितान्तः । एते चतुर्विधा दण्डाः व्यस्ता एकैकशः, समस्ताः द्वित्राः त्रिचतुरा वाऽपराधानुसारेण प्रयोक्तव्याः । उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः । यथाह मनुः-'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डमतः परम्' ॥ इति ॥ ३६७ ॥

( मिता० ) दण्डव्यवस्थानिमित्तान्याह-

ज्ञात्वेति । यथापराधं ज्ञात्वा दण्डप्रणयनमेवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डार्हेषु दण्डप्रणयनं कुर्यात् । तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च । यद्यपि राजानमाधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि विषयमण्डलादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः । 'राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' इत्यत्र पृथङ्नृपग्रहणात्करग्रहणस्य रक्षार्थत्वाच्च रक्षणस्य दण्डप्रणयनायत्तत्वादिति ॥ ३६८ ॥

इति श्रीपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ सदाचारः प्रथमाध्यायः ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥

अस्मिन्नध्याये प्रकरणानि-१ उपोद्घातप्रकरणम् । २ ब्रह्मचारिप्रकरणम् । ३ विवाहप्रकरणम् । ४ जातिविवेकप्रकरणम् । ५ गृहस्थधर्मप्रकरणम् । ६ स्नातकप्रकरणम् । ७ भक्ष्याभक्ष्यप्रकरणम् । ८ द्रव्यशुद्धिप्रकरणम् । ९ दानधर्मप्रकरणम् । १० श्राद्धप्रकरणम् । ११ गणपतिकल्पप्रकरणम् । १२ ग्रहशान्तिप्रकरणम् । १३ राजधर्मप्रकरणम् । एवं त्रयोदश प्रकरणानि ॥

याज्ञवल्क्यमुनिशास्त्रगतेयं विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षरापि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ १ ॥

प्रथमोऽध्यायः समाप्तः ॥

# अथ व्यवहाराध्यायः ।

(वी० मि०) निःसाम्यं स्वस्य शंसन्निव विदधदिव द्वैतवार्त्तामिहार्त्तौ
मद्वन्द्वं शीलयिष्यन्निव च निजपदं शीलितानन्दभावः ॥
भव्यात्मा शुद्धसत्त्वाङ्कुर इव विशदो विश्वभूःक्रोडमार्त्तु-
र्दंष्ट्रेवोच्चैरनाशी (१)हरमुकुटशशीवैकदन्तस्य दन्तः ॥ १ ॥

अस्ति क्षोणीप्रशास्तिस्तनुरिव गिरिशस्योडछापुरपूर्वा
दुर्वारार्भावदुर्गांतनुरतनुरिपुर्विघ्नती भूरिभूतिम् ॥
नीराजद्वजलक्ष्मीः सगुणमपि रुचा निर्गुणाना पिनाकं
दध्यसागाजिनश्रीः सुदुपमाधिगता नागराजद्धशोभा ॥ २ ॥

अरिकुलकरिकुम्भकूटपाटीशिखरितटीमिव यां प्रमापदीयान् ॥
अधिवसति महीन्दुवीरसिंहो मधुकरसाहिमहीशसिन्धुजन्मा ॥ ३ ॥

श्रेयःसम्भृतवीरसिंहनृपतेराप प्रतापोदया-
द्राघोद्दामहुताशनेद्धितचमूराडिन्धनस्य श्रियम् ॥
येनान्तः स्फुटति स्थानि प्रकटयत्यप्यश्रुधारारसा-
विर्भावं तनुते तनोति कुयशोदम्भैर्जगच्छ्यामलम् ॥ ४ ॥

गाम्भीर्यं बहु वीरसिंहनृपतेरम्भोधिरन्तः स्मरन्
दुर्वारैर्वडशिखिस्खलनेन निधिहप्रौढोपतापं दधौ ॥
स्मारंस्मारमुदारसारमधिकोद्यच्चमत्कारतो
जातोऽचेतन एव जातजडिमा श्यामाकृतिः क्ष्माधरः ॥ ५ ॥

बाल्याबाल्यान्तरालस्थगितमिव मनः कामकौमारकेली-
मस्वीकुर्वन् किशोरीचरण इव रिपुश्रृङ्खलीभूय भूयः ॥
क्रीडान्तावश्यकान्ताजन इव विगलत्कुन्तलो ध्वस्तवासा
यस्य त्रासाज्जरत्याः स्तन इव निपतन्नुन्नतिं नैव लेभे ॥ ६ ॥

(१) दंष्ट्रेवोच्चैरनाशी हरमुकुटशशी चैकदन्तस्य दन्त इति ख० पु० पाठः ।

भगोलाद् भूगोलाद्बहिरभियियासन्ति भवितुं
पठानाः पाठीना इव जलविलीनां धियमधुः ॥
मघो मोघारम्भोऽपसरति बुंदेलाकुलपतौ
रणार्थे दुर्वारे रणति रणसारे रणभुवि ॥ ७ ॥

बिभ्राणो बुधमित्रतां कविगुरू राजा धरानन्दनः
शोभाभिर्विलसत्तमो दिवि लसत्केतुश्च भास्वत्सुतः ॥
इत्थं जन्यजनुर्नवग्रहतनुः किन्त्वस्ति तुङ्गः सदा
सोद्रेकः किल वीरसिंहधरणीधौरेयचूडामणिः ॥ ८ ॥

शुभ्राभाविभवार्थमात्तवृषभो भोगीन्द्रभागीरथी-
भास्वद्भूतिभनाथभूपितवपुः कैलासवासी भवन् ॥
वीरश्रीयुतवीरसिंहनृपतेः सम्भाव्य शम्भुर्यशः
शान्त्यै साम्यविधेर्बभार गरलं कण्ठे किमुत्कण्ठितः ॥ ९ ॥

हेमोर्वीधरकर्णिकापरमहाशैलौघसंवर्त्तिका
व्यालेन्द्रैकमृणालिका गजघटाव्यालीनभृङ्गालिका ॥
सप्ताम्भोधिमधूलिकाविमलिका क्षोणीयशोमालिका
सम्पर्केऽप्रतिमल्लवीरनृपतेः शुभ्रारविन्दायते ॥ १० ॥

व्रीडाभिर्जडिमोदयादुपलतां चिन्तामणिः पाशवं
कामं कामगवी च कल्पविटपी स्वर्गाटवीं गाहते ॥
आकर्ण्योर्जितवीरसिंहनृपतेर्दानोर्जिहानं यशः
सान्तर्ध्यानतयाऽद्य निर्दयमधो नेतारमस्तौद्बलिः ॥ ११ ॥

वसु वर्षति वीरसिंहदेवे जलदः केवलमम्बु अद्रिजेषु ॥
इयतैव यशोऽयदातविश्वो मलिनः सोऽजनि लज्जया तयैव ॥१२॥

दूराद् दुश्च्यवनो दिवस्पतिरभूद्दिकोणभाक् पावकः
कीनाशः स्वयमेव दण्डमितवान् रक्षोऽपि रक्षोक्तिभाक् ॥
पाशं च स्वयमाददे पतिरपां वातो गतोऽदृश्यतां
प्रस्थाने धनदोऽस्य गुह्यकपदं दुर्गाश्रितुग्रोऽचरत् ॥ १३ ॥

आरोहो गौरलतायाः सदुपक्रातिपदं धर्मभूमीरुहाणा-
मुद्यानं शुद्धकीर्तेरुपचयभवनं श्रीमृगीवागुरेव ॥
आकारो विप्रताया निधिरपि महसः सर्वविद्याऽनवद्यो
यद्द्वारि द्योतते श्रीद्युमणिरिव तमो मूर्छयन् मित्रमिश्रः ॥ १४ ॥

क्ष्माचक्रं चारु चक्रे समुचितनयतो रक्षितं भूमिदेवान्
देवांश्च प्राप्तसेवान् विमलमपि यशो वीरसिंहो नरेन्द्रः ॥
विश्वं मत्वाऽप्यसारं धितरदाचिरतं याज्ञवल्क्योक्तिमुक्ता-
हारं स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम् ॥ १५ ॥

उत्तसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्
श्रीभाजो मित्रमिश्राज्जगदुपकृतये विप्रवादेशदीपम् ॥
ज्ञानानां दैन्यदोषापहमकलिमयं याज्ञवल्क्योक्तिकाशात्
दृष्ट्वा स्मृत्यर्थसारं समुच्चिनुत यतो धर्मलक्ष्मीविहारम् ॥ १६ ॥

अथ 'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहं'मिति पूर्वाध्यायोक्तं प्रपञ्चयति सम्पूर्णाध्यायेन—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ॥
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥

अत्र यद्यपि व्यवहारदर्शनं पूर्वाध्याये प्रयोक्तं तथापि सकलाङ्गोपेतव्यवहारस्याऽत्रैव प्रदर्शनादयं व्यवहाराध्याय इति इलोकैरुच्यते। तत्र चैतानि प्रकर[illegible]
१-३६ ] (२)ऋणदानप्रक[illegible]
[श्लो०६५-६७](४)साक्षि[illegible]
णम् [ श्लो० ८४-९४ ] [illegible] (७)विभागप्रकरणम् [ श्लो० ११४-१४९ ] (८)सीमाविवादप्रकरणम् [ श्लो० १५०-१५८ ] (९)स्वामिपालविवादप्रकरणम् [ श्लो० १५९-१६७ ] (१०)अस्वामिविक्रयप्रकरणम [ श्लो०१६८ १७४ ](११)दत्ताप्रदानिकप्रकरणम [ श्लो० १७५-१७६ ] (१२) क्रीतानुशयप्रकरणम् [ श्लो० १७७-१८१ ] (१३)अभ्युपेत्याशुश्रूषाप्रकरणम् [श्लो० १८२-१८४](१४)संविद्व्यतिक्रमप्रकरणम् [श्लो० १८५-१९२](१५)वेतनानपाकर्मप्रकरणम[श्लो०१९३ १९८](१६)द्यूतसमाह्वयप्रकरणम[श्लो० १९९-२०३](१७) वाक्पारुष्यप्रकरणम [श्लो० २०४-२११] (१८)दण्डपारुष्यप्रकरणम् [श्लो० २१२-२२९](१९)साहसप्रकरणम [श्लो०२३०-२५३] (२०) विक्रीयासम्प्रदानप्रकरणम् [श्लो० २५४-२५८] (२१)सम्भूयसमुत्थानप्रकरणम् [श्लो० २५९-२६५] (२२)स्तेयप्रकरणम्

[श्लो० २६६-२८२] (२३) स्त्रीसङ्ग्रहप्रकरणम् [श्लो० २८३-२९४ ] (२४) प्रकीर्णकप्रकरणम् [श्लो० २९५-३०७] इति ।

विद्वद्भिर्व्यवहारशास्त्राभिज्ञैर्ब्राह्मणैः सह नृपः क्रोधलोभाभ्यां विशेषतो वर्जितः सन् धर्मशास्त्रानुसारेण अविरोधेन—

विनीतवेशो नृपतिः सभां गत्वा समाहितः ।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् ॥

इत्यादिप्रकारेण च व्यवहारान् भाषोत्तरक्रियारूपान् पश्येत् विचारयेत् । नृपपदेन क्षत्रियातिरिक्तस्यापि प्रजापालकस्य ग्रहणम् । ब्राह्मणैरिति मुख्यः कल्पः । असम्भवे क्षत्रियैर्वैश्यैर्वा सहेति प्रागुक्तम् । धर्मशास्त्रस्य प्राधान्यं दर्शयितुं विशेषोपन्यासः, विचारेऽर्थशास्त्रस्याऽप्यनुसरणीयत्वात् । तदुक्तं कात्यायनेन—

धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ।

धर्मशास्त्राऽर्थशास्त्रयोर्विरोधे तु बलाबलमग्रे वक्ष्यति । धर्मशास्त्रानुसार्यपि निर्णयो न वादिक्षोभकरपरुषभाषणपराजिताधिकदण्डादियुक्तः कार्य इति दर्शयितुं क्रोधलोभविवर्जितत्वमुक्तम् । व्यवहारनिरुक्तौ कात्यायनः—

वि नानार्थेऽव सन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद् व्यवहार इति स्मृतः ॥

स चायं द्विविधः । यदाह नारदः—

सोत्तरोऽनुत्तरश्चैव स विज्ञेयो विलक्षणः ।
सोत्तरोऽभ्यधिको यत्र विलेखात्पूर्वकः पणः ॥

योऽत्र जीयते स इयन्तं दण्डं जेत्रे राज्ञे वा ददातीत्यादिरूपः पणो यत्र भाषालिखनात्पूर्वं क्रियते स सोत्तरः, तद्भिन्नोऽनुत्तरः । धर्मशास्त्रानुसारेणेत्युक्तं तत्र धर्मशास्त्रस्थितिमाह सम्पूर्णाध्यायेन । एवं च साक्षिवाद्यादिकृतस्याऽग्रेऽभिधानं सङ्गच्छते धर्मशास्त्रास्थित्यन्तर्गतत्वात् ॥ १ ॥

(मिता०)अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारद(१)र्शनमन्तरेण संभवति । तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तं—

(१) दर्शनेन विनेति व्यवहारदर्शनं ग० ।

'व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' इति । स च व्यवहारः कीदृशः कतिविधः कथं चेतीतिकर्तव्यताकलापो नाभिहितस्तदभिधानाय द्वितीयोऽध्याय आरभ्यते—

व्यवहारानिति । अन्यविरोधेन स्वात्मसम्बन्धितया कथनं (१)व्यवहारः । यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति । तस्याऽनेकविधत्वं दर्शयति बहुवचनेन। नृप इति न क्षत्रियमात्रस्याय धर्मः किन्तु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति । पश्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः । विद्वद्भिर्वेदव्याकरणादिधर्मशास्त्राभिज्ञैः । ब्राह्मणैर्न क्षत्रियादिभिः । ब्राह्मणैः सहेति तृतीयानिर्देशात्तेषामप्राधान्यम् । 'सहयुक्तेऽप्रधाने' इति स्मरणात् । अतश्चाऽदर्शनेऽन्यथादर्शने च राज्ञो दोषो न ब्राह्मणानाम् । यथाह मनुः ( ८।१२८ )—'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चा(२)धि गच्छति' ॥ इति । कथम् ? धर्मशास्त्रानुसारेण नाऽर्थ(३)शास्त्रानुसारेण । देशा(४)दिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम् । तथा च वक्ष्य(५)ति—'निजधर्माविरोधेन यस्तु साम(६)यिको भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः' ॥ इति । क्रोधलोभविवर्जित इति । धर्मशास्त्रानुसारेणेति सिद्धे 'क्रोधलोभविवर्जित' इति वचनमादरार्थम् । क्रोधोऽमर्षः। लोभो लिप्सातिशयः ॥ १ ॥

( वी० मि० ) तत्र चादौ विद्वद्भिर्ब्राह्मणैः सहेत्युक्तेर्विद्वत्तां विशिंषन्नेव ब्राह्मणान् विशिनष्टि—

श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः ॥
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥

(१) 'विप्रतिपद्यमानतदन्यतरज्ञाताज्ञातधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिकर्तृकः समयज्ञोगसाक्षिप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापारो वा, स. । संप्रतिपत्त्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने इति व्य० म —'विनानार्थेऽव हरणाद्व्यवहार इति स्मृतः' ॥ इति कातीयम्० । (२) चैव गच्छति ख० । (३) अर्थशास्त्रं नीतिशास्त्रं औशनसादिकम् ।
(४) देशेति । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयः ।
(५) वक्ष्यति अग्रे संविद्व्यतिक्रमप्रकरणे ( श्लो १८६ ) ।
(६) सामयिको धर्मो यात्र्यार्थिक भोजनं देयमस्मद्रातिमण्डले शुल्कादयो न ग्रहणीया इत्येवरूपः ।

श्रुतं मीमांसादिनाऽर्थावधारणं तद्युक्तेन वेदशास्त्राध्ययनेन सम्पन्ना युक्ताः । अत एव धर्मज्ञाः धर्माधर्मविवेचनकुशलाः । अत एव च सत्याभिधानशीलाः । ये रिपौ मित्रे च समा द्वेषरागादिहीनास्ते ब्राह्मणा राज्ञां सभासदः सभोपवेशिनः कार्याः । यथा ते विचारार्थं सभायामुपविशन्ति तथा तेषां संमानादि विधेयमित्यर्थः । चकारादुदासीनपरिग्रहः । बहुवचनेन स्मृत्यन्तरोक्तसंख्याविशेषमभिप्रैति । तथा च मनुः—

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।

बृहस्पतिश्च—'सप्त पञ्च त्रयो वा सभासदो भवन्ती'ति । वस्तुतस्तु अनियुक्तब्राह्मणसाहित्यस्य प्रागुक्तत्वात्तदतिरिक्तानामपि सभासदां विधानार्थमयं श्लोकः । अत एव सप्राड्विवाक सामात्ययोः सब्राह्मणपुरोहितयोः कात्यायनेनोपादानं कृतम् । उक्तं च का(१)रणमुपक्रम्य—

कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥

इति । मनुनाप्युक्तम्—

वणिक्शिल्पिप्रयोगेषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यत्र तज्ज्ञैरेव कारयेत् ॥

इति । उपलक्षणं चैतत् । यो यत्र विज्ञस्तत्साहित्येनैव तन्निर्णयमिति निर्गवः । न्याययोग्यान्नाह बृहस्पतिः—

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥
आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्तव्यः शुद्धपूरुषः ॥—॥ २ ॥

( मिता० ) सभ्यांश्चाह—

श्रुतेति । किञ्च श्रुताध्ययनसम्पन्नाः श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन सम्पन्नाः । धर्मज्ञाः । सत्यवादिनः सत्यवचनशीलाः । रिपौ मित्रे च ये समाः रागद्वेषादिरहिताः । एवंभूताः सभासदः सभायां संसदि यथा सीदन्त्युपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसम्पन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव । यथाह कात्यायनः—'स तु सभ्यैः स्थि·

---

( १ ) करण०—इति क० पु० पाठः ।

रैर्युक्तः प्राज्ञैर्मौलै(१)र्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः' इति । ते च त्रयः कर्तव्याः बहुवचनस्यार्थवत्त्वात्, 'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः' इति ( ८।११ ) मनुस्मरणाच्च । बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह—'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा' इति । न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसम्पन्ना इत्यादि विशेषणमिति मन्तव्यम् । तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात् । विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां सभासदां च (२)स्पष्टं भेदो दर्शितः—'सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः' ॥ इति । तत्र ब्राह्मणा अनियुक्ताः, सभासदस्तु नियुक्ता इति भेदः । अत एवोक्तम्—'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति' इति । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति तदाऽसौ निवारणीयोऽन्यथा दोषः । उक्तं च कात्यायनेन—'अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः' इति । अनियुक्तानां पुनरन्यथाभिधाने वा दोषो न तु राज्ञोऽनिवारणे । 'स(३)भा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी' ॥ इति ( ८।१३ ) मनुस्मरणात् । विप्रैः मित्रैः चेति चकाराल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् । यथाह कात्यायनः—'कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्' ॥ इति ॥ २ ॥

( वी०मि० ) 'व्यवहारान् स्वयं पश्येत्' इति पूर्वाध्यायेऽभिहितं तदसम्भवे त्वाह—

अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ॥
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥

कार्यान्तरव्यग्रतावशाद् व्यवहारान् द्रष्टुमक्षमेण तु राज्ञा सभ्यैः सहितो व्यवहारोपयोगिसर्वधर्मज्ञो ब्राह्मणो व्यवहारदर्शनार्थं नि-

---

(१) मौलैः सेवकत्वेन पितृपितामहादिपरम्परायातैः ।
(२) च भेदः स्पष्टो ग० ।
(३) सभां वा न प्रवेष्टव्यं ग० ।

योक्तव्य इत्यर्थः। अत्र विशेषमाह कात्यायनः—

दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्॥

एतादृशब्राह्मणाभावे क्षत्रियो वैश्यो वा नियोक्तव्य इति प्रागुक्तम्। नारदः—

तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत्।
मायायोगविदां चैव न स्वयं कोपकारणात्॥

येषां कोपाद्भयं भवति तेषां विचारस्तज्जातिद्वारैव कारयितव्य इत्यर्थः। स्वयं विचारकरणेऽपि प्राड्विवाकसाहित्यमपेक्षितमेव। तदाह नारदः—

धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः।
समाहितमतिः पश्येद्व्यवहाराननुक्रमात्॥—॥ ३॥

( मिता० ) व्यवहारान्नृपः पश्येदित्युक्तं तत्रानुकल्पमाह—

अपश्यतेति। कार्यान्तर(१)व्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह सर्वधर्मवित् सर्वान्(२)धर्मान् शास्त्रोक्तान् सामयिकांश्च धर्मान्वेत्ति विचारयतीति सर्वधर्मवित् ब्राह्मणो न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनोक्तगुणविशिष्टं कुर्यात्। यथाह—'दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्'॥ इति। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम्। यथाह कात्यायनः—'ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्'॥ इति। नारदेन (३)त्वयमेव मुख्यो दर्शितः—'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः। समाहितमतिः पश्येद्व्यवहाराननुक्रमात्'॥ इति। प्राड्विवाकमते स्थितो न स्वमते स्थितः। राजा चारचक्षुषा परसैन्यं पश्यतीतिवत्। तस्य चेयं यौगिकी संज्ञा। अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति (४)विवेचयति वेति विवाकः। प्राट् चासौ विवाकश्च प्राड्विवाकः। उक्तं च—'विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः। विचारयति येनासौ (५)प्राड्विवाकस्ततः स्मृतः' इति॥ ३॥

(१) व्यग्रतया ख० ग०। (२) धर्मशास्त्रोक्तान्।
(३) ब्राह्मण एव.। (४) विवक्तीति वा ग.।

(वी० मि०) असद्विचारकारिणां सभ्यानां राज्ञा दण्डः कार्य इत्याह—

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ॥

सभ्याः पृथक्पृथग्दण्ड्या विवादाद् द्विगुणं दमम् ॥ ४ ॥

रागादिवशात्स्मृत्यपेतस्य स्मृतिविरुद्धस्य आदिपदाद्देशाचारादिविरुद्धस्य च [सङ्ग्रह] कर्तारः। सभ्या विचारार्थं सभायां नियुक्ताः प्राड्विवाकपर्यन्ताः, पृथक् पृथक् प्रत्येकं विवादात् प्रकृतविवादपराजयनिमित्तकाद्दण्डाद्धनग्रहणरूपाद् द्विगुणं दमं दण्ड्याः, प्रापणीयाः। अपिकारेणाऽज्ञातसमुच्चयः। तदाह कात्यायनः—

कार्यस्य निर्णयं सम्यग् ज्ञात्वा सभ्यस्ततो वदेत्।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक्॥
सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तथा।
कार्यं तु कार्यिणामेव निश्चितं तु विचारयेत्॥

एवं निश्चितं सम्यग्विचारितं पुनः विचारयेत् न तु वादिपराजयनिमित्तक्रोधेन दण्डः। तत्र—

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते॥

इति प्रागुक्तादिदण्डो द्रष्टव्यः ॥ ४ ॥

(मिता०) प्राड्विवाकादयः (१)सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह—

रागादिति। अपि च पूर्वोक्ताः सभ्या रजसो निरङ्कुशत्वेन तदभिभूताः रागात्स्नेहातिशयाल्लोभाल्लिप्सातिशयाद्भयात्संत्रासात्स्मृत्यपेतं स्मृतिविरुद्धं आदिशब्दादाचारापेतं कुर्वन्तः पृथक्पृथगेकैकशो विवादाद्विवादपराजयनिमित्ताद्दमाद्द्विगुणं दमं दण्ड्याः, न पुनर्विवादास्पदीभूताद्द्रव्यात्। तथा हि सति स्त्रीसङ्ग्रहणादिषु दण्डाभावप्रसङ्गः। रागलोभभयानामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम्। न च 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' इति गौतमवच(२)नात्र ब्राह्मणा दण्ड्या इति मन्तव्यं तस्य प्रशंसार्थ-

(१) बृहस्पतिस्तु— विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च। प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥ इति ख्य म।  (२) न ब्राह्मणो दण्ड्य इति क ग।

त्वात् । यत्तु षड्भिः परिहार्यो रा(१)ज्ञाऽवध्यश्चावन्ध्यश्चादण्ड्यश्चा-बहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति तदपि स एष बहुश्रुतो भवति लोकवेदवेदाङ्ग(२)विद्वा(३)कोवाक्येतिहासपुराणकुशलस्तदपेक्षस्त-द्वृत्तिश्चाष्टचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा समयाचारिकेष्वभिविनीत इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मण-मात्रविषयम् ॥ ४ ॥

( वी० मि० ) व्यवहारदर्शनस्य व्यवहारविषयज्ञानाधीनत्वात्सा-मान्यतो व्यवहारविषयमाह—

स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः ॥
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥

स्मृतिसदाचारबहिर्भूतेन मार्गेणोपायेन परैराधर्षित आस्क-न्दितो राज्ञे चेत्परकृताधर्षणमावेदयति तत्तदा व्यवहारस्य पदं वि-षयो ऋणादानादिर्भवति । चेदित्यनेन स्वयं विवादोत्थापनं न कार्य-मिति सूचितम् । तदाह मनुः—

नोपादयेत्स्वयं कार्यं राजा नाऽप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥

यदिति पाठस्तु मिश्रादिसंमतः । यदृणादानादि आवेदयति त-दिति योज्यम् । परैरिति बहुवचनं साध्यस्यैकत्वे । साध्यभेदे तु—

एकस्य बहुभिः सार्द्धं स्त्रीभिः प्रेष्यकरैः सह ।
अनादेयो भवेद्वादः—

इति नारदवचनं हिशब्देनाऽऽवेदितस्याऽवश्यविचार्यत्वमभि-प्रैति । तत्र विशेषमाह बृहस्पतिः—

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न सिद्ध्यति ॥
एकस्य बहुभिः सार्द्धं स्त्रीभिः प्रेष्यकरैः सह ।
अनादेयो भवेद्वादो विद्वद्भिः परिकीर्तितः ॥
राज्ञा विवर्जितो यस्तु यस्तु पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥

(१) राज्ञा बध्यश्चाबध्यश्च. ग. । (२) वेदाङ्गविद्वाक्येतिहास ग. ।
(३) वाकोवाक्यं-उक्तिप्रत्युक्तिमद्वाक्यम् ।

अन्येपि ये पुरग्राममहाजनविरोधिनः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥

तच्च व्यवहारपदं सामान्यतो द्विविधं शङ्किताभियोगान्निश्चिताभियोगाच्च । अभियोगश्च द्विविधो विधिनिषेधरूपत्वात् । यथा ममाऽनेन हिरण्यमपहृतमिति मत्त ऋणत्वेन गृहीतं धनमयं न ददातीति च । यदाह कात्यायनः—

न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः ।

विशेषतो व्यवहारपदानि विभजते मनुः—

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्याऽनपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसङ्ग्रहण एव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥—॥ ५ ॥

( मिता० ) व्यवहारविषयमाह—

स्मृत्येति । धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति विज्ञापयति चेद्यदि तदावेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयस्तस्य चेदं सामान्यलक्षणम् । स च द्विविधः शङ्काभियोगस्तत्त्वाभियोगश्चेति । यथाह नारदः—'अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाऽभिदर्शनात्' ॥ इति । होढा लो(१)प्त्र लि(२)ङ्गमिति यावत् । तेन दर्शनं, साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात् । तत्त्वाभियोगोऽपि द्विविधः । प्रतिषेधात्मको विध्यात्मकश्चेति । यथा मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति । क्षेत्रादिकं ममायमपहरतीति च । उक्तं च कात्यायनेन—'न्याय्यं स्वं नेच्छते कर्तुमन्याय्य वा करोति यः' इति । स पुनश्चाष्टादशधा भिद्यते । यथाह मनुः ( ८४-७ )-'तेषा-

---

( १ ) लुप्यत इति लोप्त्रं चौर्यधनम् । ( २ ) लिङ्ग अव्यभिचारित चिह्नमित्यर्थः ।

मा(१)ध्यमृणादानं निक्षेपोऽस्वामिविक्रयः। संभूय च समुत्थानं दत्तस्यानपकर्म च॥ वेत(२)नस्यैव चाऽदानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥ सीमा(३)विवादधर्मश्च पारुष्ये दण्डवाचिके। स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥(४) स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह' ॥ इति ॥ एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि। यथाह नारदः—'एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं (५)भवेत्। क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते' ॥ इति ॥ आवेदयति चेद्राज्ञे इत्यनेन स्वयमेवागत्यावेदयति, न राजप्रेरितस्तत्पुरुषप्रेरितो वेति दर्शयति। यथाह मनुः ( ८।४३ )—'नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः। न च प्रापितमन्येन ग्रसेतार्थं कथञ्चन' ॥ इति। परैरिति परेण पराभ्यां परैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति दर्शयति। यत्पुनः—'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः' ॥ इति नारदवचनं तद्भिन्नसाध्यद्वयविषयम्। आवेदयति चेद्राज्ञ इत्यनेनैव राज्ञा पृष्टो विनीतवेष आवेदयेत्। आवेदितं च युक्तं चेन्मु(६)द्रादिना प्रत्यर्थ्याह्वानमक(७)ल्पादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तम्। स्मृत्यन्तरे तु स्पष्टार्थमुक्तम्। यथा—'काले कार्यार्थिनं पृच्छे(८)द् ब्रुवन्तं पुरतः स्थितम्। किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव॥ केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम्। एवं पृष्टः स य-

(१) ऋणादानं ऋणस्य न दानमदानम्, निक्षेपः स्वधनस्यान्यहस्तेऽर्पणम्, अस्वामिना सम्भूय समुत्थानं अनेकैर्मिलित्वा यत्र धनार्थं वाणिज्याद्युद्यमः क्रियते, दत्तस्यानपकर्म अप्रत्यर्पणम्।

(२) कर्मकरस्य भृतेरदानम्, संविदः कृतव्यवस्थाया अतिक्रमः, अनुशयः क्रयविक्रये च कृते पश्चात्तापाद्विप्रतिपत्तिः, स्वामिपशुपालयोर्विवादः।

(३) ग्रामसीमाविप्रतिपत्तिः, वाक्पारुष्यमाक्रोशनादि, दण्डपारुष्यं ताडनादि, स्तेयं निह्नवेन धनग्रहणम्, साहसं प्रसह्यधनहरणादि, स्त्रियश्च परपुरुषसंपर्कः।

(४) स्त्रीसहितस्य पुंसो धर्मे व्यवस्था, विभागः पैतृकादिधनस्य, द्यूतं अक्षादिक्रीडा पणव्यवस्थापनपूर्वकं पक्षिमेषादिनाऽऽयोधनं, समाह्वयस्य प्राणिद्यूतरूपत्वेन द्यूतावान्तरविशेषत्वादष्टादशसंख्योपपत्तिः।

(५) स्मृतम् घ।

(६) 'शिलका'पर्यायगरुडादिचिह्नेन। (७) अधिव्याधिसहितादीनाम्।

(८) पृच्छेत्प्रणतं इति पाठः।

द्ब्रूयात्ससभ्यैर्ब्राह्मणैः सह ॥ विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥ (१)अकल्यबालस्थविरविषमस्थक्रियाकुलान् । (२)कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् । मत्तो(३)न्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृप ॥ न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता(४) ज्ञातिप्रभुकाः स्मृताः ॥ तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः । नि(५)ष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ (६)कालं देशं च विज्ञाय कार्याणां च बलाबले । अकल्पादीनपि शनैर्यानैराह्वानयेन्नृप ॥ ज्ञात्वा(७)भियोगं येऽपि स्युर्वने प्रव्रजितादयः । तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन्' ॥ इति । (८)आसेधव्यवस्थाप्यर्थसिद्ध्यै नारदेनोक्ता—'वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद्वि(९)वादार्थी यावदाह्वानदर्शनम् ॥ (१०)स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा । चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् । आसेधकाले (११)आसिद्ध आसेधं योऽतिवर्तते । स वि(१२)नेयोऽन्य(१३)थाकुर्वन्नासेद्धा(१४) दण्डमाग्भवेत् ॥ (१५)नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥

(१) अकल्यः व्याध्याद्यभिभूतः विषमस्थः कष्टमसङ्कटः ।

(२) मत्तो मादकद्रव्येण, उन्मत्त उन्मादेन पदार्थविवेकशून्यः वातपित्तश्लेष्मसन्निपातमहतमाभवेनोपसृष्टः प्रमत्तः सर्वदावधानहीनः ।

(३) ता हीनपक्षादयः ज्ञातिस्वामिका इत्यर्थः । (४) निष्कुला कुलहीना ।

(५) एतन्नसङ्कटकल्पावाह्वाने पूर्वनिषेधेऽपि प्रतिप्रसवमाह कालमिति । तत्र प्रकारश्च शनैर्यानैरिति ।

(६) अभियोगोऽभिग्रह आरोपस्तम् । (७) आसेधो राजाधिकारिभिर्निरोधः ।

(८) विवादार्थी वादी, आसेधयत्यर्थिनं निरुध्येत् ।

(९) आसेध इति । स चतुर्विधः—१ अकृत्वा अस्मात्स्थानात्त्वया न गन्तव्यमिति स्थानासेधः, २ अमुकसमय न गन्तव्यमिति कालासेधः, ३ देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः, ४ असौ व्यापारो न कर्तव्य इति प्रवासासेधः ।

(१०) आसिद्धो निरुद्धः । (११) विनेयः शिक्षणीयः ।

(१२) अन्यथा कुर्वन् अनासेधकाले आसेधं कुर्वन् ।

(१३) आसद्धा आसेधकर्ता राजाधिकारी ।

(१४) नासिद्ध । [redacted] येदत्यस्य प्रतिप्रसवमाह नदीति ।

निर्वे(१)ष्टुकामो रोगार्तो यि(२)यक्षुर्व्यसने स्थितः । अभि(३)युक्तस्तथान्येन राजकार्योद्यतस्तथा ॥ गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि (४)तत्कालमायुधीया(५)श्च विग्रहे' इति । आसेधो राजाज्ञयाऽवरोधः । अकल्पादयः पुत्रादिकमन्यं वा सुहृदं प्रे(६)षयेयुः, न च ते परार्थवादिनः । 'यो न भ्राता न च पिता न पुत्रो न नियो(७)गकृत । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रु(८)वन्' ॥ इति नारदवचनात् ॥ ५ ॥

(वी० मि०) चतुष्पाद्व्यवहारोऽयमिति वक्ष्यति तत्र प्रथमं भाषापादे राजकृत्यमाह—

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ॥
समामासतदर्द्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥

अर्थिना प्रत्यर्थिनोऽग्रतो लेखयितव्यम् । समा वर्षं, मासः प्रसिद्धः, तदर्द्धं पक्षः, अहः दिवसः एते भाषाधिकाराः एते भाषाधिकरणे कालाः नाम जातिप्रतिवादिनः स्वस्य च । आदिपदात्—

साम्बन्ध्याप्रमाणं द्रव्यं च संख्या नाम तथात्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात्पितॄणां नामानि पीडामाहर्तुदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षे सङ्कीर्त्य कल्पयेत् ॥

इति कात्यायनोक्ता द्रव्यसंख्यादयः ।

एतेनाऽमुकवर्षेऽमुकमासादौ अमुकपौत्रस्याऽमुकपुत्रस्य अमुकजातीयस्याऽमुकनाम्नो ममाऽमुकपौत्रेणाऽमुकपुत्रेणाऽनेनाऽमुकनाम्नाऽमुकजातीयेनाऽमुकस्य राज्ञो राज्ये इयत्परिमितं हिरण्यं ऋणत्वेन गृहीतं तद्दातु मया चैतावद्दिनपर्यन्तमेतत्प्रणयवशान्न प्रार्थितं पूर्ववर्षे प्रार्थितं चेत्यादि भाषितमर्थिना राजलेख्यशरीरं पर्यवस्यति । परन्तु तत्र त्वं मह्यं सुवर्णस्य शतं धारयसि मत्त ऋणत्वेन गृहीतता-

---

(१) निर्वेष्टुकाम आश्रमान्तरं गन्तुकामः, विवाहादावुद्यत इति यावत् ।
(२) यियक्षुर्यष्टुमिच्छुः । (३) अभियुक्तो नियोजितः ।
(४) तत्कालं शिल्पकाले । (५) आयुधीया आयुधजीविनो योद्धारः । विग्रहे संग्रामे ।
(६) प्रेषयन्त च । (७) नियोगकृदाज्ञाकारी ।
(८) विब्रुवन् व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन् ।

घद्घनकत्वादिति भाषाशरीरं दद्यादिति चार्थितात्पर्यक, इतरच्च निर्णयोपयोगि। एवं च यत्र यावता भाषितार्थसिद्धिर्भवति तत्र तावदर्थिना भाषितव्यं च राज्ञा च लेखनीयमन्यथा दुष्टार्थतापत्तेरिति विवेक्तव्यम्। (अर्थतत्त्वं चाऽधिकपीडाकार्यं चाऽप्यधिकं भवेत् । तस्याऽपि (१)दातव्यो नयः पूर्वं निवेदयेत् । अर्थिनेति सति सम्भवे । तस्यासम्भवे तु नारद—)

अर्थिना सन्नियुक्तो वा प्रत्यर्थे प्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥
यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

बृहस्पति:—

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽथवा नरः ॥

कश्चित्तु प्रतिनिध्यभावमाह कात्यायन —

ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येष्वप्यभिशापेषु प्रतिवादी न दीयते ॥
मनुष्यमरणे स्तेये परदाराभिमर्षणे ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्ता तु विवदेत्स्वयम् ।

भाषापूर्वकृत्यानि राज्ञो वादिनो वा संहिताकृता स्मृत्यन्तरेष्वतिप्रसिद्धानि लिखितानि । यथाह कात्यायन.—

गृहीतग्रहणो न्यायो न प्रवर्त्यो महीभुजा ।
तस्य वा तत्समर्थं स्यात्स्थापयेद्वा परस्य तत् ॥

नारद:—

वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥
आसेधकाल आसिद्ध आसेधं योऽतिवर्तते ।
स विनेयस्तथाकुर्वन्नासेद्धा दण्डमर्हति ॥

(१) तस्यार्थिदातव्यो—इति क पु पाठः ।

तथा—

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धः परमासेधमुत्क्रामन्नाऽपराध्नुयात् ॥

तथा—

निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तु न्यायेन वीजकर्मोद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यवन्धे कृषीवलाः ।
शिल्पिनश्चाऽपि तत्काले आयुधीयाश्च विग्रहे ॥
अवाप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषयस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥

अत्र भाषाया गुणः अल्पाक्षरः प्रभूतार्थ इति बृहस्पत्याद्युक्तः । दोषाणाम्—

अप्रसिद्धं सदोषं च निरर्थं निष्प्रयोजनम् ।

इत्याद्युक्तानामभावाश्च आवेदितमित्यादिशब्देन दर्शितास्ते च ग्रन्थगौरवभयान्नेह तन्यन्ते। वादी तु प्रथमभाषितविपरीतं न वदेत् । यथाह बृहस्पतिः—

यं चार्थमभियुञ्जीत न तं विप्रकृतिं नयेत् ।
न च पक्षान्तरं गच्छेत् गच्छन् पूर्वात्स हीयते ॥

विचारारम्भात्पूर्वं तु भाषायां न्यूनाधिकाभिधानवादिनो नो हानिकरम् । तदाह—

नारदः—

भाषायामुत्तरं यावत्प्रत्यर्थी नाभिलेखयेत् ।
अर्थी तु लेखयेत्तावद्यावन्नोत्तरदर्शनम् ॥
अवष्टब्धस्योत्तरेण निवृत्तं लेखनं भवेत् ।

अत्रोत्तरपदं विचारारम्भपरम् ॥

उभयोर्लिखिते कार्ये प्रारब्धे तत्त्वनिर्णये ।
अयुक्तं तत्र यो ब्रूयात्स तदर्थान्न हीयते ॥
पूर्वोत्तर निविष्टे तु विचारे सम्प्रवेशिते ।
निर्णिक्तं तु तयोस्तत्र वचनं वादिनोर्भृगुः ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं चापि तद्ग्राह्यमुभयोरपि ॥

श्रुतं च लिखितं चैव शोधितं च विचारितम् ।

इति बृहस्पतिवचनात् । शोधने व्यासः—

पाण्डुलेखेन फलके भूमौ चाफलके लिखेत् ।
ऊनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥

अन्यथा लेखस्य दण्डमाह कात्यायनः—

अन्यदुक्तं लिखेदन्यद्योऽर्थिनां ××× वचः ।
चौरवच्छासयेत्तं तु धार्मिकः पृथिवीपतिः ॥-॥ ६ ॥

( मिता० ) प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह—

प्रत्यर्थिन इति । अर्थ्यते इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तत्प्रतिपक्षः प्रत्यर्थी तस्याग्रतः पुरतो लेख्यं लेखनीयम् । यथा येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा न पुनरन्यथा । अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात् । 'अन्यवादी कि(१)याद्वेषी नो(२)पस्थाता निरुत्तरः । (३)आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः' ॥ इति । आवेदनकाल एवार्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह-समामासेत्यादि । संवत्सरमासपक्षतिथिवारादिना अर्थिप्रत्यर्थिनाम-ब्राह्मणजात्यादिचिह्नितम् । आदिशब्देन द्रव्यतत्संख्यास्थानवे(४)लाक्षमालिङ्गादीनि गृह्यन्ते ॥ यथोक्तम्—'अर्थव(५)द्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥ प्रसिद्धमविरुद्धं च निश्चितं (६)साधनक्षमम् । संक्षिप्तं नि(७)खिलार्थं च देशकालाविरोधि च ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥ साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथितादातृदायकम् । यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते' ॥ इति । भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् । आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासा-

( १ ) क्रियाद्वेषी कार्यद्वेषी । ( २ ) नोपस्थाता समीपे न तिष्ठन् । ( ३ ) आहूतश्च पलायी ग । ( ४ ) वेलेति दिनमध्येऽपि प्रातरादिमुहूर्तरूपो वा कालविशेष इत्यर्थः । ( ५ ) अर्थवदिति । अर्थवत्प्रयोजनवत्, धर्मसंयुक्तं धर्मो गुण अत्याचारत्वप्रभूतार्थत्वादिकस्तेन युक्तं, परिपूर्णमध्याहारानपेक्षं, अनाकुलमसंदिग्धाक्षरं, साध्यवत् सिषाधयिषितार्थसहितम्, वाचकपदं बहुर्थ हिंगोणता क्षायिकादिरहितं प्रकृतार्थानुबन्धि पूर्वावेदितार्थानुरोधि । (६) साधने क्षमम् ख (७) नियतार्थं ग

दिविशिष्टं लिख्यत इति विशेषः। संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते। '(१)आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात् । अर्थव्यवहारेऽपि एकस्मिन्संवत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च पुनरन्यस्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति। वत्सरान्तरे गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते। एवं मासाद्यपि योज्यम्। देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते–'देशश्चैव तथा स्थानं संनिवेशस्तथैव च। जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च॥ पि(२)तृपैतामहं चैव पूर्वराजानुकीर्तनम्। स्थावरेषु विवादेषु दशैतानि निवेशयेत्'॥ इति स्मरणात्। देशो मध्यदेशादिः। स्थानं वाराणस्यादि। संनिवेशस्तत्रैव पूर्वापरदिग्विभागपरिच्छिन्नः सन्स्यज्ञातविष्टो गृहक्षेत्रादिः। जातिरर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः। संज्ञा च देवदत्तादिः। अधिवासः समीपदेशनिवासी जनः। प्रमाणं निवर्तनादि भूपरिमाणम्। क्षेत्रनाम शालिक्षेत्रं क्रमुकक्षेत्रं (३)कृष्णभूमः पाण्डुभूमः इति। पितुः पितामहस्य च नामार्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणाम्। राज्ञां नामकीर्तनं चेति समामासादीनां यस्मिन् व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः। एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ताः। अन्यैस्तु विस्पष्टार्थ(४)मुक्ताः। 'अप्रसिद्धं नि(५)राबाधं निरर्थं निष्प्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्'॥ इति। अप्रसिद्धं मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि। निराबाधं अस्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। निरर्थं अभिधेयरहितं कचटतपजडदगवेत्यादि। निष्प्रयोजनं यथायं देवदत्तोऽस्मद्गृहसंनिधौ सुस्वरमधीत इत्यादि। असाध्यं यथाहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि। एतत्साधनासम्भवादसाध्यम् । अल्पकाल-

---

(१) इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृकाप्रकरणे।

(२) पितृ इति लुप्तषष्ठीकं पृथक्पदं, पितुरिति पाठो वा।

(३) कृष्णोदक्पाण्डुवत्यच्प्रत्ययो बहुव्रीहिः। (४) अत्र अप्रसिद्धादेः साधयितुमशक्यत्वादनिराकरणम् इति ख. पुस्तके विशेषः। (५) पीडारहितमित्यर्थः।

त्वाच्च साक्षिसम्भवो, लिख्यते दूरतः, अल्पत्वाच्च दिव्यमिति। विरुद्धं यथाह मूकेन शप्त इत्यादि।, (१)पुरराष्ट्रादिविरुद्ध (२)वा–'राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत्। राष्ट्रस्य वा समस्तस्य (३)प्रकृतीनां तथैव च॥ अन्ये वा, ये पुरग्राममहाजनविरोधिकाः। अनादेयास्तु ते सर्वे व्यवहाराः,प्रकीर्तिताः' ॥ इति। (४)यत्तु–'अनेकपदसङ्कीर्णः पूर्वपक्षो न सिध्यति' इति,– (५)तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते तदा न,दोषः।मदीयमनेन हिरण्य वासो रूपकादि वाऽपहृतमित्येवविधस्यादुष्टत्वात्। ऋणादानादिपदसङ्करे पक्षाभास इति चेत्तदपि न। मदीया रूपका अनेन वृद्ध्या गृहीता. सुवर्णं चास्य हस्ते निक्षिप्तम्। मदीय क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव। किन्तु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत्॥ यथाह कात्यायन.–'(६)बहुप्रतिज्ञ यत्कार्यं व्यवहारे सुनिश्चितम्। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया'॥ इति। तस्मादनेकपदसङ्कीर्णः पूर्वपक्षो युगपन्न सिद्ध्यतीति तस्यार्थः।-अर्थि(७)ग्रहणात्पुत्रपित्रादिग्रहणं तेषामेकार्थत्वात्। नियुक्तस्यापि नियोगेनैव तदेकार्थत्वाक्षेपात्॥ 'अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा। यो यस्यार्थे विवदते तयोर्जयपराजयौ' ॥ इति स्मरणात् नियुक्तजयपराजयौ मूलस्वामिनोरेव। (८)एतच्च भूमौ फलके वा (९)पाण्डुलेखेन लिखित्वा (१०)आवापोद्धारेण विशोधितं पश्चात्पत्रे निवेशयेत्। 'पूर्वपक्षं (११)स्वभावोक्त प्राड्विवाकोऽभिलेखयेत् पाण्डुलेखेन फलके ततः पत्रे विशोधितम्' ॥ इति कात्यायनस्मरणात्। शोधनं च यावदुत्तरदर्शनं कर्तव्य नातः परमनवस्थाप्रसङ्गात्।' अत एव नारदेनोक्तम्–

---

(१) विनिगमनाभावादाह पुरेति।

(२) अत्र 'एतेषां स्वभावेनैव निराकारणमिति न निराक्रियते' इति ख. पुस्तके विशेष।

(३) प्रकृतीनां जनानां नगरस्थानाम्। (४) अर्थावादादीनां पक्षाभासत्वमिवानेकपदसङ्कीर्णपूर्वपक्षस्यापि तत्त्वमेव। अनेकैः पदैः सङ्कीर्णो यः पूर्वपक्ष प्रतिज्ञा सा न सिध्यति प्राभासरूपा भवतीति तदर्थप्रतीतेस्तन्निराकरोति यत्त्वित्यादिना। (५) तत्र पदशब्द पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तुपर उत ऋणादानादिरूपव्यवहारविषयपर। तत्र न तावदाद्ये पक्षाभासत्वमित्याह तत्रेति।

(६) बहुप्रतिज्ञं बहुपूर्वपक्षम्।

(७) पुत्रपौत्रादीनां च। (८) अर्थिवादितामित्यर्थ।

(९) पाण्डुरिति खडीति म प्रासिद्ध। (१०) आवापेति न्यूनाधिक्यपरिहाराय प्रक्षेपनिष्कासन भ्यामित्यर्थ। (११) सहजोक्त न तु छलादिना।

'शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् । (१)अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्' ॥ इति । पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति ॥ ६ ॥

( वि० मि० ) तदेवं भाषास्वरूपे लिखिते च राज्ञा प्रतिपाद्युत्तररूपद्वितीयव्यवहारपादे राज्ञः कृत्यमाह—

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ॥

श्रुतो योग्यतयाऽवधारितोऽर्थो श्रुतार्थं भाषावाक्यं तत्सम्बन्धे उत्तरं प्रत्यर्थिकृत्यं पूर्वावेदकस्याऽर्थिनः सन्निधौ राज्ञा लेखनीयम् । श्रुतार्थस्येत्यभिधानाद्भाषाभासे मद्विभक्तोऽप्ययमर्जितं धनमर्जकत्वान्मह्यं ददात्वित्यादिरूपमुत्तरं विनैव जय इति द्रष्टव्यम् । एते भाषालिखनानन्तरं प्रतिवादी वादिसन्निधौ—

पत्रस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

इति नारदादिलक्षितमुत्तरं वदेत् । ततो राजोत्तरं लेखयेदिति सिद्धम् । भाषावदुत्तरस्यापि दोषाः स्मृत्यन्तरेऽनुसन्धेयाः । उत्तरादानार्थं च प्रतिवादिनोऽवधिर्देयः । तदाह कात्यायनः—

श्रुतालेखयतोऽप्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादं याचेत तस्य देयो न संशयः ॥
सद्यो वैकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।
लभेताऽसौ त्रिपक्षं वा सप्ताहं (२)वा ऋणादिषु ॥
सद्यःकृते सद्योवादसमानीते दिनं क्षिपेत् ।
षडाब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्द्धं वा लभेत सः ।
मासं त्रिंशत्समानीतं त्रिपक्षं परतो लभेत् ॥
कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

यद्वक्ष्यति च कालोद्धूनः स्मृतः ? इति ।

---

( १ ) उत्तरेणावष्टब्धस्य प्रतिबद्धस्य पूर्ववादस्य शोधनं भवेदित्यर्थः ।
( २ ) चा-इत्युभयत्र पाठः ।

व्यासः—

राजदैवं ततो दोषास्तस्मिन् काले यदा न चेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥
राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत् ।
भैष्येण वर्तमानस्तु दण्ड्यो दाप्यस्तु तद्धनम् ॥

वादी तु भाषाकरणाय कालं न लभते । तदाह कात्यायनः—

यस्मात्कार्यसमारम्भाश्चिरं तेन विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥

अस्यापवादमाह बृहस्पतिः—

अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदि ।
तदा कालः प्रदातव्यः कार्यशक्त्यनुरूपतः ॥

यदा तु प्रतिवादी शास्त्रानुमतोपाधिं विना उत्तरं न ददाति तदा भङ्गो भवति ।

अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥

इति वचनात् ।

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥

इति कथमाद्य । तच्चोत्तरं चतुर्विधम् । तदाह कात्यायनः—

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥

व्यासः—

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।
कारणं स्यादवस्कन्दो मिथ्या स्यात्साध्यनिह्नुतिः ॥

बृहस्पतिः—

आचारेणाऽवसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥

अत्राद्यं सम्प्रतिपत्तिरूपसिद्धसाधनापादकत्वेन सदुत्तरम् । न चैवं भाषितुर्निग्रहः, अस्मिन् तत्त्वनिर्णयार्थकविचारे तस्य निग्रहाप्रयोजकत्वात् । मिथ्योत्तरं तु चतुर्विधम् । तदाह व्यासः—

मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः ।
अजातश्चाऽस्मि तत्काले इति मिथ्या चतुर्विधम् ॥

अत्र निश्चैतदिति कण्ठतो न जानामीत्यादि त्रयं अर्थतोऽपन्हवः। 'न जानामी'ति योग्यास्मरणप्रतिपादनद्वाराऽभावप्रतिपादकं, वाराणस्यां त्वया ऋणं गृहीतमिति भाषायां वाराणस्यां नाऽऽसमिति, चत्वारिंशे वर्षे त्वया गृहीतमिति भाषायां न हि तदा जात इति चावापोद्वापप्रदर्शनेन भाववोधकं त्वत्पित्रा शतं सुवर्णानां गृहीतमिति भाषायां नाऽहं जानामीति तूत्तरप्रतिरूपकं न तु मिथ्योत्तरम्। न चैवमुत्तराभावाद्भापितुर्जय इति वाच्यं, धर्मव्यवहारेण छलस्यावश्यनिरस्यत्वेन तत्र स्थापकेन ग्रहणस्याऽवश्यप्रमापणीयत्वात्। अत एव प्रकाशकर्येनाप्येकेनादत्तत्वादिकमपि प्रमापणीयमिति वदन्ति। अत्र च हेत्वसिद्धिर्भापायां दोपः। कारणोत्तरं च त्रिविधं पूर्वाक्तहेत्वपेक्षयाऽधिकबलं समबलं दुर्बलं च। तत्राद्यं यथा मया त्वत्तः शतं गृहीतमिति सत्यं परं तु परिशोधितमिति। अत्र च हृदि स्थितस्याप्रदानत्वविशेपणस्याऽसिद्ध्या त्वसिद्धिर्भाषायां दोपः। एतदेव च प्रत्यवस्कन्दनमित्युच्यते।

> अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा।
> प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं हि तत्॥

इति बृहस्पतिवचनात्। द्वितीयं यथा मदीयेयं भूः क्रमागतत्वादिति भाषायामिदमेवोत्तरम्। इदं च सत्प्रतिपक्षपरम्। तृतीयं यथा मदीयेयं भूः तावत्समयमारभ्य स्वामिना ममाहितत्वादिति भाषायां पञ्चवर्षादारभ्य सा मदीया पञ्चमेऽब्दे तेन ममाहितत्वादित्युत्तरम्। इदमपि सत्प्रतिपक्षपरम्।

> आधौ प्रतिग्रहे क्रीते पूर्वैव बलवत्तरा।

इति वचनाद् दुर्बलम्। अत्रापि छलनिरासार्थे क्रियादिप्रवृत्तिः। प्राङ्न्यायोत्तरं तु अस्मिन्नर्थे मयाऽयं जित इत्येवं रूपमिति दिक्। अत्र कात्यायनः—

> पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्।
> मिथ्या चैवैकदेशे स्यात्सङ्करात्तदनुत्तरम्॥

तत्र केचित् शतग्रहणे भाषिते पञ्चाशतं धारयास्येव पञ्चविंशतिः परिशोधिता पञ्चविंशतिर्न गृहीता इत्यादिकं नोत्तरमिति वाक्यार्थः।

अत एव—

न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चाऽर्थसिद्धिरुभयोर्न चैकस्मिन् क्रियाद्वयम् ॥

इति वचनमपि सङ्गच्छते । यथोक्तसङ्कीर्णोत्तरस्य ग्राह्यत्वे नरसर्वं प्रसज्येतेति वदन्ति, तदयुक्तं न हीदृशो विषय एव न सम्भवति बहुशो दर्शनात् । नापीदृशमुत्तरमदेयं यथावस्थितोत्तरदानस्य निषेद्धुमशक्यत्वात् । न चैतद्दोषोत्तरे पराजय एवेति । वादे सत्यङ्करणं मिथ्या च यदुत्तरं भवति तत्सङ्करादाभासरूपमिति वाक्यार्थः । शेषमेकदेशपदद्वयं चाऽनुवादः । नन्वेवं न चैतस्मिन्विवादे इत्याद्युदाहृतवचनस्य का गतिः । उच्यते एकस्मिन्विवादे एकावच्छेदेन न द्वयोः क्रियेत्यादिस्तदर्थः । यद्वा युगपत् क्रियाद्वयनिषेधपरं तद्वचनमिति संक्षेपः ॥

( मिता० ) एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमित्यत आह—

श्रुतेति । श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ श्रुतार्थः तस्योत्तरं पूर्वपक्षाद्(१)धस्तत् भवतीत्युत्तरं लेख्यं लेखनीयम् । पूर्वावेदकस्यार्थिनः सन्निधौ समीपे उत्तरं च यत्पूर्वोक्तस्य निराकरणं तदुच्यते । यथाह—'पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः' ॥ इति । पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असन्दिग्धं सन्देहरहितम् । अनाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यं अप्रसिद्धपदप्रयोगेण दु(२)श्लिष्टविभक्तिसमाससाध्या(३)हाराभिधानेन वा (४)अन्यदेशभाषाभिधानेन वा यत् व्याख्येयार्थं न भवति तत्सदुत्तरम् ॥ तच्च चतुर्विधम्—संप्रतिपत्तिर्मिथ्या प्र(५)त्यवस्कन्दनं पूर्वन्यायश्चेति । यथाह कात्यायनः—'सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा । पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम्' ॥ इति । तत्र सत्योत्तरं यथा रूपकशतं मह्यं धारयतीत्युक्ते सत्यं धारयामीति । यथाह—'साध्यस्य सत्यवचनं प्रतिपत्ति(६)रुदाहृता' इति । मिथ्योत्तरं तु नाहं धारयामीति । तथा च कात्यायनः—'अभियुक्तोऽभियो(७)गस्य यदि कुर्या-

(१) उत्तरत्र अधो । (२) दुःश्लिष्टमसंबद्धम् । व्यास्त्यामिति पाठः । (३) अध्याहारेण सहितं साध्याहारम् । (४) अदेशभाषेति पाठः । (५) प्रत्यवस्कन्दनं कारणोत्तरम् । (६) प्रतिपत्तिः संप्रतिपत्तिः सत्योत्तरमित्यनर्थान्तरम् । (७) अभियुक्तस्य ग ।

दपह्नवम्। मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः' ॥ इति ॥ तच्च मिथ्योत्तरं चतुर्विधम्–'मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः। अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम्' ॥ इति। प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा। यथाह नारदः–'अर्थिना (१)लेखितो योऽर्थः प्रत्यर्थी यदि तं त(२)था। प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम्' ॥ इति। प्राङ्न्यायोत्तरं तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण पराजित इति। उक्तं च कात्यायनेन–(३)'आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते' इति। एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धम्। स्पष्टीकृतं च स्मृत्यन्तरे–'सन्दिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥ यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम्। व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये' इति। तत्र सन्दिग्धं–सुवर्णशतमनेन गृहीतमित्युक्ते सत्यं गृहीतं सुवर्णशतं वेति। प्रकृतादन्यत् यथा–सुवर्णशताभियोगे पणशतं धारयामीति। अत्यल्पं–सुवर्णशताभियोगे (४)पञ्चशतं धारयामीति। अतिभूरि–सुवर्णशताभियोगे द्विशतं धारयामीति। पक्षैकदेशव्यापि–हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं (५)नान्यादिति। (६)व्यस्तपदं–ऋणादानाभियोगे पदान्तरेणोत्तरम्, यथा सुवर्णशताभियोगे अनेनाहं ताडित इति। अव्यापि–देशस्थानादिविशेषणाव्यापि, यथा म(७)ध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखि(८)ते, क्षेत्रमपहृतमिति। निगूढार्थं यथा–सुवर्णशताभियोगे किमहमेवास्मै धारयामीत्यत्र ध्व(९)निना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढार्थम्। आकुलं पूर्वापरविरुद्धम्, यथा–सुवर्णशताभियोगे कृते सत्यं गृहीतं न धारयामीति।

---

(१) ण्यन्तस्येदं रूपम्। (२) तथा प्रपद्य तथैवाङ्गीकृत्येत्यर्थः।
(३) व्यवहारेण पराजितोऽपि। (४) अर्धन्यूनतयात्यल्पत्वमस्य।
(५) अन्यत् पक्षैकदेशव्यापि चेत्यर्थः। (६) न्यस्तपदं असंबद्धपदकम्।
(७) विन्ध्यहिमाचलयोर्मध्यं मध्यदेशः। (८) अन्तर्भावितण्यर्थमिदम्।
(९) ध्वनिना किमादिबोध्येन।

व्याख्यागम्यं—दुःश्लिष्टविभक्तिसमाससाध्याहाराभिधानेन व्याख्यागम्यम्, अन्यदेशभाषाभिधानेन वा। यथा सुवर्णशतविषये पितृकृणाभियोगे गृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति। अत्र गृहीतशतस्य पितुर्वचनात्सुवर्णानां शतं गृहीतमिति न जानामीति। असार—न्यायविरुद्धम्, यथा-सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति। उत्तरमित्येकवचननिर्देशादुत्तराणां सङ्करो निरस्तः। यथाह कात्यायनः—'पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्। मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरम्' ॥ इति। अनुत्तरत्वे च कारणं तेनैवोक्तम्—'न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्' ॥ इति। मिथ्याकारणोत्तरयोः सङ्करे अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति, 'मिथ्या (१)क्रिया पूर्ववादे (२)कारणे प्रतिवादिनि' इति स्मरणात्। तदुभयमेकस्मिन्व्यवहारे विरुद्धम्। सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं चेति। (३)कारणप्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयम्—(४)'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति। यथा-सुवर्णं गृहीतं प्रतिदत्तं (५)रूपके व्यवहारमार्गेण पराजित इति। (६)अत्र च प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा (७)भावयितव्यम्। (८)कारणोक्तौ तु साक्षिलेख्या(९)दिभिर्भावयितव्यमिति विशेषः। एवमुत्तरत्र(१०)यसङ्करेऽपि द्रष्टव्यम्। यथाऽनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रति(११)दत्तं रूपकशतं न गृहीतं वस्त्रविषये तु पूर्व-

---

(१) न वादिद्वयस्वामीति सुवर्णेतु मिथ्येति। मिथ्योत्तरे इत्यर्थः। पूर्ववादे कर्मपत्र पूर्ववादिनीत्यर्थः।

(२) कारणे कारणोत्तरे। (३) तयोर्मिथ सङ्करे त्वित्यर्थः।

(४) तयोरुक्तावित्यर्थः। नेद मन्येकरत्नम्। करणांश 'कारणे प्रतिवादिनि' इत्यनेन सिद्धत्वात्। तस्मात्साकर्यपरमेवेदम्। अत एव समासनिर्देशसङ्गतिरपि।

(५) रूपकशते न। (६) द्वितीयसङ्करे त्वित्यर्थः।

(७) साधयितव्यमिति कृत्वा। (८) कारणोत्तरे तु न।

(९) आदिना दिव्यपरिग्रहः। (१०) उत्तरत्रयेति मिथ्या-कारण-प्राङ्न्यायरूपे।

(११) प्रतिदास्यामि न।

न्यायेन पराजित इति । एवं (१)चतुःसङ्करेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन तस्यांशस्य तेन तेन विनाऽसिद्धेः । (२)क्रमणोत्तरत्वमेव । (३) क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । (४)यत्र पुनरुभ(५)योः सङ्करस्तत्र यस्य प्रभूतार्थविषयत्वं (६)तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तयितव्यः पश्चादल्पविषयोत्तरापादानेन च व्यवहारो द्रष्टव्यः । (७)यत्र च संप्रतिपत्तेरुत्तरान्तरस्य च सङ्करस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाभावात् । यथा हारीतेन–'मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे । सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम्'॥ इत्युक्त्वोक्तम्–(८)'यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा' ॥ संकीर्णं भवतीति शेषः। (९)शेषापेक्षया ऐच्छि(१०)ककमं भवतीत्यर्थः । तत्र प्रभूतार्थे यथा-अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सुवर्णं रूपकशतं च न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति । अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः पश्चाद्वस्त्रविषयो व्यवहारः । एवं मिथ्याप्राङ्न्यायसङ्करे कारणप्राङ्न्यायसङ्करे च योजनीयम् । तथा तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतं च गृहीतं प्रति दास्यामि वस्त्राणि तु न गृहीतानि गृहीतानि प्रतिदत्तानीति वा वस्त्रविषये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः । (११)यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वम्। यथा–(१२)शृङ्गग्राहिकया कश्चि(१३)द्वदति

---

(१) चतुःसंकरेति । यथा अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे सुवर्णं धारयामि रूपकशतं न गृहीतं वस्त्राणि प्रतिग्रहेण लब्धानि धान्यविषये पूर्वन्यायेन पराजित इति । एवं मिथ्याप्राङ्न्यायसंकरेऽपि द्रष्टव्यम् ।

(२) क्रमेण त्वित्यर्थः । (३) चेन प्राड्विवाकादेः समुच्चयः ।

(४) यत्र त्वित्यर्थः । (५) मिथ्याकारणोत्तरयोः ।

(६) तत्साधकक्रियाग्रहणेन । (७) सत्योत्तरसंकरस्य पूर्वमनुपन्यासे बीजं ध्वनयन् तत्र नियामकान्तरमाह यत्र चेति ।

(८) यत् उत्तरम् । (९) अपेक्षाक्रमं भवतीत्यर्थः ग ।

(१०) ऐच्छिकः क्रमो भवतीत्यर्थः ख ।

(११) संकीर्णोत्तरस्य यौगपद्येन सर्वथाऽनुत्तरत्वे प्राप्ते क्वचित्प्रतिप्रसवमाह यत्र त्विति ।

(१२) तन्न्यायेनेत्यर्थः । (१३) कश्चित् वादी ।

इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति । (१)अन्यस्तु मिथ्यैतत्,(२)प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता चेति वदति । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरम् । नापि मिथ्यैव कारणोपन्यासात् । नापि कारणम्, एकदेशस्याप्यभ्युपगमाभावात् । तस्मात्स(३)कारणं मिथ्योत्तरमिदम् । अत्र च प्रतिवादिनः क्रिया, 'कारणे प्रतिवादिनि' इति वचनात् । (४)ननु 'मिथ्या क्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात्क्रिया न भवति । तस्य शुद्धमिथ्याविषयत्वात् । कारणे प्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषयं न भवति । नैतत् । सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वाच्छुद्धकारणोत्तरस्याभावात् । प्रसिद्ध(५)कारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमे नैकदेशस्य मिथ्यात्वम्, यथा—सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्तत्वादिति । प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याप्यभ्युपगमो नास्तीति विशेषः । एतच्च हारीतेन स्पष्टमुक्तम्—'मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्.' इति । यत्र मिथ्याप्राङ्न्याययोः पक्षस्यापि इयम्, यथा—रूपकशतं धारयतीत्यभियोगे मिथ्यैतदस्मिन्नर्थे पूर्वमयं पराजित इति । अत्रापि प्रतिवादिन एव क्रिया—'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति वचनात्, शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात्, सं(६)प्रतिपत्तेरपि साध्यस्यैनोपादिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणादेवोत्तरत्वम् । यदा तु कारणप्राङ्न्यायसङ्करः, यथा—शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनाय पराजित इति प्रतिवादिनो यथारुचीति न क्वचिद्वादिप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः ॥

---

(१) अन्य प्रतिवादी । (२) एतत्प्रदर्शित ख० ।

(३) अत्र कारणस्याप्राधान्य मिथ्योत्तरस्य प्राधान्य तस्य तदुपपादकस्यापि सम्भवात् । अत एव तत्र सहयोगे तृतीया कृता ।

(४) प्रतिवादिना तस्यैवोक्तत्वमभिप्रेत्य प्राधान्यादरेण शङ्कते नन्विति ।

(५) सत्य गृहीत प्रतिदत्त चेत्येवरूपे प्रागुक्ते । (६) सत्यस्यापि ।

( वी० मि० ) राजकृतस्य निर्णयस्य क्रियामूलकत्वात्तन्निर्देशस्य च वादिकृत्यत्वात्तमधिकृत्य तृतीयं क्रियापादमाह—

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाध(१)कम् ॥ ७ ॥

ततः सदुत्तरे प्रतिवादिकृते लेखिते च राज्ञाऽर्थी चाऽभिहितार्थप्रमापणार्थी यथायथं वादी प्रतिवादी वा प्रतिज्ञातस्य स्वयं समभिहितस्याऽर्थस्य साधकं साक्षिलिखितादिकं स्वयमुपन्यस्य राजनियुक्तद्वारा लेखयेत्। सद्य इत्यनेन प्रमाणोपन्यासे न विलम्बः कार्य इत्युक्तम्। तदाह कात्यायनः—

न कालहरणं कार्यं राज्ञा साक्षिप्रभापणे।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः॥

तच्च साधकं द्विविधं मानुषं दैवं च। यदाह बृहस्पतिः—

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा।
एकैकाऽनेकधा भिन्ना ऋषिभिस्तत्त्ववादिभिः॥
साक्षिलेखानुमानं च मानुषी त्रिविधा स्मृता।
घटाद्या धर्म(२)जाता च दैविकी नवधा स्मृता॥

क्रिया प्रमाणं, एतत्प्रपञ्च उपरिष्टात्। सा च क्रिया सम्प्रतिपत्युत्तरे नास्त्येव, उत्तरान्तरे तु व्यवस्थामाह व्यासः—

प्राङ्न्याये कारणोक्तौ तु प्रत्यर्थी साधयेत्क्रियाम्।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न भावयेत्॥

अत्र कारणोक्तिशब्देन बलवत्कारणोत्तरमभिहितम्। यद्वक्ष्यति—

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः।

इति। कात्यायनश्च—

प्रपद्य कारणं पूर्वमन्यद्गुरुतरं यदि।
प्रतिवाद्यगतं ब्रूयात्साध्यते तद्विनेतरत्॥

धार्यमाणत्वस्य कारणमृणग्रहणं पूर्वं भाषितं प्रतिपद्य स्वीकृत्य गुरुतरमन्यत्परिशोधनादिकं प्रतिवाक्यगतं यदि ब्रूयात्तदा तत्साधकबले न त्वितरत् समबलमल्पबलं चेत्यर्थः। मिथ्योत्तरे तु लौकिकी क्रिया पूर्ववादिनः। दैविकीति दिव्यशपथोभयरूपा प्रतिवादिन एव।

न कश्चिदभियोक्तारं पुनर्दिव्ये नियोजयेत्।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः॥

---

( १ ) साधनमिति मुद्रितपुस्तके पाठः। ( २ ) दाता—इति ख० पु० पा०।

इति वाक्ये पूर्वार्द्धेनाऽभियोक्तुस्तन्निषेधेऽर्थतो नियोज्यस्य तद्विधाप्युत्तरार्द्धेन तन्नियमनात् । सिद्धे सत्यारम्भस्य नियमार्थत्वादिति मिश्राः । साम्प्रदायिकास्तु अभियोगपदेनाऽत्र चौर्यमारणाद्यभिशापाभियोगो विवक्षित इति । ऋणादौ मिथ्योत्तरे दैविक्यपि क्रिया पूर्ववादिन एवेति वदन्ति ॥ ७ ॥

( मिता० ) एवमुत्तरे पत्रे नि(१)वेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षित आह—

तत इति । उत्तरानन्तर(२)मर्थी साध्यवान् सद्य एवानन्तरमेव लेखयेत् । प्रतिज्ञातः साध्यः स चासावर्थश्चेति प्रतिज्ञातार्थः तस्य साधनं साध्यतेऽनेनेति साधनं प्र(३)माणम् । अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमभ्यनुज्ञातमिति गम्यते । तच्चोत्तरत्र विवेचयिष्यते । अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तम्, अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेत् । कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति स एव लेखयेत् । मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव निर्दिशेत्(४) । ततोऽर्थी लेखयेदिति वदता (५)अर्थ्येव लेखयेन्नान्य इत्युक्तम् । अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति ता(६)वतैव व्यवहारः परिसमाप्यत इति गम्यते । एतदेव हारीतेन स्पष्टमुक्तम्—'प्राङ्न्यायकारणोक्तौ [illegible] प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्' ॥ इति ॥ ७ ॥

( वी० मि० ) अर्थनिर्णयार्थं चतुर्थपादमाह—

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥

तस्य उपन्यस्तस्य साक्ष्यादिप्रमाणस्य सिद्धौ निर्वाहणे सिद्धिं विजयमन्यथाऽनिर्वाहणे विपरीतमविजयमाप्नोतीत्यर्थः । विपरीतं तु भङ्गमिति मिताक्षरा, तच्चिन्त्यम् ॥

---

(१) निवेशिते लिखिते । (२) अर्थित इत्यर्थः साध्य स यस्यास्तीत्यर्थी ।
(३) प्रमाणं लिखितादि वक्ष्यमाणम् । (४) निर्दिशेल्लेखयेत् ।
(५) अर्थ्येवेति आक्षेपादेव कर्तृलाभे तदुक्तिर्नियमार्थेति भावः । (६) तावदंशोत्तरदानेनैव ।

( मिता० ) त(१)तः किमित्यत आह—

तद्दिति। तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं साध्यस्य जयलक्षणां प्राप्नोति। अतोऽस्मात्प्रकारादन्यथा प्रकारान्तरेण साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणामाप्नोतीति सम्बन्धः॥

( वी० मि० ) उक्तं व्यवहारशरीरमुपसंहरति—

चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः॥ ८॥

विवादेषु ऋणादानादिषु विचारविषयेषु अयमेवंविधो भाषादिसम्पन्नः, अत एव चतुष्पात्तु भागचतुष्टयवान् व्यवहारपदार्थ उपदर्शित उदाहृतः। उदाहरणं च कस्यचिदेव व्यवहारस्य। तेन—

मिथ्योक्तौ स चतुष्पादः प्रत्यवस्कन्दने तथा।
प्राङ्न्यायेन स विज्ञेयो द्विपात्संप्रतिपत्तिषु॥

इति बृहस्पत्युक्तद्विपाद्व्यवहारानभिधानेऽपि न क्षतिः। सम्प्रतिपत्तिष्विति उत्तरानर्हभाषायामित्यपि द्रष्टव्यम्। यद्यपि संप्रतिपत्तावपि निर्णयमादाय पादत्रयं तथापि तत्र निर्णयकरणाय पृथक्प्रवृत्त्यभावा द्विपादिति युक्तमुक्तम्। उत्तरप्रतिरूपकाज्ञानाद्यभिधाने तु तस्योत्तरप्रतिनिवृत्तत्वात्तमादायैव चतुष्पादत्वमिति मन्तव्यम्॥ ८॥

( मिता० ) एवं व्यवहाररूपमभिधायोपसंहरति—

चतुष्पादिति। व्यवहारान्नृपः पश्येदित्युक्तो व्यवहारः सोऽयमित्थं चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिषूपदर्शितो वर्णितः। तत्र प्रत्यर्थिनोऽग्रतो लेख्यमिति भाषापादः प्रथमः। श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादो द्वितीयः। ततोऽर्थी लेखयेत्सद्य इति क्रियापादस्तृतीयः। तत्सिद्धौ सिद्धिमाप्नोतीति साध्यसिद्धिपादश्चतुर्थः। यथोक्तम्—'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु। वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः॥ भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः। आक्षि(२)प्तचतुरंशस्तु चतुष्पादभि(३)धीयते'। इति। संप्रतिपत्त्युत्तरे तु साधनानिर्देशाद्भाषार्थस्यासाध्यत्वाच्च न साध्यसिद्धिल(४)क्षणः पादोऽस्तीति द्विपात्त्वमेव। उत्तराभिधानानन्तरं

(१) ततः साधननिर्वर्त्तनोत्तरम्। (२) मुख्यपादन्यासम्भवादाह चतुरंशेति।
(३) अभिधीयते ऋणादानादिषु वक्ष्यमाणेषु। (४) लक्षणोपि इति पाठः।

सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्या(१)कलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानात् व्यवहर्तुं सम्बन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम् ॥ ८ ॥

इति साधारणव्यवहारमातृकाप्रकरणम् ।

---

( वी० मि० ) वादिनोऽधिकृत्याह—

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ॥
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ॥

अभियोगमर्थिकृतमाक्षेपमनिस्तीर्य जयपराजयान्यतरावधारणेऽनपाकृत्यैनमर्थिनं प्रतिवादी न प्रत्यभियोजयेत् न स्वकृतेनाऽभियोगान्तरेण योजयेत् । अन्येनाऽऽदौ कृताक्षेपं तदपाकरणपर्यन्तं प्रतिवादिनमर्थी नाऽभियोजयेत् । आवेदितमर्थं विप्रकृतिं वैपरीत्यं न नयेदन्यथा न लेखयेदर्थी प्रत्यर्थी च । नैनं प्रत्यभियोजयेदित्यत्र प्रतिप्रसवः कलहे वाक्पारुष्ये साहसेषु स्त्रीसङ्ग्रहणमनुष्यमारणादिषु चकारात् स्तेये दण्डपारुष्ये च प्रत्यभियोगं कुर्यात् । अनेनाहं दासोऽनेनाहं ताडित इत्यभियोगस्योत्तरमहमप्यनेन दासोऽहमप्यनेन ताडित इति ब्रूयादित्यर्थः । प्रथमचकारेण प्रगल्भादिसमुच्चयः ॥

( वी० मि० ) अर्थिप्रत्यर्थिनोः कृत्यमुक्त्वा ससभ्यस्य सभापतेः कृत्यमाह—

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥

न्यायार्थमुपस्थितयोरर्थिप्रत्यर्थिनोः कारणप्रवेशे प्रतिभूर्ग्राह्यः । अर्थिनोऽपि दण्डभयात्पलायनसम्भवात् । कीदृशः । निर्णयस्य कार्ये साधितधनस्य दण्डस्य च दाने समर्थः । आहिताग्न्यादित्वात्कार्यशब्दस्य पूर्वनिपातः । यद्वा कार्ये कर्तव्ये निर्णये प्रतिभूर्ग्राह्यः । पाठिकक्रमेण प्रकृतनिर्णयानन्तरं प्रतिभूग्रहणं मा प्रसांक्षीदिति कार्यनिर्णय इत्युक्तमिति । अथवा कार्य्यस्य विवादास्पदीभूतस्य ऋणादानादेर्निर्णयार्थं प्रतिभूर्ग्राह्यः । वादिपलायने निर्णयासम्भवादित्यर्थः । प्रतिभुवस्त्वभावे कात्यायनः —

---

( १ ) प्रत्याकलितस्य पीनःपुन्येन विचारणस्येत्यर्थः ।

अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः।
स रक्षितो दिनस्यान्ते दद्यात् दूताय वेतनम्॥

दूतो राजप्रैष्यः तद्भर्त्ता॥ ९-१०॥

(मिता०) एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाऽधुना क्वचिद्व्यवहारविशेषे कञ्चिद्विशेषं दर्शयितुमाह--

अभियोगमिति। (१)अभियुज्यत इति अभियोगोऽपराधः तमभियोगमनिस्तीर्याऽपरिहृत्य, एवमभियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत्। यद्यपि (२)प्रत्यवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वान्नास्य प्रतिषेधविषयत्वम्। अतः स्वाभियोगानुपमर्दनरूपमस्य प्रत्यभियोगस्यायं निषेधः। इदं प्रत्यर्थिनमधिकृत्योक्तम्॥

( मिता० ) अथ अर्थिनं प्रत्याह--

अभियुक्तमिति। अभियुक्तं च नान्येनेति। अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योऽर्थी नाभियोजयेत्। किं च-उक्तमावेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धभावं न नयेन्न प्रापयेत्। एतदुक्तं भवति-यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु (३)तथैव भाषाकालेऽपि लेखनीयं नान्यथेति॥ ननु—'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' इत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते नोक्तं विप्रकृतिं नयेदिति। उच्यते—'यथाऽऽवेदितमर्थिना' इत्यनेनाऽऽवेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयम्।(४)एकस्मिन्नपि(५)पदे न वस्त्वन्तरमित्युक्तम्। यथाऽनेन रूपकशतं वृद्ध्या गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसंनिधौ भाषासमये वस्त्रशतं वृद्ध्या गृहीतमिति न वक्तव्यम्। तथा सति (६)पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति। नोक्तं विप्रकृतिं नयेदित्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिध्यते। यथा रूपकशतं वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यावेदनकालेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति व-

(१) अभियुज्यते दोषाविषयीक्रियतेऽनेनेति दोषः।

(२) मत्यं गृहीतं प्रतिदत्तं चेति कारणोत्तरस्य अनेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वामित्यर्थः। (३) तथैवेति। अन्यथाऽन्यथावादित्वेन भङ्गप्रसङ्गात्।

(४) ऋणादानादिव्यवहारविषये। (५) अत्र प्रकरणे पदशब्दो विषयवाची।

(६) विषयान्तरं प्रत्यगमनेऽपीत्यर्थः।

दतीति। तत्र वस्त्वन्तरगमनं निषिद्धमिह तु पदान्तरगमनं निषिध्यत इति न पौनरुक्त्यम्। एतदेव स्पष्टीकृतं नारदेन—'पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः। (१)पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः' ॥ इति। हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयते। अतः प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायमभियोगमनिस्तीर्येत्याद्युपदेशो न प्रकृतार्थासि(२)द्धयसिद्धिविषयः। अत एव वक्ष्यति—'छलं निरस्य (३)भूतेन व्यवहारान्नयेन्नृप.' इति। (४)एतच्चार्थव्यवहारे द्रष्टव्यम्। (५)मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव। यथाह नारदः—'सर्वेष्वर्थविवादेषु वाक्छले नावसीदति। परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते' ॥ इति। अस्यार्थः—सर्वेष्वर्थविवादेषु न मन्युकृतेषु वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते न प्रकृतादर्थाद्धीयत इत्यर्थः। अत्रोदाहरणं,परस्त्रीत्यादि। परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति। (६)अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति गम्यते। यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमयेऽभिधाय भाषाकाले हस्तेन वा ताडित इति वदन्(७) केवलं दण्ड्यः। पराजीयते च ॥ ९ ॥

(मिता०) अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेदित्यस्यापवादमाह—

कुर्यादिति। कलहे वाग्दण्डपारुष्यात्मके साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु प्रत्यभियोगसम्भवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत्। नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासम्भवः समानः। सत्यम्। नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेश', अपि तु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा। तथा हि–अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे द-

(१) पदान्तरं प्रति गमनाद्वस्त्वन्तरगमनाच्चेत्यर्थः। (२) सिद्ध्यसिद्धीति। हीनवादित्वे प्रकृतार्थासिद्धिरतथात्वे तत्सिद्धिरित्यर्थः। (३) पूर्वभूतेन सत्येन व्यवहारेण। (४) हीनवादी दण्ड्य एव, न प्रकृतार्थाद्धीयत इत्येतत्। (५) मन्युकृतेवाक्पारुष्यदण्डपारुष्यादिव्यवहारे। (६) एवं प्राग्दम्यार्थमुक्त्वा द्वितीयमसंरब्धमानितमाह अर्थेति। (७) वदन्केवल म।

(१)ण्डालपत्वम् । यथाह नारदः–'पूर्वमाक्षा(२)रयद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु वि(३)नयो गुरुः' ॥ इति । यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः– 'पा(४)रुष्ये साहसे वापि युगपत्संप्रवृत्तयोः । विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः' ॥ इति । (५)एवं युगपद्व्यवहारप्रवृत्त्यसम्भवेऽपि कलहादौ प्रत्यभियोगोऽर्थवानृणादानादिषु तु निरर्थक एव ॥

( मिता० ) अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह—

उभयोरिति । उभयोरर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु निर्णयस्य कार्यं कार्यनिर्णयः। आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः। निर्णय(६)स्य कार्यं च साधितधनदानं दण्डदानं च तस्मिन्समर्थः प्रति(७)भूः प्रतिभवति तत्कार्यं तद्वद्भवतीति प्रतिभूर्ग्राह्यः ससभ्येन सभापतिना । त(८)स्यासम्भवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः । तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम् । तथाह कात्यायनः– 'अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वा(९)दिनः । स रक्षितो दिनस्यान्ते दद्याद् भृत्याय वेतनम्' इति ॥ १० ॥

( वी० मि० ) पराजितस्य प्रार्थिनोऽर्थिनश्च कृत्यमाह—

निन्हवे भावितो दद्याद्धनं राज्ञे च तत्समम् ॥
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ ११ ॥

निन्हवे साधूक्तार्थापलापभाविते साक्ष्यादिभिरपि योगमङ्गीकारितः प्रतिवादी अर्थिने विवादाविपर्याभूतं धनं दद्यात् । राज्ञे च तत्समं धनं दण्डरूपं दद्यात् । मिथ्याभियोगकारी तु वादी अभियोगाद्विवादधनाद्द्विगुणं धनं राज्ञे वहेत् । चकारेण वाक्पारुष्यादौ दण्डान्तरं समुच्चिनोति । अत्र मनुः—

अर्थेऽपव्ययमानं तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

(१) दण्डेति प्रत्यभियोक्तुरिति भावः । (२) आक्षारयेत् कायेन वाचा वा क्षीणं कुर्यात् । (३) विनयो दण्डः । (४) पारुष्यं वाग्दण्डादिः । (५) एवं उक्तप्रकारद्वयेन, एवं सतीति पाठः । (६) निर्णयस्य यत्कार्यं च । (७) प्रतिभूः 'जामिन' इति भाषाप्रसिद्धोऽयम् । (८) तस्य प्रतिभुवः । (९) वादिन इति द्वयोरेकशेषः, जातावपि वा एकवचनम्, तेनार्थिप्रत्यर्थिनोः समासेन ग्रहणम् ।

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेणाऽप्यधर्मज्ञौ दण्ड्यो तद्विगुण दमम् ॥

अत्र च समद्विगुणदण्डलेशानामपन्होतुर्जातिवयोवित्तसमाचारादिना व्यवस्था कार्या । यद्वक्ष्यति 'ज्ञात्वाऽपराधं देशं चे'त्यादि ॥११॥

( मिता० ) अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन समापतिना प्रतिभूर्ग्राह्य इत्युक्तम्, किं तन्निर्णयकार्यं यस्मिन्प्रतिभू(१)र्गृह्यत इत्यपेक्षित आह--

निन्हव इति । अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनाऽपन्हवे कृते यदाऽर्थिना साक्ष्यादिभिर्भावितोऽङ्गीकारितः प्रत्यर्थी तदा दद्याद्धन प्रकृतमर्थिने राज्ञे च त(२)त्सममपलापदण्डम् । अथार्थी भा(३)वयितुं न शक्नोति तदा स एव मिथ्याभियोगी जात इत्यभियोगाद्भियुक्तधनाद्द्विगुण ध(४)नं राज्ञे दद्यात् । प्राङ्न्याये प्रत्यवस्कन्दने चैवमेव योजनीयम् । त(५)त्राप्यर्थोऽप(६)ह्नववादीति प्रत्यर्थिना (७) भावितो राज्ञे प्रकृतधनसमं दण्ड दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्या(८)भियोगीति राज्ञे द्विगुणं धनं दद्यात् । अर्थिने च प्रकृतं धनम् । संप्रतिपत्त्युत्तरे तु दण्डाभाव एव । य(९)तश्च ऋणादानविषयमेव । प(१०)दान्तरेषु तत्र तत्र दण्डाभिधानादधन(११)व्यवहारेष्वस्यासम्भवाच्च न सर्वविषयत्वम् । 'राज्ञाधमर्णिको दाप्यः' इत्यस्य ऋणादानविषयत्वेऽपि तत्रैव विशेषं वक्ष्यामः । यद्वैतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम् । कथम् । अभियोगस्य निन्हवेऽभियुक्तेन कृते यद्यभियोक्त्रा साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा त(१२)त्समं तत्र तत्र प्रतिपदोक्तमेव । चशब्दोऽवधारणे । धन दण्डं दद्याद्राज्ञ इत्य(१३)नुवादः ।

---

(१) प्रतिभूर्ग्राह्य इत्यत आह ग । (२) प्रकृतधनसममपलापनिमित्तकदण्डम् । (३) भावयितुं समर्थयितुम् । (४) धनं दद्याद् ज्ञे ख । (५) तत्राप्यर्थेऽपह्नववादी प्रत्य० ख । (६) आदेयमर्थेऽर्थं पूर्वं पराजित इति प्राङ्न्यायोत्तरे गृहीत प्रतिदत्तमिति कारणोत्तरे च दत्ते पूर्वन्याय प्रतिदानं च प्रतिज्ञातार्थापह्नतीति स एवापलापवादीत्यर्थ । (७) भावित जयपराजयरूपप्राङ्न्यायस्य प्रतिदानस्य च साधनादङ्गीकारितो वादी । (८) मिथ्यावादी । (९) निह्नवे भावितो दद्यादित्येतत् । (१०) पदान्तराणि द्विविधानि सधनानि अधनानि च । तत्र सधनेष्वाह पदान्तरेष्विति । (११) अधनेति । वाग्दण्डपारुष्यादिव्यवहारेषु प्रकृतधनसमदण्डदानस्य तद्द्विगुणदानस्य चासम्भवाच्चेत्यर्थ । (१२) तत्समं व्यवहारतुल्यम् । (१३) अनुवाद इति । तत्तद्व्यवहारे दण्डस्य विशिष्य विहितत्वेन प्राप्तत्वादिह्यसम्भवन पृथग्विधेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थ ।

अथाभियोक्ता अभियोगं वक्तुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते। अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥

( वी० मि० ) श्रुतार्थस्योत्तरं लेख्यमित्युक्ते तत्र विषयभेदेन कालस्याप्रतीक्षणं प्रतीक्षणं चाह—

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ॥
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥

साहसादिषु सद्य एव प्रतिवादिनं विवादयेत् उत्तरदानादिनिर्णयोपयोगि सर्वं कारयेत्। अन्यत्र ऋणादानादौ इच्छया तत्त्वबुभुत्सयाऽवधिः कालः स्मृतः। तथा च कात्यायनः—

व्यपैति गौरवं यत्र विनाशस्त्याग एव वा।
कालं तत्र न कुर्यात्तु कार्यमात्ययिकं हि तत् ॥

नारदश्च—

ऋणादिषु हरेत्कालं कामं तत्र बुभुत्सया।

सहसा बलेन जनसमक्षं यत्परहिंसादि क्रियते तत्साहसं, स्तेयं चौर्यं, पारुष्यं वाक्पारुष्यं दण्डपारुष्यं च, गौर्दोग्ध्री, अभिशापः पातकाभियोगः, अत्यये वादिप्रतिवादिनोरन्यतरस्य मरणे सम्भाव्यमाने। सति सप्तमी चेयम्। अन्यत्र च विषयतायामेव। स्त्रियां कुलस्त्रीचारित्र्ये ॥ १२ ॥

( मिता० ) ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति वदतोत्तरपादलेखने कालप्रतीक्षणं दर्शितं तत्रापवादमाह—

साहसेत्यादि। साहसं विषशस्त्रादिनिमित्तं प्राणव्यापादनादि। स्तेयं चौर्यम्। पौरुष्यं वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम्। गौर्दोग्ध्री। अभिशापः पातकाभियोगः। अत्ययः प्रा(१)णधनातिपातस्तस्मिन्। द्वन्द्वैकवद्भावादेकवचनम्। स्त्रियां कुलस्त्रियां दास्यां च। कुलस्त्रियां चारित्रविवादे, दास्यां स्वत्वविवादे। विवादयेदुत्तरं दापयेत्। सद्य एव न कालप्रतीक्षणं कुर्यात्। अन्यत्र विवादान्तरेषु कालः उत्तरदानकालः इच्छयार्थिप्रत्यर्थिसभ्यसभापतीनां स्मृत उक्तः ॥१२॥

---

(१) आगुन्तुनिमित्तान्यनिमित्तकोऽत्र प्राणनाशो ग्राह्यः।

(वी० मि०) वादिलेखनीयं प्रमाणं प्रागभिहितमिदानीं तदलेखनीयं प्राड्विवाकसभ्याद्यवधारणीयं प्रत्याकलितापरनामकमनुमानाख्यं प्रमाणं दर्शयति—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ॥
ललाटं स्विद्यते चाऽस्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ॥
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४ ॥
स्वभावाद्विकृतिं गच्छेत् मनोवाक्कायकर्मभिः ॥
अभियोगे च साक्ष्ये च स दुष्टः परिकीर्तितः ॥ १५ ॥

मनोवाक्कायकर्मभिर्यः स्वभावान्नत्रादिसम्भावनातिरिक्तनिमित्तमन्तरेण विकृतिं विकारं याति प्राप्नोति स अभियोगे वादे साक्ष्ये साक्षिकृत्ये दुष्टः परिकीर्तितः । शास्त्रे तेन तत्कृतोऽभियोगः साक्ष्यं च न सिध्यतीति तात्पर्यम् । विकृतीरेवाह—देशात्स्वोपवेशनस्थलाद्देशान्तरं याति अवस्थितौ न स्थैर्यं क्वापि भजत इति यावत्। सृक्किणी ओष्ठप्रान्तौ परितो भावेन पुनःपुनरिति यावत्, जिह्वाग्रेण लेढि घट्टयति। अस्य दुष्टस्य ललाटं स्विद्यते स्वेदयद्भवति । मुखं [redacted] वैवर्ण्यं पाण्डुत्वं वा एति प्राप्नोति । परिशुष्यन् मुखशोषवान् स्खलद्विपर्यस्यद्वाक्यं यस्य स च स चेति कर्मधारयः । विरुद्धं पूर्वापरविरुद्धं, बहु उपयुक्तादधिकं भाषते वदति । वाक् स्वं प्रति परोक्तं वचनं, चक्षुः परकीयं च स्वदर्शनव्यापृतम् । एकवद्भावी द्वन्द्वः, नो पूजयति नाद्रियते प्रतिवचनदानेन प्रतीक्षणेन च ओष्ठौ निर्भुजति वक्रयति । एतेषां विकाराणां मानसत्वादिकं यथायथमूह्यम् । चकारापिकारतथाशब्दैर्बहुभिर्ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च विभावयेत् ।

[redacted] च पूर्वापरं विद्याद्यस्मादर्थात्स हीयते ।
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ॥
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ।

इति मन्वाद्युक्तानां समुच्चयः ॥ १३–१५ ॥

(मिता०) दुष्टलक्षणमाह—

देशादित्यादि । मनोवाक्कायकर्मभिर्यः स्वभावादेव न भयादिभि-

मित्ताद्विकृतिं विकारं या(१)ति गच्छति असावभियोगे साक्ष्ये वा(२) दुष्टः परिकीर्तितः। तां विकृतिं विभज्य दर्शयति । देशाद्देशान्तरं याति न क्वचिदवतिष्ठते, सृक्किणी ओष्ठप(३)र्यन्तौ परिलेढि जिह्वाग्रेण स्पर्शयति घट्टयतीति कर्मणो विकृतिः। अस्य ललाटं स्विद्यते स्वेदबिन्द्वङ्कितं भवति, मुखं च वैवर्ण्यं विवर्णत्वं पाण्डुत्वं कृष्णत्वं वा एति गच्छतीति कायस्य विकृतिः। परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः। विरुद्धं पूर्वापरविरुद्धं बहु भाषत इति वाचो विकृतिः। परोक्तां वाचं प्रतिवचनदानेन न पूजयति, चक्षुर्वा प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम्। (४)तथा ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृतिः। एतच्च दोषसम्भावनामात्रमुच्यते न दोषनिश्चयाय। स्वाभाविकनैमित्तिकविकारयोर्विवेक(५)स्य (६)दुर्ज्ञेयत्वात्। अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति। न हि मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति। एवमस्य पराजयो भविष्यतीति लि(७)ङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः॥ १३-१४-१५॥

( वी० मि० ) काश्चित्तु विकृतयो दुष्टत्वज्ञापिकाः सत्यदण्डमपि प्रयोजयन्तीत्याह—

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्॥
न चाऽऽहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥१६॥

सन्दिग्धं विचारकेण तदीयतयाऽनिर्णीतमेवार्थमत एव स्वतन्त्रः विचारकदत्तजयपत्रादिनिरपेक्षः साधयेत् स्वाधीनं करोति। यश्च वादार्थमाहूतो निष्पतेत् विचारस्थानात्पलायते। यश्चाहूतः स्वपक्षसाधकं परपक्षबाधकं वा न किञ्चिद्वदेत्स हीनः दुष्टः सन्दिग्धार्थसाधनाद्यपराधेन राज्ञा दण्ड्यश्च स्मृतः। आदिचकारेण विचारस्थानानुपस्थायिनः समुच्चयः। द्वितीयचकारेण स्वादाक्तौ प्रतिनिधिद्वारापि न वादयेदिति समुच्चीयते। तृतीयचकारेण वि-

(१) याति गच्छति गच्छति यातीत्यर्थः। श्लोके गच्छेदित्यस्य लिङर्थोपिवक्षायां तस्य पूर्वं विवरणं प्रदर्श्य ततो यातीति प्रदर्शनीयम्। (२) वा चार्थे। (३)पर्यन्तौ प्रान्तौ। (४) तथा वचनर्यादिवत्। (५) विवेकस्य भेदस्य। (६) दुर्ज्ञानत्वात् ग। (७) यत्किञ्चिद्विकारात्।

धादास्पदं दापयितव्य । एताश्च विकृतयोऽतिनिपुणेनाऽनन्यथासि-द्धयाऽवतारिता मङ्गस्याऽनुमापिका । इतरथा तु मङ्गसम्भवनामा श्रापादिका । एताभिरेव च निर्णयो लोके प्रत्यक्षविचार इत्युच्यते ॥१६॥

( मिता० ) किञ्च—

सन्दिग्धार्थमिति । सन्दिग्धमर्थम(१)धमर्णेनानङ्गीकृतमेव य स्व-तन्त्र साधननिरपेक्ष साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति । यश्च स्वयं सम्प्रतिपन्न साधनेन वा साधित याच्यमानो निष्पतेत्प लायते, यश्चाभियुक्तो राज्ञा चाहूत सन्नसि न किञ्चिद्वदति (२)सोऽपि हीनो दण्ड्यश्च स्मृत इति सम्बध्यते । 'अभियोगे च साक्ष्ये वा दुष्ट' स परिकीर्तित' इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव माभूदिति दण्ड्यग्रहणम् । दण्ड्यश्चापि 'शास्योऽप्यर्थाच्च हीयत' इत्यर्थाद्धीन त्वदर्शनादत्र तन्माभूदिति हीनग्रहणम् ॥ १६ ॥

( वी० मि० ) 'ततोऽर्थी लखयेत्सद्य प्रतिज्ञातार्थसाधक'मित्युक्तं तत्रोभयोरपि वादिप्रतिवादिनो साधकप्रमाणसत्त्वे कस्य तद्विचारणो-पादेयमित्यत्र व्यवस्थामाह—

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ॥
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥

उभयतो वादिनः प्रतिवादिनश्च साक्ष्यादिषु प्रमाणेषु सत्सु पूर्व वादिनो भावित्तु साक्ष्यादीनि प्रमाणानि उपदेयानि भवन्ति इत्यु त्सर्ग । अत्रापवादमाह पूर्वपक्षे भाषारूपेऽधरीभूते उत्तरापेक्षया दु र्बले बलवत्कारणोत्तरवशात्प्राङ्न्यायोत्तराद्वा उत्तरवादिन साक्ष्या-दीनि उपादेयानि भवन्तीति । एतच्च विशिष्य प्रागेव प्रपञ्चितम्॥१७॥

( मिता० ) अथ यत्र द्वावपि युगपद्धर्माधिकरण प्राप्तौ भाषावा-दिनौ । तद्यथा—कश्चित्प्रतिग्रहेण क्षेत्र लब्ध्वा कञ्चित्कालमुपभुज्य कार्यवशात्सकुटुम्बो देशान्तर गत । अन्योऽपि तदेव क्षेत्र प्रतिग्र-हेण लब्ध्वा कञ्चित्कालमुपभुज्य देशान्तर गत । ततो द्वावपि युगपदागत्य मदीयमिद क्षेत्र, मदीयमिद क्षेत्रमिति परस्पर विवद मानौ धर्माधिकारिण प्राप्तौ । तत्र कस्य कि(३)येत्याकाङ्क्षित आह—

साक्षिष्विति । उभयत उभयोरपि वादिनो साक्षिषु स(४)त्सु

(१) ऋणाधाहस्या । (२) द्विविधापीत्यर्थे । (३) क्रिया साधनम् । (४) साक्षिषु सत्सु ग । ?

यत्तु साक्षिणः पूर्ववादिनः पूर्वस्मिन्काले मया प्रतिगृहीतमुपभुक्तं चेति यो वदत्यसौ पूर्ववादी न पुनर्यः पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः। यदा (१)त्वन्य एवं वदति सत्यमनेन पूर्वं प्रतिगृहीतमुपभुक्तं च किन्तु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तमिति, अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति। तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मि(२)न्पूर्वपक्षेऽधरीभूते उत्तरकालं प्रतिगृहीतमुपभुक्तं चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति। इदमेव व्याख्यानं युक्ततरम्। मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति। प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानमयुक्तम्। अस्यार्थस्य–'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थ(३)साधनम्' इत्यनेनैवोक्तत्वात्पुनरुक्तिप्रसङ्गात्। पूर्वव्याख्यानमेव स्पष्टीकृतं नारदेन–'मि(४)थ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि। (५)प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्'॥ इत्युक्त्वा–'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पू(६)र्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः'॥ इति वदता। एतस्य च पू(७)र्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः ॥१७॥

( वी० मि० ) उभयतः प्रमाणसत्त्व एव प्रायशः सपणो व्यवहारो भवतीति तत्प्रसङ्गेन सपणव्यवहारे पराजितस्य कृत्यमाह—

सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत्॥
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥

प्राग्लक्षितो विवादश्चेत्स्यात्तदा तत्र सपणविवादे हीनं पराजितं पराजयनिमित्तकं दण्डं राज्ञे विवादविषयं च धनं वादिने स्वपणं विषयं धनं च यथाव्यवस्थं वादिने राज्ञे वा दापयेद्विचारकः। तुशब्देनापणविवादे पणदानव्यवच्छेदः। एवकारेण प्रथमेन स्वानभ्युपगतपरोक्तपणदानव्यवच्छेदः। द्वितीयेन च धनिन एवेत्यन्वितेन धनाविषयकाविवादातिरिक्ते वाक्पारुष्यादौ धनदानव्यवच्छेदः। प्रथमचकारौ दण्डपणयोरदेययोर्निष्पादनसमुच्चयार्थौ। चरमचकारस्त्रयाणां दण्डादीनां मिलितानां दानबोधनार्थः॥ १८ ॥

(१) उक्तपूर्ववादिभिन्नः। (२) स्तस्मिन्पक्षे ग। (३) अर्थी साध्यवान्। (४) मिथ्या मिथ्योत्तरे। (५) पूर्वन्यायकरणनिश्चये तु। (६) पूर्वत्र काले गृहीतमुपभुक्तं चेतीत्यर्थः। (७) सर्वव्यवहार इति पाठस्तत्र प्रागुक्तसर्वेत्यर्थः।

(मिता०) अपि च—

सपण इति । यदि विवादो व्यवहारः सपणः (१)पणनं—पणस्तेन सह वर्तत इति सपणः स्यात्तदा तत्र तस्मिन् सपणे व्यवहारे हीनं पराजितं (२)पूर्वोक्तं दण्डं स्वकृतं पणं (३)राज्ञे, अर्थिने च विवादास्पदीभूतं धनं दापयेद्राजा । यत्र पुनरेकः कोपावेशवशाद्यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किंचित्प्रतिजानीते (४)तत्रापि व्यवहारः प्रवर्तते । तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः । अन्यस्तु पराजितो दण्डं दाप्यः, न पणम् । स्व(५)पणं चेति विशेषोपादानात् । यत्र त्वेकः शतम्, अन्यस्तु पञ्चाशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं दाप्यौ । सपणश्चेद्विवादः स्यादिति वदता पणरहितोऽपि विवादो दर्शित इति ॥ १८ ॥

(वी० मि०) व्यवहारो यथा सपणापणभेदेन द्विविधस्तथा भूतानुसारिच्छलानुसारिभेदेन द्विविधः । तथा चोक्तम्—

भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृतः ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥

इति प्रमादपदमिह भूतार्थाननुसारि व्यापारमात्रपरं तत्र सति सम्भवे भूतानुसारेणैव व्यव(६)हारो प्रवृत्य इत्याह—

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ॥
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥

भूतेन तत्त्वार्थसम्बन्धेन साक्ष्यादिभिरुपायैर्यथार्थवादिना दिव्यादिरूपेण स्वव्यापारेण परव्यापारेण वा छलरूपमुक्तं निरस्य नृपो व्यवहारान्नयेत् निर्णयरूपे स्वफले प्रापयेत् । क्वचित्तु छलानुसार्यपि व्यवहारो भवतीत्याह भूतं तत्त्वार्थं स सम्बन्धमपि साक्ष्यादिकं अज्ञानवशात्प्रागनुपन्यस्तं व्यवहारे कर्तव्ये हीयतेऽसाधकं भवति । तत्र च छलानुसार्येव व्यवहारः । भूतमप्यनुपन्यस्तमित्यनेन सर्वं भूता-

---

(१) पणनं व्यवहरणं, स्वोक्तसत्यत्वसूचनाय यथासम्भवद्रव्यदानाङ्गीकरणमिति यावत् ।
(२) प्रकृतार्थसमामिति निह्नवे भवति इत्यत्रोक्तम् । (३) प्राड्विवाकादिरिति शेषः ।
(४) तत्र निमित्तसत्त्वादप्रवृत्तौ मानाभावादिति भावः । (५) सपणं ख० ।
(६) व्यवहारे इत्यन्य इत्याह—इति ख० पुस्तके नास्ति ।

र्थानुसारित्वेन शास्त्रलोकसिद्धा(१) व्यापारा उपलक्ष्यन्ते । तत्र शास्त्रसिद्धव्यापारो यथा—

क्रियां बलवतीं त्यक्त्वा दुर्बलां यः समाश्रयेत् ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥

निर्णीतव्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो भुक्तिः पूर्वमावेदितं न चेत् ॥

यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराभ्यां प्रमाणमफलं भवेत् ॥

इति । लोकव्यवहारो यथा—

इदश्चेदहं न यास्यामि तदा मम पराजयः ।

इति व्यवस्थादिरिति ॥ १९ ॥

(मिता०) किञ्च—

छलमिति । छलं प्रमादाभिहितं निरस्य परित्यज्य भूतेन वस्तुतत्त्वानुसारेण व्यवहारान्नयेदन्तं नृपः । यस्मा(२)द् भूतमपि वस्तुतत्त्वमपि अनुपन्यस्तमन(३)भिहितं हीयते हानिमुपगच्छति व्य(४)वहारतो व्यवहारेण साक्ष्यादिभिः । तस्माद् भूतानुसरणं कर्तव्यम् । यथाऽर्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः । तथासति साक्ष्यादिनिरपेक्ष्येणैव निर्णयो भवति । अथ सर्वथापि भूतानुसरणं न शक्यते कर्तुं तथासति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः । यथोक्तम्—'भूतच्छ(५)लानुसारित्वाद्विगतिः समुदाहृतः । भूतं तत्त्वा(६)र्थसंयुक्तं प्रमादाभिहितं छलम्' ॥ इति । तत्र भूतानुसारी व्यवहारो मुख्यः, छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्वस्त्वनुसरणं भवति कदाचिन्न भवति । साक्ष्यादीनां व्य(७)भिचारस्यापि संभवात् ॥ १९ ॥

(वी० मि०) राजकर्तव्यमुखेन भूतानुसारिणं छलानुसारिणं च

---

(१) शास्त्रलोकसिद्धव्यापारा—इति ख० पु० पाठः ।

(२) तस्मात् ख० । (३) अनभिहितं अर्थिप्रत्यर्थिभ्यामिति ।

(४) व्यवहारतः हीयत [illegible] ।

(५) भूतछले अनुसरति तच्छीलस्तस्य [illegible] ।

(६) तत्त्वार्थयुक्तं प्रमादाभि० ख० । (७) व्यभिचारस्य अयथार्थत्वस्य [illegible] ।

व्यवहारमुदाहरति—

निन्हुते लिखितं नैकमेकदेशे विभावितः ॥
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥

लिखितं भाषादिना लिखितं नैकमनेकं हिरण्यरजतवस्त्रादि प्रतिवादी यो निह्नुते सर्वमपलपति स एकदेशे हिरण्यादिमात्रे विभावितः साक्ष्यादिभिरपहारकत्वेनाऽवधारितः सर्वमाक्षेपविषयमर्थं नृपेणाऽर्थिने दाप्यः । इद च भावितस्यैकदेशस्यैकदेशान्तराविना(१)भावे एकदेशविभावनेपि सर्वं दास्यामीति व्यवस्थाविशेषे च । तत्राद्य भूतार्थसम्बद्ध, द्वितीयं छलसम्बद्धमिति । अनिवेदितः पूर्वमलेखितः तुध्यार्थं । विभावितैकदेशव्यतिरिक्तो रत्नादिरपि नाभावनिरूपकोपि राज्ञा न ग्राहयितव्यः । इदमपि छलसम्बद्धस्योदाहरणम् ।

साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्त्तितम् ॥

इति कात्यायनवचनात् । चौर्यादावेकदेशविभावनेपि सर्वं देयमिति तु मिताक्षरा ॥ २० ॥

(मिता०) भूतमप्यनुपन्यस्तं हीयते व्यवहारत इत्यस्योदाहरणमाह—

निन्हुत इति । नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभि(२)युक्तमर्थिना प्रत्यर्थी यदि सर्वमेव निन्हुतेऽपजानीते तदार्थिने(३)कदेशे हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजतादि पूर्वलिखितं दाप्योऽर्थिने नृपेण । न ग्राह्यस्त्वनिवेदितः पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृत इति निवेद्यमानो न ग्राह्यो न दापयितव्यो नृपेण । एतश्च न केवलं वाचनि(४)कम् । एकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसंभवात् । अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसम्भवात् । एवं तर्का(५)परनामसम्भावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात्सर्वं दापनीयं नृपेणेति निर्णय । एव(६) च

(१) विनाभावन—इति ख० पु० पाठ । (२) प्रतिज्ञाकालेऽर्थिनाऽभियोगत्वेनाभिहितम् ।
(३) पूर्वोक्तार्थैकदेशाद्धिरण्य विषये । (४) किंतु युक्तिसिद्धमपीति भाव ।
(५) तर्कापरनामिका या सम्भावना सैव यः प्रत्ययो ज्ञानं तदनुगृहीताद् 'निह्नुते' इति योगीश्वरवचनादित्यर्थ । (६) अस्य तदनुगृहीतत्वे च ।

तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः। तथा च गौतमः—'न्याया(१)धिगमे तर्कोऽभ्युपायस्तेनाभ्युह्य यथास्थानं गमयेत्' इत्युक्त्वा, 'तस्माद्राजाचार्यावनिन्द्यौ' इत्युपसंहरति। न चैकदेशभावितोऽनुपादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते। 'एकदेशविभावितो नृपेण सर्वं दाप्यः' इति वचनात्। य(२)त्तु कात्यायनेनोक्तम्—'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितं धनम्' ॥ इति तत्पुत्रा(३)दिदेयपित्राद्यृणविषयम्। तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामी(४)ति प्रतिवदन्निह्नववादी न(५) भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति 'निह्नुते लिखितं नैकम्' इति शास्त्रं तत्र न प्रवर्तते। निह्नवाभावादपेक्षिततर्काभावाच्च। 'अनेकार्थाभियोगेऽपि' इति कात्यायनवचनं तु सामान्यविषयं, वि(६)शेषशास्त्रस्य विषयं निह्न(७)वोत्तरं परिहृत्याऽज्ञानोत्तरे प्रवर्तते। ननु—'ऋणादिषु विवादेषु स्थि(८)रप्रायेषु निश्चितम्। ऊने वाप्यधिके वार्थे प्रोक्ते साध्यं न सिद्ध्यति' ॥ इति वदता कात्यायनेनानेकार्थाभियोगे साक्षिभिरेकदेशे भाविते ऽधिके वा भाविते साध्यं सर्वमेव न सिद्ध्यतीत्युक्तम्। तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या? उच्यते। लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृत्स्नमेव साध्यं न सिद्ध्यतीति तस्यार्थः। तत्रापि निश्चितं न सिद्ध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव। छलं निरस्येति नियमात्। साह(९)सादौ तु सकलसाध्य-

(१) न्यायज्ञाने तर्क उपायस्तेन तर्केण न्यायमभ्युह्य निश्चित्य नाभ्युपेत्य ख० ।

(२) एवं निश्चितेऽर्थे प्रसक्तविरोधं परिहरति यत्त्विति । (३) तत्पुत्राद्यृण ख० ।

(४) मीतिवदन् ग० ।

(५) न भवतीति । ऋणस्यान्यकृतत्वेनाज्ञानस्यापि तत्र सम्भवेनापलापाभावात् ।

(६) 'निह्नुते' इत्यस्य ।

(७) निह्नवोत्तरं=ज्ञात्वापलापो निह्नवस्तद्रूपमुत्तरं परिहृत्य परित्यज्य अज्ञानोत्तरं ज्ञानाभावेनोत्तरे प्रवर्तते ।

(८) स्थिरेति । लिङ्गदर्शनमात्रेणादृढहेतुनापि स्त्रीसंग्रहणादिरूपसाध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम्, ऋणादानादिरूपस्य साध्यस्य तु दृढसाधनेनैव सिद्धिस्तेषां स्थिरत्वम्, तदपि नाकाशादिवदिति स्थिरप्रायत्वमित्यर्थः ।

(९) स्थिरप्रायेष्वित्यस्य प्रत्युदाहरणमाह साहसादौ त्विति ।

साधनत(१)योद्दिष्टे साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव । तावतैव साहसादेः सिद्धत्वात्, कात्यायनवचनाच्च । 'सा(२)ध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम्' ॥ इति ॥ २० ॥

(वी० मि०) ननु शास्त्रयोर्विरोधे कथं भूतार्थसम्बद्धो व्यवहार इत्यत आह—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ॥
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ २१ ॥

व्यवहारतो व्यवहारे विषये स्मृत्योः धर्मशास्त्रयोः परस्परं विरोधे तु न्यायः तत्तद्विषयव्यवस्थापकस्तर्को बलवान् निर्णायकः । न्यायेन यस्मिन्नर्थे या स्मृतिर्व्यवस्थाप्यते तस्मिन्नर्थे सा स्मृतिः प्रमाणमिति यावत् । तुशब्देन श्रुतिविरोधे स्मृतेर्बलवत्त्वं व्यवच्छिद्यते । यदुक्तम्—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
परस्परविरोधे तु योग(३)युक्तं प्रमाणवत् ॥

स्मृत्योरिति समानजातीयमात्रोपलक्षणकं, तेन श्रुत्योरेवाऽर्थशास्त्रयोरेव वा परस्परं विरोधे न्यायो विनिगमक इति मन्तव्यम् । द्वितीयतुशब्देन पुराणव्यवच्छेदः, तेन पुराणाद्धर्मशास्त्रं स्मृत्यात्मकं न बलवत् । किन्तु स्मृत्योरिव स्मृतिपुराणयोः परस्परविरोधे न्यायाद्बलाबलमिति प्रतिज्ञातार्थसाधकमित्युक्तम् ॥ २१ ॥

(मिता०) ननु 'निह्नुते लिखितं नैकम्'मितीयं स्मृतिस्तथानेकार्थाभियोगेऽपीतीयमपि स्मृतिरेव । तत्रानयोः स्मृत्योः परस्परविरोधे सतीतरेतरबाधनादप्रामाण्यं कस्मान्न भवति विषयव्यवस्था किमित्याश्रीयत इत्यत आह—

स्मृत्योरिति । यत्र स्मृत्योः (४)परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवान्समर्थः । स च न्यायः कुतः प्रत्येतव्य इत्यत आह—व्यवहारतः

(१) व्यादिष्टे इति पाठः ।
(२) साध्यार्थांशे साहसादिके विवादपदत्रये भगवान्नारदेनाभदेकार्थस्यापि साध्यत्वेन कथितं तथा नेकसाध्यसाधनतयाभहितै साक्षिभ साध्यार्थजातस्यैकदेशाय साधिते सकलं भवेत्सिद्धमित्यर्थः ।
(३) यायुक्तं—इति क० पु० पाठः । (४) परस्परविरोध ग० ।

इति । व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते । अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता । एवमन्यत्रापि विषयव्यवस्थाविकल्पादि यथासम्भवं योज्यम् ॥

(मिता०) एवं सर्वत्र प्रसङ्गेऽपवादमाह—

अर्थेति । धर्मशास्त्रानुसारेणेत्यनेनैवौ(१)शनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । (२)अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवदिति स्थितिर्मर्यादा । यद्यपि (३)समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः । धर्मस्य प्राधान्यं (४)शास्त्रादौ दर्शितम् । तस्माद्धर्मशास्त्राऽर्थशास्त्रयोर्विरोधेऽर्थशास्त्रस्य बाध एव, न विषयव्यवस्था नापि विकल्पः । किमत्रोदाहरणम् । (५)न तावत्—गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन । (६)प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति' ॥ (मनुः ८।३।५०।५१) तथा—'आततायिनमायान्तमपि वेदा'(७)न्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्' । इत्याद्यर्थशास्त्रम् । 'इयं विशुद्धिरुदिता प्रमाप्या(८)कामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' ॥ (मनुः ११।८९) इत्यादि धर्मशास्त्रं तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम् । अनयोरेकविषयत्वासम्भवेन विरोधाभावान्न बलाबलचिन्तावतरति । तथा हि–'शस्त्रं

---

(१) औशनसादि केवलं नीतिशास्त्रम् ।

(२) एकविषययोर्विरुद्धार्थयोर्हि स्मृत्योर्मिथो विरोधो न तु भिन्नविषययोरविरुद्धार्थयोर्वा । सति च विरोधे प्रबलदुर्बलभावचिन्ता । एवं च पूर्वमेव धर्मशास्त्रानुसारेणेव व्यवहारानुदर्शनस्य विहितत्वादौशनसादिनीतिशास्त्रस्य न व्यवहारविषय प्रवृत्तिरत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोः सुतरां विरोधाभावादनयोः प्रबलदुर्बलभावचिन्तनमेव तावदयुक्तमिति शङ्काशयः ।

(३) मन्वादिरूपैककर्तृनिष्पन्नत्वेन । (४) आचाराध्यायस्यादौ ।

(५) अन्योक्तमुदाहरणमनूद्य खण्डयति–न तावदित्यादि युक्तमित्यन्तेन । न तावदुदाहरणं युक्तमिति व्यवहितेनान्वयः ।

(६) यतो मन्युरेव प्रकाशमप्रकाशं वा तं मन्युं हिनस्तीत्यर्थः, प्रकाशं वाऽप्रकाशं वा क० ।

(७) वेदान्तपारगम्, पाठः ।

(८) अकामतो ब्राह्मणं हिंसित्वा स्थितस्य. ।

द्विजातिभिर्ब्राह्मं धर्मो यत्रोपरुध्यते' (मनुः ८।३४८) इत्युपक्रम्य-'आत्मनश्च परित्राणे दक्षिणानां च संगरे। स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न(१) दण्डभाक्' (मनुः ८।३४९) इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां च-'आततायिनमकूटशस्त्रेण घ्नन् न दण्डभाक्' इत्युक्त्वा तस्यार्थवादार्थमिदमुच्यते गुरुं वा बालवृद्धौ वेत्यादि। गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति। वाशब्दश्रवणादपि वेदान्तगमित्यत्रापिशब्दश्रवणाच्च गुर्वादीनां वध्यत्वप्रतीतिः। 'नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधात्' इति सुमन्तुवचनाच्च। 'आचार्यं च प्रवक्तारं मातरं पितरं गुरुम्। न हिंस्याद्ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः' ॥ इति (४।१६२) मनुवचनाच्च। आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवन्नान्यथा। हिंसामात्रप्रतिषेधस्य सा(२)मान्यशास्त्रेणैव सिद्धत्वात्। 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव। यत'-'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिन' ॥ तथा-'उद्य(३)तासिर्विषाग्निश्च शापोद्यतकरस्तथा। आ(४)थर्वणेन हन्ता च पिशुनश्चापि राजनि। भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः। एवमाद्यान्विजानीयात्सर्वानेवाततायिन.' ॥ इति सामान्येनाततायिनो दर्शिताः। अतश्च ब्राह्मणादय आततायिनश्च आत्मादित्राणार्थं हिंसानभिसन्धिना निवार्यमाणाः प्रमादाद्यदि विप(५)द्येरंस्तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः। तस्मादन्यदिहोदाहरणं वक्तव्यम्। उच्यते-'हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः। अतो यतेत तत्प्राप्तौ' इत्यर्थशास्त्रम्। 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति धर्मशास्त्रम्। तयोः क्वचिद्विषये विरोधो भवति। यथा-'च(६)तुष्पाद्व्यवहारे प्रवर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति न धर्मशास्त्रमनुसृत भवति। अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति मित्रलब्धिर्विपरीता। तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत्। अत

(१) न दुष्यति क।(२) न हिंस्यादित्यादिवचनेनैवेत्यर्थः।

(३) उद्यतेत्यत्र असिरिव धर्षणा इनं कृत्वोद्यतशब्देन बहुव्रीहि।

(४) अथर्ववेदप्रतिपादितभिचारादिकर्मणा। (५) मृत्युमाप्नुयु'।

(६) प्रथम'एतस्मिन्नध्यायेऽस्मत्कृते पूर्वं दर्शितं चतुर्भाग्य घ।

एव धर्मार्थसंनिपाते अर्थग्राहिण एतदेव इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते ॥ २१ ॥

(वी० मि०) विभजन्नेव मानुषदैवरूपयोः साधकयोर्बलाबलमाह—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ॥
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥

लिखितं विवादपदनिर्णयक्षमा लिपिः, भुक्तिः विवादास्पदीभूतस्य ग्रामादेरुपभोगः, साक्षिणो वक्ष्यति। चकारात्प्रत्याकलितापरनामकमनुमानाख्यं प्रमाणं समुच्चिनोति। इति चतुर्विधलौकिके प्रमाणमुच्यते विचारकैरुपदिश्यते कर्तव्यतया। प्राक्तनचकारोऽत्राप्यन्वेति, तेनाऽलौकिकस्य शपथस्य दिव्यभिन्नतया नारदेनोक्तस्य समुच्चयः॥२२॥

(मिता०) 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधन'मित्युक्तं, किं तत्साधनमित्यपेक्षित आह—

प्रमाणमिति। प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम्। तच्च द्विविधं मानुषं दैविकं चेति। तत्र मा(१)नुषं त्रिविधं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितं महर्षिभिः। तत्र लिखितं द्विविधं शासनं चीरकं चेति। शासनमुक्तलक्षणम्। चीरकं तु व(२)क्ष्यमाणलक्षणम्। भुक्तिरुपभोगः। साक्षिणो वक्ष्यमाणस्व(३)रूपप्रकाराः। ननु लिखितस्य साक्षिणां च श(४)ब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भावाद्युक्तं प्रामाण्यम्। भुक्तेस्तु कथं प्रामाण्यम्। उच्यते-भुक्तिरपि कैश्चिद्विशेष(५)णैर्युक्ता स्वत्वहेतुभूतक्रियादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्त्यनु(६)मानेऽर्था(७)पत्तौ वाऽन्तर्भवतीति प्रमा-

(१) मानवं ख.। (२) वक्ष्यमाणमग्रे लेख्यप्रकरणे.।

(३) स्वरूपं च प्रकारश्च वक्ष्यमाणौ येषाम्. तत्र प्रकारो भेदः स च दृष्टसाक्षिणः श्रुतसाक्षिण इत्येवमादिः।

(४) लिपेः स्फोटकव्यञ्जकत्ववत्साक्षिणां ध्वनिद्वारा तदभिव्यञ्जकत्वात्स्वरूपतस्तेषामतत्त्वेऽपि तत्त्वात्तत्त्वामिति भावः.।

(५) आसेधराहित्यादिविशेषणैः.।

(६) अनुमाने इति-चैत्रादिकमस्य क्रयादिप्राप्तम, आसेधराहित्ये सति चिरकालोपभुक्तत्वात् तदीयगृहादिवत् इत्यनुमानप्रयोगः।

(७) तादृशी भुक्तिः स्वतोऽनुपपद्यमाना तादृशं तत्कल्पयतीत्यर्थापत्तिर्बोध्या.।

णामेव । यथा लिखितादीनां त्रयाणामन्यतमस्याप्यभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते । मानुषाभाव एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते । दिव्यस्य स्वरूपप्रामाण्ययोरागमगम्यत्वात् । अतश्च यत्र परस्परविवादेन युगपद्धर्माधिकारिणं प्राप्तयोरेको मानुषीं क्रियामपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या । यथाह कात्यायनः—'यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् । मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः' ॥ इति । यत्रापि प्र(१)धानैकदेशसाधनं मानुषं सम्भवति तत्रापि न दैवमाश्रयणीयम् । यथा—रूपकशतमनया वृद्ध्या गृहीत्वायं न प्रयच्छतीत्यभि(२)योगापह्नवे ग्रहणे साक्षिणः सन्ति नो संख्यायां वृद्धिविशेषे वा, अतो दिव्येन भावयामीत्युक्ते तत्रैकदेशविभाविनन्यायेनापि (३)संख्यावृद्धिविशेषसिद्धेन दिव्यस्यावकाशः । उक्तं च कात्यायनेन—'यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी । सा ग्राह्या न तु(४)पूर्णापि दैविकी (५)वदतां नृणाम्' ॥ इति । यत्तु—'गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम्' इति, तदपि मानुषासम्भवकृतनियमार्थम् । यदपि नारदेनोक्तम्—'अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे । न्यासस्यापह्नवे चैव दिव्या सम्भवति क्रिया' ॥ इति । तदपि (६)मानुषासम्भव एव । तस्मान्मानुषाभाव एव दिव्येन निर्णय इत्यौत्सर्गिकम् । अस्य चापवादो दृश्यते—'प्रकान्ते साहसे वादे पारुष्ये दण्डवाचिके । बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च' । इति । तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते । यथा—(७)'पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता । तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः' ॥ तथा—'द्वारमार्गक्रि(८)याभोगजलवाहादिषु क्रिया । भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः' ॥ तथा—'(९)दत्तादत्ते-

---

(१) अत्र समस्तस्य प्रधानैकदेश इति विग्रहः ।

(२) इति योऽभियोगस्तस्यापह्नवे परेण कृते सति ।

(३) सङ्ख्यावृद्धिविशेषयोः सिद्ध । (४) पूर्णापि ग ।

(५) वदतां वादिनां दैवी विवदतां ख । (६) मानुषसम्भवकृतनियमार्थमिति पाठ ।

(७) पूगादीनां विवरणमपि ३० तमे पद्ये स्फुटम् ।

(८) आभोग परिणाह —तेन च परिण'हवदङ्गणादिक लक्ष्यते जलवाहो जलनिर्गममार्ग ।

(९) दत्तेति बहुवचना-तर्थाद्वंद्वः दत्तादत्ते विद्यते येषु दत्ताप्रदानिकव्यवहारपदेषु ।

ऽर्थं भृत्यानां स्वामिनां निर्णये सति । वि(१)क्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति । द्यूते (२)समाह्वये चैव विवादे समुपस्थिते । साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम्' ॥ इति ॥ २२ ॥

( वी०मि० ) 'पूर्वपक्षेऽधरीभूत' इत्यनेन बलवत्युत्तरे प्रतिवादिनः क्रियेत्युक्तम्, तत्रोत्तरस्य विषयभूतक्रियाबलवत्त्वादेव बलवत्त्वमिति क्रियाबलवत्त्वं दर्शयति—

सर्वेष्वेव (३)विवादेषु बलवत्युत्तरा क्रिया ॥
आधौ प्रतिग्रहे क्रीते पू(४)र्वैव बलवत्तरा ॥ २३ ॥

सर्वेषु ऋणादानविषयेषु विवादेषु द्वयोः क्रिययोर्वादिप्रतिवादिभ्यां स्वस्वार्थसाधनायोपन्यस्तयोर्मध्ये या उत्तरकालीना सा बलवती, तेन यत्रैकेनोक्तं मत्तः ऋणमनेन गृहीतमिति मदीयं धारयतीति, अपरेण वाऽभिहितं गृहीतमेव परन्तु(?) परिशोधनाक्रिया बलवती । एवं यत्र काकिनीरूपवृद्धिव्यवस्थया प्रथममृणं गृहीतं पश्चात्तु पणव्यवस्थया तदेव केनापि हेतुना स्थाप्यते तत्रोत्तरा व्यवस्था बलवती । एवमेकस्मिन्निक्षिप्तं द्रव्यं परस्मिन् यत्र निक्षिप्तं तत्र परस्मिन्निक्षेपो बलवानित्याद्यप्यूह्यम् । एवकार उत्तरेत्यनन्तरं योज्यः, तेन पूर्वायास्तत्तुल्यबलवत्त्वं व्यवच्छिन्नम् । एवं पूर्वैवेत्यत्राप्येवकारो व्याख्येयः । क्वचित्तु सर्वेष्वथेति पूर्वा त्विति च पाठः । अत्रापवादमाह-आधौ आधीकरणे प्रतिग्रहे क्रयणे च पूर्वात्तत्सजातीया बलवती । साजात्यं च यथेष्टविनियोगप्रतिबन्धकत्वस्वत्वध्वंसकत्वाभ्याम् । एवं यत्रैकस्मिन्नाधीकरणानन्तरं परस्मिन्नाधीकरणं तत्र पूर्वमाधीकरणं बलवत् । यत्र चैकेन प्रतिगृहीते क्रीते वा परेण ग्रहादिः स्वत्वोपायः कृतः, तत्र प्रथमप्रतिग्रहादिर्बलवानिति पर्यवसितार्थः । आध्यपेक्षया स्वत्वध्वंसको विक्रयादिः पूर्वकालीन उत्तरकालीनो वा बलवानेव स्यात् । एवं स्वामिनो यथेष्टविनियोगाप्रतिबन्धकनिक्षेपापेक्षया पूर्वकालीन उत्तरकालीनो वा यथेष्टविनियोगप्रतिबन्धक आधिर्बलवानित्यूह्यम् । तदुक्तमाह रत्नाकरे नारदः—

---

(१) विक्रयादानसम्बन्धे [illegible] । (२) समाह्वयः प्राणिद्यूतम् ।

(३) सर्वेष्वर्थविवादेषु—इति मुद्रितपुस्तके पाठः । (४) पूर्वा तु इति मुद्रितपुस्तके पाठः ।

न्यासं कृत्वा परस्याधिं कृत्वा चाधिं करोति यः ।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा ॥

इति ॥ २३ ॥

(मिता०) (१)उभयत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्वापरयोः कार्ययोः कस्य बलीयस्त्वमित्यत आह–

सर्वेष्विति । ऋणादिषु सर्वेष्वर्थविवादेषु उत्तरा क्रिया क्रियत इति कार्यं बलवती । उत्तरकार्ये साधिते तद्वादी विजयी भवति । पूर्वकार्ये सिद्धेऽपि तद्वादी पराजीयते । तद्यथा–कश्चिद् ग्रहणेन धारणं साधयति कश्चित्प्रतिदानेनाधारणं, तत्र ग्रहणप्रतिदानयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदानवादी (२)जयी भवति। तथा पूर्वं द्वि(३)कं शतं गृहीत्वा कालान्तरे त्रिकं शतमङ्गीकृतवान्, तत्रोभयत्र प्रमाणसद्भावेऽपि त्रिकशतग्रहणं बलवत्। पश्चाद्भावित्वात्पूर्वाबाधेनानुपपत्तेः। उक्तं च–'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति' इति ॥

(मिता०) अस्यापवादमाह–

आधाविति । आध्यादिषु त्रिषु पूर्वमेव कार्यं बलवत् । तद्यथा–एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति तत्र पूर्वस्यैव तद्भवति नोत्तरस्य । एवं प्रतिग्रहे क्रये च । नन्वाहितस्य तदानीमस्वत्वात्पुनराधानमेव न सम्भवति । एवं दत्तस्य क्रीतस्य च दानक्रयौ नोपपद्येते तस्मादिदं वचनमनर्थकम् । उच्यते–अस्वत्वेऽपि यदि मोहात्कश्चिल्लोभाद्वा पुनराधानादिकं करोति तत्र पूर्वं बलवदिति न्यायमूलमेवेदं वचनमित्यचोद्यम्॥२३॥

(वी०मि०) प्रमाणान्युक्तानि लिखितमित्यादिना । तत्राऽनुमानरूप प्रमाणं प्रपञ्चितं साक्षिरूपं च विस्तरेणाऽग्रे वक्ष्यतीति सूचीकटाहन्यायेन भुक्तिरूपं प्रमाणं प्रपञ्चयति षड्भिः श्लोकैः—

पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी ॥
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥
आधिसीमोपनिक्षेपजडबालधनैर्विना ॥
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥

---

(१) सर्वेष्वितिवाक्यस्य ।
(२) जयति ख० ।     (३) द्वे वृद्धिर्यस्य तदद्विकम् 'तदस्मिन्' इति कन् ।

आध्यादिभिर्विना स्वस्य पश्यतोऽपि मदीयेयं भूरिति अब्रुवतो भोक्तरि वचनमकुर्वतः परेण स्वभिन्नेन भुज्यमानाया भूमेर्विंशतिवार्षिकी विंशतिवर्षैर्नैरन्तर्य्येण भोगवद्भिर्निवृत्ता हानिः । स्वस्य स्वत्वप्रमितिधनस्य गवादेस्तु भुक्तिविषयस्य दशवार्षिकी हानिरिति विशेषः । हानिर्वधः । सीमा ग्रामादिमर्यादा, उपनिक्षेपः परस्य समीपे सङ्ख्यादिना परिच्छिन्नं समर्पितं वस्तु, जडस्य मन्दमतेः, बालस्य षोडशवर्षाभ्यन्तरवयस्कस्य वा, धनं गोभूम्यादि, उपनिधेर्भाण्डस्थानामपरिच्छिन्नानां राज्ञः स्त्रियाः श्रोत्रियस्य च सम्बन्धीनि धनानि । अपिशब्देन--

विवाह्य श्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च ।
स्वदीर्घेणाऽपि कालेन तेषां सिध्यति तत्तु न ॥

इति वृद्धसत्याद्युक्तं समुच्चिनोति ॥ २४-२५ ॥

(मिता०) भुक्तेः कैश्चिद्विशे(१)षणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद् भुक्तेः कार्यान्तरमाह—

पश्यत इति । परेणासम्ब(२)न्धेन भुज्यमानां भुवं धनं वा प(३)श्यतः अब्रुवतः मदीयेयं भूः न त्वया भोक्तव्येत्यप्रतिषेधयतः तस्या भूमेर्विंशतिवार्षिकी अप्र(४)तिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति । धनस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः । नन्वेतदनुपपन्नम् । न ह्यप्रतिषेधात्स्वत्वमपगच्छति अप्रतिषे(५)द्धस्य दानविक्रयादिवत्स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् । नापि विंशतिवर्षोपभोगात्स्व(६)त्वम् । उपभोगस्य स्वत्वे (७)प्रमाणत्वात्, (८)प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्, रिक्थक्रयादिषु स्वत्वकारकहेतुष्वपाठाच्च । तथा हि–'(९)स्वामी रिक्थक्रयसंविभागपरिग्रहाधिग-

(१) कैश्चित् आसेधराहितत्वाचिरकालत्वादिभिः । (२) असंबद्धेनेति पाठः ।

(३) पश्यतः वादिनः । (४) अशब्दं यथातथेत्यर्थः । (५) अनतिषिद्धस्य ख० ।

(६) स्वत्वम् । उत्पद्यत इतिशेषः । (७) तस्य स्वत्वविषयकप्रमितिजनकत्वादित्यर्थः ।

(८) प्रमाणस्य = उपभोगस्य प्रमेयं = स्वत्वं प्रति ।

(९) स्वामीति रिक्थादिषु पञ्चसु सत्सु स्वामी भवति । अप्रतिबन्धो दायो रिक्थं, सप्रतिबन्धः संविभागः, क्रयः प्रसिद्धः, अरण्यादिष्वनन्यपरिगृहीततृणकाष्ठादिस्वीकरणं परिग्रहः निध्यादिप्राप्तिरधिगमः, इमे सर्वसाधारणस्वत्वकारकहेतवः । असाधारणस्तु ब्राह्मणस्य प्रतिग्रहादिना लब्धं, क्षत्रस्य परपराजयेन लब्धं, वैश्यशूद्रयोः निर्विष्टं=भोगरूपेण भृतिरूपेण वा लब्धं तदाधिकं=असाधारणं स्वत्वजनकम् ।

मेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विनिर्जि(१)तं, निर्विष्टं वैश्यशूद्रयोः' इत्यष्टावेव स्वकारकहेतून् गौतमः पठति न भोगम् । (२)न चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वोत्पत्तिहेतुत्वं प्रतिपादयतीति युक्तम् । स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात् । एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते । गौतमवचनं तु नियमार्थम् । अपि च–"अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते । न च–"अनागमं तु यो भुङ्क्ते' इत्येतत्परोक्षभोगविषयम् । पश्यतोऽब्रुवत इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम् । अनागमं तु यो भुङ्क्ते इत्यविशेषाभिधानात्, 'नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः' ॥ इति कात्यायनवचनाच्च । समक्षभोगे च हानिकारणाभावेन हानेरसम्भवात् । न चैतन्मतव्यम्–आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यादपवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्ताया (३)उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यत इति । यतस्ते(४)पूर्वैव क्रिया तत्त्वतो नोपपद्यते (५)स्वमेव ह्याधेयं देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । (६)अस्वस्य दाने प्रतिग्रहे च दण्डः स्मर्यते–'अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति । उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम्' ॥ इति । तथाऽऽध्यादीनां प्रयाणामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽ(७)पवादो नोपपद्यते । तस्माद् भूम्यादीनां (८)हानिरनुपपन्नैव । नापि व्यवहारहानिः । यतः–'उपेक्षां कुर्वतस्तस्य(९) तूष्णींभूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति' ॥ इति नारदेनोपेक्षा(१०)लिङ्गाभावकृता व्यवहारहानिरुक्ता न तु वस्त्वभावकृता । तथा मनुनापि–'अजडश्चेदपौगण्डो विषय(११)श्चास्य भुज्यते । भग्नं तद्व्यवहारेण

(१) वि जित घ० । (२) नचेद वचनं ग० ।
(३) उत्तरविषयक्रियया ख० । (४) तेषु आध्यादिषु । (५) स्वत्वे हेतोरभावे स्वयमेव घ० ।
(६) अस्वत्वस्य ख० । (७) अपवादोऽपवादत्वम् । (८) स्वत्वहान्या स्वत्वहानि ।
(९) तस्य वादिन (१०) उपेक्षया यानि लिङ्गानि अहत्वव्यत्ययत्वादीनि तेषां योऽभावस्तत्कृता ।
(११) विषये देश, अस्य धनेन: विषये चास्य भुज्यते इति घ० पाठ ।

भोक्ता तद्धनमर्हति' ॥ इति व्यवहारतो भङ्गो दर्शितो न वस्तुतः। व्यवहारभङ्गश्चैवम्–भोक्ता किल वदति 'अजडोऽयमपौगण्डोऽबालोऽयमस्य संनिधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तं तत्र बहवः साक्षिणः सन्ति। यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावन्तं कालमुदास्ते' इति, तत्र चायं निरुत्तरो भवतीति। एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव। 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' इति नियमात्। (१)अथ मतम्। यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यत इति। तच्च न (२)स्मार्तकालाया भुक्तेर्हानिशङ्काकारणत्वाभावात्, तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात्। अथोच्यते–'विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम्। यथाह कात्यायनः–'शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते। विंशतिवर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्' ॥ इति। तदपि न। आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य (३)समत्वेनाधिसीमेत्याद्यपवादासम्भवात्। यथाह कात्यायनः—'अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः। तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता' ॥ तथा–'सीमाविवादे निर्णीते सीमापत्रं विधीयते। तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः' ॥ इति। एतेन धनस्य दशवार्षिकीत्येतदपि प्रत्युक्तम्। तस्मादस्य श्लोकस्य (४)सत्योऽर्थो वक्तव्यः। उच्यते–भूमेर्धनस्य च फलहानिरिह(५) विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः। तथा हि–निराक्रोशं विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते तथापि (६)फलानुसरणं न लभते। अप्रतिषेधलक्षणात्स्वापराधादस्माच्च वचनात्। परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव, पश्यत इति वचनात्। प्रत्यक्षभोगे च साक्रोशे, अब्रुवत इति वचनात्। विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते विंशतिग्रहणात्। ननु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानिरनुपपन्नैव। बाढम्। तस्य स्वरूपाविनाशेन तथैवा-

(१) अथ मतमित्यन्यथा व्याख्यानम्। (२) स्मरणविषयतायोग्यकालिकायाः।

(३) समत्वेनापवादासंभवात् ख.। (४) सत्योऽर्थो निर्दुष्टोऽर्थः, सत्योन्योर्थो ग. पाठः।

(५) इह पश्यत इत्यत्र वचने.। (६) तावत्पर्यन्तं ततस्तेन लब्धेत्यादिः।

स्वस्थाने यथा तदुत्पन्नपूगपनसवृक्षादीनां यत्पुनस्तदुत्पन्नमुपभोगा-नष्टं तत्र स्वरूपनाशादेव स्वत्वनाशे–'अनागमं तु यो भुङ्क्ते बहून्यब्द-शतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत्तत्समं द्रव्यदान(१)प्राप्त, हानिर्विंशतिवा-र्षिकीत्यनेनापो(२)द्यते । राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि, (३)अ-नागमोपभोगादपवादाभावाच्च । तस्मात्स्वाम्युपेक्षालक्षणस्यापरा-धादस्माच्च वचनाद्विंशतेरूर्ध्वं फलं नष्टं न लभत इति स्थितम् । एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् ॥ २४ ॥

( मिता० ) अस्यापवादमाह--

आधिसीमेत्यादि । आधिश्च सीमा च उपनिक्षेपश्च आधिसीमो-पनिक्षेपाः । जडश्च बालश्च जडबालौ तयोर्धने जडबालधने आधि-सीमोपनिक्षेपाश्च जडबालधने च आधिसीमोपनिक्षेपजडबा-लधनानि नैर्विना । उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्ष-णार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः--'(४)स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः' ॥ इति । उपनिधानमुपनिधिः । आध्यादिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेरूर्ध्वं धनस्य च दशभ्यो वर्षेभ्य ऊर्ध्व-म(५)प्युपचयहानिर्न भवति । पुरुषापराधस्य तथाविधस्याभावात् । उपेक्षाकारणस्य तत्र(६) तत्र संभवात् । तथा हि–आधेराधि(७)-स्वोपाधिक एव भाग इत्युपेक्षायामपि न पुरुषापराधः । सीम्नश्चि-रस्थतत्तुषाङ्गारादिचिह्नैः सुसाध्यत्वादुपेक्षा सम्भवति । उपनिक्षेपो-पनिध्योर्भुक्तेः प्रतिषिद्धत्वात्, प्रतिषेधातिक्रमोपभोगे च (८)सोदय-फललाभादुपेक्षोपपत्तिः । जडबालयोर्जडत्वाद्बालत्वादुपेक्षा युक्तैव । राज्ञो बहुकार्यव्याकुलत्वात् । स्त्रीणामज्ञानादप्रागल्भ्याच्च । श्रोत्रिय-स्याध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षा युक्तैव । त-स्मादाध्यादिषु सर्वत्रोपेक्षाकारणसम्भवात्समक्षभोगे निराक्रोशे च न कदाचिदपि फलहानिः ॥ २५ ॥

---

(१) प्राप्त, तत् द्रव्यदानम् । (२) अपोद्यते बाध्यते ।

(३) स्वत्वहेतु प्रतिग्रहक्रयादिरागमः ।

(४) यत्र स्वं द्रव्यं परहस्ते विस्रम्भाद्विश्वासाभिक्षिपति । (५) उपचयहानिः फलहानिः ।

(६) तत्र तत्र आध्यादिषु । (७) आधित्व नैमित्तिक –इति पाठः । (८) सोदयफललाभाद् घ ।

(वी०मि०) आध्यादीनामुक्तानां भोगबलेन केवलं न भोक्तुः स्वत्वासिद्धिमात्रं किं तु तद्भोगबलेनापहर्तुर्दण्डोऽपीत्याह—

आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ॥
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥

आध्यादीनां विशेषतः स्वामिवत् हर्तारं यथेष्टं विनियुञ्जानं धनिने आध्यादिस्वामिने धनमाध्यादिरूपं विवादास्पदं दापयेद्विचारकः । तत्समं स्वरूपतो मूल्यतो वाऽऽध्यादिसमानमथवाऽपहर्तुः शक्त्यनुसारिणं अल्पधनत्वे ततोऽल्पमधिकधनत्वे ततोऽप्यधिकं दण्डं राज्ञे दापयेत् । चकारेण धनसामान्यशून्यस्य देशनिष्कासनादिसमुच्चयः । अथापि वेत्यव्ययसमुदायो विकल्पार्थः ॥ २६ ॥

( मिता० ) आध्यादिषु दण्डविशेषप्रतिपादनार्थमाह—

आध्यादीनामिति । आध्यादीनां श्रोत्रियद्रव्यपर्यन्तानां चिरकालोपभोगबलेनाऽपहर्तारं विवादास्पदीभूतं धनं स्वामिने दापयेदित्यनुवादः । दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः(१) । यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न सम्भवति तथापि—'मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा' इत्यादिवक्ष्यमाणो दण्डो द्रष्टव्यः । अथ तत्समदण्डेनापहर्तुर्दमनं न भवति बहुधनत्वेन, तदा शक्त्यपेक्षं धनं दापयेत् । यावता तस्य दर्पोपशमो भवति तावद्दापयेत् । 'दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत्' इति दण्डग्रहणस्य दमनार्थत्वात् । यस्य तु तत्सममपि द्रव्यं नास्ति सोऽपि यावता पीड्यते तावद्दाप्यः । यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना दमनीयः । तथा च मनुः—'धि(२)ग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डमतः परम्' ॥ इति वधदण्डोऽपि शारीरो ब्राह्मणव्य(३)तिरिक्तानां (४)दशधा दर्शितः । तथाह मनुः ( ८।१२५ )—'दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् । त्रिषु वर्णेषु यानि स्युरक्ष(५)तो ब्राह्मणो व्रजेत् ॥

(१) विधिः प्राड्विवाकादेरिति शेषः ।

(२) धिग्दण्डो धिगिति कुत्सनम्, वाग्दण्डः परुषवाक्यवचनात्मकः, धनदण्डो धनापहारः, वधदण्डः शारीरो बन्धरोधादिजीवितवियोगान्तः । (३) व्यतिरिक्तानां तु इति पाठः ।

(४) नवधा इति क्वचित्पाठः । (५) अक्षतः शारीरसकलवधदण्डरहितः ।

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च' ॥ इति । एतेषां यन्निमित्तापराधस्तत्रैवोपरधादौ निग्रहः कार्य इति द्रष्टव्यम् । कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः । यथोक्तं कात्यायनेन–'धनदानासहं बुद्धा स्वाधीनं कर्म कारयेत् । अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते' ॥ इति । ब्राह्मणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि प्रयोज्यानि । यथाह गौतमः–(१)कर्मवियोगविख्यापननिर्वासनाङ्ककरणादीन्यवृत्तौ' । इति । नारदेनापि–'वधः(२) सर्वस्वहरणं पुरान्निर्वासनाङ्कने । (३)तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥ अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः' ॥ इत्युक्त्वोक्तम्—'वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति' ॥ इति । 'शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च' ॥ इति । अङ्कने च व्यवस्था दर्शिता–'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्' ॥ इति । यत्तु 'चक्षुर्निरोधो ब्राह्मणस्य' इत्यापस्तम्बवचनं, ब्राह्मणस्य पुरान्निर्वासनसमये वस्त्रादिना चक्षुर्निरोधः कर्तव्य इति तस्यार्थो न तु चक्षुरुद्धरणम् । 'अक्षतो ब्राह्मणो व्रजेत्' 'न शारीरो ब्राह्मणे दण्डः' इत्यादिमनुगौतमादिवचनविरोधादित्यलं प्रसङ्गेन ॥ २६ ॥

(वी० मि०) आगमविनाकृतत्रिपुरुषभोगातिरिक्तो भोगो न प्रमाणं किन्त्वागमसहित एवेत्याह—

आग(४)मेऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ॥
आग(५)मेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥२७॥

पूर्वेषां पित्रादीनां त्रयाणां पुरुषाणां क्रमेणागतात् प्राप्ताद्विना यो भोगस्तस्मादभ्यधिकस्ताद्भिन्नस्तदङ्गभूः । आगमः क्रयप्रतिग्रहादिः । आगच्छति स्वीभवत्यनेनेति व्युत्पत्तेः । अङ्गत्वलाभार्थममीत्युक्तम् । नन्वेवमागमस्याऽवश्यमुपादेयत्वे स्वार्थसाधनाय भोगानुसरणं व्यर्थमित्याशङ्क्याह–यत्र विषये भूम्यादौ स्तोका त्रिपुंसभोगापेक्षया स्व-

(१) अवृत्तौ दुराचारे स्वस्थ्यापननिरोधान्ययवस्यार्पणादीनि ।
(२) वध भ्रणवियोगनुकूलो व्यापार । (३) यदङ्गकृतोऽपराधस्तच्छेद ।
(४) आगमोऽभ्यधिको भोगादिति मुद्रितपुस्तके पाठः ।
(५) भागमेऽपि बल नैव–इति मुद्रितपुस्तके पाठः ।

र्थापि भुक्तिर्नो वर्तते तत्रागमोऽपि नैव बलं न साध्यार्थसाधकः। आगमे सत्त्वे साधितेऽपि विवादकालपर्यन्तं तदनुवृत्तेरसिद्ध्या तदर्थं भोगानुसरणमावश्यकमिति भावः। यद्यप्यागमो न पृथक् प्रमाणत्वेनोपदर्शितः, तथापि चकारसमुच्चितेऽनुमाने तदन्तर्भाव इत्यवधेयम्। त्रिपुरुषस्त्रिपुरुषस्यागमं विना कृतोऽपि भोगार्थसाधक इति वक्ष्यते ॥ २७ ॥

(मिता०) स्वत्वाव्यभिचारित्वेन भोगस्य स्वत्वे प्रामाण्यमुक्त(१)म्। भोगमात्रस्य स्वत्वव्यभिचारित्वात्कीदृशो भोगः प्रमाणमित्यत आह—

आगम इति। स्वत्वहेतुः प्रतिग्रहक्रयादिः आगमः। स भोगादभ्यधिको बलीयान्। स्वत्वबोधने भोगस्यागमसापेक्षत्वात्। यथाह नारदः-'आगमेन वि(२)शुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति'॥ इति। न च भोगमात्रात्स्वत्वागमः। परकीयस्याप्यपहारादिनोपभोगसम्भवात्। अत एव-'भोगं के(३)वलतो यस्तु कीर्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः'॥ इति स्मर्यते। अतश्च सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति। तथा च स्मर्यते-'सा(४)गमो दीर्घकालश्चाविच्छेदोऽप(५)रवोज्झितः। प्रत्यर्थिसंनिधानोऽपि परिभोगोऽपि पञ्चधा'॥ इति। क्वचिच्चागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह-विना पूर्वक्रमागतादिति। पूर्वेषां पित्रादीनां त्रयाणां क्रमः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना आगमोऽभ्यधिक इति सम्बन्धः। (६)स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः। तत्राप्यागमज्ञाननिरपेक्षो न सत्तानिरपेक्षः। सत्ता तु तेनैवा(७)वगम्यत इति बोद्धव्यम्। विना पूर्वक्रमागतादित्येतच्चाऽ(८)स्मार्तकालप्रदर्शनार्थम्। आगमोऽभ्यधिको भोगादिति च स्मार्तकालविषयम्। अतश्च

---

(१) उक्तं पूर्वं २४ श्लोके पश्यतोऽब्रुवत इत्यत्र। (२) कापट्यरहितेन।
(३) केवलम्। (४) सागमो विशुद्धागमसहितः, अविच्छेदो निरन्तरः, अपरवोज्झितो निरनुक्रोशः।
(५) अपरिवर्जित इति पाठः। (६) स पूर्वक्रमागतो भोगः।
(७) विशिष्टेनोपभोगेनैव। (८) स्मार्तः स्मरणयोग्यकालः।

स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयसम्भवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम् । अस्मार्ते तु काले यो(१)ग्यानुपलब्ध्यभावेनागमाभावनिश्चयासम्भवादागमज्ञाननिरपेक्ष एव सन्ततो भोगः प्रमाणम् । एतदेव स्पष्टीकृतं कात्यायनेन—'स्मार्तकाले क्रि(२)या भूमेः सागमा भुक्तिरिष्यते । अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता' ॥ इति । स्मार्तश्च कालो वर्षशतपर्यन्तः—'शतायुर्वै पुरुष' इति श्रुतेः । अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चयाभावादित्यर्थः । अतश्च वर्षशताधिको भोगः सन्ततो(३)ऽप्रतिरवः प्रत्यर्थिप्रत्यक्षश्चागमाभावे चाऽनिश्चितेऽव्यभिचारादाक्षिप्तागमः स्वत्वं गमयति । अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् । अत एव—'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः' ॥ इत्युक्तम् । न च 'अनागमं तु यो भुङ्क्ते' इत्येकवचननिर्देशात् 'बहून्यब्दशतान्यपि' इत्यपिशब्दप्रयोगात्प्रथम(४)स्यैव पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानमिति मन्तव्यम्, द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात् । न चैतदिष्यते—'आद्ये तु (५)कारणं दाने मध्ये भुक्तिस्तु सागमा' इति नारदस्मरणात् । तस्मात्सर्वत्र निरागमोपभोगे—'अनागमं तु यो भुङ्क्ते' इत्येतद् द्रष्टव्यम् । यदपि—'अन्यायेनापि यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्' ॥ इति, तदपि पित्रा सह पूर्वतरैस्त्रिभिरिति योज्यम् । तत्रापि क्रमात्त्रिपुरुषागतमित्यस्मार्तकालोपभोगलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसम्भवात् द्वितीय वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गः । तथा सति—'स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते' इति स्मृतिविरोधः । 'अन्यायेनापि यद् भुक्तम्' इत्येतच्चान्यायेनापि भुक्तमपहर्तुं न शक्यं किंपुनरन्यायानिश्चये इति व्याख्येयमपिशब्दश्रवणात् । यच्चोक्तं हारीतेन—'यद्विनागममत्यन्तं (६)भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्' ॥ इति । तथाप्यत्यन्तमागमं

(१) योग्यत्वे सत्यनुपलब्धेर्योग्यानुपलब्धित्वतया अभावे च । (२) क्रिया प्रमाणम् ।
(३) निरनुक्रोशः । (४) प्रथमस्य पुरुषस्य च ।
(५) कारणं क्रिया प्रमाणमिति यावत् । (६) भुक्तं पूर्वतरैस्त्रिभि इति पाठ ।

विनेति अत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयं, न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम् । क्रमात्त्रिपुरुषागतमित्येतदुक्ता(१)र्थम् । ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम् । तथा हि—यद्यागमः प्रमाणा(२)न्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम् । अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम् । उच्यते—प्रमाणान्तरेणावगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति । अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयि(३)तुमलम् । मध्ये दानविक्रयादिना स्वत्वापगमसम्भवादिति सर्वमनवद्यम् ॥

( मिता० ) आगमसापेक्षो भोगः प्रमाणमित्युक्तं, आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह—

आगमेऽपीति । यस्मिन्नागमे स्वल्पापि भुक्तिर्भोगो नास्ति तस्मिन्नागमे बलं सम्पूर्णं नैवास्ति । अयमभिसन्धिः । स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानम् । परस्वत्वापादनं च परो यदि स्वीकरोति तदा संपद्यते नान्यथा । स्वीकारश्च त्रिविधः-मानसो वाचिकः कायिकश्चेति । तत्र मानसो ममेदमिति सङ्कल्परूपः । वाचिकस्तु ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः । का(४)यिकः पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः । तत्र च नियमः स्मर्यते—'दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं क(५)रे । केसरेषु तथैवाश्वं दासीं शिरसि दापयेत्' ॥इति । आश्वलायनोऽप्याह—'अनुम(६)न्त्रयेत प्राण्यभिमृशेदप्राणि कन्यां च' इति । तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसंभवात् त्रिविधोऽपि स्वीकारः संपद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासंभवात्स्वल्पेनाप्युपभोगेन भवितव्यमन्यथा दानक्रियादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहिता(७)दागमात् ।

---

( १ ) अस्मार्तकालोपक्षकत्वेनोक्तार्थकम् । ( २ ) भोगान्येन प्रत्यक्षादिना ।

( ३ ) अलं समर्थः ।

(४) कायिकस्तु ख. । (५) करे शुण्डादण्डे ।

(६) प्रतिग्राह्यो यदा प्राणी बलवान् वक्तुं समर्थस्तदा तं प्रतिग्राहं प्रतिग्रहीता अनुमंत्रयेत ।

(७) सहितादागमाभावात् ख. घ. ।

एतच्च द्वयोः पूर्वापरकालपरिज्ञाने। पूर्वापरकालपरिज्ञाने तु त्रिगुणोऽपि पूर्वकालागम एव बलीयानिति। अथवा—'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्' इत्युक्तं,एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते—'आगमोऽप्यधिको भोगाद्विना पूर्वक्रमागतात्। आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो' ॥ इति। अयमर्थः—आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान्। पूर्वक्रमागताद्भोगाद्विना। स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषे लिखितेन भाविताद्गमाद्बलवान्। म(१)ध्यमे तु भोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवानिति। एतदेव नारदेन स्पष्टीकृतम्—'आदौ तु कारणं दान मध्ये भुक्तिस्तु सागमा। कारणं भुक्तिरेवैका सन्तता या चिरन्तनी' ॥ इति ॥ २७ ॥

(वी० मि०) क्वचिदन्यत्रापि केवलो भोगः प्रमाणमित्याह—

आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ॥
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ २८ ॥

तेनागमः क्रयादिः कृतः स विचारेणाऽभियुक्त आगमप्रमापणाय नियुक्तः सन् तमागममुद्धरेत् प्रमापयेत्। तस्यागमकर्तुः सुतस्तस्यागमकर्तृसुतस्य सुतो वा न पितामहेन वा कृतमागमं नोद्धरेत्। तत्र तत्सुतादौ भुक्तिर्गरीयसी इतरनैरपेक्ष्येणार्थसाधिका। वाशब्दोऽनास्थायाम्, तेन प्रपौत्रादिसङ्ग्रहः। तत्रेति सप्तमी षष्ठ्यर्थे। तुशब्देन भोगं व्यवच्छिनत्ति, तत्रापि कृतस्याऽप्युद्धरणीयत्वात् ॥ २८ ॥

( मिता० ) 'पश्यतोऽब्रुवत' इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरण न भवतीत्युक्तम्, तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशङ्क्य पुरुषव्यवस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह—

आगमस्त्विति। येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः स पुरुष कुतस्ते क्षेत्रादिकमित्यभियुक्तस्तमागमं प्रतिग्रहा(२)दिकं लिखितादिभिरुद्धरेत् भा(३)वयेत्। अनेन चाऽऽद्यस्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति। तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत्, किंतु

(१) केवलभोगस्य स्मार्तकालत्वात् स्वत्वे अप्रामाण्यात्।
(२) प्रतिग्रहादेरिति ख.। (३) प्रतिपादयेत्।

अविच्छिन्नाऽप्रतिरवसमक्षभोगम् । अनेन चाऽऽगममनुद्धरतो द्वितीयस्य न दण्डोऽपितु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम् । तत्सुतस्तृतीयो नागमं नापि विशिष्टं भोगमुद्धरेदपितु क्रमागतं भोगमात्रम् । अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम् । तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी । तत्रापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्तव्यम् । त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव, दण्डे तु विशेष इति तात्पर्यार्थः । उक्तं च हारीतेन–'आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतो वा भो(१)ग्यहानिस्तयोरपि' ॥ इति ॥ २८ ॥

(वी०मि०) अत्रापवादमाह--

योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ॥

यतस्तादृशि स्थले आगमेन विनाकृता रहिता भुक्तिर्न कारणमर्थसिद्धेरिति शेषः । अत्र च--

सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।
प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते ॥

इति पञ्चाङ्गो भोगः प्रमाणम् । तथा हि–आगमोऽभ्यधिक इत्यनेन सागमत्वं, विंशतिवार्षिकीत्यादिना दीर्घकालत्वं निश्छिद्रत्वं च, 'अब्रुवत' इत्यनेनाऽन्यरवोज्झितत्वं, 'पश्यत' इत्यनेन प्रत्यर्थिसान्निधानत्वं च दर्शितम् । क्वचित् त्रिपुरुषभोगादौ सागमत्वं नाऽपेक्षितमित्युक्तम्, तत्र चिन्त्यते–आगमव्यतिरेकेण भोगप्रामाण्ये स्मृतिविरोधः तथा च नारदः--

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

तथा--

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अपि शुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

इति । अत्रैवकारेण सिद्धस्य पुनरभिधानेन च सर्वत्र भोगस्यागमसापेक्षत्वमवगम्यत इति मैवम् । आगमव्यतिरेकनिश्चयपरत्वात्

(१) भोग्येति । भोग्यहानिरर्थहानिस्तदनुद्धरणे तयोर्द्वितीयतृतीययोरित्यर्थः ।

नारदवचनस्य। एवं च त्रिपुरुषभोगादेरागमसन्देहेऽपि प्रामाण्यम्।
एतदेव चाऽभिप्रेत्याह स एव—

अन्यायेनापि यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्॥
यद्विनाप्यागमं पूर्वं भुक्तं पूर्वैस्त्रिभिर्भवेत्।
न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्॥

व्यासश्च—

यद्विनागममत्यर्थं भुक्तं पूर्वैस्त्रिभिर्भवेत्।
न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्॥
प्रपितामहेन यद्भुक्तं तत्पुत्रेण च तं विना।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः॥
वर्षाणि विंशतिं भुक्त्वा स्वामिनाऽव्याहता सती।
भुक्तिस्त्रयापौरुषी भूमेर्द्विगुणा च द्विपौरुषी॥
त्रिपौरुषी च त्रिगुणा न तत्रापेक्ष्य आगमः।

एवं च विंशतिवर्षादिभुक्तिरागमनिश्चयसापेक्षैव प्रमाणमिति व्यवस्थितम्। नन्वेवमपि 'पश्यतोऽब्रुवतो हानि'रित्यादेरव्यासनारसमारभ्य 'भुक्तिर्यस्यापि धानिनी, त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालये'दिति वचनविरोधस्तदवस्थ एव। त्रिंशद्वर्षभुक्तेः प्रामाण्याभिधानेनाऽर्थतो विंशतिवर्षभुक्तेः प्रामाण्यनिरासादिति चेत् न, 'पश्यतोऽब्रुवत' इत्यादेर्नीरसभोगपरत्वात् बृहस्पतिवचनस्य च विघातिनीतिशब्देन कलहताडनादिरूपविघाताभावविशिष्टाया स्वयुक्ताया अपि भुक्तेः प्रामाण्यबोधकत्वात्। एवं च सर्वेषां वचनानां विषयभेदेन विरोधे परिहृते दशवर्षादिभोगादीनां स्वत्वजनकत्वं तत्प्रमापकत्वं वा। नाद्यः प्रतिग्रहादेरिव भोगस्य स्वत्वहेतुत्वबोधकाभावात्। नान्त्यः भूयसोऽन्यायकृतभोगे व्यभिचारादिति। इत्थं त्रिपुरुषभोगेऽपि दीयतां दृष्टिः। यदि तु वचनबलात्तत्र छलव्यवहारेणैव निर्णयः। यद्वा त्रिपुरुषभोगप्रामाण्यप्रतिपादकवचनमेव तत्र स्वत्वोत्पत्तौ मानं तदा प्रकृतेऽपि तुल्यं, न स्वेवं षण्मासादिभोगोपि न्यायतौल्येन प्रमाणं स्यादिति चेत् न, वाचनिकेऽर्थे न्यायानवकाशादिति दिक्॥ २९॥

( मिता० ) अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं विनापूर्वकमागतादित्यत्र तस्यापवादमाह—

योऽभियुक्त इति। यदा पुनराहर्त्रादिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतः स्यात् परलोकं गतो भवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत्। यस्मात्तत्र तस्मिन्व्यवहारे भुक्तिरागमरहिता साक्ष्यादिभिः साधितापि न प्रमाणम्। पूर्वाभियोगेन भोगस्य सापवादत्वात्। नारदेनाप्युक्तम्–'तथा(१)रूढविवादस्य प्रेतस्य व्यवहारिणः। पुत्रेण सोऽर्थः संशोध्यो न तं भोगो नि(२)वर्तयेत्' ॥ इति॥२९॥

( वी० मि० ) अनिर्णीते व्यवहारे व्यवहर्तरि मृते व्यवहारः प्रवर्त्तत इत्युक्तमथ निर्णीते व्यवहारे जीवत्यपि व्यवहर्त्तरि क्वचिद्व्यवहारः प्रवर्त्तते क्वचिन्नेत्याह—

नृपेणाऽधिकृताः पूगाः श्रेणयोऽथ कुलानि च ॥
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥
बलो(३)पधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ॥
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ॥
असम्बद्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥ ३२ ॥

नृपेणाऽधिकृताः सभ्यरूपाः। पूगो भिन्नजातीयानां वणिगादीनां समूहः।

समूहो वणिगादीनां पूगः स परिकीर्तितः।

इति कात्यायनवचनात्। श्रेणिर्नानाजातीनामेककर्मोपजीविनां समूहः। कुलं ज्ञातिसम्बन्धिबान्धवसमूहः। एषां मध्ये पूर्वपूर्वमुत्तरोत्तरापेक्षया नृणां व्यवहारविधौ व्यवहारदर्शने गुरु बलवत्। तथा च सभ्यदृष्टो व्यवहारो दुष्टत्वशङ्कायामपि पूगादिभिर्न द्रष्टव्यः। कुलदृष्टस्तु व्यवहारः श्रेणिपर्यन्तेन द्रष्टव्य इति सिद्ध्यति। एवमन्यदूहनीयम्। अथशब्देन सर्वेषां राजनि सत्त्वपरत्वेन राज्ञः सर्वतो गुरुत्वं दर्शितम्। चशब्देन सभ्येभ्यः प्राड्विवाको गुरुरिति समुच्चीयते।

---

(१) तथाशब्दः पूर्वसमुच्चये। नवारूढ ख. ग.। (२) निवारयेत. घ.।

(३) बलोपाधि- इति मुद्रितपुस्तके पाठः।

तथा च कात्यायनः—

कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षः स्मृतोऽधिकः ।
सर्वेषामधिको राजा धर्म्यो यत्तेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः ॥

बलं मद्दः उपधिर्भयलोभादिः ताभ्यां विनिर्वृत्तानिष्पन्नान् स्त्रीभिर्भक्तं रात्रावस्त्रीभिरपि अन्तरागारे गृहाभ्यन्तरे बहिर्ग्रामादभ्यो वनादौ शत्रुभिश्च कृतान् व्यवहारान्निवर्तयेत् न प्रमाणीकुर्यात् पुनर्विचारयेदिति यावत् । स्त्रीनक्तमन्तरागारबहिःशत्रूणां कृतमिति विग्रहः । षष्ठ्यर्थश्च भिन्नभिन्नरूपः सम्बन्धत्वेनोच्यते । स च यथायोगितप्रदर्शित एव । तथाशब्देन पुरराष्ट्रविरुद्धसमुच्चयः मत्तो मद्यादिना, उन्मत्तो ग्रहादिकृतोन्मादयुक्तः, आर्तो व्याधिग्रस्तः, व्यसनी शोकादिपीडितः, बालः षोडशवर्षाभ्यन्तरवयस्कः, भीतो भयवान्, आदिपदेन कामक्रोधाद्याक्रान्तपरिग्रहः । पतैर्योजितः कृतोऽसम्बन्धेन भ्रातृत्वादिसम्बन्धरहितेनाऽनियुक्तेन कृतश्च व्यवहारो न सिध्यति न फलपर्याप्तो भवति । तथा च पुनस्तत्र विचारयेदिति तात्पर्यम् । चकारेण दासादिकृतसमुच्चयः । एवकारो नो सिध्यतीयत्राऽन्वेति, तेन कुलादिकृतस्य कचित्सिद्धावपि नैतादृशस्य कचिदपि सिद्धिरित्युक्तं भवति । अत्र व्यवहारो न न्यायमात्रं किन्तु दानविक्रयाधमनादिरूपाः सर्वाः क्रियाः ।

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र चाप्युपधिं पश्येत्तत्कार्यं विनिवर्तयेत् ॥
बलाद्दत्तं बलाद् भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ।

नारदः—

यद् बालः कुरुते कार्यम(१)स्वतन्त्रस्तथैव च ।
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥
स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गत. ।
तदप्यकृतमेवाहुरस्वतन्त्रः सहेतुभिः ॥
कामक्रोधाभिभूतार्तभयव्यसनपीडिताः ।

(१) अस्वतन्त्र तः—इति ख पुस्तके पाठ ।

रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः॥
तदा तु तत्कृतं कार्यमतन्त्रं परिचक्षते।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः॥
पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तत्समौ॥
न क्षेत्रगृहदासानां दानाधमनविक्रयाः।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः॥
स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः॥
एतान्येव प्रमाण्यानि भर्त्ता यद्यनुमन्यते।
पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः॥
कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत्।
तत्कृतं स्यात्कृतं कार्यं नाऽस्वतन्त्यकृतं तथा॥
कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्॥

अध्यधीनो दासादिः। अस्वतन्त्रश्च लक्षयिष्यत इत्यास्तां विस्तरः ३०-३१-३२॥

(मिता०) अनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तत इति स्थितम्। निर्णीतेऽपि व्यवहारे स्थिते च व्यवहर्तरि व्यवहारः क्वचित्प्रवर्तते क्वचिन्न प्रवर्तते इति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह—

नृपेणेति। नृपेण राज्ञा (१)अधिकृताः व्यवहारदर्शने नियुक्ताः 'राज्ञा सभासदः कार्याः' इत्यादिनोक्ताः। पूगाः समूहाः। भिन्नजातीनां भिन्नवृत्तीनां एकस्थाननिवासिनां यथा ग्रामनगरादयः। श्रेणयो नानाजातीनामेकजातीयकर्मोपजीविनां संघाताः। यथा (२)हेडाबुकादीनां ताम्बूलिककु(३)विन्दचर्मकारादीनां च। कुलानि ज्ञातिसम्बन्धिबन्धूनां समूहाः। एतेषां नृपाधिकृतादीनां चतुर्णां पूर्वं पूर्वं यद्यत्पूर्वं पठितं तत्तद् गुरु बलवज्ज्ञेयं वेदितव्यम्। नृणां व्यवहर्तॄणां व्य-

(१) अधिकृताः प्राड्विवाकादयः। (२) देशान्तरं गत्वा मत्स्याश्ववाऽश्वविक्रेतारो हेडाबुकाः।
(३) कुविन्दस्तन्तुवायः।

वहारविधौ व्यवहारदर्शनकार्ये एतदुक्तं भवति । नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसन्तोषः कुदृष्टिबुद्ध्या भवति तथापि न पूगादिषु पुनर्व्यवहारो भवति । एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम् । तथा श्रेणिनिर्णीते कुलगमनं न भवति । कुलनिर्णीते तु श्रेण्यादिगमनं भवति । श्रेणीनिर्णीते पूगादिगमनम् । पूगनिर्णीते नृपाधिकृतगमनं भवतीति । नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवतीत्युक्तम्—'कुलानि श्रेणयश्चैव (१)गणश्चाधिकृता (२)नृपः । प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम्' इति । तत्र च नृपगमने सो(३)त्तरसरूपेन राज्ञा पूर्वैः सभ्यैः (४)सपणे व्यवहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदासौ दण्ड्यः । अथासौ जयति तदाधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

- ( मिता० ) दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते प्रबलदृष्टस्तु न निवर्तत इत्युक्तम् । इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तते इत्याह—

बलेत्यादि । बलेन बलात्कारेण (६)उपाधिना भयादिना विनिर्वृत्तान्निष्पन्नान् व्यवहारान्निवर्तयेत् । तथा स्त्रीभिः । नक्तं रात्रावन्तःस्त्रीभिरपि । अन्तरागारे गृहाभ्यन्तरे बहिर्ग्रामादिभ्यः । शत्रुभिश्च कृतान्व्यवहारान्निवर्तयेदिति सम्बन्धः ॥ ३१ ॥

( मिता० ) असिद्धव्यवहारिण आह—

मत्तोन्मत्तेति । अपि च—मत्तो मदनीयद्रव्येण । उन्मत्त उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसंभवेनोपसृष्टः । आर्तो व्याध्यादिना । व्यसनमिष्टवियो(८)गाऽनिष्टप्राप्तिजनितं दुःखं तद्वान् व्यसनी । बालो व्यवहारायोग्यः । भीतोऽरातिभ्यः । आदिग्रहणात्पुरराष्ट्रादिविरुद्ध । 'पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः । अनादेयो भवेद्वादी धर्मविद्भिरुदाहृत' ॥ इति मनुस्मरणात् । एतैर्योजितः कृतो व्यवहारो न सिध्यतीति । अनि(९)युक्तासम्बद्धकृतोऽपि व्यवहारो न

(१) इन्दिवर्णानां संघातो गणः । (२) नृपे ग ।

(३) सोत्तरेति उत्तरश्च सा सभ्या इति तत्सहितेन । सोत्तर ख० । (४) सपणे वभयकारितपणसहिते ।

(५) बलपधे घ । तत्रोपाधि केतवं । (६) उपधिना भयेन घ । (७) असम्बन्धकृत घ ।

(८) वियोगेऽनिष्टप्राप्तिजनित घ ग ।

(९) अनियुक्तेनाप्रेषितेन प्रकृतव्यवहारासम्बद्धेन यत्कृत ।

सिद्ध्यतीति सम्बन्धः। यत्तु स्मरणात्—'गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः। विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यति' ॥ इति, तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति। तेषामपि कथञ्चिद्व्यवहारस्येष्टत्वात्। तथा हि—शिष्य(१)शिष्टिर-वधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः' इति गौतमस्मरणात्। 'नोत्तमाङ्गे कथञ्चने'ति मनुस्मरणाच्च। यदि गुरुः कोपावेशवशान्महता दण्डेनोत्तमाङ्गे ताडयति तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति तदा भवत्येव व्यवहारपदम्। तथा—'भूर्या (२)पितामहोपात्ता' इत्यादिवचनात्पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकारिणं (३)प्रविशति तदा पितापुत्रयोरपि भवत्येव व्यवहारः। तथा—'दुर्भिक्षे धर्मकार्ये च व्याधौ (४)संप्रतिरोधके। गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति' ॥ इति स्मरणाद् दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि याच्यमानो न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः। तथा (५)भक्तदासस्य स्वामिना सह (६)व्यवहारं वक्ष्यति। गर्भदासस्यापि, गर्भदासीदीनधिकृत्य-'यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स विमुच्येत पुत्रभागं लभेत च' ॥ इति नारदोक्तत्वात् तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते। तस्माद् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं शिष्यादयो निवारणीयाः राज्ञा सस-भ्येनेति 'गुरोः शिष्ये' इत्यादिश्लोकस्य तात्पर्यार्थः। अत्यन्तनिर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः। यदपि 'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः' ॥ इति नारदवचनम्, तत्रैकस्यापि-'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः'। यथा—'एकं घ्नतं बहूनां च' इत्यादिस्मरणादेकार्थैर्बहुभिः सार्धं व्यवहार इष्यत एवेति, भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो न भवतीति द्रष्टव्यम्। स्त्रीणामित्यपि गोपशौण्डिकादि-

(१) शिष्टिः शिक्षा, अवधेन अताडनेन। (२) भूर्येति प्रकृताध्यायस्य १२१ तमः श्लोकः।
(३) प्रवेशयति ख.। (४) संप्रतिरोधकं नाम सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोधकरम्।
(५) भक्तमन्नम्। (६) तेनाज्ञार्थीदास इति गम्यते। (७) व्यवहारान्. ख. व्यवहारपदं घ.।

स्त्रीणां स्वातन्त्र्याद्व्यवहारो भवत्येवेति तदन्यासां सकलस्त्रीणां पतिषु (१)जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इति व्याख्येयम् । प्रेष्यजनस्य चैवमेतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात्स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति (२)व्याख्येयम् ॥ ३२ ॥

(वी० मि०)'व्यवहारान् यः पश्ये'दित्युक्तं तत्र न केवलमुक्तलक्षण एव व्यवहारो द्रष्टव्यः, किन्तु प्रतिवादिशून्योऽपि साक्ष्यादिनिबन्धननिर्णयफलकतया पराजयनिबन्धनदण्डग्रहणफलकतया च व्यवहारप्रतिरूपकः सन्दिह्यमानस्वत्वनिष्पादी ममाऽयमिति प्रतिज्ञातत्साधकप्रमाणनिर्देशरूपोऽपि तथेत्यभिप्रेत्य निष्पादी व्यवस्थामाह चतुर्भिः—

प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ॥

विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥

निधिस्तावत्पूर्वनिखातं चिरमतिष्ठद्धनम् । तच्च स्वस्वपित्रादिनिहितपरनिहितभेदाद्द्विधा । तत्राद्य प्रनष्टमथाऽधिगतं धनिना राजपुरुषादिना धनं निधिरूप वा धनिने ममेदं धनमिति ब्रुवते नृपेण देयं चेत् लिङ्गैः प्रमाणैस्तद्धन विभावयेत् स्वीयतया प्रमापयेत् । न चेद्विभावयेत्तदा विवादविषयीभूतनिधिसमं दण्डं तादृगनृताभिधानापराधेनार्हति ॥ ३३ ॥

( मिता० ) परावर्त्यं व्यवहारमुक्त्वा इदानीं परावर्त्यं द्रव्यमाह—

प्रनष्टाधिगतमिति । प्रनष्टं हिरण्यादि शौल्किकस्थानपालादिभिरधिगतं राज्ञे समर्पितं यत्तद्राज्ञा धनिने दा(३)तव्यं यदि रू(४)पसंख्यादिभिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समं दण्ड्यः। असत्यवादित्वात् । अधिगमस्य स्वत्वनिमित्तत्वात्स्वत्वे प्राप्ते तत्पराणुत्तिरनेनोक्ता । अत्र च कालावधिं वक्ष्यति—'शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् । अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः' ॥ इति । मनुना पुनः संवत्सरत्रयमवधित्वेन निर्दिष्टम्–'प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्' ॥ इति । तत्र वर्षत्रयपर्यन्तमवश्यं रक्ष-

(१) जीवत्सु सत्सु च । (२) योजनीयम् च ।
(३) दाप्यम् । (४) रूपसंख्या ग ।

णीयम् । तत्र यदि संवत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात् । यदा पुनः संवत्सरादूर्ध्वमागच्छति तदा ष(१)ड्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात् । यथाह–'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः । दशमं द्वादशं वापि सतां धर्ममनुस्मरन्' ॥ इति । तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात्, द्वितीये द्वादशं भागं, तृतीये दशमं, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात् । राजभागस्य चतुर्थोऽशोऽधिगन्त्रे दातव्यः । स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात् । तथाह गौतमः–'प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यमूर्ध्वमधिगन्तुश्चतु(२)र्थोऽशो राज्ञः शेषम्' इति । अत्र संवत्सरमित्येकवचनमविवक्षितम् । 'राजा त्र्यब्दं निधापयेत्' इति स्मरणात् । 'हरेत परतो नृपः' इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञापरम् । ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात् । एतच्च हिरण्यादिविषयम् । गवादिविषये वक्ष्यति–'पणानेकशफे दद्यात्' इत्यादिना ॥ ३३ ॥

( वी० मि० ) द्वितीये त्वाह—

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः ॥
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ३४ ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ॥
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥ ३५ ॥

राजा अज्ञातस्वामिकं निधिं लब्ध्वाऽर्द्धं द्विजेभ्यो दद्यादर्धं कोशे निवेशयेत् । विद्वान् श्रुताध्ययनसम्पन्नो द्विजो ब्राह्मणः पुनर्निधिं लब्ध्वाऽशेषं सम्पूर्णं निधिं स्वयमादद्यात् । स विद्वान् ब्राह्मणो यतः सर्वस्य जगतः प्रभुर्भवति । तदाह मनुः—

सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद् ब्राह्मणानां भुञ्जते हीतरे जनाः ॥

---

(१) किंचिद्भागं ख. । (२) चतुर्थो भागः शेषं राज्ञ इति घ. ।
(१) दद्याद्विप्रेभ्योऽर्धं घ. ।

इति । इतरेणाऽविद्वद्ब्राह्मणेन निधौ लब्धे राजा निधेः षष्ठमंशमाहरेत् गृह्णीयात् । अनिवेदित इति कर्तरि क्तः । अनिवेदितश्चासौ विज्ञातश्च निधिहर्तृत्वेन राज्ञा तं निधिं दण्डं च शक्त्यनुसारेण स्वस्मै दाप्य· । दाप्य एवेत्येवकारेण स्वल्पमपि निधिभाग न ग्राहणीय इति दर्शितम् । चकारः पूर्वार्द्धान्वयी द्वादशांशाहरणादिसमुच्चयार्थः । तदाह मनु —

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥

द्वादशमिति सगुणपरम् । अत्र विष्णुः–'राजा निधिं लब्ध्वार्द्धं ब्राह्मणाय समर्द्धं कोशे प्रवेशयेत्, ब्राह्मणस्तु निधिं लब्ध्वा स्वयमादद्यात् क्षत्रियश्चतुर्थमंशं राज्ञे दद्यादर्धमादद्यात् वैश्यश्चतुर्थमंशं राज्ञे दद्याद् ब्राह्मणेभ्योऽर्द्धं चतुर्थमशं स्वयमादद्यात् शूद्रश्चाप्त द्वादशधा विभज्य पञ्चांशान् राज्ञे ब्राह्मणेभ्योऽशद्वयमादद्यादनिवेदितविज्ञातस्य सर्वस्वमाहरेत्' । एवं च 'अप्रज्ञायमानं वित्तं सोऽधिगच्छेत् राजा तदुद्धरेदधिगन्त्रे षष्ठमंशं प्रदद्या'दिति वसिष्ठवचनं विष्णुवचनानुसाराच्छूद्रपरम् ॥ ३४-३५ ॥

( मिता० ) रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह—

राजेति, इतरेणेति च । उक्तलक्षणं निधिं राजा लब्ध्वा अर्धं ब्राह्मणेभ्यो दत्त्वा शेषं कोशे निवेशयेत् । ब्राह्मणस्तु विद्वान् श्रुताध्ययनसम्पन्नः सदाचारो यदि निधिं लभेत तदा सर्वमेव गृह्णीयात् । यस्मादसौ सर्वस्य जगतः प्रभुः । इतरेण तु राजविद्वद्ब्राह्मणव्यतिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमाहरेत् । यथाह वसिष्ठः—'अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरे(१)न् षष्ठमंशमधिगन्त्रे दद्यात्' इति । गौतमोऽपि—'निध्यधिगमो (२)राजधनं भवति न ब्राह्मणस्याभिरूपस्य, अब्राह्मणो व्याख्याता षष्ठमंश लभेतेत्येके' इति । अनिवेदित इति कर्तरि निष्ठा । अनिवेदितश्चासौ विज्ञातश्च राज्ञेऽप्यनिवेदितविज्ञातः यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा स सर्वं नि-

(१) तद्धरेदधिगन्त्रे षष्ठांश दद्यात् । (२) राजधन न ब्राह्मणस्य ग. घ. ।

धि दाप्यो दण्डं च शक्त्यपेक्षया । अथ निधेरपि स्वाम्यागत्य (१) रूपसंख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्त्वा षष्ठं द्वादशं वांशं स्वयमाहरेत् । यथाह मनुः (८।३५)–'ममायमिति यो ब्रूयान्निधिं सत्येन मानवः । तस्याददीत षड्भागं राजा द्वादशमेव वा'। इति । अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः ॥ ३४-३५ ॥

( वी० मि० ) चौरहृते विशेषमाह—

देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ॥
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ३६॥

चौरेण हृतं तज्जातीयं वा द्रव्यं चौराद् गृहीत्वाऽसम्भवे स्वकोशादपि जानपदाय स्वदेशवासिने देयम् । तुशब्देन जानपदातिरिक्तस्य दानं विधिवत् स्वयं भागग्रहणं च व्यवच्छिद्यते । हि यतश्चौरहृतं तद्द्रव्यं यस्य स्वत्वं तस्मै अददत् तस्य चौरस्य चौर्यजन्यं यादृशं किल्बिषं तादृशं राजाऽऽप्नोति । तदाह मनुः—

दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ।
राजा तदुपयुञ्जानश्चौरस्याऽऽप्नोति किल्बिषम् ।

इति । महाभारते—

प्रत्याहर्तुमशक्तस्तु धनं चौरैर्हृतं यदि ।
स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षिता ॥

इति ॥ ३६ ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुरामामिश्रसूरिसूनुसकलविद्यापारावारपारीणश्रीमन्मित्रमिश्रकृते श्रीवीरसिंहमित्रोदयाख्याने याज्ञवल्क्यव्याख्याने व्यवहारमातृकाप्रकरणम् ॥

(मिता०) चौरहृतं प्रत्याह—

देयमिति । चौरैर्हृतं द्रव्यं चौरेभ्यो विजित्य जानपदाय स्वदेशनिवासिने यस्य तत् द्रव्यं तस्मै राज्ञा दातव्यम् । हि यस्मात् अददत् अप्रयच्छन् यस्य तदपहृतं द्रव्यं तस्य किल्बिषमाप्नोति । तस्य

(१) रूपसंख्यादिभिः क. ग. ।

चौरस्य च । यथाह मनु—'दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् । राजा तदुपयु(१)ञ्जानश्चौरस्याप्नोति किल्बिषम्' ॥ इति । यदि चौरहस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्बिषमाप्नोति । अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्बिषम् । अथ चौरहृताहरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा तावद्धनं स्वकोशाद्दद्यात् । यथाह गौतम—'चोरहृतमवजित्य यथास्थानं गमयेत्कोशाद्वा दद्यात्' । कृष्णद्वैपायनोऽपि-'प्रत्याहर्तुं न शक्तस्तु धनं चौरैर्हृतं यदि । स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षिता' इति ॥ ३६ ॥

इति असाधारणव्यवहारमातृकाप्रकरणम् ।

( वी०मि० ) अथ व्यवहारपदेषु निरूपणीयेषु तेषामाद्यमृणादानमिति मन्वाद्यनुसारात्प्रथममृणादाने—

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ।

इति नारदपरिभाषिते व्यवस्थां दर्शयति प्रकरणसमाप्तिपर्यन्तेन । तत्रादौ वृद्धिमाह—

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ॥
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ३७ ॥
कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ॥
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ३८ ॥
सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ॥
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ३९ ॥

सबन्धके ऋणे प्रयुक्ते सुवर्णादिशते द्वित्रिचतुःपञ्चकमधमर्णक्रमेण स्यात्, तेन ब्राह्मणेनाऽधमर्णेनाबन्धके सुवर्णादिदाने ऋणे गृहीते प्रतिमासं सुवर्णादिद्वयं क्षत्रियेण सुवर्णादित्रयं वैश्येन सुवर्णादिचतुष्टयं शूद्रेण सुवर्णादिपञ्चकवृद्धिरूपं उत्तमर्णाय देयमिति पर्यवस्यति । एवं च सबन्धकेऽपि अशीतितमभागरूपवृद्धिस्थाने माषद्वयोनसुवर्णद्वयादिसुवर्णशतादौ क्षत्रियादिना वृद्धिर्देयेत्यूहनीयं न्यायसाम्यात् ।

(१) तदुपभुञ्जान ग घ ।

अबन्धकेऽपि संलग्ने निराधाने द्विकं शतम् ।
..................... मासलाभ उदाहृतः ॥

साष्टभागः अशीतितमभागस्याऽष्टमो यो भागस्तेन सहितोऽशीतितमो भागः। अत्रापि क्षत्रियादावधमर्णे आधिक्यं न्यायसाम्यादूह्यम् । कान्तारगा बहुतरवृद्ध्यर्थम् । अरण्यादिगमनशीलास्त्वधमर्णाः शतं दशकं दशाधिकं शतम् । सामुद्रास्तु बहुतमवृद्ध्यर्थं समुद्रयानशीला विंशकं विंशत्याऽधिकं शतं मासि मासि दद्युस्तेन सुवर्णशते दश सुवर्णानारण्यका विंशतिसुवर्णान् सामुद्रा दद्युरिति पर्यवस्यति । यत्र तु उक्ताद्धिका न्यूना वा वृद्धिरुत्तमर्णाधमर्णाभ्यां व्यवस्थापिता तत्र तां वृद्धिं सर्वे ब्राह्मणादयोऽधमर्णाः सर्वासु जातिषु ब्राह्मणादिषु सङ्करपर्यन्तेषूत्तमर्णेषु दद्युः । बन्धकितानां पशूनां गवादीनां स्त्रीणां दास्यादीनां च सन्ततिरेव गवादिप्रयोक्तुर्वृद्धिः । अत्र पोषणासमर्थस्य प्रयोक्तुर्गोदास्यादेः पुष्टिस्तत्सन्ततिश्चापेक्षिता ग्रहीतुः क्षीरं परिचर्या च ग्रहणनिमित्तमिति ध्येयमिति रत्नाकरः । परे तु बन्धकत्वेन स्थापितस्य गोदास्यादेर्वृद्धिं तदभावे सन्ततिमेव वृद्धिं गवादिस्वामिनोऽधमर्णा दद्युरिति व्याचक्षते । अथ परमवृद्धिमाह—रसस्य घृतादेः ऋणत्वेन प्रयुक्तस्य चिरकालमवस्थानेऽष्टगुणपर्यन्तं वृद्धिर्भवति । परेत्यनेन च गुणादिवृद्धेर्गणनया सम्भवेऽपि व्युदासः । एवमग्रेऽपि वस्त्रस्य चतुर्गुणा धान्यस्य त्रिगुणा हिरण्यस्य द्विगुणा वृद्धिः परा । अत्र वृद्धिभागे बृहस्पतिः—

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽन्यैः समाख्याता तत्त्वतस्तान्निबोधत ॥
कायिका कालिका चैव चक्रवृद्धिस्तथा परा ।
कारिताऽथ शिखावृद्धिर्भोगलाभस्तथैव च ॥

एतासां लक्षणादिप्रपञ्चस्तु विस्तरभयान्नेह तन्यते स्मृत्यन्तरेष्वनुसन्धेयः । अत्राऽशीतिभागादिना धर्म्या वृद्धिरुक्ता ।

द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ।

इति मनुवचनात् । स्वकृतामित्यनेनोक्ताया नाधिका वृद्धिः । सापि धर्म्यैव । अवधिका स्वधर्म्या । हारीतोऽपि 'पुराणपञ्चविंशत्यां मासेनाऽष्टपणा वृद्धिः, एवं स द्विमासैश्चतुर्भिर्द्विपर्यागतं सन्तिष्ठत एषा धर्म्या वृद्धिर्नाऽनया धर्माच्च्यवते' । द्विपर्यागतं द्विगुणीभूतं

सन्तिष्ठते ततो न वर्द्धते । धर्म्यत्वं तूक्तवृद्धेर्वैश्यानां सर्वदा । आदिपदं त्वन्येषामपीति बोध्यम् । चक्रवृद्ध्यादिकं चाऽधर्म्यमेव । तदाह बृहस्पतिः—

भोगो यत् द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं पश्चाद्वार्धुष्यं तत्तु गर्हितम् ॥

परमवृद्धौ मनुः—

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥

सदः सस्यं, लवो लवनीयं लोमादि वाहिकमिन्नम् ।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ॥
तिष्ठति द्विगुणा वृद्धिः कालकैटायिकस्य च ।

इति कात्यायनवचनात् । कैटं कीटमयम् । गौतमः—'कुसीदं पशूपजलोमक्षेत्रसदवाह्येषु नातिपञ्चगुणम्' । पशूपज घृतव्यतिरिक्तं दुग्धादि ।

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा प्रोक्ता गुडस्य लवणस्य च ॥

इति कात्यायनवचनात् । बृहस्पतिः—

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च ॥

सदो धान्यातिरिक्तं क्षेत्रभवं फलादि । तथा—

उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता ॥
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ।

धान्ये द्विगुणादिनानावृध्यभिधानं मूल्यानुसारेण व्यवस्थापनीयम् । तथा हि प्रयोगकाले सस्योत्पत्तेः पूर्वं यादृशं मूल्यं सस्योत्पत्त्यनन्तरं तस्याल्पह्रासे द्विगुणं, ततोऽधिकह्रासे त्रिगुणं, अधिकतरह्रासे चतुर्गुणं, अधिकतमह्रासे पञ्चगुणं भवतीति । एतच्च सर्ववृद्धिकथनं तूलमात्र एव । 'काले द्विगुणं धान्यं त्रिगुणमिध वर्द्धत' इति हारीतानुसारात् । अथवा वर्णक्रमेण पूर्वोक्तचतुष्टये व्यवस्थापनीयम् । 'धान्ये त्रिगुणत्वे कालभूम्नेति' मिश्राः वाह्यादौ तु देशकालमूल्यादिभेदेन वृद्धिभेदो व्यवस्थापनीय इत्यास्तां विस्तरः ।

अथ वृद्धिनिषेधाः—

पण्यं मूल्यं भृतिर्न्यासो दण्डो यच्चाभिहारिकम् ।
वृथादानाक्षिकपणा वर्द्धन्ते नाऽविवक्षिताः ॥

पण्यं विक्रेयं, भृतिर्वेतनं, आभिहारिकं छलादिना गृहीतं, वृथादानं धर्ममनुद्दिश्य दानं, आक्षिको द्यूतसम्बन्धी पणः एतेऽविवक्षिता अव्यवस्थापितवृद्धयो न वर्द्धन्ते । कात्यायनः—

धर्मसस्याव(धि?)द्यूतमूल्यपण्येषु सर्वदा ।
स्त्रीशुल्केन च वृद्धिः स्यात प्रातिभाव्यागतेषु च ॥

प्रातिभाव्यागतं लग्नकस्य प्रातिभाव्याद्देयतां गतम् । संवर्तः—

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयङ्कृता ॥

व्यासः—

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥

प्रपन्नस्य धनिकवशगतस्याऽधमर्णस्य दीयमानं न गृह्णातीत्यादि च स्वयमेव वक्ष्यति ॥३७—३९॥

(मिता०) साधारणासाधारणरूपां व्यवहारमातृकामभिधायाधुनाष्टादशानां व्य(१)वहारपदानामाद्यमृणादानपदं दर्शयति–'अशीतिभागो वृद्धिः स्यात्' इत्यादिना, 'मो(२)क्ष्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने' इत्येवमन्तेन । तत्र ऋणादानं सप्तविधम् । ईदृशमृणं देयं, ईदृशमदेयं, अनेनाधिकारिणा देयं, अस्मिन् समये देयं, अनेन प्रकारेण देयमित्यधर्मर्णे पञ्चविधम् । उत्तमर्णे दानविधिः, आदानविधिश्चेति द्विविधमिति । एतच्च नारदेन स्पष्टीकृतम्–'ऋणं देयमदेयं च येन यत्र यथा च यत् । दानग्रहण(३)धर्माभ्यामृणादानमिति स्मृतम्' ॥ इति । तत्र प्रथममुत्तमर्णस्य दानविधिमाह तत्पूर्वकत्वादितरेषाम् ।

अशीतिभाग इति । मासि मासि प्रतिमासं बन्धकं विश्वासार्थं यदाधीयते आधिरिति यावत् । बन्धकेन सह वर्तत इति सबन्धकः प्रयोगस्तस्मिन्सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या भवति । अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणा-

(१) व्यवहारपदानाम ख । (२) इदं पद्यमग्रे ६४ तमं द्रष्टव्यम । (३) धर्मश्च ऋणादानं० ख० ग ।

दीनां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्विकं शतं, क्षत्रिये त्रिकं, वैश्ये चतुष्कं, शूद्रे पञ्चकं, मासि मासीत्येव द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चा अस्मिन् शते वृद्धिर्दीयन्ते इति द्वित्रिचतुःपञ्चकं शतम् । 'संख्याया अतिशदन्तायाः कन्' (५।१।२२) इत्यनुवृत्तौ 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' (५।१।४७) इति कन् । ( वृ(१)द्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका । इच्छाकृता कारिता स्यात्कायिका कायकर्मणा ॥ ) इयं च वृद्धिर्मासि मासि गृह्यत इति कालिका । इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति । तथा च नारदेन-'कायिका कालिका चैव कारिता च तथा परा । चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा' ॥ इत्युक्त्वोक्तम्-'कायाविरोधिनी शश्वत्पणपादादिकायिका । प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता ॥ वृद्धिः सा कारिता नामाधमर्णेन स्वयं कृता । वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता' ॥ इति ॥ ३७ ॥

(मिता०) ग्रहीतृविशेषेण प्रकारान्तरमाह—

कान्तारगा इति । कान्तारमरण्यं तत्र गच्छन्तीति कान्तारगाः । ये वृद्ध्या धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः । ये च समुद्रगास्ते विं(२)शकं शतं मासि मासीत्येव । एतदुक्तं भवति-कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विं(३)शकं उत्तमर्णं आदद्यान्मूलविनाशस्यापि शङ्कितत्वादिति ॥

(मिता०) इदानीं कारितां वृद्धिमाह—

.. दद्युरिति । सर्वे वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः । क्वचिदकृतापि वृद्धिर्भवति । तथाह नारदः—'न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् । अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते' ॥ इति । यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेनोक्तम्-'यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्' ॥ इति । यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशा-

(१) धनुश्चिह्नगर्भितोऽयं श्लोक ख० पुस्तके एवास्ति ।
(२) विंशतिक ख० । (३) पञ्चि घ० ।

न्तरं व्र(१)जति तं प्रति तेनैवोक्तम्–'कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्' ॥ इति । यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याच(२)नकालादार(३)भ्याकारितां वृद्धिं दापयेद्राजा । यथाह–'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् । तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत्' ॥ इति । अनाकारितवृद्धेरपवादो नारदेनोक्तः 'पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः । वृथादानाक्षिक(४)-पणा वर्धन्ते नाविवक्षिताः'॥इति । अविवक्षिता अनाकारिता इति॥३८॥

(मिता०) अधुना द्रव्यवि(५)शेषे वृद्धिविशेषमाह—

सन्ततिरिति । पशुस्त्रीणां सन्ततिरेव वृद्धिः । पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः सम्भवति । ग्रहणं च क्षीरपरिचर्यार्थिनः ॥

(मिता०) अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह—

रसस्येति । रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्धमानस्याष्टगुणा वृद्धिः परा । नातः परं वर्धते । तथा वस्त्रधान्यहिरण्यानां यथासंख्यं चतुर्गुणा त्रिगुणा द्विगुणा वृद्धिः परा । वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तम् । 'द्विगुणं हिरण्यं त्रिगुणं धान्यम् । धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च । तुलाधृत(६)मष्टगुणम्' इति । मनुना तु धान्यस्य पुष्पमूलफलादीनां च पञ्चगुणत्वमुक्तम्–'धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम्' इति । शदः क्षेत्र(७)फलं पुष्पमूलफलादि । लवो मेषोर्णाचमरीकेशादिः । वाह्यो बलीवर्दतुरगादिः । धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वे नातिक्रामतीति । तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या । एतच्च सकृदाहरणे च वेदितव्यम् । पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां अनेकशः प्रयो(८)गान्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य

(१) तेन कात्यायनेनैव । (२) याचित ख० । (३) रभ्य वृद्धिं ख० ग० ।
(४) आक्षिकपणाक्षक्रीडासम्बन्धिनः ।
(५) विशेषेण ख० ग० । (६) तुलधृतं त्रितय घ० ग० तृतीयमष्ट घ० ।
(७) वृक्षफलं घ० । (८) गान्तरीकरणे घ० ।

पूर्ववद्वर्धते। सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यासम्भवात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्धत एव। यथाह मनुः (८।१५१)-'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता'। इति। सकृदाहितेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिः सा द्वैगुण्यं नात्येति नाति(१)क्रामति। यदि सकृदाहिता सकृत्प्रयुक्ता। पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति। सकृदाहृतेति पाठे तु शनैः शनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृता द्वैगुण्यमत्येतीति व्याख्येयम्। तथा गौतमेनाप्युक्तम्-'चिरस्थाने द्वैगुण्यं प्रयोगस्य' इति। प्रयोगस्येत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः। चिरस्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः॥ ३९॥

(वी० मि०) अथ ऋणोद्ग्राहणप्रकारमाह चतुर्भिः—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्॥

साध्यमानो नृपं गच्छन्(२)दण्ड्यो दाप्यश्च तद्धनम्॥४०॥

प्रपन्नमधमर्णेनाङ्गीकृतमर्थं साधयन्—

धर्मेण व्यवहारेण छलेनाचरितेन च।

प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च॥

इति मनूक्तप्रकारेण प्रत्याहरन् उत्तमर्णो नृपतेर्न वाच्यो भवेत् न निषेध्यो भवति। साध्यमान उक्तप्रकारेण योज्यमानस्तन्निवारणार्थं नृपं प्रति गच्छन्नधमर्णोऽ(३)परिक्षीणो दण्ड्यस्तद्धनमुत्तमर्णाय दाप्यश्च। चकारात् नृपमगच्छन्नपि बलादिना धनमप्रयच्छन्नधमर्णो धनं दाप्यो दण्ड्यश्चेति समुच्चीयते॥ ४०॥

(मिता०) ऋणप्रयोगधर्मा उक्ताः। सांप्रतं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते—

प्रपन्नमिति। प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिर्भावितं वा साधयन्प्रत्याहरन् धर्मादिभिरुपायैरुत्तमर्णो नृपतेर्न वाच्यो नि-

---

(१) किंतु मूलवृद्धिर्द्विगुणैव भवतीति कुल्लूकः। (२) गच्छन् घ०।

(२) गच्छेदिति मुद्रितपुस्तके पाठः।

(३) अपरिक्षीण-इत्यारभ्य अप्रयच्छन्नधमर्ण-इत्यन्तो भागः ख० पुस्तके नास्ति।

वारणीयो न भवति । धर्मादयश्चोपाया मनुना दर्शिताः ( मनुः ८।४९ )—'धर्मेण व्यवहारेण छलेनाचरितेन च (१)प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च' ॥ इति । धर्मेण प्रीतियुक्तेन सत्यवचनेन व्यवहारेण साक्षिलेख्या(२)द्युपायेन । छलेन उत्सवादिव्याजेन भूषणादिग्रहणेन । आचरितेन अभोजनेन पञ्चमेनोपायेन बलेन निगडबन्धनादिना उपचयार्थं प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कुर्यादिति । प्रपन्नं साधयन्नर्थं न वाच्य इति वदन् अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टीकृतं कात्यायनेन—'पीडयेद्यो धनी कश्चिद्दणिकं न्यायवादिनम् । तस्मादर्थात्स हीयेत तत्समं चा(३)प्नुयाद्दमम्' ॥ इति । यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानो याच्यमानो नृपं गच्छेद्राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्ड्यो भवति, शक्त्यनुसारेण धनिने तद्धनं दाप्यश्च राज्ञा । दापने च प्रकारा दर्शिताः—'राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्तु दुष्टान्संपीड्य दापयेत् ॥ रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत्' ॥ इति । साध्यमानो नृपं गच्छन्नित्येतत्स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं बोद्धव्यम् ॥ ४० ॥

(वी० मि०) बहुषूत्तमर्णेषु केन क्रमेण ऋणं प्रति दाप्य इत्यत्राह—

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ॥
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥

समानजातीयानां धनिनामुत्तमर्णानां मध्ये प्रथमं ब्राह्मणस्याऽनन्त(४)रं नृपतेः क्षत्रियस्य पश्चाद् गृहीतमपि दत्त्वा स्थितो वैश्यादेः ऋणं प्रति दाप्यः । तत्रापि वैश्यस्य दत्त्वा शूद्रस्य ऋणं दाप्य इति विशेषः न्यायसाम्यात् । श्रोत्रियस्य ब्राह्मणस्य राज्ञश्च ब्राह्मणन्तरर्णमदत्त्वैव देयम् । तदाह कात्यायनः—

नानर्णसमवाये तु यद्यत्पूर्वं कृतं भवेत् ।
तत्तद्देयाऽग्रतो देयं राज्ञः श्रोत्रियतोऽनु च ॥
एकाहे ग्रहणं यत्र तत्र कुर्यादृणं समम् ।
ग्रहणं लक्षणं लाभमन्यथा तु यथाक्रमम् ॥

---

(१) प्रपन्नं साधयन्नर्थं घ । (२) लेख्याद्युपन्यासेन घ । (३) माप्नुयात् घ ।
(४) अनन्तरं—नास्ति ग. पुस्तके ।

यस्य द्रव्येण यत्पुण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

राज्ञ ऋणं श्रोत्रियात्प्रागेव दातव्यं पाठक्रमानुसारात् ॥ ४१ ॥

(मिता०) बहूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित आह—

गृहीतेत्यादि । समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥ ४१ ॥

( वी० मि० ) प्रपन्नमप्यृणं साधयितुमशक्त उत्तमर्णो राजद्वारा साधयति चेत्तदा राज्ञा तत्सकाशात् विंशतितमो भागो ग्राह्य इत्यभिद्यान एव प्रागुक्ताधमर्णदण्डस्य संख्यामाह—

राज्ञाधमर्णिको दाप्यः साधितादृशकं शतम् ॥
पञ्चकं च शतं दाप्यः प्राप्तार्थोऽप्यु(१)त्तमर्णिकः ॥ ४२ ॥

राज्ञा साधिताद्दापिताद्धनाद्दशकं शतं स्वस्मै अधमर्णिको दाप्यः । सुवर्णशते साधिते दश सुवर्णान् दण्ड्य २)इति यावत् । प्राप्तार्थस्तूत्तमर्णोऽपि पञ्चकं शतं स्वस्मै राज्ञा दाप्यः । सुवर्णशते पञ्च सुवर्णान् दाप्य इति यावत् । तुशब्देन प्राप्ते प्रागुत्तमर्णस्य दापनं व्यवच्छिद्यते । अपिशब्देन दण्ड्यत्वप्रयोजकरूपशून्यस्यापि साधनमात्रनिमित्तकं दानमिति सूचितम् । हिशब्दस्तु क्वचित्पाठः, तत्राप्ययमेवार्थः ॥ ४२ ॥

( मिता० ) यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन् राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह—

राज्ञेति । अधमर्णिको राज्ञा प्रतिपन्नार्थात्साधिताद्दशकं शतं दाप्यः । प्रतिपन्नस्य साधितार्थस्य दशममंशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः । उत्तमर्णस्तु प्राप्तार्थः पञ्चकं शतं भृतिरूपेण दाप्यः । साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णी-

(१) प्राप्तार्थो ह्युत्तमर्णिक —इति मुद्रितपुस्तके पाठः ।

(२) दण्ड्य—इत्यारभ्य पञ्च सुवर्णान्-इत्यन्तं न स्ति ख० पुस्तके।

यादित्यर्थः । अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितः—'निह्नवे भावितो दद्यात्' इत्यादिना ॥ ४२ ॥

( वी० मि० ) निर्धनं त्वधमर्णं प्रत्याह—

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ॥
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४३ ॥

हीनजातिं उत्तमर्णादनुत्कृष्टजातिमधमर्णं परिक्षीणं निर्धनं ऋणनिस्तारार्थमुत्तमर्णः कर्म स्वापेक्षितं कृषिशुश्रूषणादि कारयेत् । ब्राह्मणस्त्वधमर्णः परिक्षीणोऽपि यथोदयं यथाधनोत्पत्ति शनैः शनैः अवश्यकर्तव्यकुटुम्बभरणाद्याविरोधेन स्वल्पं स्वल्पमपि धनं दाप्यो न तु जात्या उत्तमर्णसमोऽपि कर्म कारणीयः । इदमुपलक्षणम् । उत्तमर्णादुत्कृष्टक्षत्रियादिरपि परिक्षीणः शनैर्दाप्यः । हीनजातित्वस्य कर्मकरणे प्रयोजकत्वेन ग्रन्थकृताऽभिधानात् ।

कर्मणा क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत् ।

इति कात्यायनवचनाच्च । अत्र च कर्मणा ऋणनिस्तारो बोध्यः ॥ ४३ ॥

( मिता० ) सधनमधमर्णिकं प्रत्युक्तम्, अधुना निर्धनमधमर्णिकं प्रत्याह—

हीनजातिमिति । ब्राह्मणादिरुत्तमर्णो हीनजातिं क्षत्रियादिजातिं परीक्षीणं निर्धन(१)मृणार्थं ऋणनिवृत्त्यर्थं कर्म स्वकर्म स्वजात्यनुरूपं कारयेत् तत्कुटुम्बानिरोधेन । ब्राह्मणस्तु पुनः परिक्षीणो निर्धनः शनैः शनैः यथोदयं यथासंभवमृणं दाप्यः । अत्र च हीनजातिग्रहणं समानजातेरप्युपलक्षणम् । अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं च श्रेयोजातेरुपलक्षणम् । अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम् । एतदेव मनुना स्पष्टीकृतम् (८।१७७)—कर्मणापि समं कुर्या(२)द्धनिकेनाधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः' ॥ इति । उत्तमर्णेन समं निवृत्तोत्तमर्णाधमर्णव्यपदेशमात्मानमधमर्णः कर्मणा कुर्यादित्यर्थः ॥ ४३ ॥

---

(१) मृणार्थं कर्म घ. । (२) द्धनिकायाधमर्णिकः ।

( वी० मि० ) पूर्वोक्ता वृद्धिं क्वचिदपवदन्नेव तत्राऽधमर्णस्य कृत्यमाह—

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।

मध्यस्थस्थापितं त(१)त्स्याद्वर्धते न ततः परम् ॥ ४४ ॥

अधमर्णेन दीयमानं स्वकमृणरूपं धनं य उत्तमर्णो वृद्धिलोभादिना न गृह्णाति तस्य तद्धनं मध्यस्थहस्तेऽधमर्णेन स्थापनीयं स्यात्तच्च ततः परं मध्यस्थस्थापनानन्तरं न वर्धते ॥ ४४ ॥

( मिता० ) मध्यस्थस्थापितं न वर्धते—

दीयमानमिति । किञ्च—उपचयार्थं प्रयुक्तं धनं अधमर्णेन दीयमानमुत्तमर्णो वृद्धिलोभाद्यदि न गृह्णाति तदाधमर्णेन मध्यस्थहस्ते स्थापितं यदि स्यात्तदा तत स्थापनादूर्ध्वं न वर्धते । अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववद्वर्धत एव ॥ ४४ ॥

(वी० मि०) अथ ऋणं यादृशं यैः प्रतिदेयं यैश्च न प्रतिदेयं तदाह सप्तभिः श्लोकैः—

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ॥

दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥

अविभक्तैर्भ्रातृपित्रादिभिः कुटुम्बस्याऽवश्यभरणीयस्यार्थे भरणनिमित्तं यदृणं कृतं भवति तदृणं रिक्थिनोऽविभक्ता भ्रात्रादयः सर्वे कुटुम्बिनि कुटुम्बार्थमृणादिकारिणि पित्रादौ प्रेते मृते प्रोषिते वा दद्युः । तुशब्देन ऋणकर्त्रैव देयमिति स्वासाधारणकार्यार्थं कृतस्य । परैः रिक्थिभिर्दानं च व्यवच्छिद्यते ॥ ४५ ॥

( मिता० ) इदानीं देयमृणं यदा येन च देयं तदाह—

दद्युरिति । अविभक्तैर्बहुभिः कुटुम्बार्थमेकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात् । तस्मिन्प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः ॥४५॥

( वी० मि० ) पूर्वोक्ते उभयत्र समुच्चयते—

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ॥

दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥

पतिपुत्राभ्यां कृतमृणं योषित् ऋणकर्तरि पतौ जनकी वा नोत्तम-

(१) तत्स्य० इति मुद्रितपुस्तके पाठः ।

र्णाय प्रतिदद्यात्, पुत्रेण कृतमृणं पिता न दद्यात्। स्त्रिया पत्न्या तथा कुटुम्बार्थादृते कृतमृणं पतिर्न दद्यात्। इदमुपलक्षणम्। यदाह विष्णुः–'न स्त्रीकृतं पतिपुत्रौ' ॥ ४६ ॥

( मिता० ) येन देयमित्यत्र प्रत्युदाहरणमाह—

न योषिदित्यादि। पत्या कृतमृणं योषिद्भार्या नैव दद्यात। पुत्रेण कृतं योषिन्माता न दद्यात्। तथा पुत्रेण कृतं पिता न दद्यात्। तथा भार्याकृतं पतिर्न दद्यात्। कुटुम्बार्थादृत इति (१)सर्वशेषः। अतश्च कुटुम्बार्थं येन केनापि कृतं तत् कुटुम्बिना देयम्। तदभावे तद्दायहैर्देयमित्युक्तमेव ॥ ४६ ॥

( वी० मि० ) पितृकृतमपि किञ्चिदृणमदेयमित्याह—

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ॥
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥

सुरादिभिर्निमित्तैः कृतं दण्डं शुल्कं वा तदवशिष्टं च। त्रयाणामेकवद्भावो द्वन्द्वः। वृथा धर्ममनुद्दिश्य दानं दातुं प्रतिश्रुतमेतत्सर्वं पैतृकं इह ऐहिकाभियोगनिवृत्त्यर्थं पुत्रो न दद्यात्। पितुः परलोकशुद्ध्यर्थं त्विच्छया दद्यात्। एवकारेण पित्रा धर्मार्थं प्रतिश्रुतस्यादानं व्यवच्छिद्यते।

स्वस्थेनार्त्तेन चादेयं श्रावितं धर्मकारणात्।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

इति कात्यायनवचनात्। तथाशब्देन ऋणान्तरोक्तवाणिज्यादिसंग्रहः। तथा च गौतमः—'प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डान् पुत्रान(२)ध्यावहेयुः'। प्रातिभाव्यं दर्शनप्रत्ययप्रातिभाव्यम्। बृहस्पतिः–

सौराक्षिकं वृथादानं कामक्रोधपरिश्रुतम्।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रान्न दापयेत् ॥

व्यासः—

दण्डो वा दण्डशेषो वा शुल्कं तच्छेष एव वा।
न दातव्यस्तु पुत्रेण यच्च न व्यावहारिकम् ॥

(१) इत आरभ्य न दापयेदित्यन्तः पूर्वं ग्रन्थो नास्ति ख० पुस्तके।
(२) सर्वविशेषणं ख.।

व्यावहारिकं व्यवहारबाह्यं कृतं बलात्कारादिकारितम्) कामक्रोधकृतद्वयमाह कात्यायनः—

लिखित्वा शुल्कं चापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वास्त्रियै तत्तु विद्यात्कामकृतं ऋणम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
उक्ततुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥

अत्र दण्डग्रहणेनैव तच्छेषस्योपादानात् पुनस्तद्ग्रहणमतिमहति दण्डे दातव्यमिति, कियच्छेषस्तु सर्वथा न देयः । स्वल्पे तु दण्डे सर्वोऽपि न देय इति लभ्यते इति रत्नाकरः ॥४७॥

(मिता०) पुत्रपौत्रैर्ऋणं देयमिति वक्ष्यति तस्य पुरस्तादपवादमाह—सुरेति । सुरापानेन यत्कृतमृणं कामकृतं स्त्रीव्यसन(१)निमित्तं द्यूते पराजयनिमित्तं दण्डशुल्कयोरवशिष्टं वृथादानं धूर्तबन्दिमल्लादिभ्यो यत्प्रतिज्ञातम्-'धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटचारणचौरेषु दत्तं भवति निष्फलम्' ॥ इति स्मरणात् । एतदृणं पित्रा कृतं पुत्रादिः शौण्डिकादिभ्यो न दद्यात् । अत्र दण्डशुल्कावशिष्टकमित्यवशिष्टग्रहणात्सर्वं दातव्यमिति न मन्तव्यम् । 'दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा । न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम्' ॥ इत्यौशनसस्मरणात् । गौतमेनाप्युक्तम्-'मद्यशुल्कद्यूतकामदण्डान्पु(२)त्राना ध्यावहेयु.' इति । न पुत्रस्योपरि भवन्तीत्यर्थः । अनेनादेयमृणमुक्तम् ॥ ४७ ॥

( वी० मि० ) न पतिः स्त्रीकृत तथेत्युक्तमपवदति—

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ॥
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ ४८ ॥

गोपो गोपालः शौण्डिकः सुराकारकः शैलूषो नटः रजको(३) वस्त्ररञ्जनकर्ता व्याधो मृगजीवी एतेषां या योषितस्तासामृणं पतिः दद्यात् । यतस्तेषां गोपादीनां वृत्तिर्जीवनं तदाश्रया योषिदधीना । अत्र हेतुमन्निगदस्वरसादन्येपि योषिदुपजीविनः धीवरकुलालादयो योषित्कृतमृणं दद्युरिति गम्यते न योषित्पतिपुत्राभ्यामित्यन्तेन ॥४८॥

---

(१) स्त्रव्यसन इति ख० पुस्तकेऽधिकम् । (२) भर्तुकामेन इति क० पुस्तके पाठ ।
(३) निर्णेत्त ख० ग० ।

( मिता० ) न पतिः स्त्रीकृतं तथेत्यस्यापवादमाह—

गोपेति। गोपो गोपालः। शौण्डिकः सुराकरः। शैलूषो नटः। रजको वस्त्राणां रञ्जकः। व्याधो मृगयुः। एतेषां योषिद्भिर्यदृणं कृतं तत्पतिभिर्देयम्। यस्मात्तेषां वृत्तिर्जीवनं तदाश्रया योषिदधीना। यस्माद्वृत्तिस्तदाश्रयेति हेतुव्यपदेशादन्येऽपि ये योषिदधीनजीवनास्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते ॥ ४८ ॥

( वी० मि० ) भार्या पतिकृतमृणं न दद्यादित्युक्तं तत्र विशेषमाह-

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ॥
स्वयं कृतं वा यदृणं नान्यत् स्त्री दातुमर्हति ॥ ४९ ॥

पतिकृतमृणं केनापि निमित्तेन स्वयं प्रतिदेयतया प्रतिपन्नं स्वीकृतं यत्तत्पत्या सह वा यत्कृतमृणं तत्स्वयमेव वा स्त्रिया यदृणं कृतं तत् स्त्रिया देयं नान्यदृणं स्त्री दातुमर्हति। पत्येति पुत्रस्याप्युपलक्षणम्। यदाह कात्यायनः—

भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतम्।

नारदः—

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा।
म(१)र्तुकामेन वा भर्त्रा उक्ता देहि ऋणं प्रिये ॥
अप्रपन्नापि स तदा धनं यद्याश्रितं स्त्रिया ॥ ४९ ॥

( मिता० ) पतिकृतं भार्या न दद्यादित्यस्यापवादमाह—

प्रतिपन्नमिति। मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने यत्प्रतिपन्नं तत्पतिकृतमृणं देयम्। यच्च पत्या सह भार्यया ऋणं कृतं तदपि भर्त्रभावे भार्यया अपुत्रया देयम्। यच्च (२)स्वयं कृतं ऋणं तदपि देयम्। ननु प्रतिपन्नादि त्रयं स्त्रिया देयमिति न वक्तव्यं, सन्देहाभावात्। उच्यते—'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्' ॥ इति वचनान्निर्धनत्वेन प्रतिपन्नादिष्वदानाश(३)ङ्कायामिदमुच्यते प्रतिपन्ने स्त्रिया देयमित्यादि। न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते पारतन्त्र्यमात्रप्रतिपादनपरत्वात्। एतच्च विभागप्रकरणे स्पष्टीकरि-

(१) पुत्रानध्यावहेयुः ख० ग० ।
(२) स्वयमेव ख.। (३) शंकयेदमुच्यते घ.।

ष्यते । नान्यत्स्त्री दातुमर्हतीत्येतत्तर्हि न वक्तव्यं, विधानेनैवान्यत्र प्रतिषेधसिद्धेः । उच्यते—'प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्' इत्येतयोरपवादार्थमुच्यते । अन्यत्सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमिति ॥ ४९ ॥

( वी० मि० ) पित्रा पितामहेन वा कृतस्य ऋणस्य तेन दानासम्भवे केन देयमित्यत्राह—

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ ५० ॥

प्रोषिते प्रवासिनि, प्रेते, व्यसनैरचिकित्स्यव्याध्यादिभिरभिप्लुते आक्रान्ते वा पितरि पितामहे वा तदीयमृणं निह्नवे ऋणग्रहीत्रा ऋण संगोपने पुत्रपौत्राभ्यामृणापलापे वा साक्ष्यादिभिः प्रमाणैर्भावितमुत्तमर्णेन प्रमापित सद्देय पुत्रे पौत्रैर्वा । अपिकारेण प्रव्रजितपरिग्रहः । 'धनग्राहिणि प्रेते प्रव्रजिते वा द्विदशाऽसमाः प्रवसिते वा पुत्रपौत्रैर्वा ऋणं देयं नातः परमनी(१)प्सुभि'रिति विष्णुवचनात् । द्विदशासमा इति कुटुम्बार्थकृताद्दणादन्यत्रेति स्मृतिसार । पुत्रपौत्रैरित्यनेन प्रपौत्रादिव्यवच्छेदः, 'नातः परमनीप्सुभि'रित्यभिधानात् । अत्र विशेषमाह व्यास —

ऋणं पैतामहं देयं प्रतिभाव्यागतं सुतः ।
समं दाप्यस्तत्सुतस्तु न दाप्य इति निश्चयः ॥

समं वृद्धिशून्यं, नरसुतः समदातुः सुतः ॥ ५० ॥

( मिता० ) पुनरपि यदृणं दातव्यं येन च दातव्यं यत्र च काले दातव्यं तत्त्रितयमाह—

पितरीति । पिता यदि दातव्यमृणमदत्त्वा प्रेतो दूरदेशं गतो ऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृ(२)णमावश्यापनेऽवश्यं देयं पुत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन पौत्रत्वेन च । तत्र क्रमोऽप्ययमेव–'पित्रभावे पुत्रः पुत्राभावे पौत्र' इति पुत्रेण पौत्रेण वा निह्नवे कृते अर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः । अत्र पितरि प्रोषित इत्येतावदुक्तम्, कालविशेषस्तु नारदेनोक्तो

(१) नातः परमनीप्सिभिरिति ख० पुस्तके सशोधितोऽशाकरणिक पाठो दृश्यते ।
[२] कृतमृणमवश्यं घ० ।

द्रष्टव्यः—'नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः । ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा' ॥ इति । प्रेतेऽप्यप्राप्तव्यवहारकालो न दद्यात् । प्राप्तव्यवहारकालस्तु दद्यात् । स च कालस्तेनैव दर्शितः । 'गर्भस्थैः सदृशो ज्ञेय आष्टमा(१)द्वत्सराच्छिशुः । बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते ॥ परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते' इति । यद्यपि पितृमरणादूर्ध्वं बालोऽपि स्वतन्त्रो जातस्तथापि नर्णभाग्भवति । यथाह—'अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक् । स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम्' ॥ इति । तथा आसेधाह्वाननिषेधश्च दृश्यते—'अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती । विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः' ॥ इति । तस्मात्—'अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः । ऋणात्पिता मोचनीयो यथा नो नरकं व्रजेत्' ॥ इति । पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्याप्यधिकारः—'न ब्रह्माभि(२)व्याहारयेदन्यत्र स्वधानिनयनात्' इति गौतमस्मरणात् । पुत्रपौत्रैरिति बहुवचननिर्देशाद्बहवः पुत्रा यदि विभक्ताः स्वांशानुरूपेण ऋणं दद्युः । अविभक्ताश्चेत्संभूयसमुत्थानेन गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव वा दद्यादिति गम्यते । यथाह नारदः—'अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः । अविभक्ता विभक्ता वा (३)यस्तां चोद्वहते धुरम्' ॥ इति । अत्र च यद्यपि पुत्रपौत्रैर्ऋणं देयमित्यविशेषेणोक्तं तथापि पुत्रेण यथा पिता सवृद्धिकं ददाति (४)तथैव देयम् । पौत्रेण तु समं मूलमेव दातव्यं न वृद्धिरिति विशेषोऽवगन्तव्यः । 'ऋणमात्मीयवत्पित्र्यं देयं पुत्रैर्विभावितम् । पैतामहं समं देयमदेयं तत्सुतस्य तु' ॥ इति । बृहस्पतिस्मरणात् । अत्र विभावितमित्यविशेषोपादानात्साक्षिविभावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् । समं यावद्गृहीतं तावदेव देयं न वृद्धिः । तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य । एतच्चोत्तरश्लोके (५)स्पष्टीक्रियते ॥ ५० ॥

(वी० मि०) पुत्राद्यतिरिक्तस्यापि ऋणदानाधिकारमभिदधानः प्राह)—

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ॥
पुत्रोऽनन्याश्रितधनः पुत्रहीनस्य रिक्थिनः ॥ ५१ ॥

---

(१) अष्टमात ख० ग० । (२) व्याहरेदन्यत्र ग० ।
(३) यस्तामुद्वहते ख० (४) तथैव ऋणं ख० ग० । (५) स्पष्टयिष्यते ख० ग० ।

व्यसना(१)प्रस्तद्रविणार्हधुर्य्यपुत्रहीनस्य अकिंचनोऽधमर्णस्य ऋक्थग्राही येन केनापि प्रकारेण तत्स्वत्वास्पदीभूतद्रव्याभियोज्यः स उदासीनो व्यवस्थितः धनमृणरूपं दाप्यः । तदभावेऽधमर्णभार्याग्राही दाप्यः । तदभावे पूर्वोक्तविशेषणहीनोऽनन्याश्रितसर्वस्वः आसमन्तादाधेनाऽन्यैः ऋक्थग्राहिभिर्भार्याग्राहिभिः श्रितं यस्य तद्भिन्नः पुत्रो दाप्यः । चकारोऽनुक्तशास्त्रसमुच्चयार्थः, तेन व्यसनाग्रस्तो द्रविणार्हो धुर्य्यः पुत्रोऽतादृशो वा पुत्रो वा गृहीतपितृसर्वस्वः तदीयर्णदानेऽधिकारी सर्वस्वग्राही । अत्रायन्तराभावे व्यसनाग्रस्तद्रविणार्हधुर्य्यपुत्रस्तदभावे तूदासीन ऋक्थग्राही तदभावे तथाविधस्य पुत्रहीनस्य अकिंचनः योषिद्ग्राही तदभावे पूर्वोक्तविशेषणशून्योऽपि पुत्रो धनं दाप्य इति पर्यवसितम् । एवकारः पुत्रहीनस्येत्यनन्तरं योज्यः, तेन धुर्य्यपुत्रवत ऋणं न ऋक्थग्राही योषिद्ग्राही वा दद्यादिति दर्शितम् । तथा च बृहस्पति —

> ऋणभाग्व्यवहारी तु यदि सोपद्रवः सुतः ।
> स्त्रीहारी तु तदैव स्यादभावे धनहारिणः ॥

कात्यायनोऽपि—

> ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
> द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥
> व्यसनाभिप्लुतः पुत्रो बालो वा यत्र दृश्यते ।
> द्रव्यहृद्दापयेत्तं तु तस्याभावे पुरन्ध्रिहृत् ॥

इयं च व्यवस्था व्यसनन्यायोभयानुसारिणी मिताक्षरासम्मता चेति नैतद्विरुद्धं निबन्धान्तरलिखनमाहर्तव्यम् । 'पुत्रहीनस्य अकिंचन' इत्येतेनाऽपुत्रस्योत्तमर्णस्य अकिंचनः सपिण्डस्य स्थाने ऋणं प्रति दाप्याः । अधमर्णा इत्युच्यत इति तु मिताक्षरा । योषिद्ग्राहं विशिनष्टि कात्यायनः—

> निर्द्धनैरनपत्यैस्तु यत्कृतं शौण्डिकादिभिः ।
> तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव तु ॥

आदिपदेन स्त्र्यधीनवृत्तयो ग्राह्याः । तथा—

> दीर्घप्रवासिनिर्धूतजडोन्मत्तादिलिङ्गिनाम् ।
> जीवतामपि दातव्यं तत् स्त्रीद्रव्यसमाश्रितैः ॥

(१) व्यसनग्रस्त-इति ख० पुस्तके पाठः ।

नारदः—

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणा ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात् द्वितीया सा प्रकीर्तिता ॥
मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥
अन्तिमा स्वैरिणीनां या प्रथमा या पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते ॥-॥ ५१ ॥

(मिता०) ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शितास्तेषां च समवाये क्रमोऽपि दर्शितः । इदानीं कर्त्रन्तरसमवाये च क्रममाह—

रिक्थेति । अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति तद्रिक्थम् । विभागद्वारेण रिक्थं गृह्णातीति रिक्थग्राहः स ऋणं दाप्यः । एतदुक्तं भवति—यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिः । योषितं भार्यां गृह्णातीति योषिद्ग्राहः स तथैवर्णं दाप्यः । यो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्यः । योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः । पुत्रश्चानन्याश्रितद्रव्यं ऋणं दाप्यः । अन्यमाश्रितमन्याश्रितं मातृपितृसम्बन्धि द्रव्यं यस्यासावन्याश्रितद्रव्यः न अन्याश्रितद्रव्योऽनन्याश्रितद्रव्यः पुत्रहीनस्य

रिक्थिन ऋणं दाप्य इति सम्बन्धः। एतेषां (१)समवाये क्रमश्च पाठक्रम एव। 'रिक्थग्राह ऋणं दाप्यस्तदभावे योषिद्ग्राहस्तदभावे पुत्र' इति। नन्वेतेषां समवाय एव नोपपद्यते—'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः' इति पुत्रे सत्यन्यस्य रिक्थग्रहणासम्भवात्। योषिद्ग्राहोऽपि नोपपद्यते, (मनुः५।१६२) 'न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते' इति स्मरणात्। तथा तदृणं पुत्रो दाप्य इत्यप्ययुक्तम्। 'पुत्रपौत्रैर्ऋणं देयम्' इत्युक्तत्वात्। अनन्याश्रितद्रव्य इति विशेषणमप्यनर्थकं पुत्रे सति द्रव्यस्यान्याश्रयणासम्भवात्, सम्भवे च रिक्थग्राह इत्यनेनैव गतार्थत्वात्। पुत्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम्। पुत्रे सत्यपि रिक्थग्राह ऋणं दाप्य इति स्थितम्। असति पुत्रे रिक्थग्राहः सुतरां दाप्य इति सिद्धमेवेति। अत्रोच्यते-पुत्रे सत्यप्यन्यो रिक्थग्राही सम्भवति। क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रि(२)क्थहरत्वाभावात्। तथा च क्लीबादीननुक्रम्य 'भर्त(३)व्याः स्युर्निरंशकाः' इति वक्ष्यति। तथा-'सवर्णापुत्रोऽप्य(४)न्यायवृत्तिर्न लभेतैकेषाम्' इति गौतमस्मरणात्। अतश्च क्लीबादिषु पुत्रेषु सत्सु अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रादिः। योषिद्ग्राहो यद्यपि शास्त्राविरोधेन न सम्भवति तथाप्यतिक्रान्तनिषेधः पूर्वपतिकृतर्णापाकरणाधिकारी भवत्येव। योषिद्ग्राहो यश्चतसृणां स्वैरिणीनामन्तिमां गृह्णाति, यश्च पुनर्भुवां तिसृणां प्रथमाम्। यथाह नारदः-'परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्। पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥ कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्र(५)थमा प्रोक्ता पुनःसंस्कारकर्मणा॥ देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते। उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता'॥ उत्पन्नसाहसा उत्पन्नव्यभिचारा। 'असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते। सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता॥ स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति। कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा॥ कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता। पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता॥

(१)समवाय एकक्रमावच्छेदेन, भवति। (२) रिक्थग्राहाभावात् ग।
(३) भर्तव्यास्तु ग भर्तव्याश्च घ। (४) अन्यायवृत्ते न। (५) प्रथम न म ख ग।

मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या । उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥ प्रा(१)प्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥ अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् । ऋणं तयोः पतिकृतं दद्याद्यस्तामुपाश्रितः-' ॥ इति । तथान्योऽपि योषिद्ग्राह ऋणापाकरणेऽधिकारी तेनैव दर्शितः- 'या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् । सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम्' ॥ प्रकृष्टेन धनेन सह वर्तत इति सप्रधना । बहुधना यावत् । तथा 'अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् । ऋणं(२) वोढुः स भजते सैव चास्य धनं स्मृतम्' ॥ इति । पुत्रस्य पुनर्वचनं क्रमार्थम् । अनन्याश्रितद्रव्यं इति बहुषु पुत्रेषु रिक्थाभावेऽप्यंशग्रहणयोग्यस्यैवर्णापाकरणेऽधिकारी नायोग्यस्यान्धादेरित्येवमर्थम् । पुत्रहीनस्य रिक्थिन इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णन्ति तदा ऋणं दाप्या नान्यथेत्येवमर्थम् । पुत्रपौत्रौ च रिक्थग्रहणाभावेऽपि दाप्यावित्युक्तम् । यथाह नारदः-'क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते' ॥ इति सर्वं निरवद्यम् । यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् । पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते । पुत्रहीनस्य रिक्थिन इति रिक्थशब्देन योषिदेवोच्यते । 'सैव चास्य धनं स्मृतम्' इति स्मरणात् ; 'यो यस्य हरते दारान्स तस्य हरते धनम्' इति च । ननु योषिद्ग्राहाभावे पुत्र ऋणं दाप्यः पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम् । उभयसद्भावे न कश्चिद्दाप्य इति । नैष दोषः । अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः । पुत्राभावे तु निर्धननिरपत्ययोषिद्ग्राही दाप्य इति । एतदेवोक्तं नारदेन-'धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः' ॥ इति । धनस्त्रीहारिपुत्राणां समवाये यो धनं हरेत्स ऋणभाक् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्री च धनं च स्त्रीधने ते विद्येते ययोस्तौ स्त्रीधनिनौ तयोः स्त्रीधनिनोरसतोः पुत्र एव ऋणभाक् भवति । धनिपुत्रयोरसतोः स्त्रीहार्येवर्णभाक् । स्त्रीहार्यभावे पुत्र ऋणभाक् पुत्राभावे स्त्रीहारीति विरो(३)धाभासपरिहारः पूर्व·

(१) भ्रान्ता देशाद्धनक्रीता ग. । (२) ऋणं वोढु न. । (३) विरोध ।विरोधभ· ख. ।

वत् । पुत्रहीनस्य रिक्थिन इत्यस्यान्या व्याख्या । एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इ(१)त्यपेक्षायां उत्तमर्णस्य दाप्यास्तदभावे त(२)त्पुत्रादेः, पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते पुत्रहीनस्य रिक्थिन इति । पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनो दाप्याः । तथा च नारदेन—'ब्राह्मणस्य तु यद्देयं सान्वयस्य च(३) नास्ति चेत् । निर्वपेत्तत्स कुल्येषु तद(४)भावेऽस्य बन्धुषु' ॥ इत्यभिहितम् । 'यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्' ॥ इति ॥ ५१ ॥

( वी० मि० ) ऋणदानरूपे विवादपदे 'ऋणं देयमदेयं च' इत्यादिनाऽभिहिते यस्मै न देयमृणं तमभिदधान एव प्रसङ्गादन्यदपि तादृशस्थले निषेधति—

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ॥
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥

अविभक्ते इति भावे क्तः, तेन विभागाभावे भ्रातॄणां परस्परं दम्पत्योर्भार्यापत्योः पितृपुत्रयोश्च प्रातिभाव्यं लग्नकं ऋणं ऋणप्रदानं साक्ष्यं विवादपदार्थसाधकं साक्षित्वं न स्मृतं न स्मृत्यनुमतम् । अथशब्दः पितृव्यभ्रातृपुत्रादिसमुच्चयार्थः । चशब्दः संसृष्टिनां संमुच्चयार्थः । एवकारेण परस्परं प्रातिभाव्यादिकं न भवतीति लभ्यते । हिशब्दः पादपूरणार्थः । तुशब्दोऽनुमतेरसाधारणद्रव्यस्य च व्यवच्छेदार्थः, तेन यदा प्रातिभाव्यं साक्षित्वं चापरो मन्यते तदा पुत्रादिः पित्रादेः प्रतिभूः साक्षी च भवत्येव । सौदायिके च द्रव्येऽविभक्तयोरपि परस्परमृणव्यवहारो भवत्विति । विभागे [illegible] भ्रात्रादीनां प्रातिभाव्यं भवत्येव, अविभक्त इत्यभिधानात् बाधकाभावाच्च । प्रातिभाव्ये साक्ष्ये चान्ये विशेषा वक्ष्यन्ते ॥ ५२ ॥

( मिता० ) अधुना पुरुषविशेषे ऋणग्रहणं प्रतिषेधयन्प्रसङ्गादन्यदपि प्रतिषेधति—

भ्रातॄणामिति । प्रतिभुवो भावः प्रातिभाव्यम् । भ्रातॄणां दम्पत्योः पितापुत्रयोश्चाविभक्ते द्रव्ये द्रव्यविभागात्प्राक्प्रातिभाव्यमृणं साक्ष्यं

(१) इति विरक्षायां ख । (२) तत्पुत्रादे घ ।
(३) नच सिचेत न । (४) मते स्वबन्धुषु ख ।

च न स्मृतं मन्वादिभिः । अपि तु प्रतिषिद्धं साधारणधनत्वात् । प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यव्ययावसानत्वात्, ऋणस्य चावश्यप्रतिदेयत्वात् । एतच्च परस्परानुमतिव्यतिरेकेण । परस्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव । विभागादूर्ध्वं तु परस्परानुमतिव्यतिरेकेणापि भवति । ननु दम्पत्योर्विभागात्प्रातिभाव्यादिप्रतिषेधो न युज्यते । तयोर्विभागाभावेन विशेषणानर्थक्यात् । विभागाभावश्चापस्तम्बेन दर्शितः—'जायापत्योर्न विभागो विद्यत' इति । सत्यम् । श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः सर्वकर्मसु द्रव्येषु वा । तथा हि-'जायापत्योर्न विभागो विद्यते' इत्युक्त्वा किमिति न विद्यते इत्यपेक्षायां हेतुमुक्तवान्—'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु च' इति । हि यस्मात्पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते-'जायापती अग्निमादधीयाताम्' इति । तस्मादाधाने सहाधिकारादाधानसिद्धाग्निसाध्येषु कर्मसु सहाधिकारः । तथा 'कर्म स्मार्तं विवाहाग्नौ' इत्यादिस्मरणाद्विवाहसिद्धाग्निसाध्येष्वपि कर्मसु सहाधिकार एव । अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसु पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते । तथा पुण्यानां फलेषु स्वर्गादिषु जायापत्योः सहत्वं श्रूयते 'दिविज्योतिरजरमारभेताम्' इत्यादि । येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यं, न पुनः पूर्तानां भर्त्रनुज्ञयानुष्ठितानां फलेष्वपि । ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तम्—'द्रव्यपरिग्रहेषु च न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति' इति । सत्यम् । द्रव्यस्वामित्वं पत्न्या दर्शितमनेन न पुनर्विभागाभावः । यस्माद् द्रव्यपरिग्रहेषु चेत्युक्त्वा तत्र कारणमुक्तम्—'भर्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्तव्ये दानेऽतिथिभोजनभिक्षाप्रदानादौ हि यस्मान्न स्तेयमुपदिशन्ति मन्वादयस्तस्माद्भा(१)र्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यात्' इति । तस्माद्भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव न स्वेच्छया । यथा वक्ष्य(२)ति-'यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः' इति ॥ ५२ ॥

---

(१) भार्यायामपि ख. । (२) प्रकृताध्यायस्य ११५ तमे पद्ये. ।

(वी० मि०) सलग्नके विशेषं वक्तुमारभते—

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ॥
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५३ ॥
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ॥
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ ५४ ॥
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ॥
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥
प्रतिभूर्दापितो(१) यत्र प्रकाशं धनिनां धनम् ।
द्विगुणं प्रतिदातव्यं (२)धनिकैस्तस्य तद्भवेत् ॥ ५६ ॥
ससन्तति स्त्रीपशव्यं(३) धान्यं त्रिगुणमेव च ॥
वस्त्रं चतुर्गुणं प्रोक्तं रसाश्चाष्टगुणाः स्मृ(४)ताः ॥ ५७ ॥

दान इति स्वयमेव दानेऽभियोज्यादुत्राहाऽर्पणे चेत्यर्थः ।
एतच्च स्पष्टयति बृहस्पतिः—

अर्थेऽसौ दर्शयामीति साधुरेषोऽपरोऽब्रवीत् ।
दाताहमेतद् द्रविणमर्पयाम्यपरो वदेत् ॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ च विसंवादे तौ विना तत्सुतावपि ॥

य एनमभियोज्यं दर्शयिष्यामि तवेत्याह स एकः प्रतिभूरेवम-ग्रेऽपि योज्यम् । दाताहमित्यत्राऽपर इत्यनुषञ्जनीयम् । आद्यौ स्थिति तुशब्देन आद्ययोः प्रतिभुवोः सुता न दाप्या इति दर्शितम् । वितथे दर्शनसाधुत्वयोरुक्तयोर्विसंवादे सुता अपि दाप्या इति वि-भक्तिपरिणामेनान्वय अपिकारेण दानप्रतिभूसमुच्चयः । पूर्वोक्तमे-व विवृणोति दर्शनेति श्लोकेनेति मिताक्षराकारः । वस्तुतस्तु जीवति प्रतिभुवि व्यवस्था प्रथमश्लोकेऽभिहिता, इतरस्य प्रोषितस्येत्य-र्थात् । मृते प्रतिभुवि द्वितीयश्लोकेनेत्यपौनरुक्त्यमिति तत्त्वम् ।

(१) यत्र प्रकाशं धनिनो धनम्—इति मुद्रितपुस्तके पाठः ।
(२) धनिकै रिति मुद्रित पुस्तके पाठः ।
(३) स तति स्त्रीपशव्येव—इति मुद्रितपुस्तके पाठः ।
(४) रसश्चाष्टगुणस्तथा—इति मुद्रितपुस्तके पाठः ।

ये दानाय प्रतिभुवः स्थितास्तत्पुत्रा दद्युरित्यन्वयः । बहव इति। बहवः प्रतिभुवो यदि भवन्ति तदा स्वस्वत्वव्यवस्थापितैरंशैरुपलक्षितं धनमृणरूपं अधमर्णेन दानाभावे दद्युः। यत्र तुल्यांशो विशिष्य व्यवस्थापितस्तत्र समं स्यादिति न्यायेन व्यवस्था। बहव इत्यनेकत्वोपलक्षके, तेन यत्र द्वौ प्रतिभुवौ तत्रापीयं व्यवस्थेति ध्येयम्। एषु प्रतिभूषु एकच्छायाश्रितेषु धनिकस्योत्तमर्णस्य यथारुचि इच्छानुसारेण दद्युः। एकच्छाया एकसादृश्यं ममेच्छया यस्य कस्यापि पार्श्वे मया गृह्यत इति लग्नकस्वीकृतधनिकव्यवस्थावशात् स पूर्णाभियोगविषयदातृत्वे। एवंरूपे च प्रतिभुवां पुत्रैरपि दानाभियोज्यैः स्वपितृदेयमेव देयं, परं तु वृद्धिरहितमित्युक्तं प्राक्। प्रतिभुवा दत्तस्याऽधमर्णेन परिशोधनमाह प्रतिभूर्दापित इति। यद्धनं प्रतिभूः प्रकाशं ससाक्षिकं राजादिभिर्धनिनां कृते दापितस्तदधमर्णैस्तस्य प्रतिभुवः कृते द्विगुणं दातव्यं भवतीत्यर्थः। इदं च द्विगुणादिवृद्धियोग्यकाले द्रष्टव्यम्। प्रतिभूकृतदानदिनानन्तरं त्रिपक्षानन्तरं वृद्ध्युपक्रमः।

प्रातिभाव्यं तु यो दद्यात् पीडितः प्रातिभावतः।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति॥

इति बृहस्पतिवचनात्। तथाऽन्यदपि प्रातिभाव्यं सम्बन्धेन प्रतिभुवा व्ययितं द्रव्यमृणिना देयम्। यदाह कात्यायनः—

यस्यार्थे येन यद्दत्तं धनिना पीडितेन तु।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात्॥

उक्तस्य द्विगुणत्वस्यापवादमाह ससन्ततीति। स्त्री च पशुश्च स्त्रीपशव्यं तत्प्रतिभुवा दत्तं ससन्तति अधमर्णेन दानकाले यावती सन्ततिर्जाता तावत्सहितमधमर्णेन प्रतिभुवे देयमित्यर्थः। सन्ततिपदं च युगधर्मकर्मादेरप्युपलक्षकम्। सन्ततिः स्त्रीपशुष्वेवेति मिताक्षरायां पाठः। तदर्थश्च स्त्रीपशुषु सन्ततिवृद्धिरूपा या उत्तमर्णाधमर्णाभ्यां प्राक् व्यवस्थापिता सा प्रतिभुवेऽधमर्णेन देयेत्यर्थः। धान्यमिति। यत्र या वृद्धिः परा तत्र तद्वृद्धिसहितं प्रतिभुवे देयमिति समुदायार्थः। एवकारेणाऽधिकवृद्धेर्गणनासिद्धाया व्यवच्छेदः। चकाराभ्यां धान्यादावेव पञ्चगुणत्वादेः क्षौद्रादावत्रानभिहितगुणत्वादेश्च समुच्चयः॥ ५३-५७॥

( मिता० ) अधुना प्रातिभाव्यं निरूपयितुमाह—

दर्शने इति । प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः । तच्च विषयभेदात्त्रिधा भिद्यते । यथा—दर्शने दर्शनापेक्षायां एनं दर्शयिष्यामीति । प्रत्यये विश्वासे मत्प्रत्ययेनास्य धनं प्रयच्छ नायं त्वां वञ्चयिष्यते, यतोऽमुकस्य पुत्रोऽयं उर्वराप्रायभूरस्य ग्रामः(१)रो ऽस्तीति । दाने यद्ययं न ददाति तदानीमहमेव दास्यामीति । प्रातिभाव्यं विधीयत इति प्रत्येकं स(२)म्बध्यते । आद्यौ तु दर्शनप्रत्ययप्रतिभुवौ वितथे अन्यथाभावे अदर्शने विश्वासव्यभिचारे च दाप्यौ राज्ञा प्रस्तुतं धनमुत्तमर्णस्य । इतरस्य दानप्रतिभुवः सुता अपि दाप्याः । वित(३)थ इत्येव शाठ्येन निर्धनत्वेन वाऽधमर्णेऽप्रतिकुर्वति (४)इतरस्य सुता अपीति वदता (५)पूर्वयोः सुता न दाप्या इत्युक्तम् । सुता इति वदता न पौत्रा दाप्या इति दर्शितम् ॥ ५३ ॥

( मिता० ) एतदेव स्पष्टीकर्तुमाह—

दर्शनेति । यदा तु दर्शनप्रतिभूः प्रात्ययिको वा प्रतिभू(६)र्दिवं गतस्तदा तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः । यस्तु दानाय स्थितः प्रतिभू(७)र्दिवं गतस्तस्य पुत्रा दद्युर्न पौत्राः । ते च मूलमेव दद्युर्न वृद्धिम् । 'ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः । समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः' ॥ इति व्यासवचनात् । प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद् गृहीतं तावदेव दद्यान्न वृद्धिम् । तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव दद्यात् । तयोः पौत्रपुत्रयोः सुतौ पौत्र(८)प्रपौत्रौ च प्रातिभाव्यायातं अप्रातिभाव्यं च ऋणं यथाक्रममगृहीतधनौ न दाप्याविति । यदपि स्मरणम्—'खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि । मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति' इति । तदपि लग्नकः प्रतिभूः । खादकोऽधमर्णः । लग्नको यदि वित्तवान्मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम् । यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातस्तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव । यथाह कात्यायनः—'गृहीत्वा

( १ ) वरोऽस्तीति वा घ । ( २ ) सम्बध्य ख. ।
( ३ ) वितथेऽन्यथाभावे । ( ४ ) दानप्रतिभुवः ।
( ५ ) दर्शनप्रत्ययप्रतिभुवो । ( ६-७ ) दिवं गत म । ( ८ ) प्रपौत्रपौत्रौ ख घ ।

बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् । विना पित्रा धनात्तस्माद्दाप्यः स्यात्तद्दणं सुतः' ॥ इति । दर्शनग्रहणं प्रत्ययस्योपलक्षणम् । विना पित्रा पितरि प्रेते दूरदेशं गते वेति ॥ ५४ ॥

(मिता०) यस्मिन्ननेकप्रतिभूसम्भवस्तत्र कथं दा(१)प्यस्तत्राह—

बहव इति । यद्येकस्मिन्प्रयोगे द्वौ बहवो वा प्रतिभुवः स्युस्तदृणं संविभज्य स्वांशेन दद्युः । एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिता एकच्छायाश्रिताः । अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दा(२)ने प्रतिभुवोऽपि प्रत्येकं कृत्स्नद्रव्यदानाय स्थिताः । एवं दर्शने प्रत्यये च ते(३)ष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम् । अतश्च धनिको वित्ताद्य(४)पेक्षायां स्वार्थं यं प्रा(५)र्थयते स एव कृत्स्नं दा(६)प्यो नांशतः । एकच्छाया(७)श्रितेषु यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च संनिहितस्तदा धनिकेच्छया सर्वं दाप्यः । मृते तु कस्मिंश्चित्तत्सुतः स्वपित्रंशमवृद्धिकं दाप्यः । यथाह कात्यायनः—'एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतः सर्वं पित्रंशं तु (८)मृते समम्' ॥ इति ॥ ५५ ॥

( मिता० ) प्रातिभाव्यर्णदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—

प्रतिभूरिति । यद्द्रव्यं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीडितः प्रकाशं सर्वजनसमक्षं राज्ञा धनिनो दापितो न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम् । यथाह नारदः—'यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः । ऋ(९)णिकस्तं प्रतिभुवे द्विगुणं प्रतिपा(१०)दयेत्'॥ इति । ऋणिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात् । तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम् । वचनारम्भसामर्थ्यात् । एतच्च हिरण्यविषयम् । ननु इ(११)दं प्रतिभूरिति वचनं द्वैगुण्यमात्रं प्रतिपा(१२)दयति । तच्च पूर्वोक्तकालकल्पकमाबाधेनाप्युपपद्यते । यथा जातेष्टिविधानं शुचित्वाबाधेन । अपि च सद्यः सवृद्धिक-

(१) दातव्यमित्याह ख. । (२) दाने प्रतिभुव· घ. । (३) तथैकच्छाया ख. ।
(४) वित्ताद्यपेक्षया घ. ।(५) य· प्रार्थयते ख. । (६) दद्यान्नांशतः ख. ।
(७) तेष्वेकच्छाया ख. । (८) मृते सति घ. । (९) ऋणिकं तं ग. ।
(१०) प्रतिदापयेत् ग. ।(११) इदं वचनं ग. घ. । (१२) न तु कालकलाक्रमादिकम् . ।

दानपक्षे पशुस्त्रीणां सद्यः सन्तत्यभावान्मूल्यदानमेव प्राप्नोतीति । तदसत्—'व(१)स्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा' इत्यनेनैव कालक्रमेण द्वैगुण्यादिसिद्धेः । द्वैगुण्यमात्रविधाने चेदं वचनमनर्थकं स्यात् । पशुस्त्रीणां तु कालक्रमपक्षेऽपि सन्तत्यभावे स्वरूपदानमेव । यदा प्रतिभूरपि द्रव्यदानानन्तरं कियतापि कालेनाधमर्णेन संघटते तदा (२)सन्ततिरपि समवत्येव । यद्वा पूर्वसिद्धसन्तत्या सह पशुस्त्रियो दास्यन्तीति न किंचिदेतत् । अथ प्रातिभाव्य प्रीति(३)-कृतम् । अतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव । न च प्रीतिदत्तस्य याचनात्प्राग्वृद्धिरस्ति । यथाह—'प्रीतिदत्तं तु यत्किंचिद्वर्धते न त्वयाचितम् । याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम्' ॥ इति । अतश्चाप्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यत इति । तदप्यसत् । अस्यार्थस्यास्माद्वचनादप्रतीतेर्द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते । तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यादिति सुष्ठूक्तम् ॥ ५६ ॥

( मिता० ) प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह—

संततिरिति । हिरण्यद्वैगुण्यवत्कालाभादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः । श्लोकस्तु व्याख्यात एव । यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता, तद्द्रव्यं प्रतिभूदत्तं (४)खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्यैव सद्यो दातव्यमिति तात्पर्यार्थः । यदा तु दर्शनप्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थस्तदा त-(५)दन्वेषणाय तस्य पक्षत्रयं दातव्यम् । तत्र यदि तं दर्शयति तदा मो(६)क्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः । 'नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् । यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥ काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् । निबन्धं दा(७)पयेत्तं तु प्रेते चैष विधिः स्मृतः' ॥ इति कात्यायनवचनात् । ल(८)ग्नके विशेषनिषेधश्च तेनैवोक्तः—'न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा । निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित् ॥ नैव रिक्थी न मित्र च न चै

(१) धनदान ख । (२) सततिरेव घ । (३) प्रीतिकृत च छ. ।
(४) खादकेनाधमर्णेन । (५) तदन्वेषणाय ग । (६) मोक्तव्यो नान्यथा ग ।
(७) दापयेत्तु प्रेते चैव छ । (८) लग्नक प्रतिभू ।

वात्यन्तवासिनः । राजकार्यनियु(१)क्ताश्च ये च प्रव्रजिता नराः ॥ न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् । जीवन्वापि पिता यस्य तथैवेच्छाप्रवर्तकः ॥ नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति' ॥ इति । सन्दिग्धोऽभिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः ॥ इति प्रतिभूविधिः ॥ ५७ ॥

( वी० मि० ) मासि मासि सम्बन्धके विशेषमाह प्रकरणसमाप्तिपर्यन्तेन—

आधिः प्रणश्येद्विगुणे धने यदि न मोक्ष्यते ॥
काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ ५८ ॥

तत्राधिश्चतुर्विधः—स्वरूपप्रकारकालप्रमाणरूपोपाधिभेदात् । तथा(२) च बृहस्पतिः—

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥
यादृच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षि(३)मान् ।

जङ्गमस्थावरत्वादिचतुष्टयेन यथाक्रमं स्वरूपादिचतुष्टयनिरूपकेन चतुरर्द्धं लेख्यारूढ इति साक्ष्यतिरिक्तप्रमाणवान् इत्यर्थः । वचनान्तराणि त्वेतदविरोधेनैव नेयानीति संक्षेपः । द्विगुणे धने जाते यदि गोप्याधिरधमर्णेन न मोक्ष्यते तदाऽधमर्णस्य नश्यति । कालकृतः कृतकालः, यदि अमुककाले मया नाधिर्मोक्ष्यते तदा तवैव स्वं भवतीति व्यवस्थापितकाले इति यावत् । एतादृशो भोग्यो गोप्यो वा आधिः काले तादृशव्यवस्थाविषयकालेऽधमर्णेन ऋणाप्रतिदाने नश्येदधमर्णस्य स्वत्वानाश्रयो भवतीत्यर्थ इति मिताक्षरादयः । रत्नाकरकृतस्तु कांस्यादावपरिभाष्याधिकृते आधातुरनुमतिं विना धनिकस्वत्वोचितव्यवहारस्य विश्वेपामदर्शनादन्यथैतद्वचनं व्याख्येयमित्याहुः । सा च व्याख्या यत्राऽधमर्ण एव परिभाषते द्विगुणे धने यदि न मया मोक्ष्यते आधिस्तदा तवैवायमिति तदा द्विगुणे धने जातेऽमोक्षणेऽधमर्णस्य प्रणश्येत् । अत्र हेतुः कालकृतः स्वत्वध्वंस उत्तमर्णसत्त्वेव व्यवस्थास्थापितः कालो यत्र स आधिर्व्यवस्थापितकाले न नश्येत् । फलभोग्य-

(१) प्रयुक्तास्तु घ. ।
(२) तदा—इति ख० पुस्तके पाठः । (३) साक्षिवान—इति क०पुस्तके पाठः ।

स्तु भोग्याधिरकृतकालः समासहस्रेणापि न नश्यतीति द्विगुणे सति मया मोचनीय इत्येतावन्मात्रमपि सुदृढं व्यवस्थाप्य स्वामिना आहितः आधिः अर्थाद्गोप्यः स द्विगुणे मूलधने सति यदि नोन्मुच्यते तदा नश्यति । द्विगुण इति परमवृद्धिपरम् । भोग्याधिस्तु एवं परिभाषितोऽपि पतितव्यूहादिद्वारा द्विगुणे धने सत्यमोचितोऽपि न नश्यति । कालकृतः कृतकालः अस्मिन् काले यदि न मोच्यते तदा तवैवेति स्वीकृत्यादितः तस्मिन् अमोचितः सर्वोऽप्याधिर्नश्यति । एवं च द्विगुणे धन इति यथाश्रुतमेव ग्राह्यम् । शिष्टव्यवहारादिविरोधे तु कालविशेषोपलक्षणपरमिति व्याख्या तु साधीयसीति प्रतिभाति । प्रणश्येदित्यत्र विशेषमाह बृहस्पतिः—

पूर्णावधौ शान्तलाभे बन्धे स्वामी धने भवेत् ।
अनिर्गते दशाहे तु ऋणी प्रोञ्छितुमर्हति ॥

व्यासश्च—

बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च ।

इति । अत्र सुस्थिता(१)सुस्थितत्वधमर्णावादाय व्यवस्था ॥५८॥

(मिता०) धनप्रयोगे विश्वासहेतू द्वौ प्रतिभूराधिश्च । यथाह नारदः—'विश्र(२)म्भहेतू द्वावत्र प्रतिभूराधिरेव च' इति । तत्र प्रतिभूर्निरूपितः । इदानीमाधिर्निरूप्यते । आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते आधीयत इत्याधिः । स च द्विविधः कृतकालोऽकृतकालश्च । पुनश्चैकैकशो द्विविध —गोप्यो भोग्यश्च । यथाह नारदः—'अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः । कृतकालेऽपनेयश्च यावद्देयोद्यतस्तथा ॥ स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च' ॥ इति । कृतकाल आधानकाल एवामुष्मिन्काले दीपोत्सवादौ मयायमाधिर्मोक्तव्योऽन्यथा तवैवाधिर्भविष्यतीत्येवं (३)निश्चिते काले उपनेय आत्मसमीपे नेतव्यः । मोचनीय इत्यर्थः । देयं दानम् । देयमनतिक्रम्य यावद्देयम् । उद्यतः नियतः, स्थापित इत्यर्थः । यावद्देयमुद्यतो यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः । गोप्यो रक्षणीयः ॥ एवं चतुर्विधस्याधे-

(१) अत्र सुस्थितत्वध०—इति ग० पु० पाठः ।
(२) विश्रम्भो विश्वास । (३) निरूपिते घ ग ।

विशेषमाह—

आधिरिति । प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधिरधमर्णेन द्रव्यदानेन न मोक्ष्यते तदा नश्यति । अधमर्णस्य धने प्रयोक्तुः स्वं भवति । कालकृतः कृतकालः, आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः । स तु काले निरूपिते प्राप्ते नश्येत् द्वैगुण्यात्प्रागूर्ध्वं वा । फलभोग्यः फलं भोग्यं यस्यासौ फलभोग्यः क्षेत्रारामादिः स कदाचिदपि न नश्यति । कृतकालस्य गोप्यस्य भोग्यस्य च तत्कालातिक्रमे नाश उक्तः—'काले कालकृतो नश्ये'दिति । अकृतकालस्य भोगस्य नाशाभाव उक्तः—'फलभोग्यो न नश्यती'ति । पारिशेष्यादाधिः प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यं बृहस्पतिवचनात्—'हिरण्ये द्विगुणीभूते पूर्णे काले (१)कृतावधेः । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च ॥ तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्' ॥ इति ॥ नन्वाधिः प्रणश्येदित्यनुपपन्नम्, अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात् । धनिनश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात् । मनुवचनविरोधाच्च ( ८।१४३ )—'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः' इति । कालेन संरोधः कालसंरोधश्चिरकालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न निसर्गोऽस्ति नान्यत्राधीकरणमस्ति न च विक्रयः । एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यत इति । उच्यते—आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः । आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः । तत्र धनद्वैगुण्ये निरूपितका(२)लप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिः उत्तमर्णस्य चात्यन्तिकं स्वत्वं भवति । न च मनुवचनविरोधः । यतः (मनुः८ १४३)—'न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्' इति । भोग्याधिं प्रस्तुत्येदमुच्यते—'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः' इति । भोग्यस्याधेश्चि(३)रकालावस्थानेऽप्याधीकरणविक्रयनिषेधेन धनिनः (४)स्वत्वं नास्तीति । इहाप्युक्तं 'फलभोग्यो न नश्यती'ति ।

(१) कृतावधौ ध. । (२) काले प्राप्ते च ख. । (३) श्चिरन्तनकाला घ. ।
(४) स्वत्वं न भवति ख. ।

गोप्याधौ तु पृथगारब्धं मनुना (८।१४४)—'न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' इति । इहापि वक्ष्यते—'गोप्याधिभोगे नो वृद्धि'रिति । 'आधिः प्रणश्येद्द्विगुणे' इति गोप्याधिं प्रत्युच्यते इति सर्वमविरुद्धम् ॥ ५८ ॥

गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते ॥
नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥ ५९ ॥

(वी० मि०) गोप्याधेस्ताम्ररजतादेरुपभोगेऽल्पेपि वृद्धिमर्हत्यपि नो भवति समयातिक्रमात् । तथा सोपकारे भोग्यरूपोपकारकारिणि गवादौ तथा हापिते सम्यक् व्यवहाराक्षमत्वं नीते आधौ न वृद्धिः । नष्टो भङ्गादिना सर्वथा व्यवहाराक्षमतां गतः, विनष्टो नाशं प्राप्तः, चकाराच्चोरहृतः धनिकेनाऽऽधिर्देयः अधमर्णाय । दैवराजकृताद्दोषादृत इति हापितादौ सर्वत्राऽन्वेति । धनिकदोषेणेति तदर्थः । अथशब्देन हापितात्पूर्वोक्तेन उभयस्मिन् । दैवराजकृतादृत इत्यस्याऽन्वयव्यवच्छेदः । यदि तु न ददाति तदा मूलनाशः स्यात् ।

विनष्टे मूलनाशः स्याद्दैवराजकृतादृते ।

इति नारदवचनात् । यत्र तु ऋणापेक्षया बहुमूल्यं रत्नाद्याधीकृतं नष्टं विनष्टं वा तत्र स्वद्रव्याधिकं यदाधीकृतमूल्यं तदधमर्णाय सर्वं दद्यात् ।

भुक्ते च्चासारतां प्राप्ते फलहानिः प्रजायते ।
बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत् ॥

इति बृहस्पतिवचनात् ।

गृहीतदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी ॥

इति व्यासवचनाच्च ।

यः स्वामिनाननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥

इति मनुवचनं तु अभोग्याधेर्दासादेरपेक्षिते भोगे योजनीयम् । तादृशे तु सर्ववृद्धिहानिर्मन्वुक्तेति न विरोधः ॥ ५९ ॥

(मिता०) किञ्च—

गोप्येति । गोप्याधेस्ताम्रकटाहादेरुपभोगे न वृद्धिर्भवति । अ-

ल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या समयातिक्रमात् । तथा सोपकारे उपकारकारिणि बलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके हापिते हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिरिति सम्बन्धः । नष्टो विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना पूर्ववत्कृत्वा देयः । तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः । उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या। भोग्याधिर्यदि न(१)ष्टस्तदा पूर्ववत्कृत्वा देयः । वृद्धिसद्भावे (२)वृद्धिरपि हातव्या । विनष्ट आत्यन्तिकं नाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण । तद्दाने सवृद्धिकं मूल्यं लभते । यदा न ददाति तदा मूलनाशः-'विनष्टे मूलनाशः स्याद्दैवराजकृतादृते' इति नारदवचनात् । दैवराजकृतादृते । दैवमग्न्युदकदेशोपप्लवादि । दैवकृताद्विनाशाद्विना । तथा स्वापराधरहिताद्राजकृतात् । दैवराजकृते तु विनाशे सवृद्धिके मूल्यं दातव्यमधमर्णेनाध्यन्तरं वा । यथाह-'स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते । आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्' ॥ इति । तत्र स्रोतसापहृत इति दैवकृतोपलक्षणम् ॥ ५९ ॥

आधेः स्वीकरणात् सिद्धी रक्ष्यमाणोऽप्यसारताम् ॥
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥

( वी० मि० ) आधेः स्वीकरणात् गोप्यस्य स्वाधीनीकरणात् भोग्यस्य च भोगात् सिद्धिः, न तु साध्यलेख्यादिमात्रेण ।

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

इति नारदवचनात् । एतेन-'आधौ प्रतिग्रहक्रीते पूर्वैव बलवत्तरा' इति वचने स्वीकारान्ता क्रिया बलवती । पूर्वा स्वीकाररहिता तु पूर्वापि न बलवतीत्यर्थः पर्यवस्यति । स चाधी रक्ष्यमाणोऽपि यद्यसारतां (३)कालेन दिवसेन यातस्तदान्य आधिरधमर्णेनाधेयो धनमृणरूपं वा धनिने दद्यादित्यर्थः । अपिर्विरोधार्थः । गवादौ दैवाद्बन्धकावस्थायां नष्टे मूलहानिरित्यत्रापि जात्याचार एव मानम् ॥ ६० ॥

---

( १ ) नष्टश्चेत्तदा घ. । ( २ ) वृद्धिर्हातव्या ख. ।
( ३ ) काले—इति क० पु० पाठ ।

( मिता० ) अपि च—

आधेरिति । आधेर्भोग्यस्य गोप्यस्य च स्वीकरणादुपभोगादाधिग्रहणसिद्धिर्भवति न साक्षिलेख्यमात्रेण । यथाह नारदः—'आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा । सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा' ॥ इति । अस्य च फलम्—'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति । या स्वी(१)कारान्ता क्रिया सा पूर्वा बलवती । स्वीकाररहिता तु पूर्वापि न बलवतीति । स चाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्यसारतामापन्नः एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां गतस्तदाधिरन्यः कर्तव्यो धनिने धनं वा देयम् । रक्ष्यमाणोऽप्यसारतामिति वदता आधिः प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम् ॥ ६० ॥

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ॥
सत्यङ्कार(२)कृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥

(वी० मि०) चरित्रेण शोभनाचरितेन बन्धककृतं उत्तमर्णेनात्मसात्कृतं यद्बहुमूल्यं ऋणाद्यल्पमूल्यं वा तत्र स राजादिर्वृद्ध्या सहित धनं अधमर्णं दापयेत् । द्विगुणे धने आधिः प्रणश्यति । यद्वा चरित्र पुण्यं यत्र बन्धक कृत तत्राऽधमर्णार्थत्वं न पुण्यस्य नश्यति, किन्तु वृद्धिसहित धनं दापयेदित्यर्थः । सत्यङ्कारे द्विगुणेऽपि द्रव्ये न तवाधिर्भविष्यति किन्तु द्विगुणं द्रव्यमेव मया दातव्यमिति व्यवस्थाविशेषकृतमाधीकृतं द्रव्यं द्विगुणं प्रतिदापयेदन्यथा स्वाधिर्नश्यतीत्यर्थः । साम्प्रदायिकास्तु दातव्यक्रयव्यवस्थानिर्वाहाय यदङ्गुलीयकादि विक्रेतृहस्ते कृतं द्रव्यं तद्व्यवस्थातिक्रमे विक्रेत्रा कृते तेन द्विगुणं क्रेत्रे देयम् । यदि तु क्रेत्रैव व्यवस्थातिक्रमः कृतस्तदा स एव विक्रेत्रे तद्द्रव्यं द्विगुणीकृत्य दद्यादिति प्रसङ्गादुक्तं ग्रन्थकृतेति व्याचक्षते ॥ ६१ ॥

( मिता० ) 'आधिः प्रणश्येद्द्विगुणे' इत्यस्यापवादमाह—

चरित्रेति । चरित्रं शोभनचरितं चरित्रेण बन्धक चरित्रबन्धकं तेन यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतम् । एतदुक्तं भवति—धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याऽधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम् । यदि वाधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं

( १ ) स्वीकारान्तक्रिया पूर्वा ख ।
( २ ) सत्याकारकर—इति क पुस्तके सत्यङ्कारकर—इति ख पुस्तके पाठभेदः ।

गृहीत्वा बहुद्रव्यमेव धनिनाऽधमर्णाधीनं कृतमिति । तद्धनं स नृपो वृद्ध्या सह दापयेत् । अयमाशयः–एवं(१)रूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति किन्तु द्रव्यमेव द्विगुणं दातव्यमिति । तथा सत्यङ्कारकृतम् । करणं कारः । भावे घञ् । सत्यस्य कारः सत्यङ्कारः–'कारे सत्यागदस्य' इति मुम् । सत्यङ्कारेण कृतं सत्यङ्कारकृतम् । अयमभिसन्धिः–यदा बन्धकार्पणसमय एवेत्थं परिभाषितं द्विगुणीभूतेऽपि द्रव्ये मया द्वि(२)गुणं द्रव्यमेव दातव्यं नाधिनाश इति तदा तद्द्विगुणं दापयेदिति । अन्योऽर्थः चरित्रमेव बन्धकं चरित्रबन्धकं, चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते । यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृ(३)तं तत्र तदेव द्विगुणीभूतं दातव्यं नाधिनाश इति । आधिप्रसङ्गादन्यदुच्यते सत्यङ्कारकृतमिति । क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणं दातव्यम् । तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यवस्थातिवर्ती तेन तदेव दातव्यम्, (४)इतरश्चेद्व्यवस्थातिवर्ती तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिदापयेदिति ॥ ६१ ॥

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ॥
प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥ ६२ ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ॥
विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥

( वी० मि० ) धनदानेनाधिमोचनार्थमुपस्थितस्याधिर्धनिना मोक्तव्योऽधमर्णाय दातव्योऽन्यथा वृद्धिलोभादिनाऽमोचने स उत्तमर्णः स्तेनः चौरवद्दण्ड्यो भवेत् । एतच्चाऽविमोचनविरोधि व्यवस्थान्यं बलवत्त्वादिति ध्येयम् । राजदैवकृतादृत इति सर्वत्राऽन्वययोग्येऽन्वेति । प्रयोजके धनप्रयोक्तरि असति मृते प्रोषिते प्रव्रजिते वा कुले प्रयोक्तृदायभागिनि क्रमेण पुत्रादौ धनं सवृद्धिकं न्यस्य निधाय स्वीयमाधिमाप्नुयादिति । यदि तु कोऽप्युत्तमर्णस्य प्रोषितस्य धनग्राहको नास्ति तदा तत्काले कृतमूल्यः आधिः तत्र प्रयोक्तृगृहे वृद्धिरहितस्तिष्ठेत् धनिकदोषेण धनग्रहणाभावे तदूर्ध्वं वृद्धिर्न भव-

(१) प्रतिपादयेत् घ. । (२) एवंविधं घ. । (३) द्विगुणीभूतमेव द्रव्यं घ. ।
(४) कृतं तदा तत्र ख. । (५) इतरं चेत ख. ।

तीत्यर्थः । धारणकोऽधमर्णेनाधिमोचनोचितसमये सन्निहितस्तिष्ठति तदा उत्तमर्णःससाक्षिकं तमाधिं विक्रीणीत, तत्र स्वकीयं धनं गृहीत्वाऽवशिष्टं राशिं दद्यादिति विवेकः । अपिकारेणाऽधमर्णदायादसङ्ग्रहः ॥ ६२-६३ ॥

(मिता०) किञ्च—

उपस्थितस्येति । धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्यो धनिना न वृद्धिलोभेन स्थापयितव्यः । अन्यथा अमोक्षणे स्तेनश्चोरवद्(१)दण्ड्यः स्यात् । असन्निहिते पुनः प्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं विधायाधमर्णकः स्वीयं बन्धकं गृह्णीयात् ॥ ६२ ॥

(मिता०) अथ प्रयोक्ताप्यसन्निहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति यदि वा असन्निहिते प्रयोक्तर्याधिविक्रयेण धनदित्साधमर्णस्य तत्र किं कर्तव्यमित्यपेक्षित आह—

तत्कालेति । तस्मिन्काले यस्तस्याधेर्मूल्यं तत्परि(२)कल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत् ततः ऊ(३)र्ध्वं न विवर्धते । यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति, यावद्वा तन्मूल्यद्रव्यम्(४)णे प्रवेशयति ॥

(मिता०) यदा तु द्विगुणीभूतेऽपि धने द्विगुणं धनमेव ग्रहीतव्यं न त्वाधिनाश इति विचारितमृणग्रहणकाले एव तदा द्विगुणीभूते द्रव्ये असन्निहिते वाऽधमर्णे धनिना किं कर्तव्यमित्यत आह—

विनेति । धारणकादधमर्णाद्विना अधमर्णेऽसन्निहिते साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीय तद्धनं गृह्णीयाद्धनी । वाशब्दो व्यवस्थितविकल्पार्थः । यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यं न त्वाधिनाश इति न विचारितं तदा 'आधिः प्रणश्येद्द्विगुणे' इत्याधिनाशः । विचारिते त्वयं पक्ष इति ॥ ६३ ॥

(वी० मि०) भोग्याधौ विशेषमाह—

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ॥
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६४ ॥

ऋणमाधौ भोगद्वारा द्विगुणीभूतं यदि तदा तस्मिन् द्विगुणधन

---

(१) दण्ड्यो भवति ख । (२) कल्पयेत् तत्रैव ख ।
(३) ऊर्ध्वं धनं वर्धते ग । (४) मृणत्वे ख ।

स्वसङ्क्रान्ते सत्युत्तमर्णेनाऽऽधिर्मोक्तव्य इत्यर्थः । अयमेव क्षयाधिरित्युच्यते । इदं च धनिकस्य तथाऽभ्युपगमपरम् । 'अन्त्यवृद्धौ प्रविष्टायामपि न स्थावरमृते वचना'दिति विष्णुवाक्यैकमूलकत्वादिति मिश्राः । अधर्मभीरुणा तदा स आधिर्मोच्यः ।

भोगाय द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं पश्चाद्वार्धुषं तत्तु गर्हितम् ॥

इति बृहस्पतिवचनात्, न तु विशेषव्यवस्थामन्तरेण न वर्द्धतेऽपीत्यप्याहुः ॥ ६४ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने ऋणादानप्रकरणम् ।

( मिता० ) भोग्याधौ विशेषमाह—

यदेति । यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः प्रविष्टे धनिनाधिर्मोक्तव्यः । यदि वादावेवाधौ दत्ते द्विगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्य इति परिभाषया, कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदा, आधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः । अधिकोपभोगे तदपि देयम् । सर्वथा सवृद्धिकमू(१)लर्णापाकरणार्थाध्युपभोगविषयमिदं वचनम् । तमेनं क्षयाधिमाचक्षते लौकिकाः । यत्र तु वृद्ध्यर्थ एवाध्युपभोग इति परिभाषा तत्र द्वैगुण्यातिक्रमेऽपि यावन्मू(२)लदानं तावदुपभुङ्क्त एवाधिम् । एतदेव स्पष्टीकृतं बृहस्पतिना—'ऋणी बन्धमवाप्नुयात् । फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम् ॥ यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी । ऋणी च न लभेद्बन्धं परस्परमतं विना' ॥ इति । अस्यार्थः—फलं भोग्यं यस्यासौ फलभोग्यः (३) बन्ध आधिः । स च द्विविधः सवृद्धिकमूला(४)पाकरणार्थो वृद्धिमात्रापाकरणार्थश्च । तत्र च सवृद्धिमूलापाकरणार्थं बन्धं पूर्णकालं पूर्णः कालो यस्यासौ पूर्णकालस्तमाप्नुयादृणी । यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयादित्यर्थः । वृद्धिमात्रापाकरणार्थं तु बन्धकं सामकं दत्त्वाप्नुयादृणी । समं मूलं, सममेव सामकम् । अस्यापवादमाह—यदि प्रकर्षितं तत्स्यात् । तत् बन्धकं प्रकर्षितमतिशायितं वृ-

( १ ) मूल्यापाकरणा ख. । ( २ ) मूल्यदानं ख. ।
( ३ ) बन्धकः आधिः ख. । ( ४ ) मूल्यापा ख. ।

द्धेरप्यधिकफलं यदि स्यात्तदा न धनमाधमर्णो धनी । मू(१)लमदत्त्वैव ऋणी बन्धमवाप्नुयादिति यावत् । अथ स्वप्रकल्पितं तद्बन्धकं वृद्धयेऽप्यपर्याप्तं तदा सामकं दत्त्वापि बन्धं न लभेताधमर्णः । (२)वृद्धिशेषमपि दत्त्वैव लभेतेत्यर्थः । पुनरुभयत्रापवादमाह । परस्परमतं विना उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे 'यदि प्रकल्पितम्' इत्याद्युक्तम् । परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूलदानं तावदुपभुङ्क्ते धनी निकृष्टमपि मूलमात्रदानेनैवाधमर्णो लभत इति ॥ ६४ ॥

इति ऋणादानप्रकरणम् ।

---

( वी० मि० ) निक्षेपं विवादपदमधिकृत्याह—

वासनस्थमनाख्याय हस्तेऽन्यस्य य(३)दर्प्यते ॥
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ६५ ॥
न दाप्योऽपहृतं तं तु राजदैविकतस्करैः ॥
भ्रेषश्चेन्मार्गिते दत्ते दाप्यो दण्डं च तत्समम् ॥ ६६ ॥
आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ॥
याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥ ६७ ॥

वासनं निक्षेपद्रव्याधारभूतसम्पुटादि तत्रस्थं यद्द्रव्यं तं वर्णादिकमनाख्याय अकथयित्वाऽन्यस्य हस्ते रक्षणार्थं विस्रम्भाद् र्प्यते तदौपनिधिकं नाम निक्षेपविशेषः । निक्षेपसामान्यलक्षणं तु—

स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

इति नारदोक्तमवसेयम् ।

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि । -

इत्यादि मनूक्तं विश्वासप्रपञ्चनमात्रं, तत्रौपनिधिकं द्रव्यं तथैव नाख्यायैव पूर्ववन्मुद्रादिचिन्हितं प्रतिदेयं स्थापकाय । तत्रोपनिधि राज्ञा दैविकेनाग्निना तस्करेण चौरेण वाऽपहृतं स्थापकायोपनिधि-

---

( १ ) मूलमदत्त्वैव ख । ( २ ) वृद्धिशेषमदत्त्वैव घ ।
( ३ ) समर्प्यते—इति क पु पाठ ।

गृहीता न दाप्यः । यदि तु निक्षेप्त्रा मार्गिते प्रार्थिते तथाप्यदत्ते तस्मिन् द्रव्ये राजदैविकादिकृतो भ्रेषो भ्रंशः स्यात्तदा तमुपनिधिं मूल्यद्वारा निक्षेप्त्रे तत्समं च दण्डं राज्ञे दाप्य एव स्थापकः। चकारेण निक्षे(१)प्तृसमुच्चयः । स्वेच्छया न तु निक्षेप्त्रनुमत्या तमुपनिधिमाजीवन् उपयुञ्जानो वृध्द्यादिलाभानुसारेण राज्ञा दण्डयस्तं चोपनिधिं सोदयं वृद्धिसाहितं निक्षेप्त्रे दाप्यः । अत्र च वृद्धिमाह कात्यायनः—

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानो न चेद्दद्याद्वर्धते पञ्चकं शतम् ॥

मनुः—

चौरैर्हृतं जले भग्नमग्निना दग्धमेव च ।
न दद्याद्यदि तस्मात्स न संहरति किञ्चन ॥

किंचित्संहृत्य गृहीत्वा शेषमन्यत्र निक्षिपत्युपेक्षते वा सर्वं मम न देयं भवत्विति तत्सर्वं देयमेवेत्यर्थः । व्यासः—

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।
किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥

मनुः—

उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥

वधस्ताडनादिः । याचितेति । अयमुपनिधावुक्तो विधिः प्रकारो राजदैविकादिस्थले, दानादानरूपो याचितादिषु बोध्यः । विवाहाद्युत्सवार्थं वस्त्रालङ्कारादिकं प्रतिदेयतयाङ्गीकृत्य याचित्वानीतं याचितं अन्वाहितं स्वामिना एकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यस्य हस्ते तस्याधातुर्वचनान्निहितन्यासो गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव तदीयजनहस्ते प्रक्षेपो गृहस्वामिने समर्पणीयमिति शिल्पिनेऽलङ्कारादिघटनाय द्रव्यसमर्पणं च साक्षादाख्याय । समर्पणं निक्षेपः । आदिपदेन गौतमोक्ताऽवक्रीतादिसङ्ग्रहः । तथा च 'पुत्रानध्याभवेयु'रित्यधिकारे गौतमः-'निध्यन्वाधियाचितावक्रीताधयो नष्टाः सर्वाननिन्दितान् पुरुषापराधेने'ति । अवक्रीतं भाटकेनानीतम् । निक्षेप्तुः सत्त्वे निक्षेपद्रव्यं तस्यैव प्रत्यर्पयेदित्याह—

(१) निक्षेप-इति ग. पु पाठः ।

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

प्रत्यनन्तरः पुत्रादिः । मनु —

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

विशेषव्यवस्थायां तु जीवत्यपि निक्षेप्तरि प्रत्यनन्तरे दानं भवत्येवेत्युक्तप्रायं याचितकं प्रकृत्याह कात्यायनः —

प्राप्ते काले कृते कार्ये न दद्याद्याचितोऽपि सन् ।
तस्मिन्नष्टे हृते वापि गृहीत्वा मूल्यमाहरेत् ॥

नष्टे दैविकेनापि ॥ ६७ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने निक्षेपप्रकरणम् ।

( मिता० ) उपनिधिं प्रत्याह—

वासनेति । निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि तत्स्थं वासनस्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विस्रम्भादर्प्यते स्थाप्यते तद्द्रव्यमौपनिधिकमुच्यते । यथाह नारदः—'असंख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः' ॥ इति । प्रतिदेयं तथैव तत् । यस्मिन्स्थापितं तेन यथैव पूर्वमुद्रादिचिह्नितमर्पितं तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम् ॥ ६५ ॥

( मिता० ) प्रतिदेयमित्यस्यापवादमाह—

नेति । तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वापहृतं नष्टं न दाप्योऽसौ यस्मिन्नुपनिहितम् । धनिन एव तद्द्रव्यं नष्टं यदि जिह्मकारितं न भवति । यथाह नारदः—'ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः । दैवराजकृते (१)तद्वच्च चेत्तज्जिह्मकारितम्' ॥ इति ॥

( मिता० ) अस्यापवादमाह—

भ्रेष इति । स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषो नाशः सञ्जातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो राज्ञे च तत्समं दण्डम् ॥ ६६ ॥

---

(१) तद्वच्चेत्तज्जिह्म स तद्वच्चेदजिह्मन्यापि पाठः ।

( मिता० ) भोक्तारं प्रति दण्डमाह—

आजीवन्निति । यः स्वेच्छया स्वाम्यननुज्ञयोपनिहितं द्रव्यमाजीव(१)न्नुपभुङ्क्ते व्यवहरति वा प्रयोगादिना लाभार्थमसावुपभोगानुसारेण लाभानुसारेण च दण्ड्यस्तं चोपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारे सलाभं धनिने दाप्यः । वृद्धिप्रमाणं च कात्यायनेनोक्तम्–'निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च । याच्य(२)मानो न चेद्दद्याद्वर्धते पञ्चकं शतम्' ॥ इति । एतच्च भक्षिते द्रष्टव्यम् । उपेक्षाज्ञाननष्टे तु तेनैव विशेषो दर्शितः–'भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् । किंचिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम्' ॥ इति । किञ्चिन्न्यूनमिति चतुर्थांशहीनम् ॥

( मिता० ) उपनिधेर्धर्मान् याचितादिष्वतिदिशति—

याचितेति । विवाहाद्युत्सवेषु वस्त्रालंकारादि याचित्वानीतं याचितम् । यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं तदन्वाहितम् । न्यासो नाम गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो गृहस्वामिने समर्पणीयमिति । समक्षं तु समर्पणं निक्षेपः । आदिशब्देन सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः, प्रतिन्यासस्य च परस्परप्रयो(३)जनापेक्षया त्वयेदं मदीयं रक्षणीयं मयेदं त्वदीयं रक्ष्यते इति न्यस्तस्य ग्रहणम् । यथाह नारदः–'एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च' ॥ इति । एतेषु याचितान्वाहितादिष्वयं विधिः । उपनिधेर्यः प्रतिदानादिविधिः स एव वेदितव्यः ॥ ६७ ॥

इति उपनिधिप्रकरणम् ।

---

( १ ) आजीवन्नुप ख. आजीवन्फलं भुङ्क्ते ग. ।
( २ ) याच्यमान ग. । ( ३ ) पेक्षायां त्वयेदं ख ।

( वी० मि० ) 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तित'-मित्युक्तम् । अत्र भुक्तिर्निरूपिता, सम्प्रति साक्षिणोऽधिकृत्याह सम्पूर्णप्रकरणेन—

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ॥
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ६८ ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ॥
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ६९ ॥
स्त्रीवालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ॥
रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥ ७० ॥
पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ॥
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ७१ ॥
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ॥
सर्वः सङ्ग्रहणे साक्षी चौर्यपारुष्यसाहसे ॥ ७२ ॥

तपस्विनः तपश्चरणशीलाः, दानशीलाः दाननिरताः, कुलीनाः साङ्कर्यादिदोषरहितकुलोत्पन्नाः, सत्यवादिनः सत्यवचनशीलाः, धर्मप्रधाना मुख्योद्देश्यधर्मका, ऋजवोऽकुटिलचित्ता, त्रयोऽधमः कल्पो येषां ते त्र्यवराः—

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव च ।

इति बृहस्पतिवचनात् । श्रौती अग्निहोत्रादिः, स्मार्ती सन्ध्योपासनादिः क्रिया, नित्यकर्तव्यतत्पराः प्रत्यहं तदनुष्ठातारः, यथाजाति जात्यनुसारेण, तेन मूर्द्धावसिक्तानां मूर्द्धावसिक्ता, अम्बष्ठानाम् म्बष्ठाः साक्षिणः स्त्रीणां स्त्रिय इत्यादि पर्यवस्यति । यथावर्णं ब्राह्मणस्य ब्राह्मणाः साक्षिण इत्यादि । स्वजातिस्ववर्णयोरभावे तु सर्वेषु वादिषु सर्वे मूर्द्धाभिषिक्तादयो ब्राह्मणादयश्च साक्षिणः स्मृता मन्वादिस्मृतावभिहिता एते साक्षिणः प्रशस्ता ज्ञेयाः । स्त्र्यादयस्त्वसाक्षिणः ।बालः षोडशवर्षाभ्यन्तरवयस्कः, वृद्धोऽशीत्यूर्ध्ववयस्कः, कितवोऽक्षदेवनशीलः, मत्तो मद्यादिना, उन्मत्तः उन्मादवान्, अभिशस्तो ब्रह्महत्याद्यभिशापवान्, रङ्गावतरी नटः, पाषण्डी वेदबाह्यः,

कूटकृत् कपटप्रायव्यवहारशीलः, विकलेन्द्रियः चक्षुःश्रोत्रादिहीनः, पतितो ब्रह्महादिः, आप्तः सुहृत्, अर्थसम्बन्धी वादिना कृतसम्बन्धी, सहायो वादिसाहाय्यकर्ता, रिपुर्वादिशत्रुः, तस्करः चौरः, साहसी प्रसह्य मारणादिकारी, दृष्टदोषो वादान्तरेऽसत्याभिधायी, निर्धूतः कुलबहिष्कृतः, आद्यपदेन श्रोत्रियप्रव्रजितादयः। इथवरा इत्युक्तमपवदति उभयानुमत इति। उभाभ्यां वादिप्रतिवादिभ्यां साक्षित्वेनाऽनुमतः सन्। धर्मविदिति सकलसाक्षिगुणोपलक्षकम्। ईदृश एकोऽपि साक्षी भवति। स्त्रीबालेत्याद्युक्तमपवदति–सङ्ग्रहणे स्त्रीसङ्ग्रहणे, चौर्य्ये, पारुष्ये वाक्पारुष्ये, साहसे मनुष्यमारणादौ सर्वः स्त्र्यादिरपि यथोक्तसाक्षिकगुणशून्यश्च साक्षी भवतीत्यर्थः। चकारेण 'ज्ञेया' इत्यत्रान्वितेन मन्वाद्युक्तगुणान्तरवतां समुच्चयः। तुशब्देन स्त्र्यादिभिन्नानां तपस्वीत्यादियथागुणशून्यानामसाक्षित्वं व्यवच्छिनत्ति। अपिशब्देन 'उभौ तु श्रोत्रियौ ग्राह्या'विति बृहस्पतिवचनोक्तसमुच्चयः। अत्र वाशब्दसमुच्चिता आद्यशब्दसङ्गृहीताश्च साक्षिणः सिद्धवद्विदोष्य लिख्यन्ते। तत्र ब्राह्मणप्रयेणन (?)सर्ववर्णहितकर्तारः सर्वधर्मविदो लोभा(१)नाकर्षणीया बाह्याभ्यन्तरशौचशालिनः वाजपेयादियाजिनोऽधीयानाः एते संहितोक्ताश्च साक्षिणो निगादकोपन्यस्ताः प्रशस्ताः। तत्र बृहस्पतिः—

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ।
याद्दच्छिकश्चोत्तरश्च कार्यमध्यगतः परः॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः।
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः॥
स्वजातिर्लिखिता येन येन स्वं पितृनाम च।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः॥
अर्थिना च क्रियाभेदैस्तस्य कृत्वा ऋणादिकम्।
प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः॥
कुड्य(२)व्यवहितो यश्च श्राव्यते ऋणभाषितम्।
विनिन्हुते यथाभूतं गूढसाक्षी स कीर्तितः॥

---

(१) लोभानुकर्ष० इति ख० पु० पाठः।
(२) कुड-इति क० पुस्तके, कुण्ड-इति तु ख० पुस्तके पाठः।

आहूय यः(१) कृतः साक्षी ऋणन्यासक्रियादिके ।
स्मार्यतेऽर्थं मुहुर्यश्च स्मारितः सोऽभिधीयते ॥
विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥
अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु यः ।
उभयोः सम्मतः साधुर्दूतकः स उदाहृतः ॥
क्रियमाणे च कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र साक्षित्वमस्माकमुक्तं याहच्छिकस्तु सः (२) ॥
यः साक्षी तु दिशं गच्छन् मुमूर्षुर्वा यथाक्रमम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥
साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥
उभाभ्यां यस्य विश्वस्तं कार्यं वा विनिवेदितम् ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
सूचितं घातितं यत्तु सीमायां तु समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥

*लिखितलेखितयोर्भेदमविवक्षित्वा* नारदे स्वेकादशविधः साक्षी कथितः । अथ साक्ष्यानर्हाः-श्रोत्रिय, तापसः, प्रव्रजितः, कोपितः, व्याधः, दासः, वैदिके कर्मणि अश्रद्धः, तैलिकः, प्रमादी, ग्रामयाजकः, एकपाकभोक्ता, चरः, सपिण्डः, सकुल्यो, महापथयायी, समुद्रयायी, वणिक्, व्यङ्गः, आचारहीनः, क्लीवः, नृत्यकर्ता, नृत्येऽभिनेता, व्रात्यः, दारत्यागी, अग्नित्यागी, अयाज्ययाजकः, विषजीवी, आहितुण्डिकः, गरदोऽग्निदः, हालिकः, शूद्रः, अपात्रभूतः, उपपातकी, अतिखिन्नः, वेदविरुद्धकर्मकरणशीलः, स्वकर्मत्यागी, अकृतसमावर्तनो द्विजः, जडः, तिलविक्रयी, विप्रलम्भकारी, भूताविष्टो,

(१) सः-इति क० ख० पुस्तकयोः पाठः ।
(२) यः-इत्युभयसमतः पाठः ।

नृपद्विष्टः, नक्षत्रसूचकः, पराभिशापप्रदायी, हीनाङ्गो, भगवृत्तिः, कुनखी, श्यावदन्तः श्वित्री, मित्रद्रोही, धूर्तः, शौण्डिक, ऐन्द्रजालिकः, लुब्धः, उग्रकर्मा, श्रेणिगणविरोधी, चित्रकरः, वृषभनाटनेन भिक्षाटनशीलः, मिथ्याधर्माचारकल्पकः, त्यक्तप्रव्रज्यः, राजपुरुषः, मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषां वेदस्य विक्रेता, वृद्धिजीवी, परिच्छेदकरणाय कार्येषु नियुक्तः, खलो, हीनसेवकः, पित्रा सह विवदमानः, परस्परभेदकारी चेति । तत्र नारदः—

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥
श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिर्णये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥
स्वयमुक्तिर्न निर्दिष्टः स्वयमेवैत्य यो वदेत् ।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते ॥

श्रोत्रियादीनां वेदाध्ययनाद्यासक्तत्वेन विवादपदविस्मरणशीलतया न ते साक्षिणः कार्याः । अकृतास्तु ते जानन्तो भवन्त्येव साक्षिणः । तदुक्तम्–'उभौ तु श्रोत्रियौ ग्राह्या'विति । श्रोत्रियाद्यान् व्याकरोति ।

श्रोत्रियास्तापसा वृद्धा येन प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥

मुमूर्ष्विति । मुमूर्षुणा धनिकेन यः साक्षी स्वदायादेभ्यो यमियद्धेनं सत्यं धारयत्ययं तु जानातीति श्रावितः स मृतान्तरोऽपि साक्षी भवत्येव । अर्थिनि मृते तत्पुत्रादिना अज्ञातत्वादनुपन्यस्तेऽर्थे क्वासौ साक्षी स्यादिति मृतन्तरोऽसाक्षी । अत्र प्रशस्तसाक्ष्यलाभेऽप्रशस्तो निषिद्धः साक्ष्युपादेयः । कण्ठतो निषिद्धस्तु सर्वथा नोपादेय इति विवक्तव्यमित्युक्तप्रायम् ॥ ७२ ॥

( मिता० ) 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्' इत्युक्तं तत्र भुक्तिर्निरूपिता । सांप्रतं साक्षिस्वरूपं निरूप्यते । साक्षी च साक्षाद्दर्शनाच्छ्रवणाच्च भवति । यथाह मनुः ( ८।७४ )–'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति' इति । स च द्विविधः कृतो-

ऽकृतश्चेति । साक्षित्वेन निरूपितः कृतः । अनिरूपितोऽकृतः । तत्र कृतः पञ्चविधोऽकृतश्च षड्विध इत्येकादशविधः । यथाह नारदः- 'एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः । कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते' ॥ इति । तेषां च भेदस्तेनैव दर्शितः- 'लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः' इति ॥ लिखितादीनां च स्वरूपं कात्यायनेनोक्तम्-'अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते । स साक्षी लिखितो नाम स्मारितः पत्रकादृते' ॥ इति । स्मारितः पत्रकादृत इत्यस्य विवरणं तेनैव कृतम्-'यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः । स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते' ॥ इति । यस्तु यदृच्छयागतः साक्षी क्रियते स यदृच्छाभिज्ञः । अनयोः पत्रानारूढत्वेऽपि भेदस्तेनैव दर्शितः-'प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः । द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ' ॥ इति । तथा । 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः (१)श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते' ॥ इति । तथा-'साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते । श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः' ॥ इति । षड्विधस्याप्यकृतस्य भेदो नारदेन दर्शितः-'ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् । कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ॥ कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः' । इति । प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम्-'लेखकः प्राड्विवाकश्च (२)सभ्याश्चैवानुपूर्वशः । नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः' ॥ इति ॥ तेऽपि साक्षिणः कीदृशाः कियन्तश्च भवन्तीत्यत आह—

तपस्विन इति । त्र्यवरा इति च । तपस्विनस्तपःशीलाः । दानशीला दाननिरताः । कुलीना महाकुलप्रसूताः । सत्यवादिनः स(३)त्यवदनशीलाः । धर्मप्रधानाः नार्थकामप्रधानाः । ऋजवोऽकुटिलाः । पुत्रवन्तो विद्यमानपुत्राः । धनान्विता बहुसुवर्णादिधनयुक्ताः । श्रौतस्मार्तक्रियापराः नित्यनैमित्तिकानुष्ठा(४)नरताः एवंभूताः पुरुषास्त्र्यवराः साक्षिणो भवन्ति । त्रयः अवरा न्यूना येषां ते त्र्यवराः त्रिभ्योऽर्वाक् न भवन्ति । परतस्तु यथाकामं भवन्तीत्यर्थः । जाति-

(१) श्रावित क । (२) सभ्यैश्चैव ग ।
(३) सत्यवादन ख । (४) ष्ठानपराः ग ।

मनतिक्रम्य यथाजाति । जातयो मूर्धावसिक्तायाः अनुलोमजाः प्रतिलोमजाश्च । तत्र मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति । एवमम्बष्ठादिष्वपि द्रष्टव्यम् । वर्णमनतिक्रम्य यथावर्णम् । वर्णा ब्राह्मणादयः । तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा उक्तसंख्याकाः साक्षिणो भवन्ति । एवं क्षत्रियादिष्वपि द्रष्टव्यम् । तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः । यथाह मनुः ( ८ । ६८ )-'स्त्रीणां साक्ष्यं स्त्रियः कुर्युः' इति । सजातिसवर्णासम्भवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासम्भवं साक्षिणो भवन्ति । उक्तलक्षणानां साक्षिणामसम्भवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणो वक्तव्याः । ते च पञ्चविधा नारदेन दर्शिताः—'असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्व(१)यमुक्तिर्मृतान्तरः' ॥ इति । के पुनर्वचनात् असाक्षिण इत्यत आह–'श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः। असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः' ॥ इति । तापसा वानप्रस्थाः । आदिशब्देन पित्रा विवदमानादीनां ग्रहणम् । यथाह शङ्खः–'पित्रा विवदमानगुरुकुलवासिपरिव्राजकवान(२)प्रस्थनिर्ग्रन्था असाक्षिणः' इति । दोषादसाक्षिणो दर्शिताः–'स्तेनाः साहसिकाश्चण्डाः कितवा वञ्च(३)कास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते' ॥ इति । चण्डाः कोपनाः । कितवा द्यूतकृतः । भेदादसाक्षिणां च स्वरूपं तेनैव दर्शितम्–'साक्षिणां लिखितानां च निर्दिष्टानां च (४)वादिना । तेषामेकोऽन्यथावादी भेदात्सर्वे न (५) साक्षिणः' ॥ इति तथा स्वयमुक्तिस्वरूपं चोक्तम्—'स्वयमुक्ति(६)रनिर्दिष्टः स्वयमेवैत्य यो वदेत् । सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति' ॥ इति । मृतान्तरस्यापि लक्षणमुक्तम्—'योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि । क तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः' ॥ इति । येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेद्यूयमत्रार्थे साक्षिण इति तस्मिन्नर्थिनि प्रत्यर्थिनि

( १ ) स्वयमुक्तिर्मृतान्तरम् घ. स्वयमुक्तः ङ. ।
( २ ) वानप्रस्था निर्ग्रन्थाश्रमा ङ. निर्ग्रन्था निगडस्था ग. ।
( ३ ) वधकास्तथा ग. । ( ४ ) वादिनां इति सर्वत्र पाठः. ।
( ५ ) सर्वे असाक्षिणः घ । ( ६ ) मुक्तिर्हि निर्दिष्ट ग. ।

वा असति मृतेऽर्थे चानिवेदिते, (१)साक्षी क कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति । यत्र तु मुमूर्षुणा स्वस्थेन वा पित्रा पुत्रादयः श्राविता अस्मिन्नर्थेऽमी साक्षिण इति तत्र मृतान्तरोऽपि साक्षी । यथाह नारदः—'मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते' । तथा—'श्रावितोऽनातुरेणापि यस्त्वर्थो धर्मसहितः । मृतेऽपि तत्र (२)साक्षी स्यात् षट्सु चान्वाहितादिषु' ॥इति ॥६८–६९॥

स्त्रीबालेति । पतितेति च । स्त्री प्रसिद्धा । बालोऽप्राप्तव्यवहारः । वृद्धोऽशीतिकावरः । वृद्धग्रहणं वचननिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम । कितवोऽक्षदेवी । मत्त पानादिना । उन्मत्तो (३)ग्रहाविष्टः । अभिशस्तोऽभियुक्तो ब्रह्महत्यादिना । रङ्गावतारी चारणः । पाखण्डिनो निर्ग्रन्थप्रभृतयः । कूटकृत्कपटलेख्यादिकारी । विकलेन्द्रियः श्रोत्रादिरहितः । पतितो ब्रह्महादिः । आप्तः सुहृत् । अर्थसम्बन्धी विप्रतिपद्यमानार्थसम्बन्धी । सहाय एककार्यः । रिपुः शत्रुः । तस्करः स्तेनः । साहसी (४)बलावष्टम्भकारी । दृष्टदोषो दृष्टवि(५)रुद्धवचनः । निर्धूतो बन्धुभिस्त्यक्तः । आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् । एते स्त्रीबालादयः साक्षिणो न भवन्ति ॥ ७०–७१ ॥

( मिता० ) त्र्यवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह—

उभयेति । ज्ञानपूर्वकनित्यनैमित्तिककर्मानुष्ठायी धर्मवित्, स एकोऽप्युभयानुमतश्चेत्साक्षी भवति । अपि(६)शब्दबलाद्द्वावपि । यद्यपि—'श्रौतस्मार्तक्रियापराः' इति त्र्यवराणामपि धर्मवित्त्वं समान तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवति । एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थं तत् त्र्यवरग्रहणम् ॥

( मिता० ) तपस्विनो दानशीला इत्यस्यापवादमाह—

सर्व इति । सद्दूषणादीनि वक्ष्यमाणलक्षणानि । तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति । दोषादसाक्षि-

---

(१) साक्षित्व कस्मिन्नर्थे ख ।
(२) स स्मात्स्यात् घ । (३) भूताविष्ट. ग ।
(४) स्वबला ख । (५) दृष्टवितथवचन घ ।
(६) अपिशब्दाद्द्वावपि ग घ । (७) त्यर्थं च त्र्यवर ग ।

णो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षिणो न भवन्ति (१)सत्याभावादिति हेतोरत्रापि विद्यमानत्वात्। 'मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्' ॥ इति वचनाद्यद्यपि स्त्रीसङ्ग्रहणचौर्यपारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम्। रहसि क्रियमाणानां तु सङ्ग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् ॥ ७२ ॥

( वी० मि० ) अथ यथा साक्षिणः प्रष्टव्यास्तदाह—

साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ॥
ये च (२)पापकृतां लोका महापातकिनां तथा ॥ ७३ ॥
अग्निदानां तु ये लोका ये च स्त्रीबालघातिनाम् ॥
एतान् सर्वान् समाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ॥
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥

साक्ष्यनिगदार्थमुपस्थितान् वादिप्रतिवादिसमीपस्थान् विचारक एवेत्यादिवक्ष्यमाणं श्रावयेत्। पापकृताम्–अत्र विशिष्यानुक्तपापस्य कर्तॄणां लोका रौरवादीनि स्थानानि। अग्निदानां सत्यपूर्णक्षेत्रभाण्डागारादौ द्वेषेणाग्निप्रक्षेपकाणां साक्ष्यं साक्षिवक्तव्यमनृतं अयथार्थं यो वदेत् स एतान् सर्वान् लोकानवाप्नोति। तथापदेनोपपातकिनां, चकारैरतिपातकिविप्रदातृगर्भहन्तॄणां समुच्चयः। 'शूद्रं सर्वैस्तु पातकै'रिति वचनाच्छूद्रे साक्षिणि शपथमधिकृत्याह सुकृतमिति। जन्मान्तरशतैर्यत्किञ्चित्त्वया सुकृतं पुण्यं सर्वं नक्ष्यतीत्यर्थः। नारदः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

सत्यं वदेति विप्रं सत्यमिदमित्यपि धनरूपं शपथं कारयेत्। इदं तु मध्यविधिब्राह्मणपरम्। 'स येनैकेन सत्यकर्म तदेव ब्राह्मणसं-

( १ ) सत्यवादिन्वंहता· ख. ।
( २ ) 'ये पातककृतां'–इति मुद्रित पुस्तके पाठः ।

सद्दि स्यादब्राह्मणाना'मिति गौतमवचनात् । एकेनेति गुणवत्पर, तेन वाहनायुधैरित्यादिबहुवचनसङ्गतिः । वाहनमश्वादिक, आयुध ख ड्गादि तत्स्पर्शरूप शपथ कारयेत् । गोबीजस्य कृषिमूलभूतस्य काञ्चनस्य स्पर्शनं वैश्य शापयेत् । शूद्रमिति सुकृतमित्यादो विचारके धाविते सर्वाणि पातकानि मृषा वादे मम स्युरिति वादयेदि त्यर्थं । तुशब्देन त्रैवर्णिकशपथानां व्यवच्छेद ।

> ब्रूहीति ब्राह्मण पृच्छेत्सत्य ब्रूहीति पार्थिवम् ।

तथा—

> गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् ।
> प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

शूद्रवदाचरेत् शूद्रमिव शपथ कारयेत् । क्षत्रियशपथयोर्गुणवन्निर्गुणभेदेन व्यवस्था योज्या । शङ्खलिखितौ-'पुत्रपौत्रैर्यथावर्ण परिग्रहविशेष. स्याद्वैवब्राह्मणस्वामिनामग्रत पुत्रपौत्रशिर स्पर्शनेन शापयेत्' । यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ स्मृत्यन्तरेऽभिहितस्तेन स एव शपथ कार्यं इत्यर्थं ॥ ७३-७५ ॥

( मिता० ) साक्षिश्रावणमाह--

साक्षिण इति । अर्थिप्रत्यर्थिसन्निधौ साक्षिण समवेतान्-'ना समवेता' पृ(१)ष्टा प्रब्रूयु' इति गौतमवचनात् वक्ष्यमाण श्रावयेत् । तत्रापि कात्यायनेन विशेषो दर्शित -'सभान्त साक्षिण स र्वानर्थिप्रत्यर्थिसन्निधौ । प्राड्विवाको नियुञ्जीत विधिनानेन सान्त्वयन् ॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृत द्विजान् । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचि' शुचीन् ॥ आहूय साक्षिण पृच्छेन्नियम्य शपथैर्भृशम् । समस्तान्विदिताचारान्विज्ञातार्थान्पृथक्पृथक्' ॥ इति । तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शित ( ८ । ११३ )-'स त्येन शापयेद्विप्र क्षत्रिय वाहनायुधै । गोबीजकाञ्चनैर्वैश्य शूद्र स र्वैस्तु पातकै' । इति । ब्राह्मणमन्यथा ब्रु(२)वत सत्य ते नश्यतीति शापयेत् । क्षत्रिय वाहनायुधानि तव विफलानीति । गोबीजकाञ्चनादीनि तव विफलानि भविष्यन्तीति वैश्यम् । शूद्रमन्यथा ब्रुवत स्तव सर्वाणि पातकानि भविष्यन्तीति शापयेत् । अत्र चापवादस्तेनैव दर्शित -( ८ । १०२ )—'गोरक्षकान्वाणिजकास्तथा कारुकुशी

(१) पृथगपृष्टा ग० ।	(२) ब्रुवन्तं घ० ।

लवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत्' । इति ॥ विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम् । कुशीलवा गायकाः । प्रतिवादिनां साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरेणेति नानवस्था । यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदासौ (१)सारानुसारेण दण्ड्यः । अथ साधयति तदा न साक्षिणः । यथाह—'असाध(२)यन्दमं दाप्यो दूषणं साक्षिणां स्फुटम् । भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः' । इति । उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति । 'जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः' ॥ इति स्मरणात् । साकाङ्क्षश्चेत्क्रियान्तरमवलम्बेतेत्यभिप्रायः ॥

( मिता० ) कथं श्रावयेदित्यत आह—

ये पातककृतामित्यादि । पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान्सर्वानसावाप्नोति यः साक्ष्यमनृतं वदति । तथा जन्मान्तरशतैर्यत्सुकृतं कृतं तत्सर्वं तस्य भवति (३)यस्तेऽनृतवदनेन पराजितो भवतीति श्रावयेदिति सम्बन्धः । एतच्च शूद्रविषयं द्रष्टव्यम्—'शूद्रं सर्वैस्तु पातकैः' इति शूद्रे सर्वपा(४)तकश्रावणस्य विहितत्वात् । गोरक्षकादिद्विजातिविष(५)यं च 'गोरक्षकान्वाणिजकान्' इत्युक्तत्वात् । अ(६)न्यस्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातकादिफलप्राप्तेश्चानृतवचनमात्रेणानुपपत्तेः साक्षिसंत्रासार्थमिदमुच्यते । यथाह नारदः—'पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः । अनृतस्यापवादैश्च (७)भृशमुत्त्रासयेदिमान्' ॥ इति ॥ ७३-७४-७५ ॥

( वी० मि० ) साक्षिणां निर्णीतार्थानभिधायिनां दोषमाह—

अब्रुवंस्तु(८)नरः साक्ष्यमृणं सदशबन्धकम् ॥
राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ॥ ७६ ॥

---

( १ ) दोषानुसारेण ख० ।
( २ ) असाधयन् अभावयन् । ( ३ ) यस्तेऽनृतवचनेन ग० यस्तेनोऽनृतवदनेन घ० ।
( ४ ) श्रवणस्य घ० । ( ५ ) विहितं च—घ० । ( ६ ) अन्यानेक० ख० ।
( ७ ) भृशं संत्रासयेत् ग० । (८) अब्रुवन्हि—इति मुद्रितपुस्तके पाठः ।

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ॥
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७७ ॥

वक्ष्यते राज्ञे देयत्वेन व्यवस्थाप्यते इति बन्धो दशांशरूपो ऽत्र तद्देयो दशबन्धस्तत्सहितमृणं सर्वं सवृद्धिकं जान(१)न्नपि साक्ष्यमब्रुवन्नरो राज्ञा षट्चत्वारिंशके दिवसे दाप्यः स्यात्। तुशब्देन षट्चत्वारिंशद्दिनात्पूर्वं दानं व्यवच्छिद्यते। ननु मिथ्यानभिधानात् कथं स दाप्य इत्यतस्तस्य मिथ्याभिधायितुल्यत्वमाह—न ददातीति। हि निश्चितं जानन्नपि यः साक्ष्य न ददाति न भाषते स नराधमः कूटसाक्षिणां मिथ्यासाक्ष्याभिधायिनां पापैः राजग्राह्यदण्डेन चातव्येन च तुल्यो, हि यतस्ततस्तद्ग्रहणमपि दाप्य इत्यर्थः। कूटसाक्षिदण्डश्च वक्ष्यते। चकारेण लोकनिन्द्यत्वसमुच्चयः। एवकारेण पूर्वश्लोकोक्तदण्डसमुच्चयं व्यवच्छिनत्ति, तेन दशबन्धकमृणं दाप्यः। बहुधनत्वे तु वक्ष्यमाण एव तस्य दण्ड इति। दण्डान्तरं तु विषयान्तरे व्यवस्थापयिष्यते। वादिनाऽवधिं कृत्याह बृहस्पतिः—

साक्षिणस्तु समुद्दिश्य यस्तु तान्न निवादयेत्।
त्रिंशद्दिनात् त्रिपक्षाद्वा हानिस्तस्योपजायते ॥

वाकारो लघुगुरुविवादपदविषये व्यवस्थितविकल्पार्थः। तथा—

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम्।
नोपस्थितो भवेद्वादी छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत्।
अवधिस्यागमात्रेण न भवेत्स पराजितः ॥

न कारयेत् निरस्योदित्यर्थः। अत्र पराजित इत्यभिधानात्पूर्वं हानिपदं भङ्गपरमित्येके। व्यवहारे छलस्य निरस्यत्वान्न निगदनमात्रेण भङ्गः, उपन्यस्तानामपि साक्षिणां मध्ये दोषनिश्चयसम्भवात्। किन्तु निगदकपक्षेऽनुत्कटकोटिकः संशय इत्यपरे ॥ ७६–७७ ॥

( मिता० ) यदा तु श्राविता- साक्षिणः कथञ्चिन्न ब्रूयुस्तदा किं कर्तव्यमित्यत आह—

अब्रुवन्निति। यः साक्ष्यमङ्गीकृत्य श्रावितः सन् कथंचिन्न वदति स राज्ञा सर्वं सवृद्धिकमृणं धनिने दाप्यः। सदशबन्धकं दशमांशसहि-

(१) जानन्नपि-इति क०ग० पुस्तकयो पाठः।

तम्। दशमांशश्च राज्ञो भवति। 'राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम्' इत्युक्तत्वात्। एतच्च षट्चत्वारिंशकेऽहनि प्राप्ते वेदितव्यम्। ततोऽर्वाग्वदन्न दाप्यः। इदं च व्याध्याद्युपप्लवरहितस्य। यथाह मनुः (८।१०७)—'त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः। तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वशः'॥ इति। अगद इति राजदैवोपप्लवविरहोपलक्षणम्॥ ७६॥

(मिता०) यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात्तं प्रत्याह—

नेति। यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति नाङ्गीकरोति स कूटसाक्षिणां तुल्यः पापैः कृत्वा दण्डेन च। कूटसाक्षिणां दण्डं वक्ष्यति। कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः। (१)कुतोऽपि वा कौटसाक्ष्ये विदिते निवर्तनीयः। यथाह मनुः (८।११७)—'यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत्'॥ इति॥ ७७॥

(वी०मि०) अथ साक्ष्युक्तिविधिः। तत्र कात्यायनः—

सभान्तःस्थैस्तु वक्तव्यं साक्ष्यं(२) नान्यत्र साक्षिभिः।
सर्वसाक्ष्येष्वयं धर्मोऽन्यत्र स्यात् स्थावरेषु च॥
वधे च (३) प्राणिनां साक्ष्यं वादयेच्छवसन्निधौ।
तदभावे तु चिन्हस्य नान्यथैव प्रवादयेत्॥
अनुद्विग्नेन चित्तेन दृष्टं सम्यग्यदा तु यत्।
प्रत्यक्षं तत्स्मृतं कार्यं साक्ष्यं साक्षी तु तद्वदेत्॥

तथा—

अप्राक्य आगमो यत्र विदेशप्रतिवादिनाम्।
त्रैविद्यप्रहितं तत्र ले(४)ख्यं साक्ष्यं प्रदापयेत्॥

कात्यायनः—

समवेतैस्तु यद् दृष्टं वक्तव्यं तत्तथैव हि।
विभिन्ने नैककार्ये तु तद्वक्तव्यं पृथक् पृथक्॥

---

(१) कुतोऽपि कौटसाक्ष्ये ख० ।
(२) साक्ष्ये-इति ख० पु० पाठः ।
(३) वधेति-इति ग० पु० पाठः ।
(४) लेख्यं इति क० ग० पुस्तकयोः पाठः ।

भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद् भृगुः ॥

नैककार्यमनेककार्यम् । यथा—

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥

पृष्टानां साक्षिणां वचनद्वैधे कथं कार्यमित्याह—

**द्वैधे बहूनां वचनं समेषु गुणिनां तथा ॥**
**गुणिद्वैधे तु वचनं ग्राह्यं ये गुण(१)वत्तराः ॥ ७८ ॥**

साक्षिणामेकतरवादिनिर्दिष्टानामुभयवादिनिर्दिष्टानां वा द्वैधे तु परस्परविरुद्धार्थाभिधायित्वे बहूनां विरुद्धाभिधायिसाक्ष्यपेक्षयाऽधिकानां साक्षिणां वचनं ग्राह्यम् । यत्र गुणिनः समसङ्ख्याश्च उभयत्र कोटौ साक्षिणः तत्र विरुद्धाभिधायिसाक्ष्यपेक्षया ये गुणवत्तरास्तेषां वचनं ग्राह्यम् । तुशब्देन ग्राह्यविपरीतवचनस्य ग्राह्यत्वं व्यवच्छिद्यते । यत्र वादिनोः साक्षिद्वैधे सर्वथा साम्यं तत्र 'साक्षिषूभयतः सत्सु'इत्यादिना प्राग्व्यवस्था कृता । स्वसाक्षिणामेव परस्परद्वैधे सर्वथा च साम्ये मानान्तरमनुसरणीयमिति मिश्राः । अथ—

लिखितानां साक्षिणां च निर्दिष्टानां च वादिना ।
तेषामेकोऽन्यथावादी भेदात्सर्वेऽप्यसाक्षिणः ॥

इति कात्यायनवचनेनैकस्याप्यन्यथाभिधाने सर्वेषामसाक्षित्वमुच्यत इति विरोध इति केचित् । नये त्रयाणां मध्ये एकस्याऽन्यथावादे अपरस्य तत्तुल्यस्य प्रतिपक्षितया तृतीयस्य चैकतया तत्र साक्षितो न निर्णय इति कात्यायनतात्पर्यात् । तत्प्रतिपक्षिनावादिष्टानां त्वनेकत्वे तत एव निर्णय इति प्रकृतग्रन्थतात्पर्यात् ॥ ७८ ॥

( मिता० ) साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह—

द्वैध इति । साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम् । समेषु समसंख्येषु द्वैधे ये गुणिनस्तेषां वचनं प्रमाणम् । यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां वचनं ग्राह्यम् । (२)यत्र तु गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम् । 'उभयानुमतः

(१) गुणवत्तमा–इति मुद्रितपुस्तके पाठः । (२) यत्र गुणिन घ० ।

साक्षी भवत्येकोऽपि धर्मवित्' इति गुणातिशयस्य मुख्यत्वात् । यत्तु भेदादसाक्षिण इत्युक्तं तत्सर्वसाम्येनागृह्यमाणविशेषविषयम् ॥७८॥

( वी० मि० ) यादृशं साक्ष्यभिधानं जये पराजये वा हेतुस्तदाह—

सत्यां प्रतिज्ञां यस्योचुः(१) साक्षिणः स जयी भवेत् ॥
अन्यथावादिनो यस्य (२)ध्रुवं तस्य पराजयः ॥ ७९ ॥

यस्य वादिनः प्रतिज्ञां साक्षिणः सत्यां ब्रूयुर्यथार्थत्वेन वदन्ति स वादी जयी भवेत् । अन्यथावादिनः प्रतिज्ञाया असत्यत्ववादिनो यस्य साक्षिणस्तस्य ध्रुवं निश्चितं पराजय इत्यर्थः । केचित्तु यस्य वादिनः साक्षिणो यथा सत्यत्वानाभिधायिन इत्यर्थमाहुः, तदयुक्तं धर्मव्यवहारे छलस्य निरस्यतयाऽनभिधानमात्रेण पराजयासंभवादिति दिक् । अत्र साक्षिणाऽभिहितेऽप्यर्थे सप्ताहमध्ये तस्य रोगादिसम्भवे निगादयितुर्न जयः ।

यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणं ऋणं दाप्यो दमं च सः ॥

इति नारदवचनात् । साक्षिनिगदे व्यासः—

कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

बृहस्पतिः—

यस्याऽशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥

अन्यथाऽशेषप्रतिज्ञातप्रतिपादनाभावे । अयं च द्वेधा सम्भवति अनभिधाने,ऽपेक्षितानभिधाने च । अन्त्योऽपि चतुर्विधः न्यूनाभिधानेऽधिकाभिधाने स्वाज्ञानाभिधाने विरुद्धपक्षाभिधाने च । तत्र सर्वत्र प्रकृतसाध्यस्यासिद्धिः । किं तु प्रथमतुर्ययोः प्रमाणान्तरमनुसरणीयं, न तु तावतैव तद्भङ्गनिर्णयः ॥

अथ निगदाः । तत्र नारदः—

निर्दिष्टेष्वर्थजातेषु साक्षी साक्ष्यत्वमागतः ।
न ब्रूयादक्षरसमं तन्नैव गदितं भवेत् ॥

यत्र द्रव्यं निगदति सङ्ख्यांशे मुह्यते तत्र सङ्ख्यांशे प्रमाणमनु-

---

( १ ) ध्रुवस्तस्य—इति मुद्रितपुस्तके पाठः ।

सरणीयमित्येके । द्रव्याद्येऽपि क्रियान्तरमिति सम्प्रदाय । तथा—

न्यूनमभ्यधिकं वापि प्रब्रूयुर्यस्य साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः ॥

शतं साक्षितः शतद्वयाभिधानमसत्यत्वनिश्चयादनुक्तप्रायम् । न हि संभवति आहाराभ्यासवतो वादिनः साक्षिस्मर्यमाणविस्मरणम् । पञ्चाशदभिधानं तु तदतिरिक्तभागेऽनुक्तप्रायम् । उक्तभागे तु निर्णय क्रमेणैवेति मिश्राः । स्मृतिसारादयस्तु न्यूनाभिधानेन सर्वोऽपि क्रियान्तरमित्याहुः । श्रुतसाक्षी तु पृष्टो यत्राऽहमिममर्थमश्रौषमिति वदति तत्र नार्थसिद्धिः शब्दार्थयोर्व्याप्त्यभावात् । किं तु प्रत्यक्षादिव शब्दादप्यवधारितमर्थमेव यत्र निगदति तत्रार्थसिद्धिः । शब्दस्याप्रामाण्यशङ्काकलङ्के तु न स साक्षी भवतीति दिक् ॥ ७९ ॥

(मिता०) साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह—

यस्येति । यस्य वादिनः प्रतिज्ञां द्रव्यजातिसंख्यादिविशिष्टां साक्षिणः सत्यां वदन्ति सत्यमेव जानीमो वयमिति स जयी भवति । यस्य पुनर्वादिनः प्रतिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य पराजयो ध्रुवो निश्चितः । यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति तत्र प्रमाणान्तरेण निर्णयः कार्यः । न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः । स्वभावोक्तमेव वचनं ग्राह्यम् । यथाह—'स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् । उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः' ॥ इति ॥ ७९ ॥

(वी० मि०) युगपदुपस्थितानां साक्षिणां द्वैधे बलाबलमुक्तमिदानीं क्रमेणोपस्थितौ तदाह—

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्त(१)राः ॥
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ ८० ॥

साक्षिभिः साक्ष्य उक्तेऽपि तत्साक्ष्यपेक्षया उत्कृष्टगुणाः पूर्वमुपन्यस्ता अन्ये समसंख्या अपि द्विगुणा वा साक्षिणो यद्यन्यथा पूर्वसाक्षिविपरीतं ब्रूयुस्तदा पूर्वसाक्षिणः कूटा असत्यवादित्वेन निर्णेयाः स्युः । चाकारेण यदच्छत्वाद्याचिना संख्याधिक्यमात्रं व्यवस्थितम् । इदं तु जयावधारणात्प्राक् ।

(१) गुणवत्तमा—इति मुद्रितपुस्तके पाठः ।

क्रियां बलवतीं त्यक्त्वा दुर्बलां यः समाश्रयेत् ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥

इति कात्यायनवचनं तु जयोत्तरम् । प्रमाणस्य वैकल्ये त्यक्त्वेति बुद्धिपूर्वकत्यागवाचिना बुद्धिपूर्वं प्रागनुपन्यस्तस्य च वैकल्यं दर्शयतीति निरोधः ॥ ८० ॥

( मिता० ) 'अन्यथावादिनो यस्य ध्रुवस्तस्य पराजय' इत्यस्यापवादमाह—

उक्तेऽपीति । पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभि(१)प्राये प्रतिज्ञातार्थवैपरीत्येनाभिहिते यद्यन्ये पूर्वेभ्यो गुणवत्तमाः द्विगुणा वा अन्यथा प्रतिज्ञातार्थानुगुण्येन साक्ष्यं ब्रूयुस्तदा पूर्वे साक्षिणः कूटा मि(२)थ्यावादिनो भवेयुः । नन्वेतदनुपपन्नम्, अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥ यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा' ॥ इति नारदवचनाच्च । उच्यते–यदार्थी प्रतिज्ञातार्थस्यान्तरात्मसाक्षित्वेनाऽनाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानः साक्षिष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्यते । उक्तं च—'यस्य च (३)दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः' इति । यथा चक्षुरादिकरणदोषाध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञान(४)स्याप्रामाण्येन करणदोषकल्पना तथेहापि । साक्षिपरीक्षातिरेकेण (५)वाक्यपरीक्षोपदेशाच्च–'साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्' इति । कात्यायनेनाप्युक्तम्–'यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् । शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः' ॥ इति । क्रिया साक्षिलक्षणा 'नार्थसम्बन्धिनो नाप्ताः' इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम् । वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन–'सत्येन शुध्यते वाक्यम्' इति स्मरणात् । एवं शुद्धायाः क्रियायाः (६)शुद्धवाक्याच्च यः शुद्धोऽवगतोऽर्थः स शु-

(१) स्वाभिप्रायेण प्रतिज्ञा घ. । (२) मिथ्यासाक्षिणो घ. । (३) करणं दुष्टं घ. ।
(४) ज्ञानस्य प्रामाण्य घ. । (५) वाक्यपरीक्षोप घ. । (६) शुद्धाच वाक्याद्यः शुद्धो घ. ।

द्धस्तथाभूत इति स्थितिरीदृशी मर्यादा न्यायविदाम् । कारणदोषबाधकप्रत्ययाभावे सत्यवितथ एवार्थ इत्यर्थः । ननु स्वयमर्थिना प्रमाणीकृ(१)तान्साक्षिणोऽतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते । नैष दोषः । यतः—'क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम् ' ॥ इति कात्यायनेन जयावधारणोत्तरकालं क्रियान्तरग्रहणनिषेधाज्जयावधारणात्प्राक् क्रियान्तरपरिग्रहो दर्शितः । नारदेनापि–'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्' इति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि । तस्मादुक्तेऽपि साक्षिभिः साक्ष्येऽपरितुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम् । एवं स्थिते यथाभिहितवचनेभ्यः साक्षिभ्यो गुणवत्तमाः द्विगुणा वा पूर्वनिर्दिष्टा असन्निहिताः साक्षिणः सन्ति तदा त एव प्रमाणीकर्तव्याः—'स्वभावेनैव यद् ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्' इत्यस्य सर्वव्यवहारशेषत्वात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्' ॥ इति नारदवचनाच्च । पूर्वनिर्दिष्टानामसम्भवे त्वनिर्दिष्टा अपि (२)तथाविधाः साक्षिण एव ग्राह्या न दिव्यम् । 'संभवे साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियाम् ' इति स्मरणात् । तेषामसम्भवे दिव्यं (३)प्रमाणीकर्तव्यम् । अतःपरमपरितुष्यताऽर्थिना [illegible] प्रमाणान्तरमन्वेषणी(४)यमवचनादिति परिसमापनीयो व्यवहारः । यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसरामावात्सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम् । तत्र च दोषावधारणे विवादास्पदीभूतमृणं दाप्याः, सारानुसारेण दण्डनीयाश्च । अथ दो(५)षानवधारणं तदा प्रत्यर्थिना तावता सन्तोष्टव्यम् । यथाह मनुः ( ८। १०८ )–'यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः' ॥ इति । एतच्च—'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्' इत्यस्यापरितुष्यत्प्रत्यर्थिविषयापवादो द्रष्टव्यः । केचित्तु 'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्येतद्वचनमर्थिना निर्दि-

(१) कृता साक्षिणो ख । (२) तथाविधा एव साक्षिणो ग्राह्या ख. ।
(३) प्रमाणं कर्तव्यं ख । (४) मनुवचनात् ख यमवचनात् घ. । (५) दोषावधारण ख. ।

ऐषु साक्षिष्वर्थानुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान्द्विगुणान्वान्यान्साक्षिणः पूर्वोक्तविपरीतं संवादयति तदा पूर्ववादिनः साक्षिणः कूटा इति व्याचक्षते। तदसत्। प्रत्यर्थिनः क्रियानुपपत्तेः। तथा हि अर्थी नाम साध्यस्यार्थस्य निर्देष्टा, तत्प्रतिपक्षतदभाववादी प्रत्यर्थी तत्राभावस्य भावसिद्धिसापेक्षसिद्धित्वाद्भावस्य (१)चाभावसिद्धिनिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम्। अभावस्य(२) स्वरूपेण साक्ष्यादिप्रमेयत्वाभावात्। अतश्चार्थिन एव क्रिया नियता स्मर्यते। 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्' ॥ इति। न चैकस्मि(३)न्व्यवहारे द्वयोः क्रिया। 'न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः' इति स्मरणात्। तस्मात्प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वाऽन्यथा ब्रूयुरित्यनुपपन्नम्। अथ मतम्-यत्र द्वावपि भावप्रतिज्ञावादिनौ मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्तमिति प्रतिज्ञावादिनोः पूर्वापरकालविभागानाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो ग्राह्या इत्याकाङ्क्षायां—'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः' ॥ इति वचनेन यः पूर्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थिते तस्या(४)पवादः 'उक्तेऽपि साक्षिभिः साक्ष्ये' इति। अतश्च पूर्वोत्तरयोर्वादिनोः समसंख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः। यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः प्रष्टव्याः। एवं च नाभावस्य साध्यता। उभयोरपि भाववादित्वात्, चतुर्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था। एकस्मिन्व्यवहारे तु यथैकस्यार्थिनः क्रियाद्वयं परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति। तदप्या(५)चार्यो नानुमन्यते—'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यपि शब्दादर्थात्प्रकरणाद्वाऽस्यार्थस्यानवगमादित्यलं प्रसङ्गेन ॥ ८० ॥

( वी० मि० ) कूटसाक्षिणां दण्डमाह –

पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ॥

---

(१) चाभावानिरपेक्ष ख. । (२) अभावस्वरूपेण ख. । (३) कस्मिन्विवादे घ. ।
(४) पवादमाह ख. । (५) प्याचार्या नानुमन्यन्ते घ. ।

विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ॥

यः साक्ष्यं श्रावितोऽन्येभ्यो निन्हुते तत्तमोवृतः ॥
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥

कूटकृतः कपटेन व्यवहरन्तोऽसत्याभिधायिन इति यावत्, ईदृशा ये साक्षिणस्ते पृथक् पृथक् प्रत्येकं विवादपदाद्द्विगुणं दण्डं दण्डनीया राज्ञे दाप्याः । क्वचित्तु कूटसाक्ष्यकृत इति पाठः । इदं च लोभादिबहुकारणनिश्चयेन तथाशब्देन बुधा पराजिताय विवादपत्रं धनं अनिगददण्डरूपं प्रागुक्तं दाप्या इति समुच्चीयते । ब्राह्मणस्तु राज्ञा स्वदेशादपसारणीयः स्मृतः स्मृतावभिहितो न स्वर्धेन दण्डनीयः । यस्तु साक्ष्यमन्येभ्यः श्रावितः श्रावितवान् अहमिममर्थं जानामीति कथितवान् पश्चात्तमोवृत्तो रागाद्याक्रान्तचित्तः साक्ष्यं निन्हुते निग(१)दकाले पस्तपति स विवादपदादष्टगुणं द्रव्यं दाप्यः । तादृशापराधेऽपि ब्राह्मणं विवासयेदेव । तुशब्देनार्थदण्डव्यवच्छेदः । विष्णुः—'कूटसाक्षिणां सर्वस्वापहरणम्' । एतच्च तच्छीलविषयम् । मनुः—

लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम् ।
भयाद्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥
कामाद्दशगुणं पूर्वं क्रोधाच्च त्रिगुणं परम् ।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव च ॥
एतानाहुः कूटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ॥ ८१–८२ ॥

( मिता० ) कूटसाक्षिणो दर्शितास्तेषां दण्डमाह—

पृथगिति । यो धनदानादिना कूटान्साक्षिणः करोतीति स कूटकृत् । साक्षिणश्च ये तथा कूटास्ते वि(२)वादाख्याम विवादपराजयात्पराजये यो दण्डस्तत्रतत्रोक्तस्तं दण्डं द्विगुणं पृथक्पृथगेकैकशो दण्डनीयाः । ब्राह्मणस्तु विवास्यो राष्ट्रान्निर्वास्यो न(३) दण्डनीयः । एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च वेदित(४)व्यम् । लोभा(५)दिकारणविशेषपरिज्ञानेऽभ्यासे च मनुनोक्तम् ( ८।१२०।

(१) निगदनकाले-इति ख पु पाठः । (२) विवादाद्विवादपराजये [illegible] विवादात्पराजये ग ।
(३) न दण्डया ग घ । (४) द्रष्टव्यम् ख ग । (५) लोभक्रोधेन मिथ्याभिधाने.।

२१ )—'लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम् । भ(१)याद्वौ मध्यमौ दण्डौ मैत्र्या(२)त्पूर्वं चतुर्गुणम् ॥ कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् । अज्ञानाद्वे शते पूर्णे बालिश्याच्छतमेव तु॥' इति । तत्र लोभोऽर्थलिप्सा । मोहो विपर्ययज्ञानम् । भयं सन्त्रासः । मैत्री स्नेहातिशयः । कामः स्त्री(३)व्यतिकराभिलापः । क्रोधोऽमर्पः । अज्ञानमस्फुटज्ञानम् । बालिश्यं ज्ञानानुत्पादः । सहस्रादिपु ताम्रिकाः पणा गृह्यन्ते । तथा ( मनुः ८।१२।३ )-'कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः । प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ' । इति । एतच्चाभ्यासविषयम् । कुर्वाणानिति वर्तमा(४)ननिर्देशात् । त्रीन्वर्णान्क्षत्रियादीन् पूर्वोक्तं दण्डयित्वा प्रवासयेन्मारयेत् । अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात् , अस्य चाऽर्थशा(५)स्त्ररूपत्वात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् । ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्निष्कासयेत् । यद्वा विवासयेत् वाससो विगतो विवासाः । विवासं करोतीति णिचि कृते 'णाविष्ठवत्प्रातिपदिकस्य' इति टिलोपे रूपम् नग्नीकुर्यादित्यर्थः । अथवा वसत्यस्मिन्निति वासो गृहम् । विवासयेत् भग्नगृहं कुर्यादित्यर्थः । ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे च तत्रतत्रोक्तो दण्ड एव । अभ्यासे त्वर्थदण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव । महाविषये तु देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम् । न च ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्यते । 'चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् । शरीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्' ॥ इति स्मरणाच्च । तथा ( मनुः ८।३७८ )—सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्' इति स्मरणात् । यत्तु शङ्खवचनम्—'त्रयाणां वर्णानां धनापहारवधबन्ध-

(१) भयाद्वौ मध्यमौ दण्डौ ख. । (२) पूर्वं प्रथमसाहसमेव. । (३) स्त्रीव्यतिरेका ख. ।
(४) वर्तमानकाल ख. । (५) शास्त्ररूप ख. ।

क्रिया विवासनाङ्ककरणं ब्राह्मणस्य' इति तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात्। 'शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्तितः। काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च'। इति वधसर्वस्वहरणयोः सहपाठात् । यदप्युक्तम्—'राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्' इति तत्प्रथमकृतसाहसविषयं न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति। ( मनुः ८।३८० )—'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्' इति सामान्येन मनुस्मरणात्। तथा ( मनुः ८।३८१ ) 'न ब्राह्मणवधाद् भूयानधर्मो विद्यते भुवि। तस्मादस्य वधं राजा मनसापि न चिन्तयेत्' ॥ इति ॥ ८१ ॥

( मिता० ) जानतः साक्ष्यानङ्गीकार आह—

य इति। अपि च–यस्तु साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन्निगदनकाले तमोवृतो रागाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यः साक्षिभ्यो निन्हुते नाहमत्र साक्षी भवामीति स विवादपराजये यो दण्डस्तं दण्डमष्टगुणं दाप्यः। ब्राह्मणं पुनरष्टगुणद्रव्यदण्डदानासमर्थं विवासयेत्। विवासनं च नग्नीकरणगृहभङ्गदेशानिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम्। इतरेषां त्वष्टगुणद्रव्य(१)दण्डदानासंभवे स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशादि द्रष्टव्यम्। एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम्। यदा सर्वे साक्ष्यं निह्नुवते तदा सर्वे समानदोषाः। यदा ॥ साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति तदानु(२)बन्धाद्यपेक्षया दण्ड्याः। यथाह कात्यायनः—'उक्त्वान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः' इति। न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्तव्याः। यथाह नारदः—'न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः। भेदयेन्नैव चान्येन (३)हीयेतैव समाचरन्' ॥ इति ॥ ८२ ॥

( वी० मि० ) कौटसाक्ष्ये दण्डादेरपवादमभिप्रेत्याह—

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ॥
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥

यत्र वर्णिनां ब्राह्मणक्षत्रियविशां वधः प्राणनाशः सत्याभिधाने प्रसज्यते तत्र साक्षी अनृतं प्राणनाशनिवृत्युपयोगि वदेत्। तत्पाव

(१) दण्डासंभवे ख। (२) अनुबन्धो दोषोत्पाद। (३) हीयच्चैव घ।

नाय तस्यानृताभिधानस्य प्रायश्चित्तेन शोधनाय सारस्वतः सरस्वतीदेवताकश्चरुः प्रागुक्तो निर्वाप्य इत्यङ्गमुखेन होमनिर्देशः। न चाऽनृताभिधानस्याऽभ्यनुज्ञानात्प्रायश्चित्तानुपपत्तिः साक्ष्यनृताभिधानजन्यपापस्य पूर्वप्रक्रान्तस्यापवादेऽपि सामान्यतोऽनृताभिधानजन्यपापस्याऽनपवादेन प्रायश्चित्तसम्भवात्। वर्णिवधजन्यपापापेक्षया लघुत्वादेतस्य पापस्याऽगत्याश्रयणमिति केचित्। वस्तुतस्तु तत्पावनायेति अकरणजन्यपापाभावायेत्यर्थकस्याऽनृतवचनस्य यागीयहिंसावद्विहितत्वेन पापाजनकत्वात्। अत एव—

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः।
तत्र वक्तव्यमनृतं तत्सत्यादतिरिच्यते॥

इति मनुरपि दोषाभावमाह। गौतमोऽपि—'नानृतवचने दोषोऽस्ति जीवनं तदधीनञ्चेन्न तु पापीयसो जीवन'मिति तत्त्वम्। अत्र प्रायश्चित्तान्तरमाह मनुः—

कूष्माण्डैर्वापि जुहुयात् घृतमग्नौ यथाविधि।
उदित्यृचा वा वारुण्या त्र्यृचेनाब्दैवतेन वा।

विष्णुः—'शूद्रस्त्वेकाह्निकं गोदशकस्य ग्रासं दद्यात्'॥ ८३॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने साक्षिप्रकरणम्।

(मिता०) साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धं तदपवादार्थमाह—

वर्णिनामिति। यत्र वर्णिनां शूद्रविट्क्षत्रविप्राणां सत्यवचनेन वधः संभाव्यते तत्र (१)साक्ष्यनृतं वदेत् सत्यं न वदेत्। अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्धमसत्यवचनमवचनं चाभ्यनुज्ञायते। यत्र शङ्काभियोगादौ सत्यवचने वर्णिनो वधोऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते। यत्र तु सत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधस्तत्र तूष्णींभावाभ्यनुज्ञा राजा यद्यनुमन्यते। अथ राजा कथमप्यकथने न मुञ्चति तदा भेदादसाक्षित्वं कर्तव्यम्। तस्याप्यसम्भवे सत्यमेव वदितव्यम्। असत्य(२) वचने वर्णिवधदोषोऽसत्यवचनदोष एव। तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम्॥

(मिता०) तर्ह्यसत्यवचने तूष्णींभावे च शास्त्राभ्यनु(३)ज्ञाना

(१) वदेत् घ. साक्ष्यमनृतम घ.। (२) वचनेन.। (३) भ्यनुज्ञया ख.।

प्रत्यवायाभाव इत्यत आह—

तदिति। तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय सारस्वतश्चरुर्द्विजैरेकैकशो निर्वाप्यः कर्तव्यः। सरस्वती देवता अस्येति सारस्वतः। अनवस्रावितान्तरूष्मपक्वौदने चरुशब्दः प्रसिद्धः। इहायमभिसन्धिः—साक्षिणामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम्। यत्तु—'नानृतं वदेत्। अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी' इति सामान्येनानृतवचनमवचनं च (१)प्रतिषिद्ध तदतिक्रमनिमित्तमिदं प्रायश्चित्तम्। न च मन्तव्यं साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादव(२)स्थ्यादभ्यनुज्ञावचनमनर्थकमिति। (३)यतः साक्ष्यनृतवचनावचनयोर्भूयान्प्रत्यवायः साधारणानृतवचनावचनयोरल्पीयानित्यर्थवदभ्यनुज्ञावचनम्। यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र तथापीहाभ्यनुज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसो निवृत्त्यावल्पीयानप्यानुषङ्गिकोऽपि प्रत्यवायो न निवर्तत इति गम्यते। एतदेवान्यत्र प्रदनेषु वर्णिवधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम्। न च तत्र प्रायश्चित्तमस्ति प्रतिषेधान्तराभावात्। निमित्तान्तरेण कालान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यत इति ॥ ८३ ॥

इति साक्षिप्रकरणम्।



(वी० मि०) अथ लिखितं प्रमाणं निरूपयति—

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ॥
लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥ ८४ ॥
समामासतदर्धाहर्नामजातिस(४)गोत्रकैः ॥
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ ८५ ॥

---

(१) निषिद्ध ख। (२) स्थ्यादवचनाभ्यनुज्ञा ख.।
(३) साक्षिणामसत्यवचनावचनप्रतिषेधातिक्रमयो ख।
(४) स्वगोत्रकै —इति मुद्रितपुस्तके पाठ।

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ॥
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ ८६ ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ॥
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥ ८७ ॥

उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ॥
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥ ८८ ॥
विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ॥
तत्प्रमाणं स्मृतं स(१)र्वं बलोपधिकृतादृते ॥ ८९ ॥

लिखितं तावद्द्विविधं स्वहस्तकृतमन्यत्कृतं च । तत्रान्त्यं साक्षिमत्कार्य्यम् । आद्यं तु साक्षिभिर्विना बलात्कारेण छद्मना च कृतं विना प्रमाणमिति विशेषः । परं तु स्वलिखितसंशयसम्भावनायां तद्व्युदासाय साक्षिमत्तदपि कार्यम् । इतरत्साधारणं विशेषणम् । यः कश्चिद्दणादिरूपोऽर्थः परस्परं धनिकाधमर्णादिभ्यां द्वाभ्यामपि स्वस्वोभयस्य रुच्या निष्णातः व्यवस्थापितः तस्मिन्नर्थे धनिकादिनामालिखनपूर्वकं लेख्यं प्रतिपादकलिपिसमुदायरूपं समा वर्षः, मासः, तदर्धं पक्षः, अहस्तिथिर्वारश्च । एतेन ऋणग्रहणाद्यधिकरणीभूताः, नाम चाऽधमर्णादेः, उत्तमर्णाऽधमर्णयोर्द्वयोरपि जातिर्ब्राह्मणत्वादिः सगोत्रं गोत्रमेव काश्यपादि स्वगोत्रकैरिति क्वचित्पाठः, एतैर्युक्तम् । कठादिना समानं ब्रह्म वेदशाखां चरत्यधीत इति सब्रह्मचारी तस्य भावः सब्रह्मचारिकमुत्तमर्णाधमर्णयोः कठादिशाखाध्यायित्वम् । आत्मीयावुत्तमर्णाऽधमर्णादिसम्बन्धिनौ पितरौ तयोर्नाम, आदिपदाद्द्रव्यजातिसंख्यादेर्ग्रहणं, एतैश्चिन्हितं कार्य्यम् । आद्यतुशब्देन बलोपधिकृतत्वव्यवच्छेदः । द्वितीयतुशब्देनाऽन्यकृते लेख्येऽसाक्षिकत्वव्यवच्छेदः । इदं चाऽवधेयम्—परस्याप्यतिप्रामाणिकत्वेनाऽवधारितस्य लेख्यं साक्षिरहितमपि प्रमाणमन्यथा तु साक्षिणा निर्णयः । लेख्यं तु तत्र साक्षिणां स्मरण एवोपयुज्यत इति । अर्थे सम्पूर्णे लिखिते ऋणी अधमर्णः यदत्र पत्रे लिखितं तदमुकपुत्रस्य मे

(१) लेख्यं—इति मुद्रितपुस्तके पाठः ।

मतमित्येवं क्रमेण स्वस्य नाम स्वहस्तेन लिखित्वा पत्रे निवेशयेत् । लिखनानभिज्ञे विशेषमाह व्यासः—

अनभिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं [redacted] सः ।
साक्षी वा साक्षिणाऽन्येन परसाक्षिसमीपतः ॥

साक्षिमदिति कथितं, तत्र प्रकारमाह–साक्षिणश्चेति । समाः समगुणास्ते साक्षिणः स्वपितृनामलेखनपूर्वकमत्रार्थेऽहममुकनामा साक्षीति स्वहस्तेन लिखेयुः । लिखनानभिज्ञास्तु लेखयेयुरिति च शब्देन समुच्चीयते । ततः साक्षिनामलिखनानन्तरं लेखकः पत्रलिखनकर्ता उभाभ्यामुत्तमर्णाऽधमर्णाभ्यामर्थितेनाऽमुकनामकेन मयैतल्लिखितमिति अन्ते लेखनीयाऽखिलार्थशेषे स्वयं लिखेत् । हिशब्दाभ्याम(१)र्थनस्य लेखनहेतुत्वं लेख्यार्थस्याऽवधारणं च दर्शितम् । विनापीति व्याख्यातं प्राक् । तुशब्देन परलिखिते साक्षिविनाकृतस्वस्य व्यवच्छेदः । सर्वमित्यनेन वादिसाक्षिपत्रलेखकानां सर्वं लिखितमुच्यते ॥ ८४-८९ ॥

( मिता० ) भुक्तिसाक्षिणौ निरूपितौ, सांप्रतं लेख्यं निरूप्यते । तत्र लेख्यं द्विविधं शासनं जानपदं चेति । शासनं निरूपितम् , जानपदमभिधीयते । तच्च द्विविधम्–स्वहस्तकृतम(२)न्यकृतं चेति । तत्र स्वहस्तकृतमसाक्षिकम्, अ(२)न्यकृतं ससाक्षिकम् । अनयोश्च देशाचारानुसारेण प्रामाण्यम् । यथाह नारदः —'लेख्यं तु द्विविधं ज्ञेयं स्वहस्ताऽन्यकृतं तथा । असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः' ॥ इति । तत्रान्यकृतमाह—

य कश्चिदिति । धनिकाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या इयता कालेनैतावद्देयमियती च प्रतिमासं वृद्धिरिति निर्णातो व्यवस्थितः तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं लेख्यं साक्षिमदुक्तलक्षणसाक्षियुक्तं धनिकपूर्वकं धनिकः पूर्वो यस्मिंस्तद्धनिकपूर्वकम् , धनिकनामलेखनपूर्वकमितियावत् कार्यं कर्तव्यम् । उक्तलक्षणाः साक्षिणो वा कर्तव्याः—'कर्त्रा [redacted] यत्कृतं कार्यं सिद्ध्यर्थं तस्य साक्षिणः । प्रवर्तन्ते विवादेषु स्वकृतं वाथ लेख्यकम्' ॥ इति स्मरणात् ॥ ८४ ॥

(१) अर्थितस्य—इति ख० पु० पाठः ।

(२) मन्यहस्तकृत म ।

( मिता० ) अपि च—

समामासेति । समा संवत्सरः। मासश्चैत्रादिः । तदर्धं पक्षः शुक्लः कृष्णो वा । अहस्तिथिः प्रतिपदादिः । नाम धनिक(१)र्णिकयोः । जातिर्ब्राह्मणत्वादिः । स्वगोत्रं वासिष्ठादिगोत्रम् । एतैः समादिभिश्चिह्नितम् । तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इति । आत्मीयपितृनाम धनिकपितृनाम । आदिग्रहणाद्द्रव्यजातिसंख्या(२)चारादेर्ग्रहणम् । एतैश्च चिह्नितं लेख्यं कार्यमिति गतेन सम्बन्धः ॥ ८५ ॥

( मिता० ) किञ्च--

समाप्त इति । धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितस्तस्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो नामात्मीयं स्वहस्तेनास्मिल्लेख्ये यदुपरि लेखितं तन्ममामुकपुत्रस्य मतमभिप्रेतमिति निवेशयेत्पत्रे विलिखेत् ॥ ८६ ॥

( मिता० ) तथा—

साक्षिण इति । तस्मिल्लेख्ये ये साक्षिणो लिखितास्तेऽप्यात्मीयपितृनामलेखनपूर्वकं अस्मिन्नर्थेऽयममुको देवदत्तः साक्षीति स्वहस्तेनैकैकशो लिखेयुः । ते च समाः संख्यातो गुणतश्च कर्तव्याः । यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसंनिधौ स्वमतं लेखयेत् । यथाह नारदः—'अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् । साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः' ॥ इति ॥ ८७ ॥

( मिता० ) अपि च—

उभयेति । ततो लेखक उभाभ्यां धनिकाधमर्णि(३)काभ्यां प्रार्थितेन मयामुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत् ॥ ८८ ॥

( मिता ) सांप्रतं स्वकृतं लेख्यमाह—

विनेति । यल्लेख्यं स्वहस्तेन लिखितमधमर्णेन तत्साक्षिभिर्विनापि प्रमाणं स्मृतं मन्वादिभिः । बलोपधिकृतादृते बलेन बलात्कारेण उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्माद्विना ।

---

(१) धनिकाधमर्णिकयोः ख. । (२) संख्याचारादेः ख. ग. । (३) काभ्यामुभाभ्यां ख. ।

नारदोऽप्याह-'मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् । तदप्रमाणं लिखितं भयोपधिकृतं तथा' ॥ इति । (१)तच्चैतत्स्वहस्त(२)कृतं कृतं च यल्लेख्यं देशाचारानुसारेण स(३)बन्धकव्यवहारेऽबन्धकव्यवहारे च युक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावत् न पुनः साधुशब्दैरेव, प्रातिस्विकदेशभाषयापि लेखनीयम् । यथाह-'देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् । तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम्' ॥ इति । विधानं विधिः आधेर्विधिराधिविधिराधीकरणं तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् । अविलुप्तक्रमाक्षरं अक्षराणां क्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरं, तदेवंभूतं लेख्यं प्रमाणम् । राजशासनवन्न साधुशब्दनियमोऽस्त्येत्यभिप्रायः ॥ ८९ ॥

( वी० मि० ) लेख्यं क्वचिदप्रमाणमित्यभिप्रेत्याह—

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ॥
आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥ ९० ॥

लेख्यारूढं कृतमृणं त्रिभिरेव ग्रहीतृतत्पुत्रतत्पौत्रैरेव देयम् । एवकारेण प्रपौत्रादिव्यवच्छेदः । तथा च प्रपौत्रादेः ऋणपत्रं सदप्यर्थासाधकमिति भावः । तुशब्देन ऋणमित्यत्राऽन्वितेन प्रातिभाव्यागते पौत्रदेयत्वं व्यवच्छिद्यते । आधिर्भोग्याधिः क्षेत्रादिस्तावद् भुज्यते यावत्तदाधिग्रहीत्रे ऋणं नाऽधमर्णेन प्रदीयते । तथा चाऽऽधिपत्रं पुरुषत्रयोर्ध्वस्यापि प्रमाणमिति भावः ॥ ९० ॥

( मिता० ) लेख्यप्रसङ्गेन लेख्यारूढमप्यृणं त्रिभिरेव देयमित्याह— ऋणमिति । यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयं तथा लेख्यकृतमप्याहर्तृ(४)तत्पुत्रतत्पुत्रैस्त्रिभिरेव देयं न चतुर्थादिभिरिति नियम्यते । ननु पुत्रपौत्रैर्ऋणं देयमित्यविशेषेण ऋणमात्रं त्रिभिरेव देयमिति नियतमेव । बाढम् । अस्यैवोत्सर्गस्य पत्रारूढर्णविषये स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदं वचनमारब्धम् । तथा हि पत्रलक्षणमभिधाय कात्यायनेनाभिहितम्—'एवं कालमतिक्रान्तं पितृ-

(१) तवैतद् घ । (२) कृत च लेख्य ग । (३) सबन्धव्यवहारे च ज ।
(४) तत्पुत्रपौत्रैः ।

णां दाप्यते ऋणम्' इति । इत्थं पत्रारूढमृणमतिक्रान्तकालमपि पितॄणां सम्बन्धि दाप्यते । अत्र पितॄणामिति बहुवचननिर्देशात्कालमतिक्रान्तमिति व(१)चनाच्चतुर्थादिर्दाप्य इति प्रतीयते । तथा हारीतेनापि—'लेख्यं यस्य भवेद्धस्ते लाभं तस्य विनिर्दिशेत्' इति । अत्रापि यस्य हस्ते लेख्य(पत्र)मस्ति तस्यर्णलाभ इति सामान्येन चतुर्थादिभ्योऽप्यृणलाभोऽस्तीति प्रतीयते । अतश्चैतदाशङ्कानिवृत्त्यर्थमेतद्वचनमित्युक्तम् । वचनद्वयं च योगीश्वरवचनानुसारेण योजनीयम् ॥

(मिता०) अस्यापवादमाह—

आधिरिति । सबन्धकेऽपि (२)पत्रारूढं ऋणं त्रिभिरेव देयमिति नियमादृणापाकरणानधिकारिणा(३)ध्याहरणेऽप्यनधिकारप्राप्ताविदमुच्यते । यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेवाधिर्भुज्यते इति वदता सम्बन्धकर्णापाकरणे चतुर्थादेरप्यधिकारो दर्शितः । नन्वेतदप्युक्तमेव फलभोग्यो न नश्यतीति । सत्यम्, तदप्येतस्मिन्नसत्यवादवचने पुरुषत्रयविषयमेव स्यादिति सर्वमनवद्यम् ॥ ९० ॥

(वी० मि०) ऋणप्रयोगादिकालीनलेख्यस्य देशान्तरस्थत्वादिना व्यवहारकाले व्यापार्यत्वाभावसम्भावनायां लेख्यान्तरं कार्यमुभयानुमतं तच्च प्रमाणमित्याह—

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे तथैव च ॥
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ९१ ॥

देशान्तरस्थे व्यवहितदेशान्तर्वर्तिनि दुष्टे सन्दिग्धाक्षरे नष्टे पत्रनाशात्, उन्मृष्टे मसीदौर्बल्यादिना मृदिताक्षरे, भिन्ने पत्रविदलनेन द्विधाभूते, अग्निना दग्धे अथवा छिन्ने पत्रस्य खण्डखण्डीभावेन द्विधाभूते लेख्येऽन्यल्लेख्यं कारयेत् । तथाशब्देन श्लिष्टपदघटितस्य चकारेण चौरहृतस्य समुच्चयः । एवकारेण देशान्तरस्थत्वाद्यभावे लेख्यान्तरकरणव्यवच्छेदः । यदि तु परः पापिष्ठहारिणा पूर्वलेख्यं न मन्यते तदा साक्ष्यादिना पूर्वपत्रं प्रमाप्य पत्रान्तरं करणीयमिति९१॥

---

(१) वचनाच्च चतुर्थादिः ख. ।

(२) पत्रारूढं ऋणं ख. ग. ।

(३) कारिणाध्याहरणे ख. ।

( मिता० ) प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति—

देशान्तरस्थ इति । व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते । व्यवहाराक्षमत्वं चात्यन्तव्यवहितदेशान्तरस्थे पत्रे दुर्लेख्ये दुष्टानि संदिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये, नष्टे कालवशेन, उन्मृष्टे मषीशैथिल्यादिना मृदितलिप्यक्षरे, हृते (१)तस्करादिभि', भिन्ने विदलिते, दग्धे प्रज्वलिते, छिन्ने द्विधाभूते सति (२)पत्र द्विर्भवति । एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम् । विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयना(३)याध्वापेक्षया कालो दातव्यः । (४)दुर्देशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः। यथाह नारदः—'लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते । सतस्तत्कालकरणमसतो (५)द्रष्टृदर्शनम्' ॥ इति । सतो विद्यमानस्य पत्रस्य देशान्तरस्थस्यानयनाय कालकरण कालावधिर्दातव्यः । असतः पुनरविद्यमानस्य पत्रस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं (६)व्यवहारपरिसमापनं कार्यम् । यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः–'अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्' इति स्मरणात् । एतच्च जानपदं व्यवस्थापत्रम् । राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति । इयांस्तु विशेष—'राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा । राजकीय स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्' ॥ इति । तथान्यदपि राजकीयं जयपत्रकं वृद्धवसिष्ठेनोक्तम्–'यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् । सावधारणकं चैव जयपत्रकमिष्यते ॥ प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया । सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम्' ॥ इति । तथा सभासदोऽपि म(७)तं मेऽमुकपुत्रस्येति स्वहस्तं दद्युः । 'सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः । यथालेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते' ॥ इति स्मरणात् । सभासदां च परस्परानुमतिव्यतिरेकेण न व्यवहारो निःशल्यो भवति । यथाह नारदः—'यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते । स निःशल्यो विवादः स्यात्सशल्यस्त्वन्यथा भवेत्' ॥

---

(१) तस्करादिना ग घ ।     (२) द्वितीयपत्र भवति ग ।

(३) नाय दुर्गापेक्षया ख ।     (४) दुर्गदेशावस्थिते ख ।

(५) दृग्दर्शन घ. ।     (६) व्यवहारे ख० ।     (७) दत्तं मे ख० ।

इति। एतच्चतुष्पाद्व्यवहार एव। 'साधयेत्साध्यमर्थं यच्चतुष्पादान्वितं च यत्। राज(१)मुद्रान्वितं चैव जयपत्रकमिष्यते'॥ इति स्मरणात्। यत्र तु हीनता। यथा—'अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रप(२)लायी च हीनः पञ्चविधः स्मृतः'॥ इति। तत्र न जयपत्रकमस्ति अपि तु हीनपत्रकमेव। तच्च कालान्तरे दण्डप्राप्त्यर्थं, जयपत्रं तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः॥ ९१॥

(वी० मि०) लेख्यस्याऽप्रामाण्यशङ्कानिरासकमाह—

सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः॥
युक्तिप्राप्तिक्रियाचिन्हसम्बन्धागमहेतुभिः॥ ९२॥

शुद्धमशुद्धं वेति विचारकसन्देहविषयस्य लेख्यस्य शुद्धिः सम्यक् निश्चयः प्रतिवादिनः स्वहस्तलिखितं यदक्षरान्तरं तत्सौसादृश्यदर्शने। आदिपदात्साक्षिलिखिताक्षरे पत्रलिखिते दर्शनेन पत्रलेखकस्य यदक्षरान्तरं तत्सौसादृश्यस्य तल्लिखिताक्षरे दर्शनेन स्यात्। युक्तिः इदानीं द्रव्यं नास्ति मासान्तरे दातव्यं मयेत्यभिधानान्यथानुपपत्तिः, प्राप्तिः तत्पत्रलिखितर्णवृद्ध्यादिप्राप्तिः, क्रिया साक्षिनिगदनरूपा, चिह्नं प्रतिवादिनो लेखनीयमसाधारणं श्रीकारादि, सम्बन्धः विवादपदे कुण्डलादौ पूर्वकाल उत्तमर्णीयत्वावधारणं, आगमो विवाद(३)पदस्य तत्पूर्वक्रयादिः, एतैर्हेतुभिश्च शुद्धिः स्यात्॥ ९२॥

(मिता०) लेख्यसन्देहे निर्णयनिमित्तान्याह—

सन्दिग्धेति। शुद्धमशुद्धं वेति संदिग्धस्य लेख्यस्य शुद्धिः स्वहस्तलिखितादिभिः स्यात्। स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः। यदि सदृशान्यक्षराणि भवन्ति तदा शुद्धिः स्यादित्यर्थः। आदिशब्दात्साक्षिलेखकस्वहस्तलिखितान्तरसंवादाच्छुद्धिरिति। युक्त्या प्राप्तिर्युक्तिप्राप्तिः। देशकालपुरुषाणां द्रव्येण सह सम्ब(४)न्धः प्राप्तिः। अस्मिन्देशेऽस्मिन्कालेऽस्य पुरुषस्येदं द्रव्यं घटत इति युक्तिप्राप्तिः। क्रिया तत्साक्ष्युपन्यासः। चिह्नमसाधारणं श्रीकारादि। सबन्धोऽर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसम्ब-

(१) मुद्राङ्कितं ग०। (२) व्यपलापी ग.।
(३) विवादस्य—इति ख. पु० पाठः। (४) सम्बन्धप्राप्तिः ख. घ.।

न्धः । आगमोऽस्यैतावतोऽर्थस्य संभावितः प्राप्त्युपायः । एते एव हेतवः । एभिर्हेतुभिः संदिग्धलेख्यस्य शुद्धिः स्यादित्यन्वयः । यदा तु लेख्यसंदेहे निर्णयो न जायते तदा साक्षिभिर्निर्णयः कार्यः । यथाह कात्यायनः—'दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत्' इति । साक्षिसम्भवविषयमिदं वचनम् । साक्ष्यसम्भवविषयं तु हारीतवचनम्—'न मयैतत्कृतं पत्रं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थो दिव्येन निर्णयः' ॥ इति ॥ ९२ ॥

( वी० मि० ) ऋणलेख्यमिव तत्परिशोधनलेख्यमपि प्रमाणमित्यभिप्रेत्याह—

लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ॥
धनी वो(१)पगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥ ९३ ॥
दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यैवाऽन्यत्तु कारयेत् ॥
साक्षिमच्च भवेद्यत्तु(२)तद्दातव्यं ससाक्षिकम् ॥ ९४ ॥

लेख्यस्य पत्रस्य पृष्ठेऽभिलिखिताऽपरदिशि स्वल्पं स्वल्पं धनं दत्त्वा दत्त्वा ऋणिकोऽभिलिखेत् । समग्रमृणं दत्त्वा तु स्वदत्तमृणलेख्यं पाटयेत् धिद्लीकुर्यात् । ऋणपत्रासन्निधाने तु शुद्धौ अधमर्णत्वनिवृत्तिनिश्चयायाऽन्यल्लेख्यं परिशोधनप्रतिपादकं कारयेत् । अयं च विशेषः-यदृणं ससाक्षिकं गृहीतं भवेत्तत्तथैव दातव्यमिति । चकारेण स्वस्य लि(३)खितत्वाभावे प्रामाणिकहस्तचिह्नितमिति समुच्चीयते । तुकारेण असाक्षिके ऋणे ससाक्षिकपरिशोधनव्यवच्छेदः । चकारेणाऽसाक्षिके ऋणेऽसाक्षिकं दानं समुच्चीयते ॥ ९३-९४ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने लेख्यप्रकरणम् ॥



( मिता० ) एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेव ऋणं दातुमसमर्थस्तदा किं कर्तव्यमित्यत आह—

लेख्यस्येति । यदाधमर्णिकः सकलमृणं दातुमसमर्थस्तदा शक्त्यनुसारेण दत्त्वा पूर्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेत् एतावन्मया

(१) चापगत—इति क० ख० पु० पाठः ।
(२) यद्य—इति मु० पु० पाठः । (३) लिपित०—इति क०पु० पाठः ।

दत्तमिति । उत्तमर्णो वा उपगतं प्राप्तं धनं तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेत् एतावन्मया लब्धमिति । कथम् ? स्वहस्तपरिचिह्नितं स्वहस्तलिखिताक्षरचिह्नितम् । यद्वोपगतं प्रवेशपत्रं स्वहस्तलिखि(१)तचिह्नितमधमर्णायोत्तमर्णो दद्यात् ॥ ९३ ॥

( मिता० ) ऋणे तु कृत्स्ने दत्ते लेख्यं किं कर्तव्यमित्यत आह—

दत्त्वेति । क्रमेण सकृदेव वा कृत्स्नमृणं दत्त्वा पूर्वकृतं लेख्यं पाटयेत् । यदा तु दुर्गदेशावस्थितं लेख्यं नष्टं वा तदा शुद्धौ अधमर्णत्वानिवृत्त्यर्थमन्यल्लेख्यं कारयेदु(२)त्तमर्णेनाधमर्णः । पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादित्यर्थः ॥

( मिता० ) ससाक्षिके ऋणे कृत्स्ने दातव्ये किं कर्तव्यमित्यत आह–

साक्षिमदिति । यत्तु ससाक्षिकमृणं तत्पूर्वसाक्षिसमक्षमेव दद्यात् ॥ ९४ ॥

इति लेख्यप्रकरणम् ।

---

( वी० मि० ) 'एषामन्यतमाभावे दिव्यान्यतममुच्यते' इत्युक्तं, तत्र दिव्यानि निरूपयति सम्पूर्णप्रकरणेन—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ॥
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ ९५ ॥

बृहस्पतिना—

धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकाः ॥
अष्टमं कालमित्युक्तं धर्मजं नवमं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥

इति कथितेषु नवविधेषु दिव्येषु मध्ये तुलादीनि एतानि पञ्च दिव्यानि महाभियोगेष्वेव सुवर्णस्तेयादिष्वेव शीर्षकस्थ एवाऽभियोक्तरि च सति विशुद्धये सन्देहनिवृत्तये इह धर्मशास्त्रे विहितानि । शीर्षकं दिव्यकर्तुर्जयपक्षे स्वदण्डस्वीकारः । अथ 'कोशमल्पेपि दा-

---

( १ ) लिखितपरिचिह्नित ग० । ( २ ) उत्तमर्णं अध ख० ।

पये' इति स्मरणादल्पाभियोगे कोशोऽस्त्येवेति चेत्सत्यम् । परन्तु—

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः ॥

इति वचनेनाऽवष्टंभाभियोगे कोशाभावस्योक्तस्य शीर्षकस्थेऽभियोक्तरि सत्यपवादार्थमिह कोशग्रहणमिति । यत्तु—

शिरोवादिविहीनानि दिव्यानि परिवर्जयेत् ।
चत्वारि तु घटादीनि कोशश्चैवाऽशिराः स्मृतः ॥

इति पितामहेन कोशस्य शिरोवाद्यविहीनत्वमुक्तं तच्छङ्काभियोगपरम् ॥ ९५ ॥

(मिता०) लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषं प्रमाणमुक्तम् । अथाऽवसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् तुलाग्न्याप इत्यादिभि-(१)राद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां कथयति । तत्र तावद्दिव्यान्युपदिशति—

तुलेति । तुलादीनि कोशान्तानि पञ्च दिव्यानीह धर्मशास्त्रे विशुद्धये सन्दिग्धस्यार्थस्य संदेह(२)निवृत्तये दातव्यानीति ॥

(मिता०) न(३)न्वन्यान्यपि तण्डुलादीनि दिव्यानि सन्ति 'घटोऽग्निरुदकं चैव विषं कोशस्तथैव च । तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः' ॥ इति पितामहस्मरणात् । अतः कथमेतावन्त्येवेत्यत आह—

महेति । एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते न पुनरिमान्येव दिव्यानीति । महत्त्वावधिं च वक्ष्यति । नन्वल्पाभियोगेऽपि कोश(४) इष्यते—'कोशमल्पेऽपि दापयेत्' इति स्मरणात् । सत्यम् । कोशस्य तुलादिषु पाठो न महाभियोगेष्वेवेति नियमार्थः, किंतु सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः । अन्यथा शङ्काभियोगे एव स्यात् । 'अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् । तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः' ॥ इति स्मरणात् ॥

( मिता० ) महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाऽविशेषेण प्राप्तत्वादिदमाह—

शीर्षक इति । एतानि तुलादीन्यभियोक्तरि शीर्षकस्थेऽभियुक्त-

(१) दिभिराद्यै घ० । (२) सदिग्ध० । (३) अन्यान्या ख० । (४) कोशोऽस्त्येव ग० ।

कस्य भवन्ति । शीर्षकं शिरो व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणस्तेन च दण्डो लक्ष्यते तत्र तिष्ठतीति शीर्षकस्थः तत्प्रयुक्तदण्डभागित्यर्थः ॥ ९५ ॥

( वी० मि० ) 'साक्षिपूभयतः सत्सु साक्षिणः पूर्ववादिन' इत्युक्तं च, तत्र साक्षिपदं प्रमाणमात्रोपलक्षकमिति दिव्यवादिविशेषनियतत्वमभिप्रेतम् । 'न कश्चिदभियोक्तारं पुनर्दिव्ये नियोजये'दिति मनुनाप्युक्तम् । तदपवदति—

रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ॥

वादिप्रतिवादिनोरुभयोर्यदीया दिव्यरुचि', एवं तयोः करणे रुचिर्द्वयोरप्यरुचिर्वा तत्र साक्षिपूभयत इत्यादि वाच्यं यथाव्याख्यातं व्यवतिष्ठते ॥

'शीर्षकस्थेऽभियोक्तरी'त्युक्तमपवदति—

विनाऽपि शीर्षकं कुर्यान्नृपद्रोहेऽथ पातके ॥ ९६ ॥

नृपद्रोहाभिशङ्कायां पातके ब्रह्मवधादौ शङ्किते वा दिव्यानि शीर्षकं विना कुर्यात् । अथशब्देन चौर्यादिपरिग्रहः । तदुक्तं कालिकापुराणे—

परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्तेषु स्याद्दिव्यं नृपशासने ॥
विप्रतिपत्तौ विवादे च पण(१)स्य स्थापने कृते ।
तत्रैव दा(२)पयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
परदाराभिगमने बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मसंशुद्धिकारणात् ॥

विष्णुः—

राजद्रोहे साहसे च विना शीर्षप्रवर्तनात् ।

पितामहः—

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

---

(१) श्रवणास्थापने—इति मुद्रितबालंभट्टीटीकायाः पाठः ।
(२) स्थापयेद्दिव्यं—इति क० ख० पुस्तकयोः पाठः ।

नारदः—

अशिरांसि च दिव्यानि राजा भृत्येषु दापयेत्।

यथा—

शिरोवस्थायिनि नरेऽभियोक्तर्युपस्थिते(?)।
दिव्यप्रदानमुदितमन्यत्र नृपशासनात् ॥–॥९६॥

( मिता० ) 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधन'मिति मानुषप्रतिज्ञावादिन एव (१)क्रियेति व्यवस्था दर्शिता। तदपवादार्थमाह—

रुच्येति। रुच्याभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्यान्यतरोऽभियुक्तोऽभियोक्ता वा दिव्यं कुर्यात्। इतरोऽभियुक्तो वा शिरः शारीरमर्थदण्डं वा वर्तयेदङ्गीकुर्यात्। अयमभिसन्धिः—न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरं, अपि तु (२)भावाभावविशेषेण गोचरयति। अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति ॥

( मिता० ) अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो (३)भवतीत्युक्तं, तुलादीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः। तत्रावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह—

विनेति। राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च शिरःस्थायिना विनापि तुलादीनि कुर्यात् महाचौर्याभिशङ्कायां च। यथाह—'राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः। आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना' ॥ इति। तण्डुलाः पुनरल्पचौर्यशङ्कायामेव। 'चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः' इति पितामहवचनात्। तप्तमाषस्तु महाचौर्याभिशङ्कायामेव। 'चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते' इति स्मरणात्। अन्ये पुनः शपथा अल्पार्थविषयाः। 'सत्यं वाहनशस्त्राणि गोबीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च ॥ स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा। अभियोगेषु सर्वेषु(४) कोशपानमथापि वा ॥ इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे' ॥ इति (५)नारदस्मरणात् ॥ यद्यपि मानुषप्रमाणानिर्णयस्य निर्णायकं यत्तद्दिव्यमिति लोकप्रसि-

(१) क्रियाव्यवस्था ग०। (२) भावाभावाविशेषेणेति सर्वत्र पाठः। (३) भवतीति युक्तं घ०।
(४) स्वल्पेषु ग० सर्वेषु कोशपान घ०। (५) नारदादि ख–ग०।

ख्या शपथानामपि दिव्यत्वं तथापि कालान्तरनिर्णयनिमित्तत्वेन समन(१)न्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदत्वव्यपदेशो ब्राह्मणपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि धटादिषु पाठो महाभियोगविषयत्वेनावष्टम्भाभियोगविषयत्वेन च धटादिसाम्यान्न तु समनन्तरनिर्णयानिमित्तत्वेन । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च धटादिवैलक्षण्यात्तेष्वपाठ इति सन्तोष्टव्यम् । एतानि च दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि । यत्तु पितामहवचनम्—'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्' इति, तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणा(२)न्तरसम्भवे दिव्यानामनवकाश एव । सत्यम् । ऋणादिषु विवादेषु (३)उक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन । दिव्यमवलम्बते तदा दिव्यमपि भवति । साक्षिणा(४)माशयदोषसम्भवाद्दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य । यथाह नारदः—'तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि । दैवसाध्यं पौरुषेयीं न लेख्यं वाप्रयोजयेत्' ॥ इति । स्थावरेषु च विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थं 'स्थावरेषु विवादेषु' इत्यादि पितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम् । लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात् ॥ ९६ ॥

( वी० मि० ) दिव्यसामान्येतिकर्तव्यतामाह—

सचैलस्नातमाहूय सूर्योदय उपोषितम् ॥
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ९७ ॥

सचैलस्नातं दिव्यकर्तारमुदिते सूर्ये प्राड्विवाक आहूय नृपस्य ब्राह्मणानां च सन्निधौ सर्वदिव्यानि कारयेत् । पितामहः—

त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा ।
नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥

---

( १ ) नन्तरनिमित्तनिर्णयेभ्यो घ० । ( २ ) न्तरसद्भावे घ० ।
( ३ ) उक्तलक्षणे घ० । ( ४ ) माशयदोष घ० ।

त्रिरात्रैकरात्रोपवासविकल्पः शक्त्यपेक्षो महाभियोगाल्पाभियोगभेदेन व्यवस्थितः। तथा—

दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया ॥

अयं चोपवासः प्राड्विवाकस्य दिव्याङ्गदेवपूजापक्षे । अत्र यद्यपि सूर्योदय इत्यविशेषणोक्तं तथापि शिष्टाचाराद्दिवाराद्रः । नारदः—

पूर्वाह्न एव दिव्यस्य प्रदानं परिकीर्तितम् ।

पितामहः—

पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे तु घटो भवेत्।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥
दिवसस्य तु पूर्वाह्णे काल(१)शुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे यामे विषं देयं सु(२)शीतलम् ॥

तथा—

चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव हि ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
घटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ॥
शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् ।

नारदः—

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात्प्रवाते न तुलां नृप ॥

अत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । उष्णपदेन शरद्ग्रीष्मयोर्ग्रहणम् । ज्योतिषे—

सिंहस्थे मकरस्थे च जीवे चाऽस्तमिते भृगौ ।
मलमासे न कर्तव्या परीक्षा जयकांक्षिणा ॥
रविशुद्धौ गुरोश्चैव न शुक्रेऽस्तङ्गते पुनः ।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
माऽष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम् ।
परीक्षा चाधिवासश्च शनिसोमदिने भवेत् ॥

---

(१) कोशशुद्धि—इति मु० पु० पाठः । (२) सुशीतले—इति क० ख० पुस्तकयोः पाठः ।

अत्र सङ्क्षेपतो दिव्यसामान्यविधिर्लिख्यते । शुक्लपक्षे शुभदिने कृतनित्यक्रियः सोपवासो यजमानः प्रथमं ब्राह्मणान् स्वस्तिवाच्य प्राड्विवाकमध्वर्युवद् वृणुयात् । वृतश्च प्राड्विवाकस्तडागोत्सर्गविधिना कृताधिवासनयागः सोपवासः परेद्युः कृतनित्यक्रियो रविवारेण—

एह्येहि भगवन्धर्म दिव्यमेतत्समाविश ।
सहितो लोकपालैस्त्वं वस्वादित्यमरुद्गणैः ॥

इति पठेत् । तत्र आर्द्रवासा दिव्यकर्ता यथाविहितं दिव्यं कुर्यात् । त्रिरात्रोपवासश्चात्र शक्तस्य दिव्यकर्तुरिति विशेषः ॥ ९७ ॥

( मिता० ) दिव्ये साधारणविधिः—

सचैलमिति । किञ्च पूर्वेद्युरुपोषितमुदिते सूर्ये सचैलं स्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानां ब्राह्मणानां च संनिधौ सर्वाणि दिव्यानि कारयेत्प्राड्विवाकः—'त्रिरात्रोपोषिताय स्युरेकरात्रोपिताय वा । नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे' ॥ इत्युपवासविकल्पः पितामहेनोक्तो बलवद्बलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः । उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि—'दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् । अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया' ॥ इति पितामहवचनात् ॥ अत्र यद्यपि सूर्योदय इत्यविशेषेणोक्तं तथापि शिष्टसमाचाराद्धानुवासरे दिव्यानि देयानि । तत्रापि—'पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत् । मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥ दिवसस्य तु पूर्वाह्णे कोश(१)शुद्धिर्विधीयते । रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम्' । इति पितामहोक्तो विशेषो द्रष्टव्यः। अनुक्तं(२)कालविशेषाणां तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्ण एव प्रदानम् । 'पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम्' इति सामान्येन नारदस्मरणात् । अहनि त्रिधा विभक्ते (३)पूर्वो भागः पूर्वाह्णो मध्यमो मध्याह्नः (४)उत्तरोऽपराह्णः । तथापरोऽपि कालविशेषो विधिप्रतिषेधमुखेन दर्शितः । विधिमुखस्तावत्—'अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः । शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् ॥ चैत्रो मा·

( १ ) कोशसिद्धिः ख. । ( २ ) अनुक्तवेला ग. घ. ।
( ३ ) प्रथमो भागः घ. । ( ४ ) उत्तमा घ.

र्गशिरश्चैव वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः ॥ कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिका' ॥ इति । कोशग्रहणं सर्वशपथानामुपलक्षणम् । तण्डुलानां पुनर्विशेषानाभिधानात्सार्वकालिकत्वम् । प्रतिषेधमुखोऽपि-'न शीते तोय(१)शुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं देयात्प्रवाते न तुलां तथा ॥ नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन' ॥ इति । 'न शीते तोयशुद्धिः स्या'दित्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । नोष्णकालेऽग्निशोधनमित्यत्रोष्णकालशब्देन ग्रीष्मशरदोः । विधानलब्धस्यापि पुनर्निषेध आदरार्थः । प्रयोजनं च वक्ष्यते ॥ ९७ ॥

( वी० मि० ) दिव्येषु कर्तृनियममाह—

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ॥
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ९ ॥

षोडशवर्षाभ्यन्तरवयस्कस्य, वृद्धस्य, अन्धस्य, पङ्गोर्ब्राह्मणस्य, रोगिणश्च तुला दिव्यम् । शूद्रस्य तु अग्निर्जलं वा विषस्य सप्तयवपरिमिता भागाश्चादेयाः । नारद —

ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव च ॥
साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विपर्यये ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥

कात्यायनः—

राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ॥
गोरक्षकान् वाणिजकाँस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव ग्राहयेच्छूद्रवत् द्विजान् ॥

तथा—

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्याच्च तु कचित् ॥
दिव्यं तु वर्जयेन्नित्यमार्तानां तु महेन्नृणाम् ॥
तण्डुलेन नियुञ्जीत व्रतिनं मुखरोगिणम् ।

(१) तोयसिद्धिः स्यात् ख ।

व्रतिनं तण्डुलभक्षणव्रतवन्तम् । नारदः—

क्लीबातुरान् सत्त्वहीनान् परितापार्दिताक्षरान् ।
बालवृद्धातुरांश्च परीक्षेत धटे सदा ॥
नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥
न मज्ज(१)नीयाः स्त्रीबालाः धर्मशास्त्रविशारदैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥
निरुत्साहान् व्याधि(२)जुष्टानार्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते न(३)राः ॥
साहसेऽप्यागतानेतांश्च तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषे परिशोधयेत् ॥

पितामहः—

मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राड्विवेन दातव्यो ये च नास्तिकवृत्तयः ॥

कात्यायनः—

देशकालविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेप विपर्यये ॥

विपर्ययोऽभियुक्तस्याऽसामर्थ्यम् । नारदः—

सव्रतानां भृशा(४)र्तानां व्याधिता(५)नां तपस्विनाम् ।
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्व(६)वेक्ष्यते ॥

कात्यायनः—

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरते भृगुः ॥
येषु पापेषु दिव्यानि प्रतिपिद्धानि यत्नतः ।
भावयेत्सज्जनैस्तानि नाभिशस्तं जयेन्नृपः ॥–॥ ९८ ॥

( मिता० ) अधिकारिव्यवस्थामाह—

तुलेति । स्त्री स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण । बाल

( १ ) न मज्जनीयं स्त्रीबालं–इति क० ख० पु० पाठः ।
( २ ) व्याधितुष्टान्–इति ख० पु० पाठः । ( ३ ) रताः–इति क० पु० पाठः ।
( ४ ) कृशार्तानाम्—इति क० ख० पु० पाठः । ( ५ ) व्याधिनां च—इति क०ख०पु०पाठः ।
( ६ ) धर्मस्त्ववेक्षते—इति क० ख० पुस्तकयोः पाठः ।

आपोडशाद्वर्षाज्जातिविशेषानादरेण । वृद्धोऽशीतिकावरः । अन्धो
नेत्रविकलः । पङ्गुः पादविकलः । ब्राह्मणो जातिमात्रम् । रोगी
व्याधितः । एतेषां शोधनार्थं तुलैवेति नियम्यते । अग्निः फालस्तप्त-
माषश्च क्षत्रियस्य । जलमेव वैश्यस्य । वाशब्दोऽवधारणे । विषस्य
यवा उक्तपरिमाणाः सप्तैव शूद्रस्य शोधनार्थं भवन्ति । ब्राह्मणस्य
तुलाविधानात् । 'शूद्रस्य यवाः सप्त विषस्य वा' इति विषविधानाद-
ग्निजले वेति क्षत्रियवैश्यविषयमुक्तम् । एतदेव स्पष्टीकृतं पिताम-
हेन—'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलि-
लं प्रोक्तं विषं शूद्रस्य दापयेत्' ॥ इति । यत्तु स्त्र्यादीनां दिव्याभाव-
स्मरणम्—'सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम् ।
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः' ॥ इति, तत् 'रुच्या
वान्यतरः कुर्यात्' इति विकल्पनिवृत्त्यर्थम् । एतदुक्तं भवति—'अव-
ष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यम् ।
एतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम् । परस्पराभियोगे तु
विकल्प एव । तत्रापि तुलैवेति कात्यायनवचनेन नियम्यते । तथा
महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति । एतच्च वचनं सर्व-
दिव्यसाधारणेषु मार्गशीर्षचैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसम-
वधाने नियामकतयार्थवत् । न च (१)सर्वकाल स्त्रीणां तुलैवेति ।
'स्त्रीणां तु न विषं प्रोक्तं न चापि सलिल स्मृतम् । घटकोशादिभि-
स्तासामन्तस्तत्त्वं विचारयेत्' ॥ इति विषसलिलव्यतिरिक्तघटकोशा-
द्यादिभिः शुद्धिविधानात् । एवं बालादिष्वपि योजनीयम् । (२)तथा
ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः—'सर्वेषामेव वर्णा-
नां कोशशुद्धिर्विधीयते । सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं वि-
ना' ॥ इति पितामहस्मरणात् । तस्मात्साधारणे काले बहुदिव्यसम-
वधाने तुलादिनियमार्थमेवेदं वचनम् । कालान्तरे । तत्तत्कालविहितं
सर्वेषाम् । तथा हि—वर्षास्वग्निरेव सर्वेषाम् । हेमन्तशिशिरयोस्तु क्ष-
त्रियादित्रयाणामग्निविषयोर्विकल्पः । ब्राह्मणस्य त्वग्निरेव न कदाचि-
द्विषम् । 'ब्राह्मणस्य विष विना' इति प्रतिषेधात् । ग्रीष्मशरदोस्तु
सलिलमेव । येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः—'कुष्ठिनां वर्ज-

(१) सर्वकाले स । (२) यथा स. ।

येदग्निं सलिलं श्वासकालिनाम् । पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्' ॥ इति तेषामग्न्यादिकालेऽपि साधारणं तुला(१)घेव दिव्यं भवति । तथा--'तोयमग्निर्विषं चैव दातव्यं बलिनां नृणाम्' इति (२)वचनाद् दुर्बलानामपि सर्वथा विधिप्रतिषे(३)धादृतुकालानतिक्रमेण जातिवयो(४)वस्थाश्रितानि दिव्यानि देयानि ॥ ९८ ॥

(वी०मि०) द्रव्यसंख्याविशेषेण दिव्यविशेषानाह—

नासहस्राद्धरेत्फालं न विषं न तुलां तथा ॥
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥

पणसहस्रादर्वाक् ऋणादौ विवादे न फालं न विषं न तुलां वा हरेत् । नृपार्थेषु नृपद्रोहविषयेषु विवादेषु अभिशापे पातकाभियोगे च सदा पूर्वोक्तसंख्यां विनापि शुचयः स्नानादिना शुद्धाः सन्तः फालादिकं दिव्यं वहेयुः । तथापदेनोदकं न हरेदिति समुच्चीयते । चकारेण साहससमुच्चयः । तथा च विष्णुः--'अथ समयक्रिया । राजद्रोहसाहसेषु यथाकामम् । निक्षेपस्तेयेष्वर्थप्रमाणम्' । समयो दिव्यं, यथाकामं राजेच्छानुसारेण । कात्यायनः—

दत्तस्यापन्हवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥

स्वल्पेऽपीति । यादृशि स्वल्पे ऋणादौ दिव्याभावस्तादृश्यपि धने स्तेयसाहयोर्दिव्यमित्यर्थः । बृहस्पतिः—

विषं सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्द्धे देयो धटः सदा ॥
चतुःशताभियोगे तु दातव्यस्तसमापकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्द्धके ॥
शते हृतेऽपन्हुते च दातव्यं धर्मशोधनम् ।
गोचरस्य प्रदातव्यं सभ्यैः फालावलेहनम् ॥
एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥

विष्णुः—'सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्' । तथा-

(१) दुर्बलानामिति सर्वदा घ. । (२) तुला दिव्यं ग. ।
(३) प्रतिषेधादृते दक्तकालानति ग । (४) वस्थानाश्रितानि ख. ।

'सुवर्णार्द्धोने कोशो देयः शूद्रस्य । ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम् । द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य । त्रिगुणे राजन्यस्य कोशवर्जं चतुर्गुणे ब्राह्मणस्य । न ब्राह्मणस्य कोशं दद्यात् । अन्यत्रागामिकालसमयबन्धनक्रियातः । कोश(१)स्थाने ब्राह्मणं सीतोद्धृतमहीकरमेव शापयेत् । प्राग्दृष्टदोष स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । सत्तु विदितं सच्चरित्रं न महत्यर्थेऽपि' । अन्यत्रेति । अस्माभिर्मिलित्वा एवं कार्यमिति यत्र समयः कृतस्तस्मादन्यत्रेत्यर्थः । तत्र तु ब्राह्मणस्यापि कोशो देयः । सीता हलपद्धतिः । कात्यायनः—

(२)सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तत्र दिव्यं प्रयोजयेत् ॥
शेषे विषं तु पादोने हुतभुक् तत्र दृश्यते ।
आपस्त्रिभागहीने तु शतार्द्धे तु तुला स्मृता ॥
कोशपानं तदर्द्धे वा दशपञ्चकसतसु ।
तदर्द्धे तण्डुला देयास्तदर्द्धे तप्तमाषकाः ॥

। शते सुवर्णस्य पादोने पञ्चसप्ततिमिते सुवर्णे । त्रिभागहीने तृतीयभागहीने सुवर्णशते । तदर्द्धे शतार्द्धे । दशपञ्चकसप्तस्विति । शतस्य दशमांशे पञ्चमांशे सप्तांशे वा कोशपानमित्यर्थः । अत्र चाऽल्पपरिमाणमपकृष्टविषयम् । वृद्धमनु —

ज्ञात्वा सर्वां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनम् ॥
षष्ट्या नाशे जलं देयं स्याच्चत्वारिंशतो धटः ।
त्रिंशद्दशविनाशे वा कोशपानं बृहस्पतिः ॥
पञ्चार्द्धकस्य नाशे वा तदर्द्धस्य च तण्डुलाः ।

त्रिंशदिति । त्रिंशद्विनाशे दशविनाशे चेत्यर्थः । पञ्चेति । पञ्चार्द्धस्य तदर्द्धस्य वा एकस्य वा नाशे कोशपानमित्यर्थः । इमानि वचनानि ऋणादिविषयाणि उत्कृष्टविषयाणि च । अन्यद्वृद्धवचनं तु स्तेयविषयमित्यविरोध इत्याहुः । इति दिव्यमातृका ॥ ९९ ॥

(मिता०) महाभियोगेष्वेतानीत्युक्तं, तत्राभियोगस्य (३)यदपेक्षं

(१) शोकस्थाने—इति ख० पु० पाठः । (२) पूर्वे०—इति ख० पु० पाठः । (३) यदपेक्ष ख ग. ।

महत्त्वं तदिदानीमाह—

नासहस्रादिति। पणसहस्रादर्वाक् फालं विषं तुलां वा न कारयेत्। मध्यवर्ति जलमपि । यथोक्तम्—'तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेत्' इति । अत्र कोशस्याग्रहणं 'कोशमल्पेऽपि दापयेत्' इत्यल्पाभियोगेऽपि तस्य स्मरणात् । एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्ति नार्वागित्यर्थः । नन्वर्वागप्यग्न्यादीनि पितामहेन दर्शितानि—'सहस्रे तु घटं दद्यात्सहस्रार्धे तथायसम् । अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम्' ॥ इति । सत्यम् । त(१)त्रेत्थं व्यवस्था । यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनं, इतरद्रव्यविषयं योगीश्वरवचनमिति । एतच्च वचनद्वयं स्तेयसाहसविषयम् । अपह्नवे तु विशेषो दर्शितः कात्यायनेन—'दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् । स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥ सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् । हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥ ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम् । अशीतेस्तु विनाशे वै (२)दद्याच्चैव हुताशनम् ॥ षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् । विं(३)शद्दशविनाशे तु कोशपानं विधीयते ॥ पञ्चाधिकस्य वा नाशे ततोऽर्धार्धस्य तण्डुलाः । ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान् ॥ ततोऽर्धार्धविनाशे हि लौकिक्यश्च क्रियाः स्मृताः । एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते' इति । ज्ञात्वा संख्यां सुवर्णानामित्यत्र सुवर्णशब्दः 'षोडश माषाः सुवर्णः' इत्युक्तपरिमाणवचनः । नाशशब्दश्चात्रापह्नववचनः । नासहस्राद्धरेत्फालमित्यत्र तु ताम्रिकपणसहस्रं बोद्धव्यम् ॥

( मिता० ) ननु नृपद्रोहे महापातके चैतानि दिव्यान्युक्तानि, तत्कथं नासहस्राद्धरेत्फालमित्यत्राह—

नृपार्थेष्विति । (४)नृपद्रोहे महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि वहेयुः कुर्युरुपवासादिना शुचयः सन्तः । तथा देशविशेषोऽपि नारदेनोक्तः—'सभाराजकुलद्वारदेवायतनचत्वरे । निधेयो निश्चलः पूज्यो धूपमाल्यानुलेपनैः' ॥ इति । निधेयो घटः । व्यवस्था च कात्यायनेनोक्ता—'इन्द्रस्थानेऽभिशस्तानां

(१) तत्रैवं व्यवस्था घ. । (२) दद्यादेव ख. । (३) दद्याद्विंशद्विनाशे तु ग. । (४) नृपद्रोहेषु ख.।

महापातकिनां नृणाम् । नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे । (१)अतोऽन्येषु सभामध्ये दिव्यं देयं विदुर्बुधाः ॥ अस्पृश्याधमदासानां म्ले(२)च्छानां पापकारिणाम् । प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥ तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दि(३)शेत्' ॥ इति ॥९९॥ इति दिव्यमातृका ॥

(वी० मि०) एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं घटादीनां दिव्यानां प्रत्येकं प्रयोगमाह प्रकरणसमाप्तिपर्यन्तेन—

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रि(४)तः ॥
प्रतिमानसमीभूतो ले(५)खां कृत्वाऽवतारितः ॥१००॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ॥
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ १०१ ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ॥
शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रये(६)त् ॥ १०२ ॥

तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारादयस्तैर्लेख्यं नाहं स्तेयमकार्षमित्यादिरूपं शिरसि कृत्वा प्रतिमानेन मृदादिना समीभूतस्तुलाश्रितोऽभियुक्तो दिव्यकर्ताऽवतारितः सन् मामित्येतेन तुलामभिमंत्रयेत् अधिवासनदिनेऽनेन मंत्रेण प्रार्थयेत् । द्वितीयदिने पुनस्तुलितो दिव्यकर्ता यदि वर्द्धेत प्रतिमानादूर्ध्वं गच्छति तदा विशुद्धः अभियोगाभावनिश्चयविषयः स्यान्न पुनरभियोगसंशयः स्यात्प्रतिमानेन समोऽधोगतिर्वा यदि स्यात्तदा दिव्यकर्ता नरो न विशुद्धः पराजितो भवेत् । तुलित इत्यादिश्लोको लिखितः पितामहनाम्नैव मिताक्षरायाम् । मंत्रव्याख्या चैवम्—हे तुले त्वं सत्यस्य धाम स्थानमसि देवैर्ब्रह्मादिभिः पुरा आदिसृष्टौ विनिर्मितोत्पादिता तत्तस्माद्धेतोः हे कल्याणि सत्यं यथार्थं वद दर्शय, अस्मात् संश-

(१) ततोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ग । (२) म्लेच्छनामापकारिणो ग । (३) दापयेद् ग. ।
(४) तुलाश्रित—इति मुद्रितपुस्तके पाठः । (५) रेखां—इति मुद्रितपुस्तके पाठः ।
(६) एतदुत्तर—'तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः । समो वा हीयमानो वा न विशुद्धो भवेन्नरः' ॥ इतीदं पद्यमधिकमुभयोरपि क० ख० पुस्तकयोर्वर्तते, परन्तु व्याख्यानाभावादन्यत्राप्यनुपलब्धेश्चासङ्गतार्थमिदं प्रतिभाति ।

यान्मां विमोचय । हे मातर्यद्यहं पापकृदसत्यवाद्यस्मि ततस्तदा मां त्वमधो नय, यद्यहं शुद्धः सत्यवाद्यस्मि तदा ऊर्ध्वं मां गमयेति । अत्र तुलापुरुषमहादानरीत्या किञ्चिद्विशेषसहितया निर्मितायां तुलायामधिवासनदिने स्वाभियोगाभावप्रतिज्ञालिखनानन्तरम्—

आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मस्य जानाति नरस्य वृत्तम् ॥

इति लिखित्वा तत्पत्रं शिरसि दत्त्वा प्रतिमानसमीकृतं दिव्यकर्तारं पठितोक्ताभिमंत्रणावाक्यं तुलया अवतार्य प्राड्विवाकः परेद्युः कृतनित्यक्रियः प्राङ्मुखः प्राञ्जलिर्देवान् 'एह्येहि भगवन् धर्मे'त्यादिप्रागुक्तमंत्रेण घटे अवाहयेत् । ततः पितामहोक्तक्रमेण देवानां पूजां कुर्यात् । तद्यथा—

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभो वन्हिश्चापि सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद् बुधः ॥
(१)धरो ध्रुवस्तथा सोम आपश्चैवाऽनिलोऽनलः ।
प्रत्यूषश्च प्रभास(२)श्च वसवोऽष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्ये आदित्यानां तथा(३)यनम् ।
धाताऽर्यमा च मित्रश्च वरुणोंऽ(४)शो भगस्तथा ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
इत्येते द्वादशाऽऽदित्या नामभिः परिकीर्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥

(१) धरा—इति ख० पु० पाठः ।
(२) प्रभावश्च—इति ख०, प्रभापश्च—इति क० पुस्तकयोः पाठौ ।
(३) तथा गणम्—इति मिताक्षरायां पाठः, तथार्चनम्—इति बालंभट्टीपुस्तकस्थः पाठः ।
(४) वरुणोंऽशुर्भ०—इति मु० पु० पाठः, वरुणांशा इति क० ख० पुस्तकयोः पाठः ।

वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चाऽपराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥
प्रेतशरक्षामध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे (१)मरुतां स्थानमुच्यते ।
पवनः स्पर्शनो वायुरनिलो मारुतस्तथा ॥
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः ॥
एतासां देवतानां च स्वनाम्ना पूजनं विदुः ।
भूपावसानं धर्माय दद्यात् चाऽर्घ्यादिकं क्रमात् ॥
अर्घ्यादि पश्चादङ्गानां भूपान्तं (२)परिकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥

ततो वैदिकैश्चतुर्भिः ऋत्विग्भिस्तुलायाश्चतसृषु लौकिकेऽग्नौ प्रणवाद्यया गायत्र्या प्रणवस्वाहान्तया प्रत्येकमष्टोत्तरशतं समिदाज्यचरवो होतव्याः । ततः प्राड्विवाको घटमामन्त्रयेत् । तत्र मंत्रः—

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्ममूर्तिस्त्वं टकारात् कुटिलं नरम् ॥
धृतो भाव(३)यसे यस्माद्धटस्तेनाऽभिधीयसे ।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥
त्वमेव देव जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।

ततः शिरोगतपत्रकं दिव्यकर्तारं प्राड्विवाको विनाडीपञ्चकपर्यन्तं तुलायामारोप्य स्थापयेत् । विनाडी च—

दशगुर्वक्षरः प्राणः षट्प्राणः स्याद्विनाडिका ।

(१) मरुतां स्थानमित्यारभ्य—प्राणेशजीवौ चेत्यन्तं क० ख० पुस्तकयोर्नास्ति ।
(२) भूपान्तमुपकल्पयेत्-इति मिताक्षरायां पाठः । (३) भारयसे-इति क [illegible] पुस्तकयोः पाठः ।

इति लक्षिता । तत ऊर्ध्वगं शुद्धत्वेन राजनियुक्ताः शुचयः पुरुषा वदेयुरिति संक्षेपः । अत्र तुलाकाष्ठपरिमाणादिकं विस्तरभयान्न लिख्यते । महादानेऽन्वेष्टव्यम् ॥ १००-१०२ ॥

( मिता० ) एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं धटादिदिव्यानां प्रयोगमाह—

तुलाधारणेत्यादि । तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयस्तैः प्रतिमानेन मृदादिना समीभूतः समीकृतस्तुलामाश्रितोऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी रेखां कृत्वा येन संनिवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन्पाण्डु(१)लेखेनाङ्कयित्वावतारितस्तुलामभिमन्त्रयेत्प्रार्थयेतानेन मन्त्रेण । हे तुले, त्वं सत्यस्य स्थानमसि । पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्विनिर्मितोत्पादिता । तत्तस्मात्सत्यं संदिग्धस्यार्थस्य स्वरूपं वद दर्शय । कल्याणि शोभने, अस्मात्संशयान्मां विमोचय । हे मातः, यद्यहं पापकृदसत्यवाद्यस्मि ततो मां त्वमधो नय । अथ शुद्धः सत्यवाद्यस्मि ततो मामूर्ध्वं गमयेति । प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्रः(२) स्मृत्यन्तरोक्तः । अयं तु दिव्यकारिणः । जयपराजयलक्षणं तु मन्त्रलिङ्गादेवावगम्यत इति न पृथगुक्तम् । धटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम् । तद्यथा— 'छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् । प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥ मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च । चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ॥ कटकानि च देयानि त्रिषु स्थानेषु चार्थवत् । चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ ॥ (३)अनन्तरं तयोर्हस्तो भवेदध्यर्धमेव च । (४)हस्तद्वयं निखेयं तु पादयोरुभयोरपि ॥ तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि । धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥ अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ । मृन्मयौ सूत्रसंबद्धौ धटमस्तकचुम्बिनौ ॥ प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटस्तथा । शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ॥ प्राङ्मुखान्कल्पयेद्दर्भाञ्शिक्ययोरुभयोरपि । पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ॥ पि(५)-

(१) पाण्डुलेखः खट इति प्रसिद्धः, पाण्डुलेख्येन ख. । (२) मन्त्राः स्मृत्यन्तरोक्ताः ग-घ. ।
(३) मान्तरं तु ख. । (४) निधेयं इति पाठः । (५) पिटकं वंशभाण्डविशेषः ।

टकं पूरयेत्तस्मिन्निष्टकाप्रावपांसुभिः'। अत्र च सृत्तिकेष्टकाप्रावपांसूनां विकल्पः । 'परीक्षका नियोक्तव्यास्तुलामानविशारदाः । वणिजो हे(१)मकाराश्च कांस्यकारास्तथैव च । कार्यः परीक्षकैर्नित्यमवलम्बः समो घट' ॥ उदकं च प्रदातव्य घटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः ॥ तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु । घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥ तत आवाहयेद्देवान्विधिनानेन मन्त्रवित् । वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ॥ (२)प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् । एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश ॥ सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः । आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ॥ इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा । वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥ अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् । इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥ कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः । तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥ ईशानस्तु भवेद्रक्तः एवं ध्यायेत्क्रमादिमान् । इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद् बुधः ॥ धरो (३)ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ देवेशेशानयोर्मध्य (४)आदित्यानां तथा गणम् । धातार्यमा च मित्रश्च (५)वरुणोऽशुर्भगस्तथा ॥ इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥ इत्येते द्वादशादित्या नामभिः परिकीर्तिताः । (६)अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥ वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः—अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥ भुवनाधीश्वरश्चैव कपाली च विशां पतिः । स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥ प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही चैव माहेन्द्री चामुण्डा गणसंयुता । निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥ वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते । प-

---

(१) हेमकाराश्च कांस्यकार, घ. ।　　(२) प्राञ्जलि प्राङ्मुखो भूत्वा घ ।

(३) ध्रुवोऽध्वरस्तथा सोमः ग धरो ध्रुवश्च सोमश्च घ ।

(४) आदित्यानां तथायन ग आदित्याराधन तथा घ ।

(५) वरुणोंऽशो भग ग-घ ।　(६) अग्ने पश्चिमदिग्भागे रुद्राणां स्थापन विदु' ग ।

वनः स्पर्शनो वायुरनिलो मारुतस्तथा ॥ प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः । घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः ॥ एतासां देवतानां तु स्वनाम्ना पूजनं विदुः । भूषावसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ॥ अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् । गन्धादिकां (१)नैवेद्यान्तां परिचर्यां प्रकल्पयेत्' ॥ इति । अत्र च तुलां पताकाध्वजालंकृतां विधाय तस्यामेह्येहीति मन्त्रेण धर्ममावाह्य धर्मायार्घ्यं कल्पयामि नम इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभूषान्तं दत्त्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैर्नमोन्तैरर्घ्यादिभूषान्तं पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यादि दत्त्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात् । गन्धपुष्पाणि च घटपूजायां रक्तानि कार्याणि । यथाह नारदः—'रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत्' ॥ इति । इन्द्रादीनां तु विशेषानभिधानाद्यथालाभं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः । एतच्च सर्वं प्राड्विवाकः कुर्यात् । यथोक्तम्—'प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः । श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥ सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः । उपोषितः शुद्धवासाः कृतदन्तानुधावनः ॥ सर्वासां देवतानां च पूजां कुर्याद्यथाविधि' ॥ तथा ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः । यथाह—'चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः । आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥ सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत्' ॥ प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून्प्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः । एवं हवनान्तां देवपूजां विधायानन्तरमाभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे लिखित्वा तत्पत्रं शोध्य शिरोगतं कुर्यात् । यथाह—'य(२)दर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके । मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम्' ॥ मन्त्रश्चायम्—'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्' ॥ इति । एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठानकाण्डं

(१) निवेद्यान्तां परिचर्यां ग-घ. । (२) यं चार्थमभियुक्तः स्यात घ. ।

सर्वदिव्यसाधारणम् । यथोक्तम्—'इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् । आवाहनं च देवानां तथैव परिकल्पयेत्' ॥ इति । अनन्तरं प्राड्विवाको घटमामन्त्रयेत्—'घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्' इति स्मरणात् । मन्त्राश्च दर्शिताः—'त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥ धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे । त्वं वेत्सि सर्व(१)जन्तूनां पापानि सुकृतानि च ॥ (२)त्वमेव देव जानीषे न विदुर्यानि मानवाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥ तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि' ॥ इति । शोध्यस्तु 'त्वं तुले' इत्यादिना पूर्वोक्तेन मन्त्रेण तुलामामन्त्रयेत् । अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्य यथास्थानं निवेश्य(३) च घटमारोपयति—'पुनरारोपयेत्तस्मिञ्छिरोवस्थितपत्रकम्' इति स्मरणात् । आरोपितं च विनाडीपञ्चकं यावत्तथैवावस्थापयेत् । तत्कालपरीक्षां च ज्योतिःशास्त्रविदः कुर्यात्—'ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् । विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः' ॥ इति स्मरणात् । दशगुर्वक्षरोच्चारणकालः प्राणः । षट्प्राणा विनाडी । उक्तं च—'दशगुरुवर्णः प्राणः षट्प्राणा स्याद्विनाडिका तासाम् । षष्ट्या घटी घटीनां (४)षष्ट्याहः खाग्निभिर्दिनैर्मासः' ॥ इति । तस्मिंश्च काले (५)शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः । ते च शुद्ध्यशुद्धी कथयन्ति । यथोक्तं पितामहेन—'साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः । ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥ शंसन्ति साक्षिणः श्रेष्ठाः(६)शुद्ध्यशुद्धी नृपे तदा' ॥ इति । शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम्—'तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः । समो वा हीयमानो वा न (७)स शुद्धो भवेन्नरः' ॥ इति । यत्तु पितामहवचनम्—'अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते' इति, तत्र यद्यप्यभियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि सकृदमतिपूर्वत्वेनाल्पत्वमसकृन्मतिपूर्वत्वेन च महत्त्वमिति दण्डप्रायश्चित्ताल्पत्वमहत्त्वमवधार्यते । यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्षादीनां छेदो भङ्गो वा भवति तदाप्यशुद्धि-

(१) सर्वभूतानां घ. ।  (२) त्वमेव सर्वं घ ।  (३) यथानिवेशं च ग. ।
(४) षष्ट्याहोरात्र उक्तश्च ख. । (५) शौचाशुद्धि ग. । (६) सर्वे घ. । (७) न विशुद्धो घ. ।

रेव। 'कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा। रज्जु(१)च्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेत्' ॥ इति स्मरणात्। कक्ष्यं शिक्यतलम्। कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलकौ कर्कटशृङ्गसन्निभौ। अक्षः पादस्तम्भयोरुपरि निविष्टस्तुलाधारपट्टः। यदा तु दृश्यमानकारणक एषां भङ्गस्तदा पुनरारोपयेत्। 'शिक्यादिच्छेद(२)भङ्गेषु पुनरारोपयेन्नरम्' इति स्मरणात्। ततश्च—'ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च तोषयेत्। एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ॥ महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते' ॥ यदा तूक्तलक्षणं धटं तथैव स्थापयितुमिच्छति तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्यात्। 'विशालामुन्न(३)तां शुभ्रां धटशालां तु कारयेत्। यत्रस्था नोपहन्येत श्वभिश्चण्डालवायसैः ॥ तत्रैव लोकपालादीन्सर्वान्दिक्षु निवेशयत्। त्रिसन्ध्यं पूजयेदेतान्गन्धमाल्यानुलेपनैः ॥ कपाटबीजसंयुक्तां परिचारकरक्षिताम्। मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः' ॥ इति स्मरणात्। बीजानि यवव्रीह्यादीनि ॥ १००-१०१-१०२ ॥ इति धटविधिः ॥

(वी० मि०) इदानीं क्रमप्राप्तमग्निविधिमाह—

करौ विमृदित(४)व्रीही लक्षयित्वा ततो न्यसेत् ॥
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ १०३ ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ॥
साक्षिवत्पुण्यपापे(५)भ्यो ब्रूहि सत्यं कवे मम ॥ १०४ ॥
तस्येत्युक्तवतो लौहं पञ्चाशत्पालिकं समम् ॥
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ १०५ ॥
स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ॥
षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ १०६ ॥
मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ॥
अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ १०७ ॥

(१) छेदे च भङ्गे च घ.। (२) भङ्गे तु घ.। (३) मुच्छ्रितां घ.।
(४) व्रीहेर्लक्ष०—इति मु. पु. पाठ.। (५) पापेषु—इति क. ग. पु. पाठ.।

ततो दिव्यमातृकोक्तसाधारणधर्मतुलाविध्युक्तधर्मावाहनाद्यनन्तरं विमृदिना विघर्षितौ व्रीह्यो याभ्यां तादृशौ करौ लक्षयित्वा प्राङ्विचाकाञ्जलीकृतयोर्हस्तयोरश्वत्थस्य पिप्पलस्य सप्त पत्राणि शुक्लानि ग्राह्याणि ।

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः ।

इति । नारदवचनात् । अत्र—

शम्यक्षत तथा दूर्वान् दत्वा पत्रेषु विन्यसेत् ।

इति विशेषः स्मृत्यन्तरेऽभिहितः । नारदः—

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि च ।

तान्येव पुनरालक्षेयद्धस्तौ विन्दुविचित्रितौ ॥

ततश्च सप्त पत्राणि सप्तसूत्रेण वेष्टयेत् ।

ततः 'त्वमग्ने' इत्यादिश्लोकमुक्तवतो दिव्यकर्तुर्हस्तयोरविशङ्काद्युपरिस्थिताश्वत्थपत्रेषु पञ्चाशत्पलसंमितं सममाश्रिताहितं लौह लोहमयं पिण्डमग्निवर्णं न्यसेत् । मन्त्रार्थस्तु–हे अग्ने ! पावक ! शुद्धिहेतो कवे मनीषिन् ! सर्वभूतानां सर्वेषां प्राणिनामन्तः शरीराभ्यन्तरे चरसि अन्नपानादिपावनाय सञ्चरसि । पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी । पुण्यपापान्यवेक्ष्य साक्षिवन्मम सत्यं ब्रूहि दर्शय इति । अत्र स्मृति —

अग्निवर्णमयःपिण्डमस्फुलिङ्गं सुलक्षितम् ।

पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विज ॥

तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृत ।

त्वं विमं मानवं धर्मं लोकपालैरधिष्ठितम् ॥

त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।

त्वमेवाऽग्ने विजानीषे न विदुर्यानि मानवाः ॥

व्यवहाराभिशस्तोऽयं मानव शुद्धिमिच्छति ।

तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

स दिव्यकर्ता तं लौहपिण्डमादाय सप्तमण्डलानि शनैर्लघुलघु व्रजेत् । एवकारेण मण्डलेष्वेकपदन्यासं मण्डलानतिक्रमणं च दर्शयति । यथाह पितामहः—

न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम् ।

अष्टम मण्डलं गत्वा नवमे निक्षिपेद् बुधः ॥

इति । मण्डलं च प्रत्येकं षोडशाङ्गुलप्रमाणं, षोडशाङ्गुलपरिमितमण्डलान्तरव्यवधानवच्च ज्ञेयम् । अथाऽष्टमे मण्डले स्थितो दिव्यकर्ता अग्निमग्निवर्णं लोहपिण्डं नवममण्डले मुक्त्वा कराभ्यां मृदितव्रीहिरप्यदग्धः दाहजनितविकारशून्यश्चेत्तदा शुद्धिं प्रतिज्ञातार्थविजयमाप्नुयात् । यदि तु अस्वराष्टमण्डलादर्वागेव लोहपिण्डः पतति दग्धत्वाऽदग्धत्वयोः संशयो वा भवति तदा पुनः पूर्वोक्तरीत्यैव लोहपिण्डं हस्ताभ्यां हरेदिति । तदयमत्र क्रमः—पूर्वदिने कृतोपवासाधिवासनादिर्दिव्यकर्ता उत्तरदिने 'एह्येहि भगवन् धर्म' त्यादिना धर्ममावाह्य शिरसि घटवत्पत्रं स्थापयित्वा नवसु मण्डलेषु षोडशाङ्गुलप्रमाणेषु प्रत्येकं षोडशाङ्गुलान्तरालेषु तण्डुलचूर्णादिना कारितेषु प्रथममण्डले स्थितो हस्तपरीक्षायां कृतायां व्रणस्थानान्यलक्तकेनाङ्कयित्वा वारत्रयं लोहपिण्डे तप्ते प्राड्विवाकेन 'शृण्विमं मानवं धर्म'मित्यादिनाऽभिमन्त्रिते सति हस्तयोः सप्ताऽश्वत्थपत्राणि न्यस्य सप्तभिः शुक्लसूत्रैरश्वत्थपत्रसहितौ हस्तौ यवदूर्वाशमीयुतौ वेष्टयित्वाऽग्निवर्णं लोहपिण्डं तदुपरि धृत्वा क्रमेणाऽपराणि षट् मण्डलानि पादाभ्यामाक्रम्याऽष्टमे स्थितो नवमे लोहं क्षिपेदिति । ततः कराभ्यां मृदितव्रीहिर्निरूपितादग्धभावः शुद्धो व्यवहर्तव्यः । करभिन्नेऽङ्गे दग्धोऽपि शुद्ध एव । १०३-१०७ ॥

( मिता० ) इदानीं क्रमप्रा(१)प्तमग्निदिव्यमाह—

करावितिं । दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रारोपणान्ते च विध्यन्ते सत्ययमग्निविधौ विशेषः । विमृदितव्रीहिर्विमृदिता विघर्षिता व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रणकिणादिस्थानेष्वलक्तकरसादिनाङ्कयित्वा । यथाह नारदः—'हस्तक्षतेषु सर्वेषु कुर्योद्धंसपदानि तु' इति । अनन्तरं सप्ताश्वत्थस्य प(२)र्णानि हस्तयोरञ्जलीकृतयोर्न्यसेत् । 'पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः' इति स्मरणात् । तानि च ह(३)स्तसहितानि सूत्रेण तावद्वेष्टयेत् । यावन्त्यश्वत्थपर्णानि सप्तकृत्वो वेष्टयेदित्यर्थः । सूत्राणि च सप्त शुक्लानि भवन्ति—'वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः' इति नारदवचनात् । तथा सप्त शमीपत्राणि सप्तैव दूर्वापत्राणि चाक्षतांश्च

( १ ) अग्निविधि ग. । ( २ ) पत्राणि घ. । ( ३ ) स्वहस्तसहितानि घ. ।

दध्यक्तानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत् । 'सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् । दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत्' ॥ इति स्मरणात् । तथा कुसुमानि च विन्यसेत् । 'सप्त पिप्पलपत्राणि अक्षतान्सुमनो दधि । हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा' ॥ इति पितामहवचनात् । सुमनसः पुष्पाणि । यदपि स्मरणम्—'अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः । (१)अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे' ॥ इति तदश्वत्थपत्राभावेऽर्कपत्रविषयं वेदितव्यम् । अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात् । 'पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः । अतस्तस्य तु पत्राणि हस्तयोर्विन्यसेद् बुधः' ॥ इति ॥ १०२ ॥

( मिता० ) कर्तुरग्न्यभिमन्त्रणमाह—

त्वमिति । हे अग्ने, त्वं सर्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जानामन्तः शरीराभ्यन्तरे चरसि उपभुक्तान्नपानादीनां पाचकत्वेन वर्तसे । पावक शुद्धिहेतो, कवे क्रान्तदर्शिन्, साक्षिवत्पुण्यपापेभ्यः सत्यं ब्रूहि । पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी । पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः । अयःपिण्डे त्रिभिस्तापैः सन्तप्ते सन्दंशेन पुरत आनीते कर्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेणाग्निमभिमन्त्रयेत् । यथाह नारदः—'अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरञ्जितम् । तापे तृतीये सन्ताप्य ब्रूयात्सत्यपुरस्कृतम्' ॥ इति । अस्यार्थः—लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः सन्ताप्योदके निक्षिप्य तृतीये तापे सन्ताप्य सन्दंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं 'त्वमग्ने सर्वभूताना'मित्यादिमन्त्रं कर्ता ब्रूयादिति । प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय अग्नये पावकाय स्वाहेत्याज्येनाष्टोत्तरशतधारं जुहुयात् । 'शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम्' इति स्मरणात् । हुत्वा च तस्मिन्नग्नावयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं पूर्वोक्तं विधाय तृतीये तापे वर्तमाने अयःपिण्डमग्निमेभिर्मन्त्रैरभिमन्त्रयेत्—'त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे । त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥ जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् । पापं पुनासि वै यस्मात्तस्मात्पावक उच्य-

(१) अन्तर्हितं रह शुद्ध स्व अन्तर्हितैर्हरन् ग.।

ते ॥ पापेषु दर्शयात्मानमर्चिष्मान्भव पावक । अथवा शुद्धभावेषु शीतो भव हुताशन ॥ त्वमग्ने सर्वदेवानामन्तश्चरसि साक्षिवत् । त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥ व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति । तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि' ॥ इति ॥ १०४ ॥

( मिता० ) अपिच—

तस्येति । तस्य कर्तुरित्युक्तवतस्त्वमग्ने सर्वभूतानामित्यादिभिरभिमन्त्रणं कृतवतो लौहं लोहविकारं पिण्डं पञ्चाशत्पलिकं पञ्चाशत्पलसंमितं सममस्त्रिरहितम् । सर्वतश्च समं वृत्तं श्लक्ष्णं तथाष्टाङ्गुलायामम् । 'अस्त्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् । पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम्' ॥ इति पितामहस्मरणात् । अग्निमर्णमग्निसदृशमुभयोर्हस्तयोरश्वत्थपत्रदधिदूर्वाद्यन्तरितयोर्न्यसेन्निक्षिपेत्प्राड्विवाकः ॥ १०५ ॥

( मिता० ) ततः किं कुर्यादित्यत आह—

स इति । स पुरुषस्तं तप्तलोहपिण्डं अञ्जलिना गृहीत्वा सप्त मण्डलानि शनैर्व्रजेत् । एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति । यथाह पितामहः—'न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम्' इति ॥

( मिता० ) सप्तैव मण्डलानि शनैर्व्रजेदित्युक्तं तत्रैकैकं मण्डलं किंप्रमाणकं मण्डलयोरन्तरं च कियत्प्रमाणकमित्यत आह—

षोडशाङ्गुलकमिति । षोडश अङ्गुलानि यस्य तत्षोडशाङ्गुलकम् । षोडशाङ्गुलप्रमाणं मण्डलं बोद्धव्यम् । मण्डलयोरन्तरं मध्यं च तावदेव षोडशाङ्गुलकमेव । सप्त मण्डलानि व्रजेदिति वदता प्रथममवस्थानमण्डलमेकमुक्तम् । अतश्चाष्ट मण्डलानि षोडशाङ्गुलकानि मण्डलानामन्तराणि मध्यानीत्यर्थः । मण्डलान्तराणि तु सप्त तावत्प्रमाणानि । एतदेव नारदेन परिसं(१)ख्यायोक्तम्—'द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् । अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् । चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः' ॥ इति । अयमर्थः-अवस्थानमण्डलात्षोडशाङ्गुलान्मण्डलान्तरमन्यन्मण्डलम् । द्वितीयाद्येकमेकं द्वात्रिंशदङ्गुलं सान्तरालं तदेवमवस्थानमण्डलं षोडशाङ्गु-

---

( १ ) परिसंख्यायोक्तम् ख. ग. ।

लम् । गन्तव्यानि च सप्त मण्डलानि सान्तरालानि द्वात्रिंशदङ्गुलानि । एवमष्टाभिर्मण्डलैश्चत्वारिंदशधिकं शतद्वयं भूमेरङ्गुलमानतोऽङ्गुलमानमिति सार्थविभाकिकस्तासिः । अस्मिस्तु पक्षेऽवस्थानमण्डलं षोडशाङ्गुलं विधाय (१)द्वात्रिंशदङ्गुलप्रमाणानां सप्तानां सान्तरालमण्डलभूभागानामेकमेकं भूभागं द्विधा विभज्यान्तरालभूभागान्षोडशाङ्गुलप्रमाणान्विहाय मण्डलभूभागेषु षोडशाङ्गुलप्रमाणेषु गन्तृपदप्रमाणानि सप्त मण्डलानि कार्याणि । यथा तेनैवोक्तम्—'मण्डलस्य प्रमाणं तु कुर्याद्गन्तृपदसंमितम्' इति । यत्तु पितामहेनोक्तम्—'कारयेन्मण्डलान्यष्टौ पुरस्तात्प्रथमं तथा । आग्नेयं मण्डलं चाद्य द्वितीयं वारुणं स्मृतम् ॥ तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् । पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ॥ सप्तमं सोमदैवत्यं सावित्रं त्वष्टम तथा । नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ॥ द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् । अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥ षट्पञ्चाशत्समाधिकं भूमेस्तु परिकल्पना । कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥ मण्डले मण्डले देयाः कुशाः शास्त्रचोदिताः' ॥ इति । तत्र(२) नवमं सर्वदैवत्यमपरिमिताङ्गुलप्रमाणं मण्डलं विहायाष्टाभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते । तत्रापि गन्तव्यानि सप्तैव मण्डलानि । यतः प्रथमे तिष्ठति नवमे क्षिपतीति न विरुध्यते । अङ्गुलप्रमाणं च—'तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वा(३)दशाङ्गुला ॥ हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्' ॥ इति बोद्धव्यम् ॥ १०६ ॥

( मिता० ) सप्त मण्डलानि गत्वा किं कर्तव्यमित्यत आह—

मुक्त्वेति । अष्टमे मण्डले स्थित्वा नवमे मण्डलेऽमितप्तमयःपिण्डं त्यक्त्वा व्रीही(४)न्कराभ्यां मर्दयित्वाऽदग्धहस्तश्चेच्छुद्धिमाप्नुयात् । दग्धहस्तश्चेदशुद्ध इत्यर्थसिद्धम् । यस्तु संत्रासात्प्रस्खलन्हस्ताभ्यामन्यत्र दह्यते तथाप्यशुद्धो न भवति । यथाह कात्या-

(१) द्वादशाङ्गुलप्रमाणानां घ० ।  (२) तत्राष्टम ख ग ।
(३) द्वादशाङ्गुल' ख ।  (४) कराभ्यां मर्दयेन् ख ।

यज्ञः—'प्रस्खलन्नभिशस्तश्चेत्स्थानादन्यत्र दह्यते । अदग्धं ते विदुर्देवास्तस्य भूयोऽपि दापयेत्' ॥ इति ॥

(मिता०) अन्तरेति । यदा गच्छतोऽन्तराऽष्टममण्डलादर्वागेव पिण्डः पतति दग्धादग्धत्वे वा संशयस्तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम् । तत्र चायमनुष्ठानक्रमः । पूर्वेद्युर्भूशु(१)द्धिं विधायापरेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र तत्र संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्याग्नावयःपिण्डं निधाय धर्मावाहनादिसर्वदेवतापूजां हवनान्तां निर्वर्त्य उपोषितस्य स्नातस्यार्द्रवाससः पश्चि(२)मे मण्डले तिष्ठतो व्रीहिमर्दनादिकरसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बद्ध्वा प्राड्विवाकस्तृतीये तापेऽग्निमभिमन्त्र्य तप्तमयःपिण्डं सन्दंशेन(३) गृहीत्वा कर्त्रभिमन्त्रितं तस्याञ्जलौ निदध्यात् । सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्यादग्धः शुद्धो भवतीति ॥ १०७ ॥ इत्यग्निविधिः ।

(वी० मि०) अथ क्रमप्राप्तमुदकविधिमाह—

> सत्येन माऽभिरक्ष त्वं वरुणेत्यभि(४)गाय कम् ॥
> नाभिदघ्नोदकस्थस्य गृहीत्वोरुं (५)जलं विशेत् ॥ १०८ ॥
> समकालमिषुं मुक्तमानीयोऽन्यो जवी नरः ॥
> गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ १०९ ॥

हे वरुण सत्येन त्वं मा मामभिरक्ष इति कं अभिप्रगाय अभिमन्त्र्य । क्वचित्तथैव पाठः । नाभिदघ्नं नाभिप्रमाणमुदकं तत्र स्थितस्य पुंसः ऊरुं गृहीत्वा जलं विशेत् जलं मज्जेत् । दिव्यकर्ता तस्मिन् जविन्येकस्मिन् गते सति जलमज्जनसमकालमुक्तमिषुमन्यो जवी नरः शरमोक्षणस्थानावस्थितो जवी वेगवान् आनीय निमग्नाङ्गं दिव्यकर्तारं यदि पश्येत्तदा स शुद्धिमाप्नुयात् । एतदुक्तं भवति मज्जनकाले मुक्तमेकं शरं गृहीतुं वेगशालिनि गतेऽनन्तरमुक्तं शरमन्यो वेगवानानयति ततो मग्नं चेत्पश्यति तदा स शुद्ध

---

(१) भूतशुद्धिं ख. । (२) पश्चिममण्डले घ. ग. । (३) संदंशकेन घ. । (४) शाप्य-इति मुद्रितपु० पाठः । (५) गृहीत्वोरू जले-इति मु० पु० पाठः ।

इति । तदयमत्र क्रमः—

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥

इति नारदः । तत आवाहनादिप्रतिज्ञापत्रशिरोन्यासान्तं पूर्ववत्कृत्वा—

त्वमम्भः ! सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो ! विजानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

इति प्राड्विवाको जलमभिमन्त्रयेत् । ततः 'सत्येन माऽभिरक्ष त्वं वरुणे'ति दिव्यकर्ता जलं प्रार्थयेत् । ततो नाभिमात्रे स्थिरजले दिव्यार्थं तस्मिन् प्राङ्मुखे प्रविष्टे पुरुषान्तरे च तत्र प्रवेशिते शुचिस्थानस्थापितकर्णप्रमाणतोरणस्य मज्जनस्थानसन्निहितस्य निकटे सशरं धनुः प्राड्विवाकः पूजयेत् । ततः सोपवासो ब्राह्मणः क्षत्रियो वा त्रीन् शरान् मुञ्चति । जलस्थस्य पुरुषान्तरस्योरुं गृहीत्वा दिव्यकर्ता मज्जतीत्येकः कालः । तत्र बलवानेको वेगशाली प्रथमशरं गृह्णाति तादृशश्चाऽपरो मध्यमशरं गृहीत्वा मग्नमेवं दिव्यकारिणं पश्यतीति । अत्र पितामहः—

अन्यथा ना विशुद्धः स्यादेकांशस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशयेत् ॥-॥१०८-१०९॥

( मिता० ) संप्रत्युदकविधिमाह—

सत्येनेति । हे वरुण, सत्येन मामभिरक्ष स्वामित्यनेन मन्त्रेण कमुदकमभिशाप्याभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा शोध्यो जले प्रविशेत् जले निमज्जेत् । एतच्च वरुणपूजायां सत्याम्—'गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः । वरुणाय प्रकुर्वीत पूजामादौ समाहितः' ॥ इति नारदस्मरणात् । तथा साधारणधर्मेषु धर्मावाहनादिसकलदेव(१)तापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च । तथा—'तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् । शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥ अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे' ॥ इति प्राड्विवाके-

(१) देवपूजा घ ।

नोदकाभिमन्त्रणे कृते शोध्यः 'सत्येन माभिरक्ष त्वं वरुण'(१)इति जलं प्रार्थयेत्। उदकस्थानानि च नारदेनोक्तानि—'नदीषु तनुवेगासु सागरेषु वहेषु च। ह्रदेषु देवखातेषु तडागेषु सरःसु च' ॥ इति। तथा पितामहेनापि—'स्थिरतोये निमज्जेन(२) न ग्राहिणि न चाल्पके। तृणशैवालरहिते (३)जलौकामत्स्यवर्जिते ॥ देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम्। आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ॥ आविशेत्सलिले नित्यमूर्मिपङ्कविवर्जिते' ॥ इति। आहार्यं तडागादिभ्य आहृतं ताम्रकटाहादिक्षिप्तं जलम्। नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्। 'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च'। इति स्मरणात् ॥ १०८ ॥

( मिता० ) ततः किं कर्तव्यमित्यत आह—

समकालमिति। निमज्जनसमकालं गते तस्मिन् जविन्येकस्मिन्पुरुषेऽन्यो जवी शरपातस्थानस्थितः पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति त(४)दा स शुद्धो भवति। एतदुक्तं भवति—त्रिषु शरेषु मुक्तेष्वेको वेगवान्मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति। अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति। एवं स्थि(५)तयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं (६)मध्यशरपातस्थानं गच्छति। शरग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति। एतदेव स्पष्टीकृतं पितामहेन—'गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्। गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः ॥ तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम्। गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः ॥ आगतस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक्तदा (७)शुद्धं विनिर्दिशेत्' ॥ इति ॥ जविनोश्च पुरुषयोर्निर्धारणं कृतं नारदेन—'पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे। तौ च तत्र नियोक्तव्यौ शरानयनकारणात्' ॥ इति। तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्। 'गत्वा तु तज्जलस्थानं

(१) इत्युक्तं प्रार्थयते ख. ग.। (२) निमज्जेत्तु ख.। (३) जलूका घ.।
(४) तदा शुद्धो ग. घ.। (५) स्थितयोस्तयोस्तृती ख.।
(६) मध्यमशर ग.। (७) तदा शुद्धिं ख.।

तटे तोरणमुच्छ्रितम् । कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ' ॥ इति नारदस्मरणात् । शरत्रयं वैणवं च धनुर्मङ्गलद्रव्यैः 'श्वेतपुष्पादिभिः प्रथमं सम्पूजयेत् । 'शरान्संपूजयेत्पूर्वं वैणवं च धनुस्तथा । मङ्गलैर्धूपपुष्पैश्च ततः कर्म समाचरेत्' ॥ इति पितामहवचनात् । धनुषः प्रमाणं लक्ष्यस्थानं च नारदेनोक्तम्—'क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् । मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥ मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् । हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥ न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा' ॥ इति । अङ्गुलानां सप्ताधिकं शतं सप्तशतं क्रूरं धनुः । एवं षट्शतं पञ्चशतं च । एवं चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य धनुषः प्रमाणम्, मध्यमस्य दशाङ्गुलाधिकम्, मन्दस्य नवाङ्गुलाधिकमित्युक्तं भवति । 'शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये । वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत्' ॥ इति स्मरणात् । क्षेप्ता क्षत्रियस्तद्वृत्तिर्वा ब्राह्मणः सोपवासो नियोक्तव्यः । यथाह—'क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा । अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेत्' ॥ इति । त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः । 'तेषां च प्रेषि(१)तानां च शराणां शास्त्रचोदनात् । मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा' ॥ इति वचनात् । तत्रापि पतनस्थानादानेतव्यो न सर्पणस्थानात् । 'शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् । सर्पन्सर्पञ्शरो यायाद् दूराद् दूरतरं यतः' ॥ इति वचनात् । वाते च प्रवाति विषमादिदेशे च शरमोक्षो न कर्तव्यः । 'इषुं न प्रक्षिपेद्विद्वान्मारुते (२)चातिवायति । विषमे भूप्रदेशे च वृक्षस्थानसमाकुले ॥ तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते' ॥ इति पितामहवचनात् । निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयादिति वदता उन्मज्जिताङ्गस्याशुद्धिर्दर्शिता । स्थानान्तरगमने चाशुद्धिः पितामहेनोक्ता—'अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात्' ॥ इति 'स्थानाद्वान्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः' ॥ इति । एकाङ्गस्यापि दर्शनादिति च कर्णाद्यभिप्रायेण । 'शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका । अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत्' ॥

(१) प्रक्षिप्तानां च ग । (२) च प्रवायति ग. ।

इति विशेषाभिधानात् । अयमत्र प्रयोगक्रमः—'उक्तलक्षणजलाशयसंनिधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं निधाय तोरणसंनि(१)धौ सशरं धनुः सम्पूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान्हवनान्तामिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमावध्य प्राड्विवाको जलमभिमन्त्रयते-"तोय त्वं प्राणिनां प्राणः' इत्यादिना मन्त्रेण । अथ शोध्यः-'सत्येन' इत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य वलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने मध्यमं शरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जनमथ शरानयनमिति ॥ १०९ ॥ इत्युदकविधिः ।

(वी० मि० ) सम्प्रति विषविधिमाह—

त्वं विष ! ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ॥
त्रायस्वाऽस्मादभीशापात्सत्येन भव मेऽमृतम् ॥ ११० ॥
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ॥
यस्य वेगैर्विना (२)जीर्णं शुद्धिं तस्य विनिर्दिशेत् ॥ १११ ॥

'त्वं विषे'त्यादिश्लोकेनाऽभिमन्त्र्य भक्षयेत् । तच्च यस्य वेगैर्विना जीर्णं भवति तस्य शुद्धिं प्राड्विवाको विनिर्दिशेत् । शार्ङ्गं सिंगिआ इति प्रसिद्धम् । तदुक्तम्—

अजाशृङ्गनिभं श्यामं हिमाचलसमुद्भवम् ।
शुद्धं च शृङ्गवेराभं सुपीतं तदनुत्तमम् ॥

इति ।

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ।

तल्लक्षणं च रोमाञ्चमूर्छादि, तद्दिव्यमत्र प्रयोगः । प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं स्थापयित्वा धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं दिव्यकर्तुः शिरसि निधाय विषमभिमन्त्रयेत् ।

त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
पापिनां दर्शयात्मानं शुद्धानाममृतं भव ॥

---

(१) समीपे सशरं ध. । (२) जीर्येत्-इति मु० पु० पाठः ।

मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम्।
त्रायस्वैनं नरं पापात्सत्येनाऽस्याऽमृतं भव॥

इति मन्त्रेण। ततो दक्षिणामुखाय दिव्यकर्त्रे उदङ्मुखः प्राङ्मुखो वा ब्राह्मणसन्निधौ घृते नियोजितं श्लक्ष्णं पिष्टं विषं दद्यात्। कालविशेषेण परिमाणविशेषश्चात्र नारदेनोक्तः—

शीतर्तौ वर्षविभक्तिं काले देयं तद्धि हिमागमे।
नापराह्णे न मध्याह्ने न सन्ध्यायां तु धर्मवित्॥
वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि॥

अल्पा षड्यवा। ततो दिव्यकर्ता 'त्वं विषे'त्यादिश्लोकेनाभिमन्त्र्य भक्षयेत्॥ ११०-१११॥

(मिता०) इदानीं विषविधानमाह—

त्वं विष-इत्यादि। त्वं विषेत्यादिमन्त्रेण विषमभिमन्त्र्य कर्ता विषं हिमशैलजं श्लक्ष्णमयं भक्षयेत्। तच्च भक्षितं सत् यस्य विषवेगैर्विना जीर्यति स शुद्धो भवति। विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः। 'धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' इति वचनात्। धातवश्च त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणीति सप्त। एवं च सप्तैव विषवेगा भवन्ति। तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि। 'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ। यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य' ॥ इति। अत्र च महादेवस्य (१)पूजा कर्तव्या। यथाह नारदः—'दद्याद्विषं सोपवासो देवब्राह्मणसंनिधौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्' ॥ इति। प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते। 'त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम्। पापानां दर्शयात्मानं शुद्धानाममृतं भव॥ मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम्। त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव' ॥ इति। एवमभिमन्त्र्य दक्षिणाभिमुखावस्थिताय दद्यात्। 'द्विजानां संनिधावेव दक्षिणाभिमुखे स्थिते। उदङ्मुखः

(१) पूजा कार्या ख।

प्राङ्मुखो वा विषं दद्यात्समाहितः' ॥ इति नारदवचनात्। विषं च वत्सनाभादि ग्राह्यम्। 'शृङ्गिणा वत्सनाभस्य हिमजस्य विषस्य वा' ॥ इति पितामहवचनात्। वर्ज्यानि च तेनैवो(१)क्तानि—'चारितानि च जीर्णानि कृत्रिमाणि तथैव च। भूमिजानि च सर्वाणि विषाणि परिवर्जयेत्' ॥ इति। तथा नारदेनापि—'भ्रष्टं च चारितं चैव धूपितं मिश्रितं तथा। कालकूटमलाबुं च विषं (२)यत्नेन वर्जयेत्' ॥ इति। कालश्च नारदेनोक्तः—'तोलयित्वेप्सितं काले देयं तद्धि हिमागमे। नापराह्णे न मध्याह्ने न सन्ध्यायां तु धर्मवित्' ॥ इति। कालान्तरे तूक्तप्रमाणादल्पं देयम्। 'वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता। हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि' ॥ इति स्मरणात्। अल्पेति षड्यवेत्यर्थः। हेमन्तग्रहणेन शिशिरस्यापि ग्रहणम्। 'हेमन्तशिशिरयोः समासेन' इति श्रुतेः। वसन्तस्य च सर्वदिव्यसाधारणत्वात्तत्रापि सप्त यवा विषं च घृतप्लुतं देयं नारदवचनात्। 'विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः। तमष्टभागहीनं तु शोध्ये दद्याद् घृतप्लुतम्' ॥ इति। पलं चात्र चतुःसुवर्णकम्। तस्य षष्ठो भागो दश माषाः दश यवाश्च भवन्ति। 'त्रियवं त्वेककृष्णलम्। पञ्चकृष्णलको माषः' इत्येको माषः पञ्चदश यवा भवन्ति। एवं दशानां माषाणां यवाः सार्धशतं भवन्ति। पूर्वे च दश यवा इति षष्ट्यधिकं शतं यवाः पलस्य षष्ठो भागस्तस्माद्विंशतितमो भागोऽष्टौ यवास्तस्याष्टभाग एकयवः तेन हीनं विंशतिमं भागं सप्तयवं घृतप्लुतं शोध्ये दद्यात्। घृतं च विषात् त्रिंशद्गुणं ग्राह्यम्। 'पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्। घृते नियोजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्' ॥ इति कात्यायनवचनात्। त्रिंशद्गुणेन घृतेनान्वितं विषम्। शोध्यश्च कुहकादिभ्यो रक्षणीयः। 'त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्। कुहकादिभयाद्राजा रक्षयेद्दिव्यकारिणम् ॥ ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान्। कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत्' ॥ इति पितामहस्मरणात्। तथा विषमपि (३)रक्षणीयम्—'शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम्। अकृत्रिममसंमूढममन्त्रोपहतं च यत्' ॥ इति नारदस्मरणात्। (४)तथा

(१) तथैवोक्तानि ख.। (२) यत्नेन परिवर्जयेदिति ग.।
(३) परिरक्षणीयं ग.। (४) तथापि घ.।

विषे पीते यावत्करतालिकाशतपञ्चकं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः । यथाह नारदः—'पञ्चतालशतं कालं निर्विकारो यदा भवेत् । तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम्' ॥ इति । पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः । 'भक्षिते तु यदा स्वस्थो मूर्च्छाछर्दिविवर्जितः । निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत्' ॥ इति । अत्र च प्राड्विवाकः सोपवासो महादेवं सम्पूज्य तत्पुरतो विषं स्थापयित्वा धर्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभि(१)मुखस्थिताय विषं प्रयच्छति । स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः ॥ ११०-१११ ॥

इति विषविधानम् ॥

(वी० मि०) अथ कोशविधिमाह—

देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ॥
संस्नाप्य पाययेत्तस्माज्जला(२)त्तु प्रसृतित्रयम् ॥११२॥
आ(३)चतुर्दशिकादह्नो यस्य नो राजदैविकम् ॥
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥११३॥

उग्रान्देवानभ्यर्च्य प्राड्विवाकस्तस्य देवस्य स्नानोदकमाहरेत् । उग्रार्थं च विवृतं पितामहेन—

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ।
अन्येषामपि देवानां स्नापयेदायुधानि तु ॥

तस्मात्स्नानजलात्प्रसृतित्रयं जलं संस्नाप्याऽभियुक्तं पाययेत् । पीतोदकस्य च यस्य राजदैविकं व्यसनं रोगादि घोरं अतिपीडाकरं चतुर्दशदिनपर्यन्तं न जायते स शुद्धः विजयी स्यात् । यतोऽवधिपर्यन्तेन व्यसनाभावे संशयो न तिष्ठतीत्यर्थः । तुशब्देन जलान्तरमिश्रणव्यवच्छेदः ।

त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् ।
वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ॥

(१) मुखाय स्थिताय ख मुखाय विषं घ । (२) जल तु—इति मु० पु० पाठ ।
(३) अर्वाक् चतुर्दशादह्नो—इति मु० पु० पाठ ।

इति पितामहवचनं त्वल्पाल्पतमाभियोगविषय इति न विरोधः। तत्र चायं क्रमः—गोमयेन मण्डलं कृत्वा दिव्यकर्तारमादित्याभिमुखं स्थापयित्वा शिरसि पत्रन्यासान्तं कृत्वा उग्रदेवान्संपूज्य तदीयस्नानोदकं प्रसृतित्रयमितं 'तोय त्वं प्राणिना'मित्यादिनाभिमन्त्र्य 'सत्येन माऽभिरक्ष त्वं वरुणे'ति दिव्यकर्तारमभिमन्त्रितं पाययेदिति ॥ ११२-११३ ॥

( मिता० ) अथ कोशविधिमाह—

देवानिति। उग्रान्देवान्दुर्गादित्यादीन्समभ्यर्च्य गन्धपुष्पादिभिः पूजयित्वा संस्नाप्य तत्स्नानोदकमाहरेत्। आहृत्य च 'तोय त्वं प्राणिनां प्राणः' इत्यादिना तत्तोयं प्राड्विवाकः संस्नाप्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा 'सत्येन माभिरक्ष त्वं वरुण' इत्यनेनाभिमन्त्रितं पाययेत्प्रसृतित्रयम्। एतच्च साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु। अत्र च स्नाप्यदेवनियमः कार्यनियमोऽधिकारिनियमश्च पि(१)तामहादिभिरुक्तः। 'भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम्। समभावे तु देवानामादित्यस्य च पा(२)ययेत् ॥ दुर्गायाः पाययेच्चौरान्ये च शस्त्रोपजीविनः। भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेत् ॥ दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानि तु' ॥ इति देवतानियमः। 'विस्र(३)म्भे सर्वशङ्कासु सन्धिकार्ये तथैव च। एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये' ॥ इति कार्यनियमः। 'पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याव्यसनिनः कोशपानं विधीयते' ॥ सशूक आस्तिकः। 'मद्यपस्त्रीव्यसनिनां कितवानां तथैव च। कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥ महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते। नास्तिकव्रात्य(४)दासेषु कोशपानं विवर्जयेत्' ॥ इति। महापराधो महापातकम्। निर्धर्मो वर्णाश्रमधर्मरहितः पाखण्डी। कुत्सितः प्रतिलोमजः। दाशाः कैवर्ताः। इत्यधिकारिनियमः। तथा गोमयेन मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेदिति नारदवचनादवगन्तव्यम्। यथाह—"तमाहूयाभिशस्तं तु

( १ ) पितामहनारदादिभिः घ.। ( २ ) दापयेत घ.।
( ३ ) विभेदे घ.। ( ४ ) दासेषु ख.।

मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम्' ॥ इति ॥ ११२ ॥

(मिता०) ननु तुलादिषु विपान्तेषु समनन्तरमेव शुद्ध्यशुद्धिभावना, कोशे तु कथमित्यत आह—

अर्वागिति । चतुर्दशादह्नः पूर्वं यस्य राजिकं राजनिमित्तं दैविकं देवप्रभवं व्यसनं दुःखं घोरं महत् नो नैव जायते, असावस्य देहिनाम-परिहार्यत्वात्स शुद्धो वेदितव्यः । ऊर्ध्वं पुनरवधेर्न दोषः । यथाह नारदः—'ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्' ॥ इत्यर्थसिद्धमेवोक्तम् । 'अर्वाक् चतुर्दशादह्नः' इत्येतन्महाभियोगविषयम्—'महाभियोगेष्वेतानि' इति प्रस्तुत्याभिधानात् । अवध्यन्तराणि पितामहेनोक्तान्यल्पविषयाणि । 'कोशमल्पेऽपि दापयेत्' इति स्मरणात् । तानि च—'त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्विसप्तकात् । वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः' ॥ इति । महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम् ॥ ११३ ॥ इति कोशविधिः ॥

(वी० मि०) अथाऽल्पाभियोगे तण्डुलादीनि चत्वारि दिव्यानि ग्रन्थकर्त्रा विशिष्याऽप्रतिपादिताम्युच्यन्ते । तत्र पितामहः—

तण्डु(१)लानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः ॥
तण्डुलान्कारयेच्छुक्लाञ्छालेर्नान्यस्य कस्यचित् ।
मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ॥
तण्डुलान्भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ।
पिप्पलस्य तु नान्यस्य अभावे भूर्जपत्रकम् ॥
लोहितं दृश्यते यस्य हनुस्तालु च शीर्यते ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

धर्मावाहनादिकं चात्र वक्ष्यमाणेषु त्रिष्वगन्तव्यम् ॥

(१) इदमर्धं नास्ति क ख पुस्तकयोः ।

तथा—

सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलखातं तु मृण्मयं वाथ मण्डलम् ॥
पू(१)रयेद् घृततैलाभ्यां विंशत्या तु पलैस्तु तम् ।
सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ॥
अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ।
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ॥
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ।

मण्डलं वर्तुलम, उद्धरेन्निःकारयेत् ॥

बृहस्पतिः—

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया संलिहेत्सकृत ।
अदग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

धर्मजं दिव्यमाह पितामहः—

लिखेद् भूर्जे पटे वापि धर्माधर्मौ सितासितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत ॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥
गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ।
आवाहयेत्ततो देवांल्लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।

ततो—

यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ।

इति अभिशस्तोऽभिमन्त्रयेत् ।

अभियुक्तस्तयोश्चैकं प्रगृहीताऽविलम्बितः ।
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥

(१) इत आरभ्य सार्धमेकं पद्यं नास्ति ख. पुस्तके ।

अथ शपथाः । तत्र मनुः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
पुत्रदारस्य वाप्येवं शिरांसि स्पर्शयेत्पृथक् ।

यद्येतन्मया कृतं तदा सत्यातिक्रमजन्यं पापं मम स्यादिति विप्रं वादयेत् । यद्येतन्मया कृतं तदा मम वाहनान्यायुधानि निष्फलानि भवन्त्विति क्षत्रियं वादयेत् । एवमुत्तरत्रापि । हलायुधस्तु 'सत्यमिति ब्राह्मणं वादयेत् । क्षत्रियं वाहनमायुधं स्पर्शयेत् । वैश्यं गवादि स्पर्शयेत् । उक्तशपथैर्यत्कृतं यत्पापं तेन शूद्रं वृथाशपथकारिणं योजयेत् । सर्वं पूर्वोक्तं कारयेदिति तात्पर्यार्थ' इत्याह । बृहस्पतिः—

सत्यं वाहनमस्त्राणि गोबीजकनकानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥
एते च शपथाः प्रोक्ता मनुना स्वल्पकारणे ।

अत्र शपथस्य दिव्यभिन्नत्वादुपवासादिकं नास्ति किं तु स्नानाचमनमात्रम् । शङ्खः—'दृष्टापूर्तेः प्रदानमन्यांश्च शपथान् कारयेत्' । मनुः—

वृथा हि शपथान् कुर्वन् प्रेत्य चेह च नश्यति ।
कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने ॥
ब्राह्मणाभ्युपपत्तौ च शपथैर्नास्ति पातकम् ।

कामिनीष्विति । रहसि कामिनीसन्तोषार्थं, विवाहेषु स्त्रीभिः परार्थं, गोग्रासार्थं, नित्याहुतिसम्पादकेन्धनार्थं ब्राह्मणगवादिप्राणरक्षार्थं च वृथा शपथैरपि न पापं भवतीत्यर्थः ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने दिव्यप्रकरणम् ॥

---

( मिता० ) तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि । स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यान्यपि दिव्यानि कथितानि । यथाह पितामहः-'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम् । चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः ॥ तण्डुलान्कारयेच्छुक्लाञ्छालेर्नान्यस्य कस्यचित् । मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥ स्नानोदकेन संमिश्रान्रात्रौ

तत्रैव वासयेत् । प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ॥ तण्डुलान्भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः । पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु ॥ लोहितं यस्य दृश्येत हनुस्तालु च शीर्यते । गात्रं च (१)कम्पते यस्य तमशुद्धं विनिर्दिशेत्' । इति । शिरोरोपितपत्रकं तण्डुलान्भक्षयित्वा निष्ठीवयेत्प्राड्विवाकः । भक्षयित्वेति च ण्यन्तात्णिचि रूपम् । सर्वदिव्यसाधारणं च धर्मावाहनादि पूर्ववदिहापि कर्तव्यम् ॥ इति तण्डुलविधिः ॥

तप्तमाषविधिः पितामहेनोक्तः । तथा हि–'सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम् । चतुरङ्गुलखातं तु मृन्मयं वाथ मण्डलम्'॥ वर्तुलमित्यर्थः । 'पूरयेद् घृततैलाभ्यां विंशत्या तु पलैस्तु तत् । सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः ॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् । कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते । शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः' ॥ उद्धरेदिति वचनात्पात्रादुत्क्षेपणमात्रं न(२) वहिः प्रक्षेपणमाद(३)रणीयम् ॥

अपरः कल्पः–'सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा । गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥ सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् । सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥ भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे । परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम् ॥ ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ॥ परं पवित्रममृतं घृतं त्वं यज्ञकर्मसु । दह पावक पापं त्वं हिमशीतं शुचौ भव ॥ उपोषितं ततः स्नातमार्द्रवाससमागतम् । ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ॥ प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः । यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः' ॥ इति । अत्रापि धर्मावाहनाद्यनुसन्धातव्यम् । घृतानुमन्त्रणं प्राड्विवाकस्य । 'त्वमग्ने सर्वभूतानाम्' इति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः । 'प्रदेशिनीं परीक्षेयुः' इतिवचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम् ॥ इति तप्तमाषविधिः ॥

धर्माधर्माख्यदिव्यविधिश्च पितामहेनोक्तः । तथा च–'अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम्' ॥ इति । हन्तॄणामिति साहसाभियोगेषु, याचमानानामिति अर्थाभियोगेषु, प्रायश्चित्तार्थिनामिति पातकाभियोगेषु । 'रा-

(१) कम्पयेद्यस्य. ग. । (२) न प्रक्षेपणं ख. । (३) महारणीयं ग. । (४) चरुकारं ख. ।

जतं कारयेद्धर्ममधर्मं सीसकायसम्' इति प्रतिमाविधानं सीसकं वा आयसं चेति ॥ पक्षान्तरमाह—'लिखेद् भूर्जे पटे वापि धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ सितपुष्पस्तु धर्मः स्याद्धर्मोऽसितपुष्पधृक् । एवंविधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥ गोमयेन मृदा वापि पिण्डौ कार्यौ समंततः । मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥ उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ । आवाहयेत्ततो देवाँल्लोकपालांश्च पूर्ववत् ॥ धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत्' ॥ ततः—'यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे । अशुद्धश्चेन्मम करे पाप(१) आयातु धर्मतः' ॥ इति ॥ अभिशस्तोऽभिमन्त्रयते । 'अभियुक्तस्तयोश्चैकं प्रगृहीताविलम्बितः । धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥ एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम्' ॥ इति ॥ इति धर्माधर्मदिव्यविधिः ॥

अन्ये च शपथा द्रव्याल्पत्वमहत्त्वविषया जातिविशेषविषयाश्च मन्वादिभिरुक्ताः । ते यथा—'निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् । त्रिकादर्वाक्तु पुण्यं स्यात्कोशपानमतः परम्' ॥ ( मनुः ८।११३ ) । 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः' ॥ इत्यादयः । अत्र च शुद्धिविभावना मनुनोक्ता ( ८।११५ )—न चा(२)र्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः' इति । आर्तिरपि—'यस्य नो राजदैविकं व्यसनं जायते घोरम्' इत्युक्तैव । कालनियमश्च एकरात्रमारभ्य त्रिरात्रपर्यन्तं त्रिरात्रमारभ्य पञ्चरात्रपर्यन्तम् । एकरात्रप्रभृतित्वं कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यम् ॥ एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः कात्यायनेन—'शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत्' इति । तं दण्डमाह—'विषे तोये हुताशे च तुलाकोशे च तण्डुले । तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥ सहस्रं षट्शतं चैव तथा पञ्चशतानि च । चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत्'॥ इति ॥ 'निह्नवे भावितो दद्या'दित्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते ॥ इति दिव्यप्रकरणम् ॥

( १ ) पापमायातु ख. ।
( २ ) अस्य पूर्वार्धं 'यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च' इति मनुस्मृतावलोकनीयम् ।

(वी० मि०) अथ दायविभागप्रकरणमारभ्यते । तल्लक्षणं चोक्तं नारदेन—

विभागोऽर्थस्य पैत्र्यस्य तनयैर्यत्र कल्प्यते ।
दायभागमिति प्रोक्तं व्यवहारपदं बुधैः ॥

पैत्र्यस्य तनयपदाभ्यां स्ववीजेन सम्बन्धस्य प्रत्यासन्नमात्रस्योपलक्षणम् । विभागः साधरणस्वत्वाश्रयस्य व्यवस्थाविशेषादिभिः तदपगमे प्रतिनियतस्वत्वाधानम् । दायो धनं स्वामिसम्बन्धवशाल्लब्धधनं तस्य भागो विभागः । अत्र जीवितपितृकविभागमादावाह—

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ॥
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥११४ ॥
यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः ॥
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥ ११५ ॥
शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक् क्रिया ॥
न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः ॥ ११६ ॥

पिता चेद्विभागं स्वार्जितस्वाभ्युद्धृतस्वत्वधनस्य कुर्यात्तदा इच्छया स्वेच्छानुसारेण न्यूनाधिकमपि द्रव्यं दत्वा सुतान् विभजेत् । तदाह विष्णुः—'पिता यत्पुत्रान्विभजेत्तस्य स्वेच्छया स्वयमुपात्तेऽर्थे' । मनुश्च—

पैतृकं तु पिता द्रव्यमनवाप्यं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ॥

पिताऽर्जितं तदुद्धृतं च विहाय द्रव्यान्तरे पित्रा विभज्यमाने सर्वे सुताः समांशभागिनः स्युः । ज्येष्ठस्य ज्येष्ठभागेन दशांशविंशांशादिसहितेनांशेन विभजेत् । पुत्राणां च स्वस्य समांशकरणम् । विपक्षे तु पितुर्विभागकर्तुः पत्नीनां यासां भर्त्रा श्वशुरेण वा न स्त्रीधनं दत्तं ताः पत्न्यो गृहीतस्त्रीधनाः पत्न्यः समधनाः संविभक्तद्रव्यधनाः कार्याः । यदि तु—

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

इति तु नारदवचनानुसारेण । 'स्वल्पेन वा संविभज्य भूयिष्ठमादाय तिष्ठे'दिति हारीतवचनानुसारेण द्विगुणं प्रचुरतरं वा धनं स्वयं

गृह्णाति तदा स्वभागादेव समांशिकाः कार्याः । शक्तस्य स्वयमेवार्जनसमर्थस्य पितृद्रव्यमनीहमानस्याऽनिच्छतः पुत्रस्य पित्रा भ्रातृभिश्च किञ्चित्तण्डुलप्रस्थादिकं तत्पुत्रविप्रतिपत्तिनिरासार्थं दत्त्वा पृथक्क्रिया विभागः कार्यः । न्यूनाधिकद्रव्यदानपूर्वकं विभक्तानां पुत्राणां पितृकृतस्तादृशोऽपि विभागो धर्म्यः स्मृतः, तस्मादुत्तरकाले न विप्रतिपत्तव्यम् । पितुस्तु लोकविद्विष्टत्वादधर्म्य एव तादृशो विभाग इति तात्पर्यम् । आपस्तम्ब –'एकधनेन ज्येष्ठं तोषयित्वा जीवत्पुत्रेभ्यो विभजेत्समम्' । एकेन धनेन श्रेष्ठधनेन । जीवदिति विशेषाभिधानान्मृतस्य पत्नी भागं न भजते इत्यभिप्रैति ॥ ११५—११६ ॥

(मिता०) प्रमाणं मानुषं दैवमिति भेदेन वर्णितम् ।
अधुना वर्ण्यते दायविभागो योगमूर्तिना ॥

तत्र दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते । स च द्विविधः अप्रतिबन्धः सप्रतिबन्धश्च । तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धो दायः । पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भ(१)वतीति सप्रतिबन्धो दायः । एवं तत्पुत्रादिष्वप्यूहनीयः । विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्था(२)पनम् । एतदेवाभिप्रेत्योक्तं नारदेन–'विभागोऽर्थस्य पि(३)त्र्यस्य तनयैर्यत्र कल्प्यते । दायभाग इति प्रोक्तं व्यवहारपदं बुधैः' ॥ इति । पि(३)त्र्यस्येति स्वत्वनिमित्तसंबन्धोपलक्षणम् । तनयैरित्यपि प्रत्यासन्नोपलक्षणम् । इदमिह निरूपणीयम् । कस्मिन्काले कस्य कथं कैश्च विभागः कर्तव्य इति । तत्र कस्मिन् काले कथं कैश्चेति तत्र श्लोकव्याख्यान एव वक्ष्यते । कस्य विभाग इत्येतावदिह चिन्त्यते । किं विभागात्स्वत्वमुत स्वस्य सतो विभाग इति । तत्र स्वत्वमेव तावन्निरूप्यते । किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति । तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तं गोतमवचनात्–'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः' ॥ इति । प्रमाणान्तरगम्ये स्वत्वं नेदं वचनमर्थवत्स्यात् । तथा स्तेनातिदेशो मनुः (८।३४०)—

(१) अत्र पुत्रकर्तृकः स्वामिसम्बन्धस्य प्रतिबन्धः तदभावे पितृव्यादेः प्रभुत्वेन च स्वं भवतीति विशेषः ख घ पुस्तकयोः ।   (२) इत्यस्य व्यवस्थापनम् ख ।   (३) पैत्रस्य ग घ ।

'योऽद(१)त्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् । याजनाध्या(२)पनेनापि यथा स्तेनस्तथैव सः' ॥ इति । अदत्तादायिनः सकाशाद्याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे । अपि च—लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिति न ब्रूयादपहर्तुरेव स्वत्वात् । अन्य(३)थान्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम् । एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात् । तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति । अत्रोच्यते—लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत् । आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनमस्ति । नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव । नैतत् । न हि तत्राहवनीयादिरूपेण पाकादिसाधनत्वम् । किं तर्हि प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण । इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैव । न हि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति । अपि च प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते । क्रयविक्रयादिदर्शनात् । किं च—निय(४)तोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते । तथा हि—लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासंभवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा । ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति' याग एव न संवर्तेत । प्रलपितमिदं केनापि 'अर्जनं स्वत्वं नापादयतीति विप्रतिपिद्धम्' इति वदता । तथा सिद्धान्तेऽपि स्वत्वस्य लौकित्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्—'अतो नियमातिक्रमः पुरुषस्य न क्रतोः' इति । अस्य चार्थ एवं विवृतः—यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धि(५)र्न नियमातिक्रमार्जितेन द्रव्येणेति न पुरुषस्य नियमातिक्रमदोषः(६) पूर्वपक्षे । राद्धान्ते त्वर्जननियमस्य

(१) अदत्तादायिनश्चौरस्य. । (२) याजनाध्यापनाद्यापि ख. ।
(३) अन्यथा स्वं ख. । (४) नियतोपाधिकं घ. ।
(५) क्रतुसिद्धिर्नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति घ. ।
(६) दोष इति पूर्वपक्षे घ. ।

पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति, पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम् । अन्यथा क्रतुसिद्ध्यभावात् । न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्र स्वत्वप्रसिद्ध्यभावात् व्यवहारविसंवादाच्च । एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते-'ब्राह्मणस्य प्रतिग्रहादय उपायाः, क्षत्रियस्य विजिनादयः, वैश्यस्य कृष्यादयः, शूद्रस्य शुश्रूषादयः' इत्यदृष्टार्था नियमाः । रिक्थाद्ययस्तु सर्वसाधारणाः-'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' इत्युक्ताः । तत्राऽप्रतिबन्धो दायः रिक्थम् । क्रयः प्रसिद्धः । संविभागः सप्रतिबन्धो दायः परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः । अधिगमो निध्यादेः प्राप्तिः । एतेषु निमित्तेषु सत्सु स्वामी भवति । (१)ज्ञातेषु ज्ञायते स्वामी । 'ब्राह्मणस्याधिकं लब्धम्' इति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । 'क्षत्रियस्य विजितम्' इत्यत्राधिकमित्यनुवर्तते । क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम । 'निर्विष्टं वैश्यशूद्रयोः' इत्यत्राप्यधिकमित्यनुवर्तते । वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तदसाधारणम् । शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम् । एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं 'सूतानामश्वसारथ्यम्' इत्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते । सर्वस्यापि भृतिरूपत्वात् । 'निर्वेशो भृतिभोगयोः' इति त्रिकाण्डीस्मरणात् । तत्तदसाधारणं वेदितव्यम् । यदपि 'पत्नी दुहितरश्च' इत्यादिस्मरणं तत्रापि स्वामिसंबन्धितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्वमनवद्यम् । यदपि मम स्वमनेनापहृतमिति न ब्रूयात्स्वत्वस्य लौकिकत्व इति तदप्यसत्—स्वत्वहेतुभूतक्रयादिसंदेहात्स्वत्वसंदेहोपपत्तेः । विचारप्रयोजनं तु-'यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च' । इति । शास्त्रैकममधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तद(२)विभाज्यमेव । यदा तु (३)लौकिकं स्वत्वं तदाऽसत्प्रतिग्रहा-

(१) ज्ञातेषु ख. । (२) न विभज्यमेव ग । (३) स्वत्वं लौकिकं तदा ग. ।

दिलब्धस्यापि स्वत्वात्तत्पुत्राणां तद्विभाज्यमेव । 'तस्योत्सर्गेण शुद्ध्यन्ति' इति प्रायश्चित्तमर्जयितुरेव, तत्पुत्रादीनां तु दायत्वेन स्वत्वमिति न तेषां दोषसम्बन्धः । 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च' । इति ( १०।१५ ) मनुस्मरणात् ।

इदानीमिदं संदिह्यते-किं विभागात्स्व(१)त्वमुत स्वस्य सतो विभाग इति । तत्र विभागात्स्व(२)त्वमिति तावद्युक्तम् । जातपुत्रस्याऽऽधानविधानात् । यदि जन्मनैव स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारः स्यात् । तथा विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिषेधो नोपपद्यते । सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात् । यथाह-'शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत् । त्रीण्येतान्यविभज्यानि प्रसादो यश्च पैतृकः' ॥ इति । तथा-'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् । सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते' ॥ इति प्रीतिदानवचनं च नोपपद्यते जन्मनैव स्वत्वे । न च स्थावरादृते यद्दत्तमिति सम्बन्धो युक्तो व्यवहितयोजनाप्रसङ्गात् । यदपि-'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः' ॥ तथा-'पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च । स्थावरं तु न भुज्येत प्रसादे सति पैतृके' ॥ इति स्थावरस्य प्रसा(३)ददाने प्रतिषेधवचनं तत्पितामहोपात्तस्थावरविषयम् । अतीते पितामहे तद्धनं पितापुत्रयोः (४)साधारणमपि मणिमुक्तादि पितुरेव । स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते । तस्मान्न जन्मना स्वत्वं किंतु स्वामिनाशाद्विभागाद्वा स्वत्वम् । अत एव पितुरूर्ध्वं विभागात्प्राग्द्रव्यस्वत्वस्य प्रहीणत्वादन्येन गृह्यमाणं न निवार्येत इति चोद्यस्यानवकाशः । तथैकपुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्षत इति । अत्रोच्यते-लोकप्रसिद्धमेव स्वत्वमित्युक्तम् । लोके च पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरं नापह्नवमर्हति । विभागशब्दश्च बहुस्वामिकधनविष(५)यो लोकप्रसिद्धो ना-

( १ ) स्वमुत. घ. । ( २ ) प्रसादादिह न भाति ख. । ( ३ ) प्रसाददाने भाति घ. ।
( ४ ) समानमपि घ. । ( ५ ) विषयः प्रसिद्धो ग. ।

न्यदीय(१)विषयो न प्रहीणविषयः । '(२)तथोत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्याः' इति गौतमवचनाच्च । 'मणिमुक्ताप्रवालानाम्' इत्यादिवचनं च जन्मना स्वत्वपक्षे एवोपपद्यते । न च पितामहोपात्तस्थावरविषयमिति युक्तम् । 'न पिता न पितामहः' इति वचनात् । पि(३)तामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यदेयमिति वचनं जन्मना स्वत्वं गमयति । यथा परमते मणिमुक्ताप्र(४)वालवस्त्राभरणादीनां पैतामहानामपि पितुरेव स्वत्वं वचनात्, एवमस्मन्मतेऽपि पित्रार्जितानामप्येते(५)षां पितुर्दानाधिकारो वचनाद्विशेष । यत्तु 'भर्त्रा प्रीतेन' इत्यादिविष्णुवचनं स्थावरस्य प्रीतिदानज्ञापनं तत्स्वोपार्जितस्यापि पुत्राद्यनुज्ञयैवेति व्याख्येयम् । पूर्वोक्तमणिमुक्तादिवचनैः स्थावरव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात् । यदप्यर्थसाध्येषु वैदिकेषु कर्मस्वनधिकार इति, तत्र तद्विधानबलादेवाधिकारो गम्यते । तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्, तथा हि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमो(६)क्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम् । स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव । 'स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् । असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः' ॥ इत्यादिस्मरणात् । अस्यापवादः—'एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् । आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः' ॥ अस्यार्थः—अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु (७)वाऽनुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे वावश्यकर्तव्येषु च पितृश्राद्धादिषु स्थावरस्य दानाधमनविक्रयमेकोऽपि समर्थः कुर्यादिति । यत्तु वचनम्—'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधमनविक्रये' ॥ इति, तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानी(८)श्वरत्वात् सर्वाभ्यनुज्ञावद्दयं कार्यम् । विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंश

(१) न्यदीयधनविषयो घ । (२) न तथोत्पत्त्यैव ख । (३) पितृपितामहस्य घ ।
(४) मुक्तावस्त्राभरणा ख–घ । (५) एतषां मणिमुक्तादीनां ।
(६) [illegible] (७) [illegible] (८) [illegible]

यद्व्युदासेन व्यवहारसौकर्याद सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेन । अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिद्ध्यत्येवेति व्याख्येयम् । यदपि-'स्वग्रामज्ञातिसामन्तदायादानुमतेन च । हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी' ॥ इति, तत्रापि ग्रामानुमतिः । 'प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः' इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते न पुनर्ग्रामानुमत्या विना व्यवहारसिद्धिः । सामन्तानुमतिस्तु सीमावि(१)प्रतिपत्तिनिरासाय । ज्ञातिदायानुमतेस्तु प्रयोजनमुक्तमेव 'हिरण्योदकदानेन' इति । 'स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया' इति स्थावरस्य विक्रयप्रतिषेधात् । 'भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ' ॥ इति दानप्रशंसादर्शनाच्च । विक्रयेऽपि कर्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्यादित्यर्थः । पैतृके पैतामहे च धने जन्मनैव स्वत्वेऽपि विशेषं 'भूर्या पितामहोपात्ता' इत्यत्र वक्ष्यामः ॥

( मिता० ) इदानीं यत्र काले येन च यथा विभागः कर्तव्यस्तद्दर्शयन्नाह—

विभागमिति । यदा विभागं पिता चिकीर्षति तदा इच्छया (२) विभजेत् पुत्रानात्मनः सकाशात् पुत्रं पुत्रौ पुत्रान् । इच्छाया निरङ्कुशत्वादनियमप्राप्तौ नियमार्थमाह-ज्येष्ठं वा श्रेष्ठभागेनेति । ज्येष्ठं श्रेष्ठभागेन, मध्यमं (३)मध्यभागेन, कनिष्ठं कनिष्ठभागेन विभजेदित्यनुवर्तते । श्रेष्ठादिविभागश्च मनुनोक्तः ( ९।११२ )-'(४)ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः' इति । वाशब्दो वक्ष्यमाणपक्षापेक्षः । सर्वे वा स्युः समांशिन इति । सर्वे वा ज्येष्ठादयः समांशभाजः कर्तव्याः । अयं

( १ ) सीमाप्रतिपत्ति ख-ग. ।

( २ ) इच्छयेति ऐच्छिकविभाग एव विवृत उत्तरार्धेन । इच्छायाः संभवति उक्तपक्षद्वयावलम्बनत्वे स्वातन्त्र्यप्रयोगाद्वाक्यभेदापत्तेः, एकस्मै लक्षं कस्मैचित्कपर्दिकमन्यस्मै न किमपीत्यन्यस्यापत्तेश्च व्य. म. ।

(३) मध्यमभागेन घ. । (४) उद्ध्रियत इत्युद्धारः । ज्येष्ठस्याविभक्तसाधारणधनादुद्धृत्य विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तदातव्यमित्यादि । अयं चोद्धारविभागः कलौ नेष्टः कलिवर्ज्ये पाठात् व्य. म.

च विषमो विभागः स्वार्जितद्रव्यविषयः । पितृक्रमायाते तु समस्वाम्यस्य वक्ष्यमाणत्वात्स्वेच्छया विषमो विभागो युक्तः । विभागं चेत्पिता कुर्यादिति यदा पितुर्विभागेच्छा स तावदेकः कालः । अपरोऽपि कालो जीवत्यपि पितरि द्रव्यनिःस्पृहे निवृत्तरमणे, मातरि च निवृत्तरजस्कायां पितुरनिच्छायामपि पुत्रेच्छयैव विभागो भवति । यथोक्तं नारदेन-'अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम्' इति, पित्रोरूर्ध्वं विभागं प्रतिपाद्य-'(१)मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च । निवृत्ते चापि रमणे पितर्युपरतस्पृहे' ॥ इति दर्शितः । अथ पुत्रा धनं समं विभजेयुरित्यनुपज्यते । गौतमेनापि-'ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्' इत्युक्त्वा 'निवृत्ते चापि रजसि' ति द्वितीयः कालो दर्शितः । जीवति चेच्छ(२)तीति तृतीयः कालः । तथा सरजस्कायामपि मातर्यनिच्छत्यपि पितर्यधर्मवर्तिनि दीर्घरोगग्रस्ते च पुत्राणामिच्छया भवति विभागः । यथाह शङ्खः-'अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि रोगिणि च' इति ॥ ११४ ॥

( मिता० ) पितुरिच्छाया विभागो द्विधा दर्शितः—समो विषमश्चेति । तत्र समविभागे विशेषमाह—

यदीति । यदा स्वेच्छया पिता सर्वानेव सुतान्समविभागिनः करोति तदा पत्न्यश्च पुत्रसमांशभाजः कर्तव्याः, यासां पत्नीनां भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम् । दत्ते तु स्त्रीधने अर्धांशं वक्ष्यति-'दत्ते त्वर्धं प्रकल्पयेत्' इति । यदा तु श्रेष्ठभागादिना ज्येष्ठादीन् विभजति तदा पत्न्यः श्रेष्ठादिभागान्न लभन्ते किंतूद्धृतोद्धारात्समुदायात्समानेवांशान्लभन्ते स्वोद्धारं च । यथाहापस्तम्बः-'परीमाण्डं च गृहेऽलंकारो भार्यायाः' इति ॥ ५ ॥

( मिता० ) 'ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिन' इति पक्षद्वयेऽप्यपवादमाह--

शक्तस्येति । स्वयमेव द्रव्यार्जनसमर्थस्य पितृद्रव्यमनीहमानस्यानिच्छ(३)तोऽपि यत्किञ्चिदसारमपि दत्त्वा पृथक् क्रिया=विभागः

(१) मातुरिति । रमणं कामः । उपरतस्पृहो विरक्तः । प्रत्तासु भगिनीषु चेति काकाक्षिवदुभयत्र नेतृत्वाद्विशेषणम् स्य म । (२) इच्छायामुक्त तादृच्छा विनापि विभागमाह बृहस्पतिः - क्रमागते गृहक्षेत्रे पिता पुत्राः समांशिनः । पैतृकेन विभागार्हाः सुताः पितुरनिच्छया' ॥ अर्थात्पितामहार्जिते धने तदनिच्छयापि पुत्रा विभागार्हा इत्यर्थः व्य म ।

कार्यः पित्रा । तत्पुत्रादीनां दायजिघृक्षा माभूदिति ॥

( मिता० ) ज्येष्ठं वा श्रेष्ठभागेनेति न्यूनाधिको विभागो दर्शितः। तत्र शास्त्रोक्तोद्धारादिविषमविभागव्यतिरेकेणाऽन्यथाविषमविभागनिषेधार्थमाह--

न्यूनेति । न्यूनाधिकविभागेन विभक्तानां पुत्राणामसौ न्यूनाधिकविभागो यदि धर्म्यः शास्त्रोक्तो भवति तदासौ पितृकृतः कृत एव न निवर्तेत इति मन्वादिभिः स्मृतः । अन्यथा तु पितृकृतोऽपि निवर्तेत इत्यभिप्रायः । यथाह नारदः-'व्याधितः कुपितश्चैव विषयासक्तमानसः । अन्यथा शास्त्रकारी च न विभागे पिता प्रभुः' ॥ इति ॥ ११६ ॥

( वी०मि०) अथ मृतपितृकविभागमाह--

विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम् ॥
मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ॥ ११७ ॥

पित्रोर्मातापित्रोः ऋक्थं धनमृणं च ऊर्ध्वं पित्रोर्मरणानन्तरं सुताः पुत्राः समं विभजेयुः । मातुर्धनं तद्दुहितरोऽपि भ्रातृभिः समं मात्रर्णनिस्तरावशिष्टं चेत्तदा गृह्णीयुः ऋणं पुत्रा एव दद्युः । दुहितृभ्य ऋते दुहितॄणामभावेऽन्वयो दुहितृपुत्रौ निजमातृलभ्यमंशं लभेयाताम् । तदाह मनुः—

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः ॥
यास्तासां स्युर्दुहितरस्तासामपि यथांऽशतः ।

विभजेयुर्धनमित्यनुवृत्तौ नारदः-'मातुर्दुहितरोऽभावे दुहितॄणां समांशभागित्वं कुमारीणामेव' । तदाह बृहस्पतिः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

अपत्यानां पुत्राणां समूढा विवाहिता मानमात्रकं सम्मानमात्रफलकं किञ्चिद्वस्त्रादि । गौतमः-'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' । 'अप्रतिष्ठिताऽनपत्या दुर्भगा निर्धनभर्तृका चे'ति रत्नाकरः । मनुः--

मातुश्च यौतकं यत्स्यात् कुमारीभाग एव सः ।

यौतकं विवाहकाले पित्रादितो लब्धम् । वसिष्ठ—'अथ भ्रातॄणां दायविभागो याश्चाऽनपत्याः स्त्रियस्तासां च पुत्रलाभात्'। स्त्रिय इत्यत्र भ्रातॄणामित्यनुषङ्गः। तथा च विधवायाः शङ्कितपुत्राया भ्रातृभार्याभागः कर्तव्यः। तस्याः पुत्रे जाते स भागस्तत्पुत्रस्य, पुत्रव्यतिरेकनिश्चये तु स भागो देवरादिभिरेव ग्राह्यः । पितुरित्यनुवृत्तौ बृहस्पतिः—

तदभावे तु जननी तनयांशसमांशिनी ।
समांशा मातरस्त्वेषां तुरीयांशा च कन्यका ॥

जननी पुत्रवती, मातरः सपत्नीमातरोऽपुत्राः, एताः सर्वाः पुत्रतुल्यभागाः। एषां भगिनी तुरीयांशा अविवाहिता कन्या पितृधने भवतीत्यर्थः। व्यासः—

असुतास्तु पितुः पत्न्यः समांशाः परिकीर्तिताः ॥–॥ ११७ ॥

(मिता०) इदानीं विभागस्य कालान्तरं कर्त्रन्तरं प्रकारनियमं चाह—

विभजेरन्निति । पित्रोर्मातापित्रोरूर्ध्वं (१)प्रायणादिति कालो दर्शितः। सुता इति कर्तारो दर्शिताः। सममिति प्रकारनियमः। सममेवेति रिक्थमृणं च विभजेरन् । ननु—'ऊर्ध्वं पितुश्च मातुश्च' ( मनुः ९।१०४ ) इत्युपक्रम्य ( मनुः ९।१०५ )—'ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा' ॥ इत्युक्त्वोक्तम् ( मनुः ९।११२ )—'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । (२)ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः' ॥ इति । सर्वस्माद् द्रव्य(३)समुदायाद्विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तज्ज्येष्ठाय दातव्यम्। तदर्धं चत्वारिंशत्तमो भागो मध्यमं च द्रव्यं मध्यमाय दातव्यम्। तुरीयमशीतितमो भागो हीनं द्रव्यं च कनिष्ठाय दातव्यमिति मातापित्रोरूर्ध्वं विभजतामुद्धारविभागो मनुना दर्शितः। तथा ( मनुः ९।११६।११७ )—'उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना । एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ॥ अंशमंशं यवीयांस इति धर्मो व्यवस्थितः' ॥ इति । ज्येष्ठस्य द्वौ भागौ तदनन्तरजातस्य सार्धमेको भागः ततोऽनुजानामेकैको विभाग इत्युद्धारव्यतिरेकेणापि विषमो विभागो दर्शित(४) पित्रो-

(१) प्रयाणाद् ख ग । (२) तदर्धं म ध्यमस्य स्यात्तदर्धं तु कनीयस इति ग म पाठ ।
(३) समुच्चयाद् घ । (४) दर्शितो मनुना ग ।

रूर्ध्वं विभजताम् । जीवद्विभागे च स्वयमेव विषमो विभागो दर्शितो 'ज्येष्ठं वा श्रेष्ठभागेन' इति । अतः सर्वस्मिन्नपि काले विषमो विभागोऽस्तीति (१)कथं सममेव विभजेरन्निति नियम्यते । अत्रोच्यते सत्यम्-अयं विषमो विभागः (२)शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः । 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' इति निषेधात् । यथा—'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति विधानेऽपि लोकविद्विष्टत्वादननुष्ठानम् । यथा वा—'मैत्रावरुणीं गां वशामनुबन्ध्यामालभेत' इति गवालम्भनविधानेऽपि लोकविद्विष्टत्वादननुष्ठानम् । उक्तं च—'यथा नियोगधर्मो नो नानुबन्ध्यावधोऽपि वा । तथोद्धारविभागोऽपि नैव संप्रति वर्तते' ॥ इति । ( नियोग(३)मनतिक्रम्य यथानियोगं, नियोगाधीनो यो धर्मो 'देवराच्च सुतोत्पत्ति'रित्यादिः स नो भवति ) आपस्तम्बोऽपि—'जीवन्पुत्रेभ्यो दायं विभजेत्समम्' इति(४)समतामुक्त्वा—'ज्येष्ठो दायाद इत्येक' इति कृत्स्नधनग्रहणं ज्येष्ठस्यैकीयमतेनोपन्यस्य 'देशविशेषे(५)ण सुवर्णं कृष्णा गावः कृष्णभौमः ज्येष्ठस्य(६) रथः पितुः(७) परीभाण्डं च गृहेऽलङ्कारो भार्याया ज्ञातिधनं चेत्येके' इत्येकीयमतेनैवोद्धारविभागं दर्शयित्वा तच्छास्त्रविप्रतिपिद्धमिति निराकृतवान् । तं च शास्त्रवि(८)प्रतिषेधं स्वयमेव दर्शयतिस्म मनुः-'पुत्रेभ्यो दायं विभजेदित्यविशेषेण श्रूयते' इति । तस्माद्विषमो विभागः शास्त्रदृष्टोऽपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेय इति सममेव विभजेरन्निति नियम्यते ॥

( मिता० ) मातापित्रोर्धनं सुता विभजेरन्नित्युक्तं तत्र मातृधनेऽपवादमाह—

मातुरिति । मातुर्धनं दुहितरो विभजेरन् । ऋणाच्छेषं मातृकृतर्णापाकरणावशिष्टम् । अतश्चर्णसमं न्यूनं वा मातृधनं सुता विभजेरन्नित्यस्य विषयः । एतदुक्तं भवति—मातृकृत(९)मृणं पुत्रैरेवापाकरणीयं न दुहितृभिः । ऋणावशिष्टं तु धनं दुहितरो गृह्णीयुरिति ।

---

(१) कथं विभजेरन्निति सममेव नियम्यते घ. ।
(२) शास्त्रदृष्टोस्ति ग. । (३) धनुश्चिह्नान्तर्गतो भागः ख. पुस्तकेऽधिकः ।
(४) स्वमतमुक्त्वा ख. घ. । (५) विशेषेषु घ. । (६) उत्कृष्टोंऽशो ज्येष्ठस्य पितुः ।
(७) परिभाण्डं ग. । (८) विप्रतिपिद्धं घ. । (९) कृतर्णं. ।

युक्त चैतत् । 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः' इति स्त्र्यवयवाना दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि । पितृधनं पुत्रगामि पित्रवयवाना पुत्रेषु बाहुल्यादिति । तत्र च गौतमेन विशेषो दर्शितः—'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति । अस्यार्थः—प्रत्ताऽप्रत्तासमवायेऽप्रत्तानामेव स्त्रीधनम् । प्रत्तासु चाप्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितानामेवेति । अप्रतिष्ठिता निर्धना ॥

(मिता०) दुहित्रभावे मातृधनमृणावशिष्टं को गृह्णीयादित्यत आह—
तोऽन्य इति । ताभ्यो दुहितृभ्यो विना दुहितॄणामभावे (१)अन्वय पुत्रादिर्गृह्णीयात् । एतच्च—'विभजेरन्सुताः पित्रोरूर्ध्वम्' इत्यनेनैव सिद्धं स्पष्टार्थमुक्तम् ॥ ११७ ॥

( वी०मि० ) अथाऽविभाज्यमाह—

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ॥
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥ ११८ ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ॥
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ११९ ॥

पित्रोर्द्रव्यस्याऽविरोधेन व्ययं विना यदन्यद्वाणिज्यादिना द्रव्यं स्वयमर्जितं, यच्च मैत्रं मित्रसकाशाल्लब्धं, औद्वाहिकं विवाहलब्धं यत्तद्दायादानामन्येषां भ्रात्रादीनां न विभाज्यं भवेत् । पितृपितामहादिक्रमायातमपि द्रव्यं परैर्हृतमसामर्थ्यात् पित्रादिभिरनुद्धृतं य एकः स्वसामर्थ्येनोद्धरेत्, तद्द्रव्यं स दायादेभ्यो न दद्यादित्यर्थः । तदाह-कात्यायनः—

परभक्तप्रदानेन प्राप्ता विद्या यदन्यतः ।
तया प्राप्तं तु यद् द्रव्यं विद्याप्राप्तं तदुच्यते ॥

इति । अत्रापि लाभे पितृद्रव्यानुपश्लेषोऽविभाज्यत्वे बीजमिति प्रकाशः, तदयुक्तं पृथगुपादाने वैयर्थ्यापत्तेः । इदं तु विद्यार्जनकाले कुटुम्बस्य दायादैर्भरणाभावेऽविभाज्यं नो चेद्विभाज्यमेव ।

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताऽश्रुतोऽपि सन् ॥

(१) दुहित्रन्वय इत्यपरार्के ।

इति कात्यायनवचनात् । आद्येन चकारेण मधुपर्ककाले पूज्यतया लब्धस्य मनूक्तस्य । द्वितीयेन तु—

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।
तस्य तन्नापहर्तव्यं मात्रा दत्तं च यद्भवेत् ॥

इति व्यासोक्तस्य स्वयमग्रे वक्ष्यमाणस्य च समुच्चयः । एवकाराभ्यामुभयत्र पितृद्रव्यानुपश्लेषापेक्षया व्यवच्छेदः । तुशब्देनाऽन्यदायादसाहित्यमुद्धरणे व्यवच्छिन्नम् ॥ ११८—११९ ॥

( मिता० ) अविभाज्यमाह—

पितृद्रव्येति, क्रमादिति च । मातापित्रोर्द्रव्याविनाशेन यत्स्वयमर्जितं, मैत्रं मित्रसकाशाद्यल्लब्धं, औद्वाहिकं विवाहाद्यल्लब्धं दायादानां भ्रातॄणां तन्न भवेत् । क्रमात्पितृक्रमादायातं यत्किंचिद्द्रव्यं अन्यैर्हृतमसामर्थ्यादिना पित्रादिभिरनुद्धृतं यः पुत्राणां मध्य इतराभ्यनुज्ञयोद्धरति तद्दायादेभ्यो भ्रात्रादिभ्यो न दद्यादुद्धर्तैव गृह्णीयात् । तत्र क्षेत्रे तुरीयांशमुद्धर्ता लभते शेषं तु सर्वेषां सममेव । यथाह शङ्खः—'पूर्वं नष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् । यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम्' ॥ इति । क्रमादभ्यागतमिति शेषः । तथा विद्यया वेदाध्ययनेनाध्यापनेन वेदार्थव्याख्यानेन वा यल्लब्धं तदपि दायादेभ्यो न दद्यात् । अर्जक एव गृह्णीयात् । अत्र च 'पितृद्रव्याविरोधेन यत्किंचित्स्वयमर्जितम्' । इति (१)सर्वशेषः । अतश्च पितृद्रव्याविरोधेन यन्मैत्रमर्जितं, पितृद्रव्याविरोधेन यद्वौद्वाहिकं, पितृद्रव्याविरोधेन यत्क(२)मायातमुद्धृतं, पितृद्रव्याविरोधेन विद्यया यल्लब्धमिति प्रत्येकमभिसम्बध्यते । तथा च पितृद्रव्याविरोधेन प्रत्युपकारेण यन्मैत्रम्, आसुरादिविवाहेषु यल्लब्धम्, तथा पितृद्रव्यव्ययेन यत्क्रमायातमुद्धृतं, तथा पितृद्रव्यव्ययेन लब्धया विद्यया यल्लब्धं, तत्सर्वं सर्वैर्भ्रातृभिः पित्रा च वि(३)भजनीयम् । तथा पितृद्रव्याविरोधेनेत्यस्य सर्वशेषत्वादेव पितृद्रव्याविरोधेन प्रतिग्रहलब्धमपि विभजनीयम् । अस्य च सर्वशेषत्वाभावे मैत्रमौद्वाहिकमित्यादि नारब्धव्यम् । अथ पितृद्रव्याविरोधेनापि यन्मैत्रादिलब्धं तस्याविभाज्यत्वाय मैत्रादिवचनमर्थवदित्युच्यते । तथा सति समाचारविरोधः, विद्यालब्धे नारदवचनविरोधश्च ।

(१) सर्वत्र शेषः ख. । (२) क्रमादायातं ख. । (३) समं विभजनीयं घ. ।

'कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः । भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन्' ॥ इति । तथा विद्याधनस्याविभाज्यस्य लक्षणमुक्तं कात्यायनेन—'परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या । तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते' ॥ इति । तथा पितृद्रव्याविरोधेनेत्यस्य भिन्नवाक्यत्वे प्रतिग्रहलब्धस्याविभाज्यत्वमाचारवि(१)रुद्धमापद्येत । एतदेव स्पष्टीकृतं मनुना ( ९।२०८ )—'अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् । (२)दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च' ॥ इति । श्रमेण सेवायुद्धादिना । ननु पितृद्रव्याविरोधेन यन्मैत्रादिलब्धं द्रव्यं तदविभाज्यमिति न वक्तव्यम् । विभागप्राप्त्यभावात् । यद्येन लब्धं तत्तस्यैव नान्यस्येति प्रसिद्धतरम् । प्राप्तिपूर्वकश्च (३) प्रतिषेधः । अत्र कश्चिदित्थं प्राप्तिमाह—'यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति । भागो यवीयसां तत्र यदि विद्यानुपालिनः' ॥ इति । ज्येष्ठो वा कनिष्ठो वा मध्यमो वा पितरि प्रेते अप्रेते वा यवीयसां वर्षीयसां चेति व्याख्यानेन पितरि सत्यसति च मैत्रादीनां विभाज्यत्वं प्राप्तं प्रतिषिध्यत इति । तदसत् । नह्यत्र प्राप्तस्य प्रतिषेधः किंतु सिद्धस्यैवानुवादोऽयम् । लोकसिद्धस्यैवानुवादकान्येव प्रायेणास्मिन्प्रकरणे वचनानि । अथवा 'समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिनः' । इति प्राप्तस्यापवाद इति सन्तुष्यतु भवान् । अतश्च 'यत्किंचित्पितरि प्रेते' इत्यस्मिन्वचने ज्येष्ठादिपदाविवक्षया प्राप्तिरिति व्यामोहमात्रम् । अतो मैत्रादिवचनैः पितुः प्रागूर्ध्वं (५)वा विभाज्यत्वेनोक्तस्य, 'यत्किंचित्पितरि प्रेते' इत्य(४)पवाद इति व्याख्येयम् । तथाऽन्यदप्यविभाज्यमुक्तं मनुना ( ९।२१९ )—'वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः । योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते' ॥ इति । धृतानामेव वस्त्राणामविभाज्यत्वं, यद्येन धृतं तत्तस्यैव । पि(६)तृधृतवस्त्राणि तु पितुरूर्ध्वं विभजतां श्राद्धभोक्त्रे दातव्यानि । यथाह बृहस्पतिः—'वस्त्रालङ्कारश

(१) विरोधमापद्येत घ ।

(२) दायादेभ्य इत्यस्य स्थाने 'स्वयमीहितलब्धं तन्नाकामो दातुमर्हति' इत्युत्तरार्धं मनुस्मृतावुपलभ्यते ।

(३) निषेध घ. । (४) चाविभाज्य घ. । (५) इत्यस्यापवाद ख ।

(६) पितृधृतानि ख ।

ष्यादि पितुर्यद्वाहनादिकम् । गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे समर्पयेत्' ॥ इति । अभिनवानि तु वस्त्राणि विभाज्यान्येव । पत्रं वाहनमश्वशिबिकादि तदपि यद्येनारूढं तत्तस्यैव । पित्र्यं तु वस्त्रवदेव । अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव । वैषम्येण विभाज्यत्वे ज्येष्ठस्य । ( मनुः ९।११९ )–'अजाविकं सैकशफं न जातु विषमं भजेत् । अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते' ॥ इति मनुस्मरणात् । अलङ्कारोऽपि यो येन धृतः स तस्यैव । अधृतः साधारणो विभाज्य एव । ( मनुः ९.२०० ) 'पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन्दायादा भजमानाः प(१)तन्ति ते' ॥ इति । अलङ्कारो धृतो भवेदिति वि(२)शेषेणोपादानादधृतानां विभाज्यत्वं गम्यते । कृतान्नं तण्डुलमोदकादि तदप्यविभाज्यं यथासंभवं भोक्तव्यम् । उदकं उदकाधारः कूपादिः, तच्च विषमं मूल्यद्वारेण न विभाज्यं पर्यायेणोपभोक्तव्यम् । स्त्रियश्च दास्यो विषमाः न मूल्यद्वारेण विभाज्याः पर्यायेण कर्म कारयितव्याः । अवरुद्धास्तु पित्रा स्वैरिण्याद्याः समा अपि पुत्रैर्न विभाज्याः । 'स्त्रीषु च संयुक्तास्वविभागः' इति गौतमस्मरणात् । योगश्च क्षेमं च योगक्षेमम् । योगशब्देनालब्धलाभकार(३)णं श्रौतस्मार्ताग्निसाध्यं इष्टं कर्म लक्ष्यते । क्षेमशब्देन लब्धपरिरक्षणहेतुभूतं बहिर्वेदिदानतडागारामनिर्माणादि पूर्तं कर्म लक्ष्यते । तदुभयं पैतृकमपि पितृद्रव्यविरोधार्जितमप्यविभाज्यम् । यथाह लौगाक्षिः–'क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः । अविभाज्ये च ते प्रोक्ते शयनासनमेव च' ॥ इति । योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपुरोहितादय उच्यन्ते इति केचित् । छत्रचामरशस्त्रोपानत्प्रभृतय इत्यन्ये । प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः सोऽप्यविभाज्यः । यत्तूशनसा–क्षेत्रस्याविभाज्यत्वमुक्तम्–'अविभाज्यं सगोत्राणामासहस्रकुलादपि । याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः' ॥ इति, तद् ब्राह्मणोत्पन्नक्षत्रियादिपुत्रविषयम् । 'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्' ॥ इति स्मरणात् । याज्यं याजनकर्मलब्धम । पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यते । नियमातिक्रमस्याविभाज्यत्वमनन्तरमेव निरासि । पितृद्रव्याविरोधेन यदर्जितं

(१) पतन्त्यधः ग. । (२) विशेषस्योपादाना ग. । (३) करणं ख. ।

तद्विभजनीयमिति स्थितं, तत्राऽर्जकस्य भागद्वयं, वसिष्ठवचनात् । 'येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेते'ति ॥ ११८-११९ ॥

( वी०मि० ) अस्यापवादमाह—

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ॥

सर्वेषां भ्रातॄणां साधारणेऽर्थार्जनव्यापारे कृषिवाणिज्यादिरूपे तु समः सर्वेषां विभागः । तुशब्देन पितृद्रव्यानुपश्लेषार्जितत्वनिबन्धनमविभाज्यत्वमुक्तं व्यवच्छिनत्ति ॥

( मिता० ) अस्यापवादमाह—

सामान्येति । अविभक्तानां भ्रातॄणां (१)सामान्यस्यार्थस्य कृषिवाणिज्यादिना संभूय समुत्थाने सम्यग्वर्धने केनचित्कृते सम एव विभागो नार्जयितुरंश(२)द्वयम् ॥

( वी०मि० ) अथ पैतामहे धने भिन्नपितृकाणां पौत्राणां विभागमाह—

अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२० ॥

यत्रैकस्य पुत्र एकः परस्य तु चत्वारः पुत्रास्तत्र भागद्वयं कार्यम् । तत्रैको भाग एकपुत्रेण ग्राह्यः । परस्य पुत्रैश्चतुर्भिर्मिलित्वा चाऽपरो भागो ग्राह्यः । तुशब्देन पौत्रसंख्याया भागसंख्यां व्यवच्छिनत्ति ॥ १२० ॥

( मिता० ) पित्र्ये द्रव्ये पुत्राणां विभागो दर्शितः । इदानीं पैतामहे पौत्राणां विभागे विशेषमाह—

अनेकेति । यद्यपि पैतामहे द्रव्ये पौत्राणां जन्मना स्वत्वं पुत्रैरविशिष्टं तथापि तेषां पितृद्वारेणैव पैतामह(३)द्रव्यविभागकल्पना न स्वरूपापेक्षया । एतदुक्तं भवति—यदाऽविभक्ता भ्रातरः पुत्रानुत्पाद्य दिष्ट गतास्तदैकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार इति पुत्राणां वैषम्ये तत्र द्वावेकं स्व(४)पित्र्यमंशं लभेते, अन्ये त्रयोऽप्येकमंशं पित्र्यं, चत्वारोऽप्येकमेवांशं पित्र्यं लभन्त इति । तथा केषुचित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्रानुत्पाद्य विनष्टेष्वप्यय(५)मेव न्यायो ध्रियमाणाः स्वानंशानेव लभन्ते, नष्टानामपि पुत्राः पित्र्यानेवांशांल्लभन्त इति याचनिकी व्यवस्था ॥ १२० ॥

---

(१) साधारणार्थस्य ग घ । (२) भागद्वयम् घ ।
(३) द्रव्ये विभागा ख । (४) पित्र्यं घ । (५) व्ययमेव ख ग ।

( वी०मि० ) पैतामहे धने पित्रा सह विभागे पितुरिच्छया नांशकल्पना किन्तु पितुर्द्विगुणः पुत्राणां च समोऽशः स्यादित्याह—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ॥
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः(१) ॥१२१॥

भूर्हिरण्यादिद्रव्यं वा निबन्धो राजव्यवस्थापितं तरिकग्राह्यादिपणादिकं यत्पितामहेनार्जितं तत्र पितुः पुत्रस्य चोभयोः सदृशं साम्यं स्यान्न पितुरिच्छयेव विभाग इत्यर्थः। ननु—

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशं समाख्यातं पितुः पुत्रस्य चैव हि ॥

इति बृहस्पतिवचनात्सम एवांशः पूर्वोक्तनारदवचनविरोधात्। बृहस्पतिवचने त्वंशभागित्वं तुल्यमित्येवार्थः, न त्वंशस्य तुल्यत्वमपि। एवकारः सदृशमित्यत्रान्वेति। चकारात्प्रपितामहोपार्जिते प्रपौत्रस्यापि स्वं भवतीति समुच्चिनोति ॥ १२१ ॥

( मिता० ) अधुना विभक्ते पितर्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो नास्ति (२)अध्रियमाणे पितरि 'पितृतो भागकल्पना' इत्युक्तत्वात्। भवतु वा स्वार्जितवत्पितुरिच्छयैवेत्याशङ्कित आह—

भूरिति। भूः शालिक्षेत्रादिका। निबन्ध एकस्य प(३)र्णभरकस्येयन्ति पर्णानि, तथा एकस्य क्रमुकफलभरस्येयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः। द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविजयादिना लब्धं तत्र पितुः पुत्रस्य च (४)स्वाम्यं लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति। हि यस्मात्तत्सदृशं समानं तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम्। अतश्च पितृतो भागकल्पनेत्येतत्स्वाम्येऽपि वाचनिकम्। 'विभागं चेत्पिता कुर्यात्' इत्येतत्स्वार्जितविषयम्। तथा—'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता' इत्येतदपि स्वार्जितविषयम्। 'जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः' इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम्। तथा—

(१) पुत्रस्य चैव हि—इति मु. पु. पाठः।
(२) ध्रियमाणे तु पितरि ग.।
(३) भारकस्य ख.। (४) स्वाम्यमर्थसिद्धमिति।

'अनीशास्ते हि जीवतोः' इत्येतदपि । तथा सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति । तथाऽविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्यधिकारः । पित्रर्जिते न तु निषेधाधिकारः, तत्परतन्त्रत्वात् । अनुमतिस्तु कर्तव्या । तथा हि-पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव, तथापि पैतृके पितृपरतन्त्रत्वात् पि(१)तुश्चार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणाऽनुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधि(२)कारोऽस्तीति विशेषः । मनुरपि (९।२०९)-'पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम्' ॥ इति । यत्पितामहार्जितं केनाप्यपहृतं पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः सार्धमकामः स्वयं न विभजेदिति वदन् पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह विभजेदिति दर्शयति ॥ १२१ ॥

( वी० मि० ) अथ विभागानन्तरं जातस्य पुत्रस्य विभागमाह—

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ॥
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२२ ॥

विभक्तेषु पुत्रेषु पश्चात्सवर्णायां पत्न्यां जातः सुतो विभागभाक् सकलभ्रातृविभक्तद्रव्याणां वृद्धिभागं स्यात्तस्य च विहायाऽवशिष्टानां यथोचितभागभाग् भवति । यदि तु निर्गुणो विभक्तजस्तदा दृश्यमात्राद्भोमहिष्यादेरायव्ययविशोधितात्तस्य विभक्तजस्य विभागः स्यात् । अथ—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।

इति नारदेन भ्रातृसम्भावनायां विभागस्यार्थतः प्रतिषेधात्कथं विभक्तजस्य सम्भव इति चेत् उच्यते । पितुरिच्छया बलवत्या नारदवचनमपोह्यते । अन्यथा प्रकृतवचनस्य निर्विषयत्वापत्तेः । इदं प्रकृतवचनं विभागकाले गर्भस्थमधिकृत्य। विभागानन्तराहितगर्भोत्पन्ने मनुः—

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

(१) पितु स्वार्जकत्वेन ख । (२) कारोऽस्तीति ख ।

पितृमरणे पित्र्यमंशं पितृसंसृष्टाद् गृह्णीयादिति(१)(वाशब्दार्थः)।

बृहस्पतिः—

पित्रा सह विभक्ता ये सम्पन्ना वा सहोदराः ।
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ॥

तथा—

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णेपि दानाधानक्रियेषु च ।
परस्परमनीशास्ते मुक्त्वाशौ चोदकक्रियाः ॥-॥ १२२ ॥

(मिता०) विभागोत्तरकालमुत्पन्नस्य पुत्रस्य कथं विभागकल्पनेत्यत आह—

विभक्तेष्विति । विभक्तेषु पुत्रेषु पश्चात्सवर्णायां भार्यायामुत्पन्नो विभागभाक् । विभज्यत इति विभागः । पित्रोर्विभागस्तं भजतीति विभागभाक् । पित्रोरूर्ध्वं तयोरंशं लभते इत्यर्थः । मातृभागं चासत्यां दुहितरि । 'मातुर्दुहितरः शेषम्' इत्युक्तत्वात् । असवर्णायामुत्पन्नस्तु स्वांशमेव पित्र्याल्लभते । मा(२)तृकं तु सर्वमेव । एतदेव मनुनोक्तम (९।२१६)—'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्' इति । पित्रोरिदं पित्र्यमिति व्याख्येयम् । 'अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तजः' इति स्मरणात् । विभक्तयोर्मातापित्रोर्विभागे विभागात्पूर्वमुत्पन्नो न स्वामी विभक्तजश्च भ्रातुर्भागे न स्वामीत्यर्थः । तथा विभागोत्तरकालं पित्रा यत्किंचिदर्जितं तत्सर्वं विभक्तजस्यैव । 'पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् । विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः' ॥ इति स्मरणात् । ये च विभक्ताः पित्रा सह संसृष्टाः तैः सार्धं पितुरूर्ध्वं विभक्तजो विभजेत् । यथाह मनुः (९।२१६)—'संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह' इति ॥

(मिता०) पितुरूर्ध्वं पुत्रेषु विभक्तेषु पश्चादुत्पन्नस्य कथं विभागकल्पनेत्यत आह—

दृश्याद्वेति । तस्य पितरि प्रेते भ्रातृविभागसमयेऽस्पष्टगर्भायां मातरि भ्रातृविभागोत्तरकालमुत्पन्नस्यापि विभागः । तद्विभागः कुत इत्यत आह । दृश्याद्भ्रातृभिर्गृहीताद्धनात् । कीदृशात् आयव्ययविशो-

(१) द्वितीयाद्वार्थः—इति क.ख. पुस्तकयोः पाठः । (२) मातुर्भागं तु सर्वमेव ग-घ. ।

धितात् आयः प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते, व्ययः पितृकृतर्णापाकरणं, ताभ्यामायव्ययाभ्यां यच्छोधितं तत्तस्मादुद्धृत्य तद्भागो दातव्यः स्यात्। एतदुक्तं भवति–प्रातिस्विकेषु भागेषु तदुत्थमायं प्रवेश्य पि(१)तृकृतं चर्णमपनीयाऽवशिष्टेभ्यः स्वेभ्यः स्वेभ्यो भागे(२)भ्यः किंचित्किंचिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः कर्तव्य इति। एतच्च विभा(३)गसमयेऽप्रजस्य, भ्रातुर्भार्यायामस्पष्टगर्भायां विभागादूर्ध्वमुत्पन्नस्यापि वेदितव्यम्।स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्य विभागः कर्तव्यः। यथाह वसिष्ठः—'अथ भ्रातृणां दायविभागो याश्चाऽनपत्याः स्त्रियस्तासामापुत्रलाभात्' इति। गृहीतगर्भाणामाप्रसवात्प्रतीक्षणमिति योजनीयम् ॥ १२२ ॥

(वी० मि०) 'विद्यया लब्धमेव चे'ति प्रागुक्तचकारसमुच्चयं दर्शयन्नेव विभक्तस्य सौदायिकभ्रातृधनाप्राप्तिमाह—

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ॥
पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ॥ १२३ ॥

पितृभ्यामिति पितामहादेरप्युपलक्षणम्। मृतपितृकविभागे न केवलभ्रातरो भागिनः किन्तु तेषां जनन्यः सपत्नीमातरश्चेत्याह पितुरिति। ऊर्ध्वं मरणानन्तरम्। अपिशब्देन सपत्नीमातृसमुच्चयः ॥ १२३ ॥

(मिता०) विभक्तजः पित्र्यं मातृकं च सर्वं धनं गृह्णातीत्युक्तं तत्र यदि विभक्तः पिता माता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति तदा विभक्तजेन दानप्रतिषेधो न कर्तव्यो नापि दत्तं प्रत्याहर्तव्यमित्याह—

पितृभ्यामिति। मातापितृभ्यां विभक्ताभ्यां पूर्वं विभक्तस्य पुत्रस्य यद्दत्तमलङ्कारादि तत्तस्यै(४)व न विभक्तजस्य स्वं भवति। न्यायसाम्याद्विभागात्प्रागपि यस्य यद्दत्तं तत्तस्यैव। तथा असति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम् ॥

(१) कृतमृण घ. । (२) भागेभ्यो यत्किंचिदुद्धृत्य घ ।
(३) समये भ्रातुर्भार्यायामप्रजायामस्पष्टगर्भायां स्पष्ट ग, समये भ्रातृभार्यायामप्रजस्य स्पष्टगर्भायां विभागादूर्ध्वं घ । (४) तस्यैव पुत्रस्य ख. ।

(मिता०) जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं 'यदि कुर्यात्समानंशान्' इत्यादिना। पितुरूर्ध्वं विभागेऽपि प(१)त्नीनां स्वपुत्रसमांशित्वं दर्शयितुमाह—

पितुरिति। पितुरूर्ध्वं पितुः प्रा(२)यणादूर्ध्वं विभजतां मातापि स्वपुत्रांशसममंशं हरेत्। यदि स्त्रीधनं न दत्तम्। दत्ते त्वर्धांशहारिणीति व(३)क्ष्यते ॥ १२३ ॥

( वी० मि० ) मृतपितृकविभागे विशेषान्तरमाह—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ॥
भगिन्यश्च निजादंशाद्दत्त्वांऽशं तु तुरीयकम् ॥ १२४ ॥

उपनयनविवाहाद्यसंस्कृता भ्रातरः पूर्वसंस्कृतैर्भ्रातृभिः समुदायद्रव्यात् संस्कार्याः। भगिन्यश्च कुमार्यः निजात् सुवर्णानुसारिणः पुत्रांशात्तुरीयकमंशं दत्त्वा संस्कार्याः। आद्येन तुशब्देन (४)संस्कारे द्रव्यसंख्यानियमस्य, द्वितीयेन तदभावस्य व्यवच्छेदः। तुरीयांशस्य भगिनीविवाहानिर्वाहकत्वे यावता विवाहो निर्वहति तावद्धनं वित्तानुरूपेण सर्वैर्देयम्। 'अनूढानां कन्यानां वित्तानुरूपेण संस्कारं कुर्यु'रिति विष्णुवचनात्। तदिदं ग्रन्थकृता समुच्चितम् ॥ १२४ ॥

(मिता०) पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति, तदा तत्संस्कारे कोऽधिक्रियत इत्यत आह—

असंस्कृता इति। पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदायद्रव्येण संस्कर्तव्याः। असंस्कृतासु भगिनीषु विशेषमाह—

भगिन्य इति। अस्यार्थः—भगिन्यश्चाऽसंस्कृताः सं(५)स्कर्तव्या भ्रातृभिः। किं कृत्वा निजादंशाच्चतुर्थमंशं दत्त्वा। अनेन दुहितरोऽपि पितुरूर्ध्वमंशभागिन्य इति गम्यते। तत्र निजादंशादिति प्रत्येकं परिकल्पितादंशादुद्धृत्य चतुर्थांशो दातव्य इत्य(६)यमर्थो न भवति, किंतु यज्जातीया कन्या तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्तव्या। एतदुक्तं भवति—यदि ब्राह्मणी सा कन्या तदा ब्रा-

(१) मातुः स्वपुत्र ख.। (२) प्रयाणात् ख. घ.। (३) वक्ष्यति ग.।
(४) संस्कारे—इति नास्ति ख० पुस्तके। (५) संस्कार्याः ग.।
(६) इत्येवमर्थो ख. इत्यर्थो ग.।

ह्मणीपुत्रस्य यावानंशो भवति तस्य चतुर्थोंशस्तस्या भवति । तद्यथा यदि कस्यचिद्ब्रा(१)ह्मणस्यैका पुत्री पुत्रश्चैकः कन्या चैका तत्र पित्र्यं सर्वमेव द्रव्यं त्रिधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयात् । (२)यदा तु द्वौ पुत्रौ एका च कन्या तदा पितृधनं सर्वं त्रिधा विभज्य एकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः । अथ त्वेकः पुत्रो द्वे कन्ये तदा पित्र्यं धनं त्रिधा विभज्य एकं भागं चतुर्धा विभज्य तत्र द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्त्वावशिष्टं सर्वं पुत्रो (३)गृह्णातीत्येवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम् । यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्या चैका तत्र पि(४)तृधनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो (५)गृह्णाति । यत्र तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीनंशान् क्षत्रियापुत्रभागांश्चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य (६)गृह्णीतः । एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्यायाः साम्ये वैषम्ये च सर्वत्रोहनीयम् । (७)न च 'निजादंशाद्दत्वांशं तु तुरीयक'मिति तुरीयांशाविवक्षया संस्कारमात्रोपयोगि द्रव्यं दत्त्वेति व्याख्यानं युक्तं मनुवचनविरोधात् । ( ९ । ११८ ) 'स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् । स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥ इति । अस्यार्थः । ब्राह्मणादयो भ्रातरो ब्राह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यः 'चतुरोंऽशान्हरेद्विप्र' इत्यादिवक्ष्यमाणेभ्यः स्वात्स्वादंशादात्मीयादात्मीयाद्भागाच्चतुर्थं चतुर्थं भागं दद्युः । न चात्मीयभागादुद्धृत्य चतुर्थांशो देय इत्युच्यते, किंतु स्वजातिविहितादेकस्मादेकस्मादंशात्पृथक्पृथगेकस्याप्येकस्यै कन्यायै चतुर्थोऽशो देय इति जातिवैषम्ये संख्यावैषम्ये च विभागकॢप्तिरुक्तैव । 'पतिताः स्युरदित्सव' इत्यकरणे प्रत्यवायश्रवणादवश्यं दातव्यता प्रती-

(१) कस्यचिद् ब्राह्मणस्यैका ख । (२) अथ तु ग. घ ।
(३) गृह्णीयात एवं ग । (४) पितृधनं घ । (५) गृह्णीयात् ग ।
(६) गृह्णीयाताम् ग । (७) नच दत्वांशं तु ग घ ।

यते । अत्रापि चतुर्थभागवचनमविवक्षितं संस्कारमा(१)त्रोपयोगि द्रव्यदानमेव विवक्षितमिति चेन्न । स्मृतिद्वयेऽपि चतुर्थांशदानाविवक्षायां प्रमाणाभावाद्दाने प्रत्यवायश्रवणाच्चेति । यदपि कैश्चिदुच्यते । अंशदानविवक्षायां बहुभ्रातृकायाः (२)बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति तदुक्तरीत्या परिहृतमेव । न ह्यत्राऽऽत्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते येन तथा स्यात् । अतोऽस्मत्सहायमेधातिथिप्रभृतीनां व्याख्यानमेव (३)चतुरस्रं न भारुचेः । तस्मात्पितुरूर्ध्वं कन्याप्यंशभागिनी पूर्वं चेद्यत्किंचित्पिता ददाति तदेव लभते विशेषवचनाभावादिति सर्वमनवद्यम् ॥ १२४ ॥

( वी० मि० ) अथ भिन्नजातीयानां भ्रातृणां विभागमाह—

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ॥
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥१२५॥

[ब्राह्म(४)णस्य ब्राह्मण्यादिचतसृषु भार्यासु जाताश्चत्वारः पुत्रा यथाक्रमं चतुस्त्रिद्व्येकभागभाजो भवन्ति]। क्षत्रियस्य क्षत्रियादितिसृषु भार्यासु जातास्त्रयः पुत्रा यथाक्रमं त्रिद्व्येकभागभाजो भवन्ति । वैश्यस्य वैश्याशूद्रयोर्जातास्तु पुत्रा यथाक्रमं द्व्येकभागभाजो भवन्तीत्यर्थः । इदं तु प्रतिग्रहलब्धभूव्यतिरिक्तविषयम् ।

न प्रतिग्रहभूर्देया क्षत्रियस्य सुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥

इति स्मरणात् । शूद्रापुत्रस्य यदेकांशभागित्वमभिहितं तज्जीवता पित्रा तस्मै प्रीत्या किञ्चिद्धृतादानापक्षे । अन्यथा तु—

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

इति वचनानां समागित्वमिति मन्तव्यम् ॥ १२५ ॥

( मिता० ) एवं 'विभागं चेत्पिता कुर्या'दित्यादिना प्रबन्धेन समानजातीयानां भ्रातृणां परस्परं पित्रा सह विभागक्लृप्तिरुक्ता ।

(१) संस्कारोपयोगि ख. । (२) बहुधनकत्वं घ. । (३) वरिष्ठं न भारुचेः ग. ।
(४)[ ] एतदन्तर्गतो ग्रन्थः पूर्वापरानुसन्धानेन प्रवेशितः क.ख.पुस्तकयोर्नास्ति । कीदृगाकारः कियानंशोऽत्र भ्रष्ट इति तु न शक्यते बोद्धुम् . म. ।

अधुना भिन्नजातीयानां विभागमाह—

चतुरिति । 'तिस्रो वर्णानुपूर्व्येण' इति ब्राह्मणस्य चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति भार्या दर्शिताः । तत्र ब्राह्मणात्मजा ब्राह्मणात्पन्ना वर्णशः वर्णशब्देन ब्राह्मणादि(१)वर्णास्त्रिय उच्यन्ते । 'संख्यैकवचनाच्च वीप्सायाम्' इत्यधिकरणकारकादेकवचनाद्वीप्सायां शस् । अतश्च वर्णे वर्णे ब्राह्मणो(२)त्पन्नाः यथाक्रमं चतुस्त्रिद्व्येकभागाः स्युर्भवेयु । एतदुक्तं भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागांल्लभन्ते । तथैव क्षत्रियायामुत्पन्नः प्रत्येकं त्रींस्त्रीन् वैश्यायां द्वौ द्वौ शूद्रायामेकमेकमिति । क्षत्रजाः क्षत्रियेणोत्पन्ना वर्णशः इत्यनुवर्तते यथाक्रमं त्रिद्व्येकभागाः । क्षत्रियेण क्षत्रियायामुत्पन्नाः प्रत्येकं त्रींस्त्रीन्, वैश्यायां द्वौ द्वौ, शूद्रायामेकमेकम् । विड्जाः वैश्येनोत्पन्नाः प्रत्येकं द्वौ द्वौ भागौ लभन्ते । शूद्रायामेकमेकम् । शूद्रस्यैकैव भार्येति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः । यद्यपि चतुस्त्रिद्व्येकभागा इत्यविशेषणोक्तं तथापि प्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदं द्रष्टव्यम् । यतः स्मरन्ति-'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्' ॥ इति । प्रतिग्रहणात्क्रयादिना लब्धा भूः क्षत्रियादिसुतानामपि भवत्येव । शूद्रापुत्रस्य विशेषप्रतिषेधाच्च । 'शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति' इति । यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवत्तदा शूद्रापुत्रस्य विशेषप्रतिषेधो नोपपद्यते । यत्पुनः ( मनु ९ । १५५ )-'ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् । यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्' ॥ इति, तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि (३)प्रदत्तं स्यात्तद्विषयम् । यदा तु प्रसादद्त्तं नास्ति तदैकांशभागित्यविरुद्धम् ॥१२५॥

(वी०मि०) एवं तत्र तत्र विभागे जातेऽपि साधारणद्रव्यस्यैकतरेणापहृतस्य तदीयस्वत्वमसाधरणं न जातं तस्य विभागाभावादिति पुनस्तद्द्रव्यविभागः कार्य इत्याह—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ॥
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२६ ॥

---

(१) वर्णास्त्रिय उच्यन्ते ग ग । (२) त्पन्ना एककशश्चतुरुः ग । (३) प्रत्त ग ।

समैः पूर्वजातविभागसदृशैः । शेषं स्पष्टम् ॥ १२६ ॥

( मिता० ) अथ सर्वविभागशेषं किंचिदुच्यते—

अन्योन्येति । परस्परापहृतं समुदायद्रव्यं विभागकाले (१)चाज्ञातं विभक्ते पितृधने यद् दृश्यते तत्समैरंशैर्विभजेरन्नित्येवं स्थितिः शास्त्रमर्यादा । अत्र समैरंशैरिति वदतोद्धारविभागो निषिद्धः । विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितम् । एवं च वचनस्यार्थवत्त्वान्न समुदायद्रव्यापहारे दोषाभावपरत्वम् । ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयसाम् । (मनुः ९।२१३) 'यो(२) ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातॄन् यवीयसः । सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः' ॥ इति वचनात् । नैतत् । यतः संभावितस्वातंत्र्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं वदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपिकनीत्या सुतरां दोषो दर्शित एव । तथा चाविशेषेणैव दोषः श्रूयते । गौतमः— 'यो वै भागिनं भागान्नुदते चयते चैनं स यदि वैनं चयतेऽथ पुत्रमथ पौत्रं चयत' इति । यो भागिनं भागार्हं भागान्नुदते भागादपाकरोति भागं तस्मै न प्रयच्छति स भागान्नुन्न एनं चोत्ता(३)रं चयते नाशयति दोषिणं करोति । यदि तं न नाशयति तदा तस्य पुत्रं पौत्रं वा नाशयतीति ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्यापहारिणो दोषः श्रु(४)तः । अथ साधारणं द्रव्यमात्मनोऽपि स्वं भवतीति स्वबुद्ध्या गृह्यमाणं न दोषमावहतीति मतम् । तदसत् । स्वबुद्ध्या गृह्णतेऽप्यवर्जनीयतया परस्वमपि गृहीतमेवेति निषेधानुप्रवेशाद्दोषमावहत्येव । यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेषु 'अयज्ञिया वै माषाः' इति निषेधो न प्रविशति मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिणोक्ते मुद्गावयवेषु गृह्यमाणेष्ववर्जनीयतया माषावयवा अपि गृह्यन्त एवेति निषेधः प्रविशत्येवेति राद्धान्तिनोक्तम् । तस्माद्वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येवेति सिद्धम् ॥ १२६ ॥

---

(१) वा ज्ञातं ख. च ज्ञातं ग. । (२) यो लोभाद्विनिकुर्वीतेति पाठः । (३) नोत्तारं ख. । (४) श्रूयते घ. ।

( वी० मि० ) समानवर्णानामौरसादीनां द्वादशविधानां पुत्राणां परस्परविभागं क्वचिदविभागं च रक्षणपूर्वकमाह—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ॥
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १२७ ॥

परक्षेत्रे अपुत्रेण देवरादिना विगोत्रेण वा गुरुनियोगेनोत्पादितः पुत्रो बीजिक्षेत्रिणोरुभयोरपि सम्पूर्णरिक्थग्राही पिण्डदाता धर्मतो धर्मानुसारेण भवति । यदि बीजिनः क्षेत्रिणो वा पश्चादौरसोऽपि यद्यन्यजः ।

त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ।

इति ब्रह्मपुराणादिति चकारार्थः । अपिशब्देन बीजिक्षेत्रिणोः पितुः समुच्चयः ॥ १२७ ॥

( मिता० ) द्व्यामुष्यायणस्य भागविशेषं दर्शयंस्तस्य स्वरूपमाह—

अपुत्रेणेति । अपुत्रां गुर्वनुज्ञात इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्यायां गुरुनियोगेनोत्पादितः पुत्र उभयोर्बीजिक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इति । अस्यार्थः । यदासौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपु(१)त्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्र(२)यतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः । स च न नियमेन बीजिनो रिक्थहारी पि(३)ण्डदो भवति । यथोक्तं मनुना ( ९।५३ )—'क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च' ॥ इति । क्रियाभ्युपगमादिति, अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीक(४)रणाद्यत्क्षेत्रं क्षेत्रस्वामिना बी(५)जावपनार्थं बीजिने दीयते तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः । तथा ( मनुः ९।५२ )—'फलं त्वनभिसन्धाय क्षेत्रिणा बीजिना तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी' ॥ इति । फलं त्वनभिसन्धायेति । अत्रोत्पन्नमपत्यमावयोरुभयोरस्तिव-

( १ ) अपरस्य घ । ( २ ) प्रवर्तते घ । ( ३ ) पिण्डदाता चेति ग ।
( ४ ) करणेन यत्क्षेत्रं । ( ५ ) बीजवापनार्थं ग ।

त्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव। यतो बीजाद्योनिर्बलीयसी गवाश्वादिषु तथा दर्शनात्। अत्रापि नि(१)योगो वाग्दत्ताविषय एव। इतरस्य नियोगस्य मनुना निषिद्धत्वात् ( ९।५९।६० )—'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया। प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन' ॥ इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति (९।६४।६८)· 'नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मंत्रेषु नियोगः कीर्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः ॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥ ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थे गर्हन्ते तं हि साधवः' ॥ इति ॥ न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम्। नियोक्तॄणां निन्दाश्रवणात्। स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात्, संयमस्य प्रशस्तत्वाच्च। यथाह मनुरेव ( ५।१५७ )—'कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु' ॥ इति जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य ( मनुः ५।१५८।१६१ )—'आसीताऽऽमरणात्क्षान्ता नियता ब्रह्मचारिणी। यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्। दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते। सेह निन्दामवाप्नोति परलोकाच्च हीयते' ॥ इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति। तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम्। एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह (मनुः९।६९।७०) 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः ॥ यथाविध्य(२)धिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ' ॥ इति। यस्मै

( १ ) तथानियोगो घ। ( २ ) विध्यभिगम्यैना ख।

वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यध्यवसायात् तत्र
नादवगम्यते । तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सो-
दरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीय
अनेन विधानेन घृताभ्यङ्गवाङ्नियमादिना शुक्लवस्त्रां शुचिव्रतां मनो-
वाक्कायसंयतां मिथो रहस्यागर्भग्रहणात्प्रत्यृतु एकवारं गच्छेत् । अयं
च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमि-
ति न देवरस्य भार्यात्वमापादयति । अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामि-
न एव भवति न देवरस्य । सा विदुषां मते ॥ १२७ ॥

(वी०मि०) द्वादशानां पुत्राणां लक्षणान्याह औरस इत्यादिना—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १२८ ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः ॥
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १२९ ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः (१)सुतः ॥
दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत् ॥ १३० ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ॥
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥ १३१ ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ॥
पिण्डदोंऽशहरश्चै(२)षां पूर्वाभावे परः परः ॥ १३२ ॥
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥
जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ॥ १३३ ॥
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम् ॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥ १३४ ॥

धर्मपत्नी धर्मेण परिणीता सवर्णा तस्यां जातः परिणेतुस-
काशादौरसः पुत्रः । अत्र सावर्ण्यं द्विजातित्वेन ब्राह्मण्यादित्रयस्य

---

(१) पौनर्भव सुत—इति मुद्रितपुस्तके पाठः ।
(२) पिण्डदोंऽशहरश्चैषा इति क पुस्तके पाठः ।

विवक्षितम् । अन्यथा ब्राह्मणविवाहितयोः क्षत्रियावैश्ययोस्तेनोत्पन्नः पुत्रो न द्वादशविधपुत्रान्तर्भूतः स्यादिति पारिजातः । परिणेतुरुरसा जनितत्वादौरसः ।

अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ।

इति वसिष्ठोक्तव्यवस्थया परिणीता कन्या पुत्रिका तस्यां जातः सुतः पुत्रिकासुत इति समाख्यावललभ्यं लक्षणं, स चौरससमः मातामहस्य रिक्थग्राही पिण्डदश्च । अत्र विशेषमाह मनुः—

मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥

परक्षेत्रनियुक्तेन सगोत्रेणाऽसगोत्रेण वा जातः क्षेत्रजः क्षेत्रिणः पुत्रः । यत्र तु यदपत्यमत्रोत्पत्स्यते तदावयोः समानं भविष्यतीति व्यवस्था कृता तत्र बीजिक्षेत्रिणोरुभयोरपि पुत्र इति पूर्वश्लोकार्थः । तदाह मनुः—

क्रियाभ्युपगमार्थेन बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

इति । गृहे पत्न्यामन्येन प्रच्छन्नः अनियोगेऽपि चौर्यरताऽऽहितगर्भमूलक उत्पन्नो यः स तु गूढजः स्मृतः । अत्र मनुः—

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्यचित् ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

इति । तल्पं पत्नी । कन्यकायां कुमार्यां जातः पुत्रः कानीनः स च मातामहसुतः । विष्णुः—

पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ।
परिणेतुर्निरपत्यत्वे तु तस्यापि स पुत्रः ।
आद(१)तायां तु यो जातः सवर्णेन पितुर्गृहे ।
स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः ॥

इति ब्रह्मपुराणात् । पुनर्विवाहिता पुनर्भूस्तस्यां क्षतायां पूर्वपत्युपभुक्तयामक्षतायामतादृश्यां वा जातः सुतः पौनर्भवः । तत्र कात्यायनः—

तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ।

(१) अदत्तायां तु-इति क. पु. पाठः ।

पित्रा (१)तदभावे तदनुज्ञया वा मात्रा य पुत्र प्रीत्याऽद्भि(२)रन्यस्मै दद्यात् स प्रतिग्रहीतुर्दत्तक पुत्रो भवति । मनु —

रिक्थ(३)गोत्रे जनयितुर्न हरेद्दत्रिम सुत ।
रिक्थ(४)गोत्रानुग पिण्डो व्यपैति ददत स्वधाम् ॥

स्वधा श्राद्धम् । ताभ्या मातापितृभ्या विक्रीतो य क्रीत पुत्र स क्रेतुर्भवति । स्वय सदृशतया मम पुत्रो भवेति प्रार्थनया कृतस्तस्य पुत्रोऽस्मीति स्वीकारित कृत्रिम पुत्र । चकारेण मातापित्रनुमत्यपि समुच्चीयते । तत्सद्भावे तत्परतन्त्रत्वात् । प्रार्थन विनैव स्वय पुत्रत्वेनाऽऽत्मान मातापित्रभावे परित्यक्त वा यो ददाति स स्वय दत्त प्रतिग्रहीतुः पुत्र । गर्भे स्थितो मातृविवाहेनैव विवो विवाहितो वोढु पुत्र सहोढजः । तदाह मनु —

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥

यस्तु मातापितृभ्यामुत्सृष्टो मरणासामर्थ्येन परित्यक्तोऽन्येन पुत्रतया गृह्यते स ग्रहीतु सुतोऽपविद्धसञ्ज्ञ । एषा द्वादशानां पुत्राणां पूर्वपूर्वाभावे पर पर पुत्र पिण्डदोंऽशहरश्च भवति । अत्रापद पुत्रिकाक्षेत्रजस्थले समप्रांशपरं, लिखितब्रह्मपुराणवचनाच्च ।

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहरा सुता ।
सवर्णा, असवर्णास्तु ग्रासाच्छादनभाजना ॥

इति कात्यायनवचनाच्च । सवर्णदत्तकृत्रिमगूढोत्पन्नाऽपविद्धपुत्रा नुरोधेनापि समप्रांशपरमशपदम् ।

एक एवौरस पुत्र पित्र्यस्य वसुन प्रभु ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

इति मनुवचनं त्वौरसस्य सगुणत्वेऽन्येषा निर्गुणत्वे चेत्यवधेयम् । सोऽय चकार समुच्चयार्थ । अय विधि पूर्वाभावे पर इत्येवरूप सजातीयेषु सवर्णेषु त्रैवर्णिकेषु पुत्रेषु यथोक्त । असवर्णेषु पुत्रिकापुत्रे सत्यपि क्षेत्रज सवर्णाऽशभागित्यादिव्यवस्था द्रष्टव्या, उक्तकात्यायनवचनस्वरसात् । शूद्रेण तु दास्यामपरिणीतशूद्रायामपि

---

(१) तदृश इति क ख पुस्तकयो । (२) प्रीत्या दत्त्वेति ख पु पाठ ।
(३) गोत्ररिक्थे इति मुद्रितपुस्तके पाठ । (४) गोत्ररिक्थानुग इति मु पु पाठ ।

जातः कामतः पितुरिच्छया पुत्रान्तरतुल्यांशहरो भवेत्। मृते पितरि भागकरणे परिणीतापुत्रा भ्रातरस्तं दासीपुत्रमर्धभागभाजं कुर्युः। परिणीतापुत्रभ्रातृविहीनस्तु दासपुत्रः पितुर्दुहितॄणां सुताद्दते दौहित्रासत्त्वे कैमुतिकन्यायात् दुहित्रसत्त्वे सर्वं पितृधनं हरेत्॥ १२८-१३४॥

(मिता०) समानासमानजातीयानां पुत्राणां विभागक्लृप्तिरुक्ता। अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यंस्तेषां स्वरूपं तावदाह—

औरस इति। उरसो जात औरसः पुत्रः स च धर्मपत्नीजः सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जातः औरसः पुत्रो मुख्यः। तत्सम औरससमः पुत्रिकायाः सुतः पुत्रिकासुतः अत एवौरससमः। यथाह वसिष्ठः—'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति'॥ इति। अथवा पुत्रिकैव सुतः पुत्रिकासुतः सोऽप्यौरससम एव पित्रवयवानामल्पत्वात् मात्रवयवानां बाहुल्याच्च। यथाह वसिष्ठः—'द्वितीयः पुत्रिकैव' इति। द्वितीयः पुत्रः पुत्रिकैवेत्यर्थः। द्व्यामुष्यायणस्तु जनकस्यौरसा(१)दपकृष्टोऽन्यक्षेत्रोत्पन्नत्वात्। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। इतरेण सपिण्डेन देवरेण वोत्पन्नः पुत्रः क्षेत्रजः॥ १२८॥

(मिता०) गृह इति। गूढजः पुत्रो भर्तृगृहे प्रच्छन्न उत्पन्नो हीनाधिकजातीयपुरुषजत्वपरिहारेण पुरुषविशेषजत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यः। कानीनस्तु कन्यकायामुत्पन्नः पूर्ववत्सवर्णात्सु मातामहस्य पुत्रः। यद्यनूढा सा भवेत्तथा पितृगृह एव संस्थिता। अथोढा तदा वोढुरेव पुत्रः। यथाह मनुः (९।१७२)—'पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः(२)। तं कानीनं वदेन्नाम्ना वोढुः(३) कन्यासमुद्भवम्'॥ इति॥ १२९॥

(मिता०) अक्षतायामिति। पौनर्भवस्तु पुत्रोऽक्षतायां क्षतायां वा पुनर्भ्वां सवर्णादुत्पन्नः। माता भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्य दीयते स तस्य दत्तकः पुत्रः। यथाह मनुः (९।१६८)—'माता पिता वा(४) दद्यातां यमद्भिः पुत्रमा-

(१) स्यौरसान्निकृष्टो घ। (२) रहः अप्रकाशम्। (३) वोढुः कन्यापरिणेतुः।
(४) वाशब्दान्मात्रभावे पितैव दद्यात्। पित्रभावे मातैव। उभयमत्ये तु उभावपीति मदनः।

पदि । सदृ(१)शं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः' ॥ इति । आपद्ग्रहणादनापदि न देयः । दातुरयं प्रतिषेधः । तथा एकपुत्रो न देयः । 'न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा' इति वसिष्ठस्मरणात् । तथाऽनेकपुत्रसद्भावेऽपि ज्येष्ठो न देयः । (मनुः ९।१०६) 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः' इति तस्यैव पुत्रकार्यकरणे मुख्यत्वात् । पुत्रप्रतिग्रहप्रकारश्च 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसंनिकृष्ट एव प्रतिगृह्णीयात्' इति वसिष्ठेनोक्तः । अदूरबान्धवमित्यत्यन्तदेशभाषाविप्रकृष्टस्य प्र(२)तिषेधः । एवं क्रीतस्वयंदत्तकृत्रिमेष्वपि योजनीयम् । समानन्यायत्वात् ॥ १३० ॥

(मिता०) क्रीतश्चेति । क्रीतस्तु पुत्रस्ताभ्यां मातापितृभ्यां मात्रा पित्रा वा विक्रीतः पूर्ववत् तथैकं पुत्रं ज्येष्ठं च वर्जयित्वा आपदि सवर्ण इत्येव । यत्तु मनुनोक्तम् (९।१७४)—'क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा' ॥ इति, तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं न जात्या । 'सजातीयेष्वयं प्रोक्तस्तनयेषु' इत्युपसंहारात् । कृत्रिमः स्यात्स्वयं कृतः कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिप्र(३)लोभनैव पुत्रीकृतो मातापितृविहीनः तत्सद्भावे तत्परतन्त्रत्वात् । दत्तात्मा तु पुत्रो यो मातापितृविहीनस्ताभ्यां त्यक्तो वा तवाहं पुत्रो भवामीति स्वयं द(४)त्तत्वमुपगतः । सहोढजस्तु गर्भे स्थितो गर्भिण्यां परिणीतायां यः परिणीतः स वोढुः पुत्रः ॥ १३१ ॥

(मिता०) उत्सृष्ट इति । अपविद्धो मातापितृभ्यामुत्सृष्टो यो गृह्यते स ग्रहीतुः पुत्रः । सर्वत्र सवर्ण इत्येव ॥

(मिता०) एवं मुख्यामुख्यपुत्राननुक्रम्यैतेषां दायग्रहणे क्रममाह—

पिण्डद इति । एतेषां पूर्वोक्तानां पुत्राणां द्वादशानां पूर्वस्य पूर्वस्याभावे उत्तर उत्तरः श्राद्धदोंऽशहरो धनहरो वेदितव्यः । औरसपौत्रिकेयसमवाये औरसस्यैव धनग्रहणे प्राप्ते मनुरपवादमाह (९।१३४)—'पुत्रिकायां कृतायां तु यदि पुत्रोऽनु जायते । समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः' ॥ इति । तथा अन्येषामपि पूर्वस्मि·

(१) सदृश कुलगुणादिभिर्न जात्येति मेधातिथि, सदृशो जात्येति कुल्लूक ।
(२) निषेध घ । (३) प्रलोभने घ । (४) स्वयं दत्त उपगत ग घ ।

न्पूर्वस्मिन्सत्यप्युत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं वसिष्ठेन । तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत च(१)तुर्थभागभागी स्याद्दत्तक इति । दत्तकग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम् । पुत्रीकरणाविशेषात् । तथा च कात्यायनः—'उत्पन्ने त्वौरसे पुत्रे च(२)तुर्थांशहराः सुताः । सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः' ॥ इति सवर्णा दत्तकक्षेत्रजादयस्ते सत्यौरसे चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः किं तु ग्रासाच्छादनभाजनाः । यदपि विष्णुवचनम्—'अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः । पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः' ॥ इति । तदप्यौरसे सति चतुर्थांशनिषेधपरमेव । औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव । 'पूर्वाभावे परः परः' इति वचनात् । यदपि मनुवचनम् (९।१६३)—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्' ॥ इति, तदपि दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम् । तत्र क्षेत्रजस्य विशेषो दर्शितस्तेनैव (मनुः९।१६४)—'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन्दायं पित्र्यं पञ्चममेव वा' ॥ इति । प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठमंशम्, एकतरसद्भावे पञ्चममिति विवेक्तव्यम् । यदपि मनुना पुत्राणां षट्कद्वयमुपन्यस्य पूर्वषट्कस्य दायादबान्धवत्वं, उत्तरषट्कस्यादायादबान्धवत्वमुक्तम् (मनु-९।१५९।१६०)—'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः' ॥ इति, तदपि स्वपितृसपिण्डसमानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तु तन्नास्ति । बान्धवत्वं पुनः समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेवेति व्याख्येयम् । (मनुः ९।१४२)—'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गो(३)त्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधाम्' ।

---

(१) चतुर्थांश. ग. घ । (२) तृतीयांशहरा इति तु कल्पतरौ पाठः ।

(३) गोत्रेति । गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः प्रायस्तत्समनियत इति यावत् । दत्रिमः केवलः द्व्यामुष्यायणे गोत्राद्यनुवृत्तेः । पिण्डः श्राद्धमौर्ध्वदैहिकादीति मेधातिथिकुल्लूकभट्टादयः । पिण्डः सापिण्ड्यं, स्वधौर्ध्वदैहिकश्राद्धादीत्यपरे व्य. म. ।

इत्यत्र दत्त्रिमग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वात्। पितृधनहारित्वं तु पूर्वस्य पूर्वस्याभावे सर्वेषामविशिष्टम्। (मनु ९।१८५)—'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः'। इत्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वप्रतिपादनपरत्वात्। औरसस्य तु (मनु. ९।१६३)—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः'। इत्यनेनैव रिक्थभाक्त्वस्योक्तत्वात्। दायादशब्दस्य [१]'दायादानपि दापयेत्' इत्यादौ पुत्रव्यतिरिक्तरिक्थभाग्विषयत्वेन प्रसिद्धत्वाच्च। वासिष्ठादिषु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन पाठो गुणवदगुणवद्विषयो वेदितव्यः। गौतमीये तु पौत्रिकेयस्य दशमत्वेन पाठो विजातीयविषयः। तस्मात् स्थितमेतत्पूर्वपूर्वाभावे परः परोऽशभागिति। यत्तु (९।१८२)—'भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्'॥ इति। तदपि भ्रातृपुत्रस्य पुत्रीकरणसम्भवेऽन्येषां पुत्रीकरणनिषेधार्थम्, न पुनः पुत्रत्वप्रतिपादनाय। 'तत्सुता गोत्रजा बन्धुः'—इत्यनेन विरोधात्॥ १३२॥

(मिता०) इदानीमुक्तोपसंहारव्याजेन तत्रैव नियममाह—

सजातीयेष्विति। समानजातीयेष्वेव पुत्रेषु अयं पूर्वाभावे परः पर इत्युक्तो विधिः न भिन्नजातीयेषु। तत्र च कानीनगूढोत्पन्नसहोढजपौनर्भवाणां सवर्णत्वं जनकद्वारेण न स्व(२)रूपेण। तेषां वर्णजातिलक्षणाभावस्योक्तत्वात्। तथानुलोमजानां मूर्धावसिक्तादीनामौरसेष्वन्तर्भावात्तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं बोद्धव्यम्। शूद्रापुत्रस्त्वौरसोऽपि कृत्स्नं भागमन्याभावेऽपि न लभते। यथाह मनुः (९।१५४)—'यद्यपि स्यात्तु सत्पुत्रो (३)यद्यपुत्रोऽपि वा भवेत्। नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः'॥ इति। यदि सत्पुत्रो विद्यमानद्विजातिपुत्रो यद्यपुत्रोऽविद्यमानद्विजातिपुत्रो वा स्यात्तस्मिन्मृते क्षेत्रजादिर्वान्यो वा सपिण्डः शूद्रापुत्राय तद्धनाद्दशमांशादधिकं न दद्यादित्यस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सकलधनग्रहणं गम्यते॥

(मिता०) अधुना शूद्रधनविभा(४)गे विशेषमाह—

जातोऽपीत्यादि। शूद्रेण दास्यामुत्पन्नः पुत्रः कामतः पितुरि-

---

(१) (मनु ८।१६०) 'दानप्रतिभुवि प्रेते' इति पूर्वार्धमस्य। दानप्रतिभुवि तु पितरि मृते पुत्रानपि दापयेदिति तस्यार्थः। (२) स्वरूपद्वारेण ग। (३) यद्यसत्पुत्रोऽपि वा भवेदिति पाठः।
(४) विभागेपि ग।

च्छया भागं लभते । पितुरूर्ध्वं तु यदि परिणीतापुत्राः सन्ति तदा ते भ्रातरस्तं दासीपुत्रं अर्धभागिनं कुर्युः । स्वभागादर्धं दद्युरित्यर्थः । अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नं (१)धनं दासीपुत्रो गृह्णीयात् यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति । तत्सद्भावे त्वर्धभागिक एव दासीपुत्रः । अत्र च शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाप्यंशं न लभते नाप्यर्धं, दूरत एव कृ(२)त्स्नम् । किंत्वनुकूलश्चेज्जीवनमात्रं लभते ॥ १३३-१३४ ॥

( वी० मि० ) अथ द्वादशविधपुत्राभावे धनग्राहिणो निरूपयति—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥
तत्सुतो(३) गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥१३५॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ॥
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ १३६ ॥

अपुत्रस्य द्वादशविधपुत्रहीनस्य पौत्रप्रपौत्रहीनस्य स्वर्यातस्य मृतस्य पत्न्यादीनामेषामुक्तानां मध्ये पूर्वपूर्वाभावे उत्तरोत्तरो धनभाग् भवतीत्ययं विधिरपुत्रधनग्रहणप्रकारः सर्ववर्णेषु तुल्यः । तत्र प्रथमं पत्नी धनभाक्, सा च विवाहसंस्कृता बोध्या । 'पत्युर्नो यज्ञसंयोगे' (पा०सू०४।१।३३) इति स्मरणात् । अत्र विशेषमाह कात्यायनः—

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥

पत्न्या व्यभिचारिणीत्वे त्वाह नारदः—

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ।

पत्न्यसत्त्वेऽनूढाः पितृसवर्णदुहितरो धनभागिन्यः, उक्तकात्यायनवचनात् । इदं पुत्रिकापरमिति केचित् । तदयुक्तं पत्नीसत्त्वेऽपि तस्या धनग्राहितत्वात् । 'तृतीया पुत्रिके'ति वसिष्ठवचनेन तस्याः पुत्रत्वबोधनात् ।

अङ्गादङ्गात्स भवति पुत्रवद् दुहिता नृणाम् ।
तस्यामात्मनि जीवत्यां कथमन्यो धनं हरेत ॥

---

( १ ) धनं गृह्णीयात ग. घ. । ( २ ) कृत्स्नं धनं ग. ।
( ३ ) तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः—इति मुद्रितपुस्तके पाठः ।

सदृशी सदृशोनोढा साध्वी शुश्रूषणे रता ।
कृताऽकृता वा पुत्रस्य पितुर्धनहरी मता ॥

इति बृहस्पतिवचनाच्च । अत्र चोढात्वं कृताया एव विशेषणं, न त्वकृताया अपि कात्यायनवचनानुरोधादिति दाक्षिणात्याः । वस्तुतस्तु अक्लीबा चाऽकृता मानसीपुत्रिका सन्दिग्धतया पुत्रमध्येऽपरिगणितेत्यत्र दुहितृपदार्थः । 'निरिन्द्रियाया अदायः स्त्रियः' इत्यौत्सर्गिकवचनात् ।

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

इति मनुवचनस्य सङ्कोचलाघवाच्चेति मैथिलादीनामाचारानुसारी पन्थाः । पितरौ मातापितरौ । तत्र 'निरिन्द्रिया' इत्यादिवचनद्वयात्—

अपुत्रस्याऽथ कुलजा पत्नी दुहितराऽपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥

इति कात्यायनीयपाठक्रमाच्च । यद्यपि पितुस्तदसत्त्वे च मातुर्धनभागित्वम् । 'अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामी'ति विष्णुवचनेन चैतदिति स्फुटम् । इत्थं च विग्रहवाक्ये 'मातृशब्दस्य पूर्वनिपातात् पित्रपेक्षया वैमात्रेयाजनकत्वेन साधारणप्रत्यासत्तिसत्त्वाच्चे'ति मिताक्षरालिखनं चिन्त्यम् । मातुरभावे सहोदरास्तदभावे भ्रातृसुतः तदभावे गोत्रजः सपिण्डकुल्यादिर्यथासन्निहितसम्बन्धः, तदभावे बन्धुः—

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

इति परिभाषितः । तदभावे शिष्यस्तदभावे सब्रह्मचारी एकस्मादाचार्यात्प्राप्तोपनयनवेदाऽध्ययनः । अत्र चकारेण सहोदरभ्रात्रभावे वैमात्रेयभ्रातुरधिकारं, तथापदेनात्मबन्धूनामभावे पितृबन्धूनां तदभावे मातृबन्धूनां परिभाषितानां तदभावे आचार्यस्य चाऽधिकारं समुच्चिनोति । सम्बन्धसान्निध्यात् 'आचार्याभावेऽन्तेवासी'त्यापस्तम्बवचनाच्चेति संक्षेपः । नारदः—

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥
अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥—॥१३५-१३६ ॥

( मिता० ) मुख्यगौणसुता दायं गृह्णन्तीति निरूपितम् । तेषामभावे सर्वेषां दायादक्रम उच्यते—

पत्नीत्यादि । पूर्वोक्ता द्वादशपुत्रा यस्य न सन्ति असावपुत्रः तस्यापुत्रस्य स्वर्यातस्य परलोकं गतस्य धनभाक् धनग्राही एषां पत्न्यादीनामनुक्रान्तानां मध्ये पूर्वस्य पूर्वस्याभावे उत्तरोत्तर इति सम्बन्धः । सर्वेषु मूर्धावसिक्तादिषु(१) अनुलोमजेषु प्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु अयं दायग्रहणविधिर्दायग्रहणक्रमो वेदितव्यः । तत्र प्रथमं पत्नी धन(२)भाक् । पत्नी विवाहसंस्कृता 'पत्युर्नो यज्ञसंयोगे' इति स्मरणात् । एकवचनं च जात्यभिप्रायेण । ताश्च बह्वयश्चेत्सजातीया विजातीयाश्च तदा यथांशं विभज्य धनं गृह्णन्ति(३) । वृद्धमनुरपि पत्न्याः समग्रधन(४)सम्बन्धं वक्ति—'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च' ॥ इति । वृहद्विष्णुरपि—'अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि' इति । कात्यायनोऽपि—'पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी । तदभावे तु दुहिता यद्यनूढा भवेत्तदा' ॥ इति । तथा 'अपुत्रस्या(५)थ कुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः' इति । वृहस्पतिरपि—'कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु । । असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी' ॥ एतद्विरुद्धानीव(६) वाक्यानि लक्ष्यन्ते—'भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा । विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु' ॥ इति । पत्नीसद्भावेऽपि भ्रातॄणां धनग्रहणं पत्नीनां च भरणमात्रं नारदेनोक्तम् । मनुना तु ( ९।१८५ )—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इत्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम् । तथा ( मनुः ९।२१७ )—'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्' ॥ इति मातुः पितामह्याश्च धनसम्बन्धो दर्शितः । शङ्खेनापि—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां

(१) दिष्वनुलोमजेषु सूतादिषु प्रतिलोमजेषु ब्राह्मणादिषु अय ग. । (२) भाक् विवाह ग. घ. । (३) गृह्णन्ति यथा ख. । (४) धनग्रहणं घ. । (५) स्यार्थकुलजा क. ख. । (६) नि च वाक्यानीह ग.।

ज्येष्ठा वा पत्नी' इति भ्रातॄणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसम्बन्धो दर्शितः। कात्यायनेनापि—'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी वाथ माता वा तत्पितुः क्रमात्' ॥ इति। एवमादीनां विरुद्धार्थानां वाक्यानां योगीश्वरेण व्यवस्था दर्शिता। 'पत्नी गृह्णीयात्' इत्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम्। सा च यदि नियोगार्थिनी भवति। कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनहरणं न स्वतन्त्राया इति। 'पिता हरेदपुत्रस्य' इत्यादिवचनात्तत्र व्यवस्थाकारणं वक्तव्यम्। नान्यद्व्यवस्थाकारणमस्तीति। गौतमवचनाच्च 'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत' इति। अस्यार्थः—पिण्डगोत्रर्षिसम्बन्धा अनपत्यस्य रिक्थं भजेरन् स्त्री वा रिक्थं भजेत् यदि बीजं लिप्सेतेति। मनुरपि (९।१४६)—'धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा। सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्' ॥ इति। अनेनैतद्दर्शयति विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसम्बन्धो नान्यथेति। तथाऽविभक्तधनेऽपि (मनुः ९।१२०)—'कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः' ॥ इति। तथा वसिष्ठोऽपि 'रिक्थलोभान्नास्ति नियोगः' इति रिक्थलोभान्नियोगं प्रतिषेधयन् नियोगद्वारक एव पत्न्या धनसम्बन्धो नान्यथेति। नियोगाभावेऽपि पत्न्या भरणमात्रमेव नारदवचनात् 'भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्' इति। योगीश्वरेणापि किल वक्ष्यते—'अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च' ॥ इति। अपि च—द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम्। तथा च केनापि स्मृतम्—'यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः ॥ यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु' ॥ इति। तदनुपपन्नम्, 'पत्नी दुहितरः' इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च। अपि चेदमत्र वक्तव्यम्। पत्न्याः धनग्रहणे नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा। तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसम्बन्धः प्राप्नोति। उत्पन्नस्य च पुत्रस्य धनसम्बन्धो न प्राप्नोति। अथ तदपत्यस्यैव निमित्तत्वं, तथा सति

पुत्रस्यैव धनसम्बन्धात्पत्नीति नारब्धव्यम् ॥

अथ स्त्रीणां पतिद्वारको धनसम्बन्धः पुत्रद्वारको वा नान्यथेति मतम् । तदप्यसत् । ( मनुः ९।१९४ )—'अध्यग्न्यध्यावहानिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्' ॥ इत्यादिविरोधात् । किं च—सर्वथा पुत्राभावे 'पत्नी दुहितरः' इत्यारब्धम् । तत्र नियुक्ताया धनसम्बन्धं वदता क्षेत्रजस्यैव धनसम्बन्ध(१) उक्तो भवति । स च प्रागेवाभिहित इति 'अपुत्रप्रकरणे पत्नी'ति नारब्धव्यम् ।

अथ 'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री वानपत्यस्य बीजं वा लिप्सेत' इति गौतमवचनान्नियुक्ताया धनसम्बन्ध इति । तदप्यसत् । न हि यदि बीजं लिप्सेत तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते । किन्तु 'अनपत्यस्य धनं पिण्डगोत्रर्षिसम्बन्धा भजेरन् स्त्री वा सा(२) स्त्री बीजं वा लिप्सेत संयता वा भवेत्' इति तस्या धर्मान्तरोपदेशः । वाशब्दस्य पक्षान्तरवचनत्वेन यथार्थाप्रतीतेः ।

अपि च संयताया एव धनग्रहणं युक्तं न नियुक्तायाः स्मृतिलोकनिन्दितायाः । 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च' ॥ इति संयताया एव धनग्रहणमुक्तम् ।

तथा नियोगश्च निन्दितो मनुना ( ९।६४ )—'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्' ॥ इत्यादिना । यत्तु वसिष्ठवचनम् 'रिक्थलोभान्नास्ति नियोगः' इति, तदविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्या धनसम्बन्धो नास्तीति स्वापत्यस्य धनसम्बन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम् । यदपि नारदवचनम्—'भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्' इति, तदपि 'संसृ(३)ष्टानां तु यो भागस्तेषामेव स इष्यते' इति संसृष्टानां प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिपादनपरम् । न च 'भ्रातृणामप्रजाः प्रेया'दित्येतस्य संसृष्टिविषयत्वे 'संसृ(३)ष्टानां तु यो भाग' इत्यनेन पौनरुक्त्यमाशङ्कनीयम् । यतः पूर्वोक्तविवरणेन स्त्रीधनस्या-

(१) सम्बन्धो युक्तो घ. । (२) सा बीजं वा घ. । (३) संसृष्टिनां तु. घ. ।

विभाज्य तत्स्त्रीणां च भरणमात्रं विधीयते । यदपि 'अपुत्रा योषित-श्चैषाम्' इत्यादिवचनं तत् क्लीबादिस्त्रीविषयमिति व(१)क्ष्यते । यत्तु 'द्विजातिधनस्य यज्ञार्थत्वात् स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्त-मिति, तदसत् । सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः ।

अथ यज्ञशब्दस्य धर्मोपलक्षणत्वाद्दानहोमादीनामपि धर्मत्वात्तदर्थत्वमविरुद्धमिति मतम् । एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात् । तथा सति 'धर्ममर्थं च कामं च यथाशक्ति न हापयेत्' । तथा 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्याद्यथाशक्ति धर्मार्थकामे-भ्यः' । तथा 'न तथैतानि शक्यन्ते संनियन्तुमसेवया' इत्यादियाज्ञ-वल्क्यगौतममनुवचनविरोधः । अपि च धनस्य यज्ञार्थत्वे 'हिरण्यं धार्यमिति हिरण्यधारणस्य क्रत्वर्थतानिराकरणेन पुरुषार्थत्वमुक्तं' तदप्युद्धृतं स्यात् । किं च यज्ञशब्दस्य धर्मोपलक्षणपरत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम् । यत्तु पारतन्त्र्यवचनं 'न स्त्री स्वातन्त्र्यमर्हति' इत्यादि, तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को वि-रोधः । कथं तर्हि 'यज्ञार्थं द्रव्यमुत्पन्नम्' इत्यादिवचनम् , उच्यते— 'यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपी'त्येवपरं तत् । 'यज्ञार्थं लब्धमददद्भासः काकोपि वा भवेत्' इति दोषश्रवणस्य पुत्रादिष्व(२)विशेषात् । यदपि कात्यायनेनोक्तम्—'अदा(३)यिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्य-स्तदर्पयेत्' ॥ इति । अ(३)दायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञो भवति, योषिद्भृत्यौर्ध्वदेहिकमपास्य, तत्स्त्रीणामशनाच्छादनो-पयुक्तं औौर्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापास्य परिहृत्य राज-गामि भवतीति सम्बन्धः । अस्यापवा(४)द उत्तरार्धं । 'श्रोत्रियद्रव्यं च योषिद्भृत्यौर्ध्वदेहिकमपास्य श्रोत्रियायोपपादये'दिति । एतदप्यवरु-द्धस्त्रीविषयम् । योषिद्ग्रहणात् । नारदवचनं च-'अन्यत्र ब्राह्मणात् किं तु राजा धर्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः' ॥ इत्यवरुद्धस्त्रीविषयमेव । स्त्रीशब्दग्रहणात् । इह तु पत्नीशब्दादूढायाः सयताया धनग्रहणमविरुद्धम् । तस्मादविभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति । विभागस्योक्त-

(१) वक्ष्यति घ० (२) दिष्वविशेषात् घ

(३) आदायक घ. । (४) उपवाद. । श्रोत्रिय द्र घ ।

त्वात्संसृष्टिनां तु वक्ष्यमाणत्वात् । एतेनाल्पधनविषयत्वं श्रीक(१)-राद्भिरुक्तं निरस्तं वेदितव्यम् । तथा ह्यौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्—'यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः' इति । तथा—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इति च । तथा सति अपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम् । अ(२)थ 'पत्न्यः कार्याः समांशिकाः' इत्यत्र 'माताप्यंशं समं हरेत्' इत्यत्र च च जीवनोपयुक्तमेव ध(३)नं स्त्री हरतीति मतम् । तदसत् । अंशशब्दस्य समशब्दस्य चाऽऽनर्थक्यप्रसङ्गात् । स्यान्मतम् । बहुधने जीवनोपयुक्तं धनं गृह्णाति, अल्पे तु पुत्रांशसमांशं गृह्णातीति । तच्च न विधिवैषम्यप्रसङ्गात् । तथा हि 'पत्न्यः कार्याः समांशिकाः' 'माताप्यंशं समं हरेत्' इति च बहुधने जीवनमात्रोपयुक्तं वाक्यान्तरमपेक्ष्य प्रतिपादयति, अल्पधने तु पुत्रांशसममंशं प्रतिपादयतीति ।

य(४)था चातुर्मास्येषु 'द्व(५)योः प्रणयन्ति' इत्यत्र पूर्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन प्राप्तया उत्तरवेद्या 'न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये' इत्युत्तरवेदिप्रतिषेधे दर्शिते राद्धान्तैकदेशिना 'न सौमिकप्रणयनातिदेशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोः पर्वणोरयं प्रतिषेधः किन्तु—उपात्र(६)वपन्तीति प्राकरणिकेन वचनेन प्राप्ताया उत्तरवेद्याः प्रतिषेधोऽयमित्यभिहिते पुनः पूर्वपक्षिणा-उपात्र वपन्तीति प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिं प्रा(७)-पयति, मध्यमोस्तु निरपेक्षमेव नित्यवदुत्तरवेदिं प्रापयती'ति विधिवैषम्यं दर्शितम् । राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो द्वयोः प्रणयन्तीत्याद्यर्थवादपर्यालोचनया—उपात्र वपन्तीति मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्त इति दर्शितम् ।

यदपि मतम् (मनुः ९।१८५)—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इति मनुस्मरणात्, तथा—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि

---

(१) श्रीकरादिभिः घ. । (२) तथा पत्न्यः घ. । (३) स्त्रीधनमिति मतं घ. । (४) तथा ख. ।

(५) द्वयोर्वरुणप्रघाससाकमेधपर्वणोः ।

(६) तूपात्त ख. तूपात्रं घ. तूपात्रमित्येकस्मिन्प्राचीनपुस्तके. ।

(७) प्रतिपादयति. ग. घ. ।

द्रव्य तदभावे पितरौ हरेयु(१)र्वा ज्येष्ठा वा पत्नी' इति शङ्खस्मरणाच्च अ(२)पुत्रस्य धन भ्रातृगामीति प्राप्त, 'भरण चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' । इत्यादिवचनाच्च भरणोपयुक्त धन पत्नी लभत इत्यपि स्थितम् । एव स्थिते बहुधने अपुत्रे स्वर्याते भरणोपयुक्त पत्नी गृह्णाति शेष च भ्रातर । यत्र तु पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति ततो न्यून वा तदा किं पत्न्येव गृह्णात्युत भ्रातरोऽपीति विरोधे पूर्वबलीयस्त्वज्ञापनार्थं 'पत्नी दुहितर' इत्यारब्धमिति । तदप्यत्र भगवानाचार्यो न मृष्यति । यत (मनु ९।१८५)—'पिता हरेदपुत्रस्य रिक्थ भ्रातर एव वा' इति विकल्पस(३)रणाभेद क्रमपर वचनमपि तु धनग्रहणेऽधिका(४)रप्रदर्शनमात्रपरम् । तच्चास्त्येव पत्न्यादिगणे घटत इति व्याचक्षे । शङ्खवचनमपि ससृ(५)ष्टभ्रातृविषयमिति । अपि चाल्पविषयत्वमस्माद्वचनात्प्रकाराद्वा नावगम्यते । 'धनभागुत्तरोत्तर' इत्यस्य च 'पत्नी दुहितर' इति विषयद्वये वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्, पित्रादिषु तु धनमात्रविषयत्वमिति पूर्वोक्त विधिवैषम्य तदवस्थमेवेति यत्किचिदेतत् । यत्तु हारीतवचनम्—'विधवा यौवनस्था चेन्नारी भवति कर्कशा । आयुष' क्षपणार्थं तु दातव्य जीवन तदा' ॥ इति, तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम् । अस्मादेव व(६)चनादनाशङ्कितव्यभिचारायाः सकलधनग्रहण गम्यते । एतदेवाऽभिप्रेत्योक्त शङ्खेन 'ज्येष्ठा वा पत्नी' इति । ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा, सा सकल धन गृहीत्वान्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम् । तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनो धन परिणीता स्त्री संयता सकलमेव गृह्णातीति स्थितम् ।

तदभावे दुहितर' । दुहितर इति बहुवचन समानजातीयानामसमानजातीयानां च समविषमांशप्राप्त्यर्थम् । तथा च कात्यायन —'पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी । तदभाव तु दुहिता यद्यनूढा भवेत्तदा' ॥ इति । बृहस्पतिरपि—'भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात्सम्भवति पुत्रवद् दुहिता नृणाम् ॥ त

(१) हरतां घ । (२) अपुत्रधनं घ । (३) अवणाद घ ।
(४) धिकारमात्रप्रदर्शनपरं घ । (५) संसृष्टविषय घ । (६) वचनादशङ्कित घ ।

समातिपितृधनं त्वन्यः कथं गृह्णीत मानवः' ॥ इति । तत्र चोढानूढासमवायेऽनूढैव गृह्णाति । 'तदभावे तु दुहिता यद्यनूढा भवेत्तदा' इति विशेषस्मरणात् । तथा प्रतिष्ठिताप्रतिष्ठितानां समवाये (१)अप्रतिष्ठिता । 'स्त्री(२)धनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति गौतमवचनस्य पितृधनेऽपि समानत्वात् । न चैतत्पुत्रिकाविषयमिति मन्तव्यम् । तत्समः पुत्रिकासुत इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रकारणेऽभिधानात् चशब्दाद् दुहित्रभावे दौहित्रो धनभाक् । यथाह विष्णुः—'अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः' ॥ इति । मनुरपि [९।१३६]—'अ(३)कृता वा कृता वापि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्' ॥ इति ।

तदभावे पि(४)तरौ मातापितरौ धनभाजौ । यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वं श्रवणात् पाठक्रमादेवार्थक्रमावगमाद्धनसम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक् तदभावे पितेति गम्यते । किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता तु न साधारणीति प्रत्यासत्त्यतिशयात् 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' इति वचनान्मातुरेव प्रथमं धनग्रहणं युक्तम् । न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अ-

---

(१) अप्रतिष्ठिता अनपत्या निर्धना वा । (२) स्त्रीपदं पितुरप्युपलक्षकमिति संप्रदायविदः ।

(३) अकृतेति । अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यं, तत्र 'यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्' इत्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृता, अभिसंधिमात्रकृता वाग्व्यवहारेण न कृता अकृता । इत्यादि कुल्लूकः. अक्षता वा क्षता वापि ग. ।

(४) व्यवहारमयूखे–दौहित्राभावे पिता तदभावे माता । तथा च कात्यायनः–'अपुत्रस्यार्यकुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः' ॥ विष्णुश्च—'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे दौहित्रगामि, तदभावे पितृगामि, तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे सकुल्यगामि' इति । यत्तु विज्ञानेश्वरः-द्वन्द्वापवादके पितरावित्येकशेषे क्रमाप्रतीतावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात् अपवाद्यद्वन्द्वात्क्रमानुसारात् पितुः पुत्रान्तरसाधारण्यात् मातुस्त्वसाधारण्याच्चादौ मातुस्तदभावे पितुर्धनग्रहणमूचे तदेतद्वचोविरोधादपास्तम् । विग्रहवाक्ये मातृशब्दस्य पूर्वनिपात एकशेषस्य द्वन्द्वैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च ।

पि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यत इति । मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम् । तदभावे पिता धनभाक् ।

पित्रभावे भ्रा[१]तरो धनभाजः । तथा च मनुः [ ९।१८५]—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इति । यत्पुनर्धारेश्वरेणोक्तम् [९।२१७]—'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्' ॥ इति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता । यतः पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति, पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति । तदप्याचार्यो नानुमन्यते । विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् 'चतुस्त्रिद्व्येकभागाः स्युः' ( मनुः ९।१८९ ) इत्यादिनेति । यत्पुनः—'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः' इति मनुस्मरणं तन्नृपाभिप्रायं न तु पुत्राभिप्रायम् । भ्रातृष्व(२)पि सोदराः प्रथमं गृह्णीयुः भिन्नोदराणां मात्रा विप्रकर्षात् । 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' इति स्मरणात् ।

सोदराणामभावे भिन्नोदरा धनभाजः । भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः । भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः । भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात् । यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसम्बन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभज्य धनग्रहणे पितृतो भागकल्पनेति युक्तम् ।

भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः । गोत्रजाः पितामही सपिण्डाः समानोदकाश्च । तत्र पितामही प्रथमं धनभाक् । ( मनुः ९।२१७ )—'मातर्यपि च वृत्तायां पितुर्माता धनं हरेत्' इति मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यन्तानां च द्भक्रमत्वेन मध्येऽनुप्रवेशाभावात् 'पितुर्माता धनं हरेत्' इत्यस्य

(१) अत्र केचन—सोदराभावे भिन्नोदरास्तदभावे सोदरसुता इत्याहुस्तन्न ।

(२) भ्रातृपदस्य सोदरे शक्त्या भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात् । केचित्तु भ्रातर इत्यत्र 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्यनुशासनात् भ्रातरश्च स्वसारश्च भ्रातर इति विरूपैकशेषेण भ्रात्रभावे भगिन्य इत्याहुस्तन्न । विरूपैकशेषे मानाभावात् ।

वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामाही गृह्णातीत्यविरोधः । पितामह्याश्चाभावे समानगोत्रजाः (१)सपिण्डाः पितामहादयो धनभाजः । भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात् । तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चेत्येवमासप्तमात्समानगोत्राणां सपिण्डानां धनग्रहणं वेदितव्यम् । तेषामभावे समानोदकानां धनसम्बन्धः । ते च सपिण्डानामुपरि सप्त वेदितव्याः । जन्मनामज्ञानावधिका वा । यथाह बृहन्मनुः—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेताचतुर्दशात् ॥ जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते' ॥ इति ।

गोत्रजाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधाः आत्मबन्धवः पितृ(२)बन्धवो मातृबन्धवश्चेति । यथोक्तम्—'आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेयाः मातृबान्धवाः' ॥ इति । तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदि(३)तव्यः । बन्धूनाम-

(१) तदभावे भगिनी 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत' इति मनूक्तेः । 'बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत्' ॥ इति बृहस्पत्युक्तेः । तस्या अपि भ्रातृगोत्रोत्पन्नत्वेन गोत्रजत्वाविशेषाश्च । सगोत्रता परं नास्ति न च सात्र धनग्रहणप्रयोजकत्वेनोक्ता इति व्य० मयूखः ।

(२) मनुस्मृतौ 'तदभावे सकुल्यः स्यादाचार्यः शिष्य एव वा' इत्यत्र सकुल्यशब्देन सगोत्रसमानोदकानां मातुलादीनां बन्धुत्रयस्य ग्रहणम् । योगीश्वरवचनेऽपि बन्धुपदेन मातुललक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्येतेति तत्पुत्राणां धनाधिकारस्ततः प्रत्यासन्नानां तेषां स नेति महदनौचित्यमापद्येत ।

(३) ननु पत्न्यादीनां सर्वेषां मृतनिरूपितानामेव धनभाक्त्वं बान्धवानामपि तथैवास्तु अतः कथं पितुर्मातुश्च बान्धवानां धनसम्बन्धः, 'पितुः पितृष्वसुः पुत्राः' इत्यादि तु संज्ञासंज्ञिसम्बन्धमात्रार्थं न धनसम्बन्धार्थमिति चेदुच्यते । विनाप्येतद्वचनं पितृमातुलपितृव्यादिष्विव पितृमातृबान्धवेष्वपि योगेनैव तच्छब्दप्रवृत्तिसम्भवे संज्ञासंज्ञिसम्बन्धबोधनानर्थक्यापत्तेः । तेन बन्धूनुद्दिश्य धनसम्बन्धविधौ पितृमातृबन्धुप्रापणेनैव वचोऽर्थवत्ता । बन्धूद्देशेनाशौचादिविधावप्येवमेवेति दिक् ।

भावे आचार्यः तदभावे शिष्यः । पुत्राभावे य: प्रत्यासन्नः सपिण्डस्तदभावे आचार्यः। आचार्याभावेऽन्तेवासीत्यापस्तम्बस्मरणात्।

शिष्याभावे सब्रह्मचारी धनभाक्। येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी । तदभावे ब्राह्मणद्रव्यं यः कश्चित् श्रोत्रियो गृह्णीयात् । 'श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्' इति गौतमस्मरणात् । तदभावे ब्राह्मणमात्रम् । यथाह मनुः (९।१८८)—'सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः । त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते' ॥ इति । न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात् (९।१८९)—'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः' इति मनुवचनात् । नारदेनाप्युक्तम्—'ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा' ॥ इति । क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत्, न ब्राह्मणः । यथाह मनुः (९।१८९)—'इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः' । (१)इति ॥१३५-१३६ ॥

(१) वीरमित्रोदय तु—अथाय मृतपुत्रधनाधिकारक्रम । तत्र प्रथम पुत्र तदभावे पौत्र तदभावे प्रपौत्र । मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकार । प्रपौत्रपर्यन्ताभावे पत्नी । सा च मासभर्तृदाया भर्तृकुले तदभावे पितृकुले वा समाश्रिता सती शरीररक्षार्थं भर्तृदाय भुञ्जीत । तथा भर्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्वीत । न तु सर्वं धनवत्स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता । तत्र प्रथम कुमारी तदभावे वाग्दत्ता तदभावे पोढा । सा च पुत्रवती सम्भावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ । वन्ध्या विधवा च पुत्रहीना नाधिकारिणी । तदुभयाभावे दौहित्र । तदभावे पिता तदभावे भ्राता । तत्रापि प्रथम सोदर तदभावे वैमात्रेय । मृतस्य भ्रातृसंसृष्टत्वे तु सोदरमात्रविषये प्रथम संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदर । एव वैमात्रेयमात्रविषये प्रथम संसृष्टवैमात्रेय तदभावे चासंसृष्टवैमात्रेय । यदा तु द्वौ संसृष्टौ तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातृणामभावे भ्रातृपुत्र । तत्रापि प्रथम सोदरभ्रातृपुत्र तदभावे वैमात्रेयभ्रातृपुत्र । संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथम संसृष्टसोदरभ्रातृपुत्र तदभावे चासंसृष्टसोदरभ्रातृपुत्र । वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथम संसृष्टवैमात्रेयभ्रातृपुत्र । तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्र । यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्ट तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे तु भ्रातृपौत्र । तत्रापि भ्रातृवत् सोदरासोदरक्रम संसर्गासंसर्गक्रमश्च बोध्य । तदभावे पितृदौहित्र । स च सोदरभगिनीपुत्र तदभावे वैमात्रेयभगिनीपुत्रश्च । तदभावे पितु सहोदर । तदभावे पितुर्वैमात्रेय । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकार । तदभावे पितामहदौहित्र तत्रापि पितृसोदरभगिनीपुत्र वैमात्रेयभगिनीपुत्रश्च । तत्प्रमाणप्रपितामहदौहित्राधिकारोऽप्येवम् । तदभावे पितामह । तदभावे पितामही । तदभावे पितामहसोदरभ्रातृवैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्रा क्रमेणाधिकारिण । एतावत्पर्यन्ताना

( वी० मि० ) गृहस्थस्य धनग्राहिणः कथयित्वा वानप्रस्थादेस्तानाह—

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ॥
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥ १३७ ॥

अर्थस्य निचयं कुर्यात् कृतमाश्वयुजे त्यजेत।

इति वचनाद्वानप्रस्थस्य यद्रिक्थं,

योगसंभारभेदांश्च गृह्णीयात्पादुके तथा।

इति वचनाद्यतेः रिक्थं, आच्छादनार्थं नैष्ठिकब्रह्मचारिणो यत् वस्त्रादि रिक्थं तद्भागिन आचार्यादयः क्रमेण पूर्वाभावे पर इति क्रमेण भवन्ति। आचार्यो गुरुः, सच्छिष्य आत्मश्रवणधारणादिक्षमः शिष्यः, एकतीर्थी एकस्माद्गुरोर्गृहीतविद्यः स एव च धर्माचरणे भ्राता पितृतुल्यस्य गुरोरेकत्वात् ॥ १३७ ॥

( मिता० ) पुत्राः पौत्राश्च दायं गृह्णन्ति तदभावे पत्न्यादय इत्युक्तं, इदानीं तदुभयापवादमाह—

वानप्रस्थेति। वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्यः सच्छिष्यो धर्मभ्रात्रेकतीर्थी च रिक्थस्य धनस्य भागिनः। ब्रह्मचारी नैष्ठिकः उपकुर्वाणस्य तु धनं मात्रादय एव गृह्णन्ति। नैष्ठिकस्य तु धनं तदपवादत्वेनाचार्यो गृह्णातीत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः। दुर्वृत्तस्याचार्यादेरपि भागानर्हत्वात्। वानप्रस्थस्य धनं धर्मभ्रात्रेकतीर्थी गृह्णाति। धर्मभ्रा·

---

धनिभोग्यपिण्डदातृणां त्वभावे धनिदेयपिण्डभोक्तृणां मातुलादीनामधिकारस्तदभावे धनिमातृष्वस्रीयस्याधिकारः। तदभावे मातुलपौत्राणां क्रमेणाधिकारः। तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातृणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः। तदभावे पुनरूर्ध्वतनसकुल्यानां धनिदेयलेपभोक्तृणां वृद्धप्रपितामहादिसन्ततीनामासत्तिक्रमेणाधिकारः। तदभावे समानोदकानामधिकारः। तेषामभावे चाचार्यस्य तदभावे शिष्यस्य तदभावे सहवेदाध्यायिब्रह्मचारिणोऽधिकारः। तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः। उक्तपर्यन्तानां सर्वेषां संबन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात्। ब्राह्मणधनं तु श्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः। एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरो वानप्रस्थं एकतीर्थसेवी गृह्णीयात्। तथा यतिधनं सच्छिष्यः। नैष्ठिकब्रह्मचारिणो धनमाचार्यः। उपकुर्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादिति ज्ञेयम्।

ता प्रतिपन्नो भ्राता, एकतीर्थी एकाश्रमी, धर्मभ्राता चासावेकतीर्थी च धर्मभ्रात्रेकतीर्थी । एतेषामाचार्यादीनामभावे पुत्रादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति । ननु 'अनंशास्त्वाश्रमान्तरगताः' इति वसिष्ठस्मरणादाश्रमान्तरगतानां रिक्थसम्बन्ध एव नास्ति कुतस्तद्विभागः । न च नैष्ठिकस्य स्वार्जितधनसम्ब(१)न्धो युक्तः । प्रतिग्रहादिनिषेधात् । 'अनिचयो भिक्षुः' इति गौतमस्मरणात् भिक्षोरपि न स्वार्जि(२)तधनसम्बन्धसम्भवः । उच्यते—वानप्रस्थस्य तावत् 'अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा । अर्थस्य निचयं कुर्यात्कृतमाश्वयुजि त्यजेत्' ॥ इति वचनाद्धनसम्बन्धोऽस्त्येव । यतेरपि—'कौपीनाच्छादनार्थं (३)वा वासोऽपि बिभृयाद्यतः । योगसम्भारभेदांश्च गृह्णीयात्पादुके तथा' ॥ इत्यादिवचनाद्वस्त्रपुस्तकसम्बन्धोऽस्त्येव । नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसम्बन्धोऽस्त्येवेति तद्विभागकथनं युक्तमेव ॥ १३७ ॥

( वी० मि० ) अपुत्रस्य स्वर्यातस्य पत्न्यादिर्धनभागित्युक्तमपवदति—

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ॥
दद्यादपहरेच्चांऽशं जातस्य च मृतस्य च ॥ १३८ ॥
अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ॥
असंसृष्टयपि (४)चाऽऽदद्यात् संसृष्टो नान्यमातृजः ॥ १३९ ॥

संसृष्टी—

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाऽथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

इति बृहस्पतिनोक्तः संसृष्टधनवान् पुत्रहीनस्याऽपरस्य संसृष्टिनो मृतस्यांऽशमपहरेत् गृह्णीयात् न तु संसृष्टिनः पत्न्यादिः । जातस्य संसृष्टिमरणकाले गर्भस्थस्य पश्चादुत्पन्नस्य तु संसृष्टिपुत्रस्य तत्पितृसम्बन्धिनमंशं दद्यात् । यस्य तु सोदरो वैमात्रेयश्च संसृष्टी तस्य सोदर एव संसृष्टी धनं हरेन्नान्योदर्यः संसृष्टी । अत्र

(१) सम्बन्धः प्रतिग्रहादि घ । (२) धनसम्भव घ. ।
(३) हि वासोऽपि विभृयाद्यथा क । (४) वा—इति मु० पु० पाठः ।

हेतुरसंसृष्टयपि संसृष्टसोदर एव पत्नीदुहितृहीनस्य धनं गृह्णाति, न तु तत्सत्त्वेऽन्यमातृज इति । तथा च संसृष्टत्वाविशेषेऽपि सम्बन्धसान्निध्यकृतोऽयं विशेष इति भावः । अपिचेत्यनेनाऽविभक्तस्य भ्रातुः सोदरस्य सत्वे पत्न्यादिर्धनं नाऽऽदद्यादिति प्राग्लिखितवसिष्ठवचनसिद्धमपवादं समुच्चिनोति । आद्येन तुशब्देन पत्न्यादेर्धनहारित्वं, द्वितीयेन पितृव्यादिसंसृष्टिनो धनहारित्वं, तृतीयेनाऽविभक्तवैमात्रेयस्य धनहारित्वाभावं व्यवच्छिनत्ति । चकारैः पत्न्यादिसत्त्वेऽपि संसृष्टिनो वैमात्रेयेसंसृष्टिसत्त्वे सोदरसंसृष्टिन एव, संसृष्टिसत्त्वेऽपि संसर्गोत्तरजातसंसृष्टिपुत्रस्य ऋणप्रदानं समुच्चिनोति ॥ १३८—१३९ ॥

( मिता० ) इदानीं स्वर्यातस्य पुत्रस्य पत्न्यादयो धनभाज इत्यस्यापवादमाह—

संसृष्टिन इति । विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं तदस्यास्तीति संसृष्टी । संसृष्टत्वं च न येन केनापि किं तु पित्रा भ्राता पितृव्येण वा । यथाह बृहस्पतिः—'विभ(१)क्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः । पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते' ॥ इति । तस्य संसृष्टिनो मृतस्यांशं विभागं विभागकाले अविज्ञातगर्भायां भार्यायां पश्चादुत्पन्नस्य पुत्रस्य संसृष्टी दद्यात् । पुत्राभावे संसृष्टयेवापहरेद् गृह्णीयान्न पत्न्यादिः ॥

( मिता० ) संसृष्टिनस्तु संसृष्टीत्यस्यापवादमाह—

सोदरस्येति । संसृष्टिनः संसृष्टीत्यनुवर्तते । अतश्च सोदरस्य संसृ(२)ष्टिनो मृतस्यांशं सोदरः संसृष्टी संसृष्टानुजातस्य सुतस्य दद्यात् । तदभावे (३)अपहरेदिति पूर्ववत् सम्बन्धः । एवं च सोदरासोदरसंसर्गे सोदरसंसृष्टिनो धनं सोदर एव संसृष्टी गृह्णाति न भिन्नोदरः संसृष्टयपीति पूर्वोक्तस्यापवादः ॥ १३८ ॥

---

(१) अत्र वाक्ये पितृभ्रातृपितृव्यैरेव सह संसृष्टता नान्येन । वचनेऽनुपादानादिति मिताक्षरादिषु विभागकर्तृसामानाधिकरण्येनैव सेति युक्तम् । पित्रादिपदानि तु विभागकर्तृमात्रोपलक्षकाणि 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदी' तिवत् । अन्यथा वाक्यभेदात् । तेन पत्नीपितामहभ्रातृपौत्रपितृव्यपुत्रादिभिरपि सह संसृष्टता भवति । विभक्तो य एकत्र स्थितः स संसृष्ट इति सामानाधिकरण्याद्विभक्तभ्रात्रोः पुत्रादीनां न संसर्गः । विद्यमानं भावि वा धनमावयोः पुनर्विभागावधि साधारणमित्याकारिका बुद्धिरिच्छा वा संसर्गः । व्य. मयूखः ।

(२) संसृष्टिनो धनं घ. । (३) दिति सम्बन्धः घ. ।

( मिता० ) इदानीं संसृष्टिन्यपुत्रे स्वर्याते संसृष्टिनो भि(१)न्नोदरस्य सोदरस्य चासंसृष्टिनः सद्भावे कस्य धनग्रहणमिति विवक्षायां द्वयोर्विभज्य ग्रहणे कारणमाह—

अन्योदर्य इति । अन्योदर्यः सापत्नो भ्राता संसृष्टी धनं हरेत् न पुनरन्योदर्यो धनं हरेदसंसृष्टी । अनेनाऽन्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वं धनग्रहणे (२)कारणमुक्तं भवति । असंसृष्टीत्येतदुत्तरेणापि सम्बध्यते । असंसृष्ट्यपि संसृष्टिनो धनमाददीत । कोऽसावित्यत आह—संसृष्ट इति । संसृष्टः एकोदरसंसृष्टः सोदर इति यावत् । अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तं, संसृष्ट इत्युत्तरेणापि सम्बध्यते । तत्र च संसृष्टः संसृष्टीत्यर्थः । नान्यमातृजः । अत्रैवशब्दाध्याहारेण व्याख्यानं कार्यम्, संसृष्ट्यप्यन्यमातृज एव संसृष्टिनो धनं नाददीतेति । एवं चासंसृष्टस्यपि वाऽऽद्याद्वित्यपिशब्दश्रवणात् संसृष्टो नान्यमातृज एवेत्यवधारणनिषे(३)धाच्चासंसृष्टसोदरस्य संसृ(४)ष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्तव्यमित्युक्तं भवति । द्वयोरपि धनग्रहणकारणस्यैकैकस्य सद्भावात् । एतदेव स्पष्टीकृतं मनुना ( ९।२१० )—'विभ(५)क्ताः सहजीवन्तो विभजेरन् पुनर्यदि' इति संसृष्टिविभागं प्रक्रम्य ( ९।२११।२१२ )—'येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः । म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ सोदर्या विभजेयुस्तं समेत्य सहिताः समम् । भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः' ॥ इति वदता । येषां भ्रातृणां मध्ये ज्येष्ठः कनिष्ठो वा मध्यमो वांशप्रदानतोंऽशप्रदाने सार्वविभक्तिकस्तसिः, विभागकाले इति यावत् । हीयेत स्वांशात् भ्रश्येत आश्रमान्तरपरिग्रहेण ब्रह्महत्यादिना वा म्रियेत वा तस्य भागो न लुप्यते । अतः पृथगुद्धरणीयो न, संसृष्टिन एव गृह्णीयुरित्यर्थः । तस्योद्धृतस्य विनियोगमाह—सोदर्या विभजेयुस्तमिति । तमुद्धृतं भागं सोदर्याः सहोदरा असंसृष्टा अपि समेत्य देशान्तरगता अपि समागम्य सहिताः संभूय (६)समं न न्यूनाधिकभावेन । ये च भ्रातरो भिन्नोदराः संसृष्टास्ते च सना-

(१) भिन्नोदरस्यासंसृष्टिन सोदरस्य च घ. । (२) मुक्तं । असंसृष्टी घ. ।
(३) निषेधादसंसृष्ट घ । (४) संसृष्टिनो भिन्नोदरस्य च घ. ।
(५) समृष्टा सहजीवन्त इत्यपि पाठान्तरम् । (६) समम न्यूनाधिक घ ।

भयो भगिन्यश्च विभ(१)जेयुः । समं विभज्य गृह्णीयुरिति स्पष्टोऽर्थः ॥ १३९ ॥

( वी० मि० ) पुत्रपत्न्यादिसंसृष्टिनां धनग्रहणापवादं क्वचिदाह—

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ॥
अन्धोऽचिकित्स्यरोगाद्या भर्तव्यास्ते (२)निरंशकाः ॥ १४० ॥

अथशब्दाज्जन्मावधिबधिरसमुच्चयः । आद्यपदेन मूकपितृद्विट्प्रभृतीनां समुच्चयः ।

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

इति मनुवचनात् ।

पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥

इति नारदवचनाच्च । तज्जः पतितादुत्पन्नः, पङ्गुः पादविकलः, जडो मन्दान्तःसंज्ञः ॥ १४० ॥

( मिता० ) पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तं तस्यापवादमाह—

क्लीब इति । क्लीबस्तृतीयाप्रकृतिः । पतितो ब्रह्महादिः । तज्जः पतितोत्पन्नः । पङ्गुः पादविकलः । उन्मत्तकः वातिकपैत्तिकश्लैष्मिक(३)सांनिपातिकग्रहावेशलक्षणैरुन्मादैरभिभूतः । जडो विकलान्तःकरणः हिताहितावधारणाक्षम इति यावत् । अन्धो नेत्रेन्द्रियविकलः । अचिकित्स्यरोगोऽप्रतिसमाधेयय(४)क्ष्मादिरोगग्रस्तः । आद्यशब्देनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । यथाह वसिष्ठः—'अनंशास्त्वाश्रमान्तरगताः' इति । नारदेनापि—'पितृद्विट् पतितः षण्ढो यश्च स्या(५)दौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजः कुतः' ॥ इति । मनुरपि (९।२०१)—'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च

(१) समं विभजयुः ख. । (२) भर्तव्याः स्युर्निरं०—इति मुद्रितपुस्तके पाठः ।

(३) संनिपातग्रहा ख. । (४) क्षयादिरोग. घ. ।

(५) स्यादपयात्रितः इति पाठः । अपयात्रितो राजद्रोहाद्यपराधेन बन्धुभिर्घटस्फोटादिना बहिष्कृत इति मदनः । व्यवसायार्थं नावादिना समुद्रमध्ये द्वीपान्तरं गत इति युक्तम् । 'द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसङ्ग्रहः' इति तस्य कलौ संसर्गनिषेधात् । राजद्रोहादौ घटस्फोटबहिष्कारयोरविधानाच्च । व्य. म. ।

केचिन्निरिन्द्रियाः' ॥ इति। निरिन्द्रियो निर्गतमिन्द्रियं यस्माद्व्याध्यादिना स निरिन्द्रियः। एते क्लीबादयोऽनंशाः रिक्थभाजो न भवन्ति। केवलमशनाच्छादनदानेन पोषणीया भवेयुः। अभरणे तु पतितत्वदोषः। (९।२०२)—'सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्' ॥ इति मनुस्मरणात्। अत्यन्त यावज्जीवमित्यर्थः। एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वमुपपन्नं न पुनर्विभक्तस्य। विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव। 'विभक्तेषु सुतो जातः सवर्णायां विभागभाक्' इत्यस्य समानन्यायत्वात्। पतितादिषु तु पुंलिङ्गत्वमविवक्षितम्। अतश्च पत्नीदुहितृमात्रादीनामप्युक्तदोष(१)दुष्टानामनंशित्वं वेदितव्यम् ॥ १४० ॥

( वी०मि० ) क्लीबादीनामनंशित्वात्तत्पुत्राणामप्यनंशित्वं तत्कन्यापत्न्यादिभरणानावश्यकत्वं च प्रसक्तमपाकरोति—

औरसाः क्षेत्रजा(२)स्तेषां निर्दोषाः भागहारिणः ॥
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥ १४१ ॥
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ १४२ ॥

तेषां क्लीबादीनां क्षेत्रजाः क्लीबादीनामौरसाश्च पुत्राः क्लीबत्वादिदोषशून्याश्चेत्तदा भागहारिणो भवन्ति। एषां क्लीबादीनां क्षेत्रजाः क्लीबभिन्नाः कन्यका यावद्भर्तृसात्कृता वराय प्रतिपादिता स्तावत्प्रकर्षेण स्वकन्यादिसादृश्येन भर्तव्याः। एषां क्लीबादीनां येऽपितश्च क्लीबत्वानिश्चयवशाद्विवाहिता साधुवृत्तयः सदाचाराश्चेत्सदा भर्तव्याः। व्यभिचारिण्यः तथाऽतिशयेन प्रतिकूलाश्च निर्वास्या गृहान्निष्कासनीयाः। आद्येन चकारेण संस्कर्तव्या इति, द्वितीयेन सुरापानादिकारिण्य इति समुच्चीयते। एवकारेण भर्तव्यत्वं व्यवच्छिनत्ति ॥ १४१–१४२ ॥

(मिता०) क्लीबादीनामनंशित्वात्तत्पुत्राणामप्यनंशित्वे प्राप्ते इदमाह—

औरसा इति। एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा

(१) दोषाणामनंशित्वं घ। (२) क्षेत्रजास्तेषां—इति मु०पु० पाठ।

अंशग्रहणविरोधिक्लैब्यादिदोषरहिता भागहारिणोऽंशग्राहिणो भवन्ति। तत्र क्लीबस्य क्षेत्रजः पुत्रः संभवत्यन्येषामौरसा अपि। औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् ॥

(मिता०) क्लीबादिदुहितॄणां विशेषमाह—

सुता इति। एषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता भवन्ति तावद्भरणीयाः, चशब्दात्संस्कार्याश्च ॥ १४१ ॥

(मिता०) क्लीबादिपत्नीनां विशेषमाह—

अपुत्रा इति। एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्तव्या भरणीयाः। व्यभिचारिण्यस्तु निर्वास्याः। प्रतिकूलास्तथैव च निर्वास्या भवन्ति। भरणीयाश्चाव्यभिचारिण्यश्चेत् न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्तव्यम् ॥ १४२ ॥

( वी०मि० ) एवं विस्तरेण पुरुषधनविभागमभिधाय 'मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वय' इति प्रागुक्ते मातुर्धनं निरूपयितुं स्त्रीधनं निरूपयति—

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ॥
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ १४३ ॥
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ॥

पित्रादिभिः प्रीत्या दत्तं, अध्यग्नि अग्निसन्निधौ विवाहकाले यदुदासीनादप्युपागतं, आधिवेदनिकमग्रे 'अधिविन्नस्त्रियै दद्या'दिति वक्ष्यमाणं, बन्धुभिर्मातुलादिभिः प्रीत्या दत्तं शुल्कं कन्यावरदेयत्वेन पित्रादिभिर्व्यवस्थापितं धनं, अन्वाधेयकम्—

विवाहात् परतो यच्च लब्धं भर्तृकुलात् स्त्रिया।
अन्वाधेयं तु तत् द्रव्यं लब्धं पितृकुलात्तथा ॥

इति कात्यायनेनोक्तम्। एतत्सर्वं स्त्रीधनं सौदायिकं परिकीर्तितम्। आद्यपदेन भर्तृमरणात्संक्रान्तस्य धनस्य सङ्ग्रहः। चकारेण तत्परिगृहीतवसनालङ्कारादिसमुच्चयः। एवकारेण भर्त्रसाधारणस्वत्वस्य धनस्य व्यवच्छेदः ॥

(मिता०) 'विभजेरन्सुताः पित्रो'रित्यत्र स्त्रीपुंधनविभागं संक्षेपेणाऽभिधाय पुरुषधनविभागो विस्तरेणाऽभिहितः। इदानीं स्त्रीधनविभागं

विस्तरेणाभिधास्यंस्तत्स्वरूपं तावदाह—

पितृमातृपतीति । पित्रा मात्रा पत्या भ्रात्रा च यद्दत्तं यच्च विवाहकालेऽग्नावधिकृत्य मातुलादिभिर्दत्तं आधिवेदनिकं अधिवेदननिमित्तं 'अधिविन्नस्त्रियै दद्यात्' इति वक्ष्यमाणम् । आद्यशब्देन रिक्थक्रयसंविभागपरिग्रहाधिगमप्राप्तं यत्तत्स्त्रीधनं मन्वादिभिरुक्तम् । स्त्रीधनशब्दश्च यौगिको न पारिभाषिकः । योगसंभवे परिभाषाया अयुक्तत्वात् । यत्पुनर्मनुनोक्तम् (९।१९४)—'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्' ॥ इति स्त्रीधनस्य षड्विधत्वं तन्न्यूनसंख्याव्यवच्छेदार्थं नाधिकसंख्याव्यवच्छेदाय । अध्यग्न्यादिस्वरूपं च कात्यायनेनाभिहितम्—'विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ । तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥ यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥ प्रीत्या दत्तं तु यत्किंचिच्छ्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते । ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा । भ्रा-(१)तुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम्' ॥ इति ॥ १४३ ॥

(मिता०) किंच—

बन्धुदत्तमिति । बन्धुभिः कन्याया मातृबन्धुभिः पितृबन्धुभिश्च यद्दत्तं शुल्कं(२)यद् गृहीत्वा कन्या दीयते । अन्वाधेयकं परिणयनादनु पश्चादाहितं दत्तम् । उक्तं च कात्यायनेन—'विवाहात्परतो यच्च लब्धं भर्तृकुलात्स्त्रिया । अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा' ॥ इति । स्त्रीधनं परिकीर्तितमिति गतेन सम्बन्धः ॥

( वी०मि० ) एवं स्त्रीधननिरूपणेन मातृधनं निरूप्याप्रसूताया मृतापितृकन्यापुत्रायाश्च स्त्रिया जीवत्प्रतियोगित्वमातृत्वाभावासन्नं को हरेदित्यत्राह—

अप्रजा(३)यामतीतायां बान्धवास्तदवाप्नुयुः ॥ १४४ ॥

(१) भर्तुः सकाशादिति पाठः ।

(२) वीरमित्रोदयस्त्वेवमव्याख्यत्—गृहोपस्करवाह्यदोह्याभरणदासादीनां यन्मूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्याभरणरूपेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्यातम् । उभयथापि पित्रादीनां कन्याप्रदानोपाधित्वेन गृह्यते । 'यदानेतु भर्तृगृहे शुल्कं तत्परिकीर्तितम्' इति व्याससोक्तं वा भर्तृगृहगमनार्थमुत्कोचार्दि यद्दत्तं तच्छुल्कमित्यर्थ इति । अन्यथा तत्स्वामित्वेन स्त्रीधनत्वव्यपदेशानुपपत्ते

(३) अतीतायामप्रजसि—इति मुद्रितपुस्तके पाठः ।

अप्रजःस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ॥
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ १४५ ॥'

अप्र(१)जायां विद्यमानदुहितृपुत्रान्यतरकभिन्नायामतीतायां तत्स्त्रीधनं बान्धवास्तत्सम्बन्धिनोऽवाप्नुयुः । अत्र चायं विशेषः—ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेष्वप्रजायाः स्त्रिया धनं भर्तुः । शेषेषु चतुर्षु विवाहेषु, अपिशब्दाद्विवाहाभावेऽपि तद्धनं पितृगामि । यदि तु प्रसूता भवति पुत्रदुहितृविहीना च तदा दुहितॄणां च तद्धनं स्वं भवति । तदभावे च दौहित्रः प्रागन्वयपदेनाभिहितो धनभाक् । प्राक्लिखितमनुवचनेन दुहितृसत्त्वेऽपि दौहित्राणां किञ्चिदंशबोधनात् । अत्र ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्—

अतीतायामप्रजसि भर्तुरेव तदिष्यते ।

इति मनुवचनाद्गान्धर्वविवाहे भर्तृपित्रोः समो भाग इति ध्येयम् ॥ १४४-१४५ ॥

(मिता०) एवं स्त्रीधनमुक्तं तद्विभागमाह—

अतीतायामिति । तत्पूर्वोक्तं स्त्रीधनमप्रजासि अनपत्यायां दुहितृदौहित्रीदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां मृतायां बान्धवा भर्त्रादयो वक्ष्यमाणा गृह्णन्ति ॥ १४४ ॥

(मिता०) सामान्येन बान्धवा धनग्रहणाधिकारिणो दर्शिताः, इदानीं विवाहभेदेनाधिकारिभेदमाह—

अप्रजःस्त्रीति । अ(२)प्रजःस्त्रियाः पूर्वोक्तायाः ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्यात्वं प्राप्ताया अतीतायाः पूर्वोक्तं धनं प्रथमं भर्तुर्भवति । त(३)दभावे तत्प्रत्यासन्नानां सपिण्डानां भवति । शेषेष्वासुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजःस्त्रीधनं पितृगामि । माता च पिता च पितरौ तौ गच्छतीति पितृगामि । एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम् । तदभावे तत्प्रत्यासन्नानां धनग्रहणम् । सर्वेष्वेव विवाहेषु प्रसूतापत्यवती चेद् दुहितॄणां तद्धनं

(१) अप्रजाया–इत्यारभ्य तत्स्त्रीधनं–इत्यन्तो ग्रन्थः ख० पुस्तके नास्ति ।

(२) अप्रजसः स्त्रियाः घ. ।

(३) भर्त्रभावतत्प्रत्यासन्नानां सपिण्डानां पित्रभावे च तत्प्रत्यासन्नानां सपिण्डानामिति, तत्रापि तेनास्याः प्रत्यासन्नास्तत्प्रत्यासन्नाः तद्द्वारा तत्कुले प्रत्यासन्ना इति यावत् ।

भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते, साक्षाद् दुहितॄणां 'मातुर्दुहितर शेषम्' इत्यत्रोक्तत्वात्। अतश्च मातृधन मातरि वृत्ताया प्रथम दुहितरो गृह्णन्ति। तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। तदभावे च परिणीता। तत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति। तदभावे प्रतिष्ठिता। यथाह गौतम —'स्त्रीधन दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति। तत्र चशब्दात्प्रतिष्ठितानां च। अप्रतिष्ठिता अनपत्या निर्धना वा। एतच्च शुल्कव्यतिरेकेण। शुल्क तु सोदर्याणामेव। 'भगिनीशुल्क सोदर्याणामूर्ध्वं मातु' इति गौतमवचनात्। सर्वासा दुहितॄणामभावे दुहितृदुहितरो गृह्णन्ति। 'दुहितॄणा प्रसूता चेत्' इत्यस्माद्वचनात्। तासा भिन्नमातृकाणा विषमाणा समवाये मातृद्वारेण भागकल्पना। 'प्रतिमातृतो वा स्व(१) वर्गेण भागविशेष' इति गौतमस्मरणात्। दुहितृदौहित्रीणा समवाये दौहित्रीणा किंचिदेव दातव्यम्। यथाह मनु (९।१९३)—'यास्तासा स्युर्दुहितरस्तासामपि यथार्हत। मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम्'॥ इति। दौहित्रीणामप्यभावे दौहित्रा धनहारिण। यथाह नारद —'मातुर्दुहितरोऽभावे दुहितॄणा तदन्वय' इति। तच्छब्देन संनिहितदुहितृपरामर्शात्। दौहित्राणामभावे पुत्रा गृह्णन्ति। ताभ्य ऋतेऽन्वय इत्युक्तत्वात्। मनुरपि दुहितॄणा पुत्राणा च मातृधनसम्बन्ध दर्शयति (९।१९२)—'जनन्या सस्थिताया तु सम सर्वे सहोदरा। भजेरन् मातृक रिक्थ भगिन्यश्च सनाभय'॥ इति। मातृक रिक्थ सर्वे सहोदरा सम भजेरन् सनाभयो भगिन्यश्च सम भजेरन्निति सम्बन्ध। न पुन सहोदरा भगिन्यश्च सभूय भजेरन्निति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीते। विभाग(२)कर्तृत्वान्वयेनापि चशब्दोपपत्ते। यथा देवदत्त कृषिं कुर्याद् यज्ञदत्तश्चेति। समग्रहणमुद्धारविभागनिवृत्त्यर्थम्। सोदरग्रहण भिन्नोदरनिवृत्त्यर्थम्। अनपत्यहीनजातिस्त्रीधन तु भिन्नोदराप्युत्तमजातीयसपत्नीदुहिता गृह्णाति। तदभावे तदपत्यम्। यथाह मनु (९।१९८)—'स्त्रियास्तु यद्भवेद्वित्त पित्रा दत्त कथंचन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्'॥ इति। ब्राह्मणीग्रहणमुत्तमजात्युप

(१) स्ववर्गे भाग ग स्वस्ववर्गेण घ। (२) कर्तृत्वेनान्वयनापि घ।

लक्षणम् । अतश्चाऽनपत्यवैश्याधनं क्षत्रियाकन्या गृह्णाति । पुत्राणामभावे पौत्राः पितामहीधनहारिणः । 'रिक्थभाज ऋणं प्रतिकुर्युः' इति गौतमस्मरणात् । 'पुत्रपौत्रैर्ऋणं देयम्' इति पौत्राणामपि पितामह्यृ(१)णापाकरणेऽधिकारात् । पौत्राणामप्यभावे पूर्वोक्ता भर्त्रादयो वान्धवा धनहारिणः ॥ १४५ ॥

(वी० मि०) स्त्रीधनप्रसङ्गेन वाग्दत्तकन्याया असुरादिविवाहार्थं पित्रादिगृहीते धने व्यवस्थामाह—

दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ॥
मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम् ॥ १४६ ॥

कन्यां वाचा दत्त्वा हरन् तस्मै अप्रयच्छन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्ड्यः । व्ययं विवाहार्थं वरेण व्ययितं धनं सोदयं वृद्धिसहितं दद्यात् । वाग्दानकर्ता कन्याया दैवान्मरणे उभयोः स्वस्य कन्यापित्रादेश्च परिशोध्य स्वदत्तं वस्त्रालङ्कारहिरण्यादि वर आददद्यात्, न तु वृद्धिम् । परिशोधनाभिधानेन कन्यापितृव्ययितादतिरिच्यमानत्वाभावे वरेण न ग्राह्यमिति दर्शितम् । चकारेण व्ययदानदण्डयोः साहित्यमभिप्रैति ॥ १४६ ॥

(मिता०) स्त्रीधनप्रसङ्गेन वाग्दत्ताविषये किंचिदाह—

दत्त्वेति । कन्यां वाचा दत्त्वापहरन्द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः । एतच्चापहारकारणाभावे । सति तु कारणे 'दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्' इत्यपहाराभ्यनुज्ञानान्न दण्ड्यः । यच्च वाग्दाननिमित्तं वरेण स्वसम्बन्धिनां कन्यासम्बन्धिनां वोपचारार्थं धनं व्ययीकृतं तत्सर्वं सोदयं सवृद्धिकं कन्यादाता वराय दद्यात् ॥

(मिता०) अथ कथंचिद्वाग्दत्ता संस्कारात्प्राङ् म्रियेत (२)तदा किं कर्तव्यमित्यत आह—

मृतायामिति । यदि वाग्दत्ता मृता तदा यत्पूर्वमङ्गुलीयकादि (३)शुल्कं वरेण दत्तं तद्वर आददीत । परिशोध्योभयव्ययम् उभयोरात्मनः कन्यादातुश्च यो व्ययस्तं परिशोध्य विगणय्यावशिष्टमाददीत । यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा [४]क-

(१) पितामह्यृणापाकरणाधिकारात ख. । (२) म्रियेत तदा ग. घ. ।
(३) शुल्कं वा वरेण ख. । (४) क्रमागतं ख. ।

मायातं तत्सहोदरा भ्रातरो गृह्णीयुः । 'रिक्थं मृतायाः कन्याया गृह्णीयुः सोदरास्तदभावे मातुस्तदभावे पितु' इति बौधायनस्मरणात् १४६॥

( वी० मि० ) मृतायाः स्त्रीधनहारी निरूपितः, प्राक् जीवन्त्या धनहारिणमाह—

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ॥
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥ १४७ ॥

संप्रतिरोधके बन्दीकरणादौ । चकारेण भर्तुर्धनाभावे सतीति सर्वत्रान्वित विशेषण समुच्चिनोति । शेषं सुगमम् ॥ १४७ ॥

( मिता० ) मृतप्रजास्त्रीधनं भर्तृगामीत्युक्तम् । इदानीं जीवन्त्याः सप्रजाया अपि स्त्रियाः धनग्रहणे क्वचिद्भर्तुरभ्यनुज्ञामाह—

दुर्भिक्ष इति । दुर्भिक्षे कुटुम्बभरणार्थे, धर्मकार्ये अवश्यकर्तव्ये, व्याधौ च, सं(१)प्रतिरोधके बन्दिग्रहणनिग्रहादौ द्रव्यान्तररहितः स्त्रीधन गृह्णन् भर्ता न पुनर्दातुमर्हति । प्रकारान्तरे(२)णापहरन् दद्यात् । भर्तृव्यतिरेकेण जीवन्त्याः स्त्रिया धनं केनापि दायादेन न ग्रहीतव्यम् । ( मनु. ८।२९ )—'जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः । ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः' ॥ इति दण्डविधानात् । तथा ( मनुः ९.२०० )—'पत्यौ जीवति यः स्त्रीभिर लङ्कारो (३)धृतो भवेत् । न तं भजेरन् दायादा भजमानाः पतन्ति ते' ॥ इति दोषश्रवणाच्च ॥ १४७ ॥

( वी० मि० ) आधिवेदनिकं स्त्रीधनं प्रागुक्तं विवृणोति—

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ॥
न दत्तं स्त्रीधनं यस्यै दत्तं त्वर्धं प्रकीर्तितम् ॥ १४८ ॥

अधिविन्ना कृतसापत्न्या या स्त्री तस्यै आधिवेदनिकं सपत्नीपरिणयननिमित्तं धनं परिणीयमानायै दीयमानेन धनेन सममदत्तस्त्रीधनायै दद्यात् । स्त्रीधने प्रागेव दत्ते तु परिणीयमानायै दीयमानस्य धनस्यार्धमधिविन्नायै देयत्वेन प्रकीर्तितम् ॥ १४८ ॥

( मिता० ) आधिवेदनिकं स्त्रीधनमुक्तं तदाह—

अधिविन्नेति । यस्या उपरि विवाहः साधिविन्ना सा चासौ स्त्री चेत्यधिविन्नस्त्री तस्यै अधिविन्नस्त्रियै आधिवेदनिकमधिवेदननिमित्तं

(१) संप्रतिरोधक इति व्याधिविशेषण कार्यानुष्ठानबाधक इति च तदर्थ इत्याह वाचस्पति ।

(२) णापहृत दद्यात् घ । (३) धृतो भर्त्रादिना तस्यै दत्त स तया धृत इत्यर्थ ।

धनं समं यावदधिवेदनार्थं व्ययीकृतं तावद्दद्यात् । यस्यै भर्त्रा(१)श्वशुरेण वा स्त्रीधनं न दत्तम् । दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्धं दद्यात् । अर्धशब्दश्चात्र समविभागवचनो न भवति । अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः ॥ १४८ ॥

( वी० मि० ) एवं विभागमुक्त्वा तस्य सन्देह निर्णायकानाह—

विभागनिन्हवे ज्ञातिबन्धुसाक्ष्याभिलेखितैः ॥
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ १४९ ॥

नाऽऽवयोर्विभागो जात इत्येवं विभागस्याऽपलापे ज्ञातिभिः पितृकुलप्रभवैः, बन्धुभिस्तद्भिन्नैः सम्बन्धिभिः साक्षिभिः प्रागुक्तलक्षणैः अभिमतार्थसाधकैर्लेखितैर्विभागपत्रैर्गृहैः क्षेत्रैश्च यौतकैर्यौतकवदसाधारणीभूतैर्विभागस्य भावना पूर्वमुत्पादना प्राड्विवाकादिना ज्ञेया निर्णेया । चकारेण—

पृथगायव्ययधनाः कुसीदं च परस्परम् ।
वणिक्पथं च ये दद्युर्विभक्तास्ते न संशयः ॥

इत्यादिनारदोक्तविभागलिङ्गानां दिव्यस्य च सङ्ग्रहः ॥ १४९ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने दायविभागप्रकरणम् ॥

---

( मिता० ) एवं विभागमुक्त्वा इदानीं तत्सन्देहे निर्णयहेतूनाह—

विभागनिह्नव इति । विभागस्य निह्नवे अपलापे ज्ञातिभिः पितृबन्धुभिर्मातृबन्धुभिः मातुलादिभिः साक्षिभिः पूर्वोक्तलक्षणैर्लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्यः । तथा यौ(२)तकैः पृथक्कृतैर्गृहक्षेत्रैश्च । पृथक्कृष्यादिकार्यप्रवर्तनं पृथक्पञ्चमहायज्ञादिधर्मानुष्ठानं च नारदेन विभागलिङ्गमुक्तम्—'वि(३)भागधर्मसन्देहे दायादानां विनिर्णयः । ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥ भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते । विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्' ॥ इति । तथापराण्यपि विभागलिङ्गानि (४)तेनैवोक्तानि—'साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च । विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथंचन' ॥ इति ॥ १४९ ॥

इति रिक्थविभागप्रकरणम् ।

---

(१) श्वशुरेण भर्त्रा वा ख. । (२) यौतकैः पृथक्कृतैर्गृहक्षेत्रैरिति विशेषणविशेष्यभावः व्य. म. ।
(३) इदं पद्यं घ. पुस्तकेऽधिकं । (४) तेनैव नारदेन ।

( वी० मि० ) अथ सीमाविवादे निर्णयमाह—

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ॥
गोपाः सीमाकृषाणाश्च सर्वे च वनगोचराः ॥ १५० ॥
नयेयुरेते सीमानं स्थूला(१)ङ्गारतुषद्रुमैः ॥
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षितम् ॥ १५१ ॥

ग्रामादिद्वयसम्बन्धिनः सीम्नो मर्यादाविवादे सामन्तादय एते प्रागुक्ताः स्थूलाङ्गारादिभिरुपलक्षितं चिन्हितं सीमानं नयेयुर्निश्चिनुयुः। सामन्तस्वरूपमाह कात्यायनः—

प्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य च ॥

यः परिवृतो वेष्टयित्वा चतुर्दिक्षु स्थितो ग्रामः स ग्रामस्य सामन्तः । एवं क्षेत्रगृहयोरपीत्यर्थः । ग्रामादिपदेन तत्र स्थिता लोका उच्यन्ते । स्थविरो वृद्धाः । आदिपदेन मौलोद्धृतयोर्ग्रहणम् । वृद्धादिलक्षणं कात्यायनेनोक्तम्—

निष्पाद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः ॥
ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥
उपश्रवणसंभोगकार्याख्यानोपचिन्हिताः ।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः ॥

गोपा गोचारकाः, सीमाकृषाणाःसीमासन्निहितक्षेत्रकर्षकाः,सर्वे वनचारिणो व्याधाःशाकुनिकवनपालकादयः।चकाराभ्यां कैवर्तोञ्छवृत्तिप्रभृतीनां मूलखातकव्यालग्राहिप्रभृतीनां च समुच्चयः। तथा च मनुः—

व्याधान् शाकुनिकान् गोपान् कैवर्तान्मूलखातकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥

इति। स्थूलोऽङ्गारोऽग्नेरुच्छिष्टं काष्ठम्। स्थलाङ्गारेति क्वचित्पाठः, तदा स्थलमुन्नतो भूप्रदेश इति व्याख्येयम्। तुषा धान्यत्वच , द्रुमाः प्लक्षादयः, सेतुर्बन्धः, वल्मीको मध्यदेशे दिवाउर्मांदु इति प्रसिद्धः उच्चप्रदेशः, निम्नं गर्तादि, अस्थि प्रसिद्धं, चैत्यो ग्रामोपलक्षकवृक्षः ।

---

(१) स्थलाङ्गारेति मुद्रितपुस्तके पाठः ।

आद्यपदेन शर्करादिसङ्ग्रहः। तदाह मनुः—

अश्मनोऽस्थीनि गोवालांस्तथा भस्म कपालिकाः।
करीषमिष्टकाङ्गारान् शर्करा वालुकास्तथा॥
यानि चैवंप्रकाराणि कालाद् भूमिर्न भक्षयेत्।
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत्॥१५०-१५१॥

(मिता०) अधुना सीमाविवादनिर्णय उच्यते—

सीम्न इति, नयेयुरिति च। ग्रामद्वयसम्बन्धिनः क्षेत्रस्य सीम्नि विवादे तथैकग्रामान्तर्वर्तिक्षेत्रमर्यादाविवादे च सामन्तादयः स्थलाङ्गारादिभिः पूर्वक्तैः सीमालक्षणैरुपलक्षितां चिह्नितां सीमां नयेयुर्निश्चिनुयुः। सीमा क्षेत्रादिमर्यादा। सा चतुर्विधा जनपदसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति। सा च यथासम्भवं पञ्चलक्षणा। तदुक्तं नारदेन—'ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता। राजशासननीता च सीमा पञ्चविधा स्मृता'॥ इति। ध्वजिनी वृक्षादिलक्षिता, वृक्षादीनां प्रकाशत्वेन ध्वजतुल्यत्वात्। मत्स्यिनी सलिलवती, मत्स्यशब्दस्य स्वाधारजललक्षकत्वात्। नैधानी निखाततुषाङ्गारादिमती, तेषां निखातत्वेन निधानतुल्यत्वात्। भयवर्जिता अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्तिनिर्मिता। राजशासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता। एवंभूतायां षोढा विवादः सम्भवति। यथाह कात्यायनः—'आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च। अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः'॥ इति। तथा हि—ममात्र पञ्चनिवर्तनाया भूमेरधिका भूरस्तीति केनचिदुक्ते पञ्चनिवर्तनैव नाधिकेत्याधिक्ये विवादः। पञ्चनिवर्तना मदीया भूमिरित्युक्तेन ततो न्यूनैवेति न्यूनतायाम्। पञ्चनिवर्तनो ममांश इत्युक्ते अंश एव नास्तीत्यस्तिनास्तित्वविवादः सम्भवति। मदीया भूः प्रागविद्यमानभोगैव भुज्यते इत्युक्तेन सन्तता चिरन्तन्येव मे भुक्तिरित्यभोगभुक्तौ विवादः। इयं मर्यादेयं वेति सीमाविवाद इति षट्प्रकार एव विवादः सम्भवति। षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि निर्णीयमानत्वात्सीमानिर्णयप्रकरणे तस्यान्तर्भावः। समन्ताद्भवाः सामन्ताः। चतसृषु दिक्ष्वन(१)न्तरग्रामादयस्ते च प्रतिसीमं व्यवस्थिताः। 'ग्रामो ग्रामस्य सामन्तः क्षेत्रं

(१) अनन्तरा ग्रामादयः घ.।

क्षेत्रस्य कीर्तितम् । गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि' ॥ इति । यथा । सामन्तग्रहणं च तत्संसक्तायुपलक्षणार्थम्, उक्तं च कात्यायनेन-'संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः । संसक्तसक्तसक्ताः (१)पद्मकाराः प्रकीर्तिताः' ॥ इति । स्थविरा वृद्धाः । आदिग्रहणेन मौलोद्धृतयोर्ग्रहणम् । वृद्धादिलक्षणं च तेनैवोक्तम्—'निष्पाद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः । वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः ॥ ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः । तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥ उपश्रवणसंभोगकार्याख्यानोपचिह्निताः । उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः' ॥ इति । गोपाः गोचारकाः । सीमाकृषाणाः मनुनोक्ताः ( ८।२६० ) 'व्याधाञ्छाकुनिकान्गोपान् कैवर्तान्मूलखातकान् । व्यालग्रा(२)हानुञ्छवृत्तीनन्यांश्च वनगोचरान्' ॥ इति । स्थलमुन्नतो भूप्रदेशः । अङ्गारोऽग्नेरुच्छिष्टम् । तुषा धान्यत्वचः । द्रुमा न्यग्रोधादयः । सेतुर्जलप्रवाहबन्धः । चैत्यं पाषाणादिबन्धः । आदिशब्देन वेणुवालुकादीनां ग्रहणम् । एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि । यथाह मनुः ( ८।२४६-२४८ ) 'सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् । शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥ गुल्मान्वेणूंश्च विविधाञ्छमीवल्लीस्थलानि च । शरान् (३)कुब्जकगुल्मांश्च यथा सीमा न नश्यति ॥ तडागान्युदपानानि वाप्यः प्रस्रवणानि च । सीमासन्धिषु कार्याणि देवतायतनानि च' ॥ इति प्रकाशरूपाणि । ( मनुः ८।२४९, २५२ )-'उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् । सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥ अश्मनोऽस्थीनि गोवालांस्तुषान्भस्म कपालिकाः । करीषमिष्टकाङ्गारशर्कराबालुकास्तथा ॥ यानि चैवंप्रकाराणि कालाद् भूमिर्न भक्षयेत् । तानि सन्धिषु सीमाया अप्रकाशानि कारयेत् ॥ एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः' ॥ इति प्रच्छन्नलिङ्गानि । एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामन्तादि(४)प्रदर्शितैः सीमां प्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा ॥ १५०-१५१ ॥

*(वी० मि०) यदा तूक्तचिह्नानि न सन्ति विद्यमानान्यपि वा लि*

---

( १ ) पद्माकरा ग० । ( २ ) ग्राहांस्तुञ्छवृत्तान् ग ।
( ३ ) कुब्जकगुल्मांश्च ग घ । ( ४ ) प्रकाशितैः घ ।

ङ्गलिङ्गतया सन्दिग्धानि तदा निर्णयोपायमाह—

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशाऽपि वा ॥
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥१५२॥

सामन्ता उक्तलक्षणाः, समग्रामाः प्रत्यासन्नग्रामिणाश्चत्वारोऽष्टौ दश वा स्वयं निश्चितसीमानो रक्तमाल्यवस्त्रवन्तो मूर्धधृतक्षितिखण्डाः सन्तः सीमां नयेयुर्निश्चयेयुः । अपिवेत्यव्ययसमुदायो विकल्पार्थः । सामन्ता वेति वाकारेण साक्षिणोऽभिप्रेति । यदाह मनुः—

साक्षिप्रत्यय एवासीत्सीमावादविनिर्णये ।

इति । तथा—

साक्ष्यभावे च चत्वारो ग्रामाः सीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥

कात्यायनः—

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥
संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ॥

तथा साक्षिणः प्रक्रम्य स एव—

तेषामभावे सामन्तमौलवृद्धोद्धृतादयः ।

मनुः—

शिरोभिस्ते गृहीतोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्ब्रूयुस्ते तु समञ्जसम् ॥

एवमभिधानानन्तरं विपक्षं यावद्राजदैवकं सामन्तादीनां यदि न भवति तदा राज्ञा तत्कृता सीमा निश्चेतव्या ।

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं राजदैवकमिष्यते ॥

इति कात्यायनवचनात् ॥ १५२ ॥

( मिता० ) यदा पुनश्चिह्नानि न सन्ति विद्यमानानि वा लिङ्गालिङ्गतया सन्दिग्धानि तदा निर्णयोपायमाह—

सामन्ता इति । सामन्ताः पूर्वोक्तलक्षणाः । समग्रामाश्चत्वारोऽष्टौ दशापि वेत्येवं समसंख्याः प्रत्यासन्नग्रामिणाः । रक्तस्रग्विणो रक्ताम्बरधराः मूर्ध्न्यारोपितक्षितिखण्डाः सीमानं नयेयुः प्रदर्शयेयुः ।

सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्यभिप्रायम् । यथाह मनुः (८।२५३)—'साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णये' इति । तत्र च साक्षिणां निर्णेतृत्वं मुख्यम् । तदभावे सामन्तानाम् । तदुक्तम् । ( मनुः ८।२५८ )—'साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः । सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ' ॥ इति । तदभावे तत्संसक्तादीनां निर्णेतृत्वम् । यथाह कात्यायनः—'स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् । तत्संसक्तैस्तु (१)कर्तव्य उद्धारो नात्र संशयः ॥ संसक्तस(२)क्तदोषे तु तत्संसक्ताः प्रकीर्तिताः । कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता' ॥ इति । सामन्ताद्यभावे मौलादयो ग्राह्याः । 'तेषामभावे सामन्तमौलवृद्धोद्धृतादयः । स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणा' ॥ इति कात्यायनेन क्रमविधा(३)नात् । एते च सामन्तादयः संख्यागुणातिरेकेण सम्भवन्ति । 'सामन्ताः साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः । द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः' ॥ इति स्मरणात् । ते च साक्षिणः सामन्तादयश्च स्वैः स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः । ( मनुः ८।२५६ )—'शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः । सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसम्' ॥ इति स्मरणात् । नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य । 'एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् । रक्तमाल्याम्बरधरो भूमिमादाय मूर्धनि' ॥ इति नारदेनैकस्याप्यनुज्ञानात् । योऽयं—'नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि । गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता' ॥ इत्येकस्य निषेधः स उभयानुमतधर्मविद्व्यतिरिक्तविषय इत्यविरोधः । स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञाने उपायविशेषो नारदेनोक्तः—'निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु । तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात्' ॥ इति । निम्नगया नद्या अपहृतेनापहरणेनोत्सृष्टानि स्वस्थानात्प्रच्युतानि नष्टानि वा लिङ्गानि यासु मर्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा प्रत्यर्थिसमक्षमप्रतिपन्नाया अस्मार्तकालोप(४)लक्षितभुक्तेर्वा निश्चिनुयुः । बृहस्पतिना चात्र विशेषो

(१) कुर्वीत घ । (२) दोषेषु म । (३) क्रमाभिधनात् घ । (४) पलक्षितैर्भुक्तेर्वा घ ।

दर्शितः—'आगमं च प्रमाणं च भोगकालं च नाम च। भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः'॥ इति। एते च (१)साक्षिसामन्तादयः शपथैः श्राविताः सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः। यथाह मनुः (८।२५४)—'ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः'॥ इति। तेच पृष्टाः साक्ष्यादयः ऐकमत्येन समस्ताः सीम्नि निर्णयं ब्रूयुः। तैर्निर्णीतां सी(२)मां तत्प्रदर्शितसकललिङ्गयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत्। उक्तं च मनुना (८।२६१)—'ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम्। निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः'॥ इति। एतेषां साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणदिनादारभ्य यावत्त्रिपक्षं राजदैविकं व्यसनं चेन्नोत्पद्यते तदा तत्प्रदर्शनात्सीमानिर्णयः। अयं च राजदैविकव्यसनावधिः कात्यायनेनोक्तः—'सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च। त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते'॥ इति॥ १५२॥

(वी०मि०) यदा त्वमीषां त्रिपक्षाभ्यन्तरे रोगादिर्दृश्यते तदा तेषां दण्डः कार्य इत्याह—

अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम्॥

अनृते तेषां मिथ्यावचने निमित्तभूते राज्ञा पृथक् प्रत्येकं मध्यमसाहसं पञ्चपणशतानि दण्ड्यास्ते सामन्तदयः॥

(मिता०) यदा त्वमीषामुक्तसाक्ष्यवचसां त्रिपक्षाभ्यन्तरे रोगादि दृश्यते, अथवा प्रतिवादिनिर्दिष्टाभ्यधिकसंख्यागुणसाक्ष्यन्तरविरुद्धवचनता तदा ते मृषाभाषितया दण्डनीयास्तदाह—

अनृत इति। अनृते मि(३)थ्यावादने निमित्तभूते सति सर्वे सामन्ताः प्रत्येकं मध्यमसाहसेन चत्वारिंशदधिकेन पणपञ्चशतेन दण्डनीयाः। सामन्तविषयता चास्य (४)साक्षिमौलादीनां स्मृत्यन्तरे दण्डान्तरविधानादवगम्यते। यथाह मनुः (८।२५७)—'यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्'॥ इति। नारदोऽपि-'अथ चेदनृतं ब्रूयुः सामन्ताः सीमानिर्णये। सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम्'॥ इति

(१) साक्षिणः सामन्तादयः घ.। (२) सीमानं घ.।
(३) मिथ्यावदने ग.। (४) साक्ष्यमौलत्वादीनां घ.।

सामन्तानां मध्यमसाहसं दण्डमभिधाय—'शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि । प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम्' ॥ इति तत्संसक्तादिषु प्रथम साहसमुक्तवान् । मौलादीनामपि तमेव दण्डमाह—'मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक् । विनेयाः प्रथमेनैव साहसेनाऽनृते स्थिताः' ॥ इति । आदिशब्देन गोपशाकुनिकव्याधवनगोचराणां ग्रहणम् । यद्यपि शाकुनिकादीनां पापरतत्वाल्लिङ्गप्रदर्शन एवोपयोगो न साक्षात्सीमानिर्णये तथापि लिङ्गदर्शन एव मृषाभाषित्वसम्भवाद्दण्डविधानमुपपद्यत एव । अनृते तु पृथक् दण्ड्या इत्येतद्दण्डविधानमज्ञानविषयम् । 'बहूनां तु गृहीतानां न सर्वे निर्णयं यदि । कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम्'॥ इति ज्ञानविषये साक्ष्यादीनां कात्यायनेन दण्डान्तरविधानात् । तथा साक्षिवचनभेदेऽप्ययमेव दण्डस्तेनैवोक्तः—'कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्' इति । एवमज्ञानादिनाऽनृतवदने साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्तयितव्यः । 'अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत्' इत्युक्त्वा 'त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह । संमिश्रय कारयेत्सीमामेवं धर्मविदो विदुः' ॥ इति निर्णयप्रकारस्तेनैवोक्तः ॥

अभावे ज्ञातृचिन्हानां राजा सीम्नः प्रवर्तिता ॥ १५३ ॥

(वी०मि०) यदि ज्ञातारश्चिह्नानि वा न सन्ति तदा राजा स्वेच्छानुसारेण सीम्नः प्रवर्तिता प्रवर्तयिता । अन्तर्भावितोऽत्र ण्यर्थः । यदाह नारदः—

> यदा तु न स्युर्ज्ञातारः सीमायां न च लक्षणम्।
> तदा राजा द्वयोः सीमां नयेद् दृष्ट्वा च तत्स्वयम् ॥

मिताक्षरायां विवादास्पदीभूतभूमेः समविभागेन राज्ञा सीमां प्रवर्तयेदिति व्याख्यातम् । बृहस्पतिः—

> अन्यग्रामात्समाहृत्य दत्ताऽन्यस्य यदा मही ।
> महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥
> नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
> अन्यथा न भवेल्लाभो नराणां राजदैवतः ॥
> क्षयोदयौ जीवनं च दैवराजवशान्नृणाम् ।
> तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
क्षयोदये न चाल्पासौ चालयन् दण्डमर्हति ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ।
नदीतीरे प्रकुरुते तस्य तां न विचालयेत् ॥

कूलपातक्रमे या भूः सोत्तरं स्वामिन इत्यर्थः ।

क्षेत्रं समस्तमुल्लङ्घ्य भूमिः स्वस्था यदा भवेत् ।
तदा स्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

क्षेत्रोल्लङ्घनेन नदीसञ्चारे लङ्घिता भूः पूर्वस्वामिन एव तिष्ठतीत्यर्थः ॥ १५२ ॥

( मिता० ) यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति तदा कथं निर्णय इत्यत आह—

असाव इति । ज्ञातॄणां सामन्तादीनां लिङ्गादीनां च वृक्षादीनामभावे राजैव सीम्नः प्रवर्तिता प्रवर्तयिता । अन्तर्भावितोऽत्र ण्यर्थः । ग्रामद्वयमध्यवर्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्य अस्येयं भूरस्येयमित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्यात् । यदा तस्यां भूमावन्यतरस्योपकारातिशयो दृश्यते तदा तस्यैव ग्रामस्य सकला भूः समर्पणीया । यथाह मनुः ( ८।२६५ )—'सीमायामविषह्यायां स्वयं राजैव धर्मवित् । प्रदिशेद् भूमिमेकेषामुपकारादिति स्थितिः' ॥ इति ॥ १५३ ॥

(वी०मि०) ग्रन्थलाघवार्थमुक्तविधिमन्यत्राऽतिदिशति—

आरामायतनग्रामनिपानोद्यानवेश्मसु ॥
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ १५४ ॥

आराम उपवनं, आयतनं पलालकूटादिस्थापनार्थं विभक्तो भूप्रदेशः, ग्रामो नगरादेरप्युपलक्षकः, निपानं कूपवाप्यादि, उद्यानं क्रीडार्थभूप्रदेशः, वेश्म गृहं, वर्षाम्बुप्रवाहः वर्षणजलसमुद्भूतप्रणाली, एषु एष एव सीमायामुक्त एव विधिर्निश्चयप्रकारः । आदिपदेन क्षेत्रद्वारादिसङ्ग्रहः । अत्र बृहस्पतिः—

निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥
वातायनाः प्रणाल्यश्च तथा निर्व्यूहवेदिका ।
चतुःशाले स्यन्दनिकाः प्राङ्निविष्टा न चालयेत् ॥

प्रणाली जलमार्गः, निर्य्यूहवेदिका नागदन्तवेदिका, चतुःशालं चतुर्द्वारं गृहं, स्यन्दनिका पटलप्रान्तः ओसारीति प्रसिद्धा। कात्यायनः—

वृष्टिपातं प्रणालं च न कुर्यात्परवेश्मनि ।

बृहस्पतिः—

वर्चःस्थानं व्रम्हचर्यं गर्तो विष्ठानुसेवनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कदाचन ॥

तथा—

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

कात्यायनः—

विण्मूत्रोदकचक्रं च वह्निदवभ्रं निवेशयेत् ।
अरत्निद्वयमुत्सृज्य परकुड्यां निवेशयेत् ॥

चक्रं तैलादियन्त्रम् । तथा—

सीमामध्ये तु जातानां वृक्षाणां सेवयोर्द्वयोः ।
फलं पुष्पं च संजातं क्षेत्रस्वामिषु निर्दिशेत् ॥

द्वयोः क्षेत्रयोः स्वामिषु ।

अन्यक्षेत्रेषु जातानां शाखा यत्राऽन्यसंस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥

शाखा इति शेषः ॥ १५४ ॥

( मिता० ) असत्यामप्यतद्बाधाशङ्कायामस्याः स्मृतेर्न्यायमूलतां दर्शयितुमतिदेशमाह—

आरामेति । आरामः पुष्पफलोपचयहेतुर्भूभागः । आयतनं निवेशनं (१)पलालकूटाद्यर्थं विभक्तो भूप्रदेशः । ग्रामः प्रसिद्धः । ग्रामग्रहणं च नगराद्युपलक्षणार्थम् । निपानं पानीयस्थानं वापीकूपप्रभृतिकम् । उद्यानं क्रीडावनम् । वेश्म गृहम् । एतेष्वारामादिष्वयमेव सामन्तसाक्ष्यादिलक्षणो विधिर्ज्ञातव्यः । तथा प्रवर्षणोद्भूतजलप्रवाहेषु अनयोर्गृहयोर्मध्येन जलौघः प्रवहति अनयोर्वेत्येवंप्रकारे विवादे आदिग्रहणात्प्रासादादिष्वपि प्राचीन एव विधिर्वेदितव्य' । तथा च कात्यायनः-'क्षेत्रकूपतडागानां केदारारामयोरपि । गृहप्रासादावसथनृपदेवगृहेषु च' ॥ इति ॥ १५४ ॥

---

(१) पलालादिकूटाद्यर्थं ग ।

(वी०मि०) सीमाप्रसङ्गेन तदतिक्रमे दण्डमभिदधानस्तमेव दण्डमन्यत्रापि ग्रन्थलाघवार्थमाह—

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ॥
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ १५५ ॥

क्षेत्रादिव्यवच्छेदिका साधारणी भूर्मर्यादा तस्याः प्रकर्षेण भेदने सीमाया अतिक्रमणे तद्बहिः कर्षणादौ क्षेत्रस्य परकीयस्य भयादिप्रदर्शनेन हरणे च यथाक्रममधमोत्तममध्यमसाहसा दण्डाः कार्याः । तथापदेन क्षेत्रस्येत्यत्रान्वितेन गृहारामादिसङ्ग्रहः । तुशब्देनाऽनुलक्ष्यभेदनव्यवच्छेदः ॥ १५५ ॥

( मिता० ) सीमानिर्णयमुक्त्वा तत्प्रसङ्गेन मर्यादाप्रभेदनादौ दण्डमाह—

मर्यादाया इति । अनेकक्षेत्रव्यवच्छेदिका (१)साधारणा भूर्मर्यादा तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमा(२)मतिलङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेण अधमोत्तममध्यमसाहसा दण्डा वेदितव्याः । क्षेत्रग्रहणं चात्र गृहारामाद्युपलक्षणार्थम् । यदा पुनः स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा द्विशतो दमो वेदितव्यः । यथाह मनुः ( ८।२६४ )—'गृहं तडागमारामं क्षेत्रं वा भीषया हरन् । शतानि पञ्च दण्ड्यः स्यादज्ञानाद् द्विशतो दमः' ॥ इति । अपह्रियमाणक्षेत्रादिभूयस्त्वपर्यालोचनया कदाचिदुत्तमोऽपि दण्डः प्रयोक्तव्यः । अत एवाह—'वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः' ॥ इति ॥ १५५ ॥

( वी० मि० ) क्षेत्रस्य हरणे दण्ड इत्युक्तमपवदति--

न निषेधोऽल्पबाधस्तु सेतुः कल्याणकारकः ॥
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥ १५६ ॥

यदि क्षेत्रस्वामिनोऽल्पा बाधा पीडा यतस्तादृशः सेतुर्बन्धः कल्याणस्य परकीयस्य बहूपकारस्य कारकः स्यात्तदा क्षेत्रस्वामिना तत्र सेतुकर्ता न निषेध्यः न निवारणीयः । परभूमिं हरन्नपीत्युभयत्राऽन्वितम् । स्वल्पक्षेत्रस्य बहूदककूपो न निषेध्यः । तुशब्देन सम्पूर्णक्षेत्रदूषकतया बहुबाधस्य सेतोर्व्यवच्छेदः ॥ १५६ ॥

---

(१) साधारणी ग. । (२) सीमामनतिलङ्घ्य घ. ।

( मिता० ) यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनयाऽर्थदानेन वा लब्धानुज्ञो निर्मातुमिच्छति तन्निषेधतः क्षेत्रस्वामिन एव दण्ड इत्याह—

न निषेध्य इति । परकीयां भूमिमपहरन्नाशयन्नपि सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः स चेदीषत्पीडाकरो बहूपकारकश्च भवति । कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पबाधो बहूदकत्वेन (१)कल्याणकारकश्चातो बहूदको नैव निवारणीयः । कूपग्रहणं च वापीपुष्करिण्याद्युपलक्षणार्थम् । यदा पुनरसौ स(२)र्वक्षेत्रव्यापितया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया वाल्पोपकारकस्तदासौ निषेध्य इत्यर्थादुक्तं भवति । सेतोश्च द्वैविध्यमुक्तं नारदेन—'सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च । तोयप्रवर्तनात्खेयो बन्ध्यः स्यात्तन्निवर्तनात्' ॥ इति । यदा त्वन्यनिर्मितं सेतुं भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्यात् । यथाह नारदः—'पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः । सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥ मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे । राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम्' इति ॥ १५६ ॥

( वी०मि० ) परक्षेत्रे सेतुं कूपं वा चिकीर्षता प्रार्थनयाऽर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्य स कार्य इत्यभिप्रेत्याह—

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ॥
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १५७ ॥

तदुत्पन्ने फले सस्यवृद्ध्यतिशये क्षेत्रस्वामिनो भोगो न तु कर्तुः । यदि तु स्वामी नास्ति तदा महीपतेस्तत्फलभोगः । एवकारः स्वामिन इत्यनान्वेति, तेन सेतुकर्तुर्व्यवच्छेदः ॥ १५७ ॥

(मिता०) क्षेत्रस्वामिनं प्रत्युपदिष्टम् । इदानीं सेतोः प्रवर्तयितारं प्रत्याह—

स्वामिन इति । क्षेत्रस्वामिनमनभ्यु(३)पगम्य तदभावे राजानं वा यः परक्षेत्रे सेतुं प्रवर्तयत्यसौ फलभाङ् न भवत्यपितु तदुत्पन्ने फले क्षेत्रस्वामिनो भोगस्तदभावे राज्ञः । तस्मात्प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वानुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीय इति तात्पर्यार्थः ॥ १५७ ॥

---

(१) बहूपकारको नैव घ । (२) समग्रक्षेत्र घ । (३) भ्युपगम्य घ. ।

( वी०मि० ) क्षेत्रप्रसङ्गेनाह—

फालाहतमपि क्षेत्रं यो न कुर्यान्न(१) कारयेत् ॥
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ १५८ ॥

अहमिदं क्षेत्रं कृषामीति क्षेत्रस्वामिनेऽङ्गीकृत्य फालाहतमपि-हलेन विदारितमपि क्षेत्रं यः पश्चात् स्वयं न करोति न वा परद्वारा कारयति स कृष्टस्य क्षेत्रस्य यावदुचितं फलं सामन्तादिकल्पितं प्रदाप्यः । तच्च क्षेत्रं तस्मादाच्छिद्य अन्येन कर्षकेण कारयेत् ॥ १५८ ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुरामसूरिसूनुसकलविद्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाख्याने श्रीयाज्ञवल्क्यव्याख्याने सीमाविवादप्रकरणम् ॥

(मिता०) क्षेत्रस्वामिना सेतुर्न प्रतिषेध्य इत्युक्तम् । इदानीं तस्यैव प्रसक्तानुप्रसक्त्या कञ्चिद्विध्यन्तरमाह—

फालाहतमिति । यः पुनः क्षेत्रस्वामिपार्श्वे अहमिदं क्षेत्रं कृषामीत्यङ्गीकृत्य पश्चादुत्सृजति न चान्येन कर्षयति तच्च क्षेत्रं यद्यपि फालाहतं ईषद्धलेन विदारितं न सम्यग्बीजावापार्हं तथापि तस्याकृष्टस्य फलं यावत्तत्रोत्पत्त्यर्हं सामन्तादिकल्पितं तावदसौ कर्षको दापनीयः । तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्यान्येन कारयेत् ॥ १५८ ॥

इति सीमाविवादप्रकरणम् ।

---

( वी०मि० ) अथ स्वामिपालविवादप्रकरणमारभ्यते—

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ॥
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ १५९ ॥

महिषी अष्टौ माषान् दण्डनीया । सस्यनाशकारिणी. गौस्तदर्धं माषचतुष्टयं दण्डनीया । अजाविकं तु छागो मेषश्च सस्यनाशकारी तदर्धं माषद्वयं दण्डनीयमिति विपरिणामेनाऽन्वयः । अत्र महिष्या-

(१) न कुर्याद्यो न कारयेत्—इति मु० पु० पाठः ।

दीनां धनशून्यत्वेन दण्डासम्भवात्तत्स्वामी तत्पालकोऽस्तु । माषश्चात्र राजतः प्रागभिहितो राजतद्वयपरिमितो ग्राह्य ।

सौवर्णमाषकैः सस्याद्दण्डकर्मस्तु दास्यते ।
पशूनां सस्यचरणे माषैरन्यैस्तु राजतैः ॥

इति भाष्यकारवचनात् । एतच्चाऽज्ञानविषयम् । ज्ञानपूर्वे तु कात्यायनः—

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा ।
तथाऽजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥

पणः कार्षापणः । तस्य पादश्चतुर्थांशः । 'अजादेः पाददण्डेन रात्री भक्षणे द्रष्टव्य'मिति रत्नाकर ।

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाऽजाविकवत्सानां दण्डः स्यादर्धमाषिकः ॥

इति नारदवचनं तु प्ररोहयोग्यमूलावदोषभक्षणपरम् ॥ १५९ ॥

(मिता०) व्यवहारपदानां परस्परहेतु(१)हेतुमद्भावाभावात् 'तेषामाद्यमृणादानम्' इत्यादिपाठक्रमो न विवक्षित इति व्युत्क्रमेण स्वामिपालविवादोऽभिधीयते—

माषानिति । परसस्यविनाशकारिणी महिषी अष्टौ माषान् दण्डनीया । गौस्तदर्धं चतुरो माषान् । अजा मेषाश्च माषद्वयं दण्डनीयाः । महिष्यादीनां धनसम्बन्धाभावात्तत्स्वामी पुरुषो लक्ष्यते । माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः । 'माषो विंशतिमो भागः पणस्य परिकीर्तितः' इति नारदस्मरणात् । एतच्चाज्ञानविषयम् । ज्ञानपूर्वे तु 'पणस्य पादौ द्वौ गां(२) तु द्विगुणं महिषीं तथा । तथाऽजाविकवत्सानां पादो दण्ड प्रकीर्तित' ॥ इति स्मृत्यन्तरोक्तं द्रष्टव्यम् । यत्पुनर्नारदेनोक्तम्—'माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा । तथाजाविकवत्सानां दण्डः स्यादर्धमाषिक' ॥ इति, तत्पुनः प्ररोहयोग्यमूलावदोषभक्षणविषयम् ॥ १५९ ॥

भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ॥

( वी०मि० ) परक्षेत्रे सस्यं भक्षयित्वा तृप्ता अनिवारितास्तत्रैव यद्युपविशन्ति महिष्यादयस्तदा पूर्वोक्ताद् द्विगुणो दमो दण्डः कार्यः । सवत्सानां तु भक्षयित्वोपविष्टानां पूर्वोक्ताच्चतुर्गुणो दण्डः कार्यः ।

(१) हेतुमद्भाव घ । (२) गां मद्गुणं द्विगुण घ ।

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः ।

इति वचनात् ॥ १६० ॥

(मिता०) अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह—

भक्षयित्वेति । यदि पशवः परक्षेत्रे सस्यं भक्षयित्वा तत्रैवानिवारिताः शेरते तदा यथोक्ताद्दण्डाद् द्विगुणो दण्डो वेदितव्यः । सवत्सानां पुनर्भक्षयित्वोपविष्टानां यथोक्तदण्डाच्चतुर्गुणो दण्डो वेदितव्यः । 'वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः' इति वचनात् ॥

समभेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ १६० ॥

( वी०मि० ) विवीतं प्रचुरतृणं गवादिचरणस्थानं परेण रक्ष्यमाणम् । तत्र तृणभक्षकानामेषां महिष्यादीनां समं क्षेत्रं सस्यभक्षणतुल्यं दण्डनीयम् । खरश्च उष्ट्रश्च खरोष्ट्रं तन्महिषीसमं यादृशे सस्यघाते महिष्या यादृशो दण्डस्तादृशे तादृशो दण्डः खरोष्ट्रयोरपीत्यर्थः ॥ १६० ॥

(मिता०) क्षेत्रान्तरे पश्वन्तरे चातिदेशमाह—

सममिति । विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः । तदुपघातेऽपीतरक्षेत्रदण्डेन समं दण्डमेषां महिष्यादीनां विद्यात् । खराश्च उष्ट्राश्च खरोष्ट्रं तन्महिषीसमम् । महिषी यत्र यादृशेन दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम् । सस्योपरोधकत्वेन खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वाद्दण्डस्य चापराधानुसारित्वात्खरोष्ट्रमिति समाहारो न विवक्षितः ॥१६०॥

( वी०मि० ) सस्यघाते न केवलं दण्डनीयः, किन्तु क्षेत्रस्वामिने फलमपि दाप्य इत्याह—

यावत्सस्यं विनश्येत्तु क्षेत्री ता(१)वत्फलं लभेत् ॥

गोपस्ताड्यश्च गो(२)मी तु पूर्वोक्तं दण्डमर्हति ॥ १६१ ॥

यावत्सस्यं महिष्यादिभक्षणेन नश्येत्तावतः सस्यस्य समुचितं फलमुपचयं क्षेत्रस्वामी लभेत् महिष्यादिस्वामिसकाशादित्यर्थः । तुशब्देन विनष्टातिरिक्तस्य तत्क्षेत्रस्य सस्यफलं व्यवच्छिनत्ति । गोपस्तु ताड्य एव न तु क्षेत्रफलं दद्यात् । सस्यभक्षणजन्यक्षीरादेः

(१) तावत्स्यात्क्षेत्रिणः फलम् । इति मु०पु० पाठः ।

(२) गोपस्ताड्यस्तु गोस्वामी—इति क० ख० पु० पाठः ।

स्वामिनोपभोगादिति भावः । ताडनं च प्रागुक्तदण्डस्याप्युपलक्षणम् ।

या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् ।
न तत्र गोमिनो दण्डः पालस्तं दण्डमर्हति ॥

इति वचनात् । गोमी गोस्वामी । उपलक्षणं चैतत्, महिष्यादिस्वामिनामपि पूर्वोक्तं दण्डमर्हति । तुशब्देन ताडनं व्यवच्छिनत्ति ॥१६१॥

(मिता०) परस्यापिनाशे गोस्वामिनो दण्ड उक्तः । इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह—

यावदिति । सस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम् । यस्मिन्क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्विनाशितं तावत्क्षेत्रफलमेतावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः । गोपस्तु ताडनीय एव न फलं दापनीयः । गोपस्य च ताडनं पूर्वोक्तधनदण्डसहितमेव पालदोषेण सस्यनाशे द्रष्टव्यम् 'या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् । न तत्र गोमि(१)नो दण्डः पालस्तं दण्डमर्हति' ॥ इति वचनात् । गोमी पुनः स्वापराधेन सस्यनाशे पूर्वोक्तं दण्डमेवार्हति न ताडनम् । फलदानं पुनः सर्वत्र गो(२)स्वामिन एव । तत्फलपुष्टमहिष्यादिक्षीरेणोपभागद्वारेण तत्क्षेत्रफलभागित्वात् । गवादिभक्षितावशिष्टं पलालादिकं गोमिनैव ग्रहीतव्यम् । मध्यस्थकल्पित(३)मूल्यदानेन क्रीतप्रायत्वात् । अत एव नारदः—'गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते । सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥ पलालं (४)गोमिने देयं धान्यं वै कर्षकस्य तु' । इति ॥ १६१ ॥

(वी०मि०) क्षेत्रविशेषे पशुविशेषे चाऽभिहितदण्डातिक्रममपवदति—

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ॥
अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १६२ ॥
महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ॥
पाला येषां तु(५) ते मोच्या राजदैवपरिप्लुताः ॥ १६३ ॥

---

(१) गोमिनो दण्ड ख । (२) गोमिन एव ग । (३) मूल्यदानेन घ ।
(४) गोमिने देय ख । (५) पाल्ये येषां न ते—इति मु० पु० पाठः ।

मार्गे ग्रामविवीतानां समीपवर्तिस्वक्षेत्रे स्वामिनः पालस्य चा निच्छया गवादिभिर्भक्षितेऽपि दोषो गोस्वामिनः। पालस्य चाऽपराधो दण्डादिप्रयोजको न भवति। कामतो गवादीनां चारणे तु चारकश्चौर इव दण्डमर्हति। अयं च दोषाभावः क्षेत्रस्याऽनावृतत्वेऽल्पकालं तद्रक्षणे च द्रष्टव्यः।

यत्राऽपरिवृतं धान्यं विहिंस्युः पशवो यदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥

इति मनुवचनात्। 'पथि ग्रामविवीतान्ते न दोषोऽन्यवृते धान्यकाल'मिति विष्णुवचनाच्च। महोक्षो बीजसेक्ता वृषभः। उत्सृष्टपशवो वृषोत्सर्गादौ त्यक्ता वृषभवत्सरीप्रभृतयः। सूतिका प्रसवोत्तरमनिर्गतदशाहा। आगन्तुकाः स्वयूथभ्रष्टा देशान्तरादेवागताः। आदिना—

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।

इत्यादिस्मृत्यन्तरोक्ताः। मोच्याः दण्डनीयाः। येषां गवादीनां पाला राजदैवकेन परिप्लुता अस्वाधीनत्वात् ते विमोच्याः। उत्सृष्टानां स्वामिविरहेण दण्डाप्रसक्त्या दृष्टान्तार्थं तदुपादानमित्युपगन्तव्यम्। तुशब्देनोक्तातिरिक्तानां मोच्यत्वव्यवच्छेदः॥ १६२--१६३॥

(मिता०) क्षेत्रविशेषे अपवादमाह—

पथीति। पथि ग्रामसमीपवर्तिनि क्षेत्रे ग्रामविवीतसमीपवर्तिनि च क्षेत्रे अकामतो गोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः। दोषाभाव प्रतिपादनं च दण्डाभावार्थं विनष्टसस्यमूल्यदानप्रतिषेधार्थं च। कामचारे कामतश्चारणे चौरवत् चौरस्य यादृशो दण्डस्तादृशं दण्डमर्हति। एतच्चानावृतक्षेत्रविषयम्। ( मनुः ८।२३८ ) 'यत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्'॥ इति दण्डाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात्। आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोऽस्त्येव। वृतिकरणं च तेनैवोक्तम्। (मनुः ८।२३९) 'वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत्। छिद्रं निवारयेत्सर्वं श्वसूकरमुखानुगम्' ॥ इति ॥ १६२ ॥

( मिता० ) पशुविशेषेऽपि दण्डाभावमाह—

महोक्षेति। महांश्चासावुक्षा च महोक्षो वृषः सेक्ता। उत्सृष्टपशवः वृषोत्सर्गादिविधानेन देवतोद्देशेन वा त्यक्ताः। सूतिका प्रसूता अनि-

दैशाहा । आगन्तुकः स्वयूथात्परिभ्रष्टो देशान्तरागतः । एते मोच्याः परसस्यभक्षणेऽपि न दण्ड्याः । येषां च पालो न विद्यते तेऽपि दैवराजपरिप्लुताः दैवराजोपहताः सस्यविनाशकारिणो न दण्ड्याः । आदिशब्दग्रहणाद्धस्त्यश्वादयो गृह्यन्ते । ते चोशनसोक्ताः–'अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः । (१)अदण्ड्यौ काणकुब्जौ च ये शश्वत्कृतलक्षणाः ॥ अदण्ड्यागन्तुकी गौश्च सूतिका चाभि(२)सारिणी । अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च' ॥ इति । अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्ड्यत्वासंभवात् दृष्टान्तार्थमुपादानम् । यथोत्सृष्टपशवो न दण्ड्या एवं महोक्षादय इति ॥ १६३ ॥

( वी० मि० ) कस्मिन्काले पशूनामपराधे स्वामी दण्ड्यः कस्मिंश्च पाल इत्यपेक्षायां रात्रिकालीनेऽपराधे स्वामी दिवातने पाल इत्युत्तरमभिसन्धाय पालमधिकृत्य प्राह—

यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तदा ॥
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६४ ॥
पालदो(३)षाद्विनाशे तु पाले दण्डो विधीयते ॥
अर्धत्रयोदशपणः (४)स्वामिनो द्रव्यमेव च ॥ १६५ ॥

यथा प्रणादिरहिताः संख्याविशेषविशिष्टाश्च पशवः स्वामिना प्रातःकाले गोपेऽर्पितास्तथैव तान् गोपः सायं प्रत्यर्पयेत् । विधा स्वप्रमादेन मृतान् मूल्यद्वारेण चोपहरणादिना नष्टानदर्शनं प्राप्तांश्च प्रदाप्य', यदि स कृतवेतनः कल्पितवेतनः स्यात् । चौरादिहृतस्याप्यानयनाशक्यत्वे स्वामिने तन्मूल्यं द्रव्यमेव विधीयते देयतया व्यवस्थाप्यते । दोषान्मरणे चौरादिहरणे वा पशूनां पालस्य अर्धपणत्रयोदशः पणोऽर्धाधिकद्वादशपणमितो दण्डः स्वग्राह्यो राज्ञा विधीयते । आद्यचकारेण श्वभिघ्ननिपातितादिसङ्ग्रहः । तुशब्देन य

(१) अदण्ड्या काणकूटाश्च वृषाश्च कृतलक्षणा इति पाठः । कूट एकशृङ्ग । कृतलक्षण प्रततायसेन कृतलाञ्छन । (२) अभिसारिणी स्वयूथात्प्रच्युता पुन स्वयूथगामिनी ।

(३) पालदोष विनाशे तु-इति मु० पु० पाठ ।

(४) अर्धत्रयोदशपण इति अर्धरहितत्रयोदशपण सार्धद्वादशपण इति यावत् । 'तत्स्तृतीयपूर्वपदा समानाधिकरणेन समस्यन्त उत्तरपदलोपश्च' इति वार्तिकादुत्तरपदलोपी कर्मधारय । यत्तु विज्ञानेश्वरेणार्धाधिकत्रयोदशपणो दण्ड इति व्याख्यात तत् सार्धद्विमात्रादिषु अर्धत्रिमात्रादीति महाभाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम् ।

लात्कारेण गृहीत्वा चौरव्याघ्रादिकं स्वामिने कथयितुः पालस्य दण्डादिकं व्यवच्छिनत्ति । तदाहतुर्मनुनारदौ—

विक्रस्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥

बृहस्पतिश्च—

अन्यायच्छन्नविक्रोशन् स्वामिने चाऽनिवेदयेत् ।
वोढुमर्हति दोषं तं विनयं चैव राजनि ॥

द्वितीयेन चकारेण दण्डसाहित्यार्थकेन तद्विकल्पशङ्कां व्युदस्यति ॥ १६४—१६५ ॥

( मिता० ) गोस्वामिन उक्तमिदानीं गोपं प्रत्युपदिश्यते—

यथार्पितानिति । गोस्वामिना प्रातःकाले गणयित्वा यथासमर्पिताः पशवस्तथैव सायंकाले गोपो गोस्वामिने पशून् विगणय्य प्रत्यर्पयेत् । प्रमादेन स्वापराधेन मृतान्नष्टांश्च पशून् कृतवेतनः कल्पितवेतनो गोपः स्वामिने दाप्यः । वेतनकल्पना च नारदेनोक्ता—'गवां शताद्वत्सतरी धेनुः स्याद्द्वि(१)शताभृतिः । प्रतिसंवत्सरं गोपे संदोहश्चाष्टमेऽहनि' ॥ इति । प्रमादनाशश्च मनुना स्पष्टीकृतः (८।२३२) 'नष्टं जग्धं च कृमिभिः श्वहतं विषमे मृतम् । हीनं पुरुषकारेण प्रदद्यात्पाल एव तु' ॥ इति । प्रसह्य चौरै(२)रपहृतं न दाप्यः । यथाह मनुः ( ८।२३३ )—'वि(३)क्रस्य तु हृतं चौरैर्न पालो दातुमर्हति । यदि देशे च काले च स्वामिनः स्वस्य शंसति' ॥ इति । दै(४)वमृतानां पुनः कर्णादि प्रदर्शनीयम् । ( ८।२३४ ) 'कर्णौ चर्म च वालांश्च वस्ति (५)स्नायुं च रोचनाम् । (६)पशुषु स्वामिनां दद्यान्मृतेष्वङ्गा(७)नि दर्शयन्' ॥ इति मनुस्मरणात् ॥ १६४ ॥

( पिता० ) पालदोषेति । किं च पालदोषेणैव(८)पशुविनाशे अर्धाधिकत्रयोदशपणं दण्डं पालो दाप्यः । स्वामिनश्च द्रव्यं विनष्टपशुमूल्यं मध्यस्थकल्पितम् । दण्डपरिमाणार्थः श्लोकोऽन्यत्पूर्वोक्तमेव ॥ १६५ ॥

---

(१) द्विशताद् भृतिः घ.।
(२) अपहृतान् ख.।
(३) विघुष्यत्विति पाठान्तरम् ।
(४) देवराजमृतानां ख.।
(५) स्नायूनि रोचनाम् ।
(६) पशुस्वामिषु दद्यात्तु मृतेष्वङ्गानि घ.।
(७) अङ्गादि दर्शयेत् इति पाठः ।
(८) दोषेण पशु घ.।

( वी० मि० ) ननु क्षेत्रादिव्याप्ते देशे कथं गवां वृत्तिः सञ्चारणं वा स्यात सर्वत्र दण्डसंभवादत आह—

ग्रामेच्छया गोप्रचारे भूमी राजवशेन वा ॥
द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् ॥ १६६ ॥
धनुःशतं परीणाहो(१)ग्रामक्षेत्रान्तरं भवेत् ॥
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ १६७ ॥

गोप्रचारो गवां चारणार्थोऽकृष्टो भूभागो ग्रामवासिजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा परिकल्पनीयः । द्विजश्च तृणकाष्ठपुष्पाणि सर्वतोदिश परिगृहीतादपि भूभागात् स्ववत् स्वक्षेत्रादिवत् आहरेत् । एवं गवां वृत्तिमुपपाद्य सञ्चरणमुपपादयति धनुःशतमिति । चतुर्हस्तपरिमित धनुः तच्छतपरिमितं परीणाहश्चतुर्दिक्षु त्याज्या भूमिः ग्रामक्षेत्रयोरन्तरं भवेत् । खर्वटो ग्रामादुत्कृष्टो नगरादधमः । तस्य धनुःशतद्वय क्षेत्रान्तरं, नगरस्य च धनुःशतचतुष्टयं क्षेत्रान्तरं चतुर्दिक्षु त्याज्यं भवेत् । तथा च सञ्चारणावस्थानादौ गवादीनां स देश उपयुज्यते, अतो न तत्र दण्ड इति तात्पर्यम् ॥ १६६–१६७ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने स्वामिपालविवादप्रकरणम् ॥

( मिता० ) गोप्रसङ्गात् गोप्रचारमाह—

ग्रामेच्छयेति । ग्रामेच्छया ग्राम्यजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा गोप्रचारः कर्तव्यः । गवादीनां (२)चरणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः । द्विजस्तृणेन्धनाद्यभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्वतः स्ववदनिवारित आहरेत् । फलानि (३)त्वपरवृतादेव । 'गोग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानाम्' इति गौतमस्मरणात् । एतच्च परिगृहीतविषयम् । अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वासिद्धेः । यथा तेनैवोक्तम्—'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' इति । यत्पुनरुक्तम्—'तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् । अनापृच्छन्हि गृह्णानो

(१) ग्रामे क्षत्रा०–इति मु० पु० पाठ ।
(२) प्रचारणे थें ख । (३) त्वपरीवृतादेव ख ।

हस्तच्छेदनमर्हति' ॥ इति, तत् द्विजव्यतिरिक्तविषयमनापद्विषयं वा गवादिव्यतिरिक्तविषयं वेति ॥ १६६ ॥

( मिता० ) इदमपरं गवादीनां स्थानासनसौकर्यार्थमुच्यते—

धनुःशतमिति। ग्रामक्षेत्रयोरन्तरं धनुःशतपरिमितं परिणाहः। सर्वतोदि(१)शमनुप्तसस्यं कार्यम्। खर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य द्वे शतं (२)परिणाहः। नगरस्य बहुजनसंकीर्णस्य धनुषां चतुःशतपरिमितमन्तरं कार्यम् ॥ १६७ ॥

इति स्वामिपालविवादप्रकरणम।

( वी० मि० ) अथाऽस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते—

स्वं लभेताऽन्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ॥
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ १६८ ॥
नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरः ॥
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥ १६९ ॥
विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ॥
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ १७० ॥
आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ॥
पञ्चबन्धो दमस्तत्र(३) राज्ञा तेनाविभाविते ॥ १७१ ॥

स्वात्मीयं द्रव्यं अन्येनाऽस्वामिना विक्रीतं क्रेतुः सकाशात् स्वामी लभते। अस्वामिकृतविक्रयस्य क्रेतृस्वत्वाप्रयोजकत्वात्। क्रेतुश्चाऽप्रकाशेन कृते क्रये दोषो दण्डप्रयोजको भवति। प्रकाशक्रये तु न दण्डः।

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम्।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम ॥

इति मनुवचनात्। तथा हीनादसंभाव्यमानतद्द्रव्यस्वामित्वाभावात्। तथा रह एकान्ते हीनमूल्ये चाल्पतरमूल्यार्पणके क्रये क्रेता तस्करः चौरवद्दण्ड्यः। चकारेण दासादिविक्रीतसमुच्चयः। न-

(१) दिश्यनुप्तसस्यं घ.। (२) परीणाहः ख.।
(३) दमस्तस्य राज्ञे-इति मु० पु० पाठः।

दाह नारद —

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग् भवेत् ॥

नष्टस्वामिनोऽपहृतमस्वामिना द्रव्यमासाद्य क्रयेण प्राप्य क्रेता स्वामिनाभियुक्तो हर्तारं नरं राजपुरुषादिना ग्राहयेत् । तदाह नारद —

न क्रयेदागमं क्रेता शुद्धिरस्य तदागमात् ।
विपर्यये तुल्यदोषः सर्वं तद्दण्डमर्हति ॥

विपर्यये मूलनिगूहने देशकालवशेनाऽतिपत्तौ राजपुरुषाद्यसंनिधाने तु स्वयमेव क्रेता स्वाम्यभियुक्तो विक्रेतारं स्वामिनेऽर्पयेत् । अत्र हेतुः-विक्रेतुर्दर्शनात् स्वामिने प्रदर्शनात् क्रेतुः शुद्धिर्दण्डप्रयोजकापराधविरहः स्यात् । चस्त्वर्थः । एव विक्रयी तद्द्रव्यस्य । यतस्तस्मात् क्रेतृदर्शितात् स्वामी द्रव्यं क्रयविषयीभूतं क्रेता च तन्मूल्यं राजा चाऽपराधानुसारेण दण्डमवाप्नोतीत्यर्थः । अवाप्नोतीत्युक्त, तत्र स्वत्वं यदि स्वामिना साध्यते तदैवमित्याह आगमेनेति । नष्टद्रव्यं आगमेन प्रतिग्रहादिना उपभोगेन च, अतोऽन्यथा प्रमाणान्तरे वा नाष्टिकेन माध्यं स्वस्वत्वस्त्वेन साधनीयम् । तेन नाष्टिकेन स्वस्वे तत्राऽविभाविते [illegible] पञ्चबन्धः पञ्चमांशो दमो राज्ञा ग्राह्यः । पञ्चमांश इति क्वचित्पाठः । राज्ञे इति चतुर्थ्यन्तपाठे तु देय इति शेषः । अत्रेदं पर्यवसितम्-अस्वामिविक्रीतं द्रव्यं स्वामिना तदानीं विद्यमानं स्वस्वं साधनीय, क्रेत्रा च प्रकाशक्रये राजदण्डाभावार्थे शोधनीयः । स्वामिने च विक्रेता प्रदर्शनीयस्तत्सकाशात् स्वयं मूल्यं गृहीत्वा स्वामिने क्रय्यं वस्तु राज्ञे दण्डं च दापयेत् । तस्याऽऽनयनाशक्यत्वे तु न द्रव्य स्वामिने सर्वमर्धं वा दद्यात् । अप्रकाशक्रये तु दण्डमपि राज्ञे दद्यादिति । तदाह कात्यायन —

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनी ॥

बृहस्पतिः —

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः ॥

स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीयात् स्वकं धनम् ।

अथ मूलमनाहार्यमित्याद्युक्तम्, अनुवाक्यं तु विक्रेतुर्विदेशे विद्यमानत्वे सतीत्यविरोधः ॥ १६८—१७१ ॥

( मिता० ) संप्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते । तस्य च लक्षणं नारदेनोक्तम्—'निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा । विक्रीयते समक्षं यत्स ज्ञेयोऽस्वामिविक्रयः' ॥ इति, तत्र किमित्याह—

स्वमिति । स्वमात्मसम्बन्धि द्रव्यं अन्यविक्रीतमस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात् । अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । विक्रीतग्रहणं दत्ताहितयोरुपलक्षणार्थम् । (१)अस्वामिविक्रीतत्वेन तुल्यत्वात् । अत एवोक्तम्—'अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत्' इति । क्रेतुः पुनरप्रकाशिते गोपिते (२)क्रये दोषो भवति । तथा हीनात्तत्तद्द्रव्यागमोपायहीनाद्रहसि चैकान्ते संभाव्यद्रव्यादपि हीनमूल्येनाल्पतरेण च मूल्येन क्रये वेलाहीने वेलया हीनो वेलाहीनः क्रयो रात्र्यादौ कृतस्तत्र च क्रेता तस्करो भवति तस्करवद्दण्डादिभाग्भवतीत्यर्थः । यथोक्तम्—'द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् । प्रकाशे क्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात्' ॥ इति ॥ १६८ ॥

( मिता० ) स्वाम्यभियुक्तेन क्रेत्रा किं कर्तव्यमित्यत आह—

नष्टेति । नष्टमपहृतं वान्यदीयं क्रयादिना प्राप्य हर्तारं विक्रे(३)तारं नरं ग्राहयेत् चौरोद्धरणकादिभिः आत्मविशुद्ध्यर्थं राजदण्डाप्राप्त्यर्थं च । अथाविदितदेशान्तरं गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तेर्विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनं नाष्टिकस्य समर्पयेत, तावतैवासौ शुद्धो भवतीति श्रीकराचार्येण व्याख्यातं तदिदमनुपपन्नम् । 'विक्रेतुर्दर्शनाच्छुद्धिः' इत्यनेन पौनरुक्त्यप्रसङ्गात् । अतोऽन्यथा व्याख्यायते नष्टापहृतमिति । नाष्टिकं प्रत्ययमुपदेशः । नष्टमपहृतं वात्मीयद्रव्यमासाद्य क्रेतुर्हस्तस्थं ज्ञात्वा तं हर्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत् । देशकालातिक्रमे स्थानपालाद्यसंनिधाने तद्वि(४)ज्ञापनकालात्प्राक् पलायनशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्पयेत् ॥ १६९ ॥

---

(१) अस्वामिक्रीतेन ज. । (२) क्रये घ. । (३) विक्रेतारं ग्राहयेत् ग. ।
(४) तद्विज्ञापकात्प्राक् घ. ।

( मिता० ) प्राहिते हर्तरि किं कर्तव्यमित्यत आह—

विक्रेतुरिति । यद्यसौ गृहीतः क्रेता न मयेदमपहृतमन्यसकाशात्क्रीतमिति वक्ति तदा तस्य क्रेतुर्विक्रेतुर्दर्शनमात्रेण शुद्धिर्भवति । न पुनरसावभियोज्यः । किं तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः । यथाह बृहस्पतिः—'मूले समाहृते क्रेता नाभियोज्यः कथञ्चन । मूलेन सह वादस्तु नाष्टिकस्य विधीयते' ॥ इति । तस्मिन् विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदा तस्य नष्टापहृतस्य गवादिद्रव्यस्य यो विक्रयी विक्रेता तस्य सकाशात्स्वामी नाष्टिकः स्वीयं द्रव्यमवाप्नोति । नृपश्चापराधानुरूपं दण्डं, क्रेता च मूल्यमवाप्नोति । अथासौ देशान्तरगतस्तदा योजनसंख्यया आनयनार्थं कालो देयः । 'प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् । मूलानयनकालश्च देयस्तत्राध्वसंख्यया' ॥ इति स्मरणात् । अथाविज्ञातदेशतया मूलमाहर्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति । 'असमाहार्यमूलस्तु क्रयमेव विशोधयेत्' इति वचनात् । यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूलं च न प्रदर्शयति तदा स एव दण्डभाग्भवति—इति । 'अनुपस्थापयेन्मूलं क्रयं वाप्यविशोधयन् । यथाभियोगं धनिने धनं दाप्यो दमं च सः' ॥ इति मनुस्मरणात् ॥ १७० ॥

(मिता०) 'स्वं लभेतान्यविक्रीत'मित्युक्तं, तल्लिप्सुना किं कर्तव्यमित्यत आह—

आगमेनेति । आगमेन रिक्थक्रयादिना उपभोगेन च मदीयमिदं द्रव्यं तच्चैवं नष्टमपहृतं चेत्यपि(१) भाव्यं साधनीयं तत्स्वामिना । अतोऽन्यथा तेन स्वामिना अविभाविते पञ्चबन्धो नष्टद्रव्यस्य पञ्चमांशो दमो नाष्टिकेन राज्ञे देयः । अत्र चायं क्रमः—पूर्वस्वामी नष्टमात्मीयं साधयेत् । ततः क्रेता चौर्यपरिहारार्थं मूल्यलाभाय च विक्रेतारमानयेत् । अथानेतुं न शक्नोति तदात्मदोषपरिहाराय क्रयं शो(२)धयित्वा द्रव्यं नाष्टिकस्य समर्पयेदिति ॥ १७१ ॥

(१) चेति भाव्यम् घ ।
(२) साधयित्वा ग ।

( वी०मि० ) अस्वामिनो विक्रेतुस्तत्सकाशात् क्रेतुश्च प्रच्छादेन स्वामिनो दण्डमाह—

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ॥
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ १७२ ॥

दण्ड्यः। तुशब्देन निवेदने दण्डं व्यवच्छिनत्ति ॥ १७२ ॥

( मिता० ) तस्करस्य प्रच्छादकं प्रत्याह—

हृतमिति। हृतं प्रनष्टं वा चौरादिहस्तस्थं द्रव्यं अनेन मदीयं द्रव्यमपहृतमिति नृपस्यानिवेद्यैव दर्पादिना यो गृह्णाति असौ षड्नवतिं पणान्दण्डनीयः। तस्करप्रच्छादकत्वेन दुष्टत्वात् ॥ १७२ ॥

( वी०मि० ) यदि प्रणष्टं वस्तु स्वामिना नानीयते किं तु राजपुरुषेण तदा व्यवस्थामाह—

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ॥
अर्वाक् संवत्सरात् स्वामी हरेत परतो नृपः ॥ १७३ ॥
पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ॥
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥

शुल्काधिकृतैःस्थानरक्षिभिर्वाहृतं नष्टापहृतं द्रव्यं,तद्राज्ञा संवत्सरपर्यन्तं रक्षणीयं, ततोऽर्वाक् स्वामी नाष्टिकः स्वतो विभाविते सति हरेत्प्राप्नुयात्। परतो वर्षादूर्ध्वमविभावितपरस्वत्व द्रव्यं नृपो हरेत्। प्रणष्टद्रव्यरक्षानिबन्धनां भृतिमाह—एकशफेऽश्वादौ नष्टे द्रव्ये चतुरः पणान् राज्ञे नाष्टिको दद्यात्। मानुषे च नष्टद्रव्ये पञ्च पणान्। महिषोष्ट्रगवां सम्बन्धिरक्षणे द्वौ द्वौ प्रत्येकं, अजाविके छागे मेषे च प्रत्येकं पादं पादं दद्यात् पणस्य।

प्रणष्टाधिगतं द्रव्यं राजा त्र्यब्दं निधापयेत्।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥

इति मनुवचनं तु श्रुतवृत्तसम्पन्नब्राह्मणविषयं, प्रकृतवचनं तु तद्भिन्नपरमित्यविरोधः ॥ १७३—१७४ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने अस्वामिविक्रयप्रकरणम् ॥

( मिता० ) राजपुरुषानीतं प्रत्याह—

शौल्किकैरिति। यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वे प्रत्यानीतं तदा संवत्सरादर्वाक्

प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमवाप्नुयात् । ऊर्ध्वं पुनः संवत्सराद्राजा गृह्णीयात्। स्वपुरुषानीतं च द्रव्यं जनसमूहेषूद्घोष्य यावत्संवत्सरं राज्ञा रक्षणीयम्। यथाह गौतमः–'प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्यातं संवत्सरं राज्ञा रक्ष्यम्' इति। यत्पुनर्मनुना विध्यन्तरमुक्तम् (८।३०)—'प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्' ॥ इति तच्छ्रुतवृत्तसंपन्नब्राह्मणविषयम्। रक्षणनिमित्तषड्भागादिग्रहणं च तेनैवोक्तम् (मनु ८।३३)—'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतां धर्ममनुस्मरन्' ॥ इति । तृतीयद्वितीयप्रथमसंवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः। प्रपञ्चितं चैतत्पुरस्तात् ॥१७३॥

(मिता०) मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषेऽपवादमाह–

पणानिति। एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान्दद्यात्। मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान्। महिषोष्ट्रगवां रक्षणनिमित्तं प्रत्येकं द्वौ द्वौ पणौ अजाविके पुनः प्रत्येकं पादं पादम्। दद्यादिति सर्वत्रानुषज्यते । अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात्प्रत्येकं सम्बन्धोऽवगम्यते ॥ १७४ ॥

इति अस्वामिविक्रयप्रकरणम्।

(वी०मि०) सम्प्रति दत्ताप्रदानिकं व्यवहारपदम्—

अथ देयमदेयं च दत्तं चाऽदत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥

इति नारदोक्तं निरूपयति—

स्वं कुटुम्बाऽविरोधेन देयं दारसुतादृते ॥
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥ १७५ ॥
प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ॥
देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥ १७६ ॥

स्वं आत्मीयं द्रव्यं भार्यापुत्रव्यतिरिक्तं कुटुम्बस्याऽवश्यभरणीयस्य भरणाविरोधेन देयं कुटुम्बभरणावशिष्टं देयमित्यर्थः। एवं देय-

मुक्त्वाऽदेयमाह अन्वये पुत्रपौत्रादिसन्ताने विद्यमाने सर्वस्वं न देयम्, अन्यस्मै यत्प्रतिश्रुतं दातुमङ्गीकृतं तत्तदतिरिक्ताय न देयम्। चकारेण ऋष्यन्तरोक्ताऽदेयसमुच्चयः । तथा च बृहस्पतिः—

सामान्यपुत्रदाराधिसर्वस्वन्यासयाचितम् ।
प्रतिश्रुतं तथाऽन्यस्य न देयं त्वष्टधा स्मृतम् ॥

सामान्यमनेकस्वामिकं पुत्रदारयोश्च विमतयोरेवाऽदेयत्वम्।

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्रास्तु सर्वस्वमात्मन्येव तु योजयेत् ॥
आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।

इति कात्यायनवचनात् । अनुमतौ च विशेषमाह वसिष्ठः—'न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषां, न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः'।अन्यत्राऽनुज्ञानादिति दानमात्रेऽन्वितं, प्रतिग्रहे विद्यमानत्वेनाऽननुज्ञाने सत्यप्यभ्यधिकारात् । अत्र निषिद्धाचरणादधर्मो भवति, न तु दानासिद्धिरेव सर्वस्वदानादाविति स्मृतिसारः । दानं च विभजते बृहस्पतिः—

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसंप्रीत्या दत्तमष्टविधं स्मृतम् ॥

अदत्तमाह नारदः—

अदत्तं तु भयक्रोधकामशोकरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितैः ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥

आर्तेन धर्म्यार्थे दत्तं तु दत्तमेव ।

अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ।

इति कात्यायनवचनात् । बृहस्पतिः—

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्ये वा धर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

देयप्रसङ्गेन प्रतिग्रहस्य प्रकाशमेव कर्तव्यत्वमाह प्रतिग्रह इति । विवादवारणाय प्रकाशः प्रतिग्रहःकार्यः, स्थावरस्य तु विशेषतः प्रकाशमेव प्रतिग्रहः।सुवर्णादेरिव तस्याऽऽत्मनिष्ठत्वेन दर्शयितुमशक्यत्वात्। अथ प्रकृतमाह–धर्मार्थं प्रतिश्रुतं यत्तद्देयमेव, यद्यसौ सम्प्रदानभूतो

न धर्मच्युतो भवति । 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्या'दिति गौतमवचनात् । न्यायेन दत्तं सप्तविधमुक्तं दत्त्वा पुनर्नैवाऽपहरेत् । चकारेण षोडशविधमदत्तमपहरेदिति वाक्यार्थः समुन्नीयते ॥ १७५-१७६ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने दत्ताप्रदानिकं प्रकरणम् ॥



( मिता० ) अधुना विहिताविहितमार्गद्वयाश्रयतया द(१)त्तानपकर्म दत्ताप्रदानिकमिति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदमभिधीयते । तत्स्वरूपं च नारदेनोक्तम्—'दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तत्' ॥ इति । असम्यगविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन् वि(२)वादपदे तद्दत्ताप्रदानिकं दत्तस्याप्रदानं पुनर्हरणं यस्मिन्दानाख्ये तद्दत्ताप्रदानिकं नाम व्यवहारपदम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तान(१)पकर्मेत्यर्थादुक्तं भवति । दत्तस्यानपकर्म अपुनरादा(३)नाख्यं यत्र दानाख्ये विवादपदे तद्दत्तानपकर्म । तच्च देयादेयादिभेदेन चतुर्विधम् । यथाह नारदः—'अथ देयमदेयं च दत्तं चाऽदत्तमेव च । व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः' ॥ इति । तत्र देयमित्यनिषिद्धदानक्रियायोग्यमुच्यते । अदेयमस्वतया निषिद्धतया वा दानानर्हम् । यत्पुनः प्रकृतिस्थेन दत्तमव्यावर्तनीयं तद्दत्तमुच्यते । अदत्तं तु यत्प्रत्याहरणीयं तत्कथ्यते । तदेतत्संक्षेपतो निरूपयितुमाह—

स्वमिति । स्वमात्मीयं कुटुम्बाविरोधेन कुटुम्बानुपरोधेन कुटुम्बभरणावशिष्टमिति यावत् तद्दद्यात् । तद्भरणस्यावश्यकत्वात् । यथाह मनुः ( ८।३५ )—'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' ॥ इति । स्वं कुटुम्बाविरोधेनेत्यनेनादेयमेकविधं दर्शयति । स्वं दद्यादित्यनेन चास्वभूतानामन्वाहितयाचितकाधिसाधारणनिक्षेपाणां पञ्चानामप्यदेयत्वं व्यतिरेकतो दर्शितम् । यत्पुनर्नारदेनाष्टविधत्वमदेयानामुक्तम्—'अन्वाहितं याचितकमाधिः साधारणं च यत् । निक्षेपः पु(४)त्रदारांश्च सर्वस्वं चान्वये सति ॥ आपत्स्वपि हि कष्टासु वर्तमानेन देहिना । अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्' ॥ इति । एतददेयत्वमा-

(१) दत्तानपाकर्म ख । (२) व्यवहारपदे ग. । (३) रादान ग । (४) पुत्रदारंच ग. ।

त्राभिप्रायेण न पुनः स्वत्वाभावाभिप्रायेण । पुत्रदारसर्वस्वप्रतिश्रुतेषु स्वत्वस्य सद्भावात् । अन्वाहितादीनां स्वरूपं प्रागेव प्रपञ्चितम् ॥

( मिता० ) स्वं दद्यादित्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गे प्रतिषेधमाह—

दारसुतादिति । दारसुताद्दते दारसुतव्यतिरिक्तं स्वं दद्यान्न दारसुतमित्यर्थः । तथा पुत्रपौत्राद्यन्वये विद्यमाने सर्वं धनं न दद्यात् । 'पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेत्' इति स्मरणात् । तथा हिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मै न देयम् ॥ १७५ ॥

( मिता० ) एवं दारसुताव्यतिरिक्तं देयमुक्त्वा प्रसङ्गाददेयधनग्रहणं च प्रतिगृहीत्रा प्रकाशमेव कर्तव्यमित्याह—

प्रतिग्रह इति । प्रतिग्रहणं प्रतिग्रहः सः प्रकाशः कर्तव्यो विवादनिराकरणार्थम् । स्थावरस्य च विशेषतः प्रकाशमेव ग्रहणं कार्यम् । तस्य सुवर्णादिवदात्मनि स्थितस्य दर्शयितुमशक्यत्वात् ॥

( मिता० ) एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरन्नाह—

देयमिति । देयं प्रतिश्रुतं चैव । यत् यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव यद्यसौ (१)धर्मात्प्रच्युतो न भवति । प्रच्युते न पुनर्दातव्यम् । 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' इति गौतमस्मरणात् । दत्त्वा नापहरेत्पुनः । न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम्, किं तु तथैवानुमन्तव्यम् । यत्पुनरन्यायेन दत्तं तददत्तं षोडशप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति । नारदेन च— 'दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम्' इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्—'पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः । स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥ अदत्तं तु भयक्रोधशोकवेगरुगान्वितैः । तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवार्जितम् । कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् ॥ अपात्रे पात्रमित्युक्ते कार्ये वा (२)धर्मसंहिते । यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम्' ॥ इति । अयमर्थः—पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्, भृतिर्वेतनं कृतकर्मणे दत्तम्, तुष्ट्या वन्दिचारणादिभ्यो दत्तम्, स्नेहाद् दुहितृपुत्रादिभ्यो दत्तम्, प्रत्युपकारतः (३)उपकृतवते प्रत्युपकाररूपेण दत्तम्, स्त्रीशुल्कं परिणय-

(१) धर्मप्रच्युतो घ. । (२) धर्मसंयुते ख. । (३) उपकृते घ. ।

नार्थं कन्याज्ञातिभ्यो यद्दत्तम्, यथानुग्रहार्थमदृष्टार्थे दत्तं तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम्। भयेन बन्दिग्राहादिभ्यो दत्तम्, क्रोधेन (१)पुत्रादिभ्यो वैरनिर्यातनायान्यस्मै दत्तम्, पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम्, उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम्, परिहासेनोपहासेन दत्तम्। (२)एकः स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः। छलयोगतः शतदानमभिसंधाय सहस्रमिति परिभाष्य ददाति। बाले(३)नाप्राप्तषोडशवर्षेण। मूढेन लोक(४)वादानभिज्ञेन। अस्वतन्त्रेण पुत्रदासादिना। आर्तेन रोगाभिभूतेन। मत्तेन मदनीयमत्तेन। उन्मत्तेन वातिकाद्युन्मादग्रस्तेन वा अपवर्जितं दत्तम्। यथायं (५)मदीयमिदं कर्म करिष्यतीति प्रतिलाभेच्छया दत्तम्, अचतुर्वेदाय चतुर्वेदोऽहमित्युक्तवते दत्तम्, यज्ञ करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तमित्येव षोडशप्रकारमपि दत्तमदत्तमित्युच्यते। प्रत्याहरणीयत्वात्। आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्। 'स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः'॥ इति कात्यायनस्मरणात्। तथेदमपरं संक्षिप्तार्थं वचनं सर्वविवादसाधारणम्। (मनुः ८।१६८)—'योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यस्य वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्'॥ इति। योग उपाधिः। येनागामिनोपाधिविशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिवि(६)गमे तान् क्रयादीन्विनिवर्तयेदित्यस्यार्थः। यः पुनः षोडशप्रकारमपि अदत्तं गृह्णाति यश्चादेयं प्रयच्छति तयोर्दण्डो नारदेनोक्तः—'गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति। अदेयदायको दण्ड्यस्तथा दत्तप्रतीच्छकः' ॥ इति ॥ १७६ ॥

इति दत्ताप्रदानिकं नाम प्रकरणम्।

---

(वी०मि०) अथ क्रीतानुशयाख्य विवादास्पदम्—

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते।
क्रीतानुशय इत्येतद्विवादपदमुच्यते॥

(१) पुत्रादिवैर ग। (२) एकोऽपि स्वं द्रव्य ग। (३) अप्राप्तव्यवहारेण ग।
(४) लोकव्यव ग। (५) मदीयंकर्म ग। (६) विगमे क्रयादीन् ग।

इति नारदेन लक्षितमुपक्रमते—

दशैकपञ्चसप्ताहं मासत्र्यहार्धमासिकम् ॥
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ १७७ ॥

दशाहादिपर्यन्तं बीजादीनां परीक्षणं, तथा च तावत्समयमध्ये यदि क्रीते वस्तुनि अनुशयस्तदा परावर्तनीयं, न तु तदूर्ध्वमित्यर्थः। दशाहमेकादशाहं पञ्चाहं सप्ताहं मासं त्र्यहं अर्धमासं च बीजानामयसां वाह्यानामश्वादीनां रत्नानां स्त्रीणां दास्यादीनां दोह्यानां गवादीनां पुंसां दासादीनां यथाक्रममन्वेति।

क्रीत्वा विक्रीय वा पण्यं यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाऽऽददीत वा ॥
परेण तु दशाहस्य नाऽऽदद्यान्नैव दापयेत्।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥

इति मनुवचनं तु बीजपरमेव।

अविज्ञातं तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥

इति कात्यायनवचनात्। काले परीक्षाकाले। अन्यथा तदूर्ध्वम्। इदं च सर्वमपरीक्ष्य क्रीते द्रष्टव्यम्, 'अविज्ञात'मिति कात्यायनेनाभिधानात्।

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत्।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

इति बृहस्पतिवचनात्। उक्तकालमध्येऽपि क्रीतद्रव्यपरावर्तने विशेषमाह नारदः—

क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाऽन्ह्यविक्षतम् ॥
द्वितीयेऽन्हि ददत् क्रेता मूल्यात्त्रिंशांशमाहरेत्।
द्विगुणं तु तृतीयेऽन्हि परतः क्रेतुरेव तत् ॥

परत इति दोह्यपरम्।

क्रीत्वा चाऽनुशयात्पण्यं त्यजेद्दोह्यादि यो नरः।
अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥

इति कात्यायनवचनं परीक्षणोत्तरावधिकालपरम्। द्वयमपि चेदं

क्रीतद्रव्यस्य क्रेतृवशीकृतत्वभावे । अन्यथा तु—

क्रीत्वा गच्छन्ननुशय क्रयी हस्तमुपागते ।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद् बुधः ॥

इति वचनाद्व्यवस्था ।

न सावद्यं न च न्यूनं न दूरे न तिरोहितम् ।

इति मनुवचनात् क्रयकाले ज्ञातदोषं तु वस्तु न परीक्षणकाल मध्येऽपि परावर्तनीयम् ।

परिभुक्तं च यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत् क्रीतं विक्रेतुर्न भवेत्ततः ॥

इति नारदवचनात् ॥ १७७ ॥

( मिता० ) अथ क्रीतानुशयः कथ्यते । तत्स्वरूपं नारदेनोक्तम्—'क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते' ॥ इति । तत्र च यस्मिन्नहनि पण्यं क्रीतं तस्मिन्नेवाह्नि तदविकृतं प्रत्यर्पणीयमिति तेनैवोक्तम् । 'क्रीत्वा मूल्येन यः पण्यं तु क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मि(१)न्नेवाह्न्यविक्षतम् ' ॥ इति । द्वितीयादिदिने तु प्रत्यर्पणे विशेषस्तेनैवोक्तः—'द्वितीयेऽह्नि ददत्क्रेता मूल्यात् त्रिंशांश(२)माहरेत् । द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ' ॥ इति । परतोऽनुशयो न कर्तव्य इत्यर्थः । एतच्च बीजातिरिक्तोपभोगादिविनश्वरवस्तुविषयम् ।

बीजादिक्रये पुनरन्य एव प्रत्यर्पणविधिरित्याह—

दशैकेति । बीजं व्रीह्यादिबीजम् । अयो लो(३)हम । वाहो बलीवर्दादिः । रत्नं मुक्ताप्रवालादि । स्त्री दासी । दोह्यं (४)महिष्यादि । पुमान् दासः । एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेयः । परीक्ष्यमाणे च बीजादौ यद्यसम्यक्त्वबुद्ध्यानुशयो भवति तदा दशाहाद्यभ्यन्तर एव क्रयनिवृत्तिर्न पुनरूर्ध्वमित्युपदेशप्रयोजनम् । यत्तु मनुवचनम् ( ८।२२२ )—'क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद् द्रव्यं दद्याच्चैवाददीत च' ॥ इति, तदुक्तलोहादिव्यतिरिक्तो(५)पभोगाविनश्वरगृहक्षेत्रयानशयनासनादिविषयम् । सर्वं चैतदपरीक्षितक्रीतविषयम् । यत्पुनः [६]परीक्ष्य न पुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतं तद्विक्रेत्रे न

(१) तस्मिन्नेवाह्नि वीचितमिति पाठः । (२) माहरेत् ख । (३) लोहादि ख ।
(४) महिष्यादि ख । (५) पभोगाविनश्वर ख । (६) परीक्षित ग ।

प्रत्यर्पणीयम् । तदुक्तम्—'क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः' ॥ इति ॥ १७७ ॥

( वी०मि० ) बीजादिपरीक्षणप्रसङ्गेन स्वर्णादिपरीक्षणमाह—

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ॥
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशाऽयसि ॥ १७८ ॥
शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके ॥
मध्ये पञ्चपला सौत्रे(१) सूक्ष्मे तु त्रिपला मता ॥ १७९ ॥
कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः ॥
न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च ॥ १८० ॥
देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम् ॥
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥ १८१ ॥

सुवर्णमुत्तमं अग्नौ न क्षीणं भवति । रजते शते शतपलमिते द्विपलमग्नौ क्षीणं भवति । त्रपुपि रङ्गे सीसे च पलशते अष्टौ पलानि, ताम्रे पलशते पञ्च पलानि, अयसि पलशते दशपलानि अग्नौ क्षीयन्ते । चकारेण कांस्यस्य त्रपुताम्रयोनिकस्य तदंशानुसारेण क्षयः समुच्चियते । ऊर्णैः कार्पासैर्वा सूत्रैः स्थूलैर्निर्मिते कम्बलपटादौ शतपलमिते दशपलमिता वृद्धिः । मध्येऽनतिसूक्ष्मे शतपलमिते पञ्चपला वृद्धिः । अतिसूक्ष्मसूत्रके तु तस्मिन् पलशतमिते त्रिपलमिता वृद्धिर्मता मण्डादिसम्बन्धादभिज्ञसंमता । यत्र निष्पन्ने पटादौ स्वस्तिचक्रादिकं सूच्या क्रियते तत्कार्मिकं, यत्र प्रावारादौ रोमाणि बध्यन्ते तद्रोमबद्धं, तत्र त्रिंशत्तमो भागः क्षयो मतः । कौशेये कृमिकोशोत्थे सूत्रनिर्मिते पट्टवस्त्रादौ वल्कलप्रभवेषु च न क्षयो न वा वृद्धिः । चकारैर्गोधूमादीनां बहूनामनुक्तानां पेषणादौ क्षयवृद्ध्योरभावः समुच्चीयते । अनुक्तविशेषेषु च शाणक्षौमादिषु द्रव्याणां मूलह्रासवृद्धिज्ञा देशं कालमुपभोगं नष्टद्रव्यस्य सारासारतां च ज्ञात्वा यद् ब्रूयुस्तदसंशयं दाप्यमिति । चकारेण ह्रासयोग्यस्थाने ह्रासनीयामिति समुच्चीयते ॥ १७८-१८१ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने क्रीतानुशयप्रकरणम् ।

---

(१) मध्ये पञ्चपला वृद्धिः—इति मु० पु० पाठ ।

( मिता० ) दोह्यादिपरीक्षाप्रसङ्गेन स्वर्णादेरपि परीक्षामाह—

अग्नाविति । वह्नौ प्रताप्यमानं सुवर्णं न क्षीयते । अतः कटकादिनिर्माणार्थं यावत्स्वर्णकारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम् । इतरथा क्षयं दाप्या दण्ड्याश्च । रजते तु शतपले प्रताप्यमाने पलद्वयं क्षीयते । अष्टौ त्रपुणि सीसे च । शते इत्यनुवर्तते । त्रपुणि सीसे च शतपले प्रताप्यमानेऽष्टौ पलानि क्षीयन्ते । ताम्रे पञ्च दशायसि–ताम्रे शतपले पञ्चपलानि, अयसि दशपलानि क्षीयन्ते । अत्रापि शत इत्येव । कांस्यस्य तु त्रपुताम्रयोनित्वात्(१)तदनुसारेण क्षयः कल्पनीयः । (२)ततोऽधिकक्षयकारिणः शिल्पिनो दण्ड्याः॥१७८॥

( मिता० ) क्वचित्कम्बलादौ वृद्धिमाह—

शत इति । स्थूलेनौर्णसूत्रेण यत्कम्बलादिकं क्रियते तस्मिन् शतपले दशपला वृद्धिर्वेदितव्या । एवं कार्पाससूत्रनिर्मिते पटादौ वेदितव्यम् । मध्ये अनतिसूक्ष्मसूत्रनिर्मिते पटादौ पञ्चपला वृद्धिः । सुसूक्ष्मसूत्ररचिते शते त्रिपला वृद्धिर्वेदितव्या । एतच्चाप्रक्षालितवासोविषयम् ॥ १७९ ॥

( मिता० ) द्रव्यान्तरे विशेषमाह—

कार्मिक इति । कार्मिकं कर्मणा चित्रेण निर्मितम् । यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चि(३)त्र सूत्रैः क्रियते तत्कार्मिकमित्युच्यते । यत्र प्रा(४)वारादौ रोमाणि दृश्यन्ते स रोम(५)बद्धः । तत्र त्रिंशत्तमो भागः क्षयो वेदितव्यः । कौशेये कोशप्रभवे वाल्कलेषु वृक्षत्वङ्निर्मितेषु वस्त्रेषु वृद्धिह्रासौ न स्तः, किन्तु (६)यावद्द्रव्यमार्थे कुविन्दादिभ्यो दत्तं तावदेव प्रत्यादेयम् ॥ १८० ॥

(मिता०) द्रव्यानन्त्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह—

देशमिति । शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते द्रव्याणां कुशलाः द्रव्यवृद्धिक्षयाभिज्ञाः देशं कालमुपपभोगं तथा नष्टद्रव्यस्य बलाबलं सारासारतां च परीक्ष्य यत्कल्पयन्ति तद्दंशयं शिल्पिनो दाप्याः॥१८१॥

इति क्रीतानुशयप्रकरणम् ॥

---

(१) तदंशानुसारेण घ० । (२) इतोऽधिक ग० । (३) चित्रै सूत्रै ग० ।
(४) प्रस्तादौ ग० । (५) रोमबन्ध घ० । (६) यावद्धानार्थं घ० ।

( वी०मि० ) अथाऽभ्युपेत्याशुश्रूषानाम प्रकरणमारभते । तत्स्वरूपं तु नारदोक्तम्—

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥

इति । मनुना च वेतनाप्रदान एवास्य विवादपदस्य कयाचिद्विवक्षयाऽन्तर्भावमभिप्रेत्य पृथगनभिधानात् । शुश्रूषकश्च पञ्चविधः—शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दासश्चेति । तत्र शुभं कर्म चतुर्णामशुभं कर्म दासस्य भवति ।

अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ।
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ॥
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ।
इच्छतः स्वामिनश्चाऽङ्गैरुपस्थानमथाऽन्ततः ॥
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ।

इति नारदवचनात् । तत्र शिष्यो वेदविद्यार्थी, अन्तेवासी शिल्पशिक्षार्थी, भृतको वेतनेन कर्मकर्ता, अधिकर्मकृत् कर्म कुर्वतामधिष्ठाता, दासश्च—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतश्चैव आहितः स्वामिना च यः ॥
मोचि(१)तो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

इति नारदेनोक्तः । तत्र शिष्यस्य वृत्तिः—

आहूतश्चाप्यधीयीत लब्धं चाऽस्मै निवेदयेत् ।

इत्यादिना प्रागभिहिता । भृतकाऽधिकर्मकृतोस्तु वेतनादानप्रकरणे वक्ष्यते । दासान्तेवासिनोस्त्वत्राह—

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ॥
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥ १८२ ॥
प्रव्रज्यावसितो राज्ञो दासस्त्वा(२)मरणान्तिकः ॥
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १८३ ॥

---

(१) मोहितो—इति क०पु०पाठः । (२) दास आमरणान्तिकः—इति मु० पु० पाठः ।

बलात्कारेण दासीकृत', चोरैर्विक्रीतश्च दासीकृतः, चकाराऽपिकाराभ्यां तेन दत्त आधीकृतश्च मुच्यते दासकर्मणः। यश्च चौरव्याघ्राद्याक्रान्तस्य स्वामिनः प्राणान् रक्षति स च मुच्यते । अपिकारेण दास्यमोक्षहेत्वन्तरसमुच्चयः । तदाह नारदः—

अन्नाकालभृतो दास्यान्मुच्यते गोद्वय ददत् ।
सम्भक्षितं यद् दुर्भिक्षे न तच्छुध्येत कर्मणा ॥
भक्तस्योपेक्षणात्सद्यो भक्तदासः स मुच्यते ।
आहितोऽपि धन दत्त्वा स्वामी यद्येनमुद्धरेत् ॥
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ॥
तवाऽहमित्युपगतो युद्धप्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥
कृतकालव्यपगमात् कृतकोऽपि विमुच्यते ।
निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः ॥

तुल्यकर्मणा स्वकर्मतुल्यकर्मकरणेन । वडवाया दास्या निग्रहात् सम्भोगत्यागात् । कात्यायनः—

स्वदासीं यस्तु सङ्गच्छेत् प्रसूता च भवेत्तदा ।
अवेक्ष्य बीज कर्तव्या अदासी सान्वयातु सा ॥

इदं तु स्वामिनः पुत्राद्यसत्त्व एवेति प्रकाशपारिजातरत्नाकरादयः । प्रसादेनाप्यदासः कार्यस्तत्र विधिमाह नारदः—

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याशु भिन्द्यात् कुम्भं सहाऽम्भसा ॥
साक्षताभिः सुपुष्पाभिर्मूर्धन्यद्भिरवाकिरन् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखस्तमथोत्सृजेत् ॥
तत प्रभृति वक्तव्यः स्वाम्यनुग्रहपालित· ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥

कात्यायनः—

दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभु· स्मृतः ।
प्रसादविक्रयार्थं तु न स्वामी धनमर्हति ॥
दासेनोढा त्वदासी या सापि दासत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यत' ॥

प्रसादेति । स्वात्मप्रसादेनाऽस्मविक्रयेण च यल्लब्धं तद्धनं स्वामी

नार्हतीत्यर्थः। दासेनेति। अत्र यदि व्ययाद्दासपदोपस्थापितप्रतियोगिकमेवादासीत्वं, ततोऽस्वामिकाऽन्यस्वामिका वा परिणीता सती वरस्वामिनः स्वीभवति। अर्थाच्च दासोढत्वं पूर्वस्वामिदासमोक्षहेतुभिरिति लभ्यते। अत एव तत्प्रकरणे वाक्यमिदम्। पूर्वस्वाम्यनुमत्या च दासकृतो विवाहः स्वत्वहेतुः। विमतिविषये तु चेटिकापरिणयवन्न पूर्वस्वामिस्वत्वहानिः। आधुनिकास्तु यदि प्रागनुमतिं विना दासेनोढा तदा गौरीवराटिकामात्रमत्रस्वामिने दातव्यमुत्तरस्वामिना, न तु दास्यनुत्पत्तिरेव। गौरीवराटिकाग्रहणमात्रप्रयोजकस्यैव दासत्वस्य पूर्वस्वामिनिरूपितस्य तत्र सत्त्वादिति वदन्ति। यत्तु—

न स्वामिना विसृष्टोऽपि शूद्रो दास्यात्प्रमुच्यते।
निसर्गजं हि तत्तस्य कस्तं तस्माद्यपोहतु॥

इति मार्कण्डेयपुराणे हरिश्चन्द्रवाक्यं, तद्दासनिन्दापरम्। अन्यथा तस्यैव दास्यान्मोक्षो न स्यादित्यवधेयम्। प्रव्रज्येति। संन्यासग्रहणानन्तरं ततः प्रच्युतो यो भवति स राज्ञो दास आमरणान्तिकः मरणावधि विद्यमानदासभावः, अस्य न दासस्य मोक्ष इति भावः। वर्णानामिति। अनुलोमक्रमेणैव दास्यं भवति न प्रतिलोमक्रमेण। यथा ब्राह्मणस्य क्षत्रियो दासो न तु वैश्यस्येत्यादि। इदं तु प्रव्रज्यावसितभिन्नपरम्।

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता॥

इति नारदवचनात्। वर्णानामिति प्रव्रज्यावसित इति च ब्राह्मणभिन्नपरम्।

प्रव्रज्यावसितं यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वक्षत्रविन्नृपः॥

क्षत्रविदिति समाहारद्वन्द्वः॥ १८२-१८३॥

( मिता० ) साम्प्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते। तत्स्वरूपं च नारदेनोक्तम्—'अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते। अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते'॥ इति। आ(१)ज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्। शुश्रूषकश्च पञ्चविधः—शिष्योऽन्तेवा

(१) आज्ञाकरणं ख.।

सी भृतकोऽधिकर्मकृद्दास इति । तेषामाद्याश्चत्वारः कर्मकरा इत्युच्यन्ते, ते च शुभकर्मकारिणः । दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः । गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः । तदिदं नारदेन स्पष्टीकृतम्—'शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः । चतुर्विधाः कर्मकरास्तेषां दासास्त्रिपञ्चकाः ॥ शिष्यान्तेवासिभृतकाश्चतुर्थ(१)स्त्वधिकर्मकृत् । एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः । जाति(२)कर्मकृतस्तूक्तो विशेषो वृत्तिरेव च ॥ कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च । अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ॥ गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् । गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥ इच्छतः स्वामिन(३)श्चाङ्गैरुपस्थानमथान्ततः । अशुभं कर्म विज्ञेयं शुभमन्यदतः परम्' ॥ इति । तत्र शिष्यो वेदविद्यार्थी । अन्तेवासी शिल्पशिक्षार्थी । मूल्येन यः कर्म करोति स भृतकः । कर्म कुर्वतामधिष्ठाताऽधिकर्मकृत् । अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम् । अवस्करो गृहमार्जितपांस्वादिनिच(४)यस्थानम् । उज्झनं त्यागः । भृतकश्चात्र त्रिविधः । तदुक्तम्—'उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः । अधमो भारवाही स्यादित्येवं त्रिविधो भृत.' ॥ इति । दासाः पुनः—'गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकाल(५)भृतस्तद्वदाहितः स्वामिना च यः ॥ मोक्षि(६)तो महतश्चर्णाद्युद्धप्राप्त. पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः' ॥ गृहे दास्यां जातो गृहजातः । क्रीतो मूल्येन । लब्धः प्रतिग्रहादिना । दायादुपागतः पित्रादिदासः । अनाकालभृतो दुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः । आहितः स्वामिना धनग्रहणेनाधितां नीतः । ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः । युद्धप्राप्तः समरे विजित्य गृहीतः । पणे जितो यद्यस्मिन्विवादे पराजितोऽहं तदा त्वद्दासो भवामीति परिभाष्य जितः । तवाहमित्युपगतः तवाहं दास इति स्वयं संप्रतिपन्नः । प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः । कृतः एतावत्काले त्वद्दास इत्यभ्युपगमितः । भक्तदासः

(१) थाधिकर्मकृद् घ. । (२) कर्मकरस्तूक्तो ख. । (३) स्वामिनः स्वाङ्गै घ. ।
(४) निर्वापस्थानम् घ । (५) भृतश्चैव घ । (६) मोचितो घ ।

सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः । वडवाहृतः वडवा गृहदासी तयाहृतः तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः । य आत्मानं विक्रीणीतेऽसावात्मविक्रेतेत्येवं पञ्चदश प्रकाराः । यत्तु मनुना ( ८।४१५ )—'ध्वजाहृतो भक्तदासो गृहजः क्रीतदात्रिमौ । पैतृको दण्डदासश्च सप्तैते दासयोनयः' ॥ इति सप्तविधत्वमुक्तं तत्तेषां दासत्वप्रति(१)पादनार्थं न तु परिसंख्यार्थम् । तत्रैषां शिष्यान्तेवासिभृतकाधिकर्मकृद्दासानां मध्ये शिष्यवृत्तिः प्रागेव प्रतिपादिता । 'आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्' इत्यादिना । अधिकर्मकृद्भृतकानां तु भृतिं वेतनादानप्रकरणे वक्ष्यते । 'यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्' इत्यादिना ॥

दासान्तेवासिनोस्तु धर्मविशेषं वक्तुमाह—

बलादिति । बलात् बलावष्टम्भेन यो दासीकृतः । यश्चौरैरपहृत्य विक्रीतः । अपिशब्दादाहितो दत्तश्च स मुच्यते । यदि स्वामी न मुञ्चति तर्हि राज्ञा मोचयितव्यः । उक्तं च नारदेन—"चौरापहृतविक्रीता ये च दासीकृता बलात् । राज्ञा मोचयितव्यास्ते दास्यं तेषु हि नेष्यते' ॥ इति । चौरव्याघ्राद्यवरुद्धस्य स्वामिनः प्राणान् यः प्रददाति रक्षत्यसावपि मोच(२)यितव्यः । तदिदं सर्वदासानां साधारणं दास्यनिवृत्तिकारणम् । 'यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् । दासत्वात्स विमुच्येत पुत्रभागं लभेत च' ॥ इति नारदस्मरणात् । भक्तदासादीनां प्रातिस्विकमपि मोक्षकारणमुच्यते । अनाकालभृतभक्तदासौ भक्तस्य त्यागाद्दासभावादारभ्य स्वामिद्रव्यं यावदुपभुक्तं तावद्दत्त्वा मुच्येते । आहितर्णदासौ तु तन्निष्क्रयाद्यद् गृहीत्वा स्वामिना आहितो यच्च दत्त्वा धनिनोत्तमर्णान्मोचितस्तस्य प्रत्यर्पणान्मुच्यते । नारदेन विशेषोऽप्युक्तः—'अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् । सम्भक्षितं यद् दुर्भिक्षे न तच्छुध्येत कर्मणा ॥ भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते । आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ॥ ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते' ॥ इति । तथा तवाहमित्युपगतयुद्धप्राप्तपणजितकृ(३)तकवडवाहृतानां च प्रातिस्विकं मोचनकारणं च तेनै(४)वोक्तम् । यथा-

(१) प्रतिपादनपरम् । (२) मोचनीयः घ. । (३) कृतवडवा घ. । (४) नारदेनैव ।

'तवाहमित्युपगतो युद्धप्राप्तः पणे जितः । (१)प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥ कृतकालव्यपगमात्कृतकोऽपि विमुच्यते । निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः' ॥ इति । दासेन सह सम्भोगनिरोधादित्यर्थः । तदेवं गृहजातक्रीतलब्धदायप्राप्तात्मविक्रयिणां स्वामिप्राण(२)प्रदानतत्प्रसादरूपसाधारणकारणव्यतिरेकेण मोक्षो नास्ति । विशेषकारणानभिधानात् । दासमोक्षश्चानेन क्रमेण कर्तव्यः । 'स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः । स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥ साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत् । अदास इत्यथोक्त्वा त्रिः प्राङ्मुखं तमथासृजत्' ॥ इति तेनैवोक्तम् ॥ १८२ ॥

(मिता०) प्रव्रज्यावसितस्य तु मोक्षो नास्तीत्याह—

प्रव्रज्येति । प्रव्रज्या सन्न्यासस्ततोऽवसितः प्रच्युतः । अनभ्युपगतप्रायश्चित्तश्चेद्राज्ञ एव दासो भवति । मरणमेव तद्दासत्वस्या(३)न्तोऽन्यस्मिन्काले न मोक्षोऽस्ति ॥

(मिता०) वर्णापेक्षया दास्यव्यवस्थामाह—

वर्णानामिति । ब्राह्मणादीनां वर्णानामानुलोम्येन दास्यम् । ब्राह्मणस्य क्षत्रियादयः । क्षत्रियस्य वैश्यशूद्रौ । वैश्यस्य शूद्र इत्येवमानुलोम्येन दासभावो भवति न प्रातिलोम्येन । स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापि दासत्वमिष्यत एव । यथाह नारदः— 'वर्णानां प्रातिलोम्येन दासत्वं न विधीयते । स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता' ॥ इति ॥ १८३ ॥

( वी०मि० ) दासधर्मानभिधायान्तेवासिधर्मानाह—

कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे ॥
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ १८४ ॥

त्वद्गृहे एतावत्कालं वसिष्यामीति कृतं व्यवस्थापितं कालं व्याप्य गुरोर्गृहे कृतशिल्पोऽपि लब्धशिल्पविद्योऽपि अन्तेवासी गुरोः सकाशात् प्राप्तं भोजनं येन तादृशः तस्य शिल्पस्य फलं वेतनं गुरवे ददन्निवसेत् । शिल्पातिरिक्तं च कर्म नान्तेवासिनं कारयेत् ।

---

(१) प्रतिशीर्ष प्रतीने भ । (२) प्रदानात्प्रसाद घ ।
(३) स्यान्तो नान्यत्र प्रतिमोक्षास्त घ ।

तदाह नारदः—

न चाऽन्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ।

तथा—

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

तथा—

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तते ॥ १८४ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने अभ्युपेत्याशुश्रूषाप्रकरणम् ।

---

(मिता०) अन्तेवासिधर्मानाह—

कृतशिल्प इति । अन्तेवासी गुरोर्गृहे कृतकालं वर्षचतुष्टयमायुर्वेदादिशिल्पशिक्षार्थं त्वद्गृहे वसामीति यावदङ्गीकृतं तावत्कालं वसेत् । यद्यपि वर्षचतुष्टयादर्वागेव लब्धापेक्षितशिल्पविद्यः । कथं निवसेत् ? गुरुप्राप्तभोजनः गुरोः सकाशात्प्राप्तं भोजनं येन स तथोक्तः । तत्फलप्रदः तस्य शिल्पस्य फलमाचार्याय प्रददातीति तत्फलप्रदः । एवंभूतो वसेत् । नारदेन विशेषोऽप्यत्र दर्शितः—'स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया । आचार्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम् ॥ आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् । न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥ शिक्षयन्तमसंदुष्टं य आचार्यं परित्यजेत् । बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥ शिक्षितोऽपि कृतं कालमन्तेवासी समाप्नुयात् । तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥ गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् । शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तते' ॥ इति । वधशब्दोऽत्र ताडनार्थः दोषस्याल्पत्वात् ॥ १८४ ॥

इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदम् ।

---

( वी०मि० ) अधुना संविद्व्यतिक्रमं विवादपदं निरूपयितुमुपक्रमते—

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ॥
त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति ॥ १८५ ॥

राजा स्वपुरे धवलगृहादिरूपं स्थानं कृत्वा तत्र ब्राह्मणान्

न्यस्य स्थापयित्वा त्रैविद्यं वेदत्रयसंपन्नं वृत्तिमद् भूहिरण्यादिसंपन्नं च कृत्वा स्वस्य वर्णाश्रमनिमित्तो धर्मो भवद्भिः पाल्यतां क्रियतामिति ब्रूयात् व्यवस्थापयेत् । तुशब्देन वृत्तिपरिकल्पनं विना व्यवस्था व्यवच्छिद्यते ॥ १८५ ॥

( मिता० ) संप्रति संविद्व्यतिक्रमः कथ्यते । तस्य च लक्षणं नारदेन व्यतिरेकमुखेन दर्शितम्—'(१)पाषण्डिनैगमादीनां स्थितिः समय उच्यते । समयस्यानपाकर्म तद्विवादपदं स्मृतम्' ॥ इति । पारिभाषिकधर्मेण व्यवस्थानं समयस्तस्यानपाकर्माव्यतिक्रमः परिपालनं तद्व्यतिक्रम्यमाणं वि(२)वादपदं भवतीत्यर्थः ॥

तदुपक्रमार्थं किंचिदाह—

राजेति । राजा स्वपुरे दुर्गादौ स्थानं धवलगृहादिकं कृत्वा तत्र ब्राह्मणान्न्यस्य स्थापयित्वा तद्ब्राह्म(३)णजातं त्रैविद्यं वेदत्रयसंपन्नं वृत्तिमद् भूहिरण्यादिसंपन्नं च कृत्वा स्वधर्मो वर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितो भवद्भिरनुष्ठीयतामिति तान् ब्राह्मणान् ब्रूयात् ॥ १८५ ॥

( वी०मि० ) एवं कृतव्यवस्थैस्तैर्यत्कार्यं तदाह—

निजधर्माविरोधेन यस्तु सामायिको भवेत् ॥
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ १८६ ॥

यः सामयिको गोप्रचारदेवगृहपालनादिरूपः समयाद्गोचारकादिकारितराजकृतव्यवस्थानिष्पन्नो धर्मः, यश्च शत्रुमण्डले तुरगादयो न प्रस्थाप्या, मम राज्येऽतिथिभिरकृतभोजनैर्न यथा स्थीयते तथा कर्तव्यमित्यादि धर्मो राज्ञा कृतः स्वेच्छया समाश्रितः सोऽपि स्वधर्मः पाल्यतामिति व्यवस्थितो यो निजधर्माणामविरोधेन तैर्ब्राह्मणैर्यत्नेन संरक्षणीयः संपादनीयः । तुशब्देन निजधर्मविरुद्धस्य सामयिकस्य रक्षणं व्यवच्छिनत्ति । अपिशब्देन—

पूगश्रेणिगणानां च सङ्केतसमयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च ॥

इति बृहस्पत्युक्तराजतदीयपुरुषव्यवस्थापितातिरिक्तसमयबन्धं समुच्चिनोति । चकारेण राजाधिकृतं समुच्चिनोति ॥ ॥ १८६ ॥

---

(१) पाषण्डिनो वेदमार्गविरोधिनो वाणिज्यादिकरा । नैगमास्तदविरोधिन । आदिपदेन त्रैविद्यानां ग्रहणम् । (२) व्यवहारपद च । (३) तद्ब्राह्मणजात च ।

( मिता० ) एवं नियुक्तैस्तैर्यत्कर्म कर्तव्यं तदाह—

निजेति । श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन पालनीयः। तथा राज्ञा च निजधर्माविरोधेनैव यः सामयिको धर्मो यावत्पथिकं भोजनं देयमस्मदराति(१)मण्डलं तुरङ्गादयो न प्रस्थापनीया इत्येवं-रूपः कृतः सोऽपि रक्षणीयः ॥ १८६ ॥

( वी० मि० ) एतादृशव्यवस्थालङ्घने दण्डमाह—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ॥
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥ १८७ ॥

अतिक्रमे तस्य सर्वस्वहरणं कृत्वा तं राजा निष्कासयेदित्यर्थः। अत्र ग्रन्थलाघवाय गणद्रव्यहारिदण्डस्याभिधानमवगन्तव्यम् । अयं च दण्डोऽनुबन्धातिशये द्रष्टव्यः । अनुबन्धाल्पत्वे तु—

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥
निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णं षण्निष्कं शतमानं तु राजतम् ॥

इति मनूक्तदण्डानामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः॥१८७॥

( मिता० ) एवं समयधर्मः परिपालनीय इत्युक्त्वा तदतिक्रमादौ दण्डमाह—

गणद्रव्यमिति । यः पुनर्गणस्य ग्रामादिजनसमूहस्य सम्बन्धि साधारणं द्रव्यमपहरति, संवित्समयस्तां समूहकृतां रा(२)जकृतां वा यो लङ्घयेदतिक्रामेत्तदीयं सर्वं धनमपहृत्य स्वराष्ट्राद्विप्रवासये-न्निष्कासयेत् । अयं च दण्डोऽनुबन्धाद्यतिशये द्रष्टव्यः । अनुबन्धा-ल्पत्वे तु ( मनुः ८.२१९।२२० )—'यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम् । विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥ निगृह्य दापये-देनं समयव्यभिचारिणम् । चतुःसुवर्णं षण्निष्कं शतमानं च राज-तम्' ॥ इति मनुप्रतिपादितदण्डानां निर्वासनचतुःसुवर्णषण्निष्कश-तमानानां चतुर्णामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः ॥१८७॥

(१) मण्डले घ. । (२) राज्ञा कृतां ग. ।

( वी० मि० ) राजव्यवस्थापित इव ग्रामादिसमूहवादिव्यवस्थापितोऽप्यर्थो न लङ्घनीय इत्याह—

कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ॥

यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम् ॥ १८८ ॥

समूहहितं सेतुबन्धनकारित्वादिकं वदतां कर्तव्यमिति ब्रुवतां वचनं तत्सर्वैरेव संपादनीयम् । यस्तु तत्र विपरीतः प्रतिकूलः स्यात् स प्रथमसाहसं दमं दाप्यः ॥ १८८ ॥

(मिता०) इदं च तैः कर्तव्यमित्याह—

कर्तव्यमिति । गणिनां मध्ये ये समूहहित(१)वादनशीलास्त द्वचनमितरैर्गणानामन्तर्गतैरनुसरणीयम् ॥

(मिता०) अन्यथा दण्ड इत्याह—

यस्तत्रेति । यस्तु गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी स राज्ञा प्रथमसाहसं दण्डनीयः ॥ १८८ ॥

( वी० मि० ) तादृशवचनकारिषु राजकृत्यमाह—

समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ॥

स दानमानसत्कारैः पूजयित्वा महीपतिः ॥ १८९ ॥

समूहहितकार्यार्थे स्वसमीपमागतान् कृतकार्यान् सर्वानेव दानमानसहितैः सत्कारैः पूजयित्वा महीपतिर्विसर्जयेदित्यर्थः ॥ १८९ ॥

(मिता०) राज्ञा चे(२)त्थं गणिषु वर्तनीयमित्याह—

समूहकार्य इति । समूहकार्यनिवृत्त्यर्थं स्वपार्श्वं प्राप्तान् गणिनो निर्वर्तितात्मीयप्रयोजनान् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत् ॥ १८९ ॥

( वी० मि० ) यदा समूहकार्यार्थे सर्वे राजसन्निधिं नाऽऽयान्ति किं तु सर्वैरेक एव तत्र प्रहीयते, तदा कथं सर्वेषां सत्कार इत्यत आह—

समूहकार्यं प्रहितो यल्लभेत तदर्पयेत् ॥

एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥ १९० ॥

समूहहिते कार्ये निमित्तभूते प्रहित एकः कश्चिद्राजसन्निधौ यत्

(१) हितवदन घ । (२) चैवं गणिषु वर्तितव्य घ ।

लभेत तत्सर्वेभ्यो विभज्यार्पयेत् । यद्यसौ स्वयं नार्पयेत्तदा राजाऽर्पितमेकादशगुणितं दाप्यः। तथा चैकस्य यः सत्कारो राज्ञा कृतः स एव सर्वेषामपीति भावः॥ १९०॥

(मिता०) समूहदत्तापहारिणं प्रत्याह—

समूहकार्यप्रहित इति। समूहकार्यार्थं महाजनैः प्रेरितो राजपार्श्वे यद्धिरण्यवस्त्रादिकं लभते तदप्रार्थित एव महाजनेभ्यो निवेदयेत्। अन्यथा लब्धादेकादशगुणं दण्डं दापनीयः॥ १९०॥

धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः॥
कर्तव्यं वचनं तेषां समूहहितवादिनाम्॥ १९१॥

(वी० मि०) श्रौतस्मार्तधर्मज्ञा बाह्यान्तरशौचवन्तो लोभशून्याः समूहहितकार्यचिन्तकाः राज्ञा कर्तव्या भवेयुः। एतेषां समूहहितवादिनां वचनमकरणे दण्डप्रसक्त्याऽवश्यं सर्वैः कर्तव्यमित्यर्थः॥१९१॥

(मिता०) एवंप्रकाराश्च कार्यचिन्तकाः कार्या इत्याह—

धर्मज्ञा इति। श्रौतस्मार्तधर्मज्ञा बाह्याभ्यन्तरशौचयुक्ता अर्थेष्वलुब्धाः कार्यविचारकाः कर्तव्याः। तेषां वचनमितरैः कार्यमित्येतदादरार्थं पुनर्वचनम्॥ १९१॥

(वी० मि०) त्रैविद्यानामुक्तं धर्मं श्रेण्यादिष्वतिदिशति—

श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः॥
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत्॥ १९२॥

एकपण्यशिल्पोपजीविसमुदायः श्रेणयो, नैगमाः पौराः, पाखण्डिनो वेदप्रामाण्यानभ्युपगन्तारः, गण आयुधीयादीनामेककर्मप्रवृत्तानां समुदायः। अयं निजधर्माविरोधेनेत्यादिना प्राग् विहितो विधिः। अपिशब्देन राजाधिकारिणां समुच्चयः। प्रसङ्गादेतेषु राज्ञः कृत्यमाह पूर्वसिद्धां तेषां वृत्तिं पालयेत्। आद्यचकारेण प्रागुक्तानां ब्राह्मणानां समुच्चयः। द्वितीयचकारेणाऽवृत्तीनां वृत्तिं कल्पयेदिति समुच्चीयते॥ १९२॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने संविद्व्यतिक्रमप्रकरणम्॥

---

(मिता०) इदानीं त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशन्नाह—

श्रेणीति । एकपण्यशिल्पोपजीविनः श्रेणयः । नैगमाः ये वेदस्याप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः । पाखण्डिनो ये वेदस्य प्रामाण्यमेव नेच्छन्ति नग्नाः सौगतादयः । गणो व्रातः आयुधीयादीनामेककर्मोपजीविनाम् । एषां चतुर्विधानामप्ययमेव विधिर्यो निजधर्माविरोधेनेत्यादिना प्रतिपादितः । एतेषां च श्रेण्यादीनां भेदं धर्मव्यवस्थानं नृपो रक्षेत् पूर्वोपात्तां वृत्तिं च पालयेत् ॥ १९२ ॥

इति संविद्व्यतिक्रमप्रकरणम् ।

---

( वी० मि० ) अथ—

भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्याऽनपाकर्म तद्विवादपदं स्मृतम् ॥

इति नारदोक्तं वेतनानपकर्माख्यं विवादपदं निरूपयति—

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ॥
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥ १९३ ॥

गृहीतवेतनो भृतकोऽधिकर्मकृत्वाऽङ्गीकृतं कर्म त्यजन् समं व्यवस्थापितवेतनतुल्यं धनं महीक्षिता दाप्यः । अथ बलाद् भृतिं दत्वा कर्म कारयितव्यः ।

कर्माऽकुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात् ।

इति नारदवचनात् । इदमारभ्याऽकुर्वतः । अनारंभे तु—

भृतोऽनार्तो न यो कुर्याद्दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥

इति मनुवचनाद्व्यवस्था । 'त्यजन्'इत्यनेन स्वकृते कर्मत्यागे दण्ड उक्तः, अन्यथा तु—

स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात् ।

इति नारदवचनाद्व्यवस्था द्रष्टव्या । भृत्यैश्च स्वामिनः उपस्करः प्रग्रहलाङ्गलादिको रक्षणीयः । अरक्षणे च भृत्यैस्तत्स्वं स्वामिने देयमिति भावः । यत्र यादृशी भृतिः परिमापिता स्वामिभृत्याभ्यां तादृशी तत्र भृतिर्भृत्येन लभ्यत इति स्पष्टत्वादुपेक्ष्या ॥ १९३ ॥

(मिता०) संप्रति वेतनस्यानपाकर्माख्यं व्यवहारपदं प्रस्तूयते । तत्स्वरूपं च नारदेनोक्तम्–(१)'भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः । वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्' ॥ इति । अस्यार्थः–(१) भृत्यानां वेतनस्य वक्ष्यमाणश्लोकैरुक्तो दानादानविधिक्रमो यत्र विवापदपदे तद्वेतनस्यानपाकर्मेत्युच्यते । तत्र निर्णयमाह—

गृहीतेति । गृहीतं वेतनं येनासौ स्वाङ्गीकृतं कर्म त्यजन् अकुर्वन् द्विगुणां भृतिं स्वामिने दद्यात् । यदा पुनरभ्युपगतं कर्म अगृहीते एव वेतने त्यजति तदा समं यावद्वेतनमभ्युपगतं तावद्दाप्यो न द्विगुणम् । यद्वाङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्यः । 'कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्' इति नारदवचनात् । भृतिरपि तेनैवोक्ता—'(२)भृत्याय वेतनं दद्यात्कर्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम्' ॥ इति । तैश्च भृत्यैरुपस्कर (३)उपस्करणं लाङ्गलादीनां प्रग्रहयोक्त्रादिकं यथाशक्त्या रक्षणीयम् । इतरथा कृष्यादिनिष्पत्त्यनुपपत्तेः ॥ १९३ ॥

( वी० मि० ) परिभाषिते वेतने कर्म कुर्वतो भृतकस्य किं देयमित्यत आह—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ॥
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ १९४ ॥

यस्तु स्वामी भृतिं वेतनमनिश्चित्य कर्म वाणिज्यादिकं भृतकद्वारा कारयेत् स वाणिज्यपशुसस्यवृद्धेर्दशमं भागं भृतकाय महीक्षिता दाप्यः । इदं तु सीरवाहकपरम् ।

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।
भक्ताच्छादभृतः सीराद्भागं भुञ्जीत पञ्चमम् ॥

इति बृहस्पतिवचनात् । त्रिभागो भक्ताच्छादनदानाभावे ॥ १९४ ॥

(मिता०) भृतिमपरिच्छिद्य यः कर्म कारयति तं प्रत्याह—

दाप्य इति । यस्तु स्वामी वणिक् गोमी क्षेत्रिको वा अपरिच्छिन्नवेतनमेव भृ(४)त्यं कर्म कारयति स तस्माद्वाणिज्यपशुसस्यलक्षणात्कर्मणो यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीयः ॥ १९४ ॥

(१) भृतानां घ. । (२) भृताय घ. । (३) उपकरणं घ. । (४) भृत्यकर्म ग. घ. ।

( वी० मि० ) भृतकस्यापराधेन स्वामिनो लाभह्रासे वेतनह्रासमाह—

देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ॥
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥१९५॥

यस्तु भृतकः पण्यक्रय्यानुचितं देशं कालं चाऽतीयात् विक्रेयकर्षणादिकमकुर्वन् लङ्घयेत् यश्चाऽन्यथा स्वाम्यसंप्लुतेन बहुव्ययादिना लाभं कुर्यात्तत्र तस्मिन् भृतके स्वामिनो वेतनदाने छन्द इच्छा यावदिच्छति तावद्दद्यान्न तु संपूर्णं वेतनमित्यर्थः । यदा पुनर्देशकालविशेषतयाऽधिकं लाभं भृतकः करोति तदा स्वयस्यापि-तादृशमभागादेश्चाधिकं वेतनं देयम् । आद्यचकारेण क्रेतृविशेषादिकं द्वितीयचकारेणाऽमूलह्रासं समुच्चिनोति ॥ १९५ ॥

(मिता०) अनादृतकारिणं प्रत्याह—

देशमिति । यस्तु भृत्यः पण्यविक्रयाद्युचितं देशं कालं च पण्यविक्रयाद्यकुर्वन्(१)पादिनोल्लङ्घयेत्तस्मिन्नेव वा देशे काले च लाभमन्यथा व्ययाधतिशयसाध्यतया हीनं करोति तस्मिन्भृतके भृतिदानं प्रति स्वामिनश्छन्द इच्छा भवेत् । यावदिच्छति तावद्दद्यान्न पुनः सर्वामेव भृतिमित्यर्थः । यदा पुनर्देशकालाभिज्ञतयाऽधिको लाभः कृतस्तदा पूर्वपरिच्छिन्नाया (२)भृतेरधिकमपि धनं स्वामिना भृत्याय दातव्यम् ॥ १९५ ॥

( वी० मि० ) अनेकभृतकसाध्यं कर्माऽधिकृत्याह—

यो यावत् कुरुते कर्म तावत्तस्य तु वेतनम् ॥
उभयोरप्यसाध्यं चेत्साध्यं कुर्याद्यथाश्रुतम् ॥ १९६ ॥

एकमेव कर्म यद्युभाभ्यां बहुभिर्वा क्रियमाणं न्यूनाधिकश्रमेण समाप्यते तदा स्वस्वकर्मानुसारेण न्यूनमधिकं च तस्य विभज्य वेतनं देयमुभयोर्बहूनां वाऽसाध्यमपि चेत् । द्वितीयभृतकदोषेणाऽसिद्धं चेत्यधिकारार्थः । साध्ये कर्मणि यथाऽङ्गीकृतं कुर्यात् । एतस्य कर्मण इदं वेतनमिति परिमापितं वेतनं कर्मणः समाप्तावेव देयं, न त्वेकदेशस्य कृतस्य वेतनं देयम् । न वा तत्कर्मवेतनं प्रत्येकं भृतके

(१) दर्शनेनमुल्लङ्घयेत् च । (२) भृतेरपि किमपि धनमधिकं च ।

भ्यो देयं किं तु मिलिताभ्यां मिलितेभ्यो वा एकमेव वेतनं विभज्य देयमिति पर्यवसितार्थः ॥ १९६ ॥

(मिता०) अनेकभृत्यसाध्यकर्मणि भृतिदानप्रकारमाह—

यो यावदिति । यदा पुनरेकमेव कर्म नियतवेतनमुभाभ्यां क्रियमाणं उभयोरप्यसाध्यं चेद्व्याध्याद्यभिभवादुभाभ्याम्, अपिशब्दाद्बहुभिरपि यदि न परिसमापितं तदा यो भृत्यो यावत्कर्म करोति तावत्तस्मै तत्कृतकर्मानुसारेण मध्यस्थकल्पितं वेतनं देयं न पुनः समम् । न चावयवशः कर्मणि वेतनस्यापरिभाषितत्वाददानमिति मन्तव्यम् । साध्ये तूभाभ्यां कर्मणि निर्वर्तिते यथाश्रुत यावत्परिभाषितं तावदुभाभ्यां देयं, न पुनः प्रत्येकं कृत्स्नं वेतनं नापि कर्मानुरूपं परिकल्प्य देयम् ॥ १९६ ॥

(वी०मि०) 'भृत्यै रक्ष्य उपस्करः' इत्युक्तं, तत्राऽरक्षणे कर्मप्रातिकूल्ये च दण्डमाह—

अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ॥
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥ १९७ ॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन् ॥
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ १९८ ॥

न विद्यते राजदैविकं यस्य तादृशं भाण्डं वाहकेऽज्ञानान्नाशितं तदा वाहको दाप्यः। तुशब्देन राजदैविकनष्टं व्यवच्छिनत्ति। विवाहाद्यर्थं व्यवस्थापिते दिने प्रस्थानविघ्नकारी भृतको भृत्यान्तरासम्भवे द्विगुणां भृतिं प्रकर्षेण ताडनादिनाऽतिशयपीडाकरेण प्रकारेण दाप्यः। एवकारेण कालान्तरे कर्मकारणव्यवच्छेदः । चकारेणाऽर्धमार्गे विलम्बातिशयकारिणः समुच्चयः । प्रक्रान्ते कर्मण्यारब्धे भृत्यान्तरसम्भवे तत्कर्म त्यजन् सप्तमं भागं, पथि स्वदेशमध्ये मार्गे सन्त्यजन् चतुर्थं भागं, अर्द्धपथे त्यजन् सर्वां भृतिं भृतकः प्रदाप्यः । यश्च भृत्यं दुरुपदेशादिना कर्म त्याजयति सोऽपि द्विगुणादिकां भृतिं दाप्यः । अपिचेति विकल्पव्युदासाय । दण्डसमुच्चयार्थं मनुः—

आर्तस्तु कुर्यात् स्वस्थः सन् यथाभाषितमादितः ।
स दीर्घस्यापि कालस्य स्वं लभेतैव वेतनम् ॥

अन्तरितादिनानि गणयित्वा कर्मणा तावन्त्यहानि पूरयेदित्यर्थः।

यदि तु स्वस्थतादशायामप्यालस्यादिना न करोति तदा न भृतिं लभते ।

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥

इति मनुवचनादिति संक्षेपः ॥ १९७—१९८ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने वेतनादानप्रकरणम् ।

---

( मिता० ) आयुधीयभारवाहकौ प्रत्याह—

अराजदैविकमिति । न विद्यते राजदैविकं यस्य भाण्डस्य तत्तथोक्तम् । तद्यदि प्रमादादिना वाहकेन नाशितं तदा नाशानुसारेणासौ तद्भाण्डं दापनीयः । तदाह नारदः—'भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः । दाप्यो यत्तत्र नश्येत्तु दैवराजकृताहते' ॥ इति । यः पुनः विवाहाद्यर्थं मङ्गलयति वासरे प्रतिष्ठमानस्य तत्प्रस्थानौपयिकं कर्म प्रागङ्गीकृत्य तदानीं न करिष्यामीति प्रस्थानविघ्नमाचरति तदासौ द्विगुणां भृतिं दाप्यः । अत्यन्तोत्कर्षहेतुकर्मनिरोधात् ॥ १९७ ॥

( मिता० ) किञ्च—

प्रक्रान्त इति । प्रक्रान्ते अध्यवसिते प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति असौ भृतेः सप्तमं भागं दाप्यः । नन्वत्रैव विषये प्रस्थानविघ्नकर्तुरित्यादिना द्विगुणभृतिदानमुक्तं, इदानीं सप्तमो भाग इति विरोधः । उच्यते । भृत्यान्तरोपादानावसरसम्भवे स्वाङ्गीकृतं कर्म यस्त्यजति तस्य सप्तमो भागः । यस्तु प्रस्थानलग्नसमय एव त्यजति तस्य द्विगुणभृतिदानमित्यविरोधः । यः पुनः पथि प्रक्रान्ते गमने वर्तमाने सति कर्म त्यजति स भृतेश्चतुर्थं भागं दाप्यः । अर्धपथे पुनः सर्वां भृतिं दाप्यः । यस्तु त्याजकः कर्मात्यजन्तं त्याजयति स्वामी पूर्वोक्तप्रदेशेष्वसावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दापनीयः । एतच्च व्याधिनादिविषयम् । ( मनुः ८ २१५ )—'भृत्योऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् । स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्' ॥ इति मनुवचनात् । यदा पुनर्व्या(१)धाव-

(१) वाऽप्यावयमेव ग ।

पगतेऽन्तरितदिवसान्परिगणय्य पूरयति तदा लभत एव वेतनम् । ( ८।२१६ )—'आर्तस्तु कुर्यात्स्वस्थः सन्यथाभाषितमादितः । स दीर्घस्यापि कालस्य स्वं लभेतैव वेतनम्' ॥ इति मनुस्मरणात् । यस्त्वपगतव्याधिः स्वस्थ एव वाऽऽलस्यादिना स्वारब्धं कर्माल्पोनं न करोति परेण वा न समापयति तस्मै वेतनं न देयमिति । यथाह मनुः ( ८।२१७ )—'यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् । न तस्य वेतनं देयमल्पोनस्यापि कर्मणः' ॥ इति ॥ १९८ ॥

इति वेतनादानप्रकरणम् ।

---

( वी०मि० ) अथ द्यूतसमाह्वयं नाम विवादपदम्—

अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

इति मनुवचनात् द्विधा विभक्तमुपक्रमते—

ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ॥
गृह्णीयाद् धूर्तकितवादितरात्पञ्चकं शतम् ॥ १९९ ॥
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ॥
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥ २०० ॥
प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले ॥
जितं ससभिके स्थाने दापयेदन्यथा स(१) तत् ॥ २०१ ॥
द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ॥
राज्ञा सचिन्हं(२) निर्वास्याः कूटाक्षोपधिदेविनः ॥२०२॥
द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ॥
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०३ ॥

परस्परसंप्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते, तत्र ग्लहे शतिका शतिपरिमिता वृद्धिर्यस्य तस्माद् धूर्तकितवाज्जयिनः कितवात् द्यूतकारिणः सकाशात् पञ्चकं शतं शतसुवर्णादौ पञ्चसुवर्णादिकं सभिको द्यूतसमाधिष्ठाता गृह्णीयात् । इतरात् शतन्यून-

---

(१) न तत—इति मु० पु० पाठः । (२) सचिन्हा—इति क० ख० पु० पाठः ।

वृद्धेर्दशक शत दश मापान् गृह्णीयादित्यर्थः । तुशब्देन पराजितात् पञ्चकशतादिग्रहणं व्यवच्छिद्यते स सभिको राज्ञा सम्यक् उक्तवृत्तिकल्पनया परास्कन्दनिवारणेन च पालित सन् राज्ञे यथाकृतं व्यवस्थानक्रमेण स्वप्राप्तद्रव्यस्य भागमंशं राज्ञे दद्यात्। जितग्लह जेत्रे दद्यात् । पश्चात्पराजितस्थाने स्वयमुद्ग्राहयेत् साधयित्वा गृह्णीयात् । सत्यवचनं क्षमा च तदुभयवान् । सत्यवचो दद्यादित्यर्थः । यदि तु सभिको नोद्ग्राहयितु शक्नोति तदा राज्ञा दापनीयमित्याह प्राप्त इति । नृपतिना स्वस्य भागे प्राप्ते प्रसिद्धे अप्रच्छन्ने धूर्तमण्डले कितवसमाजे समिकसहिते स्थाने जितं सभिकाय दापयेद्राजा । यद्वा स्थाने क्रीडास्थाने स राजा सभिके दापयेदिति योज्यम् । अन्यथा राज्ञा भागेऽप्राप्ते प्रच्छन्ने वा धूर्तमण्डले समिकानधिष्ठिते स्थाने वा जितं तु न राजा दापयेत् । द्यूतसम्बन्धिनां व्यवहाराणां द्रष्टारो निर्णायका साक्षिणश्च त एव । एवकारेण स्त्रीबालवृद्धकितवस्यादिदोपाभावापेक्षाव्यवच्छेद. । कूटैः कपटसम्बन्धैरक्षादिभिरुपधिना वञ्चनहेतुना च मणिमंत्रौपधादिना ये दीव्यन्ति ते राज्ञा स चिन्हं निर्वास्याः । तदाह नारदः—

> कूटाक्षदेविनः पापान् राजा राष्ट्रात् विवासयेत् ।
> कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृत ॥

एवं च—

> द्यूतं समाह्वय चैव यः कुर्यात्कारयेत च ।
> तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

इति मनुवचनादौ कूटाक्षदेवनपराण्येवेति मन्तव्यम् । सभिका एव एको राजपुरुषो मुख प्रधानं यत्र तादृशं द्यूत कार्यं चोरपरिचयार्थम् । 'ग्लहे शतिकवृद्धि'रित्याद्युक्त द्यूतधर्म समाह्वयेऽतिदिशति–एप एवेति । प्राणिना मल्लमेपादिना निर्वर्त्ये द्यूते समाह्वयनामके पूर्वोक्त एव विधिः प्रकारो ज्ञेय इत्यर्थः । बृहस्पति —

> अन्योन्य परिगृह्णीता. पक्षिमेपमृगादय ।
> प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ॥
> द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ।
> तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥
> ग्लहः प्रकाश. कर्तव्यो निर्वास्याः कूटदेविनः ।

नारदः—

अनिर्दिष्टं तु यो राज्ञा द्यूतं कुर्यात्तु मानवः ।
न स तं प्राप्नुयात् कामं विनयं चैव सोऽर्हति ॥
परीहासकृतं यच्च यच्चाप्यविदितं नृपे ।
तत्रापि प्राप्नुयात कामं विनयं चैव सोऽर्हति ॥

विष्णुः—'द्यूते कपटाक्षदेविनां करच्छेदः, उपधिदेविनां च सन्दंशोऽङ्गुष्ठतर्जन्योः' ॥ १९९—२०३ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने द्यूतसमाह्वयप्रकरणम् ॥

(मिता०) अधुना द्यूतसमाह्वयाख्यं वि(१)वादपदमाधिक्रियते । तत्स्वरूपं च नारदेनाभिहितम्—'अ(२)क्षबध्नशलाकाद्यैर्देवनं जिह्मकारितम् । पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम्' ॥ इति । अक्षाः पाशकाः । बध्नश्चर्मपट्टिका । शलाका दन्तादिमय्यो दीर्घचतुरस्राः । आद्यग्रहणाच्चतुरङ्गरादिक्रीडासाधनं करितुरङ्गरथादिकं गृह्यते । तैरप्राणिभिर्यद्देवनं क्रीडा पणपूर्विका क्रियते । तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः चशब्दान्मल्लमेषमाहिषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते तदुभयं यथाक्रमेण द्यूतसमाह्वयाख्यं विवादपदम् । द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । तदुक्तं मनुना (९।२२३)—'अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः' ॥ इति । तत्र द्यूतसभाधिकारिणो वृत्तिमाह—

ग्लह इति । परस्परसम्प्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते । तत्र ग्लहे तदाश्रया शतिका शतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिस्तस्माद्धूर्तकितवात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात् । पञ्चपणा आयो यस्मिन् शते तत्पञ्चकं शतम् । 'तदस्मिन्वृद्ध्यायलाभ'इत्यादिना कन् । जितग्लहस्य विंशतितमं भागं गृह्णीयादित्यर्थः । सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः । कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी सभापतिरुच्यते । इतरस्मात्पुनरपरिपूर्णशतिकवृद्धेः कितवाद्दशकं शतं जितद्रव्यस्य दशमं भागं गृह्णीयादिति यावत् ॥ १९९ ॥

(१) व्यवहारपदमाधि घ. । (२) अक्षबन्ध ख. ।

(मिता०) एवं क्लृप्तवृत्तिना सभिकेन किं कर्तव्यमित्याह—

स इति । य एव क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथा सम्प्रतिपन्नमंशं दद्यात् । तथा (१)जितं यद्द्रव्यं तदुद्ग्राहयेत् बन्धकग्रहणेनासेधादिना च पराजितसकाशादुद्धरेत् । उद्धृत्य च तद्धनं जेत्रे जयिने सभिको दद्यात् । तथा क्षमी भूत्वा सत्यवचो विश्वासार्थं द्यूतकारिणां दद्यात् । तदुक्तं नारदेन—'सभिकः कारयेत् द्यूतं देयं दद्याच्च तत्कृतम्'। इति ॥२००॥

(मिता०) यदा पुनः सभिको दापयितुं न शक्नोति तदा राजा दापयेदित्याह—

प्राप्त इति । प्रसिद्धे अप्रच्छन्ने राजाध्यक्षसमन्विते ससभिके सभिकसहिते कितवसमाजे सभिकेन च राजभागे दत्ते राजा धूर्तकितवमविप्रतिपन्नं जितं पणं दापयेत् । अन्यथा प्रच्छन्ने सभिकरहिते अदत्तराजभागे (२)द्यूते जितपणं जेत्रे न दापयेत् ॥ २०१ ॥

(मिता०) जयपराजयविप्रतिपत्तौ निर्णयोपायमाह—

द्रष्टार इति । द्यूतव्यवहाराणां द्रष्टारः सभ्यास्त एव कितवा एव राज्ञा नियोक्तव्याः । न तत्र श्रुताध्ययनसम्पन्ना इत्यादिनियमोऽस्ति । साक्षिणश्च द्यूते द्यूतकारा एव कार्याः । न तत्र स्त्रीबालकवृद्धकितवेत्यादिनिषेधोऽस्ति ॥

(मिता०) क्वचित् द्यूते निषेद्धृषु दण्डमाह—

राज्ञेति । कूटैरक्षादिभिरुपधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत् । नारदेन तु निर्वासने विशेष उक्तः—'कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् । कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः'॥ इति । यानि च मनुवचनानि द्यूतनिषेधपराणि (मनु ९।२२४)-'द्यूतं समाह्वयं चैव यः कुर्यात् कारयेत वा । तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः' ॥ इत्यादीनि, तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकरहितद्यूतविषयतया च योज्यानि ॥ २०२ ॥

(मिता०) किञ्च—

द्यूतमिति । यत्पूर्वोक्तं द्यूतं तदेकमुखं एकं मुखं प्रधानं यस्य

---

(१) जितं द्रव्यमुद्ग्राहयेत् ख । (२) द्यूते पणं जेत्रे ख ।

द्यूतस्य तत्तथोक्तं कार्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः । तस्करज्ञानकारणात् तस्करज्ञानरूपं प्रयोजनं पर्यालोच्य । प्रायशश्चौर्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्यम् ॥

( मिता० ) द्यूतधर्मं समाह्वयेऽतिदिशन्नाह—

एष इति । ग्लहे शतिकवृद्धेरित्यादिना यो द्यूतधर्म उक्तः स एव प्राणिद्यूते मल्लमेषमहिषादिनिर्वर्त्ये समाह्वयसंज्ञके ज्ञातव्यः॥ २०३ ॥

इति द्यूतसमाह्वयाख्यं प्रकरणम् ।

( वी०मि०) अथ वाक्पारुष्यं नाम विवादपदम्—

देशजातिकुलादीनामाक्षेपं न्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

इति नारदेन लक्षितं निरूपयति—

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ॥
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ॥ २०४ ॥
अभिगन्तास्मि भगिनीं मातरं वा तवेति ह ॥
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥ २०५ ॥
अर्धोऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च ॥
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥ २०६ ॥
प्रातिलोम्यापवादेषु(१)चतुस्त्रिद्विगुणा दमाः ॥
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥ २०७ ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ॥
शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ २०८ ॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश ॥
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २०९ ॥

(१) द्विगुणात्रिगुणा दमाः—इति मु० पु०पाठः ।

पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ॥
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१० ॥
त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ॥
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ २११ ॥

वाक्पारुष्यं तावत्त्रिविधम् । तदाह बृहस्पतिः—

देशकालकुलादीनां क्षेपः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥

इति । द्रव्य पदार्थं विनाऽसत्यमिति यावत्, तेनासत्यं पापसामान्याङ्गवैकल्यनीचकुलाद्यभिधानमधममसत्यमुपपातकाभिधानं मध्यममसत्यं महापातकाभिधानमुत्तमं वाक्पारुष्यमित्यर्थः । तत्राद्ये दण्ड उच्यते । सत्यमन्धोऽसीत्याद्यभिधानमसत्यमनन्धादेस्तथाभिधानम् । अन्यथास्तोत्रं निन्दापर्यायस्तुतिवाक्यमन्धादेः पुण्डरीकचक्षुरसीत्याद्यभिधानम् । एतैश्च न्यूनाङ्गादीनां सम्बोधि न्यूनाङ्गत्वन्यूनेन्द्रियत्वरोगित्वप्रभृति पर्यायम् । क्षेपं भर्त्सनं करोति तदाऽर्धत्रयोदश सार्द्धद्वादश पणान् दण्ड्यः । इदं च समजातिगुणपरम् । तदाह बृहस्पतिः—

समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिमतः शास्त्रे पणा अर्धत्रयोदश ॥
समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु सः ।
उत्तमस्यार्द्धिकल्पोक्तो वाक्पारुष्ये परस्परम् ॥

मात्रादौ तु वाक्पारुष्ये विशेषमाह मनुः—

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाऽददद्गुरोः ॥

मात्रादेर्निरपराधत्वे ज्ञातव्यः सापराधत्वे चैत्रवदिति मिताक्षरा । तव भगिनीं मातरं वाऽभिगन्तास्मि मिथुन भूयोऽपि मोक्ष्यमाणोऽहमिति शपन्तं उद्वेजयन्तं समजातिगुणं राजा पञ्चविंशतिपणमितं

दमं दापयेत्। वाशब्दो अनास्थायां, तेन पुत्रीं जायां वा तवाऽभिगन्ताहमित्यादिकमपि सङ्गृहीतम्। हशब्दः पादपूरणे। अर्धत्रयोदशपणमितः पञ्चविंशतिपणमितो वा यो दण्डः समेपूक्तः सोऽधमेषु पतनीयेष्वर्धो भवति। परस्त्रीपुत्समेषु च समेपूक्तो द्विगुणो भवति। अधमोत्तमत्वेन जात्या गुणेन वा वर्णतत्सङ्करपरस्परं वाक्पारुष्यं त्वाह दण्डेति। वर्णा ब्राह्मणादयः, जातयो मूर्धावसिक्तादयः उत्तराधरा उत्तमाधमास्तैःपरस्परमाक्षेपे दण्डस्य प्रकर्षेण नयनमूहनं कार्यम्। यथा मूर्द्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टमाकुश्य ब्राह्मणः क्षत्रियाक्षेपनिमित्तदण्डात्सार्द्धगुणं ब्राह्मणाक्षेपनिमित्तदण्डात्पादोनं दद्यादिति। अर्धोऽधमेष्वित्युक्तं दृष्टान्ततयाऽभिधान एवाऽधमतरोत्कृष्टतरादौ विशेषमाह प्रातिलोम्येति। वर्णानां प्रातिलोम्येनाऽपवादो हीनतरहीनैरुत्कृष्टस्याक्रोशस्तेषु चतुर्गुणादयो यथाक्रमं दमाः। आनुलोम्येन हीनहीनतमे क्रमेणोत्कृष्टेनाक्षेपे तस्मात्समानवर्णदण्डार्धार्धहानिक्रमेण दमा भवन्ति। यथा ब्राह्मणस्याक्षेपे यो ब्राह्मणस्य दण्डः तच्चतुर्गुणः शुद्रस्य तत्रिगुणो वैश्यस्य तद्विगुणः क्षत्रियस्य ब्राह्मणाक्षेपे दण्डः। ब्राह्मणस्य ब्राह्मणाक्षेपे यो दण्डः क्षत्रियाक्षेपे तदर्धं वैश्याक्षेपे तच्चतुर्थांशः शूद्राक्षेपे तदष्टमांशो दण्डो ब्राह्मणस्य भवति। एवमन्यदुहनीयम्। बाहुं तव छिनद्मीत्यादिवाचिके बह्वादिविनाशे शत्यः शतपणमितो दमः। पादादिषु विनाशे वाचिके सति शतार्धमितो दमः समानगुणजातिमतः। सक्थि ऊरुः, आदिग्रहणात् स्फिगादेरप्रधानस्याङ्गस्य सङ्ग्रहः। इदं च बाहुच्छेदादिशक्तपरम्। अशक्तस्तु एवं वदन् दश पणान् दण्ड्यः। शक्तश्च बाहुच्छेदाद्याक्षेपकारितस्याशक्तस्य क्षेमाय उत्तरकालं बाहुच्छेदाद्यभावाय प्रतिभुवं दाप्यः। तुशब्देनाऽधिकतमशक्तिकव्यवच्छेदः। तथाशब्देन प्रतिभुवोऽभावे राज्ञा बन्धनीय इति समुच्चीयते। उत्तमाधमभेदेनाऽत्रापि न्यूनाधिक्यम्। उत्तमेऽधमे मध्यमे च वाक्पारुष्ये त्वाह—पतनीयैर्ब्राह्मणवधादिभिः कृते क्षेपे भर्त्सने मध्यमसाहसो दण्डः। उपपातकयुक्ते क्षेपे तु प्रथमसाहसं दण्डः दाप्यः। मध्यमसाहसादिकं प्राग्लक्षितम्। इदं च समानगुणादिपरम्। उत्तमाधमभेदेन न्यूनाधिक्यं चोहनीयम्। त्रैविद्यानां वेदत्रयसम्पन्नानां नृपाणां देवतानां च क्षेपे आदिपदेन वृक्षादिच्छेदनसङ्ग्रहः। भर्त्सने ब्राह्मणस्योत्तमसाहसो, जाति-

पूगादीनां मूर्धावसिक्तादिसमूहानां क्षेपे मध्यमसाहसो, ग्रामस्य देशस्य च क्षेपे प्रथमसाहसो दण्डः । क्षत्रियादेस्तु द्वैगुण्यादिकमूहनीयम् । पतनीयाक्रोशे मनुः—

ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विधानतः ।
ब्राह्मणे साहसः पूर्वः क्षत्रिये चैव मध्यमः ॥

शूद्रानुवृत्तौ बृहस्पतिः—

विक्रोशकस्तु विप्राणां जिह्वाछेदनमर्हति ।

तथा—

नामजातिग्रहं तेषामभिद्रोहेण कुर्वतः
निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥

इदं तु मात्सर्यानुबन्धातिशयपूर्वकाक्रोशपरमित्याभाति॥२०४-२११॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने वाक्पारुष्यप्रकरणम् ।

( मिता० ) इदानीं वाक्पारुष्यं प्रस्तूयते । तल्लक्षणं चोक्तं नारदेन—'देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते' ॥ इति । देशादीनामाक्रोशं न्यङ्गसंयुतम् । उच्चैर्भाषणमाक्रोश', न्यङ्गमवद्य तदुभययुक्तं यत्प्रतिकूलार्थमुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यं कथ्यते । तत्र कलहप्रियाः खलु गौडा इति देशाक्रोशः । नितान्तं लो(१)लुपाः खलु विप्रा इति जात्याक्रोशः । क्रूरचरिता ननु वैश्वामित्रा इति कुलाक्षेपः । आदिग्रहणात्स्वविद्याशिल्पादिनिन्दया विद्वच्छिल्(२)ल्पादिपुरुषाक्षेपो गृह्यते । तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैवोक्तम्—'निष्ठुराश्लीलतीव्रत्वादपि तत्त्रिविधं स्मृतम् । गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद् गुरु । साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् । पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः' ॥ इति । तत्र धिङ्मूर्ख(३) जाल्मइत्यादि साक्षेपम् । अत्र न्यङ्गमित्यसभ्यम् । अवद्यं भगिन्यादिगमन तद्युक्तमश्लीलम् । सुरापोऽसीत्यादिमहापातकाद्याक्रोशैर्युक्तं वचस्तीव्रम् ॥

(१) खलु लोलुपा ख. । (२) शिल्पादि ख घ. ।
(३) धिङ्मूर्ख जाल्मस्त्वमित्यादि ग. ।

तत्र निष्ठुराक्रोशे सवर्णविषये दण्डमाह—

सत्यासत्येति । न्यूनाङ्गाः करचरणादिविकलाः । न्यूनेन्द्रिया नेत्रश्रोत्रादिरहिताः । रोगिणो दुश्चर्मप्रभृतयः । तेषां सत्येनासत्येनान्यथास्तोत्रेण च निन्दार्थया स्तुत्या । यत्र नेत्रयुगलहीन एषोऽन्ध इत्युच्यते तत्सत्यम् । यत्र पुनश्चक्षुष्माने(१)वान्ध इत्युच्यते तदसत्यम् । यत्र विकृताकृतिरेव दर्शनीयस्त्वमसीत्युच्यते तदन्यथास्तोत्रम् । एवंविधैर्यः क्षेपं निर्भर्त्सनं करोत्यसौ अर्धाधिकद्वादशपणान्दण्डनीयः । ( मनुः ८।२७४ )—'काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम्' ॥ इति यन्मनुवचनं तदतिदुर्वृत्तवर्णविषयम् । यदा पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डनीया इति तेनैवोक्तम् । ( मनुः ८।२७५ )— 'मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आक्षारयन् शतं दाप्यः पन्थानं चाददद् गुरोः' ॥ इति । एतच्च सापराधेषु मात्रादिषु गुरुषु निरपराधायां च जायायां द्रष्टव्यम् ॥ २०४ ॥

( मिता० ) अश्लीलाक्षेपे दण्डमाह—

अभिगन्तास्मीति । त्वदीयां भगिनीं मातरं वा अभिगन्तास्मीति शपन्तं अन्यां वा त्वज्जायामभिगन्तेत्येवं शपन्तं राजा पञ्चविंशतिकं पणानां पञ्चाधिका विंशतिर्यस्मिन्दण्डे स तथोक्तस्तं दमं दापयेत् ॥ २०५ ॥

( मिता० ) एवं समानगुणेषु वर्णेषु दण्डमभिधाय विषमगुणेषु दण्डं प्रतिपादयितुमाह—

अर्ध इति । अधमेष्वाक्षेप्त्रपेक्षया न्यूनवृत्तादिगुणेष्वर्धो दण्डः । पूर्ववाक्ये पञ्चविंशतेः प्रकृतत्वात्तदपेक्षयार्धः सार्धद्वादशपणात्मको द्रष्टव्यः । परभार्यासु पुनरविशेषेण द्विगुणः पञ्चविंशत्यपेक्षयैव पञ्चाशत्पणात्मको वेदि(२)तव्यः । तथोत्तमेषु च स्वापेक्षयाधिकश्रुतवृत्तेषु दण्डः पञ्चाशत्पणात्मक एव ॥

(मिता०) वर्णानां मूर्धावसिक्तादीनां च परस्पराक्षेपे दण्डकल्पनामाह—

दण्डेति । वर्णा ब्राह्मणादयः । जातयो मूर्धावसिक्ताद्याः । वर्णाश्च जातयश्च वर्णजातयः । उत्तराश्च अधराश्च उत्तराधराः वर्णजातयश्च

---

(१) नेत्रोऽन्ध इति ख. । (२) द्रष्टव्यः घ. ।

ते उत्तराधराश्च वर्णजात्युत्तराधरा ते वर्णजात्युत्तराधरे परस्पराक्षेपे क्रियमाणे दण्डस्य प्रणयनं प्रकर्षेण नयनमूहनं वेदितव्यम्। तच्च दण्डकल्पनमुत्तराधरैरिति वि(१)शेषेणोपादानादुत्तराधरभावापेक्षयैव कर्तव्यमित्यवगम्यते। यथा मूर्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टं चाक्रुश्य ब्राह्मणं क्षत्रियाक्षेपनिमित्तात्पञ्चाशत्पणदण्डा त्किंचिदधिकं पञ्चसप्तत्यात्मकं दण्डमर्हति। क्षत्रियोऽपि तमाक्रुश्य ब्राह्मणाक्षेपनिमित्ताच्छतदण्डा(२)द्धीनं पञ्चसप्ततिमेव दण्डमर्हति। मूर्धावसिक्तोऽपि तावाक्रुश्य तमेव दण्डमर्हति। मूर्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः परस्पराक्रोशनिमित्तकौ यथाक्रमेण दण्डौ वेदितव्यौ। एवमन्यत्राप्यूहनीयम्॥ २०६॥

(मिता०) एवं सर्ववर्णविषये दण्डमभिधाय वर्णानामेव प्रतिलोमानुलोमाक्षेपे दण्डमाह—

प्रातिलोम्येति। अपवादा अधिक्षेपाः। प्रातिलोम्येनापवादाः प्रातिलोम्यापवादास्तेषु ब्राह्मणाक्रोशकारिणो क्षत्रियवैश्ययोर्यथाक्रमेण पूर्ववाक्याद्द्विगुणपदोपात्तपञ्चाशत्पणापेक्षया द्विगुणाः शतपणाः, त्रिगुणाः सार्धशतपणाः दण्डा वेदितव्याः। शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाच्छेदनं वा भवति। यथाह मनुः (८।२६७)—'शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति'॥ इति। विट्शूद्रयोरपि क्षत्रियादनन्तरैकान्तरयोस्तुल्यन्यायतया शतमध्यर्धशतं च यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम्। शूद्रस्य च वैश्याक्रोशे शतम्। आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणनाक्रोशे कृते तस्माद्ब्राह्मणाक्रोशनिमित्ताच्छतपरिमितात्क्षत्रियदण्डात्प्रतिवर्णमर्धस्यार्धस्य हानिं कृत्वाऽवशिष्टपञ्चाशत्पञ्चविं(३)शतिसार्धद्वादशपणात्मकं यथाक्रमं ब्राह्मणो दण्डनीयः। तदुक्तं मनुना (८।२६८)—'पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने। वै(४)श्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः'॥ इति। क्षत्रियेण वैश्ये शूद्रे वाक्रुष्टे यथाक्रमं पञ्चाशत्पञ्चविंशतिकौ दमौ। वैश्यस्य च शूद्राक्रोशे पञ्चाशदित्यूहनीयम्। 'ब्राह्मणराजन्यवत्क्षत्रियवैश्ययोः' इति गौतमस्म

(१) विशेषोपादानात् ख।  (२) दण्डाद्वन ख।
(३) पञ्चविंशत्यर्धद्वादश घ।  (४) वैश्यस्य चार्धपञ्चाशत् घ।

रणात् । 'विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः' इति (८।२७७) मनुस्मरणाच्च ॥ २०७ ॥

(मिता०) पुनर्निष्ठुराक्षेपमधिकृत्याह--

बाहुग्रीवेति । बाह्वादीनां प्रत्येकं विनाशे वाचिके वाचा प्रतिपादिते तव बाहू छिनद्मीत्येवंरूपे शत्यः शतपरिमितो दण्डो वेदितव्यः । पादनासाकर्णकरादिषु आदिग्रहणात्स्फिगादिषु वाचिके विनाशे तदर्धिकः तस्य शतस्यार्धं तदर्धं तद्यस्यास्त्यसौ तदर्धिकः पञ्चाशत्पणिको दण्डो वेदितव्यः ॥ २०८ ॥

(मिता०) किंच—

अशक्त इति । यः पुनर्ज्वरादिना क्षीणशक्तिस्त्वद्बाह्वाद्यङ्गभङ्गं करोमीत्येवं शपत्यसौ दशपणान् दण्डनीयः । यः पुनः समर्थः पूर्ववदाक्षिपत्यसौ पूर्वोक्तशतादिदण्डोत्तरकालं तस्याशक्तस्य क्षे(१)मार्थं प्रतिभुवं दापनीयः ॥ २०९ ॥

(मिता०) तीव्राक्रोशे दण्डमाह—

पतनीयेति । पातित्यहेतुभिर्ब्रह्महत्यादिभिर्वर्णि(२)नामाक्षेपे कृते मध्यमसाहसं दण्डः । उपपातक(३)संयुक्ते पुनर्गोघ्नस्त्वमसीत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्डनीयः ॥ २१० ॥

(मिता०) किंच—

त्रैविद्येति । त्रैविद्याः वेदत्रयसंपन्नास्तेषां राज्ञां देवानां च क्षेपे उत्तमसाहसो दण्डः । ये पुनर्ब्राह्मणमूर्धावसिक्तादिजातीनां पूगाः संघास्तेषामक्षेपे मध्यमसाहसो दण्डः । ग्रामदेशयोः प्रत्येकमाक्षेपे प्रथमसाहसो दण्डो वेदितव्यः ॥ २११ ॥

इति वाक्पारुष्यं नाम विवादपदप्रकरणम् ।

---

( वी० मि० ) अथ दण्डपारुष्यमुपाक्रमते । तत्स्वरूपं च नारदेनोक्तम्—

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

इति । आदिपदेनावृक्षादिच्छेदनसङ्ग्रहः । तत्रादौ दण्डपारुष्यमनेन

(१) क्षेमाय घ. । (२) वर्णिनामाक्षेपे ग. । (३) 'सम्बन्धे तु घ. ।

कृतं न वेति सन्देहे निर्णायकानि तावदाह—

असाक्षिकहते चिन्हैर्युक्तिभिश्चागमेन च ॥
द्रष्टव्यो व्यवहारस्तु कूटचिन्हकृतो (१)भयात् ॥२१२॥

असाक्षिकं रहसि हते पादायुधादिना ताडिते हन्त्रा विप्रतिपत्तौ च कृतायां स व्यवहारश्चिह्नैर्व्रणादिभिर्देहस्थैर्युक्तिभिः प्रयोजनपर्यालोचनादिभिः आगमेन जनप्रवादेन चकाराद् दिव्येन द्रष्टव्यो निर्णेतव्यः । कूटेति कपटचिन्हातिरिक्तैरित्यर्थः । तुशब्देनाऽहमनेन ताडित इति वाङ्मात्रेण दण्डप्रणयादि व्यवच्छिनत्ति ॥ २१२ ॥

(मिता०) दण्डपारुष्यं नाम सम्प्रति प्रस्तूयते । तत्स्वरूपं च नारदेनोक्तम्—'परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः । भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते' ॥ इति । परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योऽभिद्रोहो हिंसनं दुःखोत्पादनं तथा भस्मना आदिग्रहणाद्रजःपङ्ककरीषादिभिश्च य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनं तदुभयं दण्डपारुष्यम् । दण्ड्यतेऽनेनेति दण्डो देहस्तेन यत्पारुष्यं विरुद्धाचरणं जङ्गमादिद्रव्यस्य तद्दण्डपारुष्यम् । तस्य चावगोरणादिकारण(२)भेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्यरूपकर्मत्रैविध्यात्पुनस्त्रैविध्यं तेनैवोक्तम्—(३)तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् । अवगो(४)रणनिः(५)शङ्कपातनक्षतदर्शनैः ॥ हीनमध्योत्तमानां च(६) द्रव्याणां समतिक्रमात् । त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम्' ॥ इति । निःशङ्कपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि त्रिप्रकाराण्येव सहसा(७)कृतानि दण्डपारुष्याणीत्यर्थः । तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते तस्य न केवलं दण्डाभावः किन्तु पूज्य एव । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च यद्वैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा द्वयोरपराधविशेषापरिज्ञाने दण्डः समः । तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डापने

(१) विना—गत क० ख० पुस्तकयोः पाठः ।
(२) करणभेदेन ख । (३) तस्येपदृष्ट ख । (४) गुरी उद्यमन-इत्यस्य रूपम् ।
(५) निःशङ्कापातन ग । (६) तु इति पाठान्तरम् ।
(७) साहसान्कृतानि-इति पाठान्तरम् ।

ऽधिकारिणस्तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादि-त्येवं पञ्च प्रकारा विधयस्तेनैवोक्ताः–'विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि । पारुष्ये सति संरम्भावुत्पन्ने क्रुद्धयोर्द्वयोः ॥ स मान्यते यः क्षमते दण्डभाग्योऽतिवर्तते । पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ॥ पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः । द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः ॥ स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः । पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः ॥ विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः । श्वपाकषण्डचण्डालव्यङ्गेषु वधवृत्तिषु ॥ हस्तिपव्रात्यदासेषु गुर्वाचार्यनृपेषु च । मर्यादातिक्रमे सद्यो घात एवानुशासनम् ॥ यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृषु । स एव विनयं (१)कुर्यान्न तद्विनयभाङ् नृपः ॥ मला ह्येते मनुष्याणां धनमेषां मलात्मकम् । अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत्' ॥ इति ।

एवंभूतदण्डपारुष्यनिर्णयपूर्वकत्वाद्दण्डप्रणयनस्य तत्स्वरूपसन्देहे निर्णयहेतुमाह—

असाक्षिकहत इति । यदा कश्चिद्रहस्यमनेन हत इति राज्ञे निवेदयति तदा (२)चिह्नैर्वर्णादिस्वरूपगतैर्लिङ्गैर्युक्त्या कारणप्रयोजनपर्यालोचनात्मिकया आगमेन जनप्रवादेन चशब्दाद्दिव्येन वा कूटचिह्नकृतसम्भावनाभयात्परीक्षा कार्या ॥ २१२ ॥

( वी० मि० ) अथात्र दण्डपारुष्यनिश्चयानन्तरकृत्यं दण्डं यथायथमाह प्रकरणसमाप्तिपर्यन्तेन—

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ॥
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः ॥ २१३ ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ॥
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥२१४॥

भस्मपङ्करजोभिः प्रत्येकं परस्य स्पर्शे योजने तत्कर्तुर्दशपणमितो दण्डः । अमेध्यमश्रुप्रभृति, पार्ष्णिश्चरणस्य पश्चाद्भागः, निष्ठ्यूतं मुखश्लेष्म एतैः परस्य स्पर्शने कृते तत्कर्तुस्ततो दशपणाद्द्विगुणो दण्डः । एवं दण्डः समेषु सवर्णेषु द्रष्टव्यः । परभार्यासूत्तमेषु च वर्णेषु विषये तादृशापराधे कृते समेषूक्ताद्दण्डात् द्विगुणो दमः ।

(१) कुर्यान्नूनं विनयभाक् । (२) चिह्नैर्वर्णादि ख. ।

हीनेषु वर्णेषु विषये तादृशापराधे समेषूक्तस्य दण्डस्यार्धो दमः कार्यः । मोहोऽनभिज्ञता, मदो मद्यादिभिः । आदिपदेनोन्मादपरिग्रहः । एतैर्भस्मादिस्पर्शने कृतेऽपि दण्डाभावः । चकारेणोत्तरोत्तरं त्रिगुणचतुर्गुणौ दण्डाविति समुच्चीयते । कात्यायन —

छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः स्मृतः ॥
चतुर्गुणत्वादिक दशपणाद्बोध्यम् ॥ २१३—२१४ ॥

(मिता०) एवं निश्चिते साधनविशेषेण दण्डविशेषमाह—

भस्मेत्यादि । भस्मना पङ्केन रेणुना वा यः परं स्पर्शयत्यसौ दशपणं दण्डं दाप्यः । अमेध्यमिति अश्रुश्लेष्मनखकेशकर्णविट्दूषिकाभुक्तोच्छिष्टादिकं च गृह्यते । पार्ष्णिः पादस्य पश्चिमो भागः । निष्ठ्यूतं मुखनिःसारितं जलम् । तैः स्पर्शने तत. पूर्वाद्दशपणाद्द्विगुणो विंशतिपणो दण्डो वेदितव्यः । पुरीषादिस्पर्शने पुनः कात्यायनेन विशेष उक्तः—'छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः । षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुण स्मृतः' ॥ इति । आचमहणाद्ब्राह्मणाक्षुद्राज्ञातो गृह्यन्ते । एवमृत. पूर्वोक्तो दण्डः सवर्णविषये द्रष्टव्य । परभार्यासु चाऽविशेषेण । तयोत्तमेषु स्वापेक्षयाऽधिकश्रुतवृत्तेषु पूर्वोक्ताद्दशपणाद्विंशतिपणाच्च दण्डाद्द्विगुणो दण्डो वेदितव्यः । हीनेषु स्वापेक्षया (१)न्यूनवृत्तश्रुतादिषु पूर्वोक्तस्यार्धदम पञ्चपणो दशपणश्च वेदितव्यः । मोहश्चित्तवैकल्यम् । मदो मद्यपानजन्योऽवस्थाविशेषः । आदिग्रहणाद्ग्रहावेशादिकम् । एतैर्युक्तेन भस्मादिस्पर्शने कृतेऽपि दण्डो न कर्तव्यः ॥ २१३-२१४ ॥

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य च(२) ॥
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः ॥ २१५ ॥
उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ॥
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥ २१६ ॥

ब्राह्मणस्य ताडनादि पीडाकरं क्षत्रियादेरङ्गहस्तपादादि छेद्यम् । चकारेण क्षत्रियपीडाकरं वैश्यशूद्रयोः, वैश्यपीडाकरं च शूद्रस्याङ्ग

(१) न्यूनश्रुतादिषु ख ।    (२) तु—इति मु० पु० पाठः ।

समुच्चीयते। केन केन—

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः।
छेत्तव्यं तत्तदेवाऽस्य तन्मनोरनुशासनम्॥

इति मनुवचनात्। तुशब्दपाठे ब्राह्मणाङ्गच्छेदव्यवच्छेदः। उद्गूर्णे वधार्थमुद्यते शस्त्रादौ प्रथमसाहसो दण्डः। उद्गूरणार्थं शस्त्रादेः स्वयं स्पर्शमात्रे कृते तु प्रथमसाहसार्धमितो दण्डः। प्रथमसाहसश्च शूद्रेतरपरः। शूद्रमुपक्रम्य—

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति।

इति मनुवचनात्। सर्वेषां समवर्णानां तु परस्परं हस्ते उद्गूर्णे दशपणो दमः। पादे उद्गूर्णे विंशतिपणपरिमितो दमः। शस्त्र उद्गूर्णे मध्यमसाहसो दमः। आद्यतुशब्देन निपातनव्यवच्छेदः। द्वितीयतुशब्देनाऽसमानजातीयानामुक्तदण्डव्यवच्छेदः॥२१५—२१६॥

(मिता०) प्रातिलोम्यापराधे दण्डमाह—

विप्रेति। ब्राह्मणानां पीडाकरमब्राह्मणस्य क्षत्रियादेर्यदङ्गं करचरणादिकं तच्छेत्तव्यम्। क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्याङ्गच्छेदनमेव। (मनु० ८।२७९)—'येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः। छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्'॥ इति, द्विजातिमात्रस्यापकारे शूद्रस्याङ्गच्छेदविधानाद्वैश्यस्यापि क्षत्रियापकारिणोऽयमेव दण्डस्तुल्यन्यायत्वात्। उद्गूर्णे वधार्थमुद्यते शस्त्रादिके प्रथमसाहसो दण्डो वेदितव्यः। शूद्रस्य पुनरुद्गूर्णेऽपि हस्तादिच्छेदनमेव। (८।२८०) 'पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति' इति मनुस्मरणात्॥ उद्गूरणार्थं शस्त्रादिस्पर्शने तु तदर्धिकः प्रथमसाहसार्धो दण्डो वेदितव्यः। भस्मादिसंस्पर्शे पुनः क्षत्रियवैश्ययोः प्रातिलोम्यापवादेषु त्रिगुणत्रिगुणा दमा इति वाक्पारुष्योक्तन्यायेन कल्प्याः। शूद्रस्य तत्रापि हस्तच्छेद एव। (८।२८२) 'अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः। अवमूत्रयतो मेढ्रमवशर्धयतो गुदम्'॥ इति मनुस्मरणात्॥ २१५॥

(मिता०) एवं प्रातिलोम्यापराधे दण्डमभिधाय पुनः सजातिमधिकृत्याह—

उद्गूर्ण इति। हस्ते पादे वा ताडनार्थमुद्गूर्णे यथाक्रमं दशपणो विंशतिपणश्च दण्डो वेदितव्यः। परस्परवधार्थं शस्त्रे उद्गूर्णे सर्वेषां

व(१)र्णिनां मध्यमसाहसो दण्डः ॥ २१६ ॥

( वी० मि० ) समानजातीयानेव कृत्वाह—

पादकेशांशुककरोल्लुञ्चनेषु पणान् दश ॥
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥ २१७ ॥
शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ॥
द्वात्रिंशतं पणान् दाप्यो द्विगुणं दर्शनेऽसृजः ॥ २१८ ॥
कर(२)पाददतो भङ्गे छेदने कर्णनासयोः ॥
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥ २१९ ॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ॥
कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ॥ २२० ॥
एकं घ्नतां बहूनां च यथोक्ताद्द्विगुणो दमः ॥

पादादीनां परकीयानामुल्लुञ्चनेषु झटित्याकर्षणेषु दश पणा दमः । पीडिते वस्त्रावेष्टपूर्वकनिष्ठुराकृष्टस्य स्वचरणारोपपूर्वकं पीडायां शतं पणा दम इत्यर्थः । शोणितं यथा न दृश्यते तथा काष्ठादिभिः परं ताडयन्नरो द्वात्रिंशतं पणान् दाप्यः । असृजो रुधिरस्य दर्शने तु द्विगुणं दाप्यः । त्वगादिभेदे तु विशेषमाह मनुः—

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता च षण्निष्कान् प्रवास्यस्त्वस्थिभेदकः ॥

इति । करादित्रयस्य प्रत्येकं भङ्गे कर्णस्य नासाया अवच्छेदने रूढव्रणस्योद्भेदने मृतकल्पो यथा भवति तथा हते ताडिते च मध्यमसाहसो दण्डः । नखापदेनाङ्गुलिच्छेदसङ्ग्रहः । चेष्टेति । गमनभोजनवचनानामन्यतमस्य निरोधेन जिह्वादिप्रतिभेदेन कन्धरा ग्रीवा, बाहुः भुजः, सक्थि ऊरुः एतदन्यतमस्य भङ्गे च मध्यमसाहसो दण्डः । चकारेण पार्ष्णिप्रभृतिसङ्ग्रहः । एकं बहवो यत्र घ्नन्ति तत्रैकस्य हन्तृत्वे यो दण्डो यत्रोक्तस्तद्द्विगुणस्तस्मिन्नपरे दण्ड इत्यर्थः, न हीनोत्तमभेदे । न चात्र दण्डाधिक्यन्यूनते द्रष्टव्ये ॥

(१) वर्णानां घ. । (२) करदन्तपादभङ्गे—इति क० पु० पाठः ।

किञ्च—

कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥ २२१ ॥

कलहे वर्तमाने यदेकेनापरस्याऽपहृतं तत्तेन देयं परस्मै ततस्त-स्माद्विगुणश्च दण्डोऽपहारनिमित्तको राज्ञा देयः ॥ २२१ ॥

(मिता०) किञ्च—

पादेति। पादकेशवस्त्रकराणामन्यतमं गृहीत्वा य उल्लुञ्चति झटि-त्याकर्षयति असौ दशपणान्दण्ड्यः। पीडा च कर्षश्चांशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासं तस्मिन्समुच्चिते शतं दण्ड्यः। एतदुक्तं भवति। अंशुकेनावेष्ट्य गाढमापीड्याकृष्य च यः पादेन घट्टयति तं शतं पणान्दा(१)पयेदिति ॥ २१७ ॥

(मिता०) किञ्च—

शोणितेनेति। यः पुनः शोणितं यथा न दृश्यते तथा मृदु ताडनं काष्ठलोष्टादिभिः करोत्यसौ द्वात्रिंशतं पणान्दण्ड्यः। यदा पुनर्गाढ-ताडनेन लोहितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुःषष्टिपणान्द-ण्डनीयः। त्वङ्मांसा(२)स्थिभेदे पुनर्विशेषो मनुना दर्शितः (८।२८४) 'त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः। मांसभेत्ता च षण्नि-ष्कान्प्रवास्यस्त्वस्थिभेदकः' ॥ इति ॥ २१८ ॥

( मिता० ) किञ्च—

करपादेति। करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं छेदने रूढव्रणस्योद्भेदने मृतकल्पो यथा भवति तथा हते ताडिते म-ध्यमसाहसो वेदितव्यः। अनुबन्धादिना विषयस्य साम्यमत्रा-पादनीयम् ॥ २१९ ॥

( मिता० ) किञ्च—

चेष्टेति। गमनभोजनभाषणनिरोधे नेत्रस्य आदिग्रहणाज्जिह्वायाश्च प्रतिभेदने। कन्धरा ग्रीवा, बाहुः प्रसिद्धः, सक्थि ऊरुस्तेषां प्रत्येकं भञ्जने मध्यमसाहसो दण्डः ॥ २२० ॥

( मिता० ) अपिच—

एकमिति। यदा पुनर्बहवो मिलिता एकस्याङ्गभङ्गादिकं कुर्व-न्ति तदा यस्मिन्यस्मिन् अपराधे यो यो दण्ड उक्तस्तत्र तस्माद् द्वि-

---

(१) दमयेति ग.। (२) मांसास्थिविभेदे घ.।

गुणो दण्डः प्रत्येकं वेदितव्यः । अतिक्रूरत्वाच्चेषां प्रातिलोम्यानुलोम्यापरा(१)धयोरप्येतस्यैव सवर्णविषयेऽभिहितस्य दण्डजातस्य वाक्पारुष्योक्तक्रमेण हानिं वृद्धिं च कल्पयेत् । 'वाक्पारुष्ये य एवोक्तः प्रा(२)तिलोम्यानुलोमतः । स एव दण्डपारुष्ये दाप्यो राज्ञा यथाक्रमम्' ॥ इति स्मरणात् ॥

( मिता० ) किञ्च—

कलहेति । कलहे वर्तमाने यद्येनापहृतं तत्तेन प्रत्यर्पणीयम् । अपहृतद्रव्याद्द्विगुणश्चापहारनिमित्तो दण्डो देयः ॥ २२१ ॥

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ॥
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः ॥ २२२ ॥

यस्तु ताडने व्रणादिकमुत्पादयेत्स औषध्यादिना व्रणादिपीडितस्य सम्यगुत्थानार्थं जातं द्रव्यव्ययं दाप्यः । यावता तस्यौषधादिकं जायते तावद् द्रव्यं दाप्य इत्यर्थः । व्रणाद्युत्पादनस्थले न केवलं तद्दानमेवं, किंतु यस्मिन्कलहे यो दण्डः समाम्नात उदाहृतस्तमपि दाप्यः । चकारेण च समुच्चयार्थकेन विकल्पं वारयति॥२२२॥

( मिता० ) किञ्च—

दुःखमिति । यो यस्य ताडनाद् दुःखमुत्पादयेत्स तस्य व्रणरोपणादौ औषधार्थं पथ्यार्थं च यो व्ययः क्रियते तं दद्यात् । समुत्थानं व्रणरोपणम् । यस्मिन्कलहे यो दण्डस्तं च दद्यान्न पुनः समुत्थानव्ययमात्रम् ॥ २२२ ॥

( वी० मि० ) एवं द्वेष्यपुरुषशरीरे दण्डपारुष्ये दण्डमभिधाय तद्भिन्ने दण्डपारुष्ये तमाह—

अभिघाते तथा छेदे भेदे कुड्यावपातने ॥
पणान् दाप्यः पञ्च दश विंशतिं तद्द्वयं तथा ॥ २२३ ॥
दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा ॥
षोडशाद्यः पणान्दाप्यो द्वितीयो मध्यमं दमम् ॥ २२४ ॥

---

(१) पराधेऽप्येतस्यैव घ ।

(२) एवोक्तः प्रतिलोमानुलोमत । स एव दण्डपारुष्ये राज्ञा कार्यो यथाक्रमम् घ ।

दुःखे च शोणितोद्भेदे(१) शाखाङ्गच्छेदने तथा ॥
दण्डः क्षुद्रपशूनां (२)स्याद्द्विपणप्रभृतिः क्रमात् ॥ २२५ ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ॥
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ २२६ ॥
प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ॥
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥ २२७ ॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ॥
जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते ॥ २२८ ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ॥
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥ २२९ ॥

कुड्यस्य भित्तेः अवपातने भूमिनिपातने अभिघाते मुद्गरादिना हनने छेदने खड्गादिना द्वैधीकरणे भेदे यष्ट्यादिना विदारणे। यथाशब्दस्त्रिष्वप्यन्वेति। मुद्गरादिनेत्युक्तास्तदर्थाः। पञ्च दश विंशतिश्च पणाः क्रमेणऽभिघातादौ विकल्पेनाऽन्वीयन्ते, अवपातने तु समुच्चयेन। तद्व्ययं कुड्यस्य पुनः करणार्थं व्ययितं धनम्। तथाशब्देन साहित्यं विवक्षितम्। दुःखोत्पादनशीलं कण्टकादि द्रव्यं, प्राणहरं सर्पादि परस्य गृहे येन प्रकारेण प्रक्षेपो दुःखोत्पादकस्तथा क्षिपन् दण्ड्यः। तत्राद्यः कण्टकादिक्षेप्ता षोडश पणान्, द्वितीयः सर्पादिक्षेप्ता मध्यमसाहसं दमं दाप्यः। क्षुद्रपशूनां हरिणच्छागादीनां ताडने दुःखोत्पादं शोणितं स्रावणे शाखायाः शृङ्गादिरूपायाः छेदेन अङ्गस्य चरणादेः छेदेन द्विपणः प्रभृतिरादिर्यस्य स दण्डगणः क्रमेण स्यादित्यर्थः। अत्र द्वित्वसंख्याया एव श्रवणाद् द्वयं द्वयं पणानां वर्द्धते। क्रमशः क्षुद्रपशूनां लिङ्गस्य छेदने मारणे वा मध्यमसाहसो दण्डः स्यात्, मूल्यं च स्वामिने स दद्यात्। महापशूनां तु दुःखोत्पादादिषु विषये क्षुद्रपशुपूक्तानां दण्डानां द्विगुणा दण्डाः कार्याः। चकारेणाऽत्रापि मूल्यदानम्। एवकारेण दुःखोत्पादादिषु चतुर्षु मूल्यदानव्यवच्छेदः। प्ररोहशाखिनां वटादिवृक्षाणामुपजीव्य-

(१) शोणितोत्पादे—इति मु० पु० पाठः। (२) तु—इति मु० पु० पाठः।

द्रुमाणामाम्रादीनां च शाखाया मूलतोनिर्गमस्थानरूपस्कन्धस्य सर्वस्य समूलस्याऽप्यविनश्च विदारणे विंशतिपणादारभ्य द्विगुणा दमा भवन्ति, विंशतिश्चत्वारिंशदशीतिः पणाः क्रमेण त्रिषु दण्डा इति यावत् । चकारेण प्ररोहिणामेव ग्रामादिस्थैरुपवेशनाद्यर्थमुपजीव्यत्वे तद्विदारणे पुनस्तद्द्वैगुण्यमिति समुच्चीयते। चैत्यं मनोरमस्थानं, सीमा ग्रामादिद्वयमर्यादा तासु पुण्यस्थाने यज्ञादिस्थले सुरालये देवस्थाने जातानां द्रुमाणां शाखादिविदारणे विश्रुते विख्याते पिप्पलादौ वृक्षे च शाखादिषु विदारितेषु पूर्वोक्ताद्विंशतिपणादेर्द्विगुणो दम इति । चकारेण समुत्थानव्ययदानं समुच्चीयते। गुल्मा अनतिदीर्घनिबिडलता मालत्यादयः, गुच्छा अवल्लीरूपा असरलाः कुरण्टादयः, क्षुपाः सरलप्रकाण्डाः करवीरादयः, लता दीर्घयायिन्योऽति मुक्तादयः, ता एव स्थूलप्रतानाः काण्डप्ररोहरहिताः सारिवादयः, औषध्यः फलपाकान्ताः शाल्यादयः, छिन्ना अपि विविध प्ररोहन्तीति वीरुधो गुडूचीप्रभृतयः । आसां शाखादिपूक्तेषु कर्तने छेदने पूर्वस्मृताद्विंशतिपणादेरर्धो दशपणादिर्दण्डः। समुत्थानव्ययदानं चात्राऽपि द्रष्टव्यम् । मनुः —

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात्पादच्छेदनमर्हति ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्या कृताङ्को निर्वास्यः स्फिचं वाऽस्यावकर्तयेत् ॥
अवष्ठीवयतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥

ब्राह्मणविषये शूद्रस्यायं दण्डः । शस्त्रप्रयोगे विष्णुः —'शोणितेन विना दुःखमुत्पादयिता त्रिंशतं पणान् सह शोणितेन चतुःषष्टिम्' । विस्तरभयाच्च नेह दण्डान्तराण्यभिधीयन्ते ॥ २२३—२२९ ॥

इति श्रीमद्याज्ञवल्क्यव्याख्याने दण्डपारुष्यप्रकरणम् ॥

(मिता०) परगात्राभिद्रोहे दण्डमुक्त्वानन्तरं बहिरङ्गार्थनाशे दण्डमाह—

अभिघात इति। मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वि(१)धाकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डो वेदितव्यः। अवपातने पुनः कुड्यस्यैते त्रयो दण्डाः स(२)मुच्चिता ग्राह्याः। पुनः कुड्यसंपादनार्थं च धनं स्वामिने दद्यात्॥ २२३॥

(मिता०) अपिच—

दुःखोत्पादीति। परगृहे दुःखजनकं कण्टकादि द्रव्यं प्रक्षिपन् षोडश पणान् दण्ड्यः। प्राणहरं पुनर्विषभुजङ्गादिकं प्रक्षिपन्मध्यमसाहसं दण्ड्यः॥ २२४॥

(मिता०) पश्वभिद्रोहे दण्डमाह—

दुःख इति। क्षुद्राणां पशूनां अ(३)जाविकहरिणप्रायाणां ताडनेन दुःखोत्पादने असृक्स्रवणे शाखाङ्गच्छेदने। शाखाशब्देन चात्र प्राणसंचाररहितं शृङ्गादिकं लक्ष्यते। अङ्गानि करचरणप्रभृतीनि। शाखा चाङ्गं च शाखाङ्गं तस्य छेदने द्विपणप्रभृतिर्दण्डः। द्वौ पणौ यस्य दण्डस्य स द्विपणः। द्विपणः प्रभृतिरादिर्यस्य दण्डगणस्यासौ द्विपणप्रभृतिः। स च दण्डगणो द्विपणश्चतुःपणः षट्पणोऽष्टपण इत्येवंरूपो न पुनर्द्विपणस्त्रि(४)पणश्चतुष्पणः पञ्चपण इति। कथमिति चेदुच्यते अपराधगुरुत्वात्तावत्प्रथमदण्डाद्गुरुतरमुपरितनं दण्डत्रितयमवगम्यते। तत्र चाश्रुतत्रित्वादिसंख्याश्रयणाद्वरं श्रुतद्विसंख्याया एवाभ्यासाश्रयणेन गुरुत्वसंपादनमिति निरवद्यम्॥ २२५॥

(मिता०) किञ्च—

लिङ्गस्येति। तेषां क्षुद्रपशूनां लिङ्गच्छेदने मरणे च मध्यमसाहसो दण्डः। स्वामिने च मूल्यं दद्यात्। महापशूनां पुनर्गोगजवाजिप्रभृतीनामेतेषु स्थानेषु ताडनलोहितस्रा(५)वणादिषु निमित्तेषु पूर्वोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्यः॥ २२६॥

(मिता०) स्थावराभिद्रोहे दण्डमाह—

प्ररोहीति। प्ररोहा अङ्कुरास्तद्वन्त्यः शाखाः प्ररोहिण्यः याश्छिन्नाः पुनरुप्ताः प्रतिकाण्डं प्ररोहन्ति ताः शाखा येषां वटादीनां ते प्र-

---

(१) द्वैधीकरणे घ.। (२) समन्विताः घ.। (३) अजाविहरिणानां घ.।
(४) त्रिश्चतुःप ख.। (५) स्रावणादिनिमित्तेषु ख.।

प्ररोहिशाखिनस्तेषां शाखाच्छेदने । यतो मूलशाखा निर्गच्छन्ति स स्कन्धस्तस्य छेदने समूलवृक्षच्छेदने च यथाक्रमं विंशति(१)पण-दण्डादारभ्य पूर्वस्मात्पूर्वस्मादुत्तरोत्तरो दण्डो द्विगुणः । एतदुक्तं भवति—विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवं त्रयो दण्डा यथाक्रमं शाखाच्छेदनादिष्वपराधेषु भवन्तीति । अप्ररोहिशाखिना-मप्युपजीव्यवृक्षाणामाम्रादीनां पूर्वोक्तेषु स्थानेषु पूर्वोक्ता एव दण्डाः । अनुपजीव्याप्ररोहिशाखिषु पुनर्वृक्षेषु कल्प्याः ॥ २२७ ॥

(मिता०) वृक्षविशेषे प्रत्याह—

चैत्येति । चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्वोक्ताद्दण्डाद् द्विगुणः । विश्रुते च पिप्पलपलाशादिके द्विगुणो दण्डः ॥ २२८ ॥

(मिता०) गुल्मादिष्वप्याह—

गुल्मेति । गुल्मा अनतिदीर्घनिबिडलता मालत्यादयः । गुच्छा अवल्लीरूपाः असरलप्रायाः कुरण्टकादयः । क्षुपाः करवीरादयः सरलप्रायाः । लता दीर्घयायिन्यो द्राक्षातिमुक्तप्रभृतयः । प्रतानाः काण्डप्ररोहरहिताः (२)सरलयायिन्यः सारिवाप्रभृतयः । ओषध्यः फलपाकावसानाः शालिप्रभृतयः । वीरुधः छिन्ना अपि या विविधं प्ररोहन्ति ताः गुडूचीप्रभृतयः । एतेषां पूर्वोक्तेषु स्थानेषु विकर्तने छेदने पूर्वोक्ताद्दण्डादर्धदण्डो वेदितव्यः ॥ २२९ ॥

इति दण्डपारुष्यप्रकरणम् ।

---

(वी० मि०) सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥
तस्यैव भेदः स्तेयं स्यात् विशेषस्त्वत्र कीर्त्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥

इति नारदोक्तं रक्षितुर्ज्ञानं सत्येव बलेन पीडनं स्तेयव्यावृत्तं साहसं विवादपदमुपक्रमते—

सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम् ॥
तन्मूल्याद्द्विगुणो दण्डो निन्हवे तु चतुर्गुणः ॥ २३० ॥

---

(१) पणाद्दण्डादारभ्य घ. । (२) शिलायायिन्य इति ख पु. पाठः ।

सामान्यसाधारणस्वत्वास्पदं परस्वमिति यावत्। तादृशं यद्द्रव्यं हिरण्यादि शरीरं च तस्य स्वामिसमक्षं प्रसभहरणाद्बलात्कारेण स्कन्दनात् तादृशहरणं योगार्थमाश्रित्य साहसं साहसपदवाच्यं यत्स्मृतं स्मृतावुक्तं तत्र क्रियमाणद्रव्यमूल्याद्द्विगुणोऽभ्युपगमे, निन्हवे सङ्गोपने तु चतुर्गुणो दण्डः॥ २३० ॥

(मिता०) संप्रति साहसं नाम विवादपदं व्याचिख्यासुस्तल्लक्षणं तावदाह—

सामान्येति। सामान्यस्य साधारणस्य (१)यथेष्टं विनियोगानर्हत्वा(२)विशेषेण परकीयस्य वा द्रव्यस्यापहरणं साहसम्। कुतः प्रसभहरणात् प्रसह्य हरणात् बलावष्टम्भेन हरणादिति यावत्। एतदुक्तं भवति—राजदण्डं जनाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणहरणपरदारप्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम्। अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति। नारदेनापि साहसस्य स्वरूपं विवृतम्—'सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते'॥ इति। तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसङ्ग्रहणेषु व्यासक्तमपि बलदर्पावष्टम्भोपा(३)धितो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम्। तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैव विवृतम्—'तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा। उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक्॥ फलमूलोदकादीनां क्षेत्रोपकरणस्य च। भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम्॥ वासःपश्वन्नपानानां गृहोपकरणस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्॥ व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्। प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम्॥ तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः। मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः॥ उत्तमे साहसे दण्डः सहस्रावर इष्यते। वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे'॥ इति। वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः॥

(१) यथेष्टविनियोगा ग. घ.। (२) त्वाद्विशेषेण ग.। (३) पाधिना भिद्यते घ.।

(मिता०) तत्र परद्रव्यापहरणरूपे साहसे दण्डमाह—

तन्मूल्यादिति । तस्यापहृतद्रव्यस्य मूल्याद् द्विगुणो दण्डः । यः पुनः साहसं कृत्वा नाहमकार्षमिति निह्नुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति । एतस्मादेव विशेषदण्डविधानात्प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयं गम्यते ॥ २३० ॥

( वी० मि० ) साहसकर्तुरिव तत्कारयितुरपि दण्ड इत्याह—

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ॥

यश्चैवमुक्त्वाऽहं दाता कारयेत् स चतुर्गुणम् ॥ २३१ ॥

साहसं कुर्वित्युपदेशेन यः कारयति स साहसकर्तुर्द्विगुणं दमं दाप्यः । तव दण्डसम्भवे अहं तद्धनं दास्यामीत्येवमुक्त्वा यः साहसं कारयेत् स साहसकर्तुश्चतुर्गुणं दाप्यः ॥ २३१ ॥

(मिता०) साहसस्य प्रयोजयितारं प्रत्याह—

य इति । यस्तु साहसं (१)कुर्वित्येवमुक्त्वा कारयत्यसौ साहसिकाद्दण्डाद् द्विगुणं दण्डं दाप्यः । यः पुनरहं तुभ्यं धनं दास्यामि त्वं कुर्वित्येवमुक्त्वा साहसं कारयति स चतुर्गुणं दण्डं दाप्योऽनुबन्धातिशयात् ॥ २३१ ॥

( वी० मि० ) साहसविशेषे दण्डविशेषमाह—

अर्घ्याक्रोशातिक्रमकृद् भ्रातृभार्याप्रहारदः (२) ॥

सन्दिष्टस्याऽप्रदाता च समुद्रगृहभेदकृत् ॥ २३२ ॥

सामन्तकुलिकादीनामपकारस्य कारकः ॥

पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २३३ ॥

अर्घ्यस्याऽऽचार्यादेराक्रोशमाक्षेपमाज्ञातिक्रमं च यः करोति, भ्रातृभार्यायां प्रहारं यश्च ददाति, सन्दिष्टस्य परप्रेषितस्य हिरण्यादेः प्रतिधातुं गृहीतस्याऽप्रदाता, मुद्राचिह्नितगृहस्य भेदकृदुद्घाटकः, स्वग्रामसमीपग्रामस्थाः, कुलिकाः स्वकुलोद्भवाः, आदिपदात् श्रेण्यादयः तेषामन्यतमस्याऽपकारकर्त्ता । एषां पूर्वोक्तानां पञ्चाशत्पणमितो दण्ड इति धर्मशास्त्रे विनिश्चयः । चकाराद्याचिकस्याऽप्रचक्तुः समुच्चयः ॥ २३२—२३३ ॥

---

(१) कुर्वित्येव वाचैव कारयति घ । (२) प्रहारक —इति मु० पु० पाठः ।

( मिता० ) साहसिकविशेषं प्रत्याह—

अर्घ्येत्यादि । अर्घ्यस्यार्घार्हस्याचार्यादेराक्षेपमाज्ञातिक्रमं च यः करोति यश्च भ्रातृभार्यां ताडयति तथा संदिष्टस्य प्रतिश्रुतस्यार्थस्याप्रदाता यश्च मुद्रितं गृहमुद्धाटयति तथा स्वगृहे क्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनां कुलिकानां स्वकुलोद्भवानाम्, आदिग्रहणात्स्वग्राम्यस्वदेशीयानां च योऽपकर्ता ते सर्वे पञ्चाशत्पणपरिमितेन दण्डनीयाः ॥ २३२-२३३ ॥

( वी० मि० ) स्त्रीसङ्ग्रहणस्य साहसभेदतया कयाचिद्विवक्षया साहसभिन्नत्वेऽपि तत्तुल्यतया तत्र दण्डमभिदधान एव ग्रन्थलाघवादन्यत्राऽपि तद्दण्डमाह—

स्वच्छन्दं विधवागामी विक्रुष्टे नाऽभिधावकः ॥
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृ(१)शन् ॥२३४॥
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ॥
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २३५ ॥
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ॥
साधारणस्याऽपलापी दासीगर्भविनाशकृत् ॥ २३६ ॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ॥
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २३७ ॥

स्वच्छन्देन स्वेच्छया विधवागमनकर्ता, चौरादितो भीतैर्विक्रुष्टे सति शक्तोऽपि सन् प्रतीकारार्थमधावनकर्ता, निर्निमित्तं विक्रोशनकर्ता, चण्डालः सन् ब्राह्मणादीन् स्पृशन्, शूद्राणां प्रव्रजितानां दिगम्बरादीनां वा दैवपित्र्यकर्मणि भोजयिता, अयुक्तं शपथं 'भ्रातरं ग्रहीष्यामि यदीदमसत्य'मित्यादिकं कुर्वन्, तथाऽयोग्यः शूद्रादिर्योग्यस्य ब्राह्मणादेः कर्म वेदाध्ययनादिकं कुर्वाणः, वृषाणां क्षुद्रपशूनां वा पुंस्त्वस्य प्रजननशक्तेर्विनाशकः, साधारणस्याऽविभक्तद्रव्यस्याऽपह्नवकर्त्ता, दासीगर्भस्य विनाशकारी, पितापुत्रौ, स्वसृभ्रातरौ, दम्पती जायापती, आचार्यशिष्यौ, एषामपतितम-

( १ ) स्पृशेत—इति मु० पु० पाठः ।

न्योन्य परस्पर त्यजति य स शतपणात्मकदण्डभाक् भवति । आद्येन चकारेण कारणेऽपि विक्रोशाकर्तु, द्वितीयेन पतितस्य, तृतीयेन पाखण्डिना, चतुर्थेन मनुष्यवधस्य, पञ्चमेन नृपस्य, षष्ठेन मातापुत्रयोरन्योन्य त्यागिन समुच्चय । पितापुत्रयोरेकतरेणैव । अपरस्य त्यागे तु शङ्ख —'यस्त्यजत्कामादपतितान् स हि शत दण्ड प्राप्नुयात्' । इद तु अविदुषा त्यागे कृते । विदुषा कृते त्यागे त्वाह मनु —

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान् राज्ञा दण्ड्य शतानि षट् ॥

विदुषाऽन्योन्यत्यागे शतत्रय दण्ड ऊहनीय ॥२३४—२३७॥

( मिता० ) किञ्च—

स्वच्छन्दमित्यादि । नियोग विना य स्वेच्छया विधवा गच्छति । चौरादिभयाकुलैर्विक्रुष्टे च य शक्तोऽपि नाभिधावति । यश्च वृथा क्रोश करोति । यश्च चण्डालो ब्राह्मणादीन्स्पृशति । यश्च शू(१)द्र प्रव्रजितान्दिगम्बरादीन्दैवे पित्र्ये च कर्मणि भोजयति । यश्चायुक्त मातर (२)प्रहीष्यामीत्येव शपथ करोति । वृषो बलीवर्द क्षुद्रपशवो ऽजादयस्तेषा पुस्त्वस्य प्रजननशक्तेर्विनाशक । वृक्षक्षुद्रपशूनामिति पाठे हिंस्रौषधप्रयोगेण वृक्षादे फलप्रसूनाना पातयिता । साधारणमपलपति साधारणद्रव्यस्य च वञ्चक । दासीगर्भस्य च पातयिता । ये च पित्राद्योऽपतिता एव सन्तोऽन्योन्य त्यजन्ति ते सर्वे प्रत्येक पणशत दण्डार्हा भवन्ति ॥ २३४-२३७ ॥

( वी० मि० ) अथ साहसप्रसङ्गात्तत्सदृशापराधेषु दण्डानाह त्रयोदशभि श्लोकै —

वसानस्त्रीन् पणान् दाप्यो नेजकस्तु पराशुकम् ॥
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ २३८ ॥

नेजको वस्त्रस्य प्रक्षालक । रजक इति पाठोऽप्ययमेवाऽर्थ । परस्यांशुक निर्णेजनार्थमर्पित वसान परिदधानस्त्रीन् पणान् दण्ड

---

(१) शूद्रप्रव्रजितानां ख ।  (२) गमिष्यामीत्येव ।

दाप्यः । यस्तु निर्णेजनार्थमर्पितस्य वस्त्रस्य विक्रयमवक्रयं भाटकपूर्वकमुपभोगार्थं कियत्कालमाधानमाधीकरणं मण्डनार्थं बन्धुभ्यो याचनानन्तरमर्पणं वा करोति स दश पणान् दाप्यः ॥ २३८ ॥

( मिता० ) साहसप्रसङ्गात्तत्सदृशापराधेषु निर्णेजकादीनां दण्डमाह—

वसान इति । नेजको वस्त्रस्य धावकः स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदासौ पणत्रयं दण्ड्यः । यः पुनस्तानि विक्रीणीते अवक्रयं वा एतावत्कालमुपभोगार्थं वस्त्रं दीयते मह्यमेतावद्धनं देयमित्येव भाटकेन यो ददाति आधित्वं वा नयति स्वसुहृद्भ्यो याचितं वा ददात्यसौ प्रत्यपराधं दश पणान् दण्डनीयः। तानि च वस्त्राणि श्लक्ष्णशाल्म(१)लीफलके क्षालनीयानि न पाषाणे, न च व्यत्यसनीयानि, न च स्वगृहे वासयितव्यानि, इतरथा दण्ड्यः । (८।३९६)–'शाल्मलीफलके श्लक्ष्णे निर्ण्याद्वासांसि नेजकः । न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्' ॥ इति मनुस्मरणात् । यदा पुनः प्रमादात्तानि नाशयति तदा नारदेनोक्तं द्रष्टव्यम्—'मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः । द्विःपादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव च ॥ अर्धक्षयात्तु परतः पादांशापचयः क्रमात् । यावत्क्षीणदशं जीर्णं जीर्णस्यानियमः क्षयः' ॥ इति । अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्या(२)ष्टमभागोनं पणन्यूनं मूल्यं देयम्। द्विर्धौतस्य तु पादोनं पणद्वयोनं त्रिर्धौतस्य पुनस्तृतीयांशन्यूनम् । चतुर्धौतस्यार्धं पणचतुष्टयं देयम् । ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं (३)पादापचयेन देयम् । यावज्जीर्णं जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम् ॥ २३८ ॥

पितापुत्रवि(४)वादे तु साक्षिणां त्रिपणो दमः ॥
अन्तरे तु(५) तयोर्यः स्यात्तस्याऽप्यष्ट(६)पणो दमः ॥२३९॥

( वी० मि० ) पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न तु

(१) शाल्मले फलके ख । (२) अष्टमभागोनं पणं मूल्यं ख–ग. । (३) पादापचयेन ग. ।
(४) विरोधे—इति मु० पु० पाठः । (५) च—इति मु० पु० पाठः ।
(६) तस्याप्यष्टगुणो—इति मु० पु० पाठः ।

कलहं धारयति तस्य पणत्रयमितो दण्डः । यस्तु तयोर्विवादेऽन्तरे मध्ये प्रवेश्य कलहवर्धकः स्यात्तस्य अपिशब्दात्तत्र विवादे प्रतिभुवोऽष्टपणमितो दमः कार्यः ॥ २३९ ॥

(मिता०) पितेति । पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न पुनः कलहं निवारयति असौ पणत्रयं दण्ड्यः । यश्च तयोः सपणे विवादे पणदाने प्रतिभूर्भवत्यसौ चकारात्तयोर्यः कलहं वर्धयति सोऽपि त्रिपणादष्टगुणं चतुर्विंशतिपणान्दण्डनीयः । दम्पत्यादिष्वयमेव दण्डोऽनुसरणीयः ॥ २३९ ॥

तुलाशासनमानानां कूटकृन्नाणकस्य च ॥
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥ २४० ॥

(वी० मि०) तुला तोलनदण्डः, शासनं प्रागुक्तं, मानं प्रस्थद्रोणादि, नाणकं मुद्राचिन्हितं निष्कद्रम्मादि, एषां यः कूटकृत् कपटेनाऽपरभ्रमजनकनिर्माणकृदेभिः कूटैर्जानन्नपि यो वा व्यवहारं करोति स उत्तमसाहसं दमं दाप्यः । आद्यचकारेण कूटकारयितुर्द्वितीयचकारेण कूटव्यवहारयितुः सङ्ग्रहः ॥ २४० ॥

(मिता०) तुलेति । तुला तोलनदण्डः । शासनं पूर्वोक्तम् । मानं प्रस्थद्रोणादि । नाणकं मुद्रादिचिह्नितं द्रम्मनिष्कादि । एतेषां यः कूटकृत् देशप्रसिद्धपरिमाणादन्यथा न्यूनत्वमाधिक्यं वा द्रम्मादेरव्यव(१)हारिकमुद्रात्वं ताम्रादिगर्भत्वं वा करोति यश्च तैः कूटैर्जानन्नपि व्यवहरति तावुभौ प्रत्येकमुत्तमसाहसं दण्डनीयौ ॥ २४० ॥

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ॥
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥ २४१ ॥

(वी० मि०) यो नाणकपरीक्षी कपटहीनं कपटकृतत्वेन कपटकृतं चाऽकपटत्वेनाऽभिधत्ते स उत्तमसाहसं दाप्यः । चकारेण कूटं जानन्नपि न जानामीति ब्रूते इति समुच्चीयते ॥ २४१ ॥

(मिता०) नाणकपरीक्षिणं प्रत्याह—

अकूटमिति । यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रम्मादिकं सम्यगिति ब्रूते सम्यक् वा कूटकमिति असावुत्तमसाहसं दण्ड्यः ॥ २४१ ॥

(१) व्यावहारिकमुद्रितत्वं घ ।

भिषङ्मिथ्या चरन् दण्ड्यस्तिर्यक्षु प्रथमं दमम् ॥
मानुषे मध्यमं राजपुरुषेषूत्तमं दमम् ॥ २४२ ॥

( वी० मि० ) भिषक् मिथ्या चरन् व्याधिमत्सु तिर्य्यक्षु गवादिषु चरन्नुपचारं कुर्वन् प्रथमसाहसम् , अराजकीयमानुषे मिथ्या चरन् मध्यमसाहसम्, राजपुरुषेषु मिथ्या चरन्नुत्तमसाहसं भिषक् चिकित्सको दाप्यः ॥ २४२ ॥

( मिता० ) चिकित्सकं प्रत्याह—

भिषगिति । यः पुनर्भिषक् मिथ्या आयुर्वेदानभिज्ञ एव जीवनार्थं चिकित्सितज्ञोऽहमिति तिर्यङ्मनुष्यराजपुरुषेषु चिकित्सामाचरत्यसौ यथाक्रमेण प्रथममध्यमोत्तमसाहसान्दण्डनीयः । तत्रापि तिर्यगादिषु मूल्यविशेषेण वर्णविशेषेण राजप्रत्यासत्तिविशेषेण द(१)ण्डानां लघुगुरुभावः कल्पनीयः ॥ २४२ ॥

अवन्ध्यं यश्च बध्नाति (२)बन्ध्यं यश्च प्रमुञ्चति ॥
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ २४३ ॥

( वी० मि० ) बन्धनानर्हं बध्नाति योऽधिकृतो बन्धनार्हं प्रमुञ्चति न बध्नाति व्यवहारार्थमाहूतं चाऽनिर्णीतव्यवहारं योऽधिकृतो मुञ्चति स उत्तमसाहसं दमं दाप्यः । चकारैरताडनीयताडनकर्तुर्बद्धोन्मोचयितुश्च सङ्ग्रहः ॥ २४३ ॥

( मिता० ) अवन्ध्यमिति । यः पुनर्बन्धनानर्हमनपराधिनं राजाज्ञया विना बध्नाति । यश्च बद्धं व्यवहारार्थमाहूतमनिवृत्तव्यवहारं चोत्सृजत्यसौ उत्तमसाहसं दाप्यः ॥ २४३ ॥

मानेन तुलया वापि योऽशमष्टमकं हरेत् ॥
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥ २४४ ॥

( वी० मि० ) यो वणिक् व्रीहिकार्पासादि पण्यस्याऽष्टममंशं मानेन कपटप्रस्थादिना तुलया कपटकृतया वा हरेत स द्विशतं पणानां दण्डं दाप्यः । अपहृतद्रव्याष्टमांशादाधिक्ये न्यूनत्वे वा कल्पितं न्याससिद्धाधिकन्यूनभावकल्पनानुसारिदण्डं दाप्यः ।

---

( १ ) दण्डस्य । ( २ ) बद्धं—इति मु० पु० पाठः ।

अपिशब्देन गणनावञ्चनादिपरिग्रहः । चकारान्मूल्यविशेषापहृतद्रव्यस्य न्यूनाधिकभावः समुच्चीयते ॥ २४४ ॥

( मिता० ) मानेनेति । यः पुनर्वणिक् व्रीहिकार्पासादेः पण्यस्याष्टमभागं कूटमानेन कूटतुलया वा अन्यथाऽपहरति असौ पणानां द्विशतं दण्डनीयः । अपहृतस्य द्रव्यस्य पुनर्वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये ॥ २४४ ॥

भेषजस्नेहलवणगन्धधान्यगुडादिषु ॥
पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश ॥ २४५ ॥

( वी० मि० ) भेषज्यमौषधद्रव्यं स्नेहो घृतादिः लवणं सैन्धवादि गन्ध उशीरादिः धान्यगुडौ प्रसिद्धौ । आदिपदार्थो हिङ्गुमरिचादिः । एतेषु पण्येषु हीनमसारद्रव्यं विक्रयार्थं प्रक्षिपन् षोडश पणान्दाप्यः । तुशब्देन द्विशतादिपूर्वोक्तदण्डव्यवच्छेदः ॥ २४५ ॥

( मिता० ) भेषजेति । भेषजमौषधद्रव्यम् । स्नेहो घृतादिः । लवणं प्रसिद्धम् । गन्धद्रव्यमुशीरादि । धान्यगुडौ प्रसिद्धौ । आदिशब्दाद्धिङ्गुमरीचादि । एतेष्वसारद्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः ॥ २४५ ॥

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ॥
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ २४६ ॥

( वी० मि० ) मृदादीनां विक्रेयानामजातौ बहुमूल्यप्रयोजकजात्यभावे वस्तुसति बहुमूल्यप्रयोजकजातीयतया वर्णविशेषाधानादिना करणे विक्रेयाद्बहुमूल्यजातीयादष्टगुणो दमः कार्यः ॥२४६॥

( मिता० ) किञ्च—

मृच्चर्मेति । न विद्यते बहुमूल्या जातिर्यस्मिन्मृच्चर्मादिकं तदजाति तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसंचारणेन बहुमूल्यजातीयसादृश्यसंपादनेन । यथा मल्लिकामोदसंचारेण मृत्तिकायां सुगन्धामलकमिति । मार्जारचर्मणि वर्णोत्कर्षोपादनेन व्याघ्रचर्मेति । स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति । कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति । का(१)लायसे वर्णोत्कर्षाधानेन रज-

---

( १ ) कांस्यायसे च घ. ।

वमिति । विल्वकाष्ठे चन्दनामोदसंचारेण चन्दनमिति । कङ्कोले त्वगाख्यं लवङ्गमिति । कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति । विक्रेयस्यापादितसादृश्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्यः ॥ २४६ ॥

समुद्गपरिवर्तं च सारभाण्डं च कृत्रिमम् ॥
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥ ४७ ॥
भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ॥
द्विगुणो द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥ ४८ ॥

( वी० मि० ) मुद्गं पिधानं तेन सहितं समुद्गं सम्पुटं मुक्तादिपूर्णं तस्य विक्रयाद्यर्थं दर्शितस्य विक्रयादिकाले परिवर्तं हस्तलाघवेन स्फटिकादिपूर्णसम्पुटदानं यथास्यात्तथा विक्रयमाधानं वा समुद्गादीनां* ॥ २४७—२४८ ॥

( मिता० ) समुद्गेत्यादि । मुद्गं पिधानं मुद्गेन सह वर्तत इति (१)समुद्गं करण्डकं परिवर्तनं व्यत्यासः । योऽन्यदेव मुक्तानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेव स्फटिकानां पूर्णं करण्डकं समर्पयति, यश्च सारभाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधिं वा नयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या । कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने । न्यूनपणमूल्य इति यावत् । तस्मिन् कृत्रिमे विक्रीते पञ्चाशत्पणो दण्डः । पणमूल्ये पुनः शतम् । द्विपणमूल्ये द्विशतो दण्ड इत्येवं मूल्यवृद्धौ दण्डवृद्धिरुन्नेया ॥२४७-२४८॥

सम्भूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम् ॥
अर्घस्य ह्रासं वृद्धिं वा जानतां दम उत्तमः ॥ २४९ ॥
सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम् ॥
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ २५० ॥

(वी०मी०) पीडाकरमर्घं धान्यादिमूल्यं सम्भूय कुर्वतां राजस्थापितस्यार्घस्य हानिं वृद्धिं वा कुर्वतां वणिजां पणसहस्रमितो दण्डो मुनिभिरुच्यते । अल्पमूल्ये बहुमूल्यं पण्यमुपरुन्धतां लुब्धादीनां

---

* एतदनन्तरं स्वल्पोंऽशो व्याख्यायास्त्रुटित इत्यर्थानुसन्धानेन स्पष्टं प्रतीयते ।

(१) समुद्गशब्दः छ. पुस्तके सर्वत्र. ।

क्रीणतां बहुमूल्येनाऽल्पमूल्यं पण्यं विक्रीणतां चोत्तमसाहसो दण्डो विहितः ॥ २४९-२५०

( मिता० ) वणिजः प्रत्याह --

संभूयेति । राजनिरूपितार्घस्य ह्रासं वृद्धिं वा जानन्तोऽपि वणिजः सम्भूय मिलित्वा कारूणां रजकादीनां शिल्पादीनां सबाधं पीडाकरमर्घान्तरं लाभलोभात्कुर्वन्तः पणसहस्रं दण्डनीयाः ॥२४९॥

( मिता० ) किञ्च--

सम्भूयेति । ये पुनर्वणिजो मिलित्वा देशान्तरादागतं पण्यमनर्घेण हीनमूल्येन प्रार्थयमाना उपरुन्धन्ति महार्घेण वा विक्रीणते तेषामुत्तमसाहसो दण्डो विहितो मन्वादिभिः ॥ २५० ॥

( वी० मि० ) अथैवं दण्डवर्जनं वृत्तिश्च तेषां कथं स्यादत आह राजनीत्यादिना--

राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ॥

क्रयो वा निःस्रवस्तस्माद्वणिजां लाभकृत् स्मृतः ॥ २५१ ॥

राजसन्निधौ तदनुमत्या वणिग्भिर्योऽर्घो व्यवस्थाप्यते, प्रत्यहं तेनार्घेण विक्रयः क्रयश्च वणिजां कार्यः । तस्मात्क्रयविक्रयार्घो निःस्रवः स्रवोऽवशेषः वृद्धिभाग इति यावत् स एव लाभकृद्वणिजां वृत्तेर्हेतुरित्यर्थः । अत्र विशेषमाह मनुः--

पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथा गते ।
कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥-॥ २५१ ॥

( वी० मि० ) कीदृशः कुत्र पण्ये निःस्रव इत्यत्राह स्वदेशेति--

स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ॥

दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २५२ ॥

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ॥

अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च ॥ २५३ ॥

स्वदेश एव क्रीत्वा यदि विक्रीयते तत्र पण्ये शतपणमूल्यके पञ्चपणमितं, परदेशात् क्रीत्वानीय स्वदेशे विक्रीयमाणे तत्र दशपणमितं निःस्रवं वणिक् गृह्णीत यदि क्रयानन्तरमचिरेणैव पण्यं विक्रीणीते । दूरदेशस्थत्वादिना चिरविक्रयविलम्बे तु दत्तपण्य-

मूल्योपरि पण्यानयनरक्षणादिसमुद्भवं व्ययं व्ययितं धनं संस्थाप्य मेलयित्वा मूल्यव्यययोर्मिलितयोः शतपणमूल्यकयोस्तु देशविदेशभेदेन पञ्चदशपणो यो निःस्रवो भवति तथा क्रेतुर्विक्रेतुश्चाऽनुग्रहकृदुपकारी अर्घो राज्ञा कार्यः । चकारात्पौरजनस्य समुच्चयः । एवकारेण राज्ञाऽर्घकरणे उपेक्षा व्यवच्छिद्यते । अत्र विषयान्तरेषु दण्डान्तराणि ग्रन्थगौरवभयान्न लिख्यन्ते ॥ २५२-२५३ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने साहसप्रकरणम् ॥

( मिता० ) केन पुनरर्घेण पणितव्यमित्यत आह—

राजनीति । राजनि संनिहिते सति यस्तेनार्घः स्थाप्यते निरूप्यते तेनार्घेण प्रतिदिनं क्रयो विक्रयो वा कार्यः । निर्गतः स्रवो निःस्रवो विशे(१)षस्तस्माद्राजनिरूपितार्घाद्यो निस्रवः स एव वणिजां लाभकारी न पुनः स्वच्छन्दपरिकल्पितात् । मनुना चार्घकरणे विशेषो दर्शितः ( ८।४०२ )—'पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथा गते । कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः' ॥ इति ॥ २५१ ॥

( मिता० ) किञ्च—

स्वदेशपण्य इति । स्वदेशप्राप्तं पण्यं गृहीत्वा यो विक्रीणीते असौ पञ्चकं शतं पणशते पणपञ्चकं लाभं गृह्णीयात् । परदेशात्प्राप्ते पुनः पण्ये शतपणमूल्ये दशपणान्लाभं गृह्णीयात् । यस्य पण्यस्य ग्रहणदिवस एव विक्रयः सम्पद्यते । यः पुनः कालान्तरे विक्रीणीते तस्य कालोत्कर्षवशाल्ला(२)भोत्कर्षः कल्प्यः । एवं च यथार्घे निरूपिते पणशते पञ्चपणो लाभो भवति तथैवार्घो राज्ञा स्वदेशपण्यविषये स्थापनीयः ॥ २५२ ॥

( मिता० ) पारदेश्यपण्येऽर्घनिरूपणप्रकारमाह—

पण्यस्येति । देशान्तरादागते पण्ये देशान्तरगमनप्रत्यागमनभाण्डग्रहणशुल्कादिस्थानेषु यावानुपयुक्तोऽर्थस्तावन्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा यथा पणशते दशपणो लाभः सम्पद्यते तथा क्रेतृविक्रेत्रोरनुग्रहकार्यर्घो राज्ञा स्थापनीयः ॥ २५३ ॥

इति साहसप्रकरणम् ।

---

( १ ) अवशेषः घ. । ( २ ) वशाल्लाभः कल्प्य. ग. ।

( वी० मि० ) अथ—

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते ॥

इति नारदोक्तं विक्रीयासम्प्रदानं नाम विवादपदरूपं निरूपयति—

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ॥
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ २५४ ॥
विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ॥
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ २५५ ॥
राजदैवोपघातेन पण्ये दो(१)ष उपागते ॥
हानिर्विक्रेतुरेवासौ याचितस्याऽप्रयच्छतः ॥ २५६ ॥
अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि ॥
विक्रीयते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥ २५७ ॥

क्रेतृसकाशात्स्वयं गृहीतं मूल्यं यस्य तस्य तत्पण्यं विक्रेता यो क्रेतुर्न प्रयच्छति तदा सोदयं पण्यं तस्य क्रेतुरसौ दाप्यः । उदय श्चोक्तो नारदेन—

विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥

इति । क्षयमुपभोग, क्रियाफलं शुश्रूषादिकम् । एवकारेण क्रेतुरनुशयाभावे सतीति विवक्षितम् । तस्याऽनुशये तु—

क्रीत्वा विक्रीय वा किंचिद्यस्येहाऽनुशयो भवेत् ।
सोऽन्तर्दशाहे तद् द्रव्यं दद्याच्चैवाददीत वा ॥

इति मनुवचनाद्व्यवस्था । नारद —

अर्घश्चेदेव हीयेत सोदयं पण्यमावहेत् ।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥

विष्णु –'गृहीतमूल्यं यः पण्य क्रेतुर्वै दद्यात्तस्याऽसौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्य '। विक्रीतमपि पण्यं पूर्वक्रेतरि परीक्षणकालोत्तरकालीनानुशयादिनाऽगृहीते सत्यन्यत्र विक्रीयमाणस्य तस्य यदा यस्य क्रेतृदोषेणाऽनवेक्षणादिना राजदैवकृतेनोपघातेन पण्य-

(१) दोषमुपागते—इति मु पु पाठ ।

दोषे जाते मूल्यहानिश्चेद्भवति तदा सा हानिः क्रेतुरेव। क्रेत्रा याचितस्य विक्रेतुः पण्यमप्रयच्छतः ततस्तु हानिर्विक्रेतुरेवेत्यर्थः। अपिर्विरोधे। एवकाराभ्यां विक्रेतुः क्रेतुश्च व्यवच्छेदः। हिशब्देन दोषस्य हेतुत्वमभिप्रैति। अनुशयं विनैव कार्यं व्यासङ्गादिना पूर्वक्रेतर्यगृह्णति मूल्यं गृहीत्वा यद्यन्यहस्ते पण्यं विक्रीतं सदोषं वा पण्यं प्रयच्छन्नदोषं यदि विक्रीतं तत्रोभयपण्यमूल्याद्द्विगुणो दमो भवेत्। चकारेण क्रेत्रेऽपि मूल्यात् द्विगुणं दातव्यमिति समुच्चीयते। तदाह नारदः—

अन्यहस्ते तु विक्रीय योऽन्यस्मै तत्प्रयच्छति।
द्रव्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु॥
दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः।
अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः॥

तुशब्देन मूल्यमगृहीत्वा वाङ्मात्रविक्रीतं व्यवच्छिद्यते ॥२५४-२५७॥

( मिता० ) प्रासङ्गिकं परिसमाप्याऽधुना विक्रीयासम्प्रदानं नाम प्रक्रमते। तत्स्वरूपं च नारदेनाभिहितम्—'विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते। विक्रीयासम्प्रदानं तद्विवादपदमुच्यते' ॥ इति। तत्र विक्रेयद्रव्यस्य चराचरभेदेन द्वैविध्यमभिधाय पुनः षड्विधत्वं तेनैव प्रत्यपादि—'लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ॥(१)गणितं तुलितं मेयं क्रियया रूपतः श्रिया'॥ इति। गणितं क्रमुकफलादि। तुलितं कनककस्तूरीकुङ्कुमादि। मेयं शाल्यादि। क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि। रूपतः पण्याङ्गनादि। श्रिया दीप्त्या मरकतपद्मरागादीति।

एतत्षट्प्रकारकमपि पण्यं विक्रीयासम्प्रयच्छतो दण्डमाह—

गृहीतमूल्यमिति। गृहीतं मूल्यं यस्य पण्यस्य विक्रेत्रा तद् गृहीतमूल्यं तद्यदि विक्रेता प्रार्थयमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरेऽल्पमूल्येनैव लभ्यते तदार्घह्रासकृतो य उदयो वृद्धिः पण्यस्य स्थावरजङ्गमात्मकस्य तेन सहितं पण्यं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावदेव(२)यतो मूल्यस्येयत्पण्यमिति

---

(१) गणितं क्रमुकफलादि, तुलितं कर्पूरादि ग. घ.। (२) यावदेव यत इति बहुत्र पाठः।

प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादिप्रतिपादितवृद्धिरूपोदयेन वा सहितं क्रेतुरथाऽनुशयवशाद्दापनीयः । यथाह नारदः—'अर्घश्चे(१)द वहीयेत सोदयं पण्यमावहेत् । स्थानिनामेष नियमो दिग्लाभं दिग्वि चारिणाम्' ॥ इति । यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा तस्मि न्पण्ये वस्त्रगृहादिके य उपभोगस्तदाच्छादननिवासादिरूपो विक्रेतुस्तत्सहितं पण्यमसौ दाप्यः । यथाह नारदः—'विक्रीय पण्य मूल्येन यः क्रेतुर्न प्रयच्छति । स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रिया फलम्' ॥ इति । विक्रेतुरुपभोगः क्षय उच्यते । क्रेतृसम्बन्धित्वेन क्षीय माणत्वात् । न पुनः कुड्य(२)पातसस्यघातादिरूपः । तस्य तु—'उप हन्येत वा पण्यं दह्येतापह्रियेत वा । विक्रेतुरेव सोऽनर्थो विक्रीयास म्प्रयच्छतः' ॥ इत्यभिहितत्वात् । यदा त्वसौ क्रेता देशान्तरात्पण्यग्र हणार्थमागतस्तदा तत्पण्यमादाय देशान्तरे विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः । अयं च क्रीतपण्यसमर्पणनि यमोऽनुशयाभावे द्रष्टव्यः । सति त्वनुशये 'क्रीत्वा विक्रीय वा किं ञ्चिदि'त्यादि मनूक्तं वेदितव्यम् ॥ २५४ ॥

( मिता० ) किञ्च—

विक्रीतमिति । यदा तु पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति तदा विक्रीतमपि पण्यमन्यत्र विक्रेयम् । यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राजदैविकेनोपहतं तदा क्रेतुरेवासौ हानि र्भवेत् । पण्याग्रहणरूपेण क्रेतृदोषेण नाशितत्वात् ॥ २५५ ॥

( मिता० ) अपि च—

राजदैवेति । यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न सम र्पयत्यजातानुशयोऽपि तच्च राजदैविकेनोपहतं भवति तदासौ हानि र्विक्रेतुरेव । अतोऽन्यद्दुष्टं पण्यं विनष्ट(३) सदृशं क्रेत्रे देयम् ॥२५६॥

( मिता० ) किञ्च—

अन्यहस्त इति । यः पुनर्विनैवानुशयमेकस्य हस्ते विक्रीतं पुनर न्यस्य हस्ते विक्रीणीते सदोषं वा पण्यं प्रच्छादितदोषं विक्रीणीते तदा तत्पण्यमूल्याद्द्विगुणो दमो वेदितव्यः । नारदेनाप्यत्र विशेषो दर्शितः—'अन्यहस्ते च विक्रीय योऽन्यस्मै तत्प्रयच्छति । द्रव्यं तद्वि-

(१) श्चेदव. ग. । (२) कुड्यपातस्यघातादि ख । (३) सदृच घ. ।

गुणं दाप्यो विनयं तावदेव तु'॥ इति। सर्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः। अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये क्रेतृविक्रेत्रोर्नियमकारिणः समयादृते प्रवृत्तौ निवृत्तौ वा न कश्चिद्दोषः। यथाह नारदः—'दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः। अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः'॥ इति॥ २५७॥

( वी० मि० ) अथ क्रीतानुशयस्य प्रागुक्तस्य साधारणं प्रकृतं विक्रीयासंप्रदानधर्ममाह—

क्षयं वृद्धिं च वणिजा पण्यानामविजानता॥
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक्॥ २५८॥

वणिजा क्षयं पण्यस्य मूल्यापचयमजानता क्रीत्वा नानुशयः कार्यः। पण्यस्य मूल्यवृद्धिमजानता च विक्रीय नानुशयः कार्यः। एवमविजानन्नेवाऽनुशयं कुर्वन् पण्यमूल्यषष्ठांशदण्डभाक् भवति। चकारेण क्षयवृद्धिज्ञानेऽनुशयः कार्यो न तत्र विक्रीयेति वा समुच्चीयते। बृहस्पतिः—

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भवेच्च वा।
अस्वतन्त्रेण मूल्येन त्याज्यं तस्य पुनर्हरेत्॥

तस्य क्रेतुस्त्याज्यं पुनर्विक्रेता हरेदिति सम्बन्धः॥ २५८॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने विक्रीयासंप्रदानप्रकरणम्॥



( मिता० ) विक्रयानुशयोऽभिहितः क्रीतानुशयस्वरूपं तु प्राक् प्रपञ्चितम्। अधुना तदुभयसाधारणं धर्ममाह—

क्षयमिति। परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाणतोऽर्धकृतां वृद्धिमपश्यता क्रेत्रा अनुशयो न कार्यः, विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम्। वृद्धिक्षयपरिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो भवतीति व्यतिरेकादुक्तं भवति। अनुशयकालावधिस्तु नारदेनोक्तः—'क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम्॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्'॥ इति। अपरीक्षितक्रयविक्रये पुनः पण्यवैगुण्यनिबन्धनानुशयावधिर्दशैकपञ्चसप्ताहेत्यादिना दर्शित एव। तदनया वाचोयुक्त्या वृद्धिक्षयपरिज्ञानस्यानुशयकारणत्वमवगम्यते। यथा

गण्यपरीक्षाविधियत्नात्पण्यदोषाणामनुशयकारणत्वम् ।

अतः पण्यदोषतद्वृद्धिक्षयकारणाभावेऽनुशयकालाभ्यन्तरेऽपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डनीयः । अनुशयकारणसद्भावेऽप्यनुशयकालातिक्रमेणानुशयं कुर्वतोऽप्ययमेव दण्डः । उपभोगेनाविनश्वरेषु स्थिरार्घेष्वनुशयकालातिक्रमेणानुशयं कुर्वतो मनूक्तो दण्डो द्रष्टव्यः (८।२२३)—'परेण [redacted] दशाहस्य न दद्यान्नापि दापयेत् । आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्' ॥इति २५८॥

इति विक्रीयासंप्रदानं नाम प्रकरणम् ।

---

( वी० मि० ) अथ सम्भूयसमुत्थानं नाम विवादपदमुपक्रमते—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ॥
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥ २५९ ॥

लाभार्थं मिलित्वा कर्म कुर्वतां वणिजां मूल्यद्रव्यसंख्यानुसारेण लाभापचयौ भवतः । यथा वा संविदा व्यवस्थया विपर्यीकृतौ लाभालाभौ तथा वणिङ्नटादीनां तौ भवतः ॥ २५९ ॥

( मिता० ) संभूयसमुत्थानं नाम विवा(१)दपदमिदानीमभिधीयते—

समवायेनेति । सर्वे वयमिदं कर्म मिलिताः कुर्म इत्येवंरूपा संप्रतिपत्तिः समवायः तेन ये वणिङ्नटनर्तकप्रभृतयो लाभलिप्सवः प्रातिस्विकं कर्म कुर्वते तेषां लाभालाभावुपचयापचयौ यथाद्रव्यं येन यावद्धनं पण्यग्रहणार्थं दत्तं तदनुसारेणावसेयौ । यद्वा—प्रधान गुणभावपर्यालोचनयास्य भागद्वयमस्यैको भाग इत्येवंरूपया संविदा समयेन यथा संप्रतिपन्नस्तथा वेदितव्यः ॥ २५९ ॥

( वी० मि० ) समुदायमध्ये एकेन द्रव्यस्य विनाशे रक्षणे वा व्यवस्थामाह—

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ॥
स तद्दद्याद्विप्लवाच्च रक्षितादृशमांशभाक् ॥ २६० ॥

सम्भूय कर्म कुर्वतां पण्ये पण्यमिदमित्थं न व्यवहर्तव्यमित्यादे-

---

( १ ) पदमधुना समभिधाति घ ।

शाविषयीभूतं च यत्पण्यमिदमित्थं न व्यवहर्तव्यमिति प्रतिषिद्धमित्थं व्यवहर्तव्यमित्यादेशभूतं च यत्पण्यमेकेनाऽज्ञत्वान्नाशितं तत्स एको दद्यात्, यश्च समुदायान्तर्गतः। चौरादिकृतविप्लवादेको रक्षति स पण्यस्य दशमांशं लभत इत्यर्थः। आद्यचकारेण यदि सर्वेषामेव प्रमादेन नाशितं तदांऽशक्रमेणैव क्षयः कल्पनीयो यथांशत इति। द्वितीयचकारेण रक्षितुर्मरणे तत्पुत्रो दशमांशं लभत इति समुच्चीयते।

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात्।

इति नारदवचनात् ॥ २६० ॥

( मिता० ) किञ्च—

प्रतिषिद्धमिति । तेषां सम्भूय प्रचरतां मध्ये पण्यमिदमित्थं न व्यवहर्तव्यमिति प्रतिषिद्धमाचरता यन्नाशितमनादिष्टमननुज्ञातं वा कुर्वाणेन तथा प्रमादात्प्रज्ञाहीनतया वा येन यन्नाशितं स तत्पण्यं वणिग्भ्यो दद्यात्। यः पुनस्तेषां मध्ये चौरराजादिजनिताद्व्यसनात्पण्यं पालयति स तस्माद्रक्षितात्पण्याद्दशममंशं लभते ॥ २६० ॥

( वी० मि० ) अंशभागित्वप्रसङ्गेन राज्ञोंऽशभागित्वमाह—

अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ॥

व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥ २६१ ॥

अर्घप्रक्षेपणाद्विंशं भागं नृपो हरेत्। मूल्यस्य नृपो गृह्णीयादित्यर्थः। केचित्तु राज्ञा भागो न ग्राह्यः, किन्तु पण्यमेव तन्मूल्यं वा सम्पूर्णं राज्ञा ग्राह्यमित्याहुः। व्यासिद्धमिदमत्र न विक्रेयमिति प्रतिषिद्धं राज्ञा यत्पण्यं तत्र विक्रीतं राजयोग्यं च मत्तगजादिकमप्रतिषिद्धमपि राजानुमत्या विना विक्रीतमन्यत्र तद्राजगामि राज्ञा ग्राह्यं भवति मूल्यदानमन्तरेणैवेत्यर्थः ॥ २६१ ॥

( मिता० ) अर्घेति। इयतः पण्यस्येयन्मूल्यमित्यर्घस्तस्य प्रक्षेपणात् राजतो निरूपणाद्धेतोरसौ मूल्याद्विंशतितममंशं शुल्कार्थं गृह्णीयात्। यत्पुनर्व्यासिद्धमन्यत्र न विक्रेयमिति राज्ञा प्रतिषिद्धं य(१)च्च राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपि तद्राज्ञेऽनिवेद्य लाभलोभेन विक्रीतं चेद्राजगामि मूल्यदाननिरपेक्षं तत्सर्वं पण्यं राजापहरेदित्यर्थः ॥ २६१ ॥

---

( १ ) यद्राजयोग्यं ख।

( वी० मि० ) राज्ञोऽप्रदाने प्रतिकूलस्य दण्डमाह—

मिथ्या वदन् परीमाणं शुल्कस्थानादपासरन् ॥

दाप्य(१)श्चाष्टगुणं यश्च स व्याजक्रयविक्रयी ॥ २६२ ॥

शुल्कवञ्चनार्थं पण्यस्य यक्षमुकादेः परीमाणं मिथ्या वदन् शुल्कस्थानादपासरन् वा इदं मयाऽत्र स्थाप्यते न तु क्रीयते विक्रीयत इति वञ्चयित्वा क्रयविक्रयकारी च वणिक् पण्यादष्टगुणं दण्डं दाप्यः । चकाराभ्यां शब्दान्तप्रतिपाद्यस्य व्याजक्रयविक्रयिणश्च प्रत्येकं दण्डनिमित्तत्वं द्योतयति ॥ २६२ ॥

( मिता० ) मिथ्येति । यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निन्हुते शुल्कग्रहणस्थानाद्वापसरति यश्चास्येदमस्येदं चेत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा ते सर्वे पण्यादष्टगुणं दण्डनीयाः ॥ २६२ ॥

( वी० मि० ) शुल्कमप्रयच्छतो वणिज इवाऽसमुचितं शुल्कं गृह्णतोऽपि राजाधिकृतस्य दण्ड इत्यभिदधानस्तत्तुल्यापराधेऽपि दण्डमाह—

तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ॥

ब्राह्मणप्रातिवेश्यानामेतदेवाऽनिमन्त्रणे ॥ २६३ ॥

तरिको जलशुल्काधिकृतः अर्घप्रक्षेपणाद्विंशमिति ॥शुक्लं स्थलजं शुल्कं गृह्णाति यः स दशपणान्दण्डं दाप्यः । प्रतिवेशः स्ववेश्मसन्निहितं वेश्म तत्रस्था ये ब्राह्मणास्तानिमन्त्रणकार्येऽपि निमन्त्रयन् दशपणमितमेव दण्डं दाप्यः । चकारेण तदीयनिमन्त्रणं स्वीकुर्वीतेति समुच्चीयते । जलशुल्कमाह मनुः—

पणं यानं तरे दाप्यः पौरुषेऽर्धपणं तरे ।
पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥
भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चाऽपरिच्छदाः ॥

पुरुषो भारवाहः । अत्र शुल्कद्वयेऽपि विशेषः—

न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते ।

(१) दाप्यस्त्वष्ट० इति मु. पु. पाठ ।

न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्राजिते न यज्ञे ॥
इति ॥ २६३ ॥

( मिता० ) अपि च—

तारिक इति । शुल्कं हि द्विविधं-स्थलजं जलजं च । तत्र स्थलजमर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेदित्यत्रोक्तम् । जलजं तु मानवेऽभिहितम् ( ८।४०४।५।७। )-'पणं यानं तरे दाप्यः पौरुषेऽर्धपणं तरे । पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः । रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः' ॥ (१)'गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे' ॥ इति । शुल्कद्वयेऽप्ययमपरो विशेषः—'न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्राजिते न यज्ञे' ॥ इति । तीर्यतेऽनेनेति (२)तरिः नावादिः तज्जन्यशुल्केऽधिकृतस्तरिकः स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा दशपणान्दण्डनीयः । वेशो वेश्म, प्रतिवेश इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते । तत्र भवाः प्रातिवेश्याः ब्राह्मणाश्च ते प्रातिवेश्याश्च ब्राह्मणप्रातिवेश्याः तेषां श्रुतवृत्तसंपन्नानां श्राद्धादिषु विभवे सत्यनिमन्त्रणे एतदेव दशपणात्मकं दण्डनं वेदितव्यम् ॥ २६३ ॥

( वी० मि० ) सम्भूय कर्म कुर्वतां मध्ये यद्येको म्रियते तदीयोंऽशस्तदा केन ग्राह्य इत्यत आह—

देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ॥
ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥ २६४ ॥

देशान्तरस्थे सम्भूय कारिणि मृते तदीयमंशं तत्पुत्राद्यास्तन्मातृस्वस्रेयादयस्तत्सपिण्डा वा यथाधिकारं तत्रागता द्रव्यं गृह्णीयुः । वाशब्देन विकल्पः पौर्वापर्यं च समुच्चीयते । अन्यथा सर्वं राज्ञो भवति ॥ २६४ ॥

( मिता० ) देशान्तरमृतवणिग्रिक्थं प्रत्याह—

देशान्तरगत इति । यदा सम्भूयकारिणां मध्ये यः कश्चिद्देशान्तरगतो मृतस्तदा तदीयमंशं दायादाः पुत्राद्यपत्यवर्गो बान्धवाः

---

(१) 'गर्भिणी'त्यादि पद्यं क्वचिन्नास्ति । (२) तरो नावादिः घ ।

मातृपक्षा मातुलाद्याः ज्ञातयोऽपत्यवर्गव्यतिरेकाः सापिण्डा वा आगताः सम्भूयव्यवहारिणो ये देशान्तरादागतास्ते वा गृह्णीयुः । तैर्विना दायादाद्यभावे राजा गृह्णीयात् । वाशब्देन च दायादानां वैकल्पिकमधिकारं दर्शयति । पौर्वापर्यनियमश्च 'पत्नी दुहितर' इत्यादिना प्रतिपादित एवात्रापि वेदित(१)व्यः । शिष्यसब्रह्मचारि-ब्राह्मणनिषेधो वणिक्प्रासिद्ध वचनप्रयोजनम् । वणिजामपि मध्ये यः पिण्डदानर्णदानादिसमर्थः स गृह्णीयात् । सामर्थ्याविशेषे पुनः सर्वे वणिजः संसृष्टिना विभज्य गृह्णीयुः । तेषामप्यभावे दशवर्षं दाया-द्यागमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णीयात् । तदिदं नार-देन स्पष्टीकृतम्—'एकस्य चेत्स्यान्मरणं दायादोऽस्य तदाप्नुयात् । अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव ते ॥ तदभावे तु गुप्तं त(२)त्कारयेद्दश वत्सरान् । अस्वामिकमदायादं दशवर्षस्थितं ततः । राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते' ॥ इति ॥ २६४ ॥

( वी०मि० ) को नाम स्वमंशं न लभत इत्यत आह—

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ॥

जिह्मो वञ्चकः वञ्चनया समुदायकार्यानिष्पादकः तं लाभशून्यं त्यजेयुर्बहिःकुर्युः । यदि त्वेकोऽसमर्थस्तदा स्वकर्तव्यमन्यद्वारा कार-येन्न तु वञ्चनां कुर्यादित्यर्थः ॥

( मिता० ) जिह्ममिति । जिह्मो वञ्चकः तं निर्गतलाभं लाभमा-च्छिद्य त्यजेयुर्बहिः कुर्युः । यश्च सम्भूयकारिणां मध्ये भाण्डप्रत्य-वेक्षणादिकं कर्तुमसमर्थोऽसावन्येन स्वं कर्म भाण्डभारवाहनं तद्वा-यव्ययपरीक्षणादिकं कारयेत् ॥

(वी०मि०) लाभालाभावित्यादिकमुक्तं वणिग्धर्ममृत्विगादिष्वति-दिशति—

अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् ॥ २६५ ॥

अनेन प्रागुक्तप्रकारकथनेन ऋत्विजां होत्रादीनां, कर्षकाणां कृषि-कारिणां, कर्मिणां शिल्पनृत्यादिकर्मकारिणां विधिः प्रकार आख्यातः। ऋत्विजां धनविभागे विशेषमाह मनुः—

सर्वेषामर्धिनो मुख्या द्वितीयास्तु तदर्द्धिनः ।

---

( १ ) विशेयः घ । ( २ ) तद्धारयेत् घ ।

तृतीयिनस्तृतीयास्तु चतुर्थांश्चैकपादिनः ॥

'ज्योतिष्टोमेन शतेन दीक्षयन्ती'ति श्रूयते । तेन शतं गावो दक्षिणा विहिताः । तत्र षोडशर्त्विजां मध्ये ये मुख्याश्चत्वारो होत्राध्वर्यु-ब्रह्मोद्गातारस्ते न्यूनार्द्धभागिनः, अग्रभागानुरोधात्तेन तेभ्यश्च तुर्भ्योऽष्टचत्वारिंशतं गावः । द्वितीयाश्चत्वारो मैत्रावरुणप्रतिप्रस्थातृ-ब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धिनश्चतुर्विंशतिगोभागिनः । तृतीया अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारश्चत्वारस्तृतीयिनः अष्टचत्वारिंश-त्तृतीयांशभागिनः, तेन तेषां षोडश गावः । चतुर्थाश्च ग्रावस्तुदुन्नेतृपो-तृसुब्रह्मण्यास्ते मुख्यभागचतुर्थांशभागिनः । तेन तेभ्यो द्वादश गावो देयाः । तथा—

यस्य कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणः ।
स एव ता आददीत भजेरन् सर्व एव वा ॥

'हिरण्मयौ प्रकाशावध्वर्यवे ददाती'त्यादिना या अभिषेचनीया-दिदक्षिणा यत्सम्बन्धित्वेनोक्तास्तेनैव ग्राह्या न तु तत्र विभाग इत्य-र्थः । शङ्खलिखितौ—'अथ ऋत्विजि वृते पश्चादन्यं वृणुयात्, पूर्ववृतस्यैव दक्षिणा, पश्चाद्वृतः किञ्चिल्लभेत प्रवसेच्चेत्तत्कालं, निमित्तं चाऽपेक्ष-माणस्तत्कालमुदीक्षेत, नान्तरायं यजेत्तस्मादत्ययिका या तं क्रतुं समापयेत्, प्रोष्य प्रत्यागतश्च किञ्चिल्लभेताऽथ चेत्प्रसिद्धः प्रवसे-त्कामादनुप्राप्ते स धनं ऋत्विक् शतं दण्ड्यः' । मनुः—

दक्षिणासु च दत्तासु स्वकर्म परिहापयन् ।
कृत्स्नमेव लभेतांशमन्येनैव तु कारयेत् ॥

अन्येन पुत्रादिना । बृहस्पतिः—

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचतेऽत्र यः कश्चिल्लाभात्स परिहीयते ॥

तथा—

वाहबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां क्षेत्रकारिणाम् ॥

यस्य सामग्र्या क्षेत्रहानिस्तेनैव सा देयेत्यर्थः । तथा—

हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेयुस्ते यथांशतः ॥

निर्वेशो भृतिः । कात्यायनः —

शिक्षकाभिज्ञकुशला आचार्यश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

बृहस्पतिः —

नर्तकानामेष धर्मो धर्मविद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥

अध्यर्धं सार्धम् ॥ २६५ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने सम्भूयसमुत्थानप्रकरणम् ॥

---

( मिता० ) प्रागुपदिष्टं वणिग्धर्मम्रुत्विगादिष्वतिदिशति—

अनेनेति । अनेन लाभालाभौ यथाद्रव्यमित्यादिवणिग्धर्मकथनेन ऋत्विजां होत्रादीनां कृषीवलानां नटनर्तकतक्षादीनां च शिल्पकर्मोपजीविनां विधिर्वर्तनप्रकार आख्यातः । तत्र च ऋत्विजां धनविभागे विशेषो मनुना दर्शितः ( ८।२१० ) 'सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः' ॥ इति । अस्यायमर्थः-'ज्योतिष्टोमे तं शतेन दीक्षयन्ती'ति (१)वचनेन गवां शतमृत्विगानतिरूपे दक्षिणाकार्ये विनियुक्तम् । ऋत्विजश्च होत्रादयः षोडश । तत्र कस्य कियानंश इत्यपेक्षायामिदमुच्यते । सर्वेषां होत्रादीनां षोडशर्त्विजां मध्ये ये मुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारः ते गोशतस्यार्धिनः सर्वेषां भागपूरणोपपत्तिवशाद्दष्टाचत्वारिंशद्रूपार्धेनार्धभाजः । अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्धेन तस्य मुख्यांशस्यार्धेन चतुर्विंशतिरूपेणार्धभाजः । ये पुनस्तृतीयिनः अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारस्ते तृतीयिनो मुख्यस्यांशस्य षोडशगोरूपेण तृतीयांशेन तृतीयांशभाजः । ये तु पादिनः ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्ते मुख्यभागस्य पश्चतुर्थांशो द्वादशगोरूपस्तद्भाजः । ननु कथमयमंशनियमो घटते, न तावदत्र (२)समयो नापि द्रव्यसमवायो नापि वचनं यद्वशादीदृग्भागनियमः स्यात् । अत 'समं स्यादश्रुतत्वा'दिति न्यायेन सर्वेषां समांशभाक्त्वं कर्मानुरूपेण वांशभाक्त्वमिति युक्तम् । अत्रोच्यते-ज्योतिष्टोमप्रकृतिक

(१) वचने गवां घ । (२) नियमो घ ।

द्वादशाहेऽर्धिनस्तृतीयिनः पादिन इति सिद्धवदनुवादो न घटते, यदि तत्प्रकृतिभूते ज्योतिष्टोमे अर्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनां न स्यात्। अतो वैदिकर्द्धिप्रभृतिसमाख्याबलात्प्रागुक्तोंऽशनियमोऽवकल्प्यत इति निरवद्यम् ॥ २६५ ॥

इति सम्भूयसमुत्थानप्रकरणम् ।

---

( वी०मि० ) स्तेयविवादपदं निरूपयति प्रकरणेन । तत्रादौ चौरज्ञानोपायमाह—

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाऽथ पदेन वा ॥
पूर्वकर्मापराधी च तथैवा(१)ऽशुद्धवासकः ॥ २६६ ॥
अन्येऽपि शङ्कया ग्राह्या नामजात्यादि(२)निन्हवैः ॥
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २६७ ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ॥
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २६८ ॥
गृहीतः शङ्कया चौर(३) आत्मानं चेन्न शोधयेत् ॥
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ २६९ ॥

ग्राहकैश्चौरग्रहणाधिकृतैः राजपुरुषैरन्येन धनस्वाम्यादिना वा लोप्त्रेणाऽपहृतभाण्डादिना चौर्यचिन्हेन अपहरणदेशे चौरत्वाभिमतचरणदर्शनचिन्हेन वा चौरो गृह्यते चौरत्वेन निश्चीयते । यश्च पूर्वकर्मणा चौर्यरूपेण कृतापराध आसीत्, यश्चाऽनिश्चितवासस्थलः सोऽपि गृह्यते चौर्यकारित्वेन शङ्क्यते । न केवलमेतावदेव छौ शङ्कया ग्राह्याः । द्यूतादिसक्ताः कस्त्वमिति प्रश्ने शुष्कमुखा घर्घरस्वराः परकीयाणां द्रव्याणां गृहाणां वा प्रश्नकर्तारः आत्मानं गूहयित्वा सञ्चरन्त आयव्यतिरेकेऽपि बहुव्ययकर्तारोऽविज्ञानस्वामिकजीर्णवस्त्रभाजनादीनां विक्रयकर्तारश्च चौर्यशङ्कया विषयीकर्तव्याः । शङ्कया विषयीकृतश्च यदि साक्षिदिव्यादिना नात्मानमचौरत्वेन निश्चाययति तदा हृतं द्रव्यं स्वामिने दापयित्वा चौरदण्डेन उत्तमसाहसा-

---

( १ ) तथा चाशुद्ध-इति मु० पु० पाठः । ( २ ) जातिनाम दि-इति मु०पु०पाठः ।
( ३ ) चौर्ये नात्मानं चेद्विशोधयेत्-इति मु०पु०पाठः ।

दिना वक्ष्यमाणेन तं दण्डयेत्। अथशब्देन लोप्त्रलाभानन्तर्यार्थेन तदसत्त्व एव पदचिन्हाद्यनुसरणमिति सूचयति। चकाराच्चौरग्रन्थं तथाशब्देन निश्चितकुलादिकं च समुच्चिनोति। एवकारः पूर्वार्द्धेऽन्वितोऽन्यकोटिव्यवच्छेदार्थकतया निश्चयबोधनार्थः। अपिकारेण चकारैश्च चौरभक्ताश्रयदानादिकारिणो नानासमृत्युक्तान् बहून् समुच्चिनोति ॥ २६६—२६९ ॥

(मिता०) इदानीं स्तेयं प्रस्तूयते। तल्लक्षणं च मनुनाभिहितम् (८-३३२)—'स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम्। निरन्वयं भवेत्स्तेयं कृत्वा(१)पह्नुवते च यत्' ॥ इति। अन्वयवत् द्रव्यरक्षिराजाध्यक्षादिसमक्षम्। प्रसभं बलावष्टम्भेन यत्परधनहरणादिकं क्रियते तत्साहसम्। स्तेयं तु तद्विलक्षणं निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधन(२)हरणं तदुच्यते। यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भयान्निह्नुते तदपि स्तेयम्। नारदेनाप्युक्तम्—'उपायैर्विविधैरेषां छलयित्वापकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः' ॥ इति।

तत्र तस्करग्रहणपूर्वकत्वाद्दण्डस्य, ग्रहणस्य ज्ञानपूर्वकत्वात् ज्ञानोपायं तावदाह—

ग्राहकैरिति। यश्चौरोऽयमिति जनैर्विख्याप्यते असौ ग्राहकै राजपुरुषैः स्थानपालप्रभृतिभिर्ग्रहीतव्यः। लोप्त्रेणापहृतभाजनादिना वा चौर्यचिह्नेन नाशदिवसादारभ्य चौर्यपदानुसारेण वा ग्राह्य। यश्च पूर्वकर्मापराधी प्राक् प्रख्यातचौर्यः। अशुद्धोऽप्रज्ञातो वासः स्थानं यस्यासावशुद्धवासकः सोऽपि ग्राह्य ॥ २६६ ॥

(मिता०) किञ्च—

अन्येऽपीत्यादि। न केवलं पूर्वोक्ता ग्राह्याः किन्त्वन्येऽपि वक्ष्यमाणैर्लिङ्गैः शङ्कया ग्राह्याः। जातिनिह्नवेन नाहं शूद्र इत्येवंरूपेण, नामनिह्नवेन नाहं ड(३)पित्थ इत्येवंरूपेण, आदिग्रहणात्स्वदेशग्रामकुलापेन च लक्षिता ग्राह्याः। द्यूतपण्याङ्गनामद्यपानादिव्यसनेष्वतिप्रसक्तास्तथा कुतस्त्योऽसि त्वमिति चौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति तर्ह्यसावपि ग्राह्यः। बहुवचनात्स्विन्नललाटादीनां ग्रहणम्। तथा ये निष्कारणं कियदस्य धनं किं वास्य

(१) पह्नूयते च यत् घ। (२) ग्रहणं घ। (३) डित्थ इत्येवं घ।

(१)गृहमिति पृच्छन्ति ये च वेषान्तरधारणेनात्मानं गूहयित्वा चरन्ति ये चाऽऽयासोऽव्ययेऽपि बहुव्ययकारिणः ये वा विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामविज्ञातस्वामिकानां विक्रायकास्ते सर्वे चौरसंभावनया ग्राह्याः। एवं नानाविधचौर्यलिङ्गान् पुरुषान् गृहीत्वा एते चौराः किं वा साधव इति सम्यक्परीक्षेत न पुनर्लिङ्गदर्शनमात्रेण चौर्यनिर्णयं कुर्यात्। अचौरस्यापि लोप्त्रादिचौर्यलिङ्गसम्बन्धसम्भवात्। यथाह नारदः—'अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि। चोरेण वा प(५)रिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत्' ॥ तथा—'असत्याः सत्यसङ्काशाः सत्याश्चासत्यसंनिभाः। दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम्' ॥ इति ॥ २६७—२६८ ॥

( मिता० ) एवं चौर्यशङ्कया गृहीतेनात्मा संशोधनीय इत्याह—

गृहीत इति। यदि चौर्यशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानं न शोधयति तर्हि वक्ष्यमाणधनदापनवधादिदण्डभाग् भवेत्। अतो मानुषेण तदभावे दिव्येन वा आत्मा शोधनीयः। ननु नाहं चौर इति मिथ्योत्तरे कथं प्रमाणं सम्भवति, तस्याभावरूपत्वात्। उच्यते—दिव्यस्य तावद्भावाभावगोचरत्वं 'रुच्याऽचान्यतरः कुर्या'दित्यत्र प्रतिपादितम्। मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न सम्भवति तथापि कारणसंसृष्टे भावरूपमिथ्याकारणसाधनमुखेनाऽभावमपि गोचरयत्येव। यथा नाशापहारकाले अहं देशान्तरस्थ इत्यभियुक्ते भाविते चौर्याभावस्याप्यर्थात्सिद्धेः शुद्धिर्भवत्येव ॥ २६९ ॥

(वी०मि०) न केवलं शङ्कया गृहीत एव दण्डनीयः किन्तु निश्चितचौर्योऽपि न वोत्तमसाहसादिर्धनरूप एव दण्डः किन्तु वधप्रवासनादिरपि चौरस्येत्याह—

चौरं प्रदाप्याऽपहृतं घातयेद्विविधैर्वधैः ॥
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥ २७० ॥

विविधैर्वधैः शूलारोपणकरच्छेदादिभिर्वक्ष्यमाणैर्वधोपायैर्यादृशश्चौर्ये वधोऽन्येषां, तादृशो ब्राह्मणान् ललाटे स्वपदेनाङ्कयित्वा स्वराष्ट्रान्निष्कासयेत् ॥ २७० ॥

( मिता० ) चौरे दण्डमाह—

चौरमिति। यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्य-

(१) गृहमित्येवंविधं पृच्छन्ति घ।

स्तं स्वामिने अपहृतं धनं स्वरूपेण मूल्यकल्पनया वा दापयित्वा विविधैर्वधैर्घातैर्घातयेत् । एतच्चोत्तमसाहसदण्डप्राप्तियोग्योत्तमद्रव्यविषयम् । न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम् । 'साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः । स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्' ॥ इति नारदवचनेन वधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापितत्वात् । यत्पुनर्वृद्धमनुवचनम्—'अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् । अतस्ता(१)न्घातयेद्राजा नार्थदण्डेन दण्डयेत्' ॥ इति, तदपि महापराधविषयम् ॥

( मिता० ) चौरविशेषेऽपवादमाह—

सचिह्नमिति । ब्राह्मणं पुनश्चौरं महत्यप्यपराधे न घातयेदपि तु ललाटेऽङ्कयित्वा स्वदेशान्निष्कासयेत् । अङ्कनं च श्वपदाकारं कार्यम् । तथा च मनुः ( ९ । २३७ )—'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्' ॥ इति । एतच्च दण्डोत्तरकालं प्रायश्चित्तमचिकीर्षतो द्रष्टव्यम् । यथाह मनुः ( ९ । २४० )—'प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् । नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम्' ॥ इति २७० ॥

घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते ॥
विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके ॥ २७१ ॥
स्वसीम्नि दद्यात् ग्रामस्तु पदं वा यत्र गच्छति ॥
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ २७२ ॥

मनुष्यादिमारणे धनाद्यपहरणे वा ग्रामपतेश्चौरोपेक्षादोषो भवति । अतो ग्रामस्तत्पतिः स्वसीम्नि नष्टधनं पुनर्दद्यात् । यदि चौरपदानि ग्रामान्न निर्गच्छन्ति । यदि तु निर्गच्छन्ति तदा यत्र पदानि प्रविशन्ति तद्विषयाधिपतिर्दद्यात् । विवीतगवादिचरणस्थानं तद्भर्तुस्तत्र पथि घातनापहारयोर्दोषोऽवीतके वीतभिन्ने पथि घातनापहारयोश्चौरोद्धरणाधिकृतस्य मार्गपालस्य दोषः । स्वसीम्नीत्याधर्द्धश्लोकार्थस्याऽऽप्यन्वयः । यदि तु बहूनां ग्रामाणामन्तरालदेशे घातापहारौ भवतः, पदानि च जनसम्मर्दादिना भग्नानि तदा पञ्चग्रामी दशानां ग्रामाणां समाहारो दशग्रामी वा दद्यात् । अथवाशब्दोऽनास्था-

(१) तान्वर्तयेद् घ ।

यां, तेन क्रोशात्मकप्रत्यासत्तिमन्तस्तावन्तो दद्युरिति फलमिति। क्रोशादित्यत्र कृष्टादिति क्वचित्पाठः कर्षणदेशादिति तदर्थः। आ-वृतुशब्देन सीमान्ते वहिर्द्वीपो व्यवच्छिन्नः। यदा त्वपहृतं धनमन्यतो दापयितुं न शक्नोति तदा स्वयमेव राजा चौरहृतं दद्यात्। 'चौरहृतमवजित्य यथास्थानं गमयेत् स्वकोशाद्वा दद्यात्' इति गौतमस्मरणात्॥ २७१-२७२॥

( मिता० ) चौरादर्शने अपहृतद्रव्यप्राप्त्युपायमाह—

घातित इति। यदि ग्राममध्ये मनुष्यादिप्राणिवधो धनापहरणं वा जायते तदा ग्रामपतेरेव चौरोपेक्षादोषस्तत्परिहारार्थं स एव चौरं गृहीत्वा राज्ञेऽर्पयेत्। तदशक्तौ हृतं धनं धनिने दद्याद्यदि चौ(१)रस्य पदं स्वग्रामान्निर्गतं न दर्शयति। दर्शिते पुनस्तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चौरं धनं वार्पयेत्। तथा च नारदः— 'गोचरे यस्य (२)लुप्येत तेन चौरः प्रयत्नतः। ग्राह्यो दाप्योऽथवा शेषं पदं यदि न निर्गतम्॥ निर्गते पुनरेतस्मान्न चेदन्यत्र पातितम्। सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत्'॥ इति। विवीते त्वपहारे विवीतस्वामिन एव दोषः। यदा त्वध्वन्येव तद्धृतं भवत्यवीतके वा विवीतादन्यत्र क्षेत्रे तदा चौरोद्धर्तुर्मार्गपालस्य दिक्पालस्य (३)वा दोषः॥ २७१॥

( मिता० ) किञ्च—

स्वसीम्नीति। यदा पुनर्ग्रामाद्बहिः सीमापर्यन्ते क्षेत्रे मोषादिकं भवति तदा तद्ग्रामवासिन एव दद्युः, यदि सीम्नो बहिश्चौरपदं न निर्गतम्। निर्गते पुनर्यत्र ग्रामादिके चौरपदं प्रविशति स एव चौरा(४)र्पणादिकं कुर्यात्। यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिःप्रदेशे घातितो मुषितो वा चौरपदं च जनसंमर्दादिना भग्नं तदा पञ्चानां ग्रामाणां समाहारः पञ्चग्रामी दशग्रामसमाहा(५)रो वा दद्यात्। विकल्पवचनं तु यथा—प्रत्यासत्त्यपहृतधनप्रत्यर्पणादिकं कुर्यादित्येवमर्थम्। यदा त्वन्यतोऽपहृतं द्रव्यं दापयितुं न शक्नोति तदा स्वकोशादेव राजा दद्यात्। 'चौरहृतमवजित्य यथा

(१) चौरपदं ख.। (२) मुष्येत ख. मुच्येत ग.। (३) वापराधः घ.
(४) चौर्यर्पणादिकं घ. (५) समाहारा दशग्रामी वा घ.

स्थानं गमयेत्स्वकोशाद्वा दद्यात्' इति गौतमस्मरणात् । मुषितामुषितसन्देहे मानुषेण दिव्येन वा निर्णयः कार्यः । 'यदि तस्मिन्दाप्यमाने भवन्मोषे तु संशयः । मुषितः शपथं दाप्यो बन्धुभिर्वापि साधयेत्' ॥ इति वृद्धमनुस्मरणात् ॥ २७२ ॥

( वी० मि० ) चौर्यविशेषे प्रसङ्गात् तत्तुल्यापराधे च दण्डानाह—

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ॥
प्रसह्य घातिनश्चैव शूल(१)मारोपयेन्नरान् ॥ २७३ ॥
उत्क्षेप(२)कग्रन्थिभेदौ करसन्दंशहीनकौ ॥
कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥ २७४ ॥
क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ॥
देशकालवयःशक्ति सञ्चिन्त्यं दण्डकर्मणि ॥ २७५ ॥
भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ॥
दत्त्वा चौरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥ २७६ ॥
शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ॥
उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे ॥ २७७ ॥
विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ॥
सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥ २७८ ॥
विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ॥
विच्छिन्न(३)कर्णनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥२७९॥

बन्दीकृत्य धनवतः पुरुषान् गृह्णन्ति तान् बन्दिग्राहान् अश्वगजान्यतरहारिणो बलान्मनुष्यघातिनश्च चौरान्नरान् शूले यथार्थमारोपयेत् । वस्त्राद्युत्क्षिप्य हरन्तं वस्त्रबद्धसुवर्णादिकमुन्मोच्याऽपहरन्तं तर्जन्यङ्गुष्ठहीनं द्वितीये च , उत्क्षेपणग्रन्थिभेदनरूपेऽपराधे करपादसमाहारस्यैकेन हीनं कुर्यात् । क्षुद्राणां मध्यानां महतां च द्रव्याणां हरणे कृते द्रव्यमूल्यानुसारेण तन्मूल्यमूल्यो दमः कार्यः ।

---

(१) शूलेन इति मु० पु० पाठः । (२) उत्क्षेपक-इति कथ्य० पुस्तके पाठः ।
(३) विच्छिन्नकर्णनासौष्ठी-इति मु० पु० पाठः ।

दण्डकर्मणि देशादिकमपि वृद्धिहानिप्रयोजकं चिन्तनीयं राज्ञा । तत्र नारदः—

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्ज्यं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥
हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ॥

तथाशब्देन राजवृद्धिसमुच्चयः । अत्र महाद्रव्यपदं गजवाजिराजद्रव्यपदभिन्नपरम् । आद्यचकारेण रथहन्तृसमुच्चयः । द्वितीयचकारेणाऽग्न्यागारादिभेदकसमुच्चयः ।

अग्न्यागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहन्तॄंश्च हन्यादेवाऽविचारयन् ॥

इति मनुवचनात् । एवकारेणार्थदण्डव्यवच्छेदः ।

अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् ।
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥

इति मनुस्मरणात् । भक्तेति । हिरण्यादिचौरस्य मनुष्यादिहन्तुर्वा भक्ताऽवस्थानस्थलशीताद्यपनोदकाग्निजलमन्त्रणाचौर्यहननोपाकरणखनित्रखड्गादिदूरदेशगमनार्थमार्गव्ययानामन्यतमं दत्वा सम्प्रदानं चौरत्वेन न जानतोऽचौरस्यापि उत्तमः चौरसदृश एव दण्डः ।

आह्वायकादेशकारास्तथा चान्तरदायकाः ।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥
भक्ताऽवकाशदातारः स्तेनानां ये प्रसर्पताम् ।
शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

इति नारदवचनसंवादात् । राज्ञश्चौरनिवारणाक्षमत्वे स्वरक्षणार्थं चौराय भक्तादिदानेऽप्यदोषः । 'अन्यत्र राजाशक्ते'रिति विष्णुवचनात् । परगात्रे शस्त्रस्याऽवपातने दासीब्रह्मगर्भव्यतिरिक्तस्य गर्भस्य पातने विनाशने चोत्तमसाहसो दण्डः । ब्राह्मणत्वादिविशिष्टपुरुषस्त्रियोः प्रमापणे मारणे उत्तमसाहसः प्रथमसाहसो वा दण्डः । वृत्तशीलापेक्षया वा विकल्पः । आपेशब्दाहृत्तशीलान्यतरसत्त्वे मध्यम-

साहसो दण्डः । चकारेण 'रत्नाभहार्युत्तमसाहस'मिति विष्णूक्तस्याऽप्रकृष्टरत्नहरणस्य सङ्ग्रहः । विप्रदुष्टामिति । विशेषेण प्रदुष्टां भ्रूणघ्नीं स्वगर्भपातिनीं च स्त्रियं तथा पुरुषहन्त्रीं सेतुभेदनकर्त्रीं च शिलां कण्ठे बद्ध्वाऽप्सु प्रवेशयेद्यदि नैता गर्भवत्यो भवन्ति । आद्यचकारेण विषाग्निदपुरुषसमुच्चयः । द्वितीयचकारेण वापीकूपतडागोदपानभेदमार्गरसद्रव्यदूषणेऽदासीदाससम्प्रदानकरणे चेति शङ्खोक्तसमुच्चयः । विषदामग्निदां च स्त्रियं पत्युः विप्रादेरपरस्य च मारणकर्त्रीं कर्णनासौष्ठविहीनां कृत्वा गोद्वारा मारयेत् ॥२७३—२७९॥

( मिता० ) अपराधविशेषेण दण्डविशेषमाह—

बन्दिग्राहानिति । बन्दिग्राहादीन्वलायप्रत्मेन घातकांश्च नरान् शूलानारोपयेत् । अयं च वधप्रकारविशेषोपदेशः । ( ९।२८० )—'(१)कोष्ठागारायुधागारदेवतागारभेदकान् । हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन्' ॥ इति मनुस्मरणात् ॥ २७३ ॥

( मिता० ) किञ्च—

उत्क्षेपकेति । वस्त्रादिक्षिप्यापहरतीत्युत्क्षेपकः । वस्त्रादिबद्धं स्वर्णादिकं विस्रस्योत्कृत्य वा योऽपहरत्यसौ ग्रन्थिभेदः । तौ यथाक्रमं करेण सन्दंशसदृशेन तर्जन्यङ्गुष्ठेन च हीनौ कार्यौ । द्वितीयापराधे पुनः करश्च पादश्च करपाद तच्च तदेकं च करपादैकं तद्धीनं ययोस्तौ करपादैकहीनकौ कार्यौ । उत्क्षेपकग्रन्थिभेदकयोरेकमेकं कर पादं च छिन्द्यादित्यर्थः । एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम् । 'तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः' इति नारदवचनात् । तृतीयापराधे तु वध एव । तथा च मनुः ( ९।२७७ )—'अङ्गुलीग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे । द्वितीये ह(२)स्तचरणौ तृतीये वधमर्हति' ॥ इति । जातिद्रव्यपरिमाणतो, मूल्याद्यनुसारतो दण्डः कल्पनीय इति ॥ २७४ ॥

( मिता० ) जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह—

क्षुद्रेति । क्षुद्राणां मध्यमानामुत्तमानां च द्रव्याणां हरणे सारतो मूल्याद्यनुसारतो दण्डः कल्पनीयः । क्षुद्रादिद्रव्यस्वरूपे च नार-

(१) अन्यगारा ग । (२) हस्तपादे तु घ० ।

देनोक्तम्—'मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्। शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम्॥ वासः कौशेयवर्जं च गोवर्जं पशवस्तथा। हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि॥ हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः। देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम्'॥ त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमस्तेनैव दर्शितः—'साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्'॥ इति। मृन्मयेषु माणिकमल्लिकादिषु गो(१)वाजिव्यतिरिक्तेषु च महिषमेषादिपशुषु ब्राह्मणस्वान्धपु च कनकधान्यादिषु (२)तरतमभावोऽस्तीति उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः। तत्र च दण्डकर्मणि दण्डकल्पनायां तद्धेतुभूतं देशकालवयःशक्तीति सम्यक् चिन्तनीयम। एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणम्। तथा हि—'अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वम्' इति। अयमर्थः—किल्बिषशब्देनात्र दण्डो लक्ष्यते। यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्तृकेऽपहारेऽष्टगुण आपादनीयः। इतरेषां पुनर्विट्क्षत्रब्राह्मणानां विदुषां स्तेये द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणा दण्डा आपादनीयाः। यस्माद्विद्वच्छूद्रादिकर्तृकेष्वपहारेषु दण्डभूयस्त्वम्। मनुनाप्ययमेवार्थो दर्शितः (८।३३७।३३८)—'अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम्। षोडशैव तु वैश्यस्य द्वात्रिंशः क्षत्रियस्य तु॥ ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्। द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः'॥ इति। तथा परिमाणकृतमपि दण्डगुरुत्वं दृश्यते। यथाह मनुः (८।३२०)—'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः। शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम्'॥ इति। विंशतिद्रोणकः कुम्भः। हर्तुर्ह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालाद्यपेक्षया ताडनाङ्गच्छेदनवधरूपा दण्डा योज्याः। तथा संख्याविशेषादपि दण्डविशेषो रत्नादिषु (मनुः ८।३२१।३२२)—'सुवर्णरजतादीनामुत्तमानां च वाससाम्। रत्नानां चैव सर्वेषां शतादभ्यधिके वधः॥ पञ्चाशतस्त्वभ्यधिके हस्त-

(१) गोव्यतिरिक्तेषु घ.। (२) तारतम्यभावोऽस्तीति घ.।

च्छेदनमिष्यते । शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्' ॥ इति । तथा द्रव्यविशेषादपि (८।३२३)—'पुरुषाणां कुलीनानां नारीणां वा विशेषतः । रत्नानां चैव सर्वेषां हरणे वधमर्हति' ॥ अकुलीनानां तु दण्डान्तरम्—'पुरुषं हरतो दण्डः प्रोक्त उत्तमसाहसः । स्त्र्यपराधे तु सर्वस्वं कन्यां तु हरतो वधः' ॥ इति । क्षुद्रद्रव्याणां तु माषतो न्यूनमूल्यानां मूल्यात्पञ्चगुणो दमः । 'काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ॥ वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥ शाकानामार्द्रमूलानां हरणे फलमूलयोः । गोरसेक्षुविकाराणां तथा लवणतैलयोः ॥ पक्वान्नानां कृतान्नानां (१)मत्स्यानामामिषस्य च । सर्वेषां मूल्यभूतानां मूल्यात्पञ्चगुणो दमः' ॥ इति नारदस्मरणात् । यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चशतपर्यन्तोऽसौ माषमूल्ये तदधिकमूल्ये वा यथायोग्यं व्यवस्थापनीयः । यत् पुनर्मानवं क्षुद्रद्रव्यापहारवचनं तन्मूल्याद्द्विगुणो दम इति, तदल्पप्रयोजनशरावादिविषयम् । तथापराधगुरुत्वादपि दण्डगुरुत्वम् । यथा, 'संधिं भित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः । तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत्' ॥ इत्येवं सर्वेषामानन्त्यात्प्रति द्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरुलघुभावः कल्पनीयः । पथिकादीनां पुनरल्पापराधे न दण्डः । यथाह मनुः (८।३४१)—'द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति' ॥ तथा—'चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्गृहीत(२)व्यो मुष्टिरेकः पथि स्थितैः ॥ तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः' ॥ इति ॥ २७५ ॥

( मिता० ) अचौरस्यापि चौरोपकारिणो दण्डमाह—

भक्तेति । भक्तमशनम् । अवकाशो निवासस्थानम् । अग्निश्चौरस्य शीतापनोदाद्यर्थं । उदकं तृषितस्य । मन्त्रश्चौर्यप्रकारोपदेशः । उपकरणं चौर्यसाधनम् । व्ययः अपहारार्थं देशान्तरं गच्छतः पाथेयम् । एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि यः प्रयच्छति तस्योत्तमसाहसो दण्डः । चौरोपेक्षिणामपि दोषः—'शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः' । इति नारदस्मरणात् ॥ २७६ ॥

(१) मत्स्यानामौषधस्य च । सर्वेषामल्पमूल्यानां घ । (२) गृहीतव्यो मुष्टिरेको घ ।

( मिता० ) किञ्च—

शस्त्रेति। परगात्रेषु शस्त्रस्यावपातने दासीब्राह्मणगर्भव्यतिरेकेण गर्भस्य पातने चोत्तमो दमः दण्डः। दासीगर्भनिपातने तु दासीगर्भविनाशकृदित्यादिना शतदण्डोऽभिहितः। ब्राह्मणगर्भविनाशे तु 'हत्वा गर्भमविज्ञातम्' इत्यत्र ब्रह्महत्यातिदेशं (१)वक्ष्यते। पुरुषस्य स्त्रियाश्च प्रमापणे शीलवृत्ताद्यपेक्षयोत्तमो वाधमो वा दण्डो व्यवस्थितो वेदितव्यः॥ २७७॥

( मिता० ) अपि च—

विप्रदुष्टामिति। विशेषेण प्रदुष्टा विप्रदुष्टा भ्रूणघ्नी स्वगर्भपातिनी च या च पुरुषस्य हन्त्री सेतूनां भेत्त्री च एता गर्भरहिताः स्त्रीगले शिलां बद्ध्वा अप्सु प्रवेशयेत् यथा न प्लवन्ति॥ २७८॥

( मिता० ) किञ्च—

विषाग्निदामिति। अगर्भिणीमित्यनुवर्तते। या च परवधार्थमन्नपानादिषु विषं ददाति क्षिपति। या च दाहार्थं ग्रामादिष्वग्निं ददाति। तथा या च निजपतिगुर्वपत्यानि मारयति तां विच्छिन्नकर्णकरनासौष्ठीं कृत्वा अदान्तैर्दुष्टबलीवर्दैः प्रवाह्य मारयेत्। स्तेयप्रकरणे यदेतत्साहिकस्य दण्डविधानं तत्प्रासङ्गिकमिति मन्तव्यम्॥ २७९॥

( वी० मि० ) 'घातितेऽपहृत' इत्यत्र दृष्टान्ततया घातनं प्रागभिहितं, तत्र कथं घातकोऽयमिति निर्णयमिति प्रसङ्गादाकांक्षितमुत्तरयति—

अविज्ञातहतस्याशु कलहं सुतबान्धवाः॥
प्रष्टव्या योषितश्चाऽस्य परपुंसि रताः पृथक्॥ २८०॥
स्त्रीद्रव्यवृत्तिकामो वा केन वाऽयं गतः सह।
तत्प्रदेश(२)समासन्नं पृच्छेद्वापि जनं शनैः॥ २८१॥

अनेनाऽयं हत इत्येवं न ज्ञातो यो हतस्तस्य सुतबान्धवाः केन सममस्य कलहो जात इति चौरापसरणशङ्कया आशु शीघ्रमेव प्रष्टव्याः। अस्य योषितः पत्नीभगिन्यादयः कस्मिन् परपुंसि रता इति परस्परसङ्कोचेनाऽनभिधाननिरासार्थं पृथक् प्रत्येकं प्रष्टव्याः। स्त्री-

(१) वक्ष्यति ख—ग.। (२) मृत्युदेशसमासन्नं—इति मु० पु० पाठः।

कामो द्रव्यकामो वृत्तिकामो वा केन सहाऽयं गत इति ,वा सुतबान्धवाः प्रष्टव्याः । सुतबन्धवादीनामभावे मरणदेशनिकटवर्तिनं गोपाऽऽटविकादिकं जनं शनैर्विश्वासजननपूर्वकं पृच्छेत् । चकारेणाऽयं कस्य भार्यायां रत इति प्रष्टव्यं समुच्चिनोति । अपिकारेण प्रश्नं विनापि विरोधचिन्हमनुसन्दध्यादिति समुच्चीयते ॥ २८०—२८१ ॥

( मिता० ) अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह—

अविज्ञातेति । (१)अविज्ञातहतस्याविज्ञातपुरुषेण घातितस्य सम्बन्धिनः सुताः प्रत्यासन्नबान्धवाश्च केनास्य कलहो जात इति कलहमाशु प्रष्टव्याः । तथा मृतस्य सम्बन्धिन्यो योषितो याश्च परपुंसि रता व्यभिचारिण्यस्ता अपि प्रष्टव्याः ॥ २८० ॥

( मिता० ) कथं प्रष्टव्या इत्यत आह—

स्त्रीद्रव्येति । किमयं स्त्रीकामो द्रव्यकामो वृत्तिकामो वा तथा कस्यां किंसम्बन्धिन्यां वा स्त्रियामस्य रतिरासीत्, कस्मिन् वा द्रव्ये प्रीतिः, कुतो वा वृत्तिकामः, केन वा सह देशान्तरं गत इति नानाप्रकारं व्यभिचारिण्यो योषितः पृथक्पृथक् विश्वास्य प्रष्टव्याः । तथा मरणदेशनिकटवर्तिनो गोपाऽऽटविकाद्या ये जनास्तेऽपि विश्वासपूर्वकं प्रष्टव्याः । एवं नानाप्रकारैः प्रश्नैर्हन्तारं निश्चित्य तदुचितो दण्डो विधातव्यः ॥ २८१ ॥

( वी० मि० ), अथ स्तेयमरणदण्डप्रसङ्गेन तत्तुल्यापराधेऽन्यत्रापि दण्डमाह—

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ॥
राजपत्न्यभिगामी ,च दग्धव्यास्तु कटाग्निना ॥ २८२ ॥

क्षेत्रादीनां षण्णामन्यतमस्य दाहकर्तारो राजपत्नीसम्भोगकर्तारश्च वीरणैश्च वेष्टयित्वा तत्सम्बन्ध्याग्निना दग्धव्याः । चकारेण—

प्राकारस्य च भेत्तारं परिखानां च पूरकम् ।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रमापयेत् ॥

इति मनूक्तसमुच्चयः । तुशब्देन प्रकारान्तरेण तद्धननं व्यवच्छि-

(१) अविज्ञातपुरुषेण ख. ।

नास्ति । कात्यायनः—

मित्रप्राप्त्यर्थलोभैर्वा राजलोकाहितैषिणा ।
न मोक्तव्याः साहसिका सर्वभूतभयावहाः ॥
लोभद्भयाद्वा यो राजा न हन्यात्पापकारिणः ।
तस्य प्रोज्झ्यते राष्ट्रं राज्याच्च परिहीयते ॥

नारदः—

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वध्या XX ब्राह्मणस्य न वध ब्राह्मणोऽर्हति ॥
शिरसो मुण्डनं तत्र दण्डो निर्वासनं पुरात् ।
ललाटे चाऽभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

यमः—

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बद्धा राजा भक्तं प्रदापयेत् ॥
अथवा बन्धनं रज्वा कर्म वा कारयेन्नृपः ।
मासार्धमासं कुर्वीत कार्यं विज्ञाय तत्त्वतः ॥
यथापराधं विप्रं तु विकर्माण्यपि कारयेत् ।

दण्डान्तराणि विस्तरभयादुपेक्ष्यन्ते ॥ २८२ ॥

इति श्रीमत० याज्ञवल्क्यव्याख्याने स्तेयप्रकरणम् ।

---

( मिता० ) किञ्च—

क्षेत्रेति । क्षेत्रं पक्वफलसस्योपेतम् । वेश्म गृहम् । वनमटवीं क्रीडावनं वा । ग्रामम् । विवीतमुक्तलक्षणम् । खलं वा ये दहन्ति ये च राजपत्नीमभिगच्छन्ति तान् सर्वान् कटैर्वीरणमयैर्वेष्टयित्वा दहेत् । क्षेत्रादेर्दाहकानां मारणदण्डप्रसङ्गाद्दण्डविधानम् ॥ २८२ ॥

इति स्तेयप्रकरणम् ।

---

( वी० मि० ) अथ राजपत्न्यभिगमप्रसङ्गेन—

त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् ।
अदेशकाले सम्भाषा निर्जने च परस्त्रिया ॥
प्रलोभनं चान्नपानैर्मध्यमं समुदाहृतम् ।
सहासनं विविक्ते तु परस्परमुपाश्रयः ॥

केशाकेशिग्रहश्चैव सम्यक् सङ्ग्रहणं स्मृतम् ।

इति व्यासेन त्रिधा विभक्तं स्त्रीसङ्ग्रहणाख्यं विवादपदमुपक्रमते । तत्रादौ सङ्ग्रहणस्य मिथुनीभावस्वरूपज्ञापकमाह—

पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ॥
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥ २८३ ॥
नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ॥
अदेशकालसम्भाषं सहैकस्थानमेव च ॥ २८४ ॥

केशाकेशि परस्परकेशग्रहणनीत्याद्याकर्षणम्, अदेशकाले निर्जननिशीथादौ सम्भाषा सहावस्थानं च यथा स्यात्तथा परस्त्रिया सङ्ग्रहणे मिथुनीभावो पुरुषो ग्राह्य, तन्मैथुनकर्तृत्वेन निश्चेय. । सद्य एव कामाज्जातैर्नखक्षतादिभिश्चिह्नैश्च ग्राह्य । द्वयो स्त्रीपुंसयोस्तथाप्रतिपत्तौ परस्परमैथुनभावयोरित्येव सम्प्रतिपत्तौ च ग्राह्यः । नीवी परिधानग्रन्थिः, स्तनप्रावरणं बन्धनांशुकं, सक्थिनितम्बौ, केशाश्च, एषामवमर्शनं यथा स्यात् । चकारेण गन्धमाल्यप्रेषणादिसमुच्चय. । एवकारेणाऽन्यथासिद्धिशङ्कया उक्तस्थलेषु व्यवच्छेदः ॥ २८३-२८४ ॥

( मिता० ) स्त्रीसंग्रहणाख्यं विवादपदं व्याख्यायते । प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं व्यासेन विवृतम्—'त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् । अदेश(१)कालसम्भाषा निर्जने च परस्त्रिया ॥ कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ॥ प्रलोभनं चान्नपानैर्मध्यमं (२)साहसं स्मृतम् । सहासनं विविक्तेषु परस्प(३)रमुपाश्रयः ॥ केशाकेशिग्रहश्चैव सम्यक् सङ्ग्रहणं स्मृतम्' ॥ स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम् ॥

संग्रहणज्ञानपूर्वकत्वात्तत्कर्तुर्दण्डविधानस्य तज्ज्ञानोपायं तावदाह—

पुमानिति । सङ्ग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्य. । परस्परं केशग्रहणपूर्विका क्रीडा केशाकेशि । 'तत्र तेनेदमिति सरूपे' इति बहुव्रीहौ सति 'इच् कर्मव्यतिहारे' इति समासान्त इच्प्रत्ययः । अव्ययत्वाच्च लुप्ततृतीया विभक्ति । तत·

---

(१) भाषाभिर्निर्जने घ । (२) समुदाहृतम् घ । (३) मपाश्रय घ ।

अयमर्थः । परभार्यया सह केशाकेशिक्रीडनेनाभिनवैः करुहदशनादिकृतव्रणैः रागकृतैर्लिङ्गैर्द्वयोः सम्प्रतिपत्त्या वा ज्ञात्वा सङ्ग्रहणे प्रवृत्तो ग्रहीतव्यः । परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदासार्थम् ॥२८३॥

( मिता० ) किञ्च—

नीवीति । यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्धरुहादिस्पर्शनं साभिलाष इवाचरति । तथा अदेशे निर्जने जनताकीर्णे वाऽन्धकाराकुले अकाले संलापनं करोति । परभार्यया वा सहैकमञ्चकादौ रिरंसयेवावतिष्ठते यः सोऽपि सङ्ग्रहणे प्रवृत्तो ग्राह्यः । एतच्चाशङ्क्यमानदोषपुरुषविषयम् । इतरस्य तु न दोषः । यथाह मनुः ( ८।३५५ )—'यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् । न दोषं प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमः' ॥ इति । यः परस्त्रिया स्पृष्टः क्षमतेऽसावपि ग्राह्य इति तेनैवोक्तम् ( ८।३५८ )—'स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा । परस्परस्यानुमते सर्वं सङ्ग्रहणं स्मृतम्' ॥ इति । यश्च मयेयं विदग्धाऽसकृद्रमितेति श्लाघया भुजङ्गजनसमक्षं ख्यापयत्यसावपि ग्राह्य इति तेनैवोक्तम् । 'दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् । पूर्वं मयेयं भुक्तेति तच्च सङ्ग्रहणं स्मृतम्' ॥ इति ॥ २८४ ॥

( वी० मि० ) निवारितयोः स्त्रीपुंसयोः संलापादिकरणे दण्डमाह—

स्त्री निषेधे शतं दद्याद्द्विशतं तु दमं पुमान् ॥
निषिद्धयो(१)स्तयोर्दण्डो यथा सङ्ग्रहणे तथा ॥ २८५ ॥

आलापादौ पित्रादिभिः प्रतिषिद्धा स्त्र्येव चेत्पुरुषेणाऽऽलापादिकं करोति तदा पणानां शतं, प्रतिषिद्धः पुरुष एव चेत्तदा पणानां द्विशतं दमं दद्यात् । स्त्रीपुरुषौ द्वावपि चेत्प्रतिषिद्धौ परस्परमालापादिकं कुरुतस्तदा सङ्ग्रहणे यथा उत्तमसाहसो दण्डस्तथा तयोर्दण्ड इत्यर्थः । तुशब्देन द्वितीयस्य निषेधो व्यवच्छिद्यते । इदं च चारणादिभार्याव्यतिरिक्तपरम् ।

नैष चारणदारेषु विधिर्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥

इति मनुवचनात् ॥ २८५ ॥

---

( १ ) प्रतिषेधे तयो-इति मु० पु० पाठः ।

( मिता० ) प्रतिषिद्धयोर्द्वयोः स्त्रीपुंसयोः पुनः संलापादिकरणे दण्डमाह—

स्त्रीति । प्रतिषिध्यते इति प्रतिषेधः पतिपित्रादिभिर्येन सह सम्भाषणादिकं निषिद्धं तत्र प्रवर्तमाना स्त्री शतपणं दण्डं दद्यात् । पुरुषः पुनरेव निषिद्धं प्रवर्तमानो द्विशतं दद्यात् । द्वयोस्तु स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्तमानयोः संग्रहणे सम्भोगे वर्णानुसारेण यो दण्डो वक्ष्यते स एव विज्ञेयः । एतच्च चारणादिभार्याव्यतिरेकेण । ( ८।३६२)—'नैष चारणदारेषु विधिर्नात्मोपजीविषु । सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च' ॥ इति मनुस्मरणात् ॥ २८५ ॥

( वी० मि० ) वर्णक्रमेण सङ्ग्रहणे दण्डमाह—

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ॥
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥ २८६ ॥
अलङ्कृतां हरन्कन्यामुत्तमं ह्यन्यथाऽधमम् ॥
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥ २८७ ॥
सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ॥
दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ २८८ ॥
शतं स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने ॥
पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम् २८९॥
अवरुद्धासु दासीषु भुजिष्यासु तथैव च ॥
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् ॥ २९० ॥
प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः ॥
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् ॥ २९१ ॥
(१)गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत् ॥
अगृहीते समं दाप्यः पुमानप्येवमेव हि ॥ २९२ ॥
अयोनौ गच्छतो योषां पुरुषं वापि मेहतः ॥
चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९३ ॥

(१) इदं पद्यमेतद्व्याख्यानं च नोपलभ्यते क० ख० पुस्तकयोः । अत केवलं मूलं मिताक्षरानुरोधेन स्थापितमत्र ।

अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् ॥
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥ २९४ ॥

अकामसवर्णगुप्तपरदारागमने उत्तमसाहसो दण्डः । पितृष्व- स्रादिगमने तु वध एवेति तृतीयाध्याये वक्ष्यति । तदाह मनुः—

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥

अथानुलोम्येनाऽसवर्णस्त्रीगमने तु मध्यमसाहसो दण्डः । अत्र विशेषमाह मनुः—

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियम् ॥
सहस्रं ब्राह्मणो दाप्यो गृहं गुप्तं ततो व्रजन् ।
शूद्राणां क्षत्रियविशोः साहस्रं वै भवेद्दमः ॥

प्रातिलोम्य इति शूद्रादीनां पुंसां वैश्यास्त्रीगमने वधः । नार्याश्च हीनवर्णायाः कर्णनासादिकर्तनं दण्ड इत्यर्थः । एतच्च गुप्ताविषयम् । तदाह मनुः—

उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥

सवर्णमानुलोम्येन वा इच्छया व्रजन्त्या नार्यास्तु दमः कल्पनीयः । बलात्पुरुषेणोपभुक्तायास्तु न दण्डः ।

बलात्सन्दूषयेद्यस्तु परभार्यां कथञ्चन ।
वधो दण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः ॥

इति मत्स्यपुराणवचनात् । मनुः—

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥

शूद्रस्येत्यनुवृत्तौ गौतमः—'आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं, गुप्ता चेद्वधोऽधिकः' । वधोपायमाह बौधायनः—'शूद्रं कटाग्निना दहेत्' । शातातः—'श्रेयसः शयनशायिनं राजा वध्वा द्व-

भिः खादयेत्, काष्ठैश्चैनं दाहयेत्' । यम—

शूपलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्य प्रयाणं गर्दभेन च ॥

बृहस्पति —

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्याऽर्धदमः स्मृतः ॥
छिन्ननासौष्ठकर्णी तां परिभ्राम्याशु भक्षयेत् ।

अलङ्कृतामिति विवाहार्थमलङ्कृतां कन्यां सवर्णास्तु मध्ये सवर्णामिति यावत् सम्भोगार्थमकामां हरन्नुत्तमसाहसम्, अन्यथा विवाहार्थमलङ्कारस्याभावे सवर्णामकामां कन्यां हरन्नधम प्रथमसाहसं दण्डं दद्यात् । प्रतिलोम्येऽपकृष्टेनोत्कृष्टवर्णाकन्याहरणे भर्तुर्वधः स्मृतः । सकामासु हीनवर्णासु कन्यासु हृतासु हर्तुः दापा दण्डप्रयोजको न भवति । अन्यथा तु तस्या अकामत्वे हर्तुर्दमः । नारदः—

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः ।
किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

अकामायां तु हृतायां शङ्खः—'समां शुल्कमाभरणं द्विगुणं च स्त्रीधनं दत्त्वा प्रतिपद्येत' । दूषणे त्विति । अकामायाः सवर्णाया हीनवर्णाया वा कन्याया योन्यावङ्गुलिप्रवेशनेन दूषणे तु दूषयितुः करच्छेदः कार्यः । उत्तमायामुत्कृष्टवर्णायामकामायां दूषणे कृते वधः तथा स्मृत इत्यर्थः ।

अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः ।
तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट् शतम् ॥

इति मनूक्तमत्र विकल्पेनान्वेति । षट्शतस्याऽधिकत्वेऽपि अङ्गुलीद्वयकर्तनाभावे साम्यात् । यत्र मनु—

सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥
कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः ।
शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाऽऽप्नुयाद्दश ॥

या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति ।
अङ्गुल्योरेव च च्छेदं खरेणोद्वहनं तथा ॥

प्रकुर्यादङ्गुलिप्रक्षेपेण दूषयेत् । स्त्री युवती । दूषणान्तरेऽपि दण्डमाह 'शतं स्त्रीदूषणे' इत्यादि । अत्र स्त्रीपदेन प्रकरणात्कन्योच्यते, तस्याश्च वराभिलेनाऽपस्मारादिदोषस्य विद्यमानस्य केनापि दूषणे स शतं पणान् दण्डं दद्यात् । अविद्यमानमेवापस्मारादिकं यदि शंसति तदा तु द्वे पणानां शते दण्डं दद्यात् । वरस्य तु मिथ्यादोषाऽभिधायित्वे 'दूषयंस्तु मृषा शत'मिति प्रथमाध्याये दण्ड उक्तः । यथार्थे दोषाभिधायित्वे तु वरस्य न दोषः । पशूनिति गोव्यतिरिक्तपशून् छागादिकानित्यर्थः । हीनां स्त्रीं शूद्रां गां वा गच्छन्मध्यमं साहसं दाप्यः । चकारेण गुप्तक्षत्रियवैश्ययोर्गमने उत्तमसाहसं दाप्य इति पूर्वोदाहृतं मनुवाक्यसिद्धं समुच्चीयते । हीनां स्त्रीमित्युक्तमपवदति अवरुद्धास्वित्यादि । दासी पुरुषविशेषेण विवाहा परिगृहीता च त्रिविधा । एकेन पुरुषेण स्वभोगार्थं पुरुषान्तरभोगतो निरुद्धा भुजिष्या वेश्या चेति । भुजिष्या च स्वमित्रपुरुषान्तरोपभोगविषयः स्वपरिचर्याकारिणी । तासु त्रिविधासु आद्यचरमकथितासु नियतपुरुषेण गम्यास्वपि परः पुमान् गच्छन् पञ्चाशत्पणमितं दमं, दास्याः वेश्यायाः प्रसह्य बलात्कारेणाऽभिगमे च दशपणमितो दण्डः । अकामा वेश्या यदि नैरन्तर्येण बहूनां पुरुषाणां भोगविषयः तदा प्रत्येकं चतुर्विंशतिपणमितो दण्डः । एवं च सकामाया वेश्याया एकेन बहुभिर्वाऽभिगमे दण्डाभावः । अवरुद्धाभुजिष्ययोरपि नियतपुरुषस्याभिगमे दण्डाभावः, गम्यास्वित्यभिधानादिति मिताक्षरास्वरसः । मिश्रास्तु—

वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कं पणं स्मृतम् ।

इति नारदेन शुल्कतुल्यदण्डो मध्यमसाहसरूपो ब्राह्मणस्योक्त इति न क्वापि दण्डाभाव इत्याहुः । तेषां चायमाशयः—

बहुभिर्भुक्तपूर्वा या तां गच्छेयुर्नराधमाः ।
तस्यां वेश्यावदिच्छन्ति दण्डनं न तु दारवत् ॥

इति व्यासेन नराधमत्वेनोपन्यासात् सामान्यत एव भुक्तपूर्वागमने दण्ड उक्तः । 'स्वदारनिरतश्चैवे'ति ग्रन्थकृता प्रथमाध्याये स्वदारव्यतिरिक्तगमनमर्थतः प्रतिषिद्धमिति गम्यास्वित्यनेन नान्या-

पेक्षाल्पदण्डप्रयोजकगमनयोग्यास्वित्येव विवक्षणीयं, न च निषिद्धेऽपि वेश्यागमने मानाभावाद्दण्डाभावः ।

अगम्यागामिनः शास्तिर्दण्डो राज्ञः प्रकीर्तितः ।
प्रायश्चित्तविधानं तु पापराशेर्विशोधनम् ॥

इति प्रायश्चित्तदण्ड उक्तो नारदेन, ग्रन्थकृता तु दशपणादिरिति विरोध इति वाच्यं, प्रकृतदण्डस्य शूद्रपरत्वात् । एवं च पञ्चाशत्पणो यत्र शूद्रस्योक्तो ग्रन्थकृता तत्र ब्राह्मणस्य पञ्चशतपरिमितो दण्डः, क्षत्रियस्य प्रथमसाहसो, वैश्यस्य तदर्द्धमित्यूह्यम् । एवं दशपणस्थलेऽपि त्रैगुण्यं वैश्यादेः कल्पनीयमित्याभाति । अयोनाविति । मुखकट्यादौ योषां स्त्रियं गच्छत पुरुषं वा मेहतो मुखकट्यादौ मेहतः प्रवेशनेनाऽभिगच्छतः चतुर्विंशतिपणमितो दण्डः । प्रव्रजितायास्तपस्या अभिगमे तु तद्वन्नुध तथा चतुर्विंशतिपणमितो दण्डः । अधिकारेण गन्तव्यास्वे पूर्वदण्डाधिक्यं समुच्चिनोति । अन्त्या चाण्डली तदभिगमे तु त्रैवर्णिकं कुबन्धेन कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रात् प्रवासयेत् । शूद्रस्त्वन्त्याभिगमे तथा भगाद्याकारेणाऽङ्क्य एव, न तु प्रवास्यः स्यात् । अन्त्यस्य चाण्डालस्यार्यागमे उत्कृष्टजातिस्त्र्यभिगमे वधः स्यात् ॥ २८६—२९४ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने स्त्रीसङ्ग्रहणप्रकरणम् ।

---

( मिता० ) तदिदानीं संग्रहणे दण्डमाह—

सजाताविति । चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरदाराभिगमने साशीतिपणसहस्रं दण्डनीयः । यदा त्वानुलोम्येन हीनवर्णां स्त्रियमगुप्तामभिगच्छति तदा मध्यमसाहसं दण्डनीयः । यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा मानवं विशेष उक्तः ( ८।३७८–३८३ )—'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः' । तथा—'सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् । शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दमः' ॥ इति । एतच्च गुरुसखिभार्यादिव्यतिरेकेण द्रष्टव्यम् । 'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।

पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा। दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥ आसामन्यतमां गच्छन्गुरुतल्पग उच्यते। शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते'॥ इति नारदस्मरणात्। प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः। एतच्च गुप्ताविषयम्। अन्यत्र तु धनदण्डः। (८।३७६।३७७)—'उभावपि हि तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना। ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ। वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम्'॥ इति मनुस्मरणात्। शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतो लिङ्गच्छेदनसर्वस्वापहारौ। गुप्तां तु व्रजतस्तस्य वधसर्वस्वापहाराविति तेनैवोक्तम्। ( मनुः ८।३७४ )—'शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। (१)अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते'॥ इति। नार्याः पुनर्हीनवर्णं व्रजन्त्याः कर्णयोरादिग्रहणान्नासादेश्च कर्तनम्। आनुलोम्येन वा सवर्णं वा व्रजन्त्या दण्डः कल्प्यः। अयं च वधाद्युपदेशो राज्ञ एव तस्यैव पालनाधिकारान्न द्विजातिमात्रस्य। तस्य 'ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीत' इति शस्त्रग्रहणनिषेधात्। यदा तु राज्ञा निवेदने कालविलम्बनेन कार्यातिपाताशङ्का तदा स्वयमेव जारादीन् हन्यात्। (मनुः ८।३४८)—'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते'। तथा (मनुः ८।३।३१)—'नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति'॥ इति शस्त्रग्रहणाभ्यनुज्ञानाच्च। तथा क्षत्रियवैश्ययोरन्योन्यस्त्र्यभिगमने यथाक्रमं सहस्रपञ्चशतपणात्मकौ दण्डौ वेदितव्यौ। तदाह मनुः (८।३।८२ )—'वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। या ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः'॥ इति॥ २८६॥

( मिता० ) पारदार्यप्रसङ्गात्कन्यायामपि दण्डमाह—

अलङ्कृतामिति। विवाहाभिमुखीभूतामलंकृतां सवर्णां कन्यामपहरन्नुत्तमसाहसं दण्डनीयः। तदनभिमुखीं सवर्णां हरन्प्रथमं साहसम्। उत्कृष्टवर्णजां कन्यामपहरतः पुनः क्षत्रियादेर्वध एव। दण्डविधानाच्चापहर्तृसकाशादाच्छिद्यान्यस्मै देयेति गम्यते॥ २८७॥

(१) अगुप्तेकाङ्गसर्वस्वैः घ.।

( मिता० ) आनुलोम्यापहरणे दण्डमाह—

सकामास्विति । यदि सानुरागां हीनवर्णो कन्यामपहरति तदा दोषाभावाद्म दण्डः । अन्यथा त्वनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः ॥

( मिता० ) कन्यादूषणे दण्डमाह—

दूषण इति । अनुलोमास्वित्यनुवर्तते । यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य करच्छेत्तव्यः । यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन्दूषयति तदा मनूक्तषट्शतसहितोऽङ्गुलिच्छेदः । ( मनुः ८।३६७)—'अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः । तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम्'॥ इति । यदा पुनः सानुरागां पूर्ववद् दूषयति तदापि तेनैव विशेष उक्तः ( मनुः ८।३६८)—'सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमर्हति । द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये' ॥ इति । यदा तु कन्यैव कन्यां दूषयति विदग्धा वा तत्रापि विशेषस्तेनैवोक्तः ( मनुः ८।३६९-७०)—'कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः' । 'या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति । अङ्गुल्योरेव वा छेदं खरेणोद्वहनं तथा' ॥ इति । कन्यां कुर्यादिति कन्यां योनिक्षतवतीं कुर्यादित्यर्थः । यदा पुनरुत्कृष्टजातीयां कन्यामविशे(१)षात्सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्वध एव । (८।३६६)—'उत्तमां सेवमानस्तु जघन्यो वधमर्हति' । इति मनुस्मरणात् । यदा सवर्णो सकामामभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्यात् यदीच्छति । पितरि च शुल्कमनिच्छति दण्डरूपेण तदेव राज्ञे दद्यात् । सवर्णामकामां तु गच्छतो वध एव । यथाह मनुः ( ८।३६६)—'शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि' । ( ८।३६४ )—'योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति । सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः' ॥ इति ॥ २८८ ॥

( मिता० ) किञ्च—

शतमिति । स्त्रीशब्देनात्र प्रकृतत्वात्कन्याभिधीयते । तस्या यदि कश्चिद्विद्यमानानेवापस्माररराजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान् प्रकाशयेयमकन्येति दूषयत्यसौ शतं दाप्यः । मिथ्याभि-

( १ ) विशेषात्सानुरागामकामां च ।

शंसने तु पुनरविद्यमानदोषाविष्कारेण दूषणे द्वे शते दापनीयः। गोव्यतिरिक्तपशुगमने तु शतं दाप्यः। यः पुनर्हीनां स्त्रियमन्त्यावसायिनीमविशेषात्सकामामकामां वा गां चाभिगच्छत्यसौ मध्यमसाहसं दण्डनीयः॥ २८९॥

( मिता० ) साधारणस्त्रीगमने दण्डमाह—

अवरुद्धास्विति। गच्छन्नित्यनुवर्तते। उक्तलक्षणा वर्णस्त्रियो दास्यस्ता एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धा अवरुद्धाः। पुरुषनियतपरिग्रहाः भुजिष्याः। यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुस्तदा तासु तथा। चशब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां च ग्रहणम्। तासु च सर्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणान्दण्डनीयः। परपरिगृहीतत्वेन तासां परदारतुल्यत्वात्। एतच्च स्पष्टमुक्तं नारदेन—'स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥ आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्। गम्यास्वपि हि नोपेया(१)यत्ताः परपरिग्रहाः'॥ इति। निष्कासिनी स्वाम्यनवरुद्धा दासी। ननु च स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम्। न हि जातितः शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते। तथा हि—स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव। 'स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्। वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः'॥ इति मनुस्मरणात्। न च वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते। ( मनुः५।१५४-१५७)—'दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। परिचर्यः स्त्रिया साध्व्या सततं देववत्पतिः। कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु'॥ इति निषेधस्मरणात्। नापि कन्यावस्थायाः साधारणत्वं, पित्रादिपारिरक्षितायाः कन्याया एव दानोपदेशात्। दात्राभावेऽपि तथाविधाया एव स्वयंवरोपदेशात्। न च दासीभावात्स्वधर्माधिकारच्युतिः। पारतन्त्र्यं हि दास्यं न स्वधर्मपरित्यागः। नापि वेश्या साधारणी वर्णानुलोमजव्यतिरेकेण गम्यजात्यन्तरासम्भवात्। तदन्तःपातित्वं च पूर्ववदेवागम्यत्वम्। प्रति-

( १ ) यतस्ताः सपरिग्रहाः घ.।

लोमजत्वे तु तासां नितरामगम्यत्वम् । अतः पुरुषान्तरोपभोगे तासां निन्दितकर्माभ्यासेन पातित्यात् । पतितसंसर्गस्य निषिद्धत्वाच्च न सकलपुरुषोपभोगयोग्यत्वम् । सत्यमेवम् । किं त्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदण्डभयादिदृष्टदोषाभावाद्गम्यत्वमात्रोक्तिः । दण्डाभावश्चावरुद्धासु दासीष्विति नियतपुरुषपरिग्रहोपाधितो दण्डविधानात्तदुपाधिरहिता(१)स्वर्थादवगम्यते । स्वैरिण्यादीनां पुनर्दण्डाभावो विधानाभावात् । 'कन्यां भजन्ती(२)मुत्कृष्टं न किञ्चिदपि दापयेत्' । इति लिङ्गनिर्देशनाच्चावगम्यते । प्रायश्चित्तं तु स्वधर्मस्खलननिमित्तं गम्यानां गन्तॄणां चाविशेषाद्भवत्येव । यत्पुनर्वेश्यानां जात्यन्तरासम्भवे न वर्णान्तःपातित्वमनुमानादुक्तम्—'वेश्या वर्णानुलोमाद्यन्तःपातिन्यो मनुष्यजात्याश्रयत्वात् ब्राह्मणादिवत्' इति, तन्न । कुण्डगोलकादिभिरनैकान्तिकत्वात् । अतो वेश्याख्या काचिज्जातिरस्त्यादिर्वैश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसम्भोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युप(३)गमनीयम् । न च निर्मूलेयं प्रसिद्धिः । स्मर्यते हि स्कन्दपुराणे—'पञ्चचूडा नाम काञ्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिः' इति । अतस्तासां नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमने नादृष्टदोषो नापि दण्डः । तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डस्तथाप्यदृष्टदोषोऽप्यस्त्येव । 'स्वदारनिरतः सदा' इति नियमात् । 'पशुवेश्याभिगमने प्राजापत्यं विधीयते' इति प्रायश्चित्तस्मरणाच्चेति निरवद्यम् ॥ २९० ॥

( मिता० ) 'अवरुद्धासु दासीषु' इत्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतस्तास्वभुजिष्यासु दण्डो नास्तीत्यर्थादुक्तं तदपवादमाह—

प्रसह्येति । पुरुषसम्भोगजीविकासु स्वैरिण्यादिषु शुल्कदानाविरहेण प्रसह्य बलात्कारेणाभिगच्छतो दशपणो दण्डः । यदि बहव एकां(४)मनिच्छन्तीमपि बलात्कारेणाभिगच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणपरिमितं दण्डं दण्डनीयाः । यदा पुनस्तदिच्छया भाटिं दत्त्वा पश्चादनिच्छन्तीमपि बलाद् व्रजन्ति तदा तेषामदोषः, यदि व्याध्याद्यभिभवस्तस्या न स्यात् । 'व्याधिता सश्रमा व्यग्रा राजकर्म-

(१) स्वर्थात्स्यते घ । (२) मुत्कृष्टं । (३) उपगमनीया घ । (४) मनभिलषन्तीं घ ।

परायणा। आमन्त्रिता चेन्नागच्छेददण्ड्या वडवा स्मृता' ॥ इति नारदवचनात् ॥ २९१ ॥

( मिता० ) गृहीतेति। यदा तु शुल्कं गृहीत्वा स्वस्थापि अर्थपतिं नेच्छति तदा द्विगुणं शुल्कं दद्यात्। तथा शुल्कं दत्त्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव। 'शुल्कं गृहीत्वा पण्यस्त्री नेच्छती द्विगुणं वहेत्। अनिच्छन् दत्तशुल्कोऽपि शुल्कहानिमवाप्नुयात्' ॥ इति तेनैवोक्तम्। तथान्योऽपि विशेषस्तेनैव दर्शितः— 'अप्रयच्छंस्तथा शुल्कमनुभूय पुमान्स्त्रियम्। आक्रमेण च सङ्गच्छन् (१)पाददन्तनखादिभिः ॥ अयोनौ वाभिगच्छेद्यो बहुभिर्वापि वासयेत्। शुल्कमष्टगुणं दाप्यो विनयं तावदेव तु। वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः' ॥ इति ॥ २९२ ॥

( मिता० ) किञ्च—

अयोनाविति। (२)यस्तु स्वयोषां मुखादावभिगच्छति पुरुषं वाभिमुखो मेहति तथा प्रव्रजितां वा गच्छत्यसौ चतुर्विंशतिपणान्दण्डनीयः ॥ २९३ ॥

( मिता० ) किञ्च—

अन्त्याभिगमन इति। अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान्प्रायश्चित्तानभिमुखान् 'सहस्रं त्वन्त्यजस्त्रियम्' इति मनुवचनात्पणसहस्रं दण्डयित्वा कुबन्धेन कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत्। प्रायश्चित्ताभिमुखस्य पुनर्दण्डनमेव। शूद्रः पुनश्चाण्डाल्यभिगमेऽन्त्य एव चाण्डाल एव भवति। अन्त्यजस्य पुनश्चाण्डालादेरुत्कृष्टजातिस्त्र्यभिगमे वध एव ॥ २९४ ॥

इति स्त्रीसङ्ग्रहणप्रकरणम्।

---

( वी०मि० ) विवाहादिविधिः स्त्रीणां पुंसां यत्र च कीर्त्यते।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥

इति नारदोक्तं विवादपदं विवाहप्रकरणेनैव गतार्थत्वादुपेक्ष्य

---

(१) घातदन्तनखा ख-घ.। (२) यः स्वेच्छया योषां घ.।

प्रकीर्णकाख्यं विवादपदं नारदेन—

प्रकीर्णकेषु विज्ञेया व्यवहारा नृपाश्रयाः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥
पुरप्रदानं भेदश्च प्रकृतीनां तथैव च ।
पाखण्डिनैगमश्रेणिगणधर्मविपर्ययाः ॥
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ॥
प्रतिग्रहविलोपश्च कोपश्चाश्रमिणामपि ॥
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके ॥

इति लक्षितमुपक्रमते सम्पूर्णप्रकरणेन—

ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ॥
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ २९५ ॥

राज्ञाज्ञप्तमर्थं स्वयमूनमधिकं वा कृत्वा यो लिखति तस्य, पारदारिकचौरं वा मुञ्चति यश्च तस्यापि दण्ड उत्तमसाहसः । आद्येनाऽपिकारेण विदद्धार्थशिष्टस्य, द्वितीयेन लेखनस्य समुच्चयः॥२९५॥

( मिता० ) व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यमप्यपरं विवादपदं मनुनारदाभ्यां विवृतम् । तत्र नारदः—'विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते । स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते' ॥ इति । मनुरप्याह (८।२)—'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे' ॥ इत्यादि । यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया (१)नृपसमक्षं व्यवहारो निषिद्धस्तथापि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ, इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्ममध्येऽस्य स्त्रीपुंसधर्मजातस्यापदेशः । एतच्च विवाहप्रकरण एव सप्रपञ्चं प्रतिपादितमिति योगीश्वरेण न पुनरत्रोक्तम् ।

साम्प्रतं प्रकीर्णकाख्यं व्यवहारपदं प्रस्तूयते । तल्लक्षणं च कथितं नारदेन—'(२)प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः । राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥ पुरप्रदानं संभे(३)दः प्रकृतीनां तथैव

(१) नृपसमीपं घ. । (२) र्णकेषु विज्ञेया । (३) भेदश्च घ. ।

च। पाखण्डिनैगमश्रेणीगणधर्मविपर्ययाः। पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः। प्रतिग्रहविलोपश्च कोपश्चाश्रमिणामपि ॥ वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा। न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके' ॥ इति। प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः। नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात्। एवं च वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णकमित्यर्थाल्लक्षितं भवति॥

तत्रापराधविशेषेण दण्डविशेषमाह—

ऊनमिति। राजदत्तभूमेर्निबन्धस्य वा परिमाणान्न्यूनत्वमाधिक्यं वा प्रकाशयन् राजशासनं योऽभिलिखति यश्च पारदारिकं चौरं वा गृहीत्वा राज्ञेऽनर्पयित्वा मुञ्चति तावुभावुत्तमसाहसं दण्डनीयौ ॥ २९५ ॥

अभक्ष्यैर्दूषयन् (१)विप्रं दण्डमुत्तमसाहसम् ॥
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्द्धिकम् ॥ २९६ ॥

(वी०मि०) अभक्ष्यैः पुरीषादिभिर्विप्रं खादयित्वा दूषयन्नुत्तमसाहसं, क्षत्रियं दूषयन् मध्यमसाहसं, वैश्यं दूषयन् प्रथमसाहसं शूद्रं दूषयन् प्रथमसाहसार्द्धमितं दण्ड्यः ॥ २९६ ॥

(मिता०) प्रसङ्गान्नृपाश्रयव्यतिरिक्तव्यवहारविषयमपि दण्डमाह—

अभक्ष्येणेति। मूत्रपुरीषादिना अभक्ष्येण भक्ष्यानर्हेण ब्राह्मणं दूष्य अन्नपानादिमिश्रणेन स्व(२)रूपेण वा दूषयित्वा खादयित्वोत्तमसाहसं दण्ड्यो भवति। क्षत्रियं पुनरेवं दूषयित्वा मध्यमम्। वैश्यं दूषयित्वा प्रथमम्। शूद्रं दूषयित्वा प्रथमसाहसस्यार्धं दण्ड्यो भवतीति सम्बन्धः। लशुनाद्यभक्ष्यदूषणे तु दोषतारतम्याद्दण्डतारतम्यमूहनीयम् ॥ २९६ ॥

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ॥
व्यङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥२९७॥

(वी०मि०)कूटैः कपटनिर्मितैः स्वर्णैः स्वर्णाभासैः कूटादिव्यवहारशीलः स्वर्णकारादिः विमांसस्य कुत्सितस्य श्वादिमांसस्य विक्रयशी-

---

(१) अभक्ष्येण द्विजं दूष्य—इति मु०पु० पाठः। (२) द्रव्यरूपेण घ.।

लः शौनिकादिः नासाकर्णकरैस्त्रिभिरङ्गैर्हीनः कर्तव्य उत्तमसाहसं च दाप्यः । आद्येन चकारेण ब्राह्मणस्य शरीरदण्डानर्हस्य निर्वासनादि समुच्चिनोति । द्वितीयेन मिलितस्य दण्डद्वयस्य कर्तव्यत्वमभिप्रैति । तुशब्देन—

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

इति देवब्राह्मणस्वर्णपरमन्यत्र व्यवच्छिनत्ति ॥ २९७ ॥

( मिता० ) किञ्च—

कूटेति । रसवेधाद्यापादितवर्णोत्कर्षैः कूटैः स्वर्णैर्व्यवहारशीलो यः स्वर्णकारादिः, यश्च विमांसस्य कुत्सितमांसस्य श्वादिसम्बन्धस्य विक्रयशीलः सौनिकादिः, चशब्दात्कूटरजतादिव्यवहारी च ते सर्वे प्रत्येकं नासाकर्णकरैस्त्रिभिरङ्गैर्हीनाः कार्याः । चशब्दा(१)ऽङ्गच्छेदेन समुच्चितमुत्तमसाहसं दण्डं दाप्याः । यत्पुनर्मनुनोक्तम् (९।२९२)—'सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ॥ प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः' ॥ इति, तदेतद्देवब्राह्मणराजस्वर्णविषयम् ॥ २९७ ॥

चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः ॥
काष्ठलोष्टेषुपाषाणबाहुयुग्यकृतस्तथा ॥ २९८ ॥
छिन्ननस्येन यानेन तथा भग्नयुगादिना ॥
पश्चाच्चैवाऽपसरता हिंसने स्वाम्यदोषभाक् ॥ २९९ ॥
शक्तो ह्यमोक्षयन् स्वामी शृङ्गिणो दंष्ट्रिण(२)स्तथा ॥
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ॥ ३०० ॥

( वी० मि० ) अपेहीति प्रकर्षेणोच्चैर्जल्पतः चतुष्पादेन हस्तिवृषादिना कृतो मारणादिरूपो दोषोऽपराधस्तत्स्वामिनो न भवति । तथाऽपेहीति प्रजल्पतः शकटस्थितैर्युग्यभिन्नैः सर्वैरेव व्यापार्यमाणैर्वा काष्ठादिभिः कृतो दोषो न भवति । छिन्ननासारज्जुना भग्नयुगकीलकादिमता वा शकटादियानेन पश्चात्पृष्ठतः चशब्दात्तिर्यक् चाऽपसरता च यानेन हिंसनेऽपि तत्स्वामी न दोषभाक् । हि यतः शक्तः

(१) शब्दादङ्गच्छेदेन च । (२) दंष्ट्रिणा शृङ्गिणा तथा–इति मु०पु० पाठः ।

सन् शृङ्गिणो गवादेर्दंष्ट्रिणो हस्त्यादेः हिंसनीयममोक्षयन्नेव प्रथमसाहसं नयेत् । तथा उच्चैर्विक्रुष्टे सत्यमोक्षयंस्तद्विगुणं दमं दद्यात् । युग्यं वाहनं, युगं युगकाष्ठम् । तथापदेन प्रथमेन तथोक्तच्छेदसङ्ग्रहः । द्वितीयेन तु सारार्थदोषं विना भग्नत्वमुक्तम् ।

यत्राऽपवर्त्तते युग्यं वैगुण्याद्योजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

इति मनुना सारथिदोषेण स्वामिनो दण्ड्यत्वाभिधानात् । अपसरतैवैत्येवकारेण न हननार्थप्रवृत्तिव्यवच्छेदः । तृतीयेन तथापदेन नखिनां भल्लुकादीनां सङ्ग्रहः ॥ २९८–३०० ॥

( मिता० ) विषयविशेषे दण्डाभावमाह—

चतुष्पादकृत इति । चतुष्पादैर्गोगजादिभिः कृतो यो दोषो मनुष्यमारणादिरूपोऽसौ गवादिस्वामिनो न भवत्यपसरेति प्रकर्षेणोच्चैर्भाषमाणस्य । तथा लकुटलोष्ठसायकपाषाणोत्क्षेपणेन बाहुना युग्येन च युगं वहताश्वादिना कृतो यः पूर्वोक्तो दोषः सोऽपि काष्ठादीन्प्रास्यतो न भवत्यपसरेति प्रजल्पतः । काष्ठाद्युत्क्षेपणेन हिंसायां दोषाभावकथनं दण्डाभावप्रतिपादनार्थम् । प्रायश्चित्तं पुनरबुद्धिपूर्वकरणनिमित्तमस्त्येव । काष्ठादिग्रहणं च शक्तितोमरादेरुपलक्षणार्थम् ॥ २९८ ॥

( मिता० ) किञ्च—

छिन्ननस्येनेति । नसि भवा रज्जुर्नस्या छिन्ना शकटादियुक्तबलीवर्दनस्या रज्जुर्यस्मिन् याने तत् छिन्ननस्यं शकटादि तेन । तथा भग्नयुगेन, आदिग्रहणाद्भग्नाक्षचक्रादिना च यानेन पश्चात्पृष्ठतोऽपसरता चशब्दात्तिर्यग(१)पगच्छता प्रतिमुखं चागच्छता च मनुष्यादिहिंसने स्वामी प्रा(२)जको वा दोषभाङ् न भवति । अतत्प्रयत्नजनितत्वाद्धिंसनस्य । तथा च मनुः ( ९।२९१।२९२ )—'छिन्ननस्ये भग्नयुगे तिर्यक्प्रतिमुखागते । अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥ छेदने चैव मन्त्राणां योक्त्रृरश्म्योस्तथैव च । (३)आक्रन्दे सत्यपेहीति न दण्डं मनुरब्रवीत्' ॥ इति ॥ २९९ ॥

( मिता० ) उपेक्षायां स्वामिनो दण्डमाह—

शक्त इति । अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः शृङ्गिभिर्ग-

( १ ) तिर्यगपसरता घ. । ( २ ) प्राजकः सारथिः । ( ३ ) आक्रन्दनेप्यपेहीति घ. ।

वादिभिर्बध्यमानं समर्थोऽपि तत्स्वामी यद्यमोक्षयन्नुपेक्षते तदा अकुशलप्राजकनियोजननिमित्तं प्रथमसाहसं दण्डं दद्यात् । यदा तु मारितोऽहमिति विक्रुष्टेऽपि न मोक्षयति तदा द्विगुणम् । यदा पुनः प्रवीणमेव प्राजकं प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी । यथाह मनुः (८।२९४)—'प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति' । इति । प्राजको यन्ता । आप्तोऽभियुक्तः । प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः । यथाह मनुः (८।२९६-९८)—'मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषी भवेत् । प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥ (१)क्षुद्राणां च पशूनां तु हिंसायां द्विशतो दमः । पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः । माषकस्तु भवेद्दण्डः श्वसूकरनिपातने' ॥ इति ॥ ३०० ॥

जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् ॥
उपजीव्य धनं मुञ्चंस्तदेवाऽष्टगुणीकृतम् ॥ ३०१ ॥

(वी०मि०) जारं कुलकलङ्कशङ्कया चौरेत्यभि सर्वतो वदन् पञ्चशतं पणानां दमं दाप्यः । धनमुपजीव्य उत्कोचरूपेण गृहीत्वा जारं मुञ्चन् तदेव गृहीतधनमष्टगुणीकृतं दाप्यः ॥ ३०१ ॥

( मिता० ) किञ्च—

जारमिति । स्वयंशकलङ्कभयाज्जारं पारदारिकं 'चौर निर्गच्छे'-त्यभिवदन् पञ्चशतं पणानां पञ्च शतानि यस्मिन्दमे स तथोक्तस्तं दमं दाप्यः । यः पुनर्जारहस्ताद्धनमुपजीव्य उत्कोचरूपेण गृहीत्वा जारं मुञ्चत्यसौ यावद् गृहीतं तावदष्टगुणीकृतं दण्डं दाप्यः ॥३०१॥

राज्ञोऽनिष्टप्रवक्तारं तस्य चा(२)क्रोशकारिणम् ॥
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥

( वी० मि० ) राज्ञोऽनिष्टं परास्तत्वादि तदुच्चैर्वदन्तं राजनिन्दाकारिणं तन्मन्त्रितार्थं तदमित्रेषु प्रकाशयन्तं जिह्वाच्छेदपूर्वकं प्रवासयेदित्यर्थः । आद्यचकारेण—

अपवक्तुश्च राजानं धर्मे च स्वे व्यवस्थितम् ।
जिह्वाछेदाद्भवेद् शुद्धिः सर्वस्वहरणे न चेत् ॥

---

( १ ) क्षुद्रकाणां पशूनां तु च ।
( २ ) तस्यैवाक्रोशकारिणम्- इति मु० पु० पाठ ।

इति नारदोक्तसर्वस्वापहारसमुच्चयः । द्वितीयचकारेण—

राज्ञः कोशापहर्तृंश्च प्रतिकूले व्यवस्थितान् ।
घातयेद्विविधैर्दण्डैररीणां चोपजायकान् ॥

इति मनूक्तस्य तत्तदपराधेषु समुच्चयः ॥ ३०२ ॥

( मिता० ) किञ्च—

राज्ञ इति । राज्ञोऽनिष्टस्यानभिमतस्यामि(१)त्रस्तोत्रादेः प्रकर्षेण भूयोभूयो वक्तारं तस्यैव राज्ञ आक्रोशकारिणं निन्दाकरणशीलं तदीयस्य च मन्त्रस्य स्वराष्ट्रविवृद्धिहेतोः परराष्ट्रापक्षयकरस्य वा भेत्तारममित्रकर्णेषु जपन्तं तस्य जिह्वामुत्कृत्य स्वराष्ट्रान्निष्कासयेत् । कोशापहरणादौ पुनर्वध एव । (मनुः ९।२७५)—'राज्ञः कोशापहर्तृंश्च प्रतिकूलेषु च स्थितान् । घातयेद्विविधैर्दण्डैररीणां चो(२)पकारकान्' ॥ इति मनुस्मरणात् । विविधैः सर्वस्वापहाराङ्गच्छेदवधरूपैरित्यर्थः । सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तन्नापहर्तव्यं चौर्योपकरणं विना । यथाह नारदः—'आयुधान्यायुधीयानां वाह्यादीन्वाह्यजीविनाम् । वेश्यास्त्रीणामलङ्कारान्वाद्यातोद्यादि तद्विदाम् ॥ यच्च यस्योपकरणं येन जीवन्ति कारुकाः । सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति' ॥ इति । ब्राह्मणस्य पुनः 'न (३)शारीरो दण्डः' इति निषेधाद्वधस्थाने शिरोमुण्डनादिकं कर्तव्यम् । 'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु' ॥ इति मनुस्मरणात् ॥ ३०२ ॥

मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ॥
राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ ३०३ ॥

( वी० मि० ) शवाङ्गसम्बन्धिमालादिविक्रेतुर्गुरुताडकस्य राजकीयाश्वसिंहासनाद्यारोहणं तदननुमत्या कुर्वतश्चोत्तमसाहसो दण्डः । तथाशब्देन रज्जुवेणुदण्डातिरिक्तेन पृष्ठभिन्नदेशे वा भार्यापुत्रादिताडयितुस्सङ्ग्रहः ॥ ३०३ ॥

( मिता० ) किञ्च—

मृताङ्गेति । मृतशरीरसम्बन्धिनो वस्त्रपुष्पादेर्विक्रेतुः गुरोः पित्रा-

---

( १ ) मित्रस्तत्रादेः प. । ( २ ) चोपजापकान् प. ।
( ३ ) न शारीरो ब्राह्मणे दण्डः ।

चार्यादेस्ताडयितुः तथा राजानुमतिं विना तद्यानं गजाश्वादि आसनं सिंहासनादि आरोहतश्चोत्तमसाहसो दण्डः ॥ ३०३ ॥

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ॥
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ३०४ ॥

( वी० मि० ) परस्य नेत्रभेदनकर्तुः राजशत्रुसमाज्ञप्तार्थकर्तुर्विप्रलिङ्गधारणेन प्रतिग्रहादिकं कृत्वा जीवतः शूद्रस्य चाऽष्टौ पणशतानि दण्ड इत्यर्थः । यदि विप्रत्वेन जीवता शूद्रेण द्विजातिभिर्ब्राह्मणस्य योनौ वा सम्बन्ध आचरितस्तदासौ वध्य एव ।

तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ।

इति मनुवचनात् । 'श्राद्धभोजनादिस्मार्तकर्मार्थे विप्रवेषधारिणः शूद्रस्य तु तप्तशलाकया यज्ञोपवीतवद्गुप्याल्लिखे'दिति स्मृत्यन्तरोक्तं दण्डनं द्रष्टव्यम् ।

यो लोभादधमो जातो जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥

इति मनुवचनं वैश्यक्षत्रियपरम् । तथाशब्देन संवत्सरान्ते तव राज्यच्युतिर्भविष्यतीति राजाद्विष्टमाशंसतः सङ्ग्रहः ॥ ३०४ ॥

( मिता० ) किञ्च—

द्विनेत्रेति । यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति । यश्च ज्योतिःशास्त्रवित् गुर्वादिहिते(१)च्छुव्यतिरिक्तो राज्ञो द्विष्टमनिष्टं संवत्सरान्ते तव राज्यच्युतिर्भविष्यतीत्येवमादिरूपमादेशं करोति । तथा यः शूद्रो भोजनार्थं यज्ञोपवीतादीनि ब्राह्मणलिङ्गानि दर्शयति तेषामष्टशतो दमः । अष्टौ पणशतानि यस्मिन्दमे स तथोक्तः । 'श्राद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषधारिणस्तप्तशलाकया यज्ञोपवीतवद्गुप्याल्लिखेत्' इति स्मृत्यन्तरोक्तं द्रष्टव्यम् । वृत्त्यर्थं तु यज्ञोपवीतादिब्राह्मणलिङ्गधारिणो वध एव । 'द्विजातिलिङ्गिनः शूद्रान्घातयेत्' इति स्मरणात् ॥ ३०४ ॥

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ॥
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं पृथक्(२) ॥३०५॥

---

(१) हितेप्सु ख.।  (२) दमम्-इति मु. पु पाठः ।

( वी० मि० ) दुर्दृष्टान् राजद्वेषादिभिरसम्यग्विचारितानतथात्वेन ज्ञातान् व्यवहारान् पुनः शास्त्रानुसारेण स्वयं दृष्ट्वा नृपेण पूर्वव्यवहारदर्शिनः सभ्या असम्यग्विचारजनितजयवत्तत्सहिता विवादपदात् द्विगुणं पृथक् प्रत्येकं दण्ड्याः। पृथगित्यत्र दममिति क्वचित्पाठः। जयदण्डविधानार्थं प्रागुक्तोऽपि सभ्यदण्ड इह प्रदर्शितः। आद्यतुशब्देन प्रामाणिकतयाऽवधारितैः सभ्यैर्दृष्टे पुनर्दर्शनसभ्यदण्डयोर्व्यवच्छेदः। द्वितीयतुशब्देन कपटपराजितस्य दण्डो व्यवच्छिद्यते ॥ ३०५ ॥

( मिता० ) रागलोभादिनाऽन्यथा व्यवहारदर्शने दण्डमाह—

दुर्दृष्टानिति। दुर्दृष्टान् स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्क्यमानान् व्यवहारान् पुनः स्वयं राजा सम्यग्विचार्य निश्चितदोषाः पूर्वसभ्याः (१)सजयिनः प्रत्येकं विवादपदे यो दमः पराजितस्य तद्द्विगुणं दाप्याः। अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य रागाल्लोभादित्यादिना श्लोकेनापौनरुक्त्यम्। यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा साक्षिण एव दण्ड्या न जयी नापि सभ्याः। यदा तु राजानुमत्या व्यवहारस्य (२)दुर्दृष्टत्वं ज्ञातं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः। 'पादो गच्छति कर्तारं पादः साक्षिणमृच्छति। पादः सभासदः सर्वान्पादो राजानमृच्छति' ॥ इति वचनात्। एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं न पुनरेकैक(३)स्यैव पापापूर्वस्य विभागाय। यथो(४)क्तम्—'कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य' इति ॥ ३०५ ॥

यो मन्येताऽजितोऽस्मीति न्यायेनापि पराजितः ॥
तं स(५)भायां पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥ ३०६ ॥

( वी० मि० ) पूर्वविचारकस्य प्रामाणिकत्वसंशयेनाऽजितोऽस्मीति यो न्यायेन पराजितोऽपि सन् मन्येत तं परो वादी पुनर्जित्वा विवादपदात् द्विगुणं दमं दापयेदित्यर्थः ॥ ३०६ ॥

( मिता० ) न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तयितुर्दण्डमाह—

य इति। यः पुनर्न्यायमार्गेण पराजितोऽपि औद्धत्याज्ञाहं परा-

---

( १ ) जयिसहिताः घ.। ( २ ) दुर्दृष्टता तदा ख.। ( ३ ) रेकस्यैव.।
( ४ ) तत्रचिन्नास्ति। ( ५ ) तमायान्तं—इति मु० पु० पाठः।

जितोऽस्मीति मन्येत तमायान्तं कूटलेख्याद्युपन्यासेन पुनर्धर्माधिकारिणमधितिष्ठन्तं धर्मेण पुनः पराजयं नीत्वा द्विगुणं दण्डं दापयेत्। नारदेनाप्युक्तम्—'तीरितं चानुशिष्टं वा यो मन्येत विधर्मतः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्' ॥ इति । तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम् । अनुशिष्टमुद्धृतदण्डम् । दण्डपर्यन्तं नीतमिति यावत् । यत्पुनर्मनुवचनम् (९।२३३)—'तीरितं चानुशिष्टं च यत्र क्वचन विद्यते। कृतं तद्धर्मतो ज्ञेयं न तत्प्राज्ञो निवर्तयेत्' ॥ इति । तदर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याधर्मतो वृत्तत्वाशङ्कायां पुनर्द्विगुणदण्डप्रतिज्ञापूर्वकं व्यवहारं प्रवर्तयेत्, न पुनर्धर्मतो वृत्तत्वनिश्चयेऽपि राज्ञा लोभादिना प्रवर्तयितव्य इत्येवंपरम् । यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निर्वर्तितं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम् । 'न्यायापेतं यदन्येन राज्ञा ज्ञानकृतं भवेत् । तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्' ॥ इति स्मरणात् ॥ ३०६ ॥

( वी० मि० ) शास्त्रानुसारेण दण्डो ग्राह्य इत्युक्तः, यदि तु शास्त्राननुमतो दण्डो राज्ञा गृह्यते तदा राजैवाऽपराध्यति स एव दण्डं दद्यादित्याह—

राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ ३०७ ॥

अन्यायेन शास्त्राननुसारेण यो दण्डो गृहीतस्तं दण्डं त्रिंशद्गुणीकृतं वरुणाय निवेद्य उत्सृज्य स्वयं विप्रेभ्यो दद्यात् प्रतिपादयेत् ॥ ३०७ ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योतितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूरिसूनुसकलविद्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाख्याने श्रीयाज्ञवल्क्यव्याख्याने प्रकीर्णकप्रकरणं नाम द्वितीयोऽध्यायः ॥

---

( मिता० ) अन्यायगृहीतदण्डधनस्य गतिमाह—

राज्ञेति । अन्यायेन यो दण्डो राज्ञा लोभाद् गृहीतस्तं त्रिंशद्गुणीकृतं वरुणायेदमिति संकल्प्य ब्राह्मणेभ्यः स्वयं दद्यात् । यस्माद्दण्डरूपेण यावद् गृहीतमन्यायेन तावत्तस्मै प्रतिदेयमितरथापहारदोषप्रसङ्गात् । अन्यायदण्डग्रहणे पूर्वस्वामिनः स्वत्वविच्छेदाभावाच्चेति ॥ २०७ ॥

इति श्रीमत्पद्मनाभभट्टोपाध्ययात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्यविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षराख्यायां याज्ञवल्कीयधर्मशास्त्रविवृतौ द्वितीयोऽध्यायो व्यवहाराख्यः समाप्तिमगात् ॥

---

अथास्मिन्नध्याये प्रकरणानुक्रमणिका कथ्यते । आद्यं साधारणव्यवहारमातृकाप्रकरणम् १ । असाधारणव्यवहारमातृकाप्रकरणम् २ । ऋणादानम् ३ । उपनिधिप्रकरणम् ४ । साक्षिप्रकरणम् ५ । लेख्यप्रकरणम् ६ । दिव्यप्रकरणम् ७ । दायविभागः ८ । सीमाविवादः ९ । स्वामिपालविवादः १० । अस्वामिविक्रयः ११ । दत्ताप्रदानिकम् १२ । क्रीतानुशयः १३ । अभ्युपेत्याशुश्रूषा १४ । संविद्व्यतिक्रमः १५ । वेतनादानम् १६ । द्यूतसमाह्वयाख्यम् १७ । वाक्पारुष्यम् १८ । दण्डपारुष्यम् १९ । साहसम् २० । विक्रीयासम्प्रदानम् २१ । सम्भूयसमुत्थानम् २२ । स्तेयप्रकरणम् २३ । स्त्रीसङ्ग्रहणम् २४ । प्रकीर्णकम् २५ । इति पञ्चविंशतिप्रकरणानि ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥

# अथ प्रायश्चित्ताध्यायः ।

निःसाम्यं(१) स्वस्य शंसन्निव विदधदिव द्वैतवार्तामिहार्ता-
मद्वन्द्व शीलयिष्यन्निव च निजपदं शीलिताद्वन्द्वभावः ॥
अभ्यारत्वां शुद्धसत्त्वाङ्कुर इव विशदो विश्वभृत्क्रोडभर्तु-
र्दंष्ट्रेवोच्चैरनाशीहरमुकुटशशीव(२)कदन्तस्य दन्तः ॥ १ ॥
अस्ति क्षोणिप्रशस्तिस्तनुरिव गिरिशस्योत्सवापूरपूर्णा
दुर्धाराभावचतुर्गातनुस्तनुरिपुर्विभ्रती भूरिभूतिम् ॥
श्रीराजद्राजलक्ष्मीः सगुणमपि दधा निर्धुनाना पिनाकं
हत्यमानाजिनश्रीः सुवृषमधिगता नागराबद्धशोभा ॥ २ ॥
अरिकुलकरिकुम्भकूटपाटीशिखरिवटीमिव यां प्रभापटीयान् ॥
अधिवसति महीन्दुर्वीरसिंहो मधुकरसाहिमहीशसिन्धुजन्मा ॥ ३ ॥
श्रेयःसंभृतवीरसिंहनृपतेरपि(३) प्रतापोदया-
द्वायोद्दामहुताशनो(४)हितचमूराद्रेन्धनस्य श्रियम् ॥
या(५) चान्तः स्फुटति ध्वनिं प्रकटयत्यप्य(६)श्रुधारारसा-
विर्भाय तनुते तनोति कुयशोधूमैर्जगच्छ्यामलम् ॥ ४ ॥
गाम्भीर्यं यद्दु वीरसिंहनृपतेरम्भोधिरन्तः स्मरन्
दुर्वारौर्वशिखिच्छलेन निबिडप्रौढप्रतापं दधौ ॥
स्मारंस्मारमुदारसारमधिकोदञ्चच्चमत्कारतो
जातोऽचेतन एव जातजडिमा श्यामाकृतिः क्ष्माधरः ॥ ५ ॥
बाल्याबाल्यान्तरालस्थगितमिति(७) मनः कामकौमारकेली-
मस्वीकुर्वन् किशोरीचरण इव रिपुश्रृङ्खलीभूय भूयः ॥
क्रीडान्तावस्थकान्ताजन इव विगलत्कुन्तलो व्यस्तवासा
यस्य त्रासाज्जरत्याः स्तन इव निपतन्नुच्छ्रासं नैव लेभे ॥ ६ ॥

---

(१) निःस्वाम्यं-इति क० पु० पाठः । (२) शशी चैक-इति क० ख० पु० पाठः ।
(३) नृपतेरायसता-इति क० ख० पु० पाठः । (४) हुताशनोहित-इति क०ख०पु०पाठः ।
(५) येनान्त -इति क० पु० पाठः । (६) त्यस्त्राश्रु०-इति ख० पु० पाठः ।
(७) स्थगितमिव-इति क० पु० पाठः ।

भगोलाद् भूगोलाद्बहिरभियियासन्ति भवितुं
पठानाः पाठीना इव जलविलीना(१) धियमधुः ॥
मवो मोघारम्भोऽपसरति बुँदेलाकुलपतौ
रणार्थं दुर्वारे रणति रणसारे रणभुवि ॥ ७ ॥
बिभ्राणो बुधमित्रतां कविगुरू राजा धरानन्दनः
शोभाभिर्विलसत्तमो दिवि लसत्केतुश्च भास्वत्सुतः ॥
इत्थं जन्यजनुर्नवग्रहतनुः किन्त्वस्ति तुङ्गः सदा
सोद्रेकः किल वीरसिंहधरणीधौरेयचूडामणिः ॥ ८ ॥
शुभ्राभाविभवार्थमात्तवृतपभो भोगीन्द्रभागीरथी-
भास्वद्भूतिभनाथभूपित(२)वपुः कैलासवासी भवन् ॥
विश्वोत्तंसबुँदेलवीरनृपतेः(३) सम्भाव्य शम्भुर्यशः
शान्त्यै साम्यविधेर्बभार गरलं कण्ठे किमुत्कण्ठितः ॥ ९ ॥
हेमोर्वीधरकर्णिकापरमहाशैलोच्च(४)संवर्तिका
व्यालेन्द्रैकमृणालिका गजघटाव्यालीनभृङ्गालिका ॥
सप्ताम्भोधिमधूलिकाविमलिका क्षोणीयशोमालिका
सम्पर्केऽप्रतिमल्लवीरनृपतेः शुभ्रारविन्दायते ॥ १० ॥
व्रीडाभिर्जडिमोदयादुपलतां चिन्तामणिः पाशवं
कामं कामगवी च कल्पविटपी स्वर्गाटवीं गाहते ॥
आकर्ण्योर्जितवीरसिंहनृपतेर्दानोर्जिहानं यशः
सान्तर्ध्यानतयाऽद्य निर्दयमधो नेतारमस्तोद्धलिः ॥ ११ ॥
वसु वर्षति वीरसिंहदेवो जलदः केवलमम्बु यद्विजेषु ॥
इयतैप यशोऽवदातविश्वो मलिनः सोऽजनि लज्जया तयैव ॥१२॥
दूराद् दुरुच्यवनो दिवस्पतिरभूद्दिकोणभाक् पावकः
कीनाशः स्वयमेव दण्डमितवान् रक्षोऽपि रक्षोक्तिभाक् ॥
पाशं च स्वयमाददे पतिरपां वातो गतोऽदृश्यतां
प्रस्थाने धनदोऽस्य गुह्यकपदं दुर्गासि(५)मुग्रोऽचरत् ॥ १३ ॥
आरोहो गीर्लतायाः सदुपकृतिपदं धर्मभूमीरुहाणा-
मुद्यानं शुद्धकीर्तेरुपचयभवनं श्रीमृगीवागुरेव ॥

(१) जनविलीना-इति क० पु० पाठः ।
(२) भापितवपुः-इति क०ख०पु०पाठः । (३) वीरश्रीयुतवीरसिंहनृपते-इति क०पु०पाठः ।
(४) शैलौघ-इति क० पु० पाठः । (५) दुर्गासिमुग्रो-इति ख० पु० पाठः ।

आकारो विप्रताया निधिरपि महसः सर्वविद्यानवद्यो
यद्द्वारि द्योतते श्रीद्युमणिरिव तमो मूर्छयन् मित्रमिश्रः ॥ १४ ॥
क्ष्मावक्रं चारु चक्रे(१) समुचितनयतो रक्षितं भूमिदेवान्
देवांश्च प्राससेवान् विमलमपि यशो वीरसिंहो नरेन्द्रः ॥
चित्तं मत्वाप्यसारं व्यतरदविरतं याज्ञवल्क्योक्ति(२)मुक्ता-
हारं(३) स्मृत्यर्थसारं रचयितुमथ स प्रादिशन्मित्रमिश्रम् ॥ १५ ॥
उत्तंसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्
श्रीमाञ्जो मित्रमिश्राज्जगदुपकृतये विप्रदादेशदीपम् ॥
ज्ञानानां दैन्यदोषापहमकलिमय याज्ञवल्क्योक्तिकोषाद्
दृष्ट्वा स्मृत्यर्थसारं समचिनुत यशो धर्मलक्ष्मीविहारम् ॥ १६ ॥

(वी०मि०)अथ तृतीयाध्यायमारभते। तत्र चैतानि प्रकरणानि-(१) आशौचप्रकरणम् [श्लो०१-३४] (२)आपद्धर्मप्रकरणम् [श्लो०३५-४४] (३) वानप्रस्थधर्मप्रकरणम् [श्लो०४५-५५] (४)यतिधर्मप्रकरणम् [श्लो०५६-२०५] (५)प्रायश्चित्तप्रकरणम् [श्लो०२०६-३३४] इति। तत्र शौचस्य वैदिककर्मसु प्रागुक्तेषु वक्ष्यमाणेषु चाङ्गतयाऽशौचनिरूपणद्वारा तन्निरूपयिष्यन्नादौ शौचानङ्गकानि कानिचित्कर्माण्याह—

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ॥
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः ॥ १ ॥
यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ॥
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥

असम्पूर्णद्विवर्षं प्रेतं भूमौ गर्तं कृत्वा निखनेन्न तु दहेत्। न च 'सकृत् प्रसिञ्चन्त्युदक'मिति सामान्यविधिप्राप्तमप्युदकं तस्य कुर्यात्। अत्र विशेषमाह मनुः—

*ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।*
*अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥*
*नाऽस्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ।*
*अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥*

काष्ठवदित्युदासीनतां प्रतिपादयत्पदं श्राद्धाद्यभावं सूचयति। -

(१) चारुचक्रे-इति ख० पु० पाठः। (२) मुक्ता-इत्यधिकम् पाठः।
(३) चार-इति क० ख० पु० पाठः।

यमश्च—

ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि ।
यमगाथां गायमानो यमसूक्तं जपन्नपि ॥

मनुः—

नाऽत्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सति ॥

अत्रिवर्षस्य तृतीयवर्षारम्भशून्यस्य द्वितीयार्द्धस्य प्रेतहितार्थत्वे ताभ्यां च निदानपरत्वं प्रकृतग्रन्थस्य च नित्यनिषेधकत्वमित्यविरोधः । ततस्तस्मादूनद्विवार्षिकादितरो मृतः श्मशानपर्यन्तं ज्ञातिभिः सपिण्डैः सकुल्यैश्च यमसूक्तं 'परेयिवांस'-मित्यादिकम्, 'अहरहर्नयमान' इत्यादिकं च यमगाथां 'सांकेसुवर्णा'मित्यस्यामृचि गीतां जपद्भिरनुव्रज्यस्तथा शास्त्रोक्तविधिना दग्धव्यः । स चेदुपेत आहिताग्निस्तदाहितस्याग्नेः सम्बन्धिन्या आवृता पात्रप्रक्षेपणादिरूपया अर्थवत्पात्रप्रतिपत्तिरूपप्रयोजनवद्यथा भवति तथा दग्धव्यः । केचित्तु कृतोपनयनस्य दाहे भूसंस्कारादिरूपेतिकर्तव्यतामेतद्वचनबलादाहुः । जपद्भिरिति भविष्यतोऽभिधानं वर्तमानसामीप्ये लट्प्रत्ययानुशासनात् । तदाह बैजवापः—'प्रेतमरण्यं गत्वा यथोक्तमग्निं गमयित्वा अनवेक्ष्यमाणा अभ्यायान्त्येकवाससो बीतिभूताः कानिष्ठिपर्याया यमगाथां गायन्तो यमसूक्तं च जपन्तोऽहरहर्नयमाना गामश्वं पुरुषं पशुं चैव स्वतो न तृप्यन्ति सुराया इव दुर्मति'रिति । ज्ञातिभिरिति बहुवचनं बहूनां काष्ठाहरणादिना प्रयोजकत्वमभिप्रेत्य । तेन शूद्रस्य काष्ठाद्याहर्तृत्वं व्यवच्छिद्यते ।

यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च ।
प्रेतत्वं हि सदा तस्य स चाऽधर्मेण लिप्यते ॥

इति यमस्मरणात् ॥ १–२ ॥

( मिता० ) गृहस्थाश्रमिणां नित्यनैमित्तिका धर्मा उक्ताः । अभिषेकादिगुणयुक्तस्य गृहस्थविशेषस्य गुणधर्माश्च प्रदर्शिताः । अधुना तदधिकारसङ्कोचहेतुभूताशौचप्रतिपादनमुखेन तेषामपवादः प्रतिपाद्यते । आशौचशब्देन च कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेरध्ययनादिपर्युदासस्य च निमित्तभूतः पुरु-

पगतः कश्चनातिशयः कथ्यते, न पुनः कर्मानधिकारमात्रम् । 'अशुद्धा बान्धवाः सर्वे' इत्यादावशुद्धत्वाभिधानात् । (१)अशुद्धशब्दस्य च वृद्धव्यवहारेऽनाहिताग्निदीक्षितादावनधिकारिमात्रे प्रयोगाभावात्, वृद्धव्यवहारव्युत्पत्तिनिबन्धनत्वाच्च शब्दार्थावगतेः । किञ्च यथाशौचिनां दानादिनिषेधदर्शनात्तदयोग्यत्वमाशौचशब्दाभिधेयं कल्प्यते तर्हि उदकदानादिविधिदर्शनात् तद्योग्यत्वमप्याशौचशब्दाभिधेयं स्यात् । तथानेकार्थकल्पनादोषप्रसङ्ग इत्युपेक्षणीयोऽयं पक्षः ।

तत्राशौचिभिः सपिण्डाद्यैर्यत्कर्तव्यं तत्तावदाह—

ऊनेत्यादि । ऊने अपरिपूर्णे द्वे वर्षे यस्यासावूनद्विवर्षस्तं प्रेतं निखनेत् भूमाववटं कृत्वा निदध्यात् पुनर्दहेदित्यर्थः । न च सञ्चयनं सिञ्चन्त्युदकमित्यादिभिः प्रेतोद्देशेन विहितमुदकदानाद्यौर्ध्वदेहिकं कुर्यात् । अयं च गन्धमाल्यानुलेपनादिभिरलङ्कृत्य शुचौ भूमौ श्मशानादन्यत्रास्थिनिचयरहितायां वहिर्ग्रामान्निखननीयः । यथाह मनुः (५।६८)—'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः । अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥ नास्य कार्योऽग्निसंस्कारो ना(२)पि कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु' ॥ इति । अरण्ये काष्ठवत्त्यक्त्वेत्यस्यायमर्थः । यथारण्ये काष्ठं त्यक्त्वोदासीनास्तद्विषये भवन्ति तथोनद्विवार्षिकमपि खातायां भूमौ परित्यज्य तद्विषये श्राद्धाद्यौर्ध्वदेहिकेषु उदासीनैर्भवितव्यमित्याचारादिप्राप्तश्राद्धाद्यभावोऽनेन दृष्टान्तेन सूच्यते । स(३) च घृतेनाभ्यज्य यमगाथाः प(४)ठद्भिर्निधातव्यः । 'ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्(५)भुवि । यमगाथा गायमानो यमसूक्तमनुस्मरन्' ॥ इति यमस्मरणात् । ततस्तस्मादूनद्विवार्षिकादितरः पूर्णद्विवर्षो यो मृतोऽसौ श्मशानपर्यन्तं ज्ञातिभिः सपिण्डैः समानोदकैश्च ज्येष्ठपुरःसरैरनुव्रज्योऽनुगन्तव्यः । अस्मादेव वचनादूनद्विवर्षस्याननुगमनमनियतमिति गम्यते । अनुगम्य च 'परेयिवांसम्' इत्यादि यमसूक्तं यमदेवत्या गाथाश्च जपद्भिर्लौकिकेनासंस्कृतेनाग्निना दग्धव्यो यदि जातारणिर्नास्ति । तत्सद्भावे [illegible] तन्मथितेन दग्धव्यो न लौकिकेन । तस्याग्निसम्पाद्यकार्यमात्रार्थत्वेनोत्पत्तेः । लौकिकाग्निश्च चण्डाला-

(१) अत्राशुद्धशब्दस्य च व्यवहारेणाहिताग्नि ख० । (२) नास्य क ।
(३) शवश्च क । (४) गायद्भिः क । (५) निखनेद्बहिः-इति पाठान्तरम् ।

ग्न्यादिव्यतिरिक्तो ग्राह्यः । 'चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् । पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः' ॥ इति देवलस्मरणात्। लौगाक्षिणा चात्र विशेष उक्तः—'तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम्' ॥ इति । अयमर्थः—'चौलकर्मानन्तरकाले नियमेनाग्न्यु(१)दकदानं कार्यम् । अन्यत्रापि नामकरणादूर्ध्वं अकृतचूडेऽपीच्छया प्रेताभ्युदयकामनया द्वयं अग्न्युदकदानात्मकं तूष्णीं कार्यं, न नियमेनेति विकल्पः । मनुनाप्यत्र विशेषो दर्शितः (५।७०) 'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति' ॥ इति । उदकग्रहणं साहचर्यादग्निसंस्कारस्याप्युपलक्षणार्थम् । 'नात्रिवर्षस्य' इति वचनात् । कुलधर्मापेक्षया चूडोत्कर्षेऽपि वर्षत्रयादूर्ध्वमग्न्युदकदानादिनियमोऽवगम्यते । लौगाक्षिवचनाद्वर्षत्रयात्प्रागपि कृतचूडस्य तयोर्नियम इति विवेचनीयम् । उपेतश्चेद्यद्युपनीतस्तर्हि आहिता(२)ग्न्यावृता आहिताग्नेर्दाहप्रक्रियया स्वगृह्यादिप्रसिद्धया लौकिकाग्निनैव दग्धव्यः । अर्थवत्प्रयोजनवत् । अयमर्थः—यस्य कृतं दाहे द्वारं कार्यरूपं प्रयोजनं सम्भवति भूमिजोषणप्रोक्षणादि तदुपादेयम् । यत्पुनर्लुप्तप्रयोजनं पात्रयोजनादि तन्निवर्तते । तथा लौकिकाग्निविधानेनोपनीतस्य अनाहिताग्नेर्गृह्या(३)ग्निना दाहविधानेन च अपहृतप्रयोजनत्वादाहवनीयादेरपि निवृत्तिरिति । अग्न्यन्तरविधानं च वृद्धयाज्ञवल्क्येनोक्तम्—'आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः । अनाहिताग्निरेकेन लौकिकेनापरो जनः' ॥ इति । न च शूद्रेण श्मशानं प्रति अग्निकाष्ठादिनयनं कार्यम् । 'यस्याऽऽनयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च । प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते' ॥ इति यमस्मरणात । तथा दाहश्च स्नपनानन्तरं कार्यः । 'प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम्' इति स्मरणात् । प्रचेतसाप्युक्तम्—'स्नानं प्रेतस्य(४)पुत्राद्यैर्वस्त्राद्यैः पूजनं तथा । नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत्' ॥ इति । किञ्चिद्देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थं देयं परित्यजेदित्यर्थः । तथा प्रेतनिर्हर-

(१) उदकदानात्मकं क । (२) आहिताग्निर्दाहप्रक्रियया ट ।
(३) आहिताग्नेः स्वगृह्याग्निना ट । (४) कार्यमिति शेषः ।

णेऽपि मनुना विशेषो दर्शितः (५।१०४) 'न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् । अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषिता'॥ अत्र च स्वेषु तिष्ठत्सु इत्यविवक्षितम् । अस्वर्ग्यत्वादिदोषश्रवणात् । 'दक्षिणेन मृतं शूद्रं पुर(१)द्वारेण निर्हरेत् । पश्चिमोत्तरपूर्वैस्तु यथासंख्य द्विजातयः' ॥ तथा हारीतोऽपि—'न ग्रामाभिमुखं प्रेतं हरेयुः' इति । यदा तु प्रोषितमरणे शरीरं न लभ्यते तदास्थिभिः प्रतिकृतिं कृत्वा तेषामप्यलाभे पर्णशरैः शौनकादिगृह्योक्तमार्गेण प्रतिकृतिं कृत्वा संस्कारः कार्यः । आशौचं चात्र दशाहादिकमेव । 'आहिताग्निश्चेत्प्रवसन्म्रियेत पुनःसंस्कारं कृत्वा शववदाशौचम्' इति वसिष्ठस्मरणात् । अनाहिताग्निस्तु त्रिरात्रम् । 'सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स बान्धवैः ॥ एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' ॥ इति वचनात् । ततश्चायमर्थः—नामकरणादर्वाङ् निखननमेव, न चोदकदानादि । तत ऊर्ध्वं यावद्द्विवर्षैकल्पिकमग्न्युदकदानम् । ततः परं यावदुपनयनं तूष्णीमेवाऽग्न्युदकदानं नियतम् । वर्षत्रयात्प्रागपि कृतचूडस्य । उपनयनादूर्ध्वं पुनराहिताग्न्यावृता दाहं कृत्वा सर्वमौर्ध्वदैहिकं कार्यम् । अयं तु विशेषः । उपनीतस्य लौकिकाग्निना दाहः कार्यः । अनाहिताग्नेर्गृह्याग्निना दाहो यथासम्भवं पात्रयोजनं च कार्यम् ॥ १-२ ॥

(वी०मि०) दाहानन्तरं कृत्यमाह—

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ॥
अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥
एवं मातामहाचार्यप्रेतानामुदकक्रिया ॥
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥ ४ ॥
सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ॥

सप्तमादिति ल्यब्लोपे पञ्चमी, तेन सप्तमं त्याप्य ज्ञातयः सपिण्डाः सप्तमादूर्ध्वं दशमं पुरुषं व्याप्य ज्ञातयः सकुल्याश्च दक्षिणदिगभिमुखाः 'अपनः शोशुचदघ'मिति मन्त्रेणाऽनामिकया जलमालोड्याऽपोऽभ्युपयन्ति निमज्य जलाञ्जलिं प्रसिञ्चन्ति । अपिकारेण समानग्रामवासिनां व्यवहितसम्बन्धानां ग्रहणम् । तदाह

(१) परद्वारेण—इति पाठान्तरम् ।

पारस्करः—'सयुक्तं मिथुनं याचेरन्नुदकं करिष्याम इति, कुरुध्वं मा चैवं पुनरित्यशतवर्षप्रेते कुरुध्वमेवेतरस्मिन् सर्वज्ञातयोऽभ्युपयन्त्यासप्तमात्पुरुषाद्दशमाद्वादशमन्यग्रामवासे यावत्सम्बन्धमनुस्मरेयुर्वा एकवस्त्राः प्राचीनावीतिनः 'सव्यानामिकयाऽप आलोड्याऽपनः शोशुचदघमिति पुरुषाः पठित्वा दक्षिणामुखा निमज्जन्ति प्रेतायोदकं प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्ते' इति। एवं सपिण्डानामेव। मातामहानामाचार्याणां च प्रेतानां प्रत्ता(१)नामुदकक्रियाञ्जलिदानरूपा नित्यवत्कार्या। सख्यादीनां प्रेतानां कामेनेच्छया उदकमुदकक्रिया। चकारेण स्नानसमुच्चयः। प्रेताः परिणीता दुहितृभगिन्यादयः। शेषं प्रसिद्धम्। उक्त एवोदकदाने गुणं विधत्ते सकृदिति ज्ञातयो वाग्यतास्त्यागवाक्यातिरिक्तवाक्योच्चारणशून्याः सन्तः प्रेतस्य नामगोत्रेणोद्दिष्टेनोदकमञ्जलिमितं सकृदेव सपिण्डादयः प्रसिञ्चन्ति उत्सृजन्ति ॥ ३-४ ॥

(मिता०) संस्कारानन्तरं किं कर्तव्यमित्यत आह—

सप्तमादिति। सप्तमाद्दिवसादर्वाग्दशमदिवसाद्वा ज्ञातयः समानगोत्राः सपिण्डाः समानोदकाश्च 'अपनः शोशुचदघम्' इत्यनेन मन्त्रेण दक्षिणामुखाः अप अभ्युपयन्ति। अभ्युपगमनेन तत्प्रयोजनभूतोदकदानविशिष्टमभ्युपगमनं लक्ष्यते। 'एवं मातामहाचार्ये'त्यनन्तरमुदकदानस्यातिदेशदर्शनात्। एतच्चायुग्मासु तिथिषु कार्यम्। 'प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया' इति गौतमस्मरणात्। एतच्च स्नानानन्तरं कार्यम्। 'शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति' इति शातातपस्मरणात्। तथा प्रचेतसाप्यत्र विशेषो दर्शितः—'प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः (२)प्रत्यङ्मुखाश्च राजन्यवैश्ययोः' इति। स्मृत्यन्तरे तु यावत्त्याशौचदिनानि तावदुदकदानस्यावृत्तिरुक्ता। यथाह विष्णुः—'यावदाशौचं तावत्प्रेतस्योदकं पिण्डं च दद्युः' इति। तथा च प्रचेतसाप्युक्तम्—'दिने दिनेऽञ्जलीन्पूर्णान्प्रदद्यात्प्रेतकारणात्। तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते' ॥ इति। प्रतिदिनमञ्जलीनां वृद्धिः कार्या यावद्दशमः पिण्डः समाप्यत इत्यर्थः। यद्यप्यनयोर्गु-

(१) प्रेताना—इति ख० पु० पाठः। (२) प्राङ्मुखाश्च ख०।

रुलघुकल्पयोरन्यतरानुष्ठानेनापि शास्त्रार्थ सिद्धस्तथापि बहुक्लेशा वहत्वेन गुरुतरकल्पे प्रवृत्त्यनुपपत्ते प्रेतस्योपकारातिशयो भविष्यतीति कल्पनीयम्। अन्यथा गुरुतरकल्पा(१)म्नायस्यानर्थक्यप्रसङ्गात्। वसिष्ठेनापि विशेषोऽभिहित —'सव्योत्तराभ्यां पाणिभ्यामुदकक्रिया कुर्वीरन्' इति ॥ ३ ॥

( मिता० ) वक्ष्यमाणसकृत्प्रसेकस्य नामगोत्रादिभिर्गुणैर्विशिष्टस्योदकदानस्या(२)समानगोत्रेषु मातामहादिष्वतिदेशमाह—

एवमिति। यथा सगोत्रसपिण्डाना प्रेतानामुदक दीयते तथा मातामहानामाचार्याणा प्रेतानां नित्यमुदकक्रिया कार्या । सखा मित्र, प्रत्ता परिणीता दुहितृभगिन्यादय, स्वस्रीयो भागिनेय, श्वशुर प्रसिद्ध, ऋत्विजो याजका एषा सख्यादीना प्रेतानां कामोदक कार्यम्। काम इच्छा, कामेनोदकदान कामोदक प्रेताभ्युदयकामनायां सत्यामुदक देयमसत्यां न देयमिति अकरणे प्रत्यवायो नास्तीत्यर्थ ॥ ४ ॥

( मिता० ) उदकदाने गुणविधिमाह—

सकृदिति। तच्चोदकदानमित्थ कर्तव्यम् । सपिण्डा समानोदकाश्च मौनिनो भूत्वा प्रेतस्य नामगोत्रे उच्चार्य अमुकनामा प्रेतोऽमुकगोत्रस्तृप्यात्विति सकृदेवोदक प्रसिञ्चेयु निर्वा। 'त्रि प्र(३)सेक कुर्यु प्रेतस्तृप्यत्विति' इति प्रचेत स्मरणात्। प्रतिदिनमञ्जलिवृद्धिस्तु प्रतिपादितैव। तथा अयमपि विशेषस्तेनैवोक्त —'नदीकूल ततो गत्वा शौच कृत्वा यथार्थवत्। वस्त्र सशोधयेदादौ तत स्नान समाचरेत् ॥ सचेलस्तु तत स्नात्वा शुचि' प्रयतमानस। पाषाण तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥ द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृता । त्रिंशच्छूद्राय दातव्यास्तत सम्प्रविशेद् गृहम् ॥ तत स्नान पुन कार्य गृहशौच च कारयेत्' । इति ॥

(वी०मि०) अथ सपिण्डादीनामपि केषाञ्चिदुदकदाननिषेधमाह—

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥ ५ ॥
पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ॥
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥

( १ ) कल्पनीयस्या क । ( २ ) स्य समान ङ । ( ३ ) प्रत्येक कुर्यु ख ।

ज्ञातित्वे सत्यपि न ब्रह्मचारिणो न च पतिताः प्रेतोदकदानं कुर्युः । एतस्यापवाद आचार्यपित्रादिस्थल इत्यग्रे वक्ष्यति । अत्र विशेषमाह मनुः—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुद्ध्यति ॥

आदिष्टी ब्रह्मचारी, व्रतं ब्रह्मचर्यम्, उदकं ब्रह्मचर्यकालमृतानाम्। वृद्धमनुः—

क्लीवाद्या नोदकं कुर्युस्तेना व्रात्या विकर्मणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

एवमुदकदाने कर्तृविशेषप्रतिषेधमुक्त्वा सम्प्रदायविशेषेण प्रतिषेधमाह पाखण्डीति । पाखण्डिनो वेदप्रामाण्यानभ्युपगन्तारः, अनाश्रिताः अधिकारे सत्यप्याश्रमविशेषाश्रयणहीनाः । पाखण्डमाश्रिता इति पाठे रक्तपटमौण्ड्यव्रतमाश्रिता इत्यर्थः । स्तेना ब्राह्मणसुवर्णहारिणः पुरुषाः पतिता इति यावत् । भर्तृघ्न्यः पतिघातिन्यः, कामगाः स्वैरिण्यः, आदिपदात्स्वगर्भघातिन्यः । विशेषोक्तातिरिक्तपातकवशाश्च । सुराप्यो गौडीपैष्टीमाध्वीनामन्यतमस्य पानकर्त्र्यः । आत्मत्यागिन्यो विषाग्न्यादिना बुद्धिपूर्वकं शरीरत्यागिनश्च योषितो नाशौचनिमित्तभूता न चोदकदानसम्प्रदानतार्हा इत्यर्थः । अत्र मनुः—

वृथा सङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया ॥

उदकानर्हाणां च दाहादिकमपि न कार्यम् ।

नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

इति यमस्मरणात् । ब्रह्मदण्डहताः ब्राह्मणहताः । अङ्गिराः—

अथ कश्चित्प्रमादेन म्रियेताऽग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कार्या चास्योदकक्रिया ॥

वृद्धाऽगस्त्यः—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥-॥६॥

( मिता० ) सपिण्डानां केषाञ्चिदुदकदानप्रतिषेधमाह—

नेति । ज्ञातित्वे सत्यपि ब्रह्मचारिणः समावर्तनपर्यन्तं पतिताश्च प्रच्युतद्विजातिकर्माधिकारा उदकादिदानं न कुर्युः । ब्रह्मचर्योत्तरकालं पूर्वमृतानां सपिण्डादीनामुदकदानमाशौचं च कुर्यादेव । यथाह मनुः (५।८८)—'आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्' ॥ इति । आदिष्टी 'कस्य ब्रह्मचार्यस्यपोशान कर्म कुरु दिवा मा स्वाप्सीः' इत्यादिमतादेशयोगाद्ब्रह्मचार्युच्यते । एतच्च पित्रादिव्यतिरेकेणेति वक्ष्यति । आचार्यपितृपाध्यायानिति । अत्राचार्यः पुनरेवं मन्यते—आदिष्टीति प्रकान्तप्रायश्चित्तः कथ्यते, तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तरूपव्रतस्य समाप्त्युत्तरकालमुदकदानाशौचविधिरिति। तथा क्लीबादीनां चोदकदायित्वं निषिद्धम् । 'क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः । गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः' ॥ इति वृद्धमनुस्मरणात् ॥ ५ ॥

( मिता० ) एवमुदकाने कर्तृविशेषप्रतिषेधमुक्त्वा सम्प्रदानविशेषेण प्रतिषेधमाह—

पाखण्डीति । नरशिरःकपालादि श्रुतिबाह्यलिङ्गधारणं पाषण्डं तद्विद्यते येषां ते पाखण्डिनः अनाश्रिताः अधिकारे सत्यप्यकृताश्रमविशेषपरिग्रहाः। स्तेनाः सुवर्णादुत्तमद्रव्यहारिणः। भर्तृघ्न्यः पतिघातिन्यः । कामगाः कुलटाः । आदिग्रहणात्स्वगर्भब्राह्मणघातिन्यो गृह्यन्ते । सुराप्यो यासां या सुरा प्रतिषिद्धा तत्पानरताः । आत्मत्यागिन्य विषाग्न्युदकोद्बन्धनाद्यैरात्मानं यास्त्यजन्ति । एते पाखण्ड्यादयः 'त्रिरात्रं दशरात्रं वा' इति वक्ष्यमाणस्याशौचस्योदकदानादौर्ध्वदेहिकस्य च भाजना न भवन्ति । भाजयन्तीति भाजनाः सपिण्डादीनामाशौचादिनिमित्तभूता न भवन्ति । अतस्तन्मरणे सपिण्डैरुदकदानादि न कार्यमित्येतत्प्रतिपादनपरं वचनम् । अत्र च सुराप्य इत्यादिषु लिङ्गमविवक्षितम् । 'लि(१)ङ्गं च वचनं देशः कालोऽयं कर्मणः फलम् । मीमांसाकुशलाः प्राहुरनुपादेयपञ्चकम्' ॥

( १ ) इदं पदं क० ग० पुस्तकयोर्नास्ति ।

इत्यनुपादेयगतत्वात् । एतच्च बुद्धिपूर्वविषयम् । यथाह गौतमः– 'प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्' इति । प्रायो महाप्रस्थानम् । अनाशकमनशनम् । गिरिशिखरादवपातः प्रपतनम् । अत्र चेच्छतामिति विशेषणोपादानात्प्रमादकृते दोषो नास्तीत्यवगन्तव्यम् । 'अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया' ॥ इति अङ्गिरःस्मरणात् । तथा मृत्युविशेषादपि आशौचादिनिषेधः । 'चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥ उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते । नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति' ॥ इति । एतदपीच्छापूर्वमात्महननविषयम् । गौतमवचनेनेच्छापूर्वकमेवोदकेन हतस्याशौचादिनिषेधस्योक्तत्वात् । अत्रापि 'चाण्डालादुदकात्सर्पादि'ति तत्साहचर्यदर्शनाद्बुद्धिपूर्वविषयत्वनिश्चयः । अतो दर्पादिना चण्डालादीन्हन्तुं गतो यस्तैर्मारितस्तस्यायं 'सर्वत एवात्मानं गोपायेदि'ति विध्यतिक्रमनिमित्तः पिण्डदानादिनिषेधः । एवं दुष्टदंष्ट्र्यादिग्रहणार्थमाभिमुख्येन दर्पाद्गच्छतो मरणेप्ययं निषेध इत्यनुसन्धेयम् । अयं चाशौचप्रतिषेधो दशाहादिकालावच्छिन्नस्य । 'हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्' इति सद्यःशौचस्य वक्ष्यमाणत्वात् । तथा दाहादिकमप्येषां न कार्यम् । 'नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च । ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम्' ॥ इति यमस्मरणात् । ब्रह्मदण्डहता ब्राह्मणहताः । प्रेतवहनसाधनं खट्वादि कटशब्देनोच्यते । न चाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येतत् श्रुतिविहिताग्नियज्ञपात्रादिप्रतिपत्तिलोपप्रसङ्गात् अयं स्मार्तो दाहादिनिषेधो विप्रादिहताऽऽहिताग्निविषयं नास्कन्दतीत्याशङ्कनीयम् । यतश्चण्डालादिहताहिताग्निसम्बन्धिनामाग्नियज्ञपात्राणां स्मृत्यन्तरे प्रतिपत्त्यन्तरं विधीयते । 'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' ॥ इति । तथा तच्छरीरस्यापि प्रतिपत्त्यन्तरमुक्तम् । 'आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं हितम्' ॥ इति स्मरणात् । तस्मादविशेषेण सर्वेषां दहनादिनिषेधः । अतः स्नेहादिना निषेधातिक्रमे प्रायश्चित्तं कर्तव्यम् । 'कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् ।

रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति' ॥ इति स्मरणात् । एतच्च प्रत्येकं बुद्धि(१)पूर्वकं वेदितव्यम् । अबुद्धिपूर्वकरणे तु 'एवामन्यसमं प्रेतं या वहेन दहेत वा । कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत्' ॥ इति संवर्तोक्तं द्रष्टव्यम् । यः पुनः 'तच्छत्र केवलं स्पृष्टमश्रु वा पातितं यदि । पूर्वोक्तानामकारी चेदेकरात्रमभोजनम्' ॥ इति स्पर्शाश्रुपातयोरुपवास उक्तः । असौ कृच्छ्रेष्वशक्तस्य । तथा'बन्धनच्छेदने दहने वा मासं भैक्षाहारस्त्रिषवणं च' इति सुमन्तुना भैक्षाशित्वमुक्तं तदप्यशक्तस्यैव । एवमन्यान्यपि सद्विषयाणि स्मृतिवाक्यानि व्यवस्थापनीयानि । अयं च दाहादिप्रतिषेधो नित्यकर्मानुष्ठानासमर्थजीर्णवानप्रस्थादिव्यतिरिक्तविषयः तेषामभ्यनुज्ञादर्शनात् । 'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्' ॥ इति स्मरणात् ।

एवं येन येनोपाधिना आत्महननं शास्त्रतोऽभ्यनुज्ञायते तत्तद्व्यतिरिक्तमार्गेणात्महनने श्राद्धाद्यौर्ध्वदेहिकेषु निषिद्धेषु किं पुनस्तेषां कार्यमित्यपेक्षायां वृद्धयाज्ञवल्क्यछागलेयाभ्यामुक्तम्-'नारायणबलिः कार्यो लोकगर्हाभयान्नरैः । तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ तस्मात्तस्योऽपि दातव्यमन्नमेव सदक्षिणम्' ॥ इति । व्यासेनाप्युक्तम्-'नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते । तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा' ॥ इति । एवं नारायणबलिः प्रेतस्य शुद्ध्यापादानद्वारेण श्राद्धादिसंप्रदानत्वे योग्यतां जनयतीति और्ध्वदेहिकमपि सर्वं कार्यमेव । अत एव षट्त्रिंशन्मतेऽपि और्ध्वदेहिकस्याभ्यनुज्ञा दृश्यते । 'गोब्राह्मणहतानां च पतितानां तथैव च । ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम्' ॥ इति । एवं संवत्सरादूर्ध्वमेव नारायणबलिं कृत्वौर्ध्वदेहिकं कार्यम् ।

नारायणबलिश्चेत्थं कार्यः । कस्याश्चिच्छुक्लैकादश्यां विष्णुं वैवस्वतं यमं च यथावदभ्यर्च्य तत्समीपे मधुघृतप्लुतांस्तिलमिश्रान्दश पिण्डान् विष्णुरूपिणं प्रेतमनुस्मरन् प्रेतनामगोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो दत्त्वा गन्धादिभिरभ्यर्च्य पिण्डप्रवाहणान्तं कृत्वा नद्यां क्षिपेत् न पत्न्यादिभ्यो दद्यात् । ततस्तस्यामेव रात्र्यामयुग्मा

(१) पूर्वं वेदितव्य् घ ।

न्ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्याह्ने विष्ण्वाराधनं कृत्वा एको-द्दिष्टविधिना ब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा पिण्डपितृयज्ञा-वृतोल्लेखनाद्यवनेजनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय च परिवारसहिताय चतुरः पिण्डान्दत्त्वा नामगोत्रसहितं प्रेतं संस्मृत्य विष्णोर्नाम संकीर्त्य पञ्चमं पिण्डं दद्यात् । ततो विप्रानाचान्तान्द-क्षिणाभिस्तोपयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्ध्या संस्मरन् गो-भूहिरण्यादिभिरतिशयेन सन्तोष्य ततः पवित्रपाणिभिर्विप्रैः प्रेताय तिलादिसहितमुदकं दापयित्वा स्वजनैः सार्धं भुञ्जीत ।

सर्पहते त्वयं विशेषः—संवत्सरं यावत्पुराणोक्तविधिना पञ्चम्यां नागपूजां विधाय पूर्णे संवत्सरे नारायणबलिं कृत्वा सौवर्णं नागं दद्यात् गां च प्रत्यक्षाम् । ततः सर्वमौर्ध्वदेहिकं कुर्यात् ।

नारायणबलिस्वरूपं च वैष्णवेऽभिहितम् । यथा—'एकादशीं समा-साद्य शुक्लपक्षस्य वै तिथिम् । वि(१)ष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥ दश पिण्डान्घृताभ्यक्तान्दर्भेषु मधुसंयुतान् । तिलमिश्रान्प्र-दद्याद्वै संयतो दक्षिणामुखः ॥ विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् । नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा ॥ धूपदीपप्रदानं च भ-क्ष्यं भोज्यं तथा परम् । निमन्त्रयेत विप्रान्वै पञ्च सप्त नवापि वा ॥ विद्यातपःसमृद्धान्वै कुलोत्पन्नान्समाहितान् । अपरेऽहनि संप्राप्ते मध्याह्ने समुपोषितः ॥ विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् । उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥ मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः । आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ॥ तृ-प्तान् ज्ञात्वा ततो विप्रांस्तृप्तिं पृष्ट्वा यथाविधि । हविष्यव्यञ्जनेनैव ति-लादिसहितेन च ॥ पञ्च पिण्डान् प्रदद्याच्च देव(२)रूपमनुस्मरन् । प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥ यमाय सा(३)नुचराय चतुर्थं पिण्डमुत्सृजेत् । मृतं संकीर्त्य मनसा गोत्रपूर्वमतः परम् ॥ विष्णोर्नाम गृहीत्वैव पञ्चमं पूर्ववत्क्षिपेत् । वि(४)प्रानाचम्य विधि-वद्दक्षिणाभिः समर्चयेत् ॥ एकं वृद्धतमं विप्रं हिरण्येन समर्चयेत् । गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥ ततस्तिलाम्भो विप्रा-स्तु हस्तैर्दर्भसमन्वितैः । क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ॥

---

( १ ) अर्चयेद्देवदेवेशं क । ( २ ) देवं रूपं ख ।
( ३ ) सानुचराय क ट । ( ४ ) विप्रेणाचम्य क ।

हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः । मित्रभृत्यजनैः सार्धं पश्चाद् भुञ्जीत वाग्यतः ॥ एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने । समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा' ॥ सर्पदंशनिमित्त सौवर्णनागदानं प्रतिकृतिरूपेण भविष्यत्पुराणे सुमन्तुनाऽभिहितम्—'सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम्। व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात्' ॥ इति ॥ ६ ॥

( वी०मि० ) उदकदानानन्तरं कृत्यमाह—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ॥
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥
मानुष्ये कदलीस्तम्भ(१)निःसारे सारमार्गणम् ॥
यः करोति स संमूढो जलबुद्बुदसन्निभे ॥ ८ ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ॥
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ९ ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ १० ॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ॥
अतो न रोदितव्यं हि क्रियाः कार्याः प्रय(२)त्नतः ॥११॥
इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ॥
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १२ ॥
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् ॥
प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥ १३ ॥

कृतमुदकदानं यैस्तान् स्नातान् जलाशयात् समुत्तीर्णान् मृदुशाद्वले नूतनोद्भूतहरिततृणावृते भूप्रदेशे सम्यक् स्थितान् पुत्रस्य प्रेतादीन् पुरातनैरितिहासैः 'मानुष्यः' इत्यादिश्लोकचतुष्टयरूपैस्तद्वर्गैरन्यैर्वा कुलवृद्धा अपवदेयुः शोकापनोदनयुक्तान् कुर्युः । ते च पुत्रादय इतिश्लोकचतुष्टयरूपमितिहासं सम्यक् श्रुत्वा यथावा-

(१) कदलीस्तम्भे निःसारे—इति क० ख० पु० पाठः । (२) स्वशक्तितः—इति० पु० पु० पाठः ।

लपुरःसराः सन्तो गृहं गच्छेयुः। तत्र वेश्मनो गृहस्य द्वारि नियताः संयतमनस्का निम्बपत्राणि विदश्य दन्तैः खण्डयित्वा आचम्याऽग्न्यादीन् समालभ्य स्पृष्ट्वाऽश्मनि प्रस्तरे पदं चरणं कृत्वा निधाय शनैः सत्वरं वेश्म प्रविशेयुरित्यर्थः। आदिपदेनाक्षतशम्यादिसङ्ग्रहः। तदाह वैजवापः–'अश्मा(१)नमालभन्ते अश्मा(२) पापं शमयत्विति, अश्मानमालभन्तेऽश्मेव स्थिरा भूयाः, शमग्निमग्निर्नः शर्म यच्छत्वि'ति। आश्वलायनः—'प्राप्य सदोऽश्मानरोमाग्निगोमयभक्षमप उपस्पृशन्ति'। इतिहासार्थस्तु—मानुष्ये मनुष्यसम्बन्धिनि जन्मकर्मप्रबन्धे कदलीकाण्डवत्सारहीने जलबुद्बुदवन्नश्वरे सारमार्गणं सारस्थिरबुद्धिं यः करोति स संमूढः जन्मान्तरीयस्वशरीरार्जितैः पुण्यपापैः स्वफलोपभोगार्थं पञ्चधा पृथिव्यादिपञ्चभूतात्मकतया सम्भृतो निर्मितः कायो यदि पृथिव्यादिकारणपञ्चकरूपतां प्राप्तस्तत्र भवतां का किमर्थं परिदेवनाऽनुशोचनम्। पृथ्वी समुद्रो देवताश्च नाशं यास्यन्ति यदि, तदा फेनवदस्थिरो मर्त्यलोकः प्राणिसमूहः कथं नाशं यास्यति न तु केवलं निष्प्रयोजनमेव परिदेवनं, किन्तु बान्धवैः शोकवशान्मुक्तं श्लेष्मयुक्ताऽश्रुपातमवशः प्रतीकाराक्षमः प्रेतो भुङ्क्तेऽतो न बान्धवै रोदितव्यम्। हि यतः प्रयत्नतः प्रेताऽनिष्टनिवारणपूर्वकं क्रिया श्राद्धादिरूपा क्रिया भवतीति ॥७–१३॥

(मिता०) एवमुदकदानं सापवादमभिधायानन्तरं किं कार्यमित्यत आह—

कृतोदकानिति। कृतमुदकदानं यैस्तान् कृतोदकान् स्नातान् सम्यगुदकादुत्तीर्णान्मृदुशाद्वले नवोद्गततृणचयावृतभूभागे सम्यक् स्थितान् पुत्रादीन् कुलवृद्धाः पुरातनैरितिहासैर्वक्ष्यमाणैरपवदेयुः शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ॥ ७ ॥

(मिता०) शोकनिरसनसमर्थेतिहासस्वरूपमाह—

मानुष्य इति। मनुष्यशब्देन जरायुजाण्डजादिचतुर्विधभूतजातं लक्ष्यते तस्य भावो मानुष्यं तत्र संसरणधर्मित्वेन कदलीस्तम्भवदन्तःसाररहिते जलबुद्बुदवदचिरविनश्वरे संसारे सारस्य स्थिरस्य मार्गणमन्वेषणं यः करोति स संमूढः अत्यन्तविनष्टचित्तः, तस्मात्संसारस्वरूपवेदिभिर्भवद्भिरित्थं न कार्यम् ॥ ८ ॥

(१)-(२) शमी—इति क० पु० पाठः।

( मिता० ) किंच—

पञ्चधेति । जन्मान्तरात्मीयशरीरजनितैः कर्मबीजैः स्वफलोपभोगार्थं पञ्चधा पृथिव्यादिपञ्चभूतात्मकतया पञ्चप्रकारं संभृतो निर्मित काय स यदि फलोपभोगनिवृत्तौ पञ्चत्वमागत पुन पृथिव्यादिरूपतां प्राप्तस्तत्र भवता किमर्था परिदेवना । निष्प्रयोजनत्वाश्चानुशोचन कर्तव्य, वस्तुस्थितेस्तथात्वात् । न हि केनचिद्वस्तुस्थितिरतिक्रमितुं शक्यते ॥ ९ ॥

( मिता० ) अपि च—

गन्त्रीति । नेदमाश्चर्यं मरणं नाम । यत पृथिव्यादीनि महान्त्यपि भूतानि नाशं गच्छन्ति । तथा समुद्रा अपि । जरामरणविरहिण अमरा अपि प्रलयसमये अवसान गच्छन्ति कथमिवाऽस्थिरतया फेनसंनिभो मरणधर्मा भूतसङ्घो विनाश न यास्यति । उचितमेव हि मरणधर्मिण प्रायणम् । अतो निष्प्रयोजन शोकसमावेश ॥ १० ॥

( मिता० ) अनिष्टापादकत्वादप्यनुशोचन न कार्यमित्याह—

श्लेष्मेति । यस्मादनुशोचद्भिर्बान्धवैर्वदननयननिर्गमित श्लेष्माश्रु वा यस्मादवशोऽकामोऽपि प्रेतो भुङ्क्ते तस्मान्न रोदितव्यं किन्तु प्रतहितेप्सुभि स्वशक्त्यनुसारेण श्राद्धादिक्रियाः कार्या ॥ ११ ॥

( मिता० ) इतीत्यादि । एव कुलवृद्धवचासि सम्यगाकर्ण्य त्यक्तशोका सन्तो बालानग्रत कृत्वा गृह गच्छेयु । गत्वा च वेश्मनो द्वारि स्थित्वा नियता सयतमनस्का निम्बपत्राणि विदश्य दशनैः खण्डयित्वा खादित्वा आचमन च कृत्वाग्न्युदकगोमयगौरसर्षपानालभ्य आदिग्रहणाद् 'दूर्वाप्रवालमग्निवृषभौ च'ति शङ्खोक्तौ दूर्वाङ्कुरवृषभावपि स्पृष्ट्वा अश्मनि च पद निधाय शनैरस्खलितं वेश्म प्रविशेयुः ॥ १२-१३ ॥

( वी०मि० ) पुत्रादीना कृत्य विदश्येत्यादिनाऽभिहितमन्यत्राप्यतिदिशति—

प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ॥

प्रेत सम्यगुद्वहनादिप्रकारेण स्पृशतामपिकारेणाऽनुगच्छतां च गृहप्रवेशनाग्निस्पर्शनादिकं कर्म कर्तव्यम् ॥

( वी०मि० ) ज्ञातितस्तेषां परं विशेष इत्याह—

इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १४ ॥

अनाथब्राह्मणोद्वहनाद् यज्ञफलमिच्छतां परेषां ज्ञातिभिन्नाना स्नानपूर्वकात् संयमात् प्राणायामान्न तु क्षणादेव शुद्धिर्न तु त्रिरात्राद्याशौचमित्यर्थः । तदाह पराशरः—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥
न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥

स्नेहादिना निर्हरणे त्वाह मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

त्रिरात्रं तद्गृहवासे सति, तदन्नभोजनात्तु दशाहमेवाऽऽशौचं ज्ञेयम् । शेषं सुबोधम् ॥ १४ ॥

( मिता० ) अतिदेशादाह—

प्रवेशनादिकमिति । यदेतत्पूर्वोक्तं निम्बपत्रदशनादि वेश्मप्रवेशनान्तं कर्म तन्न केवलं ज्ञातीनामपि तु परेषामपि धर्मार्थं प्रेतालङ्कारनिर्हरणादिकं कुर्वतां भवति । प्रवेशनादिकमित्यत्र आदिशब्दोऽमाङ्गलिकत्वात्प्रातिलोमक्रमाभिप्रायः । तेषां च धर्मार्थं निर्हरणादौ प्रवृत्तानां तत्क्षणाच्छुद्धिमिच्छतामसपिण्डानां स्नानप्राणायामाभ्यामेव शुद्धिः । यथाह पराशरः—'अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदेपदे यज्ञफलमनुपूर्वं लभन्ति ते । न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् । जलावगाहनात्तेषां सद्यः शौचं विधीयते' ॥ इति । स्नेहादिना निर्हरणे तु मनूक्तो विशेषः ( ५।१०१।१०२ )—'असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति । अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत्' ॥ इति । अत्रेयं व्यवस्था—यः स्नेहादिना शवनिर्हरणं कृत्वा तदीयमेवान्नमश्नाति तद्गृहे च वसति तस्य दशाहेनैव शुद्धिः । यस्तु केवलं तद्गृहे वसति न पुनस्तदन्नमश्नाति

तस्य त्रिरात्रम् । य पुनर्निर्हरणमात्र करोति न तद्गृहे वसति न च तदन्नमश्नाति तस्यैकाह इति । एतत्सजातीयविषयम् । विजातीय विषये पुनर्यज्जातीय प्रेत निर्हरति तज्जातिप्रयुक्तमाशौच कार्यम्। यथाह गौतम —'अवरश्चेत्पूर्ववर्णमुपस्पृशेत्पूर्वो वाऽवर तत्र तच्छ वोक्तमाशौचम्' इति । उपस्पर्शन निर्हरणम् । विप्रस्य शूद्रनिर्हरणे मासमाशौचम् । शूद्रस्य तु विप्रनिर्हरणे दशरात्रमित्येव शववदा शौच कर्तव्यमित्यर्थ ॥ १४ ॥

( वि०मि० ) न ब्रह्मचारिण कुर्युरित्युक्त सङ्कोचयन्नेव पित्रादि मरणे तत्कृत्यमाह—

आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ॥

सकटान्न च नाश्नीयान्न च तैः सह सविशेत्(१) ॥ १५ ॥

आचार्यादीन् निर्हृत्य अपिकारेण दग्ध्वा च जलाञ्जलिपूरकपि ण्डादिना सयोज्य व्रती ब्रह्मचारी व्रत्येव अभ्रष्टब्रह्मचर्य एव तिष्ठति । कटपदेनाशौच लक्ष्यते, तत्सहचरितमन्न सकटान्न तद्ब्रह्मचारी नाश्नीयान्न वा तैराशौचिभि सह सविशेत्र स्वपेद । सवसेदिति क्वचित्पाठ । तदाप्युपसर्गबलात्स एवार्थ । पितृपदेन मातापितरावे कशेषबलाद्गृह्येते । तदाह वसिष्ठ —'ब्रह्मचारिण शवकर्मणो व्रता न्निवृत्तिरन्यत्र मातापित्रो'रिति । आद्यचकारेणाऽऽशौचस्य द्वित यचकारेण श्राद्धस्य च ब्रह्मचर्यसमये निषेधस्य समुच्चय ।

असमाप्तव्रतस्याऽपि कर्तव्य ब्रह्मचारिण ।
निरन्वये सपिण्डे तु मृते (२)सति दयान्वित ॥
तदशौच पुरा चीर्त्वा कुर्यात्तत् पितृवत् क्रियाम् ।
यते किञ्चिन्न कर्तव्य न चान्येषा करोति स ॥

इति ब्रह्मपुराणात् ॥ १५ ॥

( मिता० ) ब्रह्मचारिण प्रत्याह—

आचार्येति । आचार्य उक्तलक्षण , माता च पिता च पितरौ उपा ध्यायश्च पूर्वोक्त , एतान्निर्हृत्यापि व्रती ब्रह्मचारी व्रत्येव न पुनरस्य व्रतभ्रश । कटशब्देनाशौच लक्ष्यते त सहचरितमन्न सकटान्न तद्ब्र ह्मचारी नादनीयात् । न चाशौचमि सह सवसेत् । एव वदता

(१) संवसेत्—इति मु० पु० पाठ । (२) मृतेऽपि—इ ति ख० पु० पाठ ।

आचार्यादिव्यतिरिक्तप्रेतनिर्हरणे तु ब्रह्मचारिणो व्रतलोप इत्यर्थादुक्तं भवति । अत एव वसिष्ठेनोक्तम्—'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः' इति ॥ १५ ॥

( वी०मि० ) आशौचिनां कृत्यमाह—

क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक् ॥
पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १६ ॥
जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ॥
वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ॥ १७ ॥

ते आशौचिनः क्रीतमयाचितलब्धं वा न तु पूर्वसिद्धमशनं भोक्तव्यं येषां तादृशो भवेयुः । इदं चाशक्तपरं, शक्तस्य त्वहोपवासः । अत्र सम्भवे 'त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन्नि'ति वसिष्ठवचनात् । अशक्तस्य त्वेक उपवासः । 'नैवास्य रात्रावन्नं पचेयु'रित्याश्वलायनवचनात् । पृथक् पृथक् स्त्रीपुरुषाः भूमौ खट्वादिव्यतिरेकेण स्वपेरन् । अत्र विशेषमाह गौतमः—'अधःशय्याशायिनो ब्रह्मचारिणः शवकर्मिणः' । मनुः—

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् पृथक् ॥

पिण्डयज्ञस्य पिण्डपितृयज्ञस्यावृता परिपाट्याऽवनेजनादिरूपयान्नं पूरकपिण्डरूपं प्रेताय दिनत्रयपर्यन्तं ज्ञातिभिर्देयम् । दिनत्रयमिति सकुल्यपरम । सपिण्डास्तु दशा(१)हं दद्युः ।

प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ।

इत्यादिवचनात् । जलमिति । जलं दुग्धं च मृन्मये पात्रद्वये पृथक् पृथक् आकाशे शिक्यादौ मरणाहोरात्रं व्याप्य पुत्रादिभिः प्रेतहितार्थं स्थाप्यम् । चकारेण तत्पूर्वकृत्यं दशाहं व्याप्याकाशे घटदानं समुच्चीयते ।

तस्मिन्निधेयमाकाशे दशरात्रं पयस्तथा ।
सर्वथा तापशान्त्यर्थमध्वश्रमविनाशनम् ॥

इति वचनात् । आशौचे सकलश्रौतस्मार्तक्रियानिवृत्तिप्रसक्तावाह वैतानेति । वितानोऽग्नीनां विस्तरस्तत्र भवा वैतानास्त्रेताग्नि-

(१) सपिण्डास्तु दकान्तं—इति ख० पु० पाठः ।

-साध्या अग्निहोत्रदर्शपूर्णमासाद्या उपासना अवश्यकर्तव्याः क्रियाः श्रुतिचोदनात् वेदेन 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिना विहितत्वात् । श्रु(१)त्युक्तत्वहेतुं वदता स्मार्तकर्मण्यधिकारो गम्यते ।

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।

श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥

इति मिताक्षरालिखितं व्याघ्रपादवचनमपि अत्र संवदति । चकारेणाऽस्थिसञ्चयनादिकमाशौचिकृत्यं समुच्चिनोति । तदाह विष्णुः—'चतुर्थे दिवसेऽस्थिसञ्चयनं तेषां च गङ्गाम्भसि प्रक्षेपः' । अस्थिसञ्चयनादीनां सप्रपञ्चनिरूपणं विस्तरतया तत्तद्ग्रन्थेषु विशिष्य दर्शनाद्यात्रोपेक्षितम् ॥ १६-१७ ॥

( मिता० ) आशौचिनां नियमविशेषमाह—

क्रीतेति । क्रीतमयाचितलब्धं वा अशनं येषां ते क्रीतलब्धाशनाः । भवेयुरिति शेषः । क्रीतलब्धाशननियमात्तदलाभेऽनशनमप्यौत्सिद्धं भवति । अत एव वसिष्ठः—'गृहान्यजित्वा अधःप्रस्तरे त्र्यहमनश्नन्त आसीरन् क्रीतानुत्पन्नेन(२) वर्तेरन्' इति । अधःप्रस्तर आशौचिनां शयनासनार्थस्तृणमयः प्रस्तरः । ते च सपिण्डा भूमावेव पृथक्पृथक् शयीरन् न खट्वादौ । मनुनाप्यत्र विशेषो दर्शितः ( ५।७३ ) 'अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् । मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ' ॥ इति । तथा गौतमेनापि विशेष उक्तः—'अधःशय्याशायिनो ब्रह्मचारिणः(३) शवकर्मिणः' इति । तथा पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया प्रेताय दिनत्रयं पिण्डरूपमन्नं तूष्णीं क्षितौ देयम् । यथाह मरीचिः—'प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् । प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः' ॥ इति । दर्भमन्त्रविवर्जितत्वमनुपनीतविषयम् । 'असंस्कृतानां भूमौ ( पिण्डं ) दद्यात्संस्कृतानां कुशेषु' इति प्रचेतः स्मरणात् । तथा कर्तृनियमश्च गृह्यपरिशिष्टाद्विज्ञेयः—'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्' ॥ इति । तथा द्रव्यविनियमश्च शुनःपुच्छेन दर्शितः—'शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् । प्रथमे-

(१) स्मृत्युक्त०—इति ख० पु० पाठः ।

(२) क्रीतोत्पन्नेन इति पाठान्तरम् । (३) दिवा सर्वे इति क० ।

ऽहनि यद् द्रव्यं तदेव स्याद्दशाहिकम् ॥ तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च' ॥ इति । पिण्डश्च पाषाणे देयः । 'भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युः' इति शङ्खस्मरणात् । न च 'दद्यु'रिति बहुवचनेनोदकदानवत्सर्वैः पिण्डदानं कार्यमित्याशङ्कनीयं, किन्तु पुत्रेणैव कार्यम् । तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन तदभावे मातृसपिण्डादिना कार्यम् । 'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ' इति गौतमस्मरणात् । पुत्रबहुत्वे पुनर्ज्येष्ठेनैव कार्यम् । 'सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्' ॥ इति मरीचिस्मरणात् । पिण्डसंख्यानियमश्च ब्राह्मणस्य दश पिण्डाः क्षत्रियस्य द्वादशैवेति । एवमाशौचदिवससंख्यया विष्णुनाभिहितम्—'यावदाशौचं प्रेतस्योदकमेकं पिण्डं च दद्युः' इति । तथा स्मृत्यन्तरेऽपि—'नवभिर्दिवसैर्दद्यान्नव पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत्' ॥ इति शुचित्ववचनमपरेद्युः क्रियमाणश्राद्धार्थब्राह्मणनिमन्त्रणाभिप्रायेण । योगीश्वरेण तु पिण्डत्रयदानमभिहितम् । अनयोश्च गुरुलघुकल्पयोरुदकदानविषयोक्ता विज्ञेया । अत्रापरः शातातपीयो विशेषः—'आशौचस्य तु ह्रासेऽपि पिण्डान्दद्याद्दशैव तु' । इति । त्रिरात्राशौचिनां पुनः पारस्करेण विशेषो दर्शितः—'प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥ त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा' । इति ॥ १६ ॥

( मिता० ) किञ्च—

जलमिति । जलं क्षीरं च मृन्मये पात्रद्वये पृथक् पृथगाकाशे शिक्यादावेकाहं स्थापनीयम् । अत्र विशेषानुपादानात्प्रथमेऽहनि कार्यम्, तथा पारस्करवचनात् । 'प्रेतात्र स्नाहीत्युदकं स्थाप्यं पिब चेदमिति क्षीरम्' । तथास्थिसंचयनं प्रथमादिदिनेषु कार्यम् । तथाह संवर्तः—'प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसञ्चयनं कार्यं तद्गोत्रजैः सह' ॥ इति । क्वचिद्द्वितीये त्वस्थिसंचय इत्युक्तम् । वैष्णवे तु चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात् तेषां च गङ्गाम्भसि प्रक्षेप इति । अतोऽन्यतमस्मिन्दिने स्वगृह्योक्तविधिनास्थिसंचयनं कार्यम् । अङ्गिरसा चात्र विशेषो दर्शितः—'अस्थिसञ्चयने यागो

देवानां परिकीर्तितः । प्रेतीभूतं तमुद्दिश्य यः शुचिर्न करोति चेत् ॥ देवतानां तु यजनं तं शपन्त्यथ देवताः' । देवताश्चात्र श्मशानवासिन्यः(१), तत्र (२)पूर्वदग्धाः 'श्मशानवासिनो देवाः शवानां परिकीर्तिताः' इति तेनैवोक्तम् । अतस्तान्देवानचिरमृतं च प्रेतमुद्दिश्य धूपदीपादिभिः पिण्डरूपेण चान्नेन तत्र पूजा कार्येत्युक्तं भवति । तथा वपनं च दशमेऽहनि कार्यम्—'दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च' ॥ इति देवलस्मरणात् । तथा स्मृत्यन्तरेऽपि—'द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः । तृतीये पञ्चमे वापि सप्तमे वा प्रदानतः' ॥ इति श्राद्धप्रदानाद्यर्थोऽयं नियम इति यावत् । वपनं च केषामित्याकाङ्क्षायामापस्तम्बेनोक्तम्—'अनुभाविनां च परिवापनम्' इति । अयमर्थः—शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डास्तेषां चाविशेषेण वपनमुताल्पवयसामित्यपेक्षायामिदमेवोपतिष्ठते अनुभाविनां च परिवापनमिति । अनु पश्चाद्भवन्तीत्यनुभाविनोऽल्पवयसस्तेषां वपनमिति । अनुभाविनः पुत्रा इति केचिन्मन्यन्ते । 'गङ्गायां भास्करक्षेत्रे मातापित्रो(३)र्गुरोर्मृतौ । आधानकाले सोमे च वपनं सप्तसु स्मृतम्' ॥ इति नियमदर्शनात् ॥

( मिता० ) अशुचित्वेन सकलश्रौतस्मार्तकर्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञानार्थमाह—

वैतानेति । वितानोऽग्नीनां विस्तारस्तत्र भवा वैतानाः त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते । प्रतिदिनमुपास्यत इत्युपासनो गृह्याग्निस्तत्र भवा औपासनाः सायंप्रातर्होम क्रिया उच्यन्ते । ता वैतानौपसना वैदिक्यः क्रियाः कार्याः । कथं वैदिकत्वमिति चेत् श्रुतिचोदनात् । तथा हि—'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिश्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव । तथा 'अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठात्' इति श्रुत्यौपासनहोमोऽपि चो(४)द्यते । अत्र च श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं गम्यते । अत एव वैयाघ्रपादेनोक्तम्—'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्माणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' ॥ इति । श्रौतानां च कार्यत्वाभि-

(१) वासिन ख० । (२) मृतपूर्वदग्धा क० । (३) गुरौ मृते क० । (४) बध्यते क० ।

धानं नित्यनैमित्तिकाभिप्रायेण। यथाह पैठीनसिः—'नित्यानि विनिवर्तेरन्वैतानवर्जं शालाग्नौ चैके' इति । नित्यानि विनिवर्तेरन्नित्यविशेषण आवश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां वैतानवर्जमित्यग्नित्रयसाध्यावश्यकानां पर्युदासः । 'शालाग्नौ चैके' इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः । अतस्तत्प्वाशौचं नास्त्येव। काम्यानां पुनः शौचाभावादननुष्ठानम् । मनुनाप्यनेनैवाभिप्रायेणोक्तम् (५।८४) 'प्रत्यूहेन्नाग्निषु क्रिया' इति। अग्निषु क्रिया न प्रत्यूहेदिति अनग्निसाध्यानां पञ्चमहायज्ञादीनां निवृत्तिः । अत एव संवर्तः-'होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा। पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः' ॥ इति । वैश्वदेवस्याग्निसाध्यत्वेऽपि वचनान्निवृत्तिः । 'विप्रो दशाहमासीत वैश्वदेवविवर्जितः' इति तेनैवोक्तत्वात् । 'सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते' इति यद्यपि सन्ध्याया विनिवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकं कुर्यात् । 'सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्' इति पैठीनसिस्मरणात् । यद्यपि 'वैतानोपासनाः कार्याः' इति सामान्येनोक्तं तथाप्यन्येन कारयितव्यम् । 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणात् । बृहस्पतिनाप्युक्तम्—'सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्' ॥ इति । तथा स्मार्तत्वेऽपि पिण्डपितृयज्ञश्रवणाकर्माग्रयण्यादिकश्च नित्यहोमः कार्य एव । 'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुहोममसगोत्रेण कारयेत्' ॥ इति जातूकर्ण्यस्मरणात् । यद्यपि साङ्गे कर्मण्यन्यकर्तृत्वं तथापि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात् । तस्यानन्यनिष्पाद्यत्वात् । अत एवोक्तम्—'श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' इति । यत्पुनः 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इति होमप्रतिषेधः स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः । तथा सूतकान्नभोजनमपि न कार्यम्।'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति यमस्मरणात् । उभयत्र जननमरणयोः । दशाहानित्याशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य सम्बन्ध्यन्नमभक्तुर्यैर्न भोक्तव्यम् । सकुल्यानां पुनर्न दोषः । 'सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्' इति तेनैवोक्तत्वात् । अयं च निषेधो दातृभोक्त्रोरन्यतरेण जनने मरणे वा ज्ञाते सति वै-

दितव्यः । 'उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्' ॥ इति षट्त्रिंशन्मतदर्शनात् । तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्तितः' ॥ इति बृहस्पतिस्मरणात् । तथाऽपरोपि विशेषः षट्त्रिंशन्मते दर्शितः—'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः' ॥ इति । तथाशौचपरिग्रहत्वेऽपि केषुचिद्द्रव्येषु दोषाभावः । यथाह मरीचिः—'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ॥ तिलौषधाजिने चैव पक्वापक्वे स्वयङ्ग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके' ॥ इति । पक्वं भक्ष्यजातं मोदकादि । अपक्वं तण्डुलादि । स्वयंग्रह इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः । पक्वापक्वाभ्यनु(१)ज्ञानमश्वसत्रप्रवृत्तविषयम् । 'अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत्' ॥ इत्यङ्गिरःस्मरणात् । अत्र पक्वशब्दो भक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे त्वङ्गिरसा विशेष उक्तः—'आशौचं यस्य संसर्गादापतेद् गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत्' ॥ इति । तदाशौचं केवलं गृहमेधिन एव न पुनस्तद्गृहे भवानां भार्यादीनां तद्द्रव्याणां च भवेदित्यर्थः । अतिक्रान्ताशौचेऽप्ययमेवार्थः स्मृत्यन्तरे दर्शितः—'अतिक्रान्ते दशाहे पश्चाज्जानाति चेद् गृही । त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्' ॥ इति ॥ १७ ॥

( वी०मि० ) एवमाशौचिकृत्यानि कर्माण्यभिधायाशौचविशेषान् तदपगमनिमित्तानि चाह प्रकरणसमाप्तिपर्यन्तेन—

आदन्तजन(२)नात् सद्य आचूडान्नैशिकी स्मृता ॥
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ १८ ॥(३)

---

(१) अनुज्ञातमन्न च ।    (२) आदन्तजन्मन —इति मु० पु० पाठ ।

(३) अयं श्लोको मिताक्षराव्याख्याने ग्रन्थेऽविद्यातिसहकारमैवत्वेनाग्रे पठितोऽपि वीरमित्रोदयव्याख्यया पुस्तकेनाऽङ्गीकृत्य प्रवर्तितो मत्सुतपुस्तकमुद्रणे तदनुरोधदेव स्थाप्य तथाख्यानं

दन्तजननचूडाव्रतादेशैस्तत्काला लक्ष्यन्ते । तत्र दन्तजननकालो 'दन्तजननं सप्तमे मासी'त्युपनिषदि दर्शितः । तेन सप्तममासात्प्राग्बाले प्रेते सपिण्डानां लघुः शौचं स्नानमात्रापनेयमाशौचम् । 'तृतीये वा प्रतिहित' इत्यौत्सर्गिकश्चूडाकालः । प्रथमाब्दस्तु कुलधर्मवशादापवादिक इति हारलता, तेन सप्तममारभ्य वर्षद्वयसमाप्तिमध्ये मृते नैशिकी अहोरात्रव्यापिका शुद्धिर्ब्राह्मणस्य स्मृता यमादिस्मृतावुक्ता । तदाह यमः—

ऊनद्विवार्षिके बाले प्रेतत्वमनुगच्छति ।
अदन्तजाते तनये शिशौ गर्भच्युते तथा ॥
निवृत्तचूडके बाले देशान्तरमथो गते ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥

इति । अदन्तजाते दन्तजननयोग्यसमयेऽप्यजातदन्ते, गर्भच्युते जातमृते, निवृत्तचूडके अकृतचूडके । अङ्गिराः—

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।
द्वाहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते सति ॥
निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरेव च ॥
शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्द्ध्वं मृते प्रेते द्वादशाहो विधीयते ॥
षड्वर्षं समतीतस्तु शूद्रः स म्रियते यदि ।
मासिकं तु भवेच्छौचमित्याङ्गिरसभाषितम् ॥

शङ्खः—

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समधिगच्छेच्चेन्मासं तस्य सबान्धवाः ॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा ।

व्रतादेशकालस्तु—

द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः ॥

इति परिभाषितो ब्रह्मपुराणे । तेन तृतीयवर्षमारभ्य षड्वर्षसमा-

---

मिताक्षराग्रन्थमपि मत्कृत्यौचित्येन प्रसक्तत्त इहैव संमुद्रयत इति न वैपरीत्यं सुधीभिराकलनीयम् । मिश्रमिश्रैस्तु जानद्भिरप्येतत् किमित्यन्यथैव पद्यमिदं व्याख्यातमिति तट्टीकावलोकनेन स्फुटं प्रतीयतेति तत्र मौनमेवाऽस्माकं वरमिति तदेव शरणीक्रियत इति सं० ।

र्सि यावद् बाले मृते ब्राह्मणस्य त्रिरात्रमाशौचमित्यर्थः। 'गर्भाष्टम' इत्यनुसारान्मासद्वयाधिकषड्वर्षपूर्तिपर्यन्तं मतादेशपूर्वकालः, तेन तावत्कालं त्रिरात्रमाशौचमिति तु शूलपाणिः । अतः परमुपनयनकालानन्तरं मृते ब्राह्मणस्य दशाहोरात्रव्यापकमाशौचम्। क्षत्रियवैश्यशूद्राणां तु नैशिकीस्थाने द्व्यहत्र्यहपञ्चाहान्याशौचानि। त्रिरात्रस्थाने क्षत्रियवैश्ययोः षडहनवाहव्यापिके अशुद्धी। तृतीयवर्षारम्भ तु द्वादशवर्षपर्यन्तमविवाहितस्य मरणे द्वादशरात्रं, विवाहितस्य तु षष्ठवर्षारम्भा(१)नन्तरं मरणे पूर्णाशौचमित्यङ्गिरोवचने स्पष्टम्। क्षत्रियादेर्दशाहस्थाने द्वादशाहादिकमग्रे स्वयमेव वक्ष्यति। इदं च सर्वं बालस्य पुंसो मरणे द्रष्टव्यम्। कन्यामरणे त्वग्रे वक्ष्यति। अयं च श्लोको मिताक्षरकृताऽग्रे पठितः शूलपाणिप्रभृतिभिस्त्वत्रैव पठित इति बहुग्रन्थसंवादादत्रैवास्माभिरपि व्याख्यातः ॥ १८ ॥

( मिता० ) वयोवस्थाविशेषादपि दशाहाद्याशौचस्यापवादमाह—

आदन्तेति । यावता कालेन दन्तानामुत्पत्तिस्तस्मिन्काले अतीतस्य बालस्य सम्बन्धिनां सद्यः शौचम् । चूडाकरणादर्वाक् मृतस्य सम्बन्धिनां नैशिकी निशायां भवा अहोरात्रव्यापिन्यशुद्धिः । मतादेश उपनयनं ततोऽर्वाक् चूडायाश्चोर्ध्वमतीतस्य त्र्यहमशुद्धिः । अत्र चादन्तजन्मनः सद्य इति यद्यप्यविशेषेणाभिधानं तथाप्यग्निसंस्काराभावे द्रष्टव्यम् । 'अदन्तजाते बाले प्रेते सद्य एव शुद्धिर्नास्याग्निसंस्कारो नोदकक्रिया' इति वैष्णवे अग्निसंस्काररहितस्य सद्यःशौचविधानात् । सति त्वग्निसंस्कारे 'अहस्त्वदत्तकन्यासु बालेषु च' इति वक्ष्यमाण एकाहः । तथा च यमः—'अदन्तजाते तनये शिशौ गर्भच्युते तथा । सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्' ॥ इति । नामकरणात्प्राक्सद्यः शौचमेव नियतम् । 'प्राङ् नामकरणात्सद्यः शुद्धिः' इति शङ्खस्मरणात् । चूडा(२)कर्म च प्रथमे तृतीये वा वर्षे स्मर्यते—'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्' ॥ इति स्मरणात् । ततश्च दन्तजननादूर्ध्वं प्रथमवार्षिकचूडाकर्मपर्यन्तमेकाहः । तत्र त्वकृतचूडस्य दन्तजनने सत्यपि त्रिवर्षं यावदेकाह एव । तथा च विष्णुः—'दन्तजातेऽप्यकृतचूडेऽहोरात्रेण शुद्धिः' इति । तत ऊर्ध्वं प्रागुपनयात् त्र्यहः । यत्तु

(१) वर्षारम्भानन्तर—इति ख० पु० पाठ । (२) कर्म द्वितीये ख० ।

मनुवचनम् ( ५।६७ )—'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते' ॥ इति । तस्याप्ययमेव विषयः । यत्तूनद्विवर्षमधिकृत्य तेनैवोक्तम् ( ५।६९ )—'अरण्ये काष्ठवत्त्यक्त्वा क्षि(१)पेयुस्त्र्यहमेव तु' इति । यच्च वसिष्ठवचनम्—'ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्' इति तत्संवत्सरचूडाभिप्रायेण । यत्तु अङ्गिरोवचनम्—'यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः । तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेत्' ॥ इति तद्वर्षत्रयादूर्ध्वं (२)कुलधर्मापेक्षया चूडोत्कर्षे वेदितव्यम् । 'विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी' इति तेनैवाभिहितत्वात् । न चायमेकाहो दन्तजननाभाव इति शङ्कनीयम् । न हि न्यूनतृतीयवर्षस्य दन्तानुत्पत्तिः सम्भवति । तथा सत्यपि दन्तजनने अकृतचूडस्यैकाहं विदधता विष्णुवचनेन विरोधश्च दुष्परिहरः स्यात् । तस्मात्प्राचीनैव व्याख्या ज्यायसी । यत्तु कश्यपवचनम्—'बालानामदन्तजातानां त्रिरात्रेण शुद्धिः' इति तन्मातापितृविषयम् । निरस्य तु पुमाञ्छुक्रमुप(३)स्पृश्य विशुध्यति । वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्' ॥ इति जन्यजनकसम्बन्धोपाधिकतया त्रिरात्रस्मरणात् । ततश्चायमर्थः—प्राङ् नामकरणात्सद्यः शौचं, तदूर्ध्वं दन्तजननादर्वागग्निसंस्कारक्रियायामेकाहः । इतरथा सद्यः शौचम् । जातदन्तस्य च प्रथमवार्षिकाच्चौलादर्वागेकाहः । प्रथमवर्षादूर्ध्वं त्रिवर्षपर्यन्तं कृतचूडस्य त्र्यहः । इतरस्य त्वेकाहः । वर्षत्रयादूर्ध्वमकृतचूडस्यापि त्र्यहः । उपनयनादूर्ध्वं सर्वेषां ब्राह्मणादीनां दशरात्रादिकमिति ॥ १८ ॥

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ॥
ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ॥ १९ ॥
पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद् ध्रुवम् ॥
तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ २० ॥

( वी० मि० ) शावं मरणनिमित्तकमस्पृश्यत्वलक्षणमाशौचं सपिण्डविप्राणां त्रिरात्रं, शूद्रसपिण्डानां दशरात्रमिष्यते । वाकारोऽन-

(१) क्षिपेत्तत्र्यहमेव क० । (२) कुलवर्णधर्मापेक्षया घ० ।
(३) मुपस्पृश्य इति ग० मुपस्पर्शाद्धि—इति मु० पाठः ।

वस्थायां, तृतीयभागमात्रस्य विवक्षितत्वात् । तेन क्षत्रियाणां चतूरात्र वैश्यानां पञ्चरात्रमस्पृश्यत्व सूचितम् । तथा च देवलः—

स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः ।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम् ।

उनद्विवर्षे तु प्रेते उभयोर्मातापित्रोरेवाऽस्पृश्यत्वलक्षणमहोरात्र व्यापकं विप्रस्य, क्षत्रियादेस्तु त्र्यहादिकमाशौचं न तु सपिण्डानामपि । सूतकं प्रसवनिमित्तकमस्पृश्यत्वं स्नानमात्रापनेयं मातुरेव, स्नानापनेयं तु पितुरपि ।

माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ।

इति सर्ववचनात् । एतदेवाह पित्रोरिति । अस्पृश्यत्वं सामान्यतो मातापित्रोर्मध्यस्येव, मातुस्तु ध्रुवं चिरकालव्यापि तदस्पृश्यत्वम् सुग्दर्शनात् । जननाशौचस्य क्वचित्कर्मण्यविरोधित्वमाह तदहरिति । पित्रादीनां पुत्ररूपेणोत्पत्ते पुत्रजन्मदिने तु दानादौ कर्तव्ये न प्रदुष्येतेत्यर्थः । हिशब्देनाऽवधारणार्थकेन मरणाशौचानयोरत्व जनन्यस्पृश्यत्वस्य सूचितम् ॥ १९—२० ॥

(मिता०) एवमाशौचिनो विधिप्रतिषेधरूपान्धर्मानभिधायाधुना आशौचनिमित्त कालनियमं चाह—

त्रिरात्रमिति । शवनिमित्तं शावम् । सूतकशब्देन च जननं विना तन्निमित्तमाशौचं लक्ष्यते । एवञ्च वदता जननमरणयोराशौचनिमित्तत्वमुक्तं भवति । तत्र जननमरणमुत्पन्नज्ञातमेव निमित्तम् । 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च' इत्यादिलिङ्गदर्शनात् । तथा—'विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्' ॥ इत्यादिवाक्यारम्भसामर्थ्याच्च । उत्पत्तिमात्रापेक्षत्वे ह्याशौचस्य दशाहाद्याशौचकालनियमास्तत्प्रभृतिका एवेति अनिर्दशज्ञातिमरणश्रवणे दशरात्रशेषमेवाशौचमर्थात्सिध्यतीति 'यच्छेषं दशरात्रस्य' इत्यनारम्भणीयं स्यात् । तस्माज्ज्ञातमेव जननं मरणं च निमित्तम् । तच्चोभयनिमित्तमप्याशौचं त्रिरात्रं दशरात्रं चेष्यते मन्वादिभिः । अत्राशौचप्रकरणे अहर्ग्रहणं चाहोरात्रोपलक्षणार्थम् । मन्वादिभिरिष्यत इति वचनं तदुक्तसपिण्डसमानोदकरूपविषयभेदप्रदर्शनार्थम् । तथा हि—'दशाहं शावमाशौचं सपिण्डेषु विधीयते । जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ जन्म-

न्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते । शवस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः' ॥ इत्येतैर्वाक्यैस्त्रिरात्रदशरात्रयोः समानोदकसपिण्डविषयत्वेन व्यवस्था कृता । अतः सपिण्डानां सप्तमपुरुषावधिकानामविशेषेण दशरात्रम् । समानोदकानां त्रिरात्रमिति । यत्पुनः स्मृत्यन्तरवचनम्—'चतुर्थे दशरात्रं स्यात्षण्निशाः पुंसि पञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु' ॥ इति तद्विगीतत्वान्नादरणीयम् । यद्यप्यविगीतं तथापि मधुपर्काङ्गपशुवालम्भनवल्लोकविद्विष्टत्वान्नानुष्ठेयम् । 'अस्व(१)र्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' इति मनुस्मरणात् । न च सप्तमे प्रत्यासन्ने सपिण्ड एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्यहमिति युक्तम् । एवमविशेषेण सपिण्डानामाशौचे प्राप्ते क्वचिन्नियमार्थमाह । ऊनद्विवर्षे संस्थिते उभयोरेव मातापित्रोर्दशरात्रमाशौचं न सर्वेषां सपिण्डानाम् । तेषां तु वक्ष्यति 'आदन्तजननात्सद्यः' इति । तथा च पैङ्गयः—'गर्भस्थे प्रेते मातुर्दशाहं, जाते उभयोः, कृते नाम्नि सोदराणां च' इति । अथवा अयमर्थः—ऊनद्विवर्षे संस्थिते उभयोर्मातापित्रोरेव अस्पृश्यत्वलक्षणमाशौचं न सपिण्डानाम् । तथा च स्मृत्यन्तरे—'ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषाम्' इति अस्पृश्यत्वलक्षणमभिप्रेतम् । इतरस्य पुनः कर्मण्यनधिकारलक्षणस्य सपिण्डेष्वपि 'आदन्तजन्मनः सद्यः' इत्यादिभिर्विहितत्वात् । अत्र दृष्टान्तः—सूतकं मातुरेव हीति । यथा सूतकं जननिमित्तमस्पृश्यत्वलक्षणमाशौचं मातुरेव केवलं तथोनद्विवर्षोपरमे मातापित्रोरेवास्पृश्यत्वमिति । ऊनद्विवर्षे सपिण्डानामस्पृश्यत्वं प्रतिषेधताऽन्यत्रास्पृश्यत्वमभ्यनुज्ञातं भवति । तथा च देवलः—'स्वाशौचकालाद्विज्ञेयं स्पर्शनं च त्रिभागतः । शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम्' ॥ इति । एतच्चानुपनीतप्रायणनिमित्ते अतिक्रान्ताशौचे च त्रिरात्रादौ वेदितव्यम् । उपनीतविषयेऽपि तेनैवोक्तम्—'दशाहादित्रिभागेन कृते सञ्चयने क्रमात् । अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥ त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु । भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैः' ॥ इति । द्व्युत्तरैर्दशभिः त्र्युत्तरैर्दशभिः षडुत्तरैः पञ्चदशभिरिति द्रष्टव्यम् ॥ १२ ॥

---

(१) इदं वचनं पूर्वमाचाराध्याये आलोचनीयम् ।

( मिता० ) जनननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह—

पित्रोरिति । सूतकं जनननिमित्तमस्पृश्यत्वलक्षणमाशौचं पित्रोर्मातापित्रोरेव न सर्वेषां सपिण्डानाम् । तत्रास्पृश्यत्वं मातुर्ध्रुवं दशाहपर्यन्तं स्थिरमित्यर्थः । कुतः तदसृग्दर्शनात् तस्याः सम्बन्धित्वेनासृजो दर्शनात् । अत एव वसिष्ठः—'नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते' ॥ इति । पितुस्तु ध्रुवं न भवति स्नानमात्रेणास्पृश्यत्वं निवर्तते । यथाह संवर्तः—'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः' ॥ इति । माता शुद्ध्येद्दशाहेनेत्येतच्च संव्यवहारयोग्यतामात्रम् । अदृष्टार्थेषु पुनः कर्मसु पैठीनसिना विशेष उक्तः—'सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत् । मासेन स्त्रीजननीम्' इति । अङ्गिरसा च सपिण्डानामस्पृश्यत्वाभावः स्पष्टीकृतः । 'सूतके सूतिकावर्ज्यं संस्पर्शो न निषिध्यते । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते' ॥ इति । यस्मिन्दिवसे कुमारजननं तदहर्न प्रदुष्येत तन्निमित्तदानाद्यधिकारापहारकत्वं भवतीत्यर्थः । यस्मात्तस्मिन्नहनि पूर्वेषां पित्रादीनां पुत्ररूपेण जन्म उत्पत्तिस्तस्मात्तदहर्न प्रदुष्येत । तथा च वृद्धयाज्ञवल्क्येनोक्तम्—'कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः । हिरण्यभूगवाश्वाजवासःशय्यासनादिषु ॥ तत्र सर्वं प्रतिग्राह्यं कृतान्नं न तु भक्षयेत् । भक्षयित्वा तु तन्मोहाद् द्विजश्चान्द्रायणं चरेत्' ॥ इति । व्यासेनाप्यत्र विशेष उक्तः—'सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि' ॥ मार्कण्डेयेनाप्युक्तम्—'रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके' ॥ इति ॥ २० ॥

( वी० मि० ) एकस्मिन्नशौचे सत्यशौचनिमित्तान्तरपाते प्रतिनिमित्तमशौचावृत्तिं प्रसक्तामपवदति—

अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ॥

अन्तरा एकस्य पूर्णाशौचस्य जनननिमित्तकस्य शावस्य च आद्यभागद्वयमध्ये सपिण्डस्य जन्मनि मरणे चाऽऽद्याशौचस्य शेषै-

स्वावशिष्टैरहोभिर्विशुद्ध्यति न तूत्तराशौचयोग्यदशरात्रादिभिः । तदुक्तं ब्रह्मपुराणे—

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते चाऽऽद्यात्सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृता ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

अत्र चतुर्धा विभक्तस्य पूर्णाशौचस्य भागद्वयमध्ये तादृशाशौचान्तरपाते आद्याशौचव्यप(१)गमेन तदूर्ध्वमुपान्त्यादिनपर्यन्तं तादृशाशौचान्तरपाते द्वितीयाशौचव्यपगमेन शुद्धिरित्यर्थः । अशौचान्त्यदिने तु विष्णुः—'रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेण' । अत्र प्रकरणे रात्रिदिनशब्दा अहोरात्रपराः, तेन अहोरात्रावशिष्टेऽशौचेऽशौचान्तरपातेऽन्त्यदिनातिरिक्तं दिनद्वयेन शुद्धिः । आशौचान्त्यदिवसस्य शेषे प्राचीप्रकाशकाले सूर्योदयात्प्राक् तादृशाशौचान्तरपाते सूर्योदयानन्तरत्रिरात्रेण शुद्धिरित्यर्थः । वर्धितत्र्यहत्र्यहाशौचयोः सम्पूर्णाशौचपाते तूत्तरेणैव शुद्धिरुत्तरस्य गुरुत्वादिति वदन्ति । इदं तु सम्पूर्णाशौचपरम् । असम्पूर्णाशौचानां समव्यापकानां समानजातीयानां सन्निपाते तु चरमाशौचव्यपगमेनैव शुद्धिः ।

परतः परतः शुद्धिरवृद्धौ विधीयते ।

इति देवलवचनात् । विषयव्याप्यव्यापकयोर्विजातीययोश्चाशौचयोः सन्निपाते कूर्मपुराणम्—

आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥

आद्यानामशौचानां गरीयसात्राधिककालव्यापकेन मरणमल्पदिनव्यापकमपि पूर्वजातमुत्तरजातं वा मरणाशौचं प्रसवनिमित्तकं सूतिकाया दशाहास्पृश्यत्वलक्षणमशौचं न मरणाशौचबाध्यं, रजःसम्बन्धनिमित्तकत्वेन प्रयोजकत्वात् । 'अतः सूतके चेदो(२)त्थाना'दिति (३)पारस्करसम्बन्धाच्चेति दिक् ॥

---

(१) समेन—इति ख० पु० पाठः ।
(२) वेदोन्माना—इति ख०, वेदोत्थाना—इति क० पु० पाठः ।
(३) पाठे स्वरस०—इति ख० पु० पाठः ।

( मिता० ) आशौचमध्ये पुनर्जनने मरणे वा जाते 'प्रतिनिमित्तं नैमित्तिकमावर्तते' इति न्यायेन पुनर्दशाहाद्याशौचप्राप्तौ तदपवादमाह—

अन्तरेति । वर्णापेक्षया वयोवस्थापेक्षया वा यस्य यावानाशौचकालस्तदन्तरा तत्समस्य ततो न्यूनस्यस्य वाशौचस्य निमित्तभूते जनने मरणे वा जाते पूर्वाशौचावशिष्टैरेवाहोभिर्विशुद्ध्यति । न पुनः पश्चादुत्पन्नजननादिनिमित्तं पृथक्पृथगाशौचं कार्यम् । यदा पुनरल्पाद्वर्तमानाशौचाद्दीर्घकालमाशौचमन्तरा पतति तदा न पूर्वशेषेण शुद्धिः । यथाहोशनाः—'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यति' ॥ इति । यमोऽप्याह—'अघ(१)वृद्धिमदाशौचं पश्चिमेन समापयेत्' इति । अत्र चान्तरा जन्ममरणे इति यद्यप्यविशेषेणाभिहितं तथापि न सूतकान्तर्वर्तिनः शावस्य पूर्वाशौचशेषेण शुद्धिः । यथाहाङ्गिराः—'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्' ॥ इति । तथा षट्त्रिंशन्मतेऽपि—'शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी' ॥ इति । तस्मान्न सूतकान्तःपातिनः शा(२)वाशौचस्य पूर्वशेषेण शुद्धिः किन्तु शावान्तःपातिन एव सूतकस्य । तथा सजातीयान्तःपातित्वेऽपि शावस्य क्वचित्पूर्वशेषेण शुद्धेरपवादः स्मृत्यन्तरे दर्शितः—'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्' ॥ इति । अयमर्थः— मातरि पूर्वं मृतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमः स्यात्तदा न पूर्वशेषेण शुद्धिः किन्तु पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः कार्या । तथा पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः किन्तु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षिपेत्-इति । तथाऽऽशौचसन्निपातकालविशेषकृतोऽप्यपवादो गौतमेनोक्तः—'रात्रिशेषे सति द्वाभ्यां प्रभाते सति तिसृभिः' इति । अयमर्थः–रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचान्तरं सन्निपतेत्तर्हि पूर्वाशौचं समाप्यानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः । प्रभाते पुनस्तस्या रात्रेः पश्चिमे यामे जननाद्याशौचान्तरसन्नि-

(१) अहोवृद्धिमद् ख० । (२) शावस्य ख० ।

पाते सति तिसृभी रात्रिभिः शुद्धिर्न पुनस्तच्छेषमात्रेण । शातातपेनाप्युक्तम्—'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्' इति । प्रेतक्रिया पुनः सूतकसन्निपातेऽपि न निवर्तत इति तेनैवोक्तम्–'अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः ॥ प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् । तथैवाशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि' ॥ इति । तथा शावाशौचयोः सन्निपातेऽपि प्रेतकृत्यं कार्यम् , तुल्यन्यायत्वात् । तथा जातकर्मादिकमपि पुत्रजन्मनिमित्तकमाशौचान्तरसन्निपातेपि कार्यमेव । तथाह प्रजापतिः—'आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति' ॥ इति ॥

गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥ २१ ॥

( वी० मि० ) गर्भस्रावे गर्भपाते सति नष्टभार्याया गर्भिण्याः स्त्रिया गर्भाधिकरणमाससमसंख्यान्यहोरात्राणि तदपगमरूपायास्तदपगमक्षणोत्पन्नाऽदृष्टादिरूपाया वा शुद्धेः कारणम् । अत्र निशा इति बहुवचनाद् यतःप्रभृति मासानां बहुत्वं तत्रेयं व्यवस्था । अनेन तृतीयमासमारभ्य षण्मासपर्यन्तं त्रिरात्रचतूरात्रादिकमाशौचं भवति ।
ब्रह्मपुराणे—

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यते ।
सद्यः शौचं सपिण्डानां गर्भस्य पतने सति ॥

तुशब्देन शुद्धावपि कर्माधिकारश्चतुर्थदिने व्यवच्छिन्नः ।

दैवकर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ।

इति वचनात् । इदं च वचनं ब्राह्मणीपरं, तृतीयमासे क्षत्रियादीनां गर्भस्रावे अशौचान्तरस्मरणात् । तदाह मरीचिः—

गर्भस्रुत्यां यथामासमाचिरे तूत्तमे त्र्यहम् ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ।

मासत्रयादूर्ध्वं गर्भस्रुत्यां यथामाससंख्यान्यहानि ततोऽचिरे मासत्रयाभ्यन्तरे तु उत्तमे ब्राह्मण्यां त्रिरात्रम् । राजन्यादौ गर्भस्रुत्यां चतूरात्रादिकमित्यर्थः । कूर्मपुराणे—

गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ।
यथेच्छाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ॥

अत्यन्तनिर्गुणे वेदैकदेशस्वक्रियाशून्ये । यथेच्छाचरणे सर्वाशित्वसर्वविक्रयित्वादिमति ॥ २१ ॥

( मिता० ) पूर्णप्रसवकालजननाशौचमभिधायाधुना अप्राप्तकालगर्भनिःसरणनिमित्तमाशौचमाह—

गर्भस्राव इति । स्रवतिर्यद्यपि लोके द्रवद्रव्यकर्तृके परिस्पन्दे प्रयुज्यते तथाप्यत्र द्रवाद्रवद्रव्यसाधारणरूपेऽधःपतने वर्तते । कुतः, द्रवत्वस्य प्रथममास एव सम्भवात्तत्र च मासतुल्या निशा इति बहुवचनानुपपत्तेः । गर्भस्रावे यावन्तो गर्भग्रहणमासास्तत्समसंख्याका निशाः शुद्धेः कारणम् । एतच्च स्त्रिया एव । 'गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां, स्नानमात्रमेव पुरुषस्य' इति वृद्धवसिष्ठस्मरणात् । यत्पुनर्गौतमेन 'त्र्यहं वे'ति त्रिरात्रमुक्तं तन्मासत्रयादर्वाग्वेदितव्यम् । 'गर्भच्युत्यां यथामासमचिरे तूत्तमे त्र्यः । राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥ अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता' ॥ इति मरीचिस्मरणात् । अचिरे मासत्रयादर्वाक् गर्भस्रावे उत्तमे ब्राह्मणजातौ त्रिरात्रमित्यर्थः । एतच्च षण्मा(१)सपर्यन्तं द्रष्टव्यम् । सप्तमादिषु पुनः परिपूर्णमेव प्रसवाशौचं कार्यम् । तत्र परिपूर्णाङ्गस्य जीवतो निर्गमदर्शनात् । 'षण्मासाभ्यन्तरे यावद्गर्भस्रावो भवेद्यदा । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते । सद्यःशौचं सपिण्डानां गर्भस्य पतने सति' ॥ इति स्मरणात् । एतच्च सपिण्डानां सद्यःशौचविधानं द्रवभूतगर्भपतने वेदितव्यम् । यत्पुनर्वसिष्ठवचनम्—'ऊनद्विवार्षिके प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्' इति तत्पञ्चमषष्ठयोः कठिनगर्भपतनविषयम् । 'आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत (२)ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥ स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् । पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्' ॥ इति मरीचिस्मरणात् । सप्तममासप्रभृतिमृतजनने जातमृते वा सपिण्डानां जननिमित्त परिपूर्णमाशौचम् । 'जातमृते मृतजाते वा सपिण्डानां दशाहम्' इति हारीतस्मरणात् । 'अतः

( १ ) पर्यंतं क० ।   ( २ ) अत ऊर्ध्वं प्रसवो दशाह घ० ।

सूनके चेदोत्थानाशौचं सूतकवत्' इति पारस्करवचनाच्च । आ उत्थानादा सूतिकाया उत्थानाद्दशाहमिति यावत् । सूतकवदिति शिशुपरमनिमित्तोदकदानरहितमित्यर्थः । बृहन्मनुरपि—'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः । शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते' ॥ इति । तथा च स्मृत्यन्तरमपि—'अन्तर्दशाहोपरतस्य सू(१)तिकाहोभिरेवाशौचम्' इति । एवमादिवचननिचयपर्यालोचनया सपिण्डानां जननिमित्ताशौचसंकोचो नास्तीति गम्यते । यत्पुनर्बृहद्विष्णुवचनम्—'जाते मृते मृतजाते वा कुलस्य सद्यः शौचम्' इति तच्छिशूपरमनिमित्तस्याशौचस्य स्नानाच्छुद्धिप्रतिपादनपरं न प्रसवनिमित्तस्य । तथा च पारस्करः–'गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्' इति, सपिण्डानां प्रसवनिमित्तस्य विद्यमानत्वात् । 'जीवञ्जातो यदि प्रेयात्सद्य एव विशुद्ध्यति' इति प्रेताशौचाभिप्रायम् । तथा च शङ्खोक्तम्—'प्राङ् नामकरणात्सद्यः शौचम्' इति । यत्पुनः कात्यायनवचनम्—'अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया' ॥ इति, तदपि वैष्णवेन समानार्थम् । यदा तु न प्रेतं नैव सूतकमिति पाठस्तदा सूतकमस्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः । अथवायमर्थः—अन्तर्दशाहे यदि शिशूपरमस्तदा न प्रेताशौचं, यदि तत्र सपिण्डजननं तदा सूतकमपि नैव कार्यं, किंतु पूर्वाशौचेनैव शुद्धिरिति । यत्तु बृहन्मनुवचनम्—'जीवञ्जातो यदि ततो मृतः सूतक एव तु । सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्' ॥ इति । यच्च बृहत्प्रचेतोवचनम्—'मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति । मातुः शुद्धिर्दशाहेन (२)सद्यः शुद्धास्तु गोत्रिणः' ॥ इति तत्रेयं व्यवस्था—जननानन्तरं नाभिवर्धनात्प्राङ् मृतौ पित्रादीनां जनननिमित्तमाशौचं दिनत्रयम् । सद्यः शौचं त्वग्निहोत्राद्यर्थम् । 'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचम्' इति शङ्खस्मरणात् । नाभिवर्धनोत्तरकाले तु शिशुप्रायणेऽपि जनननिमित्तं संपूर्णमाशौचं सपिण्डानाम् । 'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते' ॥ इति जैमिनिस्मरणात् ।

---

( १ ) सूतकाशौमि ग० । ( २ ) सद्यः शौचास्तु घ० ।

मनुनाप्ययमर्थो दर्शित (५।६६)—'रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति । रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला' ॥ इति । पूर्वभागस्यार्थो दर्शित । उत्तरस्य त्वयमर्थः—रजसि निःसरणादुपरते निवृत्ते रजस्वला स्त्री स्नानेन साध्वी दैवादिकर्मयोग्या भवति । स्पर्शादिविषये पुनरनुपरतेऽपि रजसि चतुर्थेऽहनि स्नानाच्छुद्धिर्भवति । तदुक्तं वृद्धमनुना—'चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकी' इति । तथा स्मृत्यन्तरम्—'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति' ॥ पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणार्थम् । यदा रजोदर्शनादारभ्य पुनः सप्तदशदिनाभ्यन्तरे रजोदर्शनं तदा अशुचित्वं नास्त्येव । अष्टादशे त्वेकाहाच्छुद्धिः । एकोनविंशे द्व्यहात् । तत उत्तरेषु त्र्यहाच्छुद्धिः । यथाहात्रिः—'रजस्वला यदि स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहं स्यादसौ द्व्यहम् । विंशःप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्' ॥ इति । यत्तु 'चतुर्दशदिनादर्वागशुचित्वं न विद्यते' इति स्मृत्यन्तरं, तत् स्नानप्रभृतित्वमभिप्रेत्य इतो न विरोधः । अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयः । यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येण रजोनिर्गमस्तस्यास्त्रिरात्रमेवाशौचम् । तया च यावत्त्रिरात्रं स्नानादिरहितया स्थातव्यम् । 'रजस्वला त्रिरात्रमशुचिर्भवति सा च नाञ्जीत नाभ्यञ्जीत नाप्सु स्नायादधः शयीत न दिवा स्वप्यात् न ग्रहान्निरीक्षेत नाग्निं स्पृशेत् नाश्नीयाच्च रज्जुं सृजेत न च दन्तान् धावयेत् न हसेच्च किञ्चिदाचरेत् अखर्वेण पात्रेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वेति विज्ञायते' इति वसिष्ठस्मरणात् ।

आङ्गिरसेऽपि विशेषः—'हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी । रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात्' ॥ इति । पाराशरेऽपि विशेषः—'स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत्' ॥ इति । उशनसाप्यत्र विशेषो दर्शितः—'ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥ चतुर्थे

ऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचेलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः। अन्ते च वाससां त्यागस्ततः शुद्धा भवेच्च सा॥ दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति' । इति । अयं चातुरमात्रे स्नानप्रकारोऽनुसरणीयः । 'आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः। स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः' ॥ इति पराशरस्मरणात्।

यदा तु रजस्वलायाः सूतिकाया वा मृतिर्भवति तदायं स्नानप्रकारः—'सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः। कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥ पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि' ॥ रजस्वलायास्तु—'पञ्चभिः स्नापयत्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्' ॥ इति । एतच्च रजोदर्शनपुत्रजन्मादि यद्युदयोत्तरकालमुत्पन्नं तदा तद्दिवसप्रभृत्याशौचाहोरात्रगणना कार्या। यदा तु रजन्यां रजोदर्शनपुत्रजन्मादि जातं तदार्धरात्रात्प्राक् जननाद्युत्पत्तौ पूर्वदिवसैकदेशव्यापित्वेऽपि आशौचस्य तत्पूर्वदिवसप्रभृत्येव गणना कार्येत्येकः कल्पः। रात्रिं त्रेधा विभज्याद्ये भागद्वये जननादौ जाते (१)पूर्वदिनं ग्राह्यमिति द्वितीयः । प्रागुदयादित्यपरः। यथाह कश्यपः—'उदिते तु यदा सूर्ये नारीणां दृश्यते रजः। जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥ अर्धरात्रावधिः कालः सूतकादौ विधीयते । रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ॥ उत्तरांशः प्रभातेन युज्यते ऋतुसूतके। रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥ पूर्वमेव दिनं ग्राह्यं या(२)वन्नोदयते रविः' ॥ इति। एतेषां च कल्पानां देशाचारानुसारतो व्यवस्था विज्ञेया।

इदं चाशौचमाहिताग्नेरुपरमे संस्कारदिवसप्रभृति कर्तव्यम्। अनाहिताग्नेस्तु मरणदिवसप्रभृति संचयनं तूभयोरिति संस्कारदिवसप्रभृतीति विवेचनीयम्। यथाहाङ्गिराः—'अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः। शुद्धिः संचयनं दाहान्मृताहस्तु (३)यथाविधि' ॥ इति। संस्कारकर्मण इति श्रवणादाहिताग्नौ पितरि देशा-

(१) अशौचपूर्वदिनं घ. । (२) यावन्नाभ्युदितो रविः घ. । (३) यथातिथीति घ.।

न्तरमृते तत्पुत्रादीनामासंस्कारात्सन्ध्यादिकर्मलोपो नास्तीत्यनुसन्धेयम्। तथा च पैठीनसिः—'अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते सति' ॥ इति ॥ २० ॥

विप्रगो(१)नृपहतानामन्वक्षं चात्मघातिनाम् ॥

(वी०मि०) विप्रादिना हतानां, मरणान्तिकप्रायश्चित्तार्थमथवा प्रयागमरणजन्यफलार्थमात्मघातिनां च मरणे तत्सपिण्डानामन्वक्ष चक्षुरुन्मीलनकालव्यापकमशौचं भवति, न तु दशाहादिकमित्यर्थः। चकारेण राजाज्ञादिना सद्यःशौचस्य समुच्चयः। तदाह यमः—

डिम्बाहवहतानां च विद्युता पार्थिवेन च।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ॥

इत्यादि।

व्यापादयेद्य आ(२)त्मानं स्वयं योऽग्न्युदकादिना।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥

इत्यङ्गिरोवचनं क्रोधादात्मघातिनमभिप्रेत्य।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥

इति वृद्धगार्ग्यवचनं मरणादिकप्रायश्चित्तादिव्यतिरेकेणेति दिक् ॥

(मिता०) सपिण्डत्वादिना दशाहादिप्राप्तौ क्वचिन्मृत्युविशेषेऽपवादमाह—

हतानामिति। नृपोऽभिषिक्तः क्षत्रियादिः। गोग्रहणं शृङ्गिदंष्ट्र्यादितिरश्चामुपलक्षणार्थम्। विप्रग्रहणम(३)न्त्यजोपलक्षणम्। एतैर्हतानां सम्बन्धिनो ये सपिण्डास्तेषाम्। विषोद्बन्धनादिभिः बुद्धिपूर्वमात्मानं ये व्यापादयन्ति ते आत्मघातिनः। आत्मघातिग्रहणं 'पाखण्ड्यनाश्रिता' इत्येकयोगोपात्तपतितमात्रोपलक्षणार्थम्। तत्सम्बन्धिनां चान्वक्षमनुगतमक्षमन्वक्षं सद्यः शौचमित्य(४)र्थः। तत्सम्बन्धिनां च

(१) हतानां नृपगोविप्रैरन्वक्ष इति मु० पु० पाठः।

(२) व्यापादयेत्तथात्मान-इति क० पु० पाठः।

(३) अन्त्यजोपलक्षणमित्यस्य अन्त्यजानामप्युपलक्षणमित्यर्थः। तद्धतानामपि सद्य शुचित्वविधानात्। (४) शौचमित्यर्थः न पुनः ख०।

सान्वक्षं यावद्दर्शनमाशौचं न पुनर्दशाहादिकम् । तथा च गौतमः—'गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्चायुद्धे प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्' इति । क्रोधग्रहणं प्रमादव्यापादितनिरासार्थम् । अयुद्धग्रहणं युद्धहतस्यैकाहमाशौचमस्तीति ज्ञापनार्थम् । 'ब्राह्मणार्थे विपन्नानां योषितां गोग्रहेपि च । आहवेऽपि हतानां च एकरात्रमशौचकम्' ॥ इति स्मरणात् । एतच्च युद्धकालक्षतेनैव कालान्तरविपन्नस्य । समरमूर्धनि हतस्य पुनः सद्यः शौचम् । यथाह मनुः ( ५।९८ )—'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः सन्तिष्ठते यज्ञस्तथा शौचमिति स्थितिः' ॥ इति ॥

प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः ॥ २२ ॥

( वी० मि० ) प्रोषिते देशान्तरस्थे यत्रस्थेन प्रथमदिवस एव सपिण्डजननमरणेन तद्देशमृते सपिण्डसकुल्यादौ च त्रिरात्रैर्दशरात्रैर्यावानेव कालोऽवशिष्टस्तावदेवाऽऽशौचं भवतु न तु श्रवणानन्तरम् । दशरात्रादिपूर्णे च मरणानन्तरं दशरात्रादावशौचकाले स्नानपूर्वकमुदकं दत्त्वैव शुचिर्भवति । जननाशौचे तु न स्नानमपि दशरात्राद्यनन्तरमस्ति ।

नाऽशुच्यं प्रसवस्याऽस्ति व्यतीतेषु दिनेष्वपि ।

इति देवलसंवादात् । उदकं दत्त्वेति वत्सरानन्तरं पूर्णाशौचश्रवणपरमसम्पूर्णाशौचपरं च । पूर्णाशौचमधिकृत्यान्यत्र त्वाह देवलः—

अशौचाहःस्वतीतेषु बन्धुश्चेच्छ्रूयते मृतः ।
तत्र त्रिरात्रमाशुच्यं भवेत्संवत्सरान्तरे ॥
ऊर्ध्वं संवत्सरार्द्धात्तु श्रूयते चेन्मृतः स्वकैः ।
भवेदेकाहमेवाऽत्र तच्च संन्यासिनां न तु ॥

संवत्सरान्तरे षण्मासमध्ये एकाहं, नवममासादूर्ध्वं 'श्रुत्वा दशम्याः पक्षिणी'ति गौतमेन विहितायाः पक्षिण्याः 'समं स्या'दिति न्यायेन षण्मासोर्द्ध्वं वर्षमध्यकालस्यार्द्धे मासत्रये व्यवस्थितत्वादिति दिक् ॥ २२ ॥

(मिता०) ज्ञातस्यैव जननादेराशौचनिमित्तत्वाज्जन्मादिदिनादुत्तरकालेऽपि ज्ञाते दशाहादिप्राप्तावपवादमाह—

प्रोषित इति । प्रोषिते देशान्तरस्थे यत्रस्थेन प्रथमदिवस एव

सपिण्डजननादिकं न ज्ञायते तस्मिन्सपिण्डे कालस्य दशाहाद्यवच्छिन्नस्य यः शेषोऽवशिष्टकालः स एव शुद्धिहेतुर्भवति । पूर्णे पुनराशौचकाले दशाहादिके प्रेतायोदकं दत्त्वा शुद्धिर्भवति । उदकदानस्य स्नानपूर्वकत्वात्स्नात्वोदकं दत्त्वा शुचिर्भवति । तदुक्तं मनुना (५।७७)—'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः'॥ इति । 'पूर्णे दत्त्वोदकं शुचिः' इति प्रेतोदकदानसहचरितस्याशौचकालस्य शुद्धिहेतुत्वविधानात् जन्मन्यतिक्रान्ताशौचं सपिण्डानां नास्तीति गम्यते । पितुस्तु निर्दशेऽपि जनने स्नानमस्त्येव । 'श्रुत्वा पुत्रस्य जन्म च' इति वचनात् । एतच्च पुत्रग्रहणं जन्मनि सपिण्डानामतिक्रान्ताशौचं नास्तीति ज्ञापकम् । अन्यथा 'निर्दशं ज्ञातिमरणं श्रुत्वा जन्म च निर्दशम्' इत्येवावक्ष्यत् । न चोक्तम् । तथा च देवलः—'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि' इति । तस्मात्पितुरेवातिक्रान्ताशौचमिति स्थि(१)तम् । केचिदन्यथेमं श्लोकं पठन्ति—'प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु । सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः' ॥ इति । (२)प्रोषिते प्रेते सर्वेषां ब्राह्मणक्षत्रियादीनामविशेषेण कालशेषः शुद्धिहेतुः । अशेषे पुनरतिक्रान्ते दशाहादौ सर्वेषां त्र्यहमेवाशौचम् । संवत्सरे पूर्णे यदि प्रोषितप्रयाणमवगतं स्यात्तदा सर्वो ब्राह्मणादिः स्नात्वोदकं दत्त्वा शुचिः स्यात् । तथा च मनुः (५।७६)—'संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति' इति । अयं च त्र्यहो दशाहादूर्ध्वं मासत्रयादर्वाग्द्रष्टव्यः । पूर्वोक्तं तु सद्यः शौचं नवममासादूर्ध्वमर्वाक्संवत्सराद् द्रष्टव्यम् । यत्पुनर्वासिष्ठवचनम्—'ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रम्' इति, तदूर्ध्वं षण्मासेभ्यो यावन्नवमम् ।' यदपि गौतमवचनम्—'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी' इति, तन्मासत्रयादूर्ध्वमर्वाक्षष्ठात् । तथा च वृद्धवसिष्ठः—'मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति' ॥ इति । एतच्च मातापितृव्यतिरिक्तविषयम् । 'पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्' इति पैठीनसिस्मरणात् । तथा च स्मृत्यन्तरेऽपि—'महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना । अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं य-

[१] स्थितिः ख । [२] प्रोषिते सर्वेषां ख ।

थाविधि' ॥ इति । संवत्सरादूर्ध्वमपि प्रेतकार्यमाशौचोदकदानादिकं कार्यं न पुनः स्नानमात्राच्छुद्धिरित्यर्थः । पितृपत्न्यामपि मातृव्यतिरिक्तायां स्मृत्यन्तरे विशेषो दर्शितः—'पितृपत्न्यामपेतायां मातृवर्ज्जं द्विजोत्तमः । संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत्' ॥ इति । यस्तु नद्यादिव्यवहिते देशान्तरे मृतस्तत्सपिण्डानां दशाहादूर्ध्वं मासत्रयादर्वागपि सद्यः शौचम् । 'देशान्तरमृतं श्रुत्वा क्लीवे वैखा(१)नसे यतौ । मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः' ॥ इति । देशान्तरलक्षणं च बृहस्पतिनोक्तम्—'महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च' ॥ इति । इदं चातिक्रान्ताशौचमुपनीतोपरमविषयम् । न पुनर्वयोवस्थाविशेषाशौचविषयमपि । तथा चोक्तं व्याघ्रपादेन—'तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च । उपनीते तु विषमं तस्मिन्नेवातिकालजम्' ॥ इति । अयमर्थः—वयसि त्रिवर्षादिरूपे यदाशौचमादन्तजन्मनः सद्य इत्यादिवाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टम् । अतिक्रान्ते च दशाहादिके त्र्यहादि यदाशौचं तदपि सर्वेषामविशिष्टम् । उपनीते (२)पुनरुपरते दशद्वादशपञ्चदशत्रिंशद्दिनानीत्येवं विषममाशौचं ब्राह्मणादीनाम् । तस्मिन्नेवोपनीतोपरम एव अतिकालजमतिक्रान्ताशौचं भवति, न पुनर्वयोवस्थाशौचातिक्रम इति ॥ २२ ॥

( वी०मि० )'दशरात्रमतः पर'मिति ब्राह्मणमधिकृत्योक्तम् । क्षत्रियादीनां सर्वेषां तु सपिण्डमरणे तज्जन्मनि चाशौचमाह—

क्षत्रस्य(३) द्वादशाहानि विशः पञ्चदशैव तु ॥
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्तिनः ॥ २३ ॥

सपिण्डमरणे क्षत्रियस्य द्वादशाहानि व्याप्य, वैश्यस्य तु पञ्चदशाहानि व्याप्य, शूद्रस्य न्यायवर्तिभिन्नस्य त्रिंशद्दिनानि व्याप्य, न्यायवर्तिनस्तु शूद्रस्य तदर्द्धं त्रिंशद्दिनार्द्धमेव व्याप्याशौचमित्यर्थः २३

(१) वैखानसो वानप्रस्थः । (२) पुनरुपरमे ख. ।

(३) अत्रैतस्मात्पूर्वं—'त्रेदिने कालशेषः स्यादशौचे त्र्यहमेव तु । सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः ॥' इति पद्यमुपलभ्यते, परं पूर्वव्याख्यातपद्यस्यैव रूपान्तरमेतद्व्याख्याऽभावाच्च मूले न निवेशितम्

(मिता०) क्षत्रियादिषु दशरात्रस्य सपिण्डाशौचस्यापवादमाह—

क्षत्रस्येति । क्षत्रियवैश्यशूद्राणां सपिण्डजनने तदुपरमे च यथाक्रमेण द्वादशपञ्चदशत्रिंशद्दिनान्याशौचं भवति । न्यायवर्तिनः पुनः शूद्रस्य पाकयज्ञद्विजशुश्रूषादिरतस्य तदर्धं तस्य मासस्यार्धं पञ्चदशरात्रमाशौचम् । एवं च त्रि(१)रात्रं दशरात्रं चेत्येतद्दशरात्रमाशौचं पारिशेष्याद्ब्राह्मणविषये व्यवतिष्ठते । स्मृत्यन्तरेषु तु क्षत्रियादीनां दशाहादयोऽप्यशौचकल्पा दर्शिता । यथाह पराशरः— 'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः । तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्' ॥ तथा च शातातपः—'एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा । शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके' ॥ वसिष्ठस्तु—'पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्य' इति । अङ्गिरास्त्वाह—'सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्' ॥ इत्येवमनेकोच्चावचाशौचकल्पा दर्शिताः, तेषां लोके समाचाराभावान्नातीव व्यवस्थाप्रदर्शनमुपयोगीति नात्र व्यवस्था प्रदर्श्यते । यदा पुनर्ब्राह्मणादीनां क्षत्रियादयः सपिण्डा भवन्ति तदा हारीताद्युक्ताशौचकल्पोऽनुसरणीयः । 'दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु' ॥ इति । विष्णुरप्याह—'क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रे सपिण्डे षड्रात्रेण शुद्धिर्हीनवर्णानां तूत्कृष्टेषु सपिण्डेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिः' इति । बौधायनेन त्वविशेषेण दशाह इत्युक्तम्—'क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः । तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते' ॥ इति । अनयोश्च पक्षयोरापदनापद्विषयत्वेन व्यवस्था । दास्यादीनां तु (२)स्वामिशौचेन स्पृश्यत्वं, कर्मानधिका(३)रत्वं तु मासावधिरेव । तदाहाङ्गिराः—'दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम्' ॥ इति । प्रतिलोमानां त्वाशौचाभाव एव । 'प्रतिलोमा धर्महीनाः' इति मनुस्मरणात् । केवलं मृतौ प्रसवे च मलापकर्षणार्थं मूत्रपुरीषोत्सर्गवत् शौचं भवत्येव ॥ २३ ॥

---

(१) त्रिरात्रं चेति ख । (२) स्वाम्याशौचेन घ. । (३) रत्वं भविकारस्तु क. ङ ।

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ॥
गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ २४ ॥
अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ॥
निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥ २५ ॥

(वी०मि०) वर्षद्व(१)योर्ध्वमर्वाग्वाग्दत्ताद(२)त्तासु कन्यासु मृतासु बालेषु चाऽजातदन्तेषु मृते(३)षु प्रमाद्दग्धेषु चाऽहोरात्रं विशोधनं स्वापगमेनाऽशौचापगमहेतुभूतं भवति । ब्रह्मपुराणे—

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते ।
सद्यः शौचं भवेत्तस्य सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
अतः परं प्रवृद्धानां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥
स्वजात्युक्तमशौचं स्यात्सूतके मृतकेऽपि वा ।

प्रवृद्धानामित्यस्य विवरणं वाक्प्रदाने कृत इति, उभयत इत्यस्य च विवरणं पितुर्वरस्य चेति । वाग्दानाभावे तु विवाहपर्य्यन्तमेकाहमेवाऽऽशौचं प्रकृतवचनादेव । कूर्मपुराणम्—

अजातदन्तमरणे पित्रोरेकाहमिष्यते ।
दन्तजाते त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणौ ॥

इदं च प्रमादेन दाहपक्षे ब्राह्मणस्य ।

यद्यप्यकृतचूडो हि जातदन्तश्च संस्थितः ।
तथापि दाहयित्वैनमशौचं त्र्यहमाचरेत् ॥

इत्यङ्गिरोवचनात् । अनतीतद्विवर्षदाहमुपक्रम्य ब्रह्मपुराणे—

राज्ञामेकादशाहं तु वैश्यानां द्वादशाहिकम् ।
अपि विंशतिरात्रं तु शूद्राणां च भवेत्क्रमात् ॥

गुर्विति । गुरुर्यत्किञ्चिदध्यापकः, अन्तेवासी शिष्यः, अनूचानः वेदाङ्गाध्येता, मातुलो मातृवैमात्रेयः, श्रोत्रियः शाखाभिज्ञः, स्वग्राममृतः । एषु निमित्तभूतेषु अहो विशोधनम् । तुशब्देन बालपुरु-

---

(१) वर्षद्वयार्द्धेनाऽर्वा०-इति ख० पु० पाठः । (२) वाग्दत्तादत्तासु-इति क० पु० पाठः ।
(३) मृतेषु प्रमाद-इति नास्ति ख० पुस्तके ।

पमरणनिमित्तकत्र्यहाशौचव्यवच्छेदः। आद्यचकारेण जातदन्तस्य बालस्य प्रमादाद्दाहे त्र्यहाशौचं समुच्चिनोति। द्वितीयचकारेण स्वगृहमृताऽश्रोत्रियादिसमुच्चयः। अत्र मनुः—

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः॥

दिवारात्रमहोरात्रम्। विष्णुः—'मातुले मातृसोदरे मृते'। अनौरसेष्विति। क्षेत्रजादिषु पुत्रेषु, पराश्रितभार्यासु, स्वदेशराजनि च मृते जाते च तदहः शुद्धिकारणमित्यर्थः। चकारात्परपूर्वासङ्ग्रहः। (१)तदयमसपिण्डाशौचनिर्णयो नानास्मृत्यनुसारी सिद्धवदिहोच्यते। सकुल्ये, वाग्दत्तकन्यायामाचार्ये सदायाज्ये यजमाने मातामहे च मृते त्रिरात्रमाशौचम्। आचार्यसंस्कारकर्तुः शिष्यस्य त्रिरात्रम्। स्वगृहस्थितस्य च शिष्यस्य तयोर्मरणे एकरात्रम्। आचार्यगृहस्थिते शिष्ये मृते आचार्यस्य उपनीय साङ्गवेदाध्यापकस्य त्रिरात्रम्। उपनीय वेदैकदेशमध्यापितुश्च गुरोस्तत्र पक्षिणी। तादृशि गुरौ मृते तत्पत्न्यां च मृतायां शिष्यस्य पक्षिणी। श्वश्रूश्वशुरसन्निधिवासिभिन्नमातुलमातृष्वसृगुर्वृत्विक्श्रोत्रियेषु गृहमृतेषु त्रिरात्रम्। क्षेत्रजादिष्वेकादशसु पुत्रेषु मातापित्रोस्त्रिरात्रम्। क्षेत्रजादीनामपि तयोर्मरणे त्रिरात्रम्। परपूर्वास्वन्यगतासु च भार्यासु मृतासु पत्युस्त्रिरात्रम्। हीनवर्णगामिनीषु अशौचाभाव एव। एकमातृकयोर्भिन्नपितृकयोः परस्परं स्वमातृजात्युक्त पूर्णाशौचम्। परपत्न्यां जनिते च पुत्रे मृते पितुस्त्रिरात्रम्। तादृशे पितरि च पुत्रस्य त्रिरात्रम्। दशपुरुषोर्द्ध्वं ज्ञायमानजन्मनामपरम्पराज्ञातौ मृते भगिनीमातुलानीमातामहीपितृष्वसृमातुलमातृष्वसृवेदसहाध्यायिमातृष्वस्रेयपितृष्वस्रेयमातुलपुत्रभागिनेयदौहित्रश्वश्रूश्वशुरमरणे च पक्षिणी। मित्रे स्वगृहमृते पक्षिणी। अन्यत्र मृते मित्र उपाध्यायतत्पत्नीयत्किञ्चित्पाठसहाध्यायिषु समानब्रह्मचर्येण एकस्मादधीयाने स्वकर्मस्थस्वतन्त्रराजनि अवाग्दत्ताकन्यायां अन्यकृदुक्तबाले यत्किञ्चिदध्यापिते शिष्ये दयालके च मृतेष्वहोरात्रमशौचम्। उपाध्यायपुत्रे समानब्रह्मचर्ये भिक्षाहुरोरधीयाने मृते दिनमात्रं त्रिरात्रं वा। एक-

(१) तदाह यम सापिण्डाशौचनिर्णये—नानास्मृत्यनुसारी च सिद्धवानिह दृश्यते—इति क० पुस्तके पाठः।

ग्रामे मृते श्रोत्रिये चाऽहोरात्रम् । ऋत्विग्जामातृवैमात्रेयमातृबान्धवेषु चाऽहोरात्रम् । अस्वकर्मस्थराजनि प्रेते दिनमात्रं रात्रिमात्रं वा । अज्ञायमानजन्मपरम्पराकेऽस्मद्गोत्रज इत्येवमाकारमात्रज्ञानगोचरे गोत्रजे विप्रहतादौ ग्रन्थकृदुक्ते च सद्यः शौच इति दिक् ॥२४-२५॥

( मिता० ) इदानीं स्त्रीषु च वयोवस्थाविशेषेणापवादमाह—

अहरिति । अदत्ता अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात्प्रागहोरात्रं विशेषेण शुद्धिकारणम् । सपिण्डानां सापिण्ड्यं च कन्यानां त्रिपुरुषपर्यन्तमेव । 'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते' इति वसिष्ठस्मरणात् । बालेषु चानुत्पन्नदन्तेषु अग्निसंस्कारे सत्येकाहो विशोधनम् । अकृतचूडायां तु कन्यायां सद्यः शौचम् । 'अ(१)चूडायां तु कन्यायां सद्यः शौचं विधीयते' इ(२)त्यापस्तम्बस्मरणात् । वाग्दानादूर्ध्वं तु संस्कारात्प्राक्पतिपक्षे पितृपक्षे च त्र्यहमेव । यथाह मनुः ( ५।७२ )—'स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः' ॥ इति । बान्धवाः पतिपक्ष्यास्त्रिरात्रेण शुध्यन्ति । सनाभयस्तु पितृपक्ष्याः सपिण्डा यथोक्तनैव कल्पेन निर्वृत्तचूडकानामित्यादिनोक्तेन त्रिरात्ररूपेण न पुनर्दशरात्ररूपेण । विवाहात्प्राक् तस्यायुक्तत्वात् ! अत एव मरीचिः—'वारिपूर्वं प्रदत्ता तु या नैव प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्' ॥ इति । उभयोः पतिपितृपक्षयोः । विवाहादूर्ध्वं तु विष्णुना विशेषो दर्शितः—'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वा' इति । तत्र प्रसवे एकाहः प्रयाणे त्रिरात्रमिति व्यवस्था । इदं च वयोवस्थाशौचं सर्ववर्णसाधारणम् । क्षत्रस्य द्वादशाहानीति तद्वर्णविशेषोपादानेनाभिधानात् । अत एव मनुना अनुपात्तवर्णविशेषाशौचविधेः साधारण्यप्रतिपादनार्थं चातुर्वर्ण्याधिकारे सत्यपि पुनः 'चतुर्णामपि वर्णानां यथावदनुपूर्वशः' इत्युक्तम् । तथाङ्गिरसाप्युक्तम्—'अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते' ॥ इति । व्याघ्रपादवचनं च 'तुल्यं वयसि सर्वेषा'मिति प्राक् प्रदर्शितम् । अतो यथा पिण्डयज्ञावृता देयमित्यादिः पिण्डोदकदानविधिः सर्ववर्णसाधारणः, यथा

( १ ) अकृतचूडायां घ. । ( २ ) इति वसिष्ठस्मरणात् घ. ।

या समानोदकाशौचविधिः, 'अन्तरा जन्ममरणे' इति संनिपाताशौचविधिश्च य(१)श्च 'गर्भस्रावे मासतुल्या निशा' इति स्रावाशौचविधिः, 'प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु' इति विदेशस्थाशौचविधिश्च, यथा गुर्वाद्याशौचविधिः सर्ववर्णसाधारणस्तथा ययोर्यस्यानिमित्तमप्याशौचं सर्ववर्णसाधारणमेव भवितुमर्हति । अत एव 'क्षत्रे षड्भिः कृते चौले वैश्ये नवमिदुच्यते । ऊर्ध्वं त्रिवर्षाच्छूद्रे तु द्वादशाहो विधीयते' ॥ तथा —'यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते । तत्र शूद्रे द्वादशाहः षण्णव क्षत्रवैश्ययोः' ॥ इत्यादीन्यप्यशुद्धादिवचनानि विगीतत्वबुद्ध्याऽनाद्रियमाणैर्धारेश्वरविश्वरूपमेधातिथिप्रभृतिभिराचार्यैरयमेव साधारणः पक्षोऽङ्गीकृतः । अविगीतानि चातानातक्षत्रियादिविषयतया व्याख्येयानि ॥

( मिता० ) गुर्वादिष्वतिदेशमाह—

गुर्विति । गुरुरुपाध्यायः, अन्तेवासी शिष्यः, अनूचानोऽङ्गानां प्रवक्ता, मातुलग्रहणेनात्मबन्धवो मातृबन्धवः पितृबन्धवश्च योनि(२)सम्बद्धा उपलक्ष्यन्ते । ते च 'पत्नीदुहितर' इत्यत्र दर्शिताः । श्रोत्रिय एकशाखाध्यायी । 'एकां शाखामधीत्य श्रोत्रियः' इति बौधायनस्मरणात् । एपूपरतेष्वहोरात्रमाशौचम् । यस्तु मुख्यो गुरुः पिता तदुपरमे सपिण्डत्वाद्दशाहमेव । यस्तु पिता पुत्रानुत्पाद्य संस्कृत्य वेदानध्याप्य वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति तस्य महागुरुत्वात्तदुपरमे द्वादशरात्रं वा । 'महागुरुषु दानाध्ययने वर्जयेरन्' इति आश्वलायनेनोक्तं द्रष्टव्यम् । आचार्योपरमे तु त्रिरात्रमेव । यथाह मनुः ( ५।८० )—'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति । तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः' ॥ इति । यदा त्वाचार्यादिरन्त्येष्टिं करोति तदा दशरात्रमाशौचम् । ( ५।६५ )—'गुरोः प्रेतस्य शिष्यस्तु पितृमेधं (३)समाचरन् । प्रेताहारैः समं तत्र दशाहेन विशुध्यति' ॥ इति तेनैवोक्तत्वात् । श्रोत्रियस्य तु समानग्रामीणस्यैतदाशौचम् । 'एकाहं सब्रह्मचारिणि समानग्रामीणे च श्रोत्रिये' इत्याश्वलायनस्मरणात् । एकाचार्योपनीतः सब्रह्मचारी । एतच्चासंनिधाने द्रष्टव्यम् । संनिहिते तु शिष्यादौ त्रिरात्रादि । यथाह मनुः ( ५।८१ )—'श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् । मातु-

(१) यदुक्तं ख । (२) सम्बन्धा उप ख । (३) समाचरन् घ ।

ले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च' ॥ इति । उपसम्पन्ने मैत्री-प्रातिवेश्यत्वादिना(१) सम्बद्धे शीलयुक्ते वा । मातुलग्रहणं मातृष्वस्रादेरुपलक्षणार्थम् । बान्धवा इत्यात्मबन्धवो मातृबन्धवः पितृबन्धवश्चोच्यन्ते । तथा च बृहस्पतिः—'त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्' इति । तथा प्रचेताः—'मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति' इति । तथा च वृद्धवसिष्ठः—संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते । संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥ पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् । त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥ श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्' ॥ तथा-'मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च । आशौचं पक्षिणीं रात्रिं मृता मातामही यदि' ॥ तथा च गौतमः—'पक्षिणीमसपिण्डे योनिसम्बद्धे सहाध्यायिनि च' इति । योनिसम्बद्धा मातुलमातृष्वस्रीयपितृष्वस्रीयादयः । तथा जाबालः—'एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् । मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा' ॥ इति । विष्णुः—'असपिण्डे स्ववेश्मनि मृत एकरात्रम्' इति । तथा वृद्धः—'भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते । मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ॥ ग्रामेश्वरे कुलपतौ श्रोत्रिये वा तपस्विनि । शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात् ॥ ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित् । ग्रामस्य तावदाशौचं निर्गते शुचितामियात्' ॥ इत्यादीन्याशौचविशेषप्रतिपादकानि स्मृतिवचनान्यन्वेषणीयानि । ग्रन्थगौरवभयादत्र न लिख्यन्ते । एषु चैकविषयगुरुलघ्वाशौचप्रतिपादकतया परस्परविरुद्धेषु संनिधिविदेशस्थापेक्षया व्यवस्थाऽनुसन्धातव्या ॥ २४ ॥

( मिता० ) किञ्च—

अनौरसेष्विति । अहरित्यनुवर्तते । अनौरसाः क्षेत्रजदत्तकादयः तेषु जातेषूपरतेषु वाहोरात्रमाशौचम् । तथा स्वभार्यास्वन्यगतास्वन्यं प्रतिलोमव्यतिरिक्तं आश्रितासु अतीतासु चाहोरात्रमेव न पुनः सत्यपि सापिण्ड्ये दशरात्रम् । प्रतिलोमाश्रितासु चाशौचाभाव

(१) त्वादिसम्बन्धे ग. ।

एव । 'पाखण्ड्यनाश्रिता स्तेना' इत्यनेन प्रतिषेधात् । एतच्च भार्या· पुत्रत्वशब्दयोः सम्बन्धिशब्दत्वात् यत्प्रातियौगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचम् । सपिण्डानां त्वाशौचाभाव एव । अत एव प्रजापतिः—'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता' ॥ इति । स्वैरिण्याद्यास्तु यमाश्रिता·· स्तस्य [redacted] त्रिरात्रमेव । यथाह विष्णुः—'अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु च'॥ इति त्रिरात्रमेव प्रकृतम् । अनयोश्च त्रिरात्रैकरात्रयोः सन्निधिविदेशस्थापेक्षया व्यवस्था । यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रम् । यथाह मरीचिः—'सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः' ॥ इति । किञ्च—नियमस्यस्मिन्निति निवासस्थदेश उच्यते तस्य यो राजा स्वामी विषयाधिपतिः स यस्मिन्नहनि अतीतस्तदहर्मात्रं शुद्धिकारणम् । रात्रौ चेदतीतस्तदा रात्रिमात्रम् । अत एव मनुः (५।८२)—'प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः' इति । ज्योतिषा सह वर्तते इति सज्योतिराशौचम् । अह्नि चेद्यावत्सूर्यदर्शनं रात्रौ चेद्यावन्नक्षत्रदर्शनमित्यर्थः ॥ २५ ॥

(वी०मि०) अनुगमनाशौचमाह—

ब्राह्मणेनाऽनुगन्तव्यो न(१) तु शूद्रः कथञ्चन ॥

अनुगम्याऽम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः ॥२६॥

शूद्रः शूद्रशवः कथञ्चन अनुग्रहादिनापि अनु(२)त्पन्नकार्यान्तरवशेनावर्जनीयं तदनुगमनं कृत्वा । शेषं सुबोधम् । तुशब्देनेच्छया शूद्रानुगमने उक्तशुद्धिव्यवच्छेदः ।

प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥

इति पराशरेण कामाच्छूद्रशवानुगमने त्रिरात्रबोधनात् । मनुः—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।
स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ॥

इदं [redacted] ब्राह्मणसवर्णपरम् । ब्रह्मपुराणे—

सर्वेषां स्यादहोरात्रं सर्वानुगमनादपि ।

(१) न शूद्रो न द्विजः कश्चित् इति मु० पु० पाठः । (२) अनुगम्यकार्यो०—इति ख पु पाठः ।

इदं च क्षत्रियादीनां चातुर्वर्ण्याभिगमने ब्राह्मणस्य क्षत्रियावैश्यानुगमने च। सजातीयशववहनदहनयोस्तु स्नेहादिना कृतयोस्तदा स्वजात्युक्तमशौचं ब्रह्मचारिणः। पित्रादिदाहकर्तृत्वे चैकरात्रम्। शिष्यगुरूपाध्यायाचार्यदाहं मूल्येन परद्वारा कारयतो दशरात्रमिति ग्रन्थान्तरप्रसिद्धत्वान्मुनिना नोक्तम् ॥ २६ ॥

(मिता०) अनुगमनाशौचमाह—

ब्राह्मणेनेति। ब्राह्मणेन असपिण्डेन द्विजो विप्रादिः शूद्रो वा प्रेतो नानुगन्तव्यः। यदि स्नेहादिनानुगच्छति तदाम्भसि तडागादिस्थे स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्य शुचिर्भवेत्। अस्य च घृतप्राशनस्य भोजनकार्यविधाने प्रमाणाभावान्न भोजनप्रतिषेधः। इदं समानोत्कृष्टजातिविषयम्। यथाह मनुः (५।१०३)—'अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च। स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति' ॥ इति ज्ञातयो मातृसपिण्डाः। इतरेषां तु विहितत्वान्न दोषः। निकृष्टजात्यनुगमने तु स्मृत्यन्तरोक्तं द्रष्टव्यम्। तत्र शूद्रानुगमने—'प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः। अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥ त्रिरात्रं तु ततस्तीर्णे नदीं गत्वा समुद्रगाम्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति' ॥ इति पराशरोक्तम्। क्षत्रियानुगमने त्वहोरात्रम्। 'मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचम्, अस्निग्धे त्वहोरात्रं शवानुगमने चैकम्' इति वसिष्ठोक्तम्। वैश्यानुगमने पुनः पक्षिणी। तथा क्षत्रियस्यानन्तरं वैश्यानुगमने अहोरात्रमेकान्तरशूद्रानुगमने पक्षिणी, वैश्यस्य शूद्रानुगमने एकाह इत्यूहनीयम्। तथा रोदनेऽपि पारस्करेणोक्तम्—'मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम्। वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च'॥ इति। तथालङ्करणमपि न कार्यम्। 'कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते। अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते' ॥ इति शङ्खेन प्रायश्चित्तस्याम्नातत्वात् ॥ २६ ॥

(वी०मि०) क्वचित्पूर्णाशौचादीनामपवादमाह—

महीपतीनां नाशौचं हतानां विद्युता तथा ॥
गोब्राह्मणा(१)र्थे सङ्ग्रामे यस्य चेच्छति पार्थिवः ॥ २७ ॥

---

(१) गोब्राह्मणार्थे—इति मु० पु० पाठः।

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ॥
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ २८ ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ॥
आपद्यपि च(१) कष्टायां सद्यः शौचं विधीयते ॥ २९ ॥

महीपतीनामभिषिक्तक्षत्रियाणां रोगादिना विद्युदभिमुखगमने विद्युद्धतानां गो(२)ब्राह्मणार्थे सङ्ग्रामेऽन्यरोषादात्मघातार्थिनां हतानां यस्याऽशौचाभावमिच्छति राजा तस्य सम्यन्ध्यशौचं न भवति । अत्राऽद्यन्त्ययोराश्रयाय मन्यमानां समतत्त्वं सम्बन्धो व्यवच्छिद्यते । अयं चाऽशौचाभाव आद्यन्तयोः, ऋत्विगादीनां च कर्मविशेष एव । तदाह विष्णु—'नाऽसौ राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां स्वकर्मणि न राजामाज्ञाकारिणां न देवप्रतिष्ठाविवाहयोः सम्भृतयोः' । विषयव्यतिरेकेण विद्युद्धतादिविषयस्य चाऽशौचं सद्यः शौचरूपं प्रागभिहितम् । ऋत्विजां वृतानां, दीक्षितानां दीक्षणीयेष्टिसंस्कृतानां च यज्ञसम्बन्धिकर्मकरणारम्भविशिष्टानां, तथाऽन्नसत्रदानप्रवृत्तानामारब्धचान्द्रायणादिव्रतानां ब्रह्मचारिणां, प्रत्यहं गवादिदानशीलानां ब्रह्मविदां यतीनां, तथा पूर्वसङ्कल्पितद्रव्यस्य दाने, विवाहे प्रक्रान्ते, यज्ञे वृषोत्सर्गदेवप्रतिष्ठादौ दीक्षणीयेष्टिपूर्वे सोमयागादौ च प्रक्रान्ते, सङ्ग्रामे आरब्धे, परचक्रादिना देशोपप्लवे, कष्टायामापदि मारकोपसर्गादिपीडायामावश्यकतत्कर्मसु सद्य एव अशौचाभावो विधीयते मन्वादिभिः ॥ २७-२९ ॥

(मिता०) सपिण्डाशौचे कश्चिदपवादमाह—

महीपतीनामिति । यद्यपि महीशब्देन कृत्स्नं भूगोलकमभिधीयते तथाप्यत्र सकलायाः क्षितेरेकमर्तृकत्वानुपपत्तेः महीपतीनामिति बहुवचनानुरोधाच्च तदेकदेशभूतानि मण्डलानि लक्ष्यन्ते । तत्पालनाधिकृतानां क्षत्रियादीनामभिषिक्तानां नाशौचम्, तैराशौचं न कार्यमित्यर्थः । तथा विद्युद्धतानां गोब्राह्मणरक्षणार्थे विपन्नानां च सम्बन्धिनो ये सपिण्डास्तैरप्याशौचं न कार्यम् । यस्य च मन्त्रिपुरोहितादेर्भूमिपोऽनन्यसाध्यमन्त्राभिचारादिकर्मसिद्ध्यर्थमाशौ-

(१) द्वि-इति मु० पु० पाठः ।
(२) गोब्राह्मण-इत्यारभ्य हतानां-इतीयानंशो नास्ति ख. पुस्तके ।

चाभावमिच्छति तेनापि न कार्यम् । अत्र च महीपतीनां यदसाधारणत्वेन विहितं प्रजापरिरक्षणं तद्येन दानमानसत्कारव्यवहारदर्शनादिना विना न सम्भवति तत्रैवाशौचाभावो न पुनः पञ्चमहायज्ञादिष्वपि । तथा च मनुः ( ५।९५ )—'राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते । प्रजानां परिरक्षा(१)र्थमासनं चात्र कारणम्' ॥ इति । गौतमेनाप्युक्तम्—'राज्ञां च कार्याविघातार्थम्' इति राजभृत्यादेरप्याशौचं न भवति । यथाह प्रचेताः—'कारवः शिल्पिनो वै(२)द्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिताः' ॥ इति । कारवः सूपकारादयः । शिल्पिनश्चित्रकरचैलनिर्णेजकादयः । अयं चाशौचाभावः किंविषय इत्यपेक्षायां कर्मनिमित्तैः शब्दैस्तत्तदसाधारणस्य कर्मणो बुद्धिस्थत्वात्तत्रैव द्रष्टव्यः । अत एव विष्णुः—'न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि' इति प्रतिनियतविषयमेवाशौचाभावं दर्शयति । शातातपीयेऽप्युक्तम्—'मूल्यकर्मकराः शूद्राः दासीदासास्तथैव च । स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः' ॥ इति । इयं च दासादिशुद्धिरपरिहरणीयतया प्राप्तस्पर्शविषयेत्यनुसन्धेयम् । अत एव स्मृत्यन्तरम्—'सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः' । तथा—'चिकित्सको यत्कुरुते तदन्येन न शक्यते ॥ तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः' ॥ इति ॥ २७ ॥

(मिता०) किञ्च—

ऋत्विजामित्यादि । ऋत्वि(३)जो वरणसम्भृता वैतानोपासनाकर्तृविशेषाः । दीक्षणीयासंस्कृता दीक्षितास्तेषां यज्ञियं यज्ञे भवं च कर्म कुर्वतां सद्यः शौचं विधीयत इति सर्वत्रानुषङ्गः । दीक्षितस्य 'वैतानोपासनाः कार्या' इत्यनेन सिद्धेऽप्यधिकारे पुनर्वचनं (४)यजमाने स्वयंकर्तृत्वविधानार्थं सद्यः (५)स्नानेन विशुद्ध्यर्थं च । सत्रिग्रहणेन सन्ततानुष्ठानतुल्यतयाऽन्नसत्रप्रवृत्ता लक्ष्यन्ते । मुख्यानां तु सत्रिणां दीक्षितग्रहणेनैव सिद्धेः । व्रतिशब्देन कृच्छ्रचान्द्रायणादिप्रवृत्ताः स्नातकव्रतप्रायश्चित्तप्रवृत्ताश्चोच्यन्ते । तथा ब्रह्मचारि-

(१) रक्षार्थं शायनं ग. । (२) भृत्या वैद्या दासास्तथैव च घ. ।
(३) वरणकरणसङ्गता ग. वरणाभरणसम्भृता ङ. । (४) याजमानेषु घ. ।
(५) स्नानविध्यर्थं घ. स्नानविशुध्यर्थं ग. ।

ग्रहणेन ब्रह्मचर्यादिव्रतयोगिनः श्राद्धकर्तुर्भोक्तुश्च ग्रहणम् । तथा च स्मृत्यन्तरम्—'नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु । निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ गृहीतनियमस्यापि न(१) स्यादन्यस्य कस्यचित् । निमन्त्रितेषु विप्रेषु (२)प्रारब्धे श्राद्धकर्मणि ॥ निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च । देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥ प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा' ॥ इति । सत्रिणां व्रतिनां च सत्रे व्रते च शुद्धिर्न कर्ममात्रे संव्यवहारे वा । तथा च विष्णुः—'न व्रतिनां व्रते न सत्रिणां सत्रे' इति । ब्रह्मचार्युपकुर्वाणको नैष्ठिकश्च । यस्तु नित्यं ददात्येव न प्रतिग्रहीता स धैखानसो दातृशब्देनोच्यते । ब्रह्मविद्यतिः । एतेषां च त्रयाणामाश्रमिणां सर्वत्र शुद्धिः विशेषे प्रमाणाभावात् । दाने च पूर्वसंकल्पितद्रव्यस्य नाशौचम् । 'पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति' इति ऋतुस्मरणात् । स्मृत्यन्तरे चात्र विशेष उक्तः—'विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । शेषमन्नं परैर्देयं दातृभोक्तृश्च न स्पृशेत्' ॥ इति । यज्ञे वृषोत्सर्गादौ, विवाहे च पूर्वसम्भृतसम्भारे । तथा च स्मृत्यन्तरम्—'यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि' इति । सद्यः शौचमत्र प्रकृतम् । विवाहग्रहणं पूर्वप्रवृत्तचौलोपनयनादिसंस्कारकर्मोपलक्षणम् । यज्ञग्रहणं च पूर्वप्रवृत्तदेवप्रतिष्ठारामाद्युत्सवमात्रो(३)पलक्षणम् । 'न देवप्रतिष्ठोत्सर्गविवाहेषु न देशविभ्रमे नापद्यपि च कष्टायामाशौचम्' इति विष्णुस्मरणात् । सङ्ग्रामे युद्धे । 'संग्रामे समुपोढे राजानं संनाहयेत्' इत्याद्यवलायनाद्युक्तसंनहनविधौ प्रास्थानिकशान्तिहोमादौ च सद्यः शुद्धिः । देशस्य विस्फोटादिभिरुपसर्गे राजभयाद्वा विप्लवे तदुपशमनार्थे शान्तिकर्मणि सद्यः शौचम् । विप्लवाभावेऽपि क्वचिद्देशविशेषेण पैठीनसिना शुद्धिरुक्ता—'विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्' ॥ इति । तथा कष्टायामप्यापदि व्याध्याद्यभिभवेन मुमूर्षावस्थायां दुरितशमनार्थे दाने । तथा संकुचितवृत्तेश्च क्षुत्परिश्रान्तमातापित्रादिबहुकुटुम्बस्य तद्भरणोपयोगिनि प्रतिग्रहे सद्यः शुद्धिः । इयं च शुद्धिर्यस्य सद्यः शौचं विनार्त्युपशमो न भवति अश्वस्तनिकस्य तद्विषया । यस्त्वेकाहपर्याप्तसंचितधनस्तस्यैकाहः,

(१) तस्मादन्यस्य ख. । (२) प्रवृत्त ग. । (३) त्सोपलक्षणम् ग. क. ।

यस्त्र्यहोपयोगिसंचयी तस्य त्र्यहः, यस्तु चतुरहार्थमापादितद्रव्यः कुम्भीधान्यस्तस्य चतुरहः, कुसूलधान्यकस्य दशाह इत्येवं यस्य यावत्कालमार्त्यभावस्तस्य तावत्कालमाशौचम् । आपदुपाधिकत्वादाशौचसंकोचस्य । अत एव मनुना (४।७)—'कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा । त्र्याहिको वापि च भवेदश्वस्तनिक एव वा' ॥ इत्यत्र प्रतिपादितचतुर्विधगृहस्थाभिप्रायेण—'दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव वा' ॥ इति कल्पचतुष्टयं प्रतिपादितम् । समानोदकविषयाश्च संकुचिताशौचकल्पाः । पक्षिण्येकाहः । सद्यः शौचरूपाः स्मृत्यन्तरे दृष्टाः वृत्तिसंकोचोपाधिकतयैव योज्याः । अयं चाशौचसंकोचो येनैव प्रतिग्रहादिना विनार्तिस्तद्विषयो न सर्वत्रेत्यवगन्तव्यम् । मनुः—'एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु विहीनो दशाभिर्दिनैः' ॥ इत्यादिस्मृत्यन्तरवचनपर्यालोचनयाध्ययनज्ञानानुष्ठानयोगिनां त्र्येकाहादिभिः सर्वात्मना शुद्धिरित्येवं कस्मान्नेष्यते । उच्यते—'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इति सामान्यप्राप्तदशाहबाधपुरःसरमेव ह्येकाहाद्ब्राह्मणः शुध्येदित्यादि विधायकं भवति । बाधकस्य चानुपपत्तिनिबन्धनत्वात् यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम् । अतः कियदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्याग्निवेदसमान्वित इति वाक्यविशेषस्य दर्शनादग्निवेदविषयेऽग्निहोत्रादौ कर्माणि स्वाध्याये च व्यवतिष्ठते न पुनर्दानादावपि । एवं चाग्निवेदपदयोः कार्यान्वयित्वं भवति । इतरथा येनाग्निवेदसाध्यं कर्म कृतं तस्यैकाहाच्छुद्धिरिति पुरुषविशेषोपलक्षणत्वमेव स्यात् । न चैतद्युक्तम् । एवं च सति—'प्रत्यूहेन्नाग्निषु क्रियाः । वैतानोपासनाः कार्याः क्रियाश्च श्रुति(१)चोदिताः' ॥ इति । तथा ब्राह्मणस्य च स्वाध्यायादिनिवृत्त्यर्थं सद्यः शौचमित्येवमादिभिर्मन्वादिवचनैरेकवाक्यता भवति । तथा च—'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' इति दशाहपर्यन्तं भोजनादिकं प्रतिषेधयद्भिर्यमादिवचनैरविरोधोऽपि सिध्यति, अतः (२)काचित्कमेवेदमाशौचसंकोचविधानं न पुनः सर्वसंव्यवहारादिगोचरमित्यलमतिप्रपञ्चेन ।

(१) श्रुतिचोदनाव घ. । (२) काचित्कर्मविशेषे इदं ख. ।

इदं च स्वाध्यायविषये सद्यः शौचविधानं बहुवेदस्य (१)ब्रह्मोज्झत्वकृतायामार्तौ द्रष्टव्यम् । इतरस्य तु—'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इति प्रतिषेध एव । ब्राह्मणादिमध्ये यस्य यावत्कालमाशौचमुक्तं स तस्यानन्तरं स्नात्वा शुध्येत् न तत्कालातिक्रममात्रात् । यथाह मनुः ( ५।९९ )—'विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः' ॥ इति । अयमर्थः—कृतक्रिय इति प्रत्येकमभिसम्बध्यते । विप्रोऽनुभूताशौचकालः कृतक्रियः कृतस्नानो हस्तेनापः स्पृष्ट्वा शुध्यति । स्पृष्ट्वेति स्पर्शनक्रियैवोच्यते न स्नानमाचमनं वा । वाहनादिषु तस्यैवानुपपत्तेः । अथवा कृतक्रियो यावदाशौचं कृतोदकादिक्रियः तदनन्तरं विप्रादिरुदकादि स्पृष्ट्वा (२)शुध्यतीत्याशौचकालानन्तरमाविस्नानप्रतिनिधित्वेनोच्यत इति । क्षत्रियादिर्वाहनादिकं स्पृष्ट्वा शुध्येदिति ॥ २८–२९ ॥

(वी०मि०) मरणजन्यसद्यःशौचप्रसङ्गेन स्नानाद्यपनेयं स्पर्शजन्याशौचमाह—

उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ॥
अब्लिङ्गानि जपेच्चैव सावित्रीं मनसा सकृत् ॥ ३० ॥

उदक्या रजस्वलाऽशुचयश्चाण्डालपतितादयस्तैः साक्षात्संस्पृष्टः स्नायात् । तैर्दण्डादिपरम्परया स्पृष्टः 'आपोहिष्ठे'त्यादिमृचं गायत्रीं सकृत् मनसा जपेदेवं शुध्यति । एवकार उपस्पर्शनसाहित्यबोधनार्थः । मिताक्षरायां तैरुदक्याशुचिसंस्पृष्टैः संस्पृष्ट उपस्पृशेदित्यर्थमाह । अत्र (३)मलस्पर्शमैथुननिमित्तकाशौचान्याचमननिवर्त्यानि स्मृत्यन्तरोक्तानि चकारेणैव समुच्चितानि । तानि च तत्रतत्राऽवगन्तव्यानि ॥ ३० ॥

( मिता० ) कुलव्यापिनीं शुद्धिमभिधायेदानीं प्रसङ्गात्प्रतिपुरुषव्यापिनीं शुद्धिमाह—

उदक्येति । उदक्या रजस्वला, अशुचयः शवचाण्डालपतितसूतिकाः शावाशौचिनश्च एतैः संस्पृष्टः स्नायात् । तैः पुनरुदक्याशु-

(१) ब्रह्मानध्ययनकृतायां ग । (२) शुध्येदिति । इत्या ख. ।

(३) मन्त्र—इति ख पुस्तके पाठः ।

चिसंस्पृष्टादिभिः संस्पृष्ट उपस्पृशेत् आचामेत्। आचम्याब्लिङ्गानि 'आपोहिष्ठे'त्येवमादीनि त्रीणि मन्त्रवाक्यानि जपेत्। त्रिष्वेव बहुवचनस्य चरितार्थत्वात्। तथा गायत्रीं च सकृन्मनसा जपेत्। ननु उदक्या संस्पृष्टः स्नायादित्येकवचननिर्दिष्टस्य कथं तैरिति बहु-(१)वचनपरामर्शः। सत्यमेवम्। किंत्वत्र उदक्यादिसंस्पृष्टव्यतिरिक्तस्नानार्हमात्रस्पर्शेष्वाचमनविधानार्थं तैरिति बहुवचननिर्देश इत्यविरोधः। ते च स्नातार्हाः स्मृत्यन्तरेऽवगन्तव्याः। यथाह पराशरः—'दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि। चितिपू(२)यश्मशानास्थ्नां स्पर्शने स्नानमाचरेत्'॥ इति। तथा च मनुः (५।१४४)— 'वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत्। आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम्'॥ इति। मैथुनिनः स्नानमृतुकालविषयम्। 'अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्'। इति बृहस्पतिस्मरणात्। अनृतावपि कालविशेषे स्मृत्यन्तरे स्नानमुक्तम्— 'अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम्। कृत्वा सचैलं स्नात्वा च वारुणीभिश्च मार्जयेत्'॥ इति। तथा च यमः—'अजीर्णेऽभ्युदिते वान्ते तथाप्यस्तमिते रवौ। दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते'॥ इति। तथा च बृहस्पतिः—'मैथुने कटधूमे च सद्यः स्नानं विधीयते' इत्येतदसचैलस्पर्शविषयम्। सचैलेन तु चित्यादिस्पर्शे सचैलमेव स्नानम्। यथाह च्यवनः—'श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं पू(२)यं चितिं चितिकाष्ठं च मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि श(३)वस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचैलमम्भोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गा(४)यत्रीमष्टशतं जपेत्। घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्' इति। एतच्च बुद्धिपूर्वविषयम्। अन्यत्र स्नानमात्रम्। 'श(५)वस्पृष्टं दिवाकीर्तिं चितिं पू(६)यं रजस्वलाम्। स्पृष्ट्वा त्वकामतो विप्रः स्नानं कृत्वा विशुध्यति'॥ इति बृहस्पतिस्मरणात्। एवमन्यत्रापि वक्ष्यमाणेषु विषयसमीकरणमूहनीयम्। तथाह कश्यपः— 'उदयास्तमययोः स्कन्दयित्वा अक्षिस्पन्दने कर्णाक्रोशने चित्यारोहणे पू(६)यसंस्पर्शने च सचैलं स्नानं पुनर्मन इति जपेन्महाव्या-

(१) बहुवचनादरः। (२) अस्पृश्यवर्गे पूयमित्यत्र यूपमित्येव बहुत्र पुस्तकेषूपलभ्यते।
(३) शवस्पृशं घ.। (४) गायत्रीमष्टवारं जपेत् ख०। (५) शवस्पृशं ग०। (६) यूपं इति पाठः।

हृतिभिः सप्ताज्याहुतीर्जुहुयात्' इति। तथा च स्मृत्यन्तरेऽपि-'चितिं च चितिकाष्ठं च यूपं चाण्डालमेव च। स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ॥ देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम्। असौ देवलको नाम हव्यकव्येषु गर्हितः' ॥ तथा ब्रह्माण्डपुराणे—'शैवान्पाशुपतान्स्पृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान्द्विजाञ्शूद्रान्सवासा जलमाविशेत्' ॥ इति। तथा—'अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसम्पर्कदूषिता'। इति लिङ्गाच्च शूद्रस्पर्शने निषेधः। तथाङ्गिराः—'यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति। तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति' ॥ तथा व्याघ्रपादः—'चण्डालं पतितं चैव दूरतः परिवर्जयेत्। गोवालव्यजनादर्वाक्सवासा जलमाविशेत्' ॥ इति। एतदतिसंकटस्थलविषयम्। अन्यत्र तु बृहस्पतिनोक्तम्—'युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम्। चण्डालसूतिकोदक्यापतितानामधः क्रमात्' ॥ इति। तथा पैठीनसिः—'काकोलूकस्पर्शने सचैलस्नानं महाव्याहृतिहोमश्च'। अनुदकमूत्रपुरीषकरणे इत्येतच्चिरकालमूत्रपुरीषाशौचाकरणपरम्। तथाऽङ्गिराः—'भासवायसमार्जारखरोष्ट्रं च श्वसूकरान्। अमेध्यानि च संस्पृश्य सचैलो जलमाविशेत्' ॥ इति। मार्जारस्पर्शनिमित्तं स्नानमुच्छिष्टसमयेऽनुष्ठानसमये च वेदितव्यं समाचारात्। अन्यदा तु—'मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः' इति स्नानाभावः। श्वस्पर्शे तु स्नानं नाभेरूर्ध्वं वेदितव्यम्। अधस्तात्तु क्षालनमेव। 'नाभेरूर्ध्वं करौ मुक्त्वा शुना यद्युपहन्यते। तत्र स्नानमधस्ताच्चेत्प्रक्षाल्याचम्य शुध्यति' ॥ इति तेनैवोक्तत्वात्। तथा पक्षिस्पर्शे विशेषो जातूकर्ण्येनोक्तः—'ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गं संस्पृशेत्खगः। स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति' ॥ इति। अमेध्यस्पर्शेऽपि विशेषो दर्शितः—'नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याचान्तः शुध्येत्। अन्यत्रापहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नायात्। तैरिन्द्रियेषूपहतस्तूपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्च' इति। एतच्च परकीयामेध्यस्पर्शविषयम्। आत्मीयमलस्पर्शे तु ऊर्ध्वमपि नाभेः क्षालनमेव। यथाह देवलः—'मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी। मज्जानं शोणितं वापि परस्य यदि संस्पृशेत् ॥ स्नात्वा प्रमृज्य लेपादीनाचम्य स

शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात्' ॥ इति । तथा च शङ्खः--'रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा तथा । नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति' ॥ इति । यमेनाप्यत्र विशेष उक्तः--'सकर्दमं तु वर्षासु प्रविश्य ग्रामसंकरम् । जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः' ॥ इति । ग्रामसंकरं ग्रामसलिलप्रवाहप्रदेशं सकर्दमं प्रविश्येत्यर्थः । मारुतशोषिते तु कर्दमादौ न दोषः । 'रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः । मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च' ॥ इति प्रागुक्तत्वात् । अस्थनि मनुना विशेष उक्तः ( ५।८७ )--'नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति । आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम्' ॥ इति । इदं द्विजातास्थिविषयम् । अन्यत्र वसिष्ठोक्तम्—'मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम्' इति । आमनुषे तु विष्णूक्तम्--'भक्ष्यवर्ज्यं पञ्चनखशवं तदस्थि च सस्नेहं स्पृष्ट्वा स्नातः पूर्ववस्त्रं प्रक्षालितं विभृयात्' इति । एवमन्येऽपि स्नानार्हाः स्मृत्यन्तरतोऽवबोद्धव्याः । एवं स्नानार्हाणां बहुत्वात्तदभिप्रायं तैरिति बहुवचनमविरुद्धम् । उदक्याशुचिभिः स्नायादित्ये(१)तच्च दण्डाद्यचेतनव्यवधानस्पर्शे वेदितव्यम् । चेतनव्यवधाने तु मानवम् (म० ५ । ८५ )--'दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृ(२)ष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति' ॥ इति । तृतीयस्य त्वाचमनमेव । 'तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा' ॥ इति संवर्तस्मरणात् । एतच्चाबुद्धिपूर्वकविषयम् । मतिपूर्वे तु तृतीयस्यापि स्नानमेव । यथाह गौतमः--'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचैलमुदकोपस्पर्शनाच्छुध्येत्' इति । चतुर्थस्य त्वाचमनम्-'उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति' ॥ इति देवलस्मरणात् । अ(३)शुचीनां पुनरुदक्यादिस्पर्शे देवलेन विशेष उक्तः--'श्वपाकं पतितं व्यङ्गमुन्मत्तं (४)शवहारकम् । सूतिकां साविकां नारीं रजसा च परिप्लुताम् ॥ श्वकुक्कुटवराहांश्च ग्राम्यान्संस्पृश्य मानवः । सचैलः

(१) च्चाण्डालाद्यचेतन ख० । (२) तमेव तु स्पृशेद्य ख० । (३) अशुचिनां पुनः ख० । (४) शवदाहकं ङ० ।

सशिरः स्नात्वा तदानीमेव शुध्यति' ॥ इति । 'अशुद्धान्स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । विशुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः' ॥ इति । सापिका प्रसवस्य कारयित्री । कृच्छ्रः श्वपाकादिविषयः । श्वादिषु तूपवास इति व्यवस्था ॥ ३० ॥

(वी०मि०) अशौचान्यभिधाय सपदि तदपगमहेतूनाह—

> कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् ॥
> पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥ ३१ ॥
> अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ॥
> संशोध्यस्य (१) च मृत्तोयैः संन्यासो हि(२) द्विजन्मनाम् ॥ ३२ ॥
> तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणां जलम् ॥
> जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ ३३ ॥
> भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ॥
> क्षेत्रज्ञस्येश्वरज्ञानाच्छु(३)द्धिस्तु परमा मता ॥ ३४ ॥

कालो दशरात्रत्रिरात्रादिर्जननादौ स्नात्यादीनाम् । अग्निर्मृन्मयभाण्डादेरुपघाते । कर्म अश्वमेधादि ब्रह्महत्यादिमतः । मृज्जले गोघ्रातान्नादेः । वायुर्मार्गादेः । मनो विचिकित्साविषयस्य 'मनःपूतं समाचरे'दिति वचनात् । ज्ञानं ब्रह्मविषयकं बुद्धितत्त्वस्य आत्मनश्च । तपश्चान्द्रायणादिमतः । जलं वस्त्रादेः । पश्चात्पापकरणानन्तरं तापः परिदेवनं कृतपापानाम् । निराहारः उपवास एकादशीव्रतादि । पापसामान्येऽमी सर्वे शुद्धिहेतवः । अकार्यकारिणां निषिद्धाचरणशीलानां पात्रे पर्याप्तधनदानं, नद्या अमेध्याद्युपहताया वेगो वर्षाम्बुप्रवाहः शुद्धिकृत् । अमेध्यस्य उच्छिष्टाद्युपहतस्य मृत्तोये च गन्धलेपापकर्षकं, द्विजन्मनां ब्राह्मणानां च मानसपापवतां संन्यासः प्रव्रज्या शुद्धिकृत् । आद्यचकारेण नदीतीरभूमेः समुच्चयः । मध्यमान्त्यचकारौ मृत्तोययोः परस्परसाहित्यं सूचयतः । हिशब्दः पादपूरणे । वेदविदामज्ञानकृतपापवतां तपो वेदाभ्यसनं, विदुषां वेदान्तार्थश्रवणवतां क्षान्तिरपकारिण्यप्रहर्तव्यबुद्धिविरहः,

(१) शोध्यस्य मृत् तोय च—इति मु० पु० पाठः । (२) वै—इति मु० पु० पाठः ।
(३) ज्ञानाद्विशुद्धिः पर०—इति मु० पु० पाठः ।

वर्ष्मणां शरीराणां स्वेदाद्यशुद्धानां जलं, प्रच्छन्नपापानामघमर्षणादिजपः, मनसो निषिद्धचिन्तादुष्टस्य सत्यं साधुसङ्कल्परूपं शुद्धिकृत् उच्यते । ज्ञानस्य शुद्धिहेतुत्वं प्रागुक्तं विवृणोति—भूतात्मनो भूतेषु शरीरात्मकेष्वात्मनो बुद्धिमतस्तपोविद्ये भ्रमनिवृत्त्यात्मकशुद्धिहेतू । तपःपदेन ब्रह्मज्ञानोपयोगि अनशनादि, विद्यापदेन चौपनिषदं ज्ञानमभिहितम् । बुद्धेः संशयविपर्ययवतो बुद्धितत्त्वस्य प्रमारूपं ज्ञानं विशोधनम् । क्षेत्रज्ञस्य तपोविद्याविशुद्धस्य साक्षात्काररूपादीश्वरज्ञानात्तु परमा शुद्धिः संसारलेपाभावरूपा धर्मशास्त्रकारैरनुमता ॥ ३१–३४ ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजचतुरुदधिवसुन्धराहृदयपुण्डरीकाविकासादिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूरिसूनुसकलविद्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाख्याने श्रीयाज्ञवल्क्यव्याख्याने आशौचप्रकरणम् ॥

---

(मिता० ) अधुना कालशुद्धौ दृष्टान्तत्वेन द्रव्यशुद्धिप्रकरणोक्तांस्तथैवात्र प्रकरणे वक्ष्यमाणांश्च शुद्धिहेतूननुक्रामति—

काल इति । यथाग्न्यादयोऽमी सर्वे स्वविषये शुद्धिहेतवस्तथा कालोऽपि दशरात्रादिकः । शास्त्रगम्यत्वाच्छुद्धिहेतुत्वस्य । अग्निस्तावच्छुद्धिहेतुः । यथाभ्यधायि 'पुनः पाकान्महीमयम्' इति । कर्म च शुद्धिनिमित्तं, यथा वक्ष्यति तथा 'अश्वमेधावभृथस्नानात्' इति । तथा मृदपि शुद्धिकारणं, यथा कथितम्—'सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये' इति । वायुरपि शुद्धिहेतुः, यथोदीरितं 'मारुतेनैव शुध्यन्ति' इति । मनोऽपि वाचः शुद्धिसाधनं, यथा-

न्नापि 'मनसा वा इषिता वाग्वदति' इत्यादि। ज्ञानं चाध्यात्मिकं बुद्धिशुद्धौ निदानं, यथाभिधास्यति 'क्षेत्रज्ञस्येश्वरज्ञानात्' इति। तपश्च कृच्छ्रादि, यथा वदिष्यति 'प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः' इत्यादि। तथा जलमपि शरीरादेः, यथा जल्पिष्यति 'वर्ष्मणो जलम्' इति। पश्चात्तापोऽपि शुद्धिजनकः, यथा गदितं 'दयापनेनानुतापेन' इति। निराहारोऽपि शुद्ध्युपादानं, यथा व्याहरिष्यति 'त्रिरात्रोपोषितो ज(१)प्त्वा' इत्यादि ॥ ३१ ॥

(मिता०) किञ्च—

अकार्येत्यादि। अकार्यकारिणां निषिद्धसेविनां दानमेव मुख्यं शुद्धिकारणं, यथा व्याख्यास्यति 'पात्रे धनं वा पर्याप्तं दत्त्वा' इति। नद्याः निदाघादावल्पतोयतया अमेध्योपहततीरायाः कूलङ्कषवर्षाम्बुप्रवाहवेगः शुद्धिकृत्। शोधनीयस्य द्रव्यस्य मृच्च तोयं च शुद्धिकृत्, यथेह भणितम् 'अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात्' इति। संन्यासः प्रव्रज्या द्विजन्मनां मानसापचारे शुद्धिकृत्। तपो वेदाभ्यासो वेदविदां शुद्धिकारणम्। कृच्छ्रादि तु सर्वसाधारणं नवेदविदामेव। क्षान्तिरुपशमो विदुषां वेदार्थविदाम्। वर्ष्मणः शरीरस्य जलम्। प्रच्छन्नपापानामविख्यातदोषाणां अघमर्षणादिसूक्तजपः शुद्धिकारणं शुद्धिसाधनम्। मनः सदसत्सङ्कल्पात्मकं तस्यासत्सङ्कल्पत्वादशुद्धस्य सत्यं साधुसङ्कल्पः शो(२)धकम्। भूतशब्देन तद्विकारभूतो देहेन्द्रिय(३)सङ्घो लक्ष्यते। तत्र स्थूलोऽहं काणोऽहं बधिरोऽहमित्येवं तदभिमानित्वेन योऽयमात्मा वर्तते। स भूतात्मा तस्य तपोविद्ये शुद्धिनिमित्ते। तपःशब्देनानेकजन्मस्वेकस्मिन्नपि वा जन्मनि (४)जागरस्वप्नसुषुप्त्यवस्थास्वात्मनो योऽयमन्वयः, शरीरादेश्च व्यतिरेकः सोऽभिधीयते। यथा 'तपसा ब्रह्म विजिज्ञासस्व' इति पञ्चकोशव्यतिरेकप्रतिपादनपरे वाक्ये। विद्याशब्देन चौपनिषदं 'अस्थूलमनण्वह्रस्वमसङ्गो ह्ययमात्मा' इत्यादि त्वंपदार्थनिरूपणविषयवाक्यजन्यं ज्ञानमुच्यते। एताभ्यामस्य शुद्धिः। शरीरादिव्यतिरेकबुद्धेः संशयविपर्ययरूपत्वेनाशुद्धायाः प्रमाणरूपं

(१) जप्त्वे इत्यादि।   (२) शोधनम् ङ.।
(३) द्रियसम्बन्धे ङ.।   (४) जपस्वप्न च.।

ज्ञानं विशोधनम् । क्षेत्रज्ञस्य तपोविद्याविशुद्धस्य त्वंपदार्थभूतस्य तत्त्व(१)मस्यादिवाक्यजन्यात्साक्षात्काररूपादीश्वरज्ञानात् (२)परमा विशुद्धिर्मुक्तिलक्षणा । यथैताः शुद्धयः परमपुरुषार्थास्तद्वद्युक्ततरा कालशुद्धिरपीत्येवं प्रशंसार्थं भूतात्मादिविशुद्ध्यभिधानम् ॥३२-३३-३४॥

इत्याशौचप्रकरणम् ।

---

(वी०मि०) 'आपद्यपि च कष्टायां सद्यः शौचं विधीयते' इत्यापदि मुख्याशौचापवादेन सद्यः शौचमनुकल्प्य तत्प्रसङ्गेनापदि मुख्यवृत्तिसम्भवानुकल्परूपं वृत्त्यन्तरमाह नवभिः श्लोकैः—

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ॥
निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥ ३५ ॥
फलोपलक्षौमसोममनुष्यापूपवीरुधः ॥
तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥ ३६ ॥
शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः ॥
मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः ॥ ३७ ॥
कौशेयनीललवणमांसैकशफसीसकान् ॥
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ ३८ ॥
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन ॥
धर्मार्थं विक्रयस्तेषां(३) तिला धान्येन तत्समाः ॥ ३९ ॥
लाक्षालवणमांसानि पतनीयानि विक्रये ॥
पयो दधि च मद्यं च हीनवर्णकराणि च ॥ ४० ॥
आपद्गतः सम्प्रगृह्णन् भुञ्जानोऽपि यतस्ततः ॥
(४)न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥४१॥

आपदि अवलानां मुख्यवृत्त्या भरणासम्भवे द्विजो ब्राह्मणः

---

(१) तत्त्वमसीत्यादि ख. । (२) परमात्मशुद्धिः ख. ।
(३) धर्मार्थं विक्रयं नेयास्तिला-इति मु. पु. पाठः ।
(४) न लुप्यो ब्राह्मणः किन्तु-इति क. पु. पाठः ।

क्षत्रियसम्बन्धिना कर्मणा जीवनोपायेन शस्त्रग्रहणादिना तदसम्भवे विशां कर्मणा वाणिज्यादिना जीवेत् न तु शूद्रवृत्त्या । अथ परकीयवृत्त्याश्रयणानन्तरं निस्तीर्य प्रायश्चित्तेनाऽऽत्मानं पावयित्वा पथि स्वकीयजीवनोपाये न्यसेत् अथवा मुक्तावशिष्टमापत्कालार्जितं धनं पथि न्यसेत् त्यजेदित्यर्थः । अपिकारेण क्षत्रियो वैश्यवृत्त्या वैश्यः शूद्रवृत्त्या जीवेदापदीति समुच्चीयते । 'अजीवन्तः स्वधर्मेणाऽनन्तरां पापीयसीं वृत्तिमातिष्ठेरन्न तु कदाचिज्ज्यायसी'मिति वसिष्ठस्मरणात् । शूद्रस्य तु वणिग्वृत्त्या जीवनमापदि प्रथमाध्याये ग्रन्थकृताऽभिहितम् । वैश्यवृत्त्या जीवन्नपि ब्राह्मण फलादीनि न विक्रीणीतेत्युत्सर्गः । यतो लाक्षादीनि विक्रये कृते तस्य पातकराणि, पयःप्रभृतीनि च शूद्रत्वकराणि विक्रये सति भवन्ति । अथाऽपवादः—फलादीनां धर्मसाधनीभूतद्रव्यसम्पादनार्थं विक्रयोऽपापः । तत्रैव तिला धान्येनैव विक्रेया न तु रजतादिना तत्समा धान्यपरिमाणा न तु न्यूनाधिकपरिमाणाः । यदि तु क्षात्रियवृत्त्या वैश्यवृत्त्या वा जीवनं न सम्भवति तदा विप्र आपद्गतः सन् यतस्ततो हीनहीनतरेभ्यः पतितभिन्नेभ्यः सम्यक् वृद्ध्युपयोग्यधिकधनैर्मुल्यं प्रगृह्णन् धनाद्यादिकं 'भुञ्जानो नात्र मनसा पापेन लिप्यते । हि यतः स वि प्रोऽग्निसूर्यवर्द्धनसदृशोऽप्यदुष्ट एव तिष्ठति । फल बदरेङ्गुदव्यतिरिक्तं 'फलानां बदरेङ्गुदे' इति विक्रय्यमुपक्रम्य नारदवचनात् । उपलं मण्यादिकमश्ममात्र, क्षौममतसीसूत्रनिर्मितं वस्त्र, सोमो लताविशेषो यज्ञसाधनं, वीरुधो गुडूच्यादिलताः, रसा इक्षुगुडादयः, (१)क्षारा यवक्षारादयः, आसवो मद्यं, मधूच्छिष्टं सिक्थं, बर्हिषः कुशाः, कुतप ऊर्णासूत्रनिर्मितकम्बल, कौशेयं कृमिकोशोत्थ पट्टवस्त्रादि, एकशफा अश्वादयः, सीसं लोहमात्रोपलक्षकम्, आर्द्रा ओषधयो धान्यस्तम्बादयः, पिण्याकस्तिलकल्कः, पशुर्गवादिः, गन्धः कुङ्कुमादिः । शेषाः प्रसिद्धाः । तथाशब्दचकाराभ्यां रक्तवस्त्रतैलादीनां समुच्चयः । तदाह मनुः—

> सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च ।
> अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥

---

(१) क्षारा—इत्यारभ्य यवक्षारादयः—इत्यन्तो भाग ख० पुस्तके नास्ति ।

तथा—

अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं (१)कुशान् ॥

इत्यादि । एवकारो धर्मार्थमित्यत्राऽन्वितः । मद्यं चेति चकारेण कथितपट्काऽतिरिक्तफलादिग्रहणम् । तद्विक्रये वैश्यत्वापादानं ब्राह्मणस्येति चरमचकारेण समुच्चीयते । तदाह मनुः—

सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥
इतरेषामपण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं निगच्छति ॥

अत्र ब्राह्मण इत्यभिधानान्न क्षत्रियादेः फलादिविक्रये दोष इति दिक् ॥ ३५—४१ ॥

(मिता०) 'आपद्यपि च कष्टायां सद्यः शौचं विधीयते' इत्यापदि मुख्याशौचकल्पानामनुष्ठानासम्भवेन सद्यःशौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसङ्गादापदि 'प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा' इत्याद्युक्तयाजनादिमुख्यवृत्त्यसम्भवेन वृत्त्यन्तरमाह—

क्षात्रेणेति । द्विजो विप्रो बहुकुटुम्बतया स्ववृत्त्या जीवितुमसमर्थः क्षत्रसम्बन्धिना कर्मणा शस्त्रग्रहणादिना आपदि जीवेत् । तेनापि जीवितुमशक्नुवन् वैश्यसम्बन्धिना कर्मणा वाणिज्यादिना जीवेत् न शूद्रवृत्त्या । तथा च मनुः ( १०।८२ )—'उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् । कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्' ॥ इति । तथा आपद्यपि न हीनवर्णेन ब्राह्मी वृत्तिराश्रयणीया किन्तु ब्राह्मणेन क्षात्री, क्षत्रियेण वैश्यसम्बन्धिनी, वैश्येन च शौद्रीत्येवं स्वानन्तरहीनवर्णवृत्तिरेव । 'अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्नतु कदाचिज्ज्यायसीम्' इति वसिष्ठस्मरणात् । ज्यायसी च ब्राह्मी वृत्तिः । तथा च स्मृत्यन्तरम्—'उत्कृष्टं वापकृष्टं वा तयोः कर्म न विद्यते । मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते' ॥ इति । शूद्रस्योत्कृष्टं ब्राह्मं कर्म न विद्यते । तथा ब्राह्मणस्यापकृष्टं शौद्रं कर्म । मध्यमे क्षत्रवैश्यकर्मणी

( १ ) गुडेक्षुजान्--इति क० पु० पाठः ।

पुनरापन्नत्वसर्ववर्णसाधार(१)ण इति । शूद्रश्चापन्नो वैश्यवृत्त्या शिल्पैर्वा जीवेत् । 'शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् । शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्' ॥ इति प्रागुक्तत्वात् । मनुना चात्र विशेषो दर्शितः ( १०।१०० )—'यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्माणि शिल्पानि विविधानि च' ॥ इति । अनेनैव न्यायेनानुलोमोत्पन्नानामपि स्वानन्तरा वृत्तिरूहनीया । एवं स्वानन्तरहीनवर्णवृत्त्या आपदं निस्तीर्य प्रायश्चित्ताचरणेनात्मानं पावयित्वा पथि न्यसेत् स्ववृत्तावात्मानं स्थापयेदित्यर्थः । पद्यायमर्थः गर्हितवृत्त्यार्जितं धनं पथि न्यसेदुत्सृजेदिति । तथा च मनुः ( १०।१११ )—'जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तं तु त्यागेन तपसैव तु' ॥ इति ॥ ३५ ॥

(मिता०) वैश्यवृत्त्यापि जीवतो ब्राह्मणस्य यदपण्यं तदाह—

फलोपलेत्यादि । नो विक्रीणीतेति प्रत्येकमभिसम्बध्यते । फलानि कदलीफलादीनि बदरङ्गुदव्यतिरिक्तानि । यथाह नारदः—'स्वयं शीर्णानि पर्णानि फलानां बदरेङ्गुदे । रज्जुं कार्पासिकं सूत्रं तच्चेदविकृतं भवेत्' ॥ इति । उ(२)पल मणिमाणिक्याद्यश्ममात्रम् । क्षौममतसीसूत्रमयं वस्त्रम् । क्षौमग्रहणं तान्तवादेरुपलक्षणम् । यथाह मनुः ( १०।८७ )—'सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च । अपि चेत्स्युररक्तानि फलमूले तथौषधीः' इति । सोमो लताविशेषः । मनुष्यपदेनाविशेषात्स्त्रीपुंनपुंसकानां ग्रहणम् । अपूप मण्डकादि भक्ष्यमात्रम् । वीरुधो वत्सामृतादिलताः । तिलाः प्रसिद्धाः । ओदनग्रहणं भोज्यमात्रोपलक्षणम् । रसा गुडेक्षुरसशर्करादयः । तथा च मनुः ( १०।८८ )—'क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्' इति । क्षारा यवक्षारादयः । दधिक्षीरयोर्ग्रहणं मस्तुपिण्डकिलाटकूर्चिकादीनां तद्विकाराणामुपलक्षणम् । 'क्षीरं सविकारम्' इति गौतमस्मरणात् । घृतग्रहणं तैलादिस्नेहमात्रोपलक्षणम् । जलं प्रसिद्धम् । शस्त्रं खड्गादि । आसवग्रहणं मद्यमात्रोपलक्षणम् । मधूच्छिष्टं सिक्थकम् । मधु क्षौद्रम् । लाक्षा जतु । बर्हिषः कुशाः । मृत् प्रसिद्धा । चर्माऽजिनम् । पुष्पं प्रसिद्धम् । (३)अजलोमकृतः

(१) साधारणे हि ते इति ख ।(२) उपलं माणिक्यादि ख ।(३) अजोर्णलोमकृत क ।

कम्बलः कुतपः । केशाश्वमर्यादिसम्बद्धाः । तक्रमुदश्वित् । विषं शृङ्ग्यादि । क्षितिर्भूमिः । 'नित्यं भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैके' इति सु(१)मन्तुस्मरणात् । कौशेयं कोशप्रभवं वसनम् । नीलं नीलीरसम् । लवणग्रहणेनैव विडसौवर्चलसैन्धवसामुद्रसोमककृत्रिमाण्यविशेषेण गृह्यन्ते । मांसं प्रसिद्धम् । एकशफा हयादयः । सीसग्रहणं लोहमात्रोपलक्षणम् । शाकं सर्वमविशेषात् । ओषधयः फलपाकान्ताः । आर्द्रौषधय इति विशेषोपादानाच्छुष्केषु न दोषः । पिण्याकः प्रसिद्धः । पशव आरण्याः ( १०।८९ )—'आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च' इति मनुस्मरणात् । गन्धाश्चन्दनागुरुप्रभृतयः । सर्वानेतान्वैश्यवृत्त्या जीवन्ब्राह्मणः कदाचिदपि न विक्रीणीत । क्षत्रियादेस्तु न दोषः । अत एव नारदेन—'वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि' इति ब्राह्मणग्रहणं कृतम् ॥ ३६–३७–३८ ॥

(मिता०) प्रतिप्रसवमाह—

धर्मार्थमिति । यद्यावश्यकाः पाकयज्ञादिधर्माः स्वसाधनव्रीह्यादिधान्याभावे न निष्पद्यन्ते तर्हि धान्येन तिला विक्रयं नेयाः । तत्समाः द्रोणपरिमिता, द्रोणपरिमितेनेत्येवं तेन धान्येन समाः । तथा च मनुः ( १०.९० )—'काममुत्पाद्य (२)कृष्यात्तु स्वयमेव कृषीवलः । विक्रीणीत तिलाञ्शुद्धान्धर्मार्थमचिरस्थितान्' ॥ इति । धर्मग्रहणमावश्यकभेषजाद्युपलक्षणम् । अत एव नारदः—'अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च । यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः' ॥ इति । यद्यन्यथा विक्रीणीते तर्हि दोषः ( १०।९१ )—'भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः । कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति' ॥ इति मनुस्मरणात् । सजातीयः पुनर्विनिमयो भवत्येव ( मनुः १०।९४ )—'रसा रसैर्निमातव्या (३)नत्वेव लवणं रसैः । कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः' ॥ इति । कृतान्नं सिद्धान्नं तच्च कृतान्नेन परिवर्तनी(४)यम् । 'कृतान्नं चाकृतान्नेन' इति पाठे तु सिद्धमन्नमकृतान्नेन तण्डुलादिना परिवर्तनीयमिति ॥ ३९ ॥

(१) गौतमस्मरणात् क. ख. । (२) कृष्यां तु क. ख. ।
(३) नत्वेवं लवणं ख. । (४) नीयमिति यावत् क. ख. ।

(मिता०) पूर्वोक्तानिषिद्धातिक्रमे दोषमाह—

लाक्षेति । लाक्षालवणमांसानि विक्रीयमाणानि सद्यःपतनीयानि द्विजातिकर्महानिकराणि । पयःप्रभृतीनि तु हीनवर्णकराणि शूद्रतुल्यत्वापादकानि । एतद्व्यतिरिक्तापण्यविक्रये वैश्यतुल्यता । यथाह मनुः ( १० । ९२-९३ )—'सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ इतरेषामपण्यानां विक्रयादिह कामतः । ब्राह्मणः सप्तरात्रेण वैश्यभाव (१)च गच्छति' ॥ इति ॥ ४० ॥

(मिता०) किञ्च—

आपद्गत इति । यस्त्वधर्मोऽवसन्नकुटुम्बतया आपद्गतोऽपि क्षत्रवृत्तिं वैश्यवृत्तिं वा न प्रविविक्षति स यतस्ततो (२)हीनहीनतमेभ्यः प्रतिगृह्णंस्तदन्नं भुञ्जानोऽपि (३)वा एनसा पापेन न लिप्यते । यतस्तस्यामापदवस्थायामसत्प्रतिग्रहाद्यधिकारित्वेन ज्वलनार्कसमः, यथा ज्वलनोऽर्कश्च हीनसङ्करेऽपि न दुष्यति तथायमापद्गतोऽपि न दुष्यतीत्येतावता तत्साम्यम् । एवं च वदता आपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवति । तथा च मनुः (१०।९७)—'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्माश्रयाद्विप्रः सद्यः पतति जातितः' ॥ इति ॥४१॥

कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ॥
सेवाऽनूपं नृपो भैक्षमापत्तौ जीवनानि (४)च ॥ ४२ ॥

( वी० मि० ) कृष्यादीनां मध्ये अनापदि यस्य या वृत्तिः प्रतिषिद्धा तस्याऽऽपत्तौ विपत्काले सैव जीवनोपाय इत्यर्थः । पूर्वं वैश्यवृत्तिशब्देन वाणिज्यमात्रमभिहितमतः कृषिरिहाऽभिहिता । शिल्पं चित्रादिककर्म, भृतिः व्यवस्थापितवेतनेन परप्रैष्यत्वं, विद्या गारुडादि, कुसीदं वृद्ध्यर्थं द्रव्यप्रयोग, शकटं परकीयभारोद्वहनकारि, गिरिर्विक्रयार्थाहरणीयतृणादेराधारः, सेवा वेतनव्यवस्थां विना परचित्तानुवर्तनम्, अनूपं प्रचुरतृणजलवृक्षमयोगवादिपालनोपयोगी देश, नृपः निन्दितप्रतिग्रहदानदाता, भैक्षं भिक्षासमूहः क्षत्रि-

( १ ) निगच्छति ख० । ( २ ) हीनतस्ततो ख । ( ३ ) वा नैनैसा घ ।
( ४ ) तु—इति मु० पु० पाठः ।

यादेरपि । चकारेण शाकिन्यादिसमुच्चयः । तदाह छागलेयः--

शकटः शाकिनी भावो जालमस्यन्दनं वनम् ।
अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥

शाकिनी शाकाद्युत्पत्तिहेतुर्वाटिका । अस्यन्दनं स्वस्थानापरित्यागः ॥ ४२ ॥

( मिता० ) किञ्च—

कृषिरिति । आपत्तौ जीवनानीति विशेषणात्कृष्यादीनां मध्ये अनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते । यथापदि वैश्यवृत्तिः स्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते । एवं शिल्पादीन्य(१)प्यभ्यनुज्ञायन्ते । शिल्पं सूप(२)करणादि । भृतिः प्रेष्यत्वम् । विद्या भृतकाध्यापकत्वाद्या । कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः । तत् स्वयंकृतमभ्यनुज्ञायते । शकटं भाटकेन धान्यादिवहनद्वारेण जीवनहेतुः । गिरिस्तद्गततृणेन्धनद्वारेण जीवनम् । सेवा परचित्तानुवर्तनम् । अनूपं प्रचुरतृणवृक्षजलप्रायः प्रदेशः । तथा नृपो नृपयाचनम् । भैक्षं स्नातकस्यापि । एतान्यापत्तौ जीवनानि । तथा च मनुः ( १०।११६ )—'विद्याः शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः । गिरिर्भैक्षं कुसीदं च दश जीवनहेतवः' ॥ इति॥४२॥

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ॥
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥ ४३ ॥

( वी० मि० ) कृष्यादीनामपि(३)वृत्तीनामप्यसम्भवेन त्र्यहं बुभुक्षितः स्थित्वा ब्राह्मणभिन्नात्खलक्षेत्रादिस्थं धान्यमेकाहपर्याप्तं चौर्येण हरेत् । प्रतिगृह्य च तद्धान्यं धर्मतः स(४)त्यानुसारेणाऽऽख्येयं 'क्षुधा पीडितेन मया अमुकस्य धान्यं गृहीत'मिति । यदि राजादिनाऽभियोगः क्रियते, तदाह मनुः--

तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥

इति ॥ ४३ ॥

(मिता०) यदा कृष्यादीनामपि जीवनहेतूनामसम्भवस्तदा कथं

( १ ) न्यप्यस्याभ्यनुज्ञायन्ते । ( २ ) रूपकरणादि ट ।
( ३ ) आपत्सु नाना०--इति ख० पु० पाठः । ( ४ ) सत्यानु०—इति ख० पु० पाठः ।

जीवनमित्यत आह—

क्षुभुक्षित इति । धान्याभावेन त्रिरात्रं क्षुभुक्षितोऽनश्नन् स्थित्वा अब्राह्मणाच्छूद्रात्तदभावे वैश्यात् तदभावे क्षत्रियाद्वा हीनकर्मण एकाहपर्याप्तं (१)धान्यमाहरेत् । यथाह मनुः (६-११७)—'तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः' ॥ इति तथा च प्रतिग्रहोत्तरकालं यद्धृतं तद्धर्मतो यथावृत्तमाख्येयम् । यदि (२)नाष्टिकेन स्वामिना त्वयेदं किं (३)नामापहृतमित्यभियुज्यते । यथाह मनुः—'खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते । आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति' ॥ इति ॥ ४३ ॥

( वी० मि० ) एवं चोरयितुरदण्डनीयत्वं सूचयन्नेव तादृशापद्ग्रस्ते राजकृत्यमाह—

तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं सु(४)तान् ।
ज्ञात्वा राजा कुटुम्बा(५)र्थं धर्म्यां वृत्तिं प्रकल्पयेत् ॥४४॥

तस्य त्र्यहोपवासानन्तरं धान्यचौर्यकर्तुर्विप्रादिकं ज्ञात्वा साधुत्वेन तं निश्चित्य सुतान् भृत्यवर्गान् तदीयान् ज्ञात्वा तत्कुटुम्बभरणार्थं धर्मादनपेतां वृत्तिं राजा कल्पयेत् । अन्यथा त्वाह मनुः—

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ।
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधिपीडितम् ॥

इति । श्रुताध्ययनयोः शब्दग्रहणार्थकतया भेदः ॥ ४४ ॥

इति श्रीमत० याज्ञवल्क्यव्याख्याने आपद्धर्मप्रकरणम् ।

---

(मिता०) इदमपरमापत्प्रसङ्गाद्राज्ञो विधीयते—

तस्येति । योऽन्न(६)नायापरीतोऽवसीदति तस्य वृत्तमाचारं, कुलमाभिजात्यं, शीलमात्मगुणं, श्रुतं शास्त्रश्रवणं, अध्ययनं वेदाध्ययनं, तपः कृच्छ्रादि च परीक्ष्य राजा धर्मादनपेतां वृत्तिं प्रकल्पयेत् । अन्यथा तस्य(७) दोषः । तथा च मनुः [७।१३४]—'यस्य

---

( १ ) धान्य हरेत् । ( २ ) नास्तिकेन । ( ३ ) ममापहृत मिति स ।
( ४ ) तप —इति मु० पु० पाठ । ( ५ ) कुटुम्ब च—इति मु० पु० पाठ ।
( ६ ) योऽशनाय स. । ( ७ ) राज्ञो दोष इ ।

राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा । तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधिपीडितम्' ॥ इति ॥ ४४ ॥

इत्यापद्धर्मप्रकरणम् ।

---

( वी० मि० ) चतुर्णामाश्रमिणां मध्ये ब्रह्मचारिगृहस्थयोर्धर्मा अभिहिताः, इदानीं वानप्रस्थधर्मानाह सम्पूर्णप्रकरणेन--

सुतविन्यस्तपत्नीकस्तया (१)चाऽनुगतो वनम् ॥
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥ ४५ ॥

वने प्रकर्षेण नियमविशिष्टेन तिष्ठतीति वनप्रस्थः, वनप्रस्थ एव वानप्रस्थः इति भाविनी संज्ञा । सुते भरणार्थं समर्पितपत्नीकः, पत्न्याः पतिपरिचर्याभिलाषित्वे तया पत्न्याऽनुगतो ब्रह्मचारी मैथुननिवृत्तः साग्निः त्रेताग्निसहितः सोपासनो गृह्याग्निसहितश्च वनं व्रजेत् । प्रस्थानसमय एव पत्नी पतिकर्तृकाऽग्निहोत्रमनुमन्यत इति सुतविन्यासपक्षेऽग्नेर्नयनं घटते ॥ ४५ ॥

(मिता०) चतुर्णामाश्रमिणां मध्ये ब्रह्मचारिगृहस्थयोर्धर्माः प्रतिपादिताः । साम्प्रतमवसरप्राप्तान्वानप्रस्थधर्मान्प्रतिपादयितुमाह—

सुतेति । वने प्रकर्षेण नियमेन च तिष्ठति चरतीति वनप्रस्थः वनप्रस्थ एव वानप्रस्थः । संज्ञायां दैर्घ्यम् । भाविनीं वृत्तिमाश्रित्य वनं प्रतिष्ठासुरिति यावत् । असौ सुतविन्यस्तपत्नीकः त्वयेयं भरणीयेत्येवं सुते विन्यस्ता विक्षिप्ता पत्नी येन स तथोक्तः । यदि सा पतिपरिचर्याभिलाषेण स्वयमपि वनं जिगमिषति तदा तयानुगतो वा सहितः तथा ब्रह्मचारी ऊर्ध्वरेताः साग्निर्वैतानाग्निसहितः तथा सोपासनो गृह्याग्निसहितश्च वनं व्रजेत् । सुतविन्यस्तपत्नीक इति वदता कृतगार्हस्थ्यो (२)वनवासेऽधिक्रियत इति दर्शितम् । एतच्चाश्रमसमुच्चयपक्षमङ्गीकृत्योक्तम् । इतरथा 'अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमावसेत्' इत्यकृतगार्हस्थ्योऽपि वनवासेऽधिक्रियत एव । अयं च वनप्रवेशो जराजर्जरकलेवरस्य जातपौत्रस्य वा । यथाह मनुः (६।२)—'गृहस्थस्तु यदा पश्येद्व-

---

( १ ) चाऽनुगतो--इति मु० पु० पाठः । ( २ ) वानप्रस्थो वनवासे स ।

स्त्रीपलितमात्मनः । अपत्यस्यैव वाऽपत्यं तदारण्यं समाश्रयेत्' ॥ इति । अयं च पुत्रेषु पत्नीनिक्षेपो विद्यमानभार्यस्य । मृतभार्यस्याप्यापस्तम्बादिभिः वनवासस्मरणात् । अतो 'यत् दाहयित्वाऽग्निहोत्रेणे'ति पुनराधानविधानं तदपरिपक्वकषायविषयम् । साग्निः सोपासन इत्यत्रापि (१)यदार्धाधानं कृतं तदा श्रौताग्निभिर्गृह्येण च सहितो वनं व्रजेत् । सर्वाधानं तु श्रौतैरेव केवलम् । यदि कथञ्चिज्ज्येष्ठभ्रातुरनाहिताग्नित्वादिना श्रौताग्नयोऽनाहितास्तर्हि केवलं सोपासनो व्रजेदित्येवं विवेचनीयम् । अग्निनयनं च सन्निधेस्त्वाग्निहोत्रादिकर्मसिद्ध्यर्थम् । अत एव मनुः ( ६।९ )—'वैतानिकं च जुहुयादग्निहोत्रं यथाविधि । (२)दर्शमस्कन्दयन्पर्व पौर्णमासं च शक्तितः' ॥ इति । ननु च पुत्रनिक्षिप्तपत्नीकस्य तद्विरहिणः कथमग्निहोत्रादिकर्मानुष्ठानं घटते । पत्न्या सह यष्टव्यमिति सहाधिकारनियमात् । सत्यमेवं, किन्त्वत्र पत्नीनिक्षेपविधिबलादेव(३)तन्निरपेक्षेणाधिकारः कल्प्यते । यथा हि रजस्वलायां 'यस्य (४)व्रत्येऽहनि पत्न्यना(५)लम्भुका स्यात्तामप(६)रुध्य यजेते'त्यपरोधविधिबलात्तन्निरपेक्षता । यद्वा वनं प्रतिष्ठमानमेव पतिं पत्न्यनुमन्यत इति न विरोधः । न च यथा ब्रह्मचारिणा विधुरस्य वा वनं प्रविशतस्याग्निहोत्रादिपरिलोपस्तथा निक्षिप्तपत्नीकस्याप्यग्निहोत्राद्यभाव इति शङ्कनीयम् । अपाक्षिकत्वेन श्रवणात् । न च ब्रह्मचारिविधुरयोरप्यग्निसाध्यकर्मस्वनधिकारः । पञ्चममासादूर्ध्वमाहितश्रावणिकाग्नेस्तदधिकारदर्शनात् । 'वानप्रस्थो जटिलश्चीराजिनवासा न फालकृष्टमधितिष्ठेत् अकृष्टं मूलफलं सञ्चिन्वीत ऊर्ध्वरेताः क्षमाशयो दद्यादेव न प्रतिगृह्णीयादूर्ध्वं पञ्चभ्यो मासेभ्यः श्रावणिकेना(७)ग्नीनाधायाहिताग्निर्वृक्षमूलको दद्याद्देवपितृमनुष्येभ्यः स गच्छेत्स्वर्गमानन्त्यम्' इति वासिष्ठस्मरणात् । चीरं वस्त्रखण्डो वल्कलं वा । न फालकृष्टमधितिष्ठेत्कृष्टक्षेत्रस्यापरि न निवसेत् । श्रावणिकेन वैदिकेन मार्गेण न लौकिकेनेत्यर्थः ॥ ४६ ॥

---

( १ ) अर्धाधान इत्यत्र श्रौतस्मार्तयोरग्न्योस्तु पृथक्कृति । सर्वाधान तयोरेकीकृतिः पूर्वयुगाश्रया ॥ त्रेतापरिग्रहः सर्वाधानम्। ( २ ) दर्शमास्कन्दयन् न क ।
( ३ ) तन्निरपेक्षेणाधिकार क । ( ४ ) व्रात्येऽहनि क । ( ५ ) लम्भिका क ।
( ६ ) अवरुध्य यजेतेत्यवरोध क. ख । ( ७ ) नाग्निमाधाय ख. ।

अफालकृष्टेनाग्नींश्च पितॄन् देवातिथीनपि ॥
भृत्यांश्च तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् ॥ ४६ ॥

( वी० मि० ) कर्षणं विनैवोत्पन्नेन नीवारादिनाऽग्न्यादीन् तर्पयेत् । अग्नितर्पणमग्निहोत्रम् । आद्येन चकारेणाऽग्निहोत्रसाधनगोमयादिदातृगवां, चरमेण स्वस्य समुच्चयः । अपिकारेण बलिकर्दमोद्देश्यभूतसमुच्चयः । लोमपदेन कक्षादिस्थं लोम विवक्षितम् ।

जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ।

इति मनुः । आत्मवानात्मोपासनरतः सन् ॥ ४६ ॥

( मिता० ) 'साग्निः सोपासनो व्रजे'दित्येतदग्निसाध्यश्रौतस्मार्तकर्मानुष्ठानार्थमित्युक्तं, तत्र गुणविधिमाह—

अफालेति । फालग्रहणं कर्षणसाधनोपलक्षणम् । अकृष्टक्षेत्रोद्भवेन नीवारवेणुश्यामाकादिना अग्नींस्तर्पयेदग्निसाध्यानि कर्माण्यनुतिष्ठेत् । चशब्दाद्भिक्षादानमपि तेनैव कुर्यात् । तथा पितॄन्देवानतिथीन् अपिशब्दाद् भूतान्यपि तेनैव तर्पयेत् । तथा भृत्यान् चशब्दादाश्रमागतानपि । तथा च मनुः ( ६।७ )—'यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान्' ॥ इति । एवं पञ्चमहायज्ञान्कृत्वा स्वमपि तच्छेषमेव भुञ्जीत । ( ६।१२ ) 'देवताभ्यश्च तद् हुत्वा वन्यं मेध्यतरं हविः । शेषमात्मनि युञ्जीत लवणं च स्वयंकृतम्' ॥ इति मनुस्मरणात् । स्वयंकृतमूषरलवणम् । एवं भोजनार्थे यागाद्यर्थे च मुन्यन्ननियमाद्ग्राम्याहारपरित्यागोऽर्थसिद्धः । अत एव मनुः ( ६।३ )—'संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्' इति । ननु च दर्शपूर्णमासादेर्व्रीह्यादिग्राम्यद्रव्यसाध्यत्वात्कथं तत्परित्यागः । न च वचनीय(१)मफालकृष्टेनाग्नींश्चेति विशेषवचनसामर्थ्याद्व्रीह्यादिबाध इति । विशेषविषयिण्यापि स्मृत्या श्रुतिबाधस्यान्याय्यत्वात्, अफालकृष्टविधेश्च स्मार्ताग्निसाध्यकर्मविषयत्वेनाप्युपपत्तेः । सत्यमेवं किन्त्वत्र व्रीह्यादेरप्यफालकृष्टत्वसम्भवान्न विरोधः । अत एवोक्तं मनुना ( ६।११ )—'वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक्' ॥ इति । नीवारादीनां मुन्यन्नानां स्वयमुत्पन्नानां स्वतो मेध्यत्वं सिद्धं

(१) अफालकृष्ट ख. ।

ऽपि पुनर्मेध्यग्रहणं यज्ञार्हत्वोह्यादिप्राप्त्यर्थं कृतम्। मेधो यज्ञस्तदर्हं मेध्यमिति । तथा श्मश्रूणि मुखजानि रोमाणि जटारूपांश्च शिरोरुहान्कक्षादीन च रोमाणि बिभृयात् । रोमग्रहणं नखानामप्युपलक्षणम् । तथा च मनुः—'जटाश्च बिभृयान्नित्य श्मश्रुलोमनखांस्तथा'। इति । तथात्मवानात्मोपासनाभिरतः स्यात् ॥ ४६ ॥

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य च ॥

अर्थस्य सञ्चयं कुर्यात् कृतमाश्वयुजे त्यजेत् ॥ ४७ ॥

( वी० मि० ) दिवसस्य मासस्य चैकस्य षण्णां वा मासानां संवत्सरस्य वा सम्बन्धिभोजनयजनादिपर्याप्तस्याऽर्थस्य द्रव्यस्य नीवारादेः तथा धर्माविरुद्धप्रकारेण संचयं कुर्यात् । ततोऽधिकस्य कृतं सङ्गृहीतं विनियुक्तावशिष्टं च द्रव्यमाश्विने मासि त्यजेत् । पुनरन्यसंचयं कुर्यादित्यर्थः ॥ ४७ ॥

(मिता०) पूर्वोक्तद्रव्यसञ्चयनियममाह—

अह्न इति । एकस्याह्नः सम्बन्धि भोजनयजनादिदृष्टादृष्टकर्मणः पर्याप्तस्यार्थस्य सञ्चयं कुर्यात् । मासस्य वा षण्णां मासानां वा सम्बन्धि कर्मपर्याप्तं सञ्चयं कुर्यात् नाधिकम् । यद्येवं क्रियमाणमपि कथञ्चिदतिरिच्यते तर्हि तदतिरिक्तमाश्वयुजे मासि त्यजेत् ॥ ४७ ॥

दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ॥

स्वाध्यायवान् दानशीलः सर्वभूत(१)हिते रतः ॥ ४८ ॥

दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः ॥

श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः ॥ ४९ ॥

( वी० मि० ) दान्तः शीतातपादिदुःखसहिष्णु, त्रिषु सवनेषु स्नानशीलः प्रतिग्रहात् शब्दसमुच्चितायाजनादेश्च निवृत्त, स्वाध्यायवान् वेदाभ्यासरतः, फलमूलभिक्षादिदानशीलः, सर्वेषां भूतानां प्राणिनां हिताचरणे रतः, दन्ता एवोलूखलं निस्तुषीकरणसाधनं यस्य सः, कालवशेन यत्नतः पक्वं बदरीफलनीवारादि तदशनशीलः, अश्मना कुट्टकोऽवहननकर्ता । वाशब्दात् 'अग्निपक्वाशनो वा स्या'दिति मनूक्तसङ्ग्रहः । श्रौतमग्निहोत्रादि स्मार्तं वैश्वदेवादि यथ-

( १ ) सत्त्व- इति मु० पु० पाठ ।

श्यकर्तव्यतया बोधितं, क्रिया भोजनभृत्यभरणाद्याश्च मेध्यतरुफलोद्भवैः स्नेहघृतस्थानीयैर्न तु घृतैस्तथा विधिबोधितप्रकारेण कुर्यात् ॥ ४८-४९ ॥

(मिता०) किञ्च—

दान्तेति । दान्तो दर्परहितः । त्रिषु सवनेषु प्रातर्मध्यन्दिनापराह्णेषु स्नानशीलः । तथा प्रतिग्रहपराङ्मुखः । चशब्दाद्याजनादिनिवृत्तश्च । स्वाध्यायवान् वेदाभ्यासरतः । तथा फलमूलभिक्षादिदानशीलः । सर्वप्राणिहिताचरणनिरतश्च भवेत् ॥ ४८ ॥

(मिता०) किञ्च—

दन्तेति । दन्ता एवोलूखलं निस्तुषीकरणसाधनं दन्तोलूखलं तद्यस्यास्ति स दन्तोलूखलिकः । कालेनैव पक्वं कालपक्वं नीवारवेणुश्यामाकादि बदरेङ्गुदादिफलं च तदशनशीलः कालपक्वाशी । वाशब्दो 'अग्निपक्वाशनो वा स्यात्कालपक्वभुगेव वा' इति मनूक्ताग्निपक्वाशित्वाभिप्रायः । अश्मकुट्टको वा भवेत् । अश्मना कुट्टनमवहननं यस्य स तथोक्तः । तथा श्रौतं स्मार्तं च कर्म दृष्टार्थाश्च भोजनाभ्यञ्जनादिक्रियाः लकुचमधूकादिमेध्यतरुफलोद्भवैः स्नेहद्रव्यैः कुर्यान्न तु घृतादिकैः । तथा च मनुः [६।१३]—'मेध्यवृक्षोद्भवानद्यात्स्नेहांश्च फलसम्भवान्' इति ॥ ४९ ॥

चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा ॥
पक्षे गते वाऽप्यश्नीयान्मासे वाऽहनि वा गते ॥ ५० ॥

( वी०मि० ) चान्द्रायणैः सदा कालं नयेत् । प्राजापत्यादिभिः कृच्छ्रैर्वा कालं वर्तयेत् । सदेति सर्वान्वितम् । मासे पक्षे वा गतेऽह्न्येकस्मिन् वा गतेऽश्नीयात्, न तु गृहस्थवत् प्रत्यहमित्यर्थः । अपिकारेणाष्टमकालिकादिसमुच्चयः ।

चतुर्थकालिको वा स्यात् यद्वाऽप्यष्टमकालिकः ।

इति मनुवचनात् ॥ ५० ॥

(मिता०) पुरुषार्थतया विहितद्विर्भोजननिवृत्त्यर्थमाह—

चान्द्रायणैरिति । चान्द्रायणैर्वक्ष्यमाणलक्षणैः कालं नयेत् । कृच्छ्रैर्वा प्राजापत्यादिभिः कालं वर्तयेत् । यद्वा पक्षे पञ्चदशदिनात्मकेऽतीतेऽश्नीयात् मासे वाऽहनि गते वा नक्तमश्नीयात् । अपि-

शब्दाच्चतुर्थकालिकत्वादिनापि । यथाह मनुः (६।१९) 'नक्तं चान्नं समश्नीयाद्दिवा वाऽऽहृत्य शक्तितः । चतुर्थकालिको वा स्यात्स्याद्वाप्यष्टमकालिकः' ॥ इति । एतेषां च कालनियमानां स्वशक्त्यपेक्षयाऽ विकल्पः ॥ ५० ॥

शुचिर्भूमौ (१)स्वपेद्रात्रौ दिवा सम्प्रपदैर्नयेत् ॥
स्नानासनविहारैर्वा योगाभ्यासेन वा तथा ॥ ५१ ॥

( वी०मि० ) रात्रौ शुचिः सन् भूमौ न तु खट्वादौ स्वपेत् । दिवा दिवस समीचीनैर्धर्मार्थकैः प्रपदैः सृतैः स्थानेनोर्ध्वस्थानेन आसनेनोपवेशेन विहारेणोपनिषच्छ्रवणलीलया तथा योगाभ्यासेन नयेत् न तु स्वपेत् ।

मनुः—

विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ।

शृणुयादिति सम्बध्यते । तथा—

भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ॥

'इति ॥ ५१ ॥

( मिता० ) किंच—

स्वप्यादिति । आहारविहारावसरवर्ज्यं रात्रौ शुचिः प्रयतः स्वप्यात् नोपविशेन्नापि तिष्ठेत । दिवा स्वप्नस्य पुरुषमात्रार्थतया प्रतिषिद्धत्वात् तन्निवृत्तिपरम् । तथा भूमावेव स्वप्यात् । तत्र भूमावेव न शय्यान्तरितायां मञ्चकादौ वा । दिनं तु संप्रपदैरटनैर्नयेत् । स्थानासनकर्वा विहारैः संचारैः काश्चित्कालं स्थानं काश्चिदोपवेशनमित्येव वा दिनं नयेत् । योगाभ्यासेन वा । तथा च मनुः (६।२२)- 'विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः' इति । आत्मनः संसिद्धये ब्रह्मत्वप्राप्तये । तथाशब्दात्क्षितिपरिलोडनाद्वा नयेत् । (६।२२)— "भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम्' इति मनुस्मरणात् । प्रपदः पादाग्रैः ॥ ५१ ॥

ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥
आर्द्रवासाश्च हेमन्ते शक्त्या वापि तपश्चरेत् ॥ ५२ ॥

( वी०मि० ) 'ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्तश्चे'ति । तत्र

(१) स्वप्याद् भूमौ शुची रात्रौ—इति मु० पु० पाठ ।

ग्रीष्मे चैत्रादिमासचतुष्टये पञ्चाग्निमध्यस्थः तपः पञ्चाग्निसेवनरूपं चरेत् । चतुर्दिक्षु चत्वारोऽग्नय उपरि च सूर्यात्मकोऽग्निरित्येवं पञ्चाऽग्नयः । वर्षासु स्थण्डिलेशयो वर्षाधारानिवारणविरहिभूतलशायी स्थण्डिलशयनरूपं तपश्चरेत् । हेमन्ते त्वार्द्रवासाः तादृशवस्त्रधारणं सार्वकालिकं तपश्चरेत् । एवंविधस्तपश्चरणेऽशक्तः स्वसामर्थ्यानुसारेण शरीरशोषकं तपोन्तरमाचरेत् । आपशब्देनाऽनुकल्पत्वं चरमपक्षस्य सूचितम ॥ ५२ ॥

( मिता० ) किञ्च—

ग्रीष्म इति । 'ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्तः' इति दर्शनात् ग्रीष्मे चैत्रादिमासचतुष्टये चतसृषु दिक्षु चत्वारोऽग्नयः उपरिष्टादादित्य इत्येवं पञ्चानामग्नीनां मध्ये तिष्ठेत् । तथा वर्षासु श्रावणादिमासचतुष्टये स्थण्डिलेशयः वर्षाधाराविनिवारणविरहिणि भूतले निवसेत् । हेमन्ते मार्गशीर्षादिमासचतुष्टये क्लिन्नं वासो वसीत । एवंविधतपश्चरणे असमर्थः स्वशक्त्यनुरूपं वा तपश्चरेत् । यथा शरीरशोषस्तथा यतेत । ( ६।२४ )—'तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः' इति मनुस्मरणात् ॥ ५२ ॥

यः कण्टकैर्वितुदति चन्दनैर्वाऽनुलिम्पति(१) ॥
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥

( वी० मि० ) कण्टकैस्तु यो विशेषतस्तुदति व्यथयति तस्याऽक्रुद्धः यश्चन्दनैस्तमनुलिम्पति तस्याऽपरितुष्टः उभयोश्च समः उदासीनः स्यात् । षष्ठी विषयत्वपरा । चकारैरुदासीनस्य हर्षशोकाभावयोश्च समुच्चयः ॥ ५३ ॥

( मिता० ) किञ्च—

य इति । यः कश्चित्कण्टकादिभिर्विविधमङ्गानि तुदति व्यथयति तस्मै न क्रुध्येत् । यश्चन्दनादिभिरनुलिम्पति सुखयति तस्य न परितुष्येत् । किं तु तयोरुभयोरपि समः स्यादुदासीनो भवेत् ॥ ५३ ॥

( वी० मि० ) अन्नसञ्चयाक्षमत्वेनाऽग्निहोत्राद्यसम्भवे त्वाह—

अग्नीन्वाऽप्यात्मसात्कृत्वा वृक्षावासो मिताशनः ॥
वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत् ॥ ५४ ॥

(१) चन्दनैर्यश्च लिम्पति—इति मु० पु० पाठ ।

ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ॥

वायुभक्षः प्रागुदीचीं गच्छेदावर्ष्मसंक्षयात् ॥ ५५ ॥

वैतानसशास्त्रोक्तविधिनाऽग्नीनात्मनि समारोप्य मूलफलादिना जीवनार्थं वृक्ष एव आवासो वासस्थलं यस्य स, मिताशनः परिमितभोजी स्यात् । तदसम्भवे वानप्रस्थानां गृहेषु भैक्षं यात्रार्थं प्राणरक्षणार्थमाचरेत् । एवकारेण गृहस्थव्यवच्छेदः । ततो जीवनासम्भवे ग्रामाद्ग्रामवासिनो गृहस्थसमुदायादाहृत्य अष्टौ ग्रासान् तावता प्राणधारणासम्भवे तु षोडश ग्रासान् वाग्यतो मौनी भूत्वा भुञ्जीत। सर्वथाऽसमर्थस्तु आवर्ष्मसंक्षयात् शरीररक्षणपर्यन्तं वायुभक्षः सन् प्रागुदीचीमैशानीं दिशमकुटिलगतिर्गच्छेत् । स्मृत्यन्तरे—

अष्टौ ग्रासा मुनेर्भैक्षं वानप्रस्थस्य षोडश ।

मनु —

अग्नीनात्मनि वैतानान् समारोप्य यथाविधि ।
अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥

तथा—

अपराजितां वास्थाय गच्छेद्दिशमजिह्मगः ।

स्मृतिः—'वानप्रस्थो वीराध्वानं ज्वलनाम्बुप्रवेशनं भृगुप्रपतनं वाऽनुतिष्ठेत्' । अस्मिन् वानप्रस्थाश्रमे ब्राह्मणक्षत्रिययोरेवाधिकार. ।

चत्वारो ब्राह्मणस्योक्ता आश्रमा श्रुतिदर्शिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥

इति योगिसंहितायां ग्रन्थकृताऽभिहितत्वादिति ॥ ५४–५५ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने वानप्रस्थप्रकरणम् ।

---

( मिता० ) अग्निपरिचर्याक्षमं प्रत्याह—

अग्नीनिति । अग्नीनात्मनि समारोप्य वृक्षावासो वृक्ष एव आवासः कुटी यस्य स तथोक्तः । मिताशनः स्वल्पाहारः । अपिशब्दात्फलमूलाशनश्च भवेत् । यथ
वैतानान्समारोप्य यथाविधि ।
शन.' ॥ इति । मुनिर्मौनव्रतयुक्त
धारणं भवति तावन्मात्रं भैक्षं वानप्रस्थगृहेष्वाचरेत् ॥ ५४ ॥

( मिता० ) यदा तु तदसंभवो व्याध्यभिभवो वा। तदा किं कार्य-

मित्यत आह—

ग्रामादिति । ग्रामाद्धा भैक्षमाहृत्य वाग्यतो मौनी भूत्वा अष्टौ ग्रासान्भुञ्जीत । ग्रास्यभैक्षविधानान्मुन्यन्ननियमोऽर्थलुप्तः । यदा पुनरष्टभिर्ग्रासैः प्राणधारणं न संभवति तदा 'अष्टौ ग्रासा मुनेर्भैक्षं वानप्रस्थस्य षोडशे'ति स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥

( मिता० ) सकलानुष्ठानासमर्थं प्रत्याह—

वायुभक्ष इति । अथवा वायुरेव भक्षो यस्यासौ वायुभक्षः प्रागुदीचीमैशानीं दिशं गच्छेत् । आवर्ष्मसंक्षयात् वर्ष्म वपुस्तस्य निपातपर्यन्तमकुटिलगतिर्गच्छेत् । यथाह मनुः—(६।३१)—'अपराजितां वाऽस्थाय गच्छेद्दिशमजिह्मगः' इति । महाप्रस्थानेऽप्यशक्तौ भृगुपतनादिकं वा कुर्यात् । 'वानप्रस्थो वी(१)राध्वानं ज्वलनाम्बुप्रवेशनं भृगुपतनं वानुतिष्ठेत्' इति स्मरणात् । स्नानाचमनादिधर्मा ब्रह्मचारिप्रकरणाद्यभिहिताश्चाविरोधिनोऽस्यापि भवन्ति । 'उत्तरेषां चैतदविरोधि' इति गौतमस्मरणात् । एवं प्रागुदितैन्दवादिदीक्षामहाप्रस्थानपर्यन्तास्तनुत्यागान्तमनुतिष्ठन्ब्रह्मलोके पूज्यतां प्राप्नोति । यथाह मनुः (६।३२)—'आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते' ॥ इति । ब्रह्मलोकः स्थानविशेषो न तु नित्यं ब्रह्म । तत्र लोकशब्दस्याप्रयोगात् । तत्र तुरीयाश्रममन्तरेण मुक्त्यनङ्गीकाराच्च । न च 'योगाभ्यासेन वा पुनः' इति ब्रह्मोपासनविध्यनुपपत्त्या तद्भावापत्तिः परिशङ्कनीया । सालोक्यादिप्राप्त्यर्थत्वेनापि तदुपपत्तेः । अत एव श्रुतौ 'त्रयो धर्मस्कन्धा' इत्युपक्रम्य 'यज्ञोऽध्ययनं दानमिति प्रथमः, तप एवेति द्वितीयः, ब्रह्मचर्याचार्यकुलवासी तृतीयः । अत्यन्तमाचार्यकुल एवमात्मानमवसादयन्निति गार्हस्थ्यवानप्रस्थनैष्ठिकत्वस्वरूपमभिधाय सर्व एते पुण्यलोका भवन्तीति त्रयाणामाश्रमिणां पुण्यलोकप्राप्तिमभिधाय 'ब्रह्मसंस्थोऽमृतत्वमेति' इति पारिशेष्यात्परिव्राजकस्यैव ब्रह्मसंस्थस्य मुक्तिलक्षणामृतत्वप्राप्तिरभिहिता । यदपि 'श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते' इति गृहस्थस्यापि मोक्षप्रतिपादनं तद्भवान्तरानुभूतपारिव्रज्यस्येत्यवगन्तव्यम् ॥ ५५ ॥

इति वानप्रस्थधर्मप्रकरणम् ।

( १ ) वीराध्वानं ख ।

( वी० मि० ) अथ क्रमप्राप्तान् संन्यासिधर्मानभिधास्यन् चतुर्थाश्रमं प्रस्तौति—

वनाद् गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् ॥
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥ ५६ ॥
अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् ॥
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ ५७ ॥

वनाद्वानप्रस्थाश्रमात् गृहात् गृहस्थाश्रमात् वाशब्देनाऽनाश्रमाविना ब्रह्मचर्याश्रमाद्वा कषायपरिपाके सति मोक्षे मोक्षैके संन्यासाश्रमे मनः कुर्यात् । अस्मिन्नाश्रमे ब्राह्मणस्यैवाऽधिकारः, वाक्यस्यवचनात् ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।

इत्यभिधाय—

एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ॥

इत्युपसंहरता मनुना ब्राह्मणस्यैवाऽधिकारबोधनाच्च । 'ब्राह्मणाः प्रव्रजन्ती'ति श्रुतेश्च । सार्ववेदसी सर्वधनसम्बन्धिनी दक्षिणा यस्यास्तां प्रजापतिदेवताकामिष्टिं ब्रह्मचारिभिन्नः साग्निश्चेत्तदा कृत्वा तदन्ते इष्टिकरणानन्तरं वैतानानग्नीनात्मनि श्रुत्युक्तविधानेनाऽऽरोप्य कृत्वेत्यनेन मनः कुर्यादित्येतत्प्रतिबन्धायानिष्टयानन्तर्यबोधनेऽपि नेष्टिकरणाग्निसमारोपणयोः पूर्वापरभावो बोधित इति तदन्त इत्यस्य नानर्थक्यम् । पुत्रवानिति कृतदारपरिग्रहपरम् । आद्यचकारात् 'उदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाऽष्टौ श्राद्धानि निर्वपेत् द्वादश वे'ति बौधायनाद्युक्तेतिकर्तव्यतासमुच्चयः । द्वितीयचकारेण नित्यनैमित्तिककर्मान्तरकृदिति समुच्चितम् । तुशब्देन यथेच्छाचरणस्य संन्यासाधिकारो व्यवच्छिद्यते । नान्यथेति । इष्टकरणादीतिकर्तव्यतां विना न संन्यासाश्रमपरिग्रहः कार्य इत्यर्थः । अत्र जाबालिः-'ब्रह्मचर्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वे'ति । अथ 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति श्रुतम् ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।

अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥

इति मनुना चोक्तः क्रमः। कथं ब्रह्मचारिणः संन्यासाधिकारः सङ्गच्छत इति चेत्—उच्यते, कृतदारपरिग्रहस्य पुत्रोत्पादनानन्तरमेव प्रव्रज्याधिकार इत्येतत्तात्पर्यकत्वमेतयोः श्रुतिमनुवाक्ययोः। अन्यथा सिद्धजाबालश्रुत्या ब्रह्मचारिणामधिकारसिद्धेरिति दिक् ॥५६-५७॥

( मिता० ) वैखा(१)नसधर्माननुक्रम्य क्रमप्राप्तान्परिव्राजकधर्मान् सांप्रतं प्रस्तौति—

वनादित्यादि। यावता कालेन तीव्रतपःशोषितवपुषो विषयकषायपरिपाको भवति पुनश्च मदोद्भवाशङ्का नोद्भाव्यते तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्यात्। वनगृहशब्दाभ्यां तत्सम्बन्ध्याश्रमो लक्ष्यते। मोक्षशब्देन च मोक्षैकफलकश्चतुर्थाश्रमः। अथवा गृहाद्वार्हस्थ्यादनन्तरं मोक्षे मनः कुर्यात्। अनेन च पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षः पाक्षिक इति द्योतयति। तथा च विकल्पो जाबालश्रुतौ श्रूयते—'ब्रह्मचर्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' इति। तथा गार्हस्थ्यो(२)त्तराश्रमबाधश्च गौतमेन दर्शितः—'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य' इति। एतेषां च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः। अतो यत्कैश्चित्पण्डितंमन्यैरुक्तम्—'स्मार्तत्वान्नैष्ठिकत्वादीनां गार्हस्थ्येन श्रौतेन बाधः गार्हस्थ्यानधिकृतान्धक्लीबादिविषयता वा' इति तत्स्वाध्यायाध्ययनवैधुर्यनिबन्धनमित्युपेक्षणीयम्। किं च-यथा विष्णुक्रमणाज्यावेक्षणाद्यक्षमतया पङ्ग्वादीनां श्रौतेष्वनधिकारस्तथा स्मार्तेष्वप्युदकुम्भाहरणभिक्षाचर्यादिष्वक्षमत्वात्कथं पङ्ग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः, अस्मिश्चाश्रमे ब्राह्मणस्यैवाधिकारः। मनुः-(६।२५)-'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्'। तथा (६।९७)—'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः' इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधिकारप्रतिपादनात्। 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य। अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनाच्च द्विजातिमात्रस्या-

( १ ) वानप्रस्थधर्मान् ग । ( २ ) गार्हस्थ्योत्तराश्रम० ग. ।

धिकारमाहुः। यदा वनाद् गृहाद्वा प्रव्रजति तदा सार्ववेदसदक्षिणां सार्ववेदसी सर्वधनसम्बन्धिनी दक्षिणा यस्याः सा तथोक्ता तां प्राजापत्येष्टिं देवताकामिष्टिं कृत्वा तदन्ते तान्वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन समारोप्य। चशब्दात् 'उदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्वपेत् द्वादश वा' इति बोधायनाद्युक्तपुरश्चरणादिकं च कृत्वा तथाधीतवेदो जपपरायणो जातपुत्रो व्रीनाष्टकपणार्थितार्थाय यथाशक्त्यन्नदश्च भूत्वाऽनाहिताग्निर्यद्यपि वा दिना प्रतिबन्धाभावे कृताधानो नित्यनैमित्तिकान्यशक्त्या मोक्षे मनः कुर्यात् चतुर्थाश्रमं प्रविशेन्नान्यथा। अनेनानपाकृतर्णत्रयस्य गृहस्थस्य प्रव्रज्यायामनधिकारं दर्शयति। यथाह मनुः (६।३५)—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' ॥ इति। यदा तु ब्रह्मचर्यात्प्रव्रजति तदा न प्रजोत्पादनादिनियमः। अकृतदारपरिग्रहस्य तत्रानधिकारात् रागप्रयुक्तत्वाच्च विवाहस्य। न च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयम्। विद्याधनार्जननियमवदन्यप्रयुक्तदारसंभवे तस्यानाक्षेपकत्वात्। ननु 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति, जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति। नैवम्, न हि जातमात्रः अकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते। तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेदिति तस्यार्थः। अतश्चोपनीतस्य वेदाध्ययनमेवावश्यकम्। कृतदाराग्निपरिग्रहस्य प्रजोत्पादनमपीति निरवद्यम् ॥ ५६—५७ ॥

(वी० मि०) अथ चतुर्थाश्रमिणां कृत्यमाह—

सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ॥
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ५८ ॥
अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः ॥
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥
यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ॥
सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥ ६० ॥

सर्वेषां भूतानां प्राणिनां हितः अनिष्टनिवृत्ताशंसी न तु हितकर्ता 'हिंसानुग्रहयोरनारम्भी'ति गौतमवचनात्। शान्तो निगृहीतेन्द्रियः, त्रयो वैणवा दण्डा अस्येति त्रिदण्डी 'त्रीन्वैणवान् मूर्द्धप्रमाणान् दक्षिणेन पाणिना धारयेत्सव्येन कमण्डलु'मिति स्मृत्यन्तरात् । 'एकदण्डी त्रिदण्डी वे'ति तु बौधायनः । गौतमः—'मुण्डः शिखी परिशिष्टं यज्ञोपवीतमप्सु जुहोति भूःस्वाहेति । अथ दण्डमादत्ते सखे मां गोपाये'ति । सकमण्डलुरिति । शौचाद्यर्थं धृतकमण्डलुरित्यर्थः। एकोऽद्वितीय एवारमत इत्येकारामः। तदाह दक्षः—

एको भिक्षुर्यथोक्तश्च द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥
राजावार्तादि तेषां तु भिक्षावार्ता परस्परम्।
अपि पैशुन्यमात्सर्यं सन्निकर्षान्न संशयः॥

परिव्रज्य लौकिकवैदिककर्माणि विशिष्याऽनुक्तानि सन्त्यज्य भिक्षार्थी ग्राममाश्रयेदुपजीवेत्। सायाह्ने द्वादशमुहूर्तानन्तरं दिने ह्यप्रमत्तोऽनुद्धतः, अनभिलक्षितोऽप्रकटीकृतनिजमाहात्म्यः सन्नन्यैर्भिक्षुकै रहिते ग्रामे अलोलुपो बहुतरमिष्टान्नादिष्वनासक्तश्च सन् यात्रामात्रं प्राणस्थितिमात्रयोग्यं भैक्षं चरेत् । भिक्षार्थं यतेः पात्राणि मृत्तिकावंशकाष्ठसञ्जीवनीनामन्यतममयानि भवन्ति, न तु तैजसानि । एतेषां मृण्मयादीनां यतिपात्राणां सलिलं गोवालावघर्षणं च शुद्धिहेतुः । इयं भिक्षाचरणप्रयोगाङ्गत्वेनाऽत्र शुद्धिरभिहिता। उपघातजन्याशौचनिरासिका शुद्धिस्तु प्रागेवोक्ता। आद्यचकारेण भिक्षार्थपात्राणां भोजनार्थत्वमपि पात्रान्तराभावे समुच्चीयते । 'तद्भैक्षं गृहीत्वैकान्ते तेन पात्रेणाऽन्येन वा तूष्णीं मात्रया भुञ्जीते'ति देवलवचनात् । द्वितीयचकारो व्यवस्थितविकल्पार्थः। मृण्मयादीनां सलिलैरलाबुमयानां गोवालघर्षणैः शुद्धिरिति 'गोवालैः फलसम्भव'मिति प्रागुक्तसंवादात्।

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाऽध्वरे ॥

इति मनुवचनस्वरसाच्च। यमः—

सुवर्णरूप्यपात्रेषु ताम्रकांस्यायसेषु च ।
भिक्षां दत्त्वा न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत् ॥

इति ॥ ५७-६० ॥

( मिता० ) एवमधिकारिणं निरूप्य तद्धर्मानाह—

सर्वेति । सर्वभूतेभ्यः प्रियाप्रियकारिभ्यो हित उदासीनो न पुनर्हिताचरणः । 'हिंसानुग्रहयोरनारम्भी' इति गौतमस्मरणात् । (१) शान्तो बाह्यान्तःकरणोपरतः । त्रयो दण्डा अस्य सन्तीति त्रिदण्डी । ते च दण्डा वैणवा ग्राह्याः । प्राजापत्येष्ट्यनन्तरं 'त्रीन्वैणवान्दण्डान्मूर्धप्रमाणान्दक्षिणेन पाणिना धारयेत्सव्येन सोदकं कमण्डलुम्' इति स्मृत्यन्तरदर्शनात् । एकं वा दण्डं धारयेत् 'एकदण्डी त्रिदण्डी वा' इति बौधायनस्मरणात् । 'चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः । एकदण्डी त्रिदण्डी वा सर्वसंगविवर्जितः' ॥ इति चतुर्विंशतिमते दर्शनाच्च । तथा शिखाधारणमपि वैकल्पिकम् । 'मुण्डः शिखी वा' इति गौतमस्मरणात् । 'मुण(२)डोऽममोऽक्रोधोऽपरिग्रहः' इति वसिष्ठस्मरणात् । तथा यज्ञोपवीतधारणमपि वैकल्पिकमेव । 'सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम्' इति काठकश्रुतिदर्शनात् । 'कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । केशान्यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः' ॥ इति बाष्कलस्मरणाच्च । 'अथ यज्ञोपवीतमप्सु जुहोति भूः स्वाहेति अथ दण्डमादत्ते सखे मां गोपाय' इति परिशिष्टदर्शनाच्च । यथाशक्तिस्तदा कन्थापि ग्राह्या । 'काषायी मुण्डस्त्रिदण्डी सकमण्डलुपवित्रपादुकासनकन्थामात्रः' इति देवलस्मरणात् । शौचार्थं कमण्डलुसहितश्च भवेत् । एकरामः प्रव्रजितान्तरेणासहायः संन्यासिनीभिः स्त्रीभिश्च । स्त्रीणां चैके इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणात् । तथा च दक्षः—'एको भिक्षुर्यथोक्तश्च द्वावेव मिथुनं स्मृतम् । त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥ राजवार्तादि तेषां तु भिक्षावार्ता परस्परम् । अपि पैशुन्यमात्सर्यं सन्निकर्षान्न संशयः' ॥ इति । परिव्रज्य परिपूर्णो व्रजति त्यागे वर्तते । अतश्चाहं ममाभिमानं तत्कृतं च लौकिकं कर्मनिचयं वैदिकं च नित्यकाम्यात्मकं संत्यजेत् । तदुक्तं मनुना (१२ ७८-९२)— 'सुखाभ्युदयिकं चैव नैश्रेयसिकमेव च । प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । निष्कामं

---

( १ ) शान्तः करणोपरत क० । ( २ ) मनोपरिग्रह क० ।

ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥ यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः। आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च 'यत्नवान्' ॥ इति। अत्र वेदाभ्यासः प्रणवाभ्यासस्तत्र यत्नवान्। भिक्षाप्रयोजनार्थं ग्राममाश्रयेत्प्रविशेत् न पुनः सुखनिवासार्थम्। वर्षाकाले तु न दोषः। 'ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी' इति शङ्खस्मरणात्। अशक्तौ पुनर्मासचतुष्टयपर्यन्तमपि स्थातव्यं 'न चिरमेकत्र वसेदन्यत्र वर्षाकालात्। श्रावणादयश्चत्वारो मासा वर्षाकालः' इति देवलस्मरणात्। 'एकरात्रं वसेद्ग्रामे नगरे रात्रिपञ्चकम्। वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत्' ॥ इति कण्वस्मरणात् ॥ ५८ ॥

( मिता० ) कथं भिक्षाटनं कार्यमित्यत आह—

अप्रमत्त इति। अप्रमत्तो वाक्चक्षुरादिचापलरहितो भैक्षं चरेत्। वसिष्ठेनात्र विशेषो दर्शितः—'सप्तागाराण्यसंकल्पितानि चरेद्भैक्षम्' इति। सायाह्ने अह्नः पञ्चमे भागे। तथा च मनुः (६।५६)—'विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने। वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेत्' ॥ इति। तथा—'एककालं चरेद्भिक्षां प्रस(१)ज्येत तु विस्तरे। भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति' ॥ इति। अनभिलक्षितः ज्योतिर्विज्ञानोपदेशादिना अचिह्नितः। मनुः (६।५०)—'न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया। नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्' ॥ इति तेनोक्तत्वादिति। यत्पुनर्वसिष्ठवचनम्—'ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत सायंप्रातर्मांसवर्जम्' इति। तदशक्तविषयम्। भिक्षुकैर्भिक्षणशीलैः पाखण्ड्यादिभिर्वर्जिते ग्रामे। मनुनात्र विशेष उक्तः (६।६१)—'न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः। आकीर्णं भिक्षुकैरन्यैरगारमुपसंव्रजेत्' ॥ इति। यावता प्राणयात्रा वर्तते तावन्मात्रं भैक्षं चरेत्। तथा च संवर्तः—'अष्टौ भिक्षाः समादाय मुनिः सप्त च पञ्च वा। अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः' ॥ इति। अलोलुपो मिष्टान्नव्यञ्जनादिष्वप्रसक्तः ॥ ५९ ॥

( मिता० ) भिक्षाचरणार्थं पात्रमाह—

यतिपात्राणीति। मृदादिप्रकृतिकानि यतीनां पात्राणि भवेयुः। तेषां सलिलं गोवालावघर्षणं च शुद्धिसाधनम्। इयं च शुद्धिर्भिक्षा

(१) मनोःपरिग्रह० इ।

(१)चरणादिप्रयोगाङ्गभूता नाऽमेध्यःघपहतिविषया । तदुपघाते द्रव्यशुद्धिप्रकरणोक्ता द्रष्टव्या । अत एव मनुना (६।५३)–'अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च । तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे' ॥ इति । चमसदृष्टान्तोपादानेन प्रायोगिकी शुद्धिर्दर्शिता । पात्रान्तराभावे भोजनमपि तत्रैव कार्यम् । 'तद्भैक्षं गृहीत्वैकान्ते तेन पात्रेणान्येन वा तूष्णीं प्राणमात्रं भुञ्जीते'ति देवलस्मरणात् ॥ ॥६० ॥

( वी०मि० ) एवं हि व्यवहर्तव्यमुक्त्वा मोक्षप्राप्तिहेतुभूतात्मोपासनाङ्गमान्तरं नियममाह—

संनिरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ॥
भयं हित्वा च भूतानाममृतीभवति द्विजः ॥ ६१ ॥
कर्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः ॥
ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ॥ ६२ ॥

इन्द्रियाणां ग्रामं समूहं रूपादिविषयेभ्यः सम्यक् निरुध्य उपकार्यपकारिविषयौ रागद्वेषौ व्युदस्य त्यक्त्वा भूतानां प्राणिनां स्वकर्तृकमभणोत्पादनं हित्वेति मिताक्षरा । तन्नु 'परस्य न तदाचरे'दित्यनेतनन गतार्थम् । तस्मादयमर्थः—व्याघ्रादीनां सकलं हित्वाऽमृती मोक्षभाग्भवति द्विजो ब्राह्मणः भिक्षुकेणाशयस्याऽन्तःकरणस्य वासनाक्षयरूपा शुद्धिर्विशेषतः प्राणायामाभ्यासैः कर्तव्या । किमर्थमत आह ज्ञानेति । अस्या द्वैतसाक्षात्कारं प्रत्याशयशुद्धेर्निमित्तत्वात्तदर्थं दोषक्षयेणात्मध्यानधारणादौ स्वातन्त्र्यसम्पादनार्थं चेत्यर्थः । आद्यचकारेणेर्ष्यादीनां समुच्चयः । द्वितीयचकारेण शोकस्य चरमचकारेण सञ्चितपापपुण्यक्षयार्थकत्वस्य समुच्चय । तुशब्देन निवृत्तरूपधर्मस्य प्रथमश्लोकोक्तस्य केवलस्य मोक्षसाधनत्व व्यवच्छिन्नम् ॥ ६१-६२ ॥

( मिता० ) एवं भूतस्य यतेरात्मोपासनाङ्गं नियमविषयमाह–

संनिरुध्येति । चक्षुरादीन्द्रियसमूहं रूपादिविषयेभ्यः सम्यङ् निरुध्य विनिवर्त्य रागद्वेषौ प्रियाप्रियविषयौ प्रहाय त्यक्त्वा चशब्दादीर्ष्यादीनपि । तथा भूतानाम(२)पकाराकरणेन भयमकुर्वन् शुद्धान्तःकरणः सन्नद्वैतसाक्षात्कारेणामृतीभवति मुक्तो भवति ॥ ६१ ॥

(१) भिक्षाहरणप्रयोग० क । (२) अपकारेण ।

( मिता० ) किञ्च—

कर्तव्येति । विषयाभिलाषद्वेषजनितदोषकलुषितस्याशयस्यान्तःकरणस्य शुद्धिः कल्मषक्षयः प्राणायामैः कर्तव्या । तस्याः शुद्धेरात्माद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् । एवं सति विषयासक्तितज्जनितदोषात्मकप्रतिबन्धक्षये तत्वात्मध्यानधारणादौ स्वतन्त्रो भवति । तस्माद्भिक्षुकेण त्वेषा शुद्धिर्विशेषतोऽनुष्ठेया । तस्य मोक्षप्र(१)धानत्वात् । मोक्षस्य च शुद्धान्तःकरणतामन्तरेण दुर्लभत्वात् । यथाह मनुः (६।७१)–'दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्' ॥ इति ॥ ६२ ॥

( वी० मि० ) इन्द्रियनिरोधस्योक्तस्य जनकीभूतं विवेकं संसारस्वरूपपर्यालोचनया सम्पाद्यमित्याह—

आवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा ॥
आधयो व्याधयः क्लेशा जरा रूपविपर्ययः ॥ ६३ ॥
भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः ॥

गर्भवासा नानाजन्मसम्बन्धिनो दुःखदा आवेक्ष्याः संसारिणां सम्बन्धितया पर्यालोचनीयाः । निषिद्धकर्मरौरवादिनानानरकेषु गतयः, आधयो मनःपीडाः, व्याधयो ज्वराद्याः, क्लेशाः जीवनोपायानुसरणादिजन्यश्रमाः, जराऽन्नपानादिकारितबहुदोषसम्भवा वार्द्धकं, रूपविपर्ययः युवदशासु सौन्दर्यस्य वार्द्धके विपर्ययो वैपरीत्यं, जातिसहस्रेषु मनुष्यगोशूकरादिनानाजन्मप्रियस्यापातरमणीयस्य परिणामतोऽप्रियस्य वैषयिकसुखस्य पत्नीपुत्रधनादेर्वा तत्साधनस्य विपर्ययो विच्छेदः । एते सर्व एव दुःखमयाः संसारे आवेक्ष्याः । तथा च वैराग्यं सुलभमिति भावः । चकारेण मरणं तथाशब्देन च राजादिकृतवधताडने समुच्चिनोति ॥ ६३ ॥

( मिता० ) इन्द्रियनिरोधोपायतया संसारस्वरूपनिरूपणमाह—

आवेक्ष्या इति । वैराग्यसिद्ध्यर्थं मूत्रपुरीषादिपूर्णनानाविधगर्भवासा आवेक्षणीयाः पर्यालोचनीयाः । चशब्दाज्जननोपरमावपि । तथा निषिद्धाचरणादिक्रियाजन्या महारौरवादिनिरयपतनरूपा गतयः ।

(१) मोक्षपसाधनत्वात् ङ ।

तथाधयो मनःपीडाः, व्याधयश्च ज्वरातीसाराद्याः शारीराः, क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च, जरा वलीपलिताद्यभिभवः, रूपविपर्ययः खञ्जकुब्जत्वादिना प्राक्तनस्य रूपस्यान्यथाभावः, तथा श्वसूकरखरोरगाद्यनेकजातिषु भव उत्पत्तिः । तथा इष्टस्याप्राप्तिः अनिष्टस्य प्राप्तिरित्यादिबहुतरक्लेशावहं संसारस्वरूपं पर्यालोच्य तत्परिहारार्थमात्मज्ञानोपायभूतेन्द्रियजये प्रयतेत ॥ ६३ ॥

( वी० मि० ) वैराग्योत्पत्त्यनन्तरकृत्यमाह—

ध्यानयोगेन संदृश्यः(१) सूक्ष्म आत्मात्मनि स्थितः ॥ ६४ ॥

ध्यानं बहिर्विषयोपरमस्तद्विशिष्टेन योगेन चित्तवृत्तेरात्मैकाग्र्यरूपेण निदिध्यासनापरनामकेनात्मनि परब्रह्मणि स्थितोऽभेदेन समुद्रतरङ्गवत् सूक्ष्म अविद्याग्रस्तानामदृश्य आत्मा सन्द्रष्टव्यो विषयीकर्तव्यः । अथवा ध्यानयोगेन हेतुना स्वजन्यसाक्षात्कारविषयीकर्तव्य इत्यर्थः ॥ ६४ ॥

( मिता० ) एवमवेक्ष्यानन्तरं किं कार्यमित्यत आह—

ध्यानयोगेनेति । योगश्चित्तवृत्तिनिरोधः आत्मैकाग्रता ध्यानं तस्या एव बाह्यविषयादुपरमः ध्यानयोगेन निदिध्यासनापरपर्यायेण सूक्ष्मः शरीरप्राणादिव्यतिरिक्तः क्षेत्रज्ञ आत्मा आत्मनि ब्रह्मण्येव स्थितः इत्येवं त्वंपदार्थयोरभेदं सम्यक् पश्येदपरोक्षीकुर्यात् । अत एव श्रुतौ 'आत्मा वारे द्रष्टव्यः' इति साक्षात्काररूपं दर्शनमनूद्य तत्साधनत्वेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रवणमनननिदिध्यासनानि विहितानि ॥ ६४ ॥

( वी० मि० ) ननु मोक्षपदेन चतुर्थाश्रमापादनात् संन्यासस्य मोक्षहेतोः सत्त्वे मोक्षस्य च स्वभावित्वात् किमिति ध्यानयोगादिकं प्रवृत्तिनिवृत्तिलक्षणमित्याह—

नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ॥
अतो यदात्मनोऽपथ्यं (२)परस्य न तदाचरेत् ॥ ६५ ॥
सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ॥
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥ ६६ ॥

---

(१) सम्पश्येत्—इति मु० पु० पाठः । (२) परेषां इति मु० पु० पाठः ।

आश्रमः संन्यासाश्रमः केवलं स्वरूपत एव मोक्षसाधने धर्मे न कारणं यतस्तदाश्रमवता क्रियमाणः सत्यादिधर्मो मोक्षे साधनं भवेत् । अतस्तादृशधर्मस्याऽपेक्षितत्वादात्मनोऽपथ्यं दुःखकारणं परुषभाषणताडनादि तत्परस्य नाचरेत् । अत एव सत्यादिः सर्वो धर्मः कर्तव्यत्वेन मुनिभिरुदाहृतः कथितः । सत्यं मोक्षसाधनीभूतशास्त्रजन्यतत्त्वज्ञानं, धृतिरिष्टवियोगानिष्टप्राप्तौ चित्तस्याचपलत्वं, मनोनिग्रहो दम, इन्द्रियपदं बाह्येन्द्रियपरम् , विद्या आत्ममनननिदिध्यासनरूपा, शेषं प्रसिद्धम् । मिताक्षरायां तु आश्रमो दण्डकमण्डल्वादिधारणं नात्मोपासनाख्ये धर्मे कारणं यस्मादसौ क्रियमाणो भवेदेव नातिदुष्कर इति व्याख्यातम ॥ ६५—६६ ॥

( मिता० ) किञ्च—

नेति । प्राक्तनश्लोकोक्तात्मोपासनाख्ये धर्मे नाश्रमो दण्डकमण्डल्वादिधारणं कारणम् । यस्मादसौ क्रियमाणो भवेदेव नातिदुष्करः तस्माद्यदात्मनोऽपथ्यमुद्वेगकरं परुषभाषणादि तत्परेषां न समाचरेत् । अनेन ज्ञानोत्पत्तिहेतुभूतान्तःकरणशुद्ध्यापादनत्वेनान्तरङ्गत्वाद्रागद्वेषप्रहाणस्य प्रधानत्वेन प्रशंसार्थमाश्रमनिराकरणं, न पुनस्तत्परित्यागाय तस्यापि विहितत्वात् । तदुक्तं मनुना (६।६६)–दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे वसन् । समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्' ॥ इति ॥ ६५ ॥

( मिता० ) किञ्च—

सत्यमिति । सत्यं यथार्थप्रियवचनम् । अस्तेयं परद्रव्यानपहारः । अक्रोधोऽपकारिण्यपि क्रोधस्यानुत्पादनम् । ह्रीर्लज्जा । शौचमाहारादिशुद्धिः । धीर्हिताहितविवेकः । धृतिरिष्टवियोगेऽनिष्टप्राप्तौ प्रचलितचित्तस्य यथापूर्वमवस्थापनम् । दमो मदत्यागः । संयतेन्द्रियता अप्रतिषिद्धेष्वपि विषयेष्वनातिसक्तिः । विद्या आत्मज्ञानम् । एतैः सत्यादिभिरनुष्ठितैः सर्वो धर्मोऽनुष्ठितो भवति । अनेन दण्डकमण्डल्वादिधारणबाह्यलक्षणात् सत्यादीनामात्मगुणानामन्तरङ्गतां द्योतयति ॥ ६६ ॥

( वी० मि० ) 'सूक्ष्म आत्मात्मनि स्थित.' इत्युक्त, तत्त्वाधाराधेयभावस्य भेदनियतत्वादत आह—

निस्सरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ ६७ ॥

( वी० मि० ) तप्ताल्लोहपिण्डाद्यथा महाग्नेः स्फुलिङ्गका निस्सरन्ति निर्गच्छन्ति तद्वत्परमात्मनः सकाशाज्जीवात्मानः प्रभवन्ति । अयमाशय.–स्फुलिङ्गस्याऽग्नित्वाभावेऽप्यग्नेः स्फुलिङ्गाग्नेर्भेदमादायैव जन्यजनकभावस्तथा जीवात्मनां परमात्मभिन्नत्वाभावेऽपि परमात्मनो जीवात्मभ्यो भेदमादाय जन्यजनकभाव उपपद्यत एव । जन्यत्वं चाऽऽविर्भावमात्रम् । स्फुलिङ्गजीवात्मनोः पूर्वसिद्धत्वादिति भावः ॥ ६७ ॥

( मिता० ) ननु ध्यानयोगेनात्मनि स्थितमात्मानं पश्येदित्युक्त जीवपरमात्मनोर्भेदाभावादित्यत आह—

निःसरन्तीति । यद्यपि जीवपरमात्मनोः पारमार्थिको भेदो नास्ति तथाप्यात्मनः साकाशादविद्योपाधिभेदभिन्नतया जीवात्मनः प्रभवन्ति, हि यस्मात् तस्माद्युज्यत एव जीवपरमात्मनोर्भेदव्यपदेशः । यथा हि तप्ताल्लोहपिण्डादयोगोलकाद्विस्फुलिङ्गकास्तेजोवयवा निःसरन्ति निःसृताश्च स्फुलिङ्गव्यपदेशं लभन्ते तद्वत् । अत एव सम्–आत्मात्मनि स्थितो द्रष्टव्य इति । यद्वायमर्थः–ननु सुषुप्तिसमये प्रलये च सकलक्षेत्रज्ञानां ब्रह्मणि प्रलीनत्वात्कस्यायमात्मोपासनाविधिरित्यत आह—निःसरन्तीत्यादि । यद्यपि सूक्ष्मरूपेण प्रलयवेलायां प्रलीनास्तथाप्यात्मनः सकाशादविद्योपाधिभेदभिन्नतया जीवात्मानः प्रभवन्ति, पुनः कर्मवशात्स्थूलशरीराभिमानिनो जायन्ते तस्मान्नोपासनाविधिविरोधः तैजसस्य पृथग्भावसाम्याल्लोहपिण्डदृष्टान्तः ॥ ६७ ॥

( वी० मि० ) 'सूक्ष्म आत्मात्मनी'ति प्रागुक्ते हेतुत्वमेतच्छ्लोकार्थस्याऽभिप्रैति । 'प्रचो जातिसहस्रे'ष्वित्युक्तं, पुनःपुनर्जन्मनि किं मानमित्याशङ्कायामाह—

तत्रात्मा हि स्वयं किंचित्कर्म किञ्चित्स्वभावतः ॥

करोति च त(१)दाभ्यासाद्धर्माद्धर्मोभयात्मकम् ॥ ६८ ॥

तत्र संसारे जीवात्मा किञ्चित्कर्म स्तन्यपानादिकं स्वयमेव तज्ज(२)न्मीयाचारनैरपेक्ष्येण करोति । किञ्चित्कर्म उष्ट्रादेः कण्टकाशित्वादिकं स्वभावतः स्वजातिनियमादृष्टवशेन स्वकण्टकाशित्वादिदर्शनेनेति यावत् । किञ्चिच्च धर्माधर्मोभयात्मकं कर्माऽध्ययनपरदारादिजन्मान्तरवासनावशात् सदसदुपदेशकृतं तावत् करोति तथा च प्राग्जन्माभावे स्वयं स्वभावादभ्यासाच्च कर्मणो नोपपद्यन्ते । एवं तज्जन्मीयकर्माण्यपि तत्पूर्वजन्माभावेनोपपद्येरन्नित्यनादिनानाजन्मत्वादुपपन्नमेकस्य जन्मसहस्रमिति भावः । हिशब्दोऽवधारणे ॥ ६८ ॥

( मिता० ) ननु चानुपात्तवपुषां क्षेत्रज्ञानां निष्परिस्प(३)न्दतया कथं तन्निबन्धनो जरायुजाण्डजादिचतुर्विधदेहपरिग्रह इत्यत आह—

तत्रेति । यद्यपि तस्यामवस्थायां परिस्पन्दात्मकक्रियाभावस्तथापि धर्माधर्माध्यवसायात्मकं कर्म मानसं भवत्येव । तस्य च विशिष्टशरीरग्रहणहेतुत्वमस्त्येव । ( १२।९ )—'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्' इति मनुस्मरणात् । एवं गृहीतवपुः स्वयमेवान्वयव्यतिरेकानिरपेक्षः, स्तन्यपानादिके कृते तृप्तिर्भवत्यकृते न भवतीत्येवंरूपौ यावन्वयव्यतिरेकौ तत्र निरपेक्षः । प्राग्भवीयानुभवभावितभावनानुभवोद्भूतकार्यावबोधः किञ्चित्स्तन्यपानादिकं करोति, किञ्चित्स्वभावतो यदृच्छया प्रयोजनाभिसन्धिनिरपेक्षं पिपीलिकादिभक्षणं करोति, किंचिद्भवान्तराभ्यासवशाद्धर्माधर्मोभयरूपं करोति । तथा च स्मृत्यन्तरम्—'प्रतिजन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तदेवाभ्यसते पुनः' ॥ इति । एवं जीवानां कर्मवैचित्र्यं तत्कृतं जरायुजादिदेहवैचित्र्यं युज्यत एव ॥६८॥

( वी० मि० ) नन्वनादिश्चेदात्मा तदा कथं जातो देवदत्त इत्यादिव्यवहार इत्यत आह—

निमित्तमक्षरः कर्ता बोद्धा ब्रह्म गुणी वशी ॥
अजः शरीरग्रहणात्स जात इति कीर्त्यते ॥ ६९ ॥

(१) करोति किञ्चिदभ्या०—इति मु० पु० पाठः ।
(२) तज्जन्यमाचार—इति ख० पु० पाठः । (३) स्पन्दतया कथं ख. ।

निमित्तं कारणमेव न तु कार्योऽपीत्यतोऽक्षरोऽप्यतश्च वस्तुगत्यात्मा । अत एव ब्रह्म सकलदेशकालव्यापकः, शरीरग्रहणात् शरीरसंबंधोत्पत्तिः सङ्कीर्त्यते । अवस्थाविशेषोत्पत्तेर्गृहस्थो जात इतिवदित्यर्थः । न तु सुखदुःखमोहात्मकगुणत्रयविकारवतीव गुणत्रिकात्मिकायाः प्रकृतेः कर्तृत्वमावश्यकमिति नात्मा निमित्तं मानाभावादत आह बोद्धा । अन्य एव कर्ता न तु प्रकृतिः । अचेतनं हि चेतनाधिष्ठितमेव प्रवर्तते । अथ गुणशून्यस्य कथं गुणवत्कार्यात्मकत्वमत आह वशी स्वतन्त्रः । शक्तिस्तु परतन्त्रा न कर्त्री अचेतनत्वादित्यर्थः ॥ ६९ ॥

(मिता०) नन्वेवं सति ब्राह्मण एव कथंचिज्जीवव्यपदेश्यत्वात्तस्य च नित्यत्वादिधर्मत्वात्कथं विष्णुमित्रो जात इति व्यवहार इत्याशङ्क्याह—

निमित्तमिति । सत्यमात्मा सकलजगत्प्रपञ्चाविर्भावेऽविद्यासमावेशवशात्समवाय्यसमवायिनिमित्तमित्येवं स्वयमेव त्रिविधमपि कारणं न पुनः कार्यकोटिनिविष्टः । यस्मादक्षरोऽयमीश्वरः । ननु सत्त्वादिगुणविकारस्य सुखदुःखमोहात्मकस्य कार्यभूते जगत्प्रपञ्चे दर्शनात्तद्गुणवत्याः प्रकृतेरेव जगत्कर्तृतोचिता न पुनर्निर्गुणस्य ब्रह्मणः । मैवं मंस्थाः । आत्मैव कर्ता, यस्मादसौ जीवोपभोग्यसुखदुःखहेतु(१)भूतादृष्टादेर्बोद्धा । न ह्यचेतनायाः प्रकृतेर्नामरूपव्याकृतविविधभोक्तृवर्गभोगानुकूलभोग्यभोगायतनादियोगिजगत्प्रपञ्चरचना घटते । तस्मादात्मैव कर्ता । तथा स एव ब्रह्म बृंहको विस्तारकः । न चासौ निर्गुणः, यतस्तस्य त्रिगुणशक्तिरविद्या प्रकृतिप्रधानाद्यपरपर्याया विद्यते । अतः स्वसौ निर्गुणत्वेऽपि शक्तिमुखेन सत्त्वादिगुणयोगी कथ्यते । न चैतावता प्रकृतेः कारणता, यस्मादात्मैव वशी स्वतन्त्रः न प्रकृतिर्नाम स्वतन्त्रं तत्त्वान्तरं, तादृग्विधत्वे प्रमाणाभावात् । न च वचनीयं शक्तिरूपापि सैव कर्तृभूतेति । यतः शक्तिमत्कारकं न शक्तिः, तस्मादात्मैव जगतस्त्रिविधमपि कारणम् । तथा अज उत्पत्तिरहितः । अतस्तस्य यद्यपि साक्षाज्जननं नोपपद्यते तथापि शरीरग्रहणमात्रेण जात इत्युच्यते, अवस्थान्तरयोगितयोत्पत्तेर्गृहस्थो जात इतिवत् ॥ ६९ ॥

(१) हेतुपुण्यापुण्यादेर्बोद्धा क ।

( वी० मि० ) शरीरग्रहणप्रकारमाह चतुर्दशभिः श्लोकैः—

सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम् ॥
सृजत्येकोत्तरगुणांस्तथादत्ते भवन्नपि ॥ ७० ॥
आहुत्याप्यायते सूर्यस्तस्माद्वृष्टिरथौषधिः ॥
तदन्नं रसरूपेण शुक्रत्व(१)मुपगच्छति ॥ ७१ ॥

स परमात्मा सर्गादिकाले यथाऽऽकाशादीन् पञ्च एकोत्तरगुणान् यथोत्तरमेकैकाधिकगुणयुक्तान् सृजति तथा भवन् जीवभावं गच्छन्नपि तानाकाशादीन् शरीरारम्भार्थमुपादत्ते। गुणाश्च शब्दस्पर्शरूपरसगन्धाः, तेषां चाकाशादीनां शुक्रसाहित्येन शरीरारम्भकत्वम्। अभिधान एवाहुतिजन्मादृष्टस्य तदारम्भोपयोगित्वमाह—आहुत्येति। यजमानप्रक्षिप्तयाऽऽहुत्या सूर्य आप्यायते तृप्यति। तस्मादेव तृप्ताद्वृष्टिर्भवति। अथ वृष्टेर्व्रीह्यादिसस्यरूपौषधिर्भवति। तत ओषधेरन्नं भवति। तच्चाऽन्नं रसरूपेण परिणामेन द्वारीभूतेन शुक्रशोणितत्वमुपगच्छति ॥ ७०—७१ ॥

( मिता० ) शरीरग्रहणप्रकारमाह—

सर्गादाविति। सृष्टिसमये स परमात्मा यथाकाशादीन् शब्दैकगुणं गगनं, शब्दस्पर्शगुणः पवनः, शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरू(२)परसगुणवदुदकम्, शब्दस्पर्शरूपरसगन्धगुणा जगतीत्येवमेकोत्तरगुणान् सृजति तथात्मा जीवभावमापन्नो भवन्नुत्पद्यमानोऽपि स्वशरीरस्यारम्भकत्वेनापि तानुपादत्ते गृह्णाति ॥ ७० ॥

( मिता० ) कथं शरीरारम्भकत्वं पृथिव्यादीनामित्यत आह—

आहुत्येति। यजमानैः प्रक्षिप्तयाहुत्या पुरोडाशादिरसेनाप्यायते सूर्यः। सूर्याच्च कालवशेन परिपक्वाज्यादिहवीरसाद्वृष्टिर्भवति। ततो व्रीह्याद्यौषधिरूपमन्नम्। तच्चान्नं सेवितं सत् रसरुधिरादिक्रमेण शुक्रशोणितभावमापद्यते ॥ ७१ ॥

स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ॥
पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुः ॥ ७२ ॥

---

( १ ) मधिग०—इति मु० पु० पाठः। ( २ ) रसवदुदकम् ख।

(वी०मि०) स्त्रीपुरुषयोः ऋतुकालीने संयोगे मैथुने परस्परमिलिते शुक्रशोणिते विशुद्धे धातनभिभूते पञ्चधातून् शरीरधारकान् पृथिव्यादीनि महाभूतानि षष्ठश्चिदात्मको धातुः प्रभुः परमात्मा स्वयमेव न त्वन्यप्रेरणया युगपदादत्ते शरीरारम्भाय मिश्रयति । तुशब्देन मैथुनव्यतिरेकेण शुक्रशोणितयोर्मिलनं व्यवच्छिनत्ति ॥७२॥

( मिता० ) ततः किमित्यत आह—

स्त्रीपुंसयोरिति । ऋतुवेलायां स्त्रीपुंसयोर्योगे शुक्रं च शोणितं च शुक्रशोणितं तस्मिन्परस्परसंयुक्ते विशुद्धे 'वातपित्तश्लेष्मदुष्टग्रन्थिपूयक्षीणमूत्रपुरीषगन्धरेतांस्यबीजानि' इति स्मृत्यन्तरोक्तदोषरहिते स्थित्वा पञ्चधातून् पृथिव्यादिपञ्चमहाभूतानि शरीरात्मकतया स्वयं षष्ठश्चिद्धातुरात्मा प्रभुः शरीरारम्भ(१)करणेऽदृष्टकर्मयोगितया समर्थो युगपदादत्ते भोगायतनत्वेन स्वीकरोति । तथा च शारीरके—'स्त्रीपुंसयोः संयोगे योनौ रजसाभिसंसृष्टं शुक्रं तत्क्षणमेव सह भूतात्मना गुणैश्च सत्त्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये तिष्ठति' इति ॥ ७२ ॥

इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ॥
धारणा प्रेरणं दुःखमिच्छाऽहङ्कार एव च ॥ ७३ ॥
प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ॥
तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ॥ ७४ ॥

(वी०मि०) इन्द्रियाणि चक्षुरादीनि पञ्च प्राणादीनि च पञ्च मनः—प्राणौ ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नाः आयुःशतवर्षावच्छिन्नजीवनं धृतिश्चित्तस्थैर्यं धारणा मेधा प्रेरणमिन्द्रियाणां स्वविषये प्रवर्तनम् अहङ्कारोऽभिमानः आकृतिरवयवसंनिवेशः वर्णो गौरत्वादिः स्वरो गान्धारादिः भवः पुत्रधनादिसम्पदुत्पत्तिः, तद्विपर्ययोऽभवः । एतत्सर्वमादिशरीरसम्बन्धमिच्छतोऽनादेरात्मनो जीवात्मन आत्मजमेवात्मीयप्राक्तनादेव प्रभवमेव निष्पद्यते । चकारेण धर्मशौर्यादिसङ्ग्रहः ॥ ७३-७४ ॥

(१) रम्भकारणादृष्ट ।

( मिता० ) किञ्च—

इन्द्रियाणीत्यादि । इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि वक्ष्यमाणानि । मनश्चोभयसाधारणम् । प्राणोऽपानो व्यान उदानः समान इत्येवं पञ्चवृत्तिभेदभिन्नः शारीरो वायुः प्राणः । ज्ञानमवगमः । आयुः कालविशेषावच्छिन्नं जीवनम् । सुखं निर्वृतिः । धृतिश्चित्तस्थैर्यम् । धारणा प्रज्ञा मेधा च । प्रेरणं ज्ञानकर्मेन्द्रियाणामधिष्ठातृत्वम् । दुःखमुद्वेगः । इच्छा स्पृहा । अहंकारोऽहंकृतिः । प्रयत्न उद्यमः । आकृतिराकारः । वर्णो गौरिमादिः । स्वरः षड्जगान्धारादिः । द्वेषो वैरम् । भवः पुत्रपश्वादिविभवः । अभवस्तद्विपर्ययः । तस्यानादेरात्मनो नित्यस्यादिमिच्छतः शरीरं जिघृक्षमाणस्य सर्वमेतदिन्द्रियादिकमात्मजनितं प्राग्भवीयकर्मबीजजन्यमित्यर्थः ॥ ७३-७४ ॥

प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः ॥
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतम् ॥ ७५ ॥
आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम् ॥
वायोस्तु स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च ॥ ७६ ॥
पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशिताम् ॥
रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम् ॥ ७७ ॥
भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च ॥
आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः ॥ ७८ ॥
दोहदस्या(१)ऽप्रदानेन गर्भो दोषमवाप्नुयात् ॥
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥ ७९ ॥
स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ॥
षष्ठे बलस्य वर्णस्य नखलो(२)म्नां च सम्भवः ॥ ८० ॥
मनसा (३)चेतसा युक्तो नाडीस्नायुशिरायुतः ॥
सप्तमे चाऽष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥ ८१ ॥

---

( १ ) दौहृदस्येति पाठान्तरम् । ( २ ) नखरोम्णा—इति मु० पु० पाठः ।
( ३ ) मनश्चैतन्ययुक्तोऽसौ—इति मु० पु० पाठः ।

पुनर्गर्भे पुनर्धात्रीमोजस्तस्य प्रधावति ॥
अष्टमे मास्यतो गर्भो-जातः प्राणैर्वियुज्यते ॥ ८२ ॥
नवमे दशमे (१)मासि प्रबलैः सूतिमारुतैः ॥
निस्सार्यते बाण इव (२)जन्तुश्छिद्रेण सज्वरः ॥८३॥

(वी०मि०) गर्भः प्रथमे मासि धातुषु पृथिव्यादिषु मूर्छितः क्षीरनीरवदेकतापन्नः सङ्क्लेदभूतो द्रवदशापन्न (३)एव तिष्ठति । द्वितीये मास्यर्बुदमीषत्कठिनमांसपिण्डात्मकः भवति । तृतीये मासि अङ्गैः करादिभिरिन्द्रियैश्चक्षुरादिभिर्युतो भवति आत्मा च । तृतीये मासि आकाशादिभ्यः पञ्चभ्यो लाघवादिकं सर्वं गृह्णाति गर्भान्तःप्रविष्टः सन् गर्भद्वारा स्वसम्बन्धीकरोति । ततस्तदनन्तरं चतुर्थे मासि स्पन्दते गर्भः । तथा च शारीरकम्—'चतुर्थे मासि चलनादावभिप्रायं करोती'ति । पारस्करोऽपि—'पुंसवनं स्पन्दनात्पुरा द्वितीये तृतीये वा कर्तव्य'मिति । लाघवं लङ्घनोपयोगिनं लघिमानं सौक्ष्म्यं वस्त्वन्तरमध्यप्रवेशम् । आदिग्रहणाच्छिद्रसमूहम्—उपनिषत्संवादात् । स्पर्शनात्वगिन्द्रियं, व्यूहनमङ्गानां विविधं प्रसारणं, रौक्ष्यं कर्कशत्वं, चकारात्स्पर्शं च । तुशब्देन भूतान्तरस्यापादानत्वं व्यवच्छिन्नम् । एवमग्रेऽपि । एवकारेण तिर्यग्गमनादिस्वभावत्वव्यवच्छेदः । पित्तात्तेजसः कार्यकारणयोरभेदोपचारः दर्शनं चक्षुः, पक्तिं भुक्तान्नपरिपाकम्, औष्ण्यम् उष्णस्पर्शत्वं, प्रकाशित्वं दीपमानतां, रसाज्जलात्स्नेहं स्निग्धतां, क्लेदं द्रवत्वसम्बन्धं, मार्दवं सुकुमारस्पर्शः तत्सहितं, गौरवं गुरुत्वसम्बन्धं, मूर्तिः काठिन्यं, चकारेण श्यामरूपादेः सङ्ग्रहः । एवकारेण तृतीये इत्यत्राऽन्वितेन कालान्तरव्यवच्छेदः । तृतीयमासमारभ्य गर्भिणीमधिकृत्य तत्पतिकर्तव्यं प्रसङ्गादाह दोहदस्येति । गर्भिण्या वाञ्छितस्यार्थस्य मिष्टभोजनस्याभावादप्रदानेन गर्भो दोषं वैरूप्यात्मकं मरणादिकं वाऽवाप्नोति । तस्माद्गर्भिण्याः स्त्रियाः प्रियं वाञ्छितं सम्पादनीयमित्यर्थः । अपिकारेण वीर्यहीनत्वसङ्ग्रहः । दौहृदस्येति पाठे गर्भहृदयेनात्महृदयेन च द्विहृदयाया गर्भिण्या अभीष्टस्येत्यर्थः । निपातनादौकारादिति । तथा च श्रुतिः—'द्विहृदयां

(१) वापि—इति मु० पु० पाठः । (२) यन्त्रच्छि०—इति मु० पु० पाठः ।
(३) च—इति ख० पु० पाठः ।

नारीं दौहृदिनीमाचक्षते तदभिलपितं दद्याद्वीर्यवन्तं चिरायुषं पुत्रं जनयती'ति । चतुर्थे मासेऽङ्गानां तृतीयमासजानां स्थैर्यं नियतस्थानेषु दृढस्थानं प्रवक्तव्यम् । नखलोम्नाश्चेति चकारेण शिरःकेशसमुच्चयः । सप्तमे मासि मनसाऽन्तःकरणेन चेतसा ज्ञानेन युक्तो नाडीभिर्वायुवाहलीभिरिडाप्रभृतिभिः स्नायुभिरस्थिबन्धनैः शिराभिर्नाभिसम्बद्धाभिश्च ततो व्याप्तो भवति । अष्टमे त्वचा पूर्णमांसेन प्रचुरेण पूर्वजन्मानुभूतस्मृत्या च युक्तो भवति । अपिकारेण वैराग्यसमुच्चयः । चकारौ त्वर्थौ । एवकारेण सर्वेषां मासधर्माणामयोगव्यवच्छेदः । तस्याऽष्टममासिकस्य गर्भस्यौजः प्राणात्मकं गर्भं धात्रीं जननीं प्रति पुनश्चञ्चलतया प्रधावति । अतोऽष्टमे मासि जातो योनेर्निःसृतो गर्भः प्राणैश्चञ्चलतया धावद्भिर्वियुज्यते । नवमे दशमे वा मासि सूतिहेतुभिर्मारुतैः प्रबलैर्गर्भनिःसारणसमर्थैः सज्वरो दुस्सहपीडाऽभिभूयमानः सर्वावयवपरिपूर्णत्वङ्मांससहितो जन्तुर्ध्रातुः प्रेरितो बाण इव शीघ्रं छिद्रेण योनिरन्ध्रेण गर्भाशयान्निःसार्यते । त्वङ्मांसाद्यपूर्णस्तु नवममासादर्वागपि आयासादिदोषवशान्निस्सार्यते । बाह्यपवनस्पर्शे तु तस्य पूर्वजन्मानुभूतस्मृतिर्नश्यति । 'जातः स वायुना स्पृष्टो न स्मरति पूर्वं जन्म मरणं कर्म शुभाऽशुभ'मिति निरुक्ताभिधानात् ॥ ७५—८२ ॥

( मिता० ) संयुक्तशुक्रशोणितस्य कार्यरूपपरिणतौ क्रममाह—

प्रथम इति । असौ चेतनः षष्ठो धातुविमूर्च्छितः धातुषु पृथिव्यादिषु विमूर्च्छितो लोलीभूतः क्षीरनीरवदेकीभूत इति यावत् । प्रथमे गर्भमासे संक्लेदभूतो द्रवरूपतां प्राप्त एवावतिष्ठते न कठिनतया परिणमते । द्वितीये तु मास्यर्बुदमीषत्कठिनमांसपिण्डरूपं भवति । अयमभिप्रायः—कौ(१)ष्ठ्यपवनजठरदहनाभ्यां प्रतिदिनमीषदीषच्छोष्यमाणं शुक्रसं(२)पर्काद्द्रवीभूतं भूतजातं त्रिंशद्भिर्दिनैः काठिन्यमापद्यत इति । तथा च सुश्रुते—'द्वितीये शीतोष्णानिलैरभिपच्यमानो भूतसङ्घातो घनो जायते' इति । तृतीये तु मास्यङ्गैरिन्द्रियैश्च संयुक्तो भवति ॥ ७५ ॥

---

( १ ) कोष्ठपवन इ० । ( २ ) संपर्कसम्पादितद्रवीभावम् ।

( मिता० ) किञ्च—

आकाशादित्यादि । आत्मा गृह्णातीति सर्वत्र सम्बध्यते । गगनाल्लघिमानं लङ्घनक्रियोपयोगिनम् । सौक्ष्म्यं सूक्ष्मेक्षित्वम् । शब्दं विषयम् । श्रोत्रं श्रवणेन्द्रियम । बलं दार्ढ्यम् । आदिग्रहणात्सुषिरत्वं विविक्ततां च । 'आकाशाच्छब्दं श्रोत्रं विविक्ततां सर्वच्छिद्रसमूहांश्च' इति गर्भोपनिषद्दर्शनात् । पवनात्स्पर्शेन्द्रियम् । चेष्टां गमनागमनादिकाम् । व्यूहनमङ्गानां विविधं प्रसारणम् । रौक्ष्यं कर्कशत्वं चशब्दात्स्पर्शं च । पित्तात्तेजसो दर्शनं चक्षुरिन्द्रियम् । पक्तिं भुक्तस्यान्नस्य पचनम् । औष्ण्यमुष्णस्पर्शत्वमङ्गानाम् । रूपं श्यामिकादि । प्रकाशितां भ्राजिष्णुतां तथा संतापामर्षादि च । 'शौर्यामर्षतैक्ष्ण्यपक्त्यौष्ण्यभ्राजिष्णुतासंतापवर्णरूपेन्द्रियाणि तैजसानि' इति गर्भोपनिषद्दर्शनात् । एवं रसादुदकाद्रसनेन्द्रियम् । शैत्यमङ्गानां स्निग्धताम् । मृदुत्वसहितं क्लेदमार्द्रताम् । तथा भूमेर्गन्धं घ्राणेन्द्रियं गरिमाणं मूर्तिं च । सर्वमेतत्परमार्थतो जन्मरहितोऽप्यात्मा तृतीये मासि गृह्णाति । ततश्चतुर्थे मासि स्पन्दते चलति । तथा शारीरके—'तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति' इति ॥ ७६-७७-७८ ॥

( मिता० ) किञ्च—

दौहृदस्येति । गर्भस्यैकं हृदयं गर्भिण्याश्चापरमित्येवं द्वि(१)हृदया तस्याः स्त्रिया यदभिलषितं तत् दौ(२)हृदं तस्याप्रदानेन गर्भो विरूपतां मरणरूपं वा दोषं प्राप्नोति । तस्मात्तद्दोषपरिहारार्थं गर्भपुष्ट्यर्थं च गर्भिण्याः स्त्रियाः यत्प्रियमभिलषितं तत्संपादनीयम् । तथा च सुश्रुते—'द्विहृदयां नारीं दौहृदिनीमाचक्षते तदभिलषितं दद्यात् वीर्यवन्तं चिरायुषं पुत्रं जनयति' इति । तथा च व्यायामादिकमपि गर्भग्रहणप्रभृति तथा परिहरणीयम् । 'ततःप्रभृति व्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेत्' इति तत्रैवाभिधानात् । गर्भग्रहणं च श्रमादिभिर्लिङ्गैरवगन्तव्यम् । 'सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा स(३)क्थिसादनं शुक्रशोणितयोर(४)वबन्धः स्फुरणं च योनेः' इत्यादि तत्रैवोक्तम् ॥ ७९ ॥

---

( १ ) द्विहृदयायाः स्त्रिया क । ( २ ) दोहदम् क । ( ३ ) सक्थिसादनं क । (४) स्तुबन्ध् ड ।

( मिता० ) किञ्च—

स्थैर्यमिति। तृतीये मासि प्रादुर्भूतस्याङ्गसङ्घस्य चतुर्थे मासि स्थैर्यं स्थेमा भवति। पञ्चमे लोहितस्योद्भव उत्पत्तिः। तथा षष्ठे वलस्य वर्णस्य कररुहरोम्णां च सम्भवः ॥ ८० ॥

( मिता० ) किञ्च—

मन इति। असौ पूर्वोक्तो गर्भः सप्तमे मासि मनसा चेतसा चेतनया च युक्तो नाडीभिर्वायुवाहिनीभिः स्नायुभिरस्थिवन्धनैः शिराभिर्वातपित्तश्लेष्मवाहिनीभिश्च संयुतः। तथाष्टमे मासि त्वचा मांसेन स्मृत्या च युक्तो भवति ॥ ८१ ॥

( मिता० ) किञ्च—

पुनरिति। (१)तस्याष्टममासिकस्य गर्भस्यौजः कश्चन गुणविशेषो धात्रीं गर्भं च प्रति पुनःपुनरातितरां चञ्चलतया शीघ्रं गच्छति। अतोऽष्टमे मासि जातो गर्भः प्राणैर्वियुज्यते। अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति। ओजःस्वरूपं च स्मृत्यन्तरे दर्शितम्—'हृदि तिष्ठति यच्छुद्धमीषदुष्णं सपीतकम्। ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति' ॥ इति ॥ ८२ ॥

( मिता० ) किञ्च—

नवम इति। एवं करचरणचक्षुरादिपरिपूर्णाङ्गेन्द्रियो नवमे दशमे वापि मासे अपिशब्दात्प्रागपि सप्तमेऽष्टमे वा अत्यायासादिदोषवशात्प्रबलसूतिहेतुप्रभञ्जनप्रेरितस्नाय्वस्थिचर्मादिनिर्मितवपुर्यन्त्रस्य छिद्रेण सुसूक्ष्मसुषिरेण सज्वरो दुःसहदुःखाभिभूयमानो निःसार्यते धनुर्यन्त्रेण सुधन्वप्रेरितो वाण इवातिवेगेन। निर्गमसमनन्तरं च बाह्यपवनस्पृष्टो नष्टप्राचीनस्मृतिर्भवति। 'जातः स वायुना स्पृष्टो न स्मरति पूर्वं जन्म मरणं कर्म च शुभाशुभम्' इति निरुक्तस्याष्टादशेऽभिधानात् ॥ ८३ ॥

( वी० मि० ) वैराग्यमूलक इन्द्रियनिग्रह इति वैराग्यसम्पादनाय कष्टैर्जातस्य शरीरस्य स्वरूपं विवृणोति चतुर्विंशत्या—

तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च ॥
षडङ्गानि तथाऽस्थ्नां च स(२)षष्ट्रि च शतत्रयम् ॥ ८४ ॥

---

( १ ) तथाष्टम ट। ( २ ) सह षष्ट्या शतत्रयम्—इति मु० पु० पाठः।

तस्यात्मनः षोडश रक्तमांसमेदोऽस्थिमज्जाशुक्ररूपषट्प्रकारवन्ति शरीराणि कर्तॄणि षट्कोशात्मिका त्वचोऽवभासिनी लोहिता श्वेता ताम्रा रोहिणी वंशधाराख्याः सुश्रुतेऽभिहिताः करद्वयचरणद्वयशिरोगात्राणि षडङ्गानि । अस्थ्नां षष्टिसहितं शतत्रयं षट्श्लोक्या वक्ष्यमाणप्रकारेण धारयन्ति । चकारैर्नाडीस्नायुशिराणां समुच्चयः ॥८४॥

( मिता० ) कायस्वरूपं विवृण्वन्नाह—

तस्येति । तस्यात्मनो यानि जरायुजाण्डजशरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन । तथा ह्यन्नरसो जाठराग्निना पच्यमानो रक्ततां प्रतिपद्यते । रक्तं च स्वकोशस्थेनाग्निना पच्यमानं मांसत्वम् । मांसं च स्वकोशानलपरिपक्वं मेदस्त्वम् । मेदोऽपि स्वकोशवह्निना पक्वमस्थिताम् । अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वम् । मज्जापि स्वकोशपावकपरिपच्यमानश्चरमधातुतया परिणमते । चरमधातोस्तु परिणतिर्नास्तीति स एवात्मनः प्रथमः कोशः । इत्येवं षट्कोशाग्नियोगित्वात् षट्प्रकारत्वं शरीराणाम् । अन्नरसरूपस्य तु प्रथमधातोरनियतत्वान्न तेन प्रकारान्तरत्वम् । तानि च शरीराणि षट् त्वचो धारयन्ति । रक्तमांसमेदोऽस्थिमज्जाशुक्राख्याः षट् धातव एव रम्भास्तम्भत्वगिव बाह्याभ्यन्तररूपेण स्थिताः त्वगिवाच्छादकत्वात्त्वचस्ताः षट् त्वचो धारयन्ति । तदिदमायुर्वेदप्रसिद्धम् । तथाङ्गानि च षडेव करयुग्मं चरणयुगलमुत्तमाङ्गं गात्रमिति । अस्थ्नां तु षष्टिसहितं शतत्रयमुपरितनषट्श्लोक्या वक्ष्यमाणमवगन्तव्यम् ॥ ८४ ॥

( वी० मि० ) षष्ट्यधिकशतत्रयं गणयति—

स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः ॥
पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ॥ ८५ ॥
षष्ट्यङ्गुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च चतुष्टयम् ॥
चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ॥ ८६ ॥
द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ॥
अक्षतालूषकश्रोणीफलके च विनिर्दिशेत् ॥ ८७ ॥
भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ॥

ग्रीवा पञ्चदशास्थी स्याज्जत्र्वेकैकं तथा हनुः ॥ ८८ ॥
तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका ॥
पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ॥ ८९ ॥
द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ॥
उरः सप्तदशास्थीनि पुरुषस्यास्थिसङ्ग्रहः ॥ ९० ॥

( वी० मि० ) द्वात्रिंशता स्थालैर्दन्तमूलप्रदेशस्थैरस्थिभिः सहिता द्वात्रिंशद्दन्ताश्चतुःषष्टिर्भवन्ति । पाणिपादनखा विंशतिः पाणिपादस्थाः शलाकास्तदाकाराण्यस्थीनि च विंशतिर्मणिबन्धस्य गुल्फस्य च पुरोवर्तीनि । तेषां नखानां शलाकानां च मूलप्रदेशरूपं स्थानचतुष्टयं करद्वयं चेति । एवमत्र चतुरधिकं शतमस्थ्नामुक्तम् । स्थानचतुष्टयस्याऽस्थिभिन्नस्य प्रसङ्गतोऽभिधानात् । यद्वा नखानां स्थानशलाका इत्यभेदान्वयः । चतुष्टयं चैकैकहस्तादि शलाकानां समुदायमभिप्रेत्योक्तमित्याविरोधः । अङ्गुलीनां षष्टिरस्थीनि एकैकस्या अङ्गुलेरस्थित्रयसम्बन्धात् । पार्ष्ण्योः पादपश्चिमभागयोरास्थिनी द्वे, एकैकस्मिन् पादे गुल्फौ वामदक्षिणस्थौ द्वौद्वाविति चतुर्षु गुल्फेष्वस्थिचतुष्टयम् । बाह्वोररत्निप्रमाणानि चत्वार्यस्थीनि, जङ्घयोश्चत्वार्यस्थीनीति चतुःसप्ततिः । जानुनी जङ्घोरुसन्धी, कपोलो गण्डः, ऊरुफलके सक्थिनी, अंसौ बाहुमूले, एतत्समुद्भवे प्रत्येकं द्वेद्वे अस्थिनी, अक्षः कर्णनेत्रान्तरालदेशः, तालूषके तालुमूले, श्रोणीफलके कटी प्रत्येकं द्वेद्वे अस्थिनी निर्दिशेदिति चतुर्दशास्थीनि । भगपदेन शिश्नस्याऽप्युपलक्षणं तदस्थि एकम् । पृष्ठे पञ्चचत्वारिंशदस्थीनि । ग्रीवा कन्धरा पञ्चदशास्थियुक्ता भवति । एकमस्थि समाश्रित्य जत्रु वक्षोऽससन्धिद्वयं, हनुश्चिबुकः स्यादित्येवं चतुःषष्टिरस्थीनि । तस्य हनोर्मूले द्वे अस्थिनी, ललाटे अक्षिण गण्डे कपोलाक्षमध्यप्रदेशे प्रत्येकं द्वे, नासा घनैकास्थिमती, पार्श्वकाः पञ्चरास्थीनि स्थालैः तदाधारभूतैरस्थिभिरर्बुदनामकैरस्थिविशेषैश्च सह द्विसप्ततिरित्येवमेकाशीतिरस्थ्नां भवति । शङ्खकौ भ्रूकर्णान्तरालास्थिनी द्वे शिरसः कपालानि चत्वारि उरःप्रभृतिसप्तदशास्थीनि इत्येवं त्रयोविंशतिः । एवं मिलित्वा षष्ठ्यधिकं शतत्रयमिति

पुरुषस्य मनुष्यस्याऽस्थिपरिगणनम् । वैशब्दः पादपूरणे । अन्ये द्वादशाऽव्ययशब्दाः षड्भिः श्लोकैः प्रत्येकमुक्तानां सङ्ख्यानां न्यूनाधिकत्वयोर्व्यवच्छेदाय ॥ ८५-९० ॥

( मिता० ) किञ्च—

स्थालैरिति। स्थालानि दन्तमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत्तैः सह द्वात्रिंशद्दन्ताश्चतुःषष्टिर्भवन्ति । नखाः करचरणरुहा विंशतिर्हस्तपादस्थानि शलाकाकाराण्यस्थीनि मणिबन्धस्योपरिवर्तीनि अङ्गुलिमूलस्थानि विंशतिरेव । तेषां नखानां शलाकास्थ्नां च स्थानचतुष्टयं द्वौ चरणौ करौ चेत्येवमस्थ्नां चतुरुत्तरं शतम् ॥ ८५ ॥

( मिता० ) किञ्च—

षष्टीति । विंशतिरङ्गुलयस्तासामेकैकस्यास्त्रीणि त्रीणीत्येवमङ्गुलिसंबन्धीन्यस्थीनि षष्टिर्भवन्ति । पादयोः पश्चिमौ भागौ पार्ष्णी तयोरस्थीनि, द्वे एकैकस्मिन्पादे गुल्फौ द्वावित्येव चतुर्षु गुल्फेषु चत्वार्यस्थीनि, बाह्वोररत्निप्रमाणानि चत्वार्यस्थीनि, जङ्घयोस्तावदेव चत्वार्येवेत्येवं चतुःसप्ततिः ॥ ८६ ॥

( मिता० ) किञ्च—

द्वे द्वे इति । जङ्घोरुसन्धिर्जानुः, कपोलो गल्लः, ऊरुः सक्थि तत्फलकम्, अंसो भुजशिरः, अक्षः कर्णनेत्रयोर्मध्ये शङ्खादधोभागः, तालूषकं काकुदं, श्रोणी ककुद्मती तत्फलकं, तेषामेकैकस्यास्थीनि द्वे द्वे विनिर्दिशेदित्येवं चतुर्दशास्थीनि भवन्ति ॥ ८७ ॥

( मिता० ) किञ्च—

भगास्थीति । गुह्यास्थ्येकं पृष्ठे पश्चिमभागे पञ्चचत्वारिंशदस्थीनि भवन्ति । ग्रीवा कंधरा सा पञ्चदशास्थ्या स्यात् भवेत् । वक्षोंसयोः सन्धिर्जत्रु प्रतिजत्रु एकैकम्, हनुश्चिबुकं तत्राप्येकमस्थीत्येवं चतुःषष्टिः ॥ ८८ ॥

( मिता० ) किञ्च—

तन्मूल इति । तस्य हनोर्मूलेऽस्थिनी द्वे । ललाटं भालम्, अक्षि चक्षुः, गण्डः, कपोलाक्षयोर्मध्यप्रदेशः तेषां समाहारो ललाटाक्षिगण्डं तत्र प्रत्येकमस्थियुगुलम् । नासा घनसंज्ञकास्थिमती । पार्श्वकाः कक्षाधःप्रदेशसंबद्धान्यस्थीनि तदाधारभूतानि स्थालकानि तैः स्था-

लकैः अर्बुदैश्चास्थिविशेषैः सह पार्श्वकाः द्विसप्ततिः। पूर्वोक्तैश्च नवभिः सार्धमेकाशीतिर्भवन्ति ॥ ८९ ॥

(मिता०) किञ्च—

द्वाविति। भ्रूकर्णयोर्मध्यप्रदेशावस्थिविशेषौ शङ्कौ। शिरसः सम्बन्धीनि चत्वारि कपालानि। उरो वक्षस्तत्सप्तदशास्थिकमित्येवं त्रयोविंशतिः। पूर्वोक्तैश्च सह षष्ट्यधिकं शतत्रयमित्येवं पुरुषस्यास्थिसंग्रहः कथितः ॥ ९० ॥

गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ॥
नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च ॥ ९१ ॥

(वी० मि०) नासिकादीनि ज्ञानेन्द्रियाणि शरीरान्तर्भूतानि तेषां च यथासङ्ख्यं गन्धादयो विषया विशेषेण सिनोति पुरुषान् बध्नातीति व्युत्पत्त्या हि संसूचितम्। एवमग्रिमश्लोकेऽपि ॥ ९१ ॥

(मिता०) सविषयाणि ज्ञानेन्द्रियाण्याह—

गन्धेति। एते गन्धादयो विषयाः पुरुषस्य बन्धनहेतवः। 'विषयशब्दस्य 'षिञ् बन्धने' इत्यस्य धातोर्व्युत्पन्नत्वात्। एतैश्च गन्धादिभिर्बोध्यत्वेन व्यवस्थितैः स्वस्वगोचरसंवित्साधनतयानुमेयानि घ्राणादीनि पञ्चेन्द्रियाणि भवन्ति ॥ ९१ ॥

हस्तौ पायुरुपस्थं च मु(१)खं पादौ च पञ्च वै ॥
कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ॥ ९२ ॥

(वी० मि०) पायुर्गुदम्, उपस्थं मैथुनसाधनं वराङ्गम्, अन्यानि प्रसिद्धानि। कर्मेन्द्रियाणि आदाननिर्हारानन्दव्यवहारसंवरणात्मककर्मपञ्चकसम्पादकानीन्द्रियाणि मनश्च उभयात्मकं ज्ञानेन्द्रियकर्मेन्द्रियात्मकं ज्ञानं कर्मणि जनकत्वादिन्द्रियत्वाच्च। एवकारेणाऽन्येषामुभयात्मकत्वव्यवच्छेदः। वैशब्दः पादपूरणे ॥ ९२ ॥

(मिता०) कर्मेन्द्रियाणि दर्शयितुमाह—

हस्ताविति। हस्तौ प्रसिद्धौ, पायुर्गुदम्, उपस्थं रतिसंपाद्यसुखसाधनं, जिह्वा प्रसिद्धा, पादौ च एतानि हस्तादीनि पञ्च कर्मेन्द्रियाणि आदाननिर्हारानन्दव्याहारविहारादिकर्मसाधनानि जानी-

(१) जिह्वा-इति मु० पु० पाठः।

यात् । मनोऽन्तःकरणं युगपत् ज्ञानानुत्पत्तिगम्यं तच्च बुद्धिकर्मेन्द्रियसहकारितयोभयात्मकम् ॥ ९२ ॥

नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा ॥
मूर्द्धांसकण्ठहृद(१)यं प्राणस्यायतनानि च ॥ ९३ ॥

( वी० मि० ) नाभ्यादीनि दश प्राणस्य दशविधस्याऽसाधारणान्यायतनानि आधारभूतानि । ओजश्चक्षु(२)र्वर्ति, शङ्खकौ व्याख्यातौ । तथाशब्देन वक्ष्यमाणवपादिसमुच्चयः । चशब्देन सामान्यत(३)आयतनत्वं तेषां समुच्चीयते । शेषं सुगमम् ॥ ९३ ॥

( मिता० ) प्राणायतनानि दर्शयितुमाह—

नाभिरिति । नाभिप्रभृतीनि दश प्राणस्य स्थानानि । समाननाम्नः पवनस्य सकलाङ्गचारित्वेऽपि नाभ्यादिस्थानविशेषवाचोयुक्तिः प्राचुर्याभि(४)प्राया ॥ ९३ ॥

( वी० मि० ) असाधारण्येन प्राणस्यायतनान्युक्तानि, सामान्यतस्तदायतनानि साधारणानि च स्फुटयति—

वपा वसाऽवहननं नाभिः क्लोम यकृत् प्लिहा ॥
क्षुद्रान्त्रं वृक्ककौ वस्तिः पुरीषाधानमेव च ॥ ९४ ॥
आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च ॥
उदरं च गुदौ कोष्ठ्यौ विस्तारोऽयमुदाहृतः ॥ ९५ ॥
कनीनिके चाऽक्षिकूटे शष्कुली कर्णपत्रकौ ॥
कर्णौ(५) शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥ ९६ ॥
वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसङ्घातजौ स्तनौ ॥
उपजिह्वा स्फिजौ बाहू जङ्घोरुषु च पिण्डिका ॥ ९७ ॥
तालूदरं वस्तिशीर्षं चिबुके गलशुण्डिके ॥
अवटश्चैवमेतानि स्थानान्यत्र शरीरके ॥ ९८ ॥

---

( १ ) मूर्धमहृदयं कण्ठ—इति क० पु० पाठः ।
( २ ) चक्षुर्वर्ण—इति ख० पु० पाठः ।
( ३ ) सामान्यतया अदनत्व तेषां—इति ख० पु० पाठः ।
( ४ ) भिप्रायेण क० ।
( ५ ) गण्डौ शङ्खौ—इति क० पु० पाठः ।

अक्षिर(१)न्ध्रचतुष्कं च पद्धस्तहृदयानि च ॥
नव छिद्राणि तान्येव प्राणस्यायतनानि (२)च ॥ ९९ ॥

वपा हृन्मेदः, वसा मांसस्नेहः, अवहननं फुप्फुसाख्यं, नाभिः प्रागभिहिताऽपि विस्तरेणाऽभिधाने प्रतिपाद्यमाना न दोषाय, एवमन्यत्रापि द्रष्टव्यम्। क्लोम मांसपिण्डो दक्षिणकुक्षिगतः, यकृत् समीपस्था कालिका, प्लीहा हृदयाधोवामतः फुप्फुससमीपे स्थिता, ह्रस्वत्वं छान्दसम्। क्षुद्रान्त्रं हृदयस्थं शोणितमेदप्रभवमन्त्रं सार्द्धत्रिव्यायामं, वृक्कौ हृदयसमीपस्थौ मांसपिण्डौ, वस्तिर्मूत्राशयः, पुरीषाधानं पुरीषाशयोऽन्तर्वर्ती, आमाशयोऽपक्वाहाराधारः, हृदयं हृत्पुण्डरीकं, स्थूलान्त्रं गलनालं, कोष्ठे नाभेरधःप्रदेशे भवौ कोष्ठ्यौ, गुदौ श्रोणिफलके अयं प्राणायतनविस्तारः कैश्चिदुदाहृतः। अन्ये त्वत्र न्यूनाधिकभावे प्राणायाममेवमाहुरित्याह कनीनिके इति। कनीनिके अक्षितारके, आक्षिकूटे अक्षिनासान्तरे, शष्कुली कर्णरन्ध्रः, कर्णपत्रकौ पार्थिवौ पत्राकारौ श्रवणपदवाच्यौ, गण्डशङ्खौ व्याख्यातौ, दन्तवेष्टौ दन्तपङ्क्ती, ककुन्दरे जघनकूपकौ, वङ्क्षणौ जङ्घोरुसन्धी, वृक्कौ प्रागुक्तौ, श्लेष्मणः सङ्घातेन समूहेन जातौ स्तनौ वैराग्यार्थं विशेषणम्। उपजिह्वा जिह्वामूलभवा घण्टिका, स्फिजौ श्रोणिफलके, पिण्डिका जङ्घयोरूर्वोश्च मांसलप्रदेशः, गलशुण्डिके हनुमूलगलयोः सन्धी, अवटो निम्नो देशः, अवटुरिति पाठे घाटा, अक्षिरन्ध्राणां चक्षुःप्रान्तानां चतुष्कं तानि प्रसिद्धानि, चक्षुर्द्वयं नासारन्ध्रद्वयं कर्णद्वयं मुखं पायुरुपस्थमित्येतानि नव छिद्राणि। एवमेतानि स्थानानि अत्र शरीरके कुत्सिते शरीरे प्राणस्यायतनान्याधारभूतानीति। नवभिश्चकारैरथशब्देन च दशानामसाधारणायतनानां मध्येऽत्रानुक्तानां सङ्ग्रहः। तत्र केषाञ्चिन्मते षडनुक्ताः, अन्येषां मते तु चत्वारोऽनुक्ताः स्वयं विवेचनीयाः। एवकाराभ्यामुभयकल्पयोरुक्तानामायतनत्वायोगो व्यवच्छिन्नः। शेषं सुगमम् ॥ ९४—९९ ॥

( मिता० ) प्राणायतनानि प्रपञ्चयितुमाह—

वपेत्यादि। वपा प्रसिद्धा, वसा मांसस्नेहः, नाभिः प्रसिद्धा,

(१) आक्षिवर्णचतुष्कं—इति मु. पु. पाठः। (२) तु—इति मु. पु. पाठः।

अवहनन फुफ्फुस, प्लीहा आयुर्वेदप्रसिद्धा, तौ च मांसपिण्डाकारौ स्तः सव्यकुक्षिगतौ। यकृत् कालिका, (१)क्लोम मांसपिण्डः तौ च दक्षिणकुक्षिगतौ, क्षुद्रान्त्र हृत्स्थान्त्रम्, वृक्कौ हृदयसमीपस्थौ मांसपिण्डौ, वस्तिर्मूत्राशयः, पुरीषाधानं पुरीषाशय, आमाशयो ऽपक्वाग्रस्थानम्, हृदयं हृत्पुण्डरीकम्, स्थूलान्त्रगुदोदराणि प्रसिद्धानि, बाह्याद् गुदवलयादन्तर्गुदवलये द्वे, तौ च गुदौ काष्ठ्यौ कोष्ठ नामेरध प्रदेश भवौ। अयं च प्राणायतनस्य विस्तार उक्त.। पूर्वश्लोके तु सक्षेपः। अत एव पूर्वश्लोकोक्तानां केषांचिदिह पाठः॥९४-९५॥

(मिता०) पुन प्राणायतनप्रपञ्चार्थमाह—

कनीनिके इत्यादि। कनीनिके अक्षितारके, अक्षिकूटे अक्षिनासिकयो. सन्धी, शष्कुली कर्णशष्कुली, कर्णपत्रकौ कर्णपाल्यौ, कर्णौ प्रसिद्धौ, दन्तवेष्टौ दन्तपाल्यौ, ओष्ठौ प्रसिद्धौ, ककुन्दरे जघनकूपकौ, वङ्क्षणौ जघनोरुसन्धी, वृक्कौ पूर्वोक्तौ, स्तनौ च श्लेष्मसघातजौ, उपजिह्वा घण्टिका, स्फिजौ कटिप्रोथौ, बाहू प्रसिद्धौ, जङ्घोरपु च पिण्डिका जङ्घयोरूर्वोश्च पिण्डिका मांसलप्रदेशः, गलशुण्डिके हनुमूलगलयो. सन्धी, शीर्षं शिर, अवट शरीरे यः कश्चन निम्नो देशः कण्ठमूलकक्षादि.। अवटुरिति पाठे कृकाटिका। तथा क्ष्णोः कनीनिकयोः प्रत्येक श्वेत पार्श्वद्वयमिति वर्णचतुष्टयम्। यद्वा अक्षिपुटचतुष्टयम्। शेष प्रसिद्धम्। एवमेतानि कुत्सिते शरीरे स्थानानि। तथाक्षियुगल कर्णयुग्म नासाविवरद्वयमास्य पायुरुपस्थ मित्येतानि पूर्वोक्तानि नव छिद्राणि च प्राणस्यायतनान्येव॥९६-९९॥

> शिराः शतानि सप्तैव नव स्नायुशतानि च॥
> धमनीनां शते द्वे तु पञ्च पेशीशतानि च॥ १००॥
> एकोनत्रिंशल्लक्षाणि तथा नव शतानि च॥
> षट्पञ्चाशच्चे(२)नीयाच्छिरा धमनिसंज्ञिताः॥ १०१॥

(वी० मि०) शिरा नाभिसम्बद्धा वातपित्तकफवाहिन्य सकलदेहव्यापिका नाड्यः सप्त शतानि। स्नायूनामस्थिबन्धननाडीनां

(१) क्लोमा० ख।    (२) षट् पञ्चाशच जानीत इति मु पु पाठ।

शतानि नव। धमनीनां नाभेरूर्ध्वस्थानां प्राणादिवाहिनीनां नाडीनां द्वे शते। पेशीनां पिण्डाकारमांसलभागानां शतानि पञ्च। एकोनत्रिंशल्लक्षाणि नव शतानि षट्पञ्चाशच्च तथा शाखाप्रशाखाभेदेन शिरा धमनिसंज्ञिताः प्रागुक्ता विजानीयात्। 'एकोनविंशतिर्लक्षा' इति शूलपाणिना पठितं, लक्षाशब्दः स्त्रीलिङ्ग एवायमिति व्याख्यातं च। आद्यमध्यचरमचशब्दैः शाखाप्रशाखाभेदविवक्षाम(१)न्तरेणाऽधिकसंख्या चतुर्षु वाक्यार्थेषु व्यवच्छिद्यते। तृतीयचकारेण स्नायूनामपि शाखाभेदेन बहुतमत्वं सूचयति ॥ १००-१०१ ॥

( मिता० ) किञ्च—

शिरा इति। शिरा नाभिसम्बन्धाश्चत्वारिंशत्संख्या वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखिन्यः सत्यः सप्तशतसंख्या भवन्ति। तथाङ्गप्रत्यङ्गसन्धिबन्धनाः स्नायवो नवशतानि। धमन्यो नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्याः प्राणादिवायुवाहिन्यः शाखाभेदेन द्विशतं भवन्ति। पेश्यः पुनर्मांसलाकारा ऊरुपिण्डकाद्यङ्गप्रत्यङ्गसंधिन्यः पञ्चशतानि भवन्ति ॥१०० ॥

( मिता० ) पुनश्चासामेव शिरादीनां शाखाप्राचुर्येण संख्यान्तरमाह—

एकोनेति। शिराधमन्यो मिलिताः शाखोपशाखाभेदेन एकोनत्रिंशल्लक्षाणि। तथा च नवशतानि षट्पञ्चाशच्च भवन्तीत्येवं हे साम
श्रवःप्रभृतयः मुनयो जानीत ॥ १०१ ॥

त्रयो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् ॥
सप्तोत्तरं मर्मशतं द्वे च सन्धिशते तथा ॥ १०२ ॥
रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च ॥
सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह ॥ १०३ ॥
वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः ॥
यद्यप्येको नु वेदैषां (२)भावानां चैव संस्थितिम् ॥१०४॥

( वी० मि० ) श्मश्रूणि मूर्द्धकक्षादिकेशाश्च मिलितास्त्रयो लक्षा

(१) विवक्षासम्भवेनाऽधिक०—इति ख. पु. पाठः।
(२) यद्यप्येकोऽनुवेत्त्येषां—इति मु० पु० पाठः।

ज्ञेयाः । पुस्त्वं छान्दसम् । मर्माणि अल्पाभिघातेऽप्यतिपीडाकराणि, स्थानानि वस्त्यादीनि सप्तकशतसंख्यानि। अस्थ्नां सन्धिशते द्वे। श्मश्रुकेशव्यतिरिक्तानां रोम्णां सार्द्धकोटित्रयमितानां परमाणवो वायवीयैः परमाणुभिर्विभक्ताः पृथक्कृताः स्वसमसंख्यैः स्वेदनिर्गममार्गैः सह चतुःपञ्चाशत् कोट्यः सार्द्धषष्टिलक्षाश्चाऽनुमानेन विगण्यन्ते । यद्यकोऽपि एषां शिष्याणां मध्ये भावानामस्थिरोमादीनां संस्थितिं मर्यादां वेदेत्यर्द्धोक्तिः, तदा स दिव्यदृष्टिरिति वक्तव्यशेषस्य याज्ञवल्क्येऽतीन्द्रियार्थदर्शनाय ध्यानासङ्गादनभिधानमित्याभाति । तु वितर्के । यद्वा तदा क्रियसाविप्रतनमनुपञ्जनीयम् । अथवा यद्यप्यन्यैरनुमानेनैव भुवि गण्यन्ते तथाप्येषां मध्ये एकोऽह भावानां संस्थितिं प्रत्यक्षेण वेदेत्यर्थः । श्लोकद्वयस्थैस्तुकारचकारैश्चतुर्भिश्चतुर्णां वाक्यार्थपूरणव्याख्यवच्छेदः । तथाशब्दाभ्यां विशय विशेषे इत्यर्थद्वयमनुकृष्यते । तृतीयश्लोकस्थचकारेण शरीरस्थेतिकसमुच्चयः । एवकारस्येषामित्यत्र एक इत्यत्र वाऽन्वितः ॥१०२-१०४॥

( मिता० ) किंच—

त्रय इति । शरीरिणां श्मश्रूणि केशाश्च मिलिताः सन्तस्त्रयो लक्षा विज्ञेयाः । मर्माणि मरणकराणि क्लेशकराणि च स्थानानि तेषां सप्तोत्तरं शतं ज्ञेयम् । अस्थ्नां तु द्वे सन्धिशते । स्नायुशिरादिसन्धयः पुनरनन्ताः ॥ १०२ ॥

( मिता० ) सकलशरीरसुषिरादिसंख्यामाह—

रोम्णामित्यादि । पूर्वोदितशिराकेशादिसहितानां रोम्णां परमाणवः सूक्ष्मसूक्ष्मतररूपा भागाः स्वेदस्रवणसुषिरैः सह चतुःपञ्चाशत्कोट्य, तथा सप्तोत्तरषष्टिलक्षाः सार्धाः पञ्चाशत्सहस्रसहिताः वायवीयैर्विभक्ताः पवनपरमाणुभिः पृथक्कृता विगण्यन्ते । एतच्च शास्त्रदृष्ट्याऽभिहितम् । चक्षुरादिकरणपथगोचरत्वाभावादस्यार्थस्य, इममतिगहनमर्थं शिरादिभावसंस्थानरूपं हे मुनयः ! भवतां मध्ये यः कश्चिदनुवेत्ति सोपि महान् अन्यो बुद्धिमताम् । अतो यत्नतो बुद्धिमता योद्धव्या भावसंस्थितिः ॥ १०३-१०४ ॥

रसस्य नव विज्ञेया जलस्याञ्जलयो दश ॥
सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः ॥१०५ ॥

षट् श्लेष्मा पञ्च पित्तं च चत्वारो मूत्रमेव च ॥
वसा त्रयो द्वौ तु मेदो मज्जैकोऽर्ध्वं तु मस्तके ॥ १०६ ॥
श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु ॥
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ॥ १०७ ॥

( वी० मि० ) स्वस्थस्य रसादीनामुक्तसंख्या अञ्जलयः शरीरे प्रकीर्तिताः । सम्यक्परिणताहारो रसः तस्य नवाऽञ्जलयः । एवमग्रेऽपि । वसा मांसस्नेहः, मेदो मांसरसः, मज्जाऽस्थि, सुषिरगत एकोऽञ्जलिर्मस्तके च मज्जार्द्धाञ्जलिमितः, श्लेष्मौजसः श्लेष्मसारस्य तावदेव अञ्जलयर्द्धमेव । द्वादशभिरव्ययैर्द्वादशसु वस्तुषु न्यूनाधिकसंख्याऽञ्जलिना व्यवच्छिद्यते । एतत्सर्वं जानतो मोक्षसाधनं वैराग्यमुत्पद्यत इत्याशयवानाह इतीति । इति नश्वरकथितवस्तुसमुदायनिमित्तत्वादेतद्वर्ष्म शरीरमस्थिरम्, तच्चाऽस्थिरत्वेनाऽसारत्वेन दुःखमयत्वेन च ज्ञातं योगाभ्यासमुखेन मोक्षाय यस्य पुंसो भवति, असौ कृती पुण्यवान् ॥ १०५—१०७ ॥

( मिता० ) शारीररसादिपरिमाणमाह—

रसस्येत्यादि । सम्यक्परिणताहारस्य सारो रसस्तस्य परिमाणं नवाञ्जलयः । पार्थिवपरमाणुसंश्लेषनिमित्तस्य जलस्याञ्जलयो दश विज्ञेयाः । पुरीषस्य वर्चस्कस्य सप्तैव । रक्तस्य जाठरानलपरिपाकापादितलौहित्यस्यान्नरसस्याष्टावञ्जलयः प्रकीर्तिताः । श्लेष्मणः कफस्य षडञ्जलयः । पित्तस्य तेजसः पञ्च । मूत्रस्योच्चारस्य चत्वारः । वसाया मांसस्नेहस्य त्रयः । मेदसो मांसरसस्य द्वावञ्जली । मज्जा त्वस्थिगतसुषिरगतस्तस्यैकोऽञ्जलिः । मस्तके पुनरर्धाञ्जलिः । मज्जा श्लेष्मौजसः श्लेष्मसारस्य तथा रेतसश्चरमधातोस्तावदेवार्धाञ्जलिरेव । एतच्च समधातुपुरुषाभिप्रायेणोक्तम् । विषमधातोस्तु न नियमः । 'वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च । दोषधातुमलानां च परिमाणं न विद्यते' ॥ इत्यायुर्वेदस्मरणात् । इतीदृशमास्थिस्नाय्वाद्यारब्धमेतदशुचिनिधानं वर्ष्मास्थिरमिति यस्य बुद्धिरसौ कृती पण्डितो मोक्षाय समर्थो भवति । वैराग्यनित्यानित्यविवेकयोर्मोक्षोपायत्वात्, अस्थिमूत्रपुरीषादिप्राचुर्यज्ञानस्य वैराग्यहेतुत्वात् । अत

एव व्यास —'सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढा पापानि कुर्वते ॥ यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत्' ॥ इति । तस्मादीदृशकुत्सितशरीरस्यात्यन्तिकविनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम् ॥ १०५-१०७ ॥

( वी० मि० ) एवमुत्पन्ने वैराग्ये सत्यात्मोपासनं कर्तव्यं यथा तदाह—

द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥
हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ॥ १०८ ॥
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाऽचलः ॥
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥ १०९ ॥
ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान् ॥
योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥ ११० ॥
अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ॥
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥ १११ ॥

हृदयप्रदेशादभि सर्वतो निःसृतो देहस्य हिताहितानाम्नापि हिता नाड्यो द्वासप्ततिसहस्राणि यास्तासां नाडीनां मध्ये शशिप्रभं मण्डलं तस्य मध्यस्थोऽचलः स्थितो दीप इव प्रकाशमान आस्ते स आत्मा ज्ञेयः साक्षात्कर्तव्यः । अत्र फलमाह-तमात्मानं प्रत्यक्षतो विदित्वा इह संसारे पुनर्न जायत इति । साक्षात्कारोपायं श्रवणमाह ज्ञेयमिति । यदहमादित्याद् गुरोराप्तवानधीतवान् तदारण्यकं बृहदारण्यकाख्यमात्मश्रवणाय ज्ञेयम् । मननमाह—मत्प्रोक्तं च योगप्रतिपादकं शास्त्रं संहितारूपं योगमात्मनि स्थैर्यमभीप्सता ज्ञेयम् । निदिध्यासनमाह अनन्येति । मनोऽन्तःकरणं, बुद्धिं महत्तत्वं, स्मृतिं बुद्धिनिष्ठवृत्तिविशेषात्मिकाम्, इन्द्रियं श्रोत्रादि अनन्यविषयमात्मभिन्नविषयव्यावृत्तं कृत्वा हृदये दीपवत् स्थितो योऽसौ पूर्वमुक्तः स आत्मा ध्येयः । तुकारेणाऽऽत्मसाक्षा

त्कारं विना मोक्षो व्यवच्छिन्नः । चकाराभ्यां छन्दोगोपनिषदादेर्न्याय· शास्त्रादेश्च समुच्चयः ॥ १०८-१११ ॥

( मिता० ) उपासनीयात्मस्वरूपमाह—

द्वेत्यादि । हृदयप्रदेशादभिनिःसृताः कदम्बकुसुमकेसरवत्सर्वतो निर्गता हिताहितकरत्वेन हिताहितेतिसंज्ञा द्वासप्ततिसहस्राणि ना· ड्यो भवन्ति । अपरास्तिस्रो नाड्यस्तासामिडापिङ्गलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विपर्यस्ते नासाविवरसंबद्धे प्राणापानाय· नने । सुषुम्णाख्या पुनस्तृतीया दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्गता । तासां नाडीनां मध्ये मण्डलं चन्द्रप्रभं तस्मिन्नात्मा निर्वातस्थदीप इवा चलः प्रकाशमान आस्ते स एवंभूतो ज्ञातव्यः । यतस्तत्साक्षात्कर· णादिह संसारे न पुनः संसरति अमृतत्वं प्राप्नोति ॥ १०८-१०९ ॥

( मिता० ) किञ्च—

ज्ञेयमिति । चित्तवृत्तेर्विषयान्तरतिरस्कारेणात्मनि स्थैर्यं योग· स्तत्प्राप्त्यर्थं बृहदारण्यकाख्यमादित्याद्यन्मया प्राप्तं तच्च ज्ञातव्यम् । तथा यन्मयोक्तं योगशास्त्रं तदपि ज्ञातव्यम् ॥ ११० ॥

( मिता० ) कथं पुनरसावात्मा ध्येय इत्यत आह—

अनन्यविषयमिति । आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृती· न्द्रियाणि प्रत्याहृत्य आत्मैकविषयाणि कृत्वा आत्मा ध्येयः । योऽसौ प्रभुर्निर्वातस्थप्रदीपवद्दीप्यमानो निष्प्रकम्पो हृदि तिष्ठति । एतदेव तस्य ध्येयत्वं यच्चित्तवृत्तेर्बहिर्विषयावभासतिरस्कारेणात्मप्रव· णतानाम शरावसंपुटनिरुद्धप्रभाप्रतानप्रसरस्येव प्रदीपस्यैकनि· ष्ठत्वम् ॥ १११ ॥

( वी० मि० ) आशयशुद्ध्यभावेन समाध्यशक्तं प्रति मोक्षो· पायमाह—

यथाविधानेन पठन् साम(१)गानमविच्युतम् ॥
सावधानस्तदभ्यासात्परं ब्रह्माऽधिगच्छति ॥ ११२ ॥

साम्नां सम्बन्धिगानरूपं ग्रन्थमविच्युतमस्खलितं यथास्यात्त· था यथाविधानेन वेदोपदिष्टविधिना सावधानः सामध्वन्यनु· स्यूतात्मैकाग्रचित्तः पठन् तदभ्यासात्तथा क्रमेणाऽऽशयशुद्धिसमा·

(१) सामगाय०—इति मु० पु० पाठः ।

धिनिष्पादनेन परं ब्रह्माऽधिगच्छति साक्षात्करोति प्राप्नोति वा। 'सामगायमविच्युत'मिति तु शूलपाणौ पाठः ॥ ११२ ॥

( मिता० ) यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्यमित्याह—

यथाविधानेनेति । स्वाध्यायावगतमार्गानतिक्रमेण सामगायं सामगानम् । साम्नो गानात्मकत्वेऽपि गायमिति विशेषणं प्रगीतमन्त्रस्युदासार्थम् । अविच्युतमस्खलितं, सावधानः सामध्वन्य(१)नुस्यूतात्मैकाग्रचित्तवृत्तिः पठंस्तदभ्यासवशात्तत्र निष्णातः शब्दाकारब्रह्मोपासनेन परं ब्रह्माऽधिगच्छति । तदुक्तम्—'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति ॥ ११२ ॥

( वी०मि० ) सामानभिज्ञस्य मोक्षोपायमाह—

अपरान्तकमुल्लोप्यं मद्रकं मकरीं(२) तथा ॥
औवेणकं सरोबिन्दुमुत्तरं गीतकानि च ॥ ११३ ॥
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ॥
ज्ञेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥ ११४ ॥

अपरान्तकादीनि सप्त महागीतिकानि सङ्गीते प्रसिद्धानि । ऋग्गाथाद्याश्चतस्रो गीतिकास्तत्रैव प्रसिद्धाः । एतदुभयविधं ज्ञेयम् । तदभ्यासकरणान्मोक्षसंज्ञितमात्मस्वरूपताचिन्तनेन मोक्षेण कार्येण संज्ञितं संज्ञावत् मोक्षसाधनेति सञ्ज्ञावदिति यावत् । चकारेण परस्परसाहित्यं बोधयति ॥११३-११४॥

( मिता० ) यस्य पुनर्वैदिक्यां गीतौ चित्तं नाभिरमते तेन लौकिकगीतानुस्मृतात्मोपासनं कार्यमित्याह—

अपरान्तकमित्यादि । अपरान्तकोल्लोप्यमद्रकमकर्यौवेणकानि सरोबिन्दुसहितं चोत्तरमित्येतानि प्रकरणाख्यानि सप्त गीतकानि । चशब्दादासारितवर्धमानकादिमहागीतानि गृह्यन्ते । ऋग्गाथाद्याश्चतस्रो गीतिका इत्येतदपरान्तकादिगीतजातमध्यारोपितात्मभावं मोक्षसाधनत्वान्मोक्षसंज्ञितं मन्तव्यम् । तदभ्यासस्यैकाग्रतापादनद्वारेणात्मैकाग्रताप्रतिपत्तिकारणत्वात् ॥ ११३-११४ ॥

---

( १ ) अनुस्मृतात्मैक क। ( २ ) मकरी—इति मु० पु० पाठः।

( वी०मि० ) किञ्च—

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ॥
तालज्ञश्चाऽप्र(१)यत्नेन मोक्षमार्गं नियच्छति ॥ ११५ ॥

श्रुतयो द्वाविंशतिः स्वराणां प्रभेदाः, जातयः सप्त निषादाद्याः, तालध्वनिविशेषो रूपकादिः मोक्षमार्गं चित्तसमाधियोगरूपं नियच्छति प्राप्नोति । चकारः सर्वसाहित्यः ॥ ११५ ॥

( मिता० ) किंच—

वीणेति । भरतादिमुनिप्रतिपादितवीणावादनतत्त्ववेदी । श्रूयत इति श्रुतिः द्वाविंशतिविधा सप्तस्वरेषु । तथा हि—षड्जमध्यमपञ्चमाः प्रत्येकं चतुःश्रुतयः ऋषभधैवतौ प्रत्येकं त्रिश्रुती इति । जातयस्तु षड्जादयः सप्त शुद्धाः, सङ्करजातयस्त्वेकादशेत्येवमष्टादशविधास्तासु विशारदः प्रवीणः ताल इति गीत(२)परिमाणं कथ्यते । तत्स्वरूपज्ञश्च तदनुविद्धब्रह्मोपासनतया तालादिभङ्गभयाच्चित्तवृत्तेरात्मैकाग्रतायाः सुकरत्वादल्पायासेनैव मुक्तिपथं नियच्छति प्राप्नोति ॥ ११५ ॥

( वी०मि० ) गीतानां ब्रह्मोपासनबुद्ध्या कृतानां मोक्षहेतुत्वमतथाकृतानां तु फलमाह—

गीतज्ञो यदि योगेन नाप्नोति परमं पदम् ॥
रुद्रस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥ ११६ ॥

योगेन योगद्वारा तदा मोक्ष एवेत्यन्वयः । शेषं स्पष्टम् । तथा रुद्रसेवया जन्मान्तरे सत्त्वशुद्धिमासाद्य मुच्यत इत्याशयः ॥ ११६ ॥

( मिता० ) चित्तविक्षेपाद्यन्तरायहतस्य गीतज्ञस्य फलान्तरमाह—

गीतज्ञ इति । गीतज्ञो यदि कथंचिद्योगेन परमं पदं नाप्नोति तर्हि रुद्रस्य सचिवो भूत्वा तेनैव सह मोदते क्रीडति ॥ ११६ ॥

( वी०मि० ) 'अजः शरीरग्रहणा'दित्येवाऽऽद्युक्तमुपसंहरति—

अनादिरात्मा कथितस्तस्यादिस्तु शरीरकम् ॥
आत्मन(३)श्च जगत्सर्वं जगतश्चाऽऽत्मसम्भवः ॥ ११७ ॥

अनादिरात्मा (४)कथितः । तस्यादिः कुत्सितशरीरग्रहणमेव

(१) तालज्ञश्चाऽप्रयासेन—इति मु० पु० पाठः । (२) गीतप्रमाणं कल्प्यते ख. ।
(३) आत्मनस्तु—इति मु० पु० पाठः । (४) अनादिर्जीवात्मा-इति क० पु० पाठः ।

कथितं प्राक् । परमात्मनः सर्वं जगत् पृथिव्यादिमहाभूतानि । जगतश्च जीवात्मनः शरीरोत्पत्तिरित्यर्थः । तुशब्देन स्वरूपोत्पत्तिर्व्यवच्छिन्ना । आद्यचकारेण महत्तत्वादेर्द्वितीयचकारेण दृष्टस्य हेतोः सङ्ग्रहः ॥ ११७ ॥

( मिता० ) पूर्वोक्तमुपसंहरति—

अनादिरिति । प्रागुक्तरीत्या अनादिरात्मा क्षेत्रज्ञस्तस्य च शरीरग्रहणमेवादिरुद्भवः कथितः 'अजः शरीरग्रहणा'दित्यत्र । परमात्मनश्च सकाशात्पृथिव्यादिसकलभुवनोद्भवः तस्माद्(१)भूताच्च पृथिव्यादिभूतसंघाताज्जीवानां स्थूलशरीरतया संभवश्च कथितः 'सर्गादौ स यथाकाश'मित्यादिना ॥ ११७ ॥

( वी०मि० ) भूतेभ्य आत्मनस्तस्माच्च भूतानामुत्पत्तिरित्यापाततोऽसङ्गतं मन्वाना मुनयः पृच्छन्ति—

कथमेतद्विमुह्यामः सदेवासुरमानवम् ॥

जगदुत्पन्न(२)मात्मा च कथं तस्मिन्वदस्व नः ॥ ११८ ॥

देवासुरमानुषसहितं जगत्पञ्चभूतात्मकं कथमात्मन उत्पन्नमात्मा च तस्मिन् जगति समुत्पन्नः कथमित्येतद्विमुह्यामो विरोधभावेन सन्देहविषयीकुर्मो वयमतो मोहापाकरणपूर्वकं नो वदस्व । चकारेणाऽनादित्वमपि कथमेवमात्मन इति समुच्चीयते ॥ ११८ ॥

( मिता० ) एतदेव प्रश्नपूर्वकं विवृणोति—

कथमिति । यदेतत्सकलसुरासुरमनुजादिसहितं जगत्तदात्मनः सकाशात्कथमुत्पन्नं, आत्मा च तस्मिन् जगति कथं तिर्यङ्नरसरीसृपादिशरीरभाग्भवतीत्येतस्मिन्नर्थे विमुह्यामः । अतो मोहापनुत्यर्थमस्माकं विस्तरशो वदस्व ॥ ११८ ॥

( वी०मि० ) निरुपाधेरात्मनो जगदुत्पत्तिस्तत्र शरीरविशिष्ट आत्मा उत्पद्यते विशेषणीभूतं शरीरमेवोत्पद्यत इति यावदतो न विरोध इत्यक्षरतात्पर्याभ्यां याज्ञवल्क्य उत्तरयति दशभिः—

मोहजालमपास्येह पुरुषो दृश्यते हि यः ॥

सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः ॥ ११९ ॥

---

( १ ) तद्भूताच्च पृथिव्यादिभूतसंघाताज्जीवानां ङ ।

( २ ) जगदुद्भूत०—इति मु० पु० पाठः ।

स आत्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः ॥
विराजः सोऽन्नरूपेण यज्ञत्वमुपगच्छति ॥ १२० ॥

मोहजालं तत्त्वज्ञानेनाऽपास्य इह प्रागुक्ते हृत्कमले सहस्रकरचरणचक्षुःशिरोयुक्तः सूर्यतुल्यतेजा योगिभिर्दृश्यते यः परमात्मा स एव यज्ञो यागेनाराध्यः स एव प्रजापतिर्ब्रह्मा विश्वरूपो विराट् स एवाऽन्नरूपेण यज्ञत्वं वाजपेयादिरूपमुपगच्छति । एतेन विश्वरूपत्वाभिधानेन जन्यजनकभावो न विरुद्ध्यति इति समाधानमपि सूचितम् ॥ ११९-१२० ॥

( मिता० ) एवं मुनिभिः पृष्टः प्रत्युत्तरमाह—

मोहजालमित्यादि । इह जगति यदिदं स्थूलकलेवरादावनात्मन्यात्माभिमानरूपं मोहजालं तदपास्य तद्व्यतिरिक्तो यः पुरुषोऽनेककरचरणलोचनः सूर्यवर्चाः अनन्तरश्मिः सहस्रकः बहुशिरा दृश्यते । एतच्च तत्तद्गोचरशक्त्याधारतयोच्यते । तस्य साक्षात्कारादिसम्बन्धाभावात् । स एवात्मा यज्ञः प्रजापतिश्च । यतोऽसौ विश्वरूपः सर्वात्मकः । वैश्वरूप्यमेव कथमिति चेत् । यस्मादसौ विराजः पुरोडाशाद्यन्नरूपेण यज्ञत्वमुपगच्छति । यज्ञाच्च वृष्ट्यादिद्वारेण प्रजासृष्टिरित्येवं वैश्वरूप्यम् ॥ ११९-१२० ॥

यो द्रव्यदेवतात्यागा(१)त्सम्भूतो रस उत्तमः ॥
देवान् सन्तर्प्य स रसो यजमानं फलेन च ॥ १२१ ॥
संयोज्य वायुना सोमं नीयते रश्मिभिस्तथा ॥
ऋग्यजुःसामविहितं सौरं धामोपनीयते ॥ १२२ ॥
तन्म(२)ण्डलादसौ सूर्यः सृजत्यमृतमुत्तमम् ॥
यज्जन्म सर्वभूतानामशनानशनात्मनाम् ॥ १२३ ॥
तस्मादन्नात्पुनर्यज्ञः पुनरन्नं पुनः क्रतुः ॥
एवमेतदनाद्यन्तं चक्रं सम्परिवर्तते ॥ १२३ ॥

( वी० मि० ) हविरादिद्रव्यकर्मदेवतोद्देश्यकत्यागरूपाद्वाजपेयादियज्ञाद्यो रसः सारो विकार उत्तमो विश्वनिदानतयाऽदृष्टात्म-

(१) त्यागसं०—इति मु० पु० पाठः । (२) त्यमण्डला०—इति मु० पु०पाठः ।

कः संभूतः स रसो देवान् त्यागोद्देश्यान् सन्तर्प्य प्रीणयित्वा यजमानं फलेन संयोज्य सोमं प्रति वायुना नीयते, तेनेष्टेन प्रेरितो वायुर्जलं चन्द्रमसि प्रापयतीत्यर्थः। तत्र सोमदर्शीयैरेव रश्मिभिः किरणैः सौरं धाम सूर्यसम्बन्धि स्थानं तदीयमण्डलं ऋगादिभिस्त्रिभिर्विहितं निष्पादितं प्रतिसर उपनीयते, तेनाऽदृष्टेन प्रेरितं जलं नीयत इत्यर्थः। तस्मान्मण्डलादसौ सूर्यस्तस्याऽदृष्टविशेषस्य परिणामरूपममृतं जलं जगन्मूलत्वादुत्तमं सृजति भूमौ वर्षति । उक्तमर्थमेव स्फुटयति–यद्यस्माज्जलादशनात्मनां भोजनकारिणामात्मनां अन्नमानामनशनात्मनामनशनकारिणामात्मनां वृक्षसस्यादीनां सर्वेषां भूतानां प्राणिनां जन्म भवति । अथवा भक्ष्याभक्ष्याणां सर्वभूतानां च यतो जन्मेत्यर्थः । तस्माद्वृष्टिसम्पादितजलजनितादन्नात् पीढ़्यादेः पुनर्यज्ञः पुनस्तस्माद्यज्ञादुक्तक्रमेणाऽन्नं तस्मादन्नात् पुनरपि क्रतुर्यज्ञ इत्येवमेतत् संसारचक्रं प्रवाहरूपेणाऽऽद्यन्तशून्यं सम्यक् परिवर्तते भ्रमिं करोति । चकारेण पित्रादिगमनमुद्दिश्य कृताद्यज्ञाज्जातो रसः पित्रादीन् सन्तर्पयतीति समुच्चिनोति ॥ १२१-१२४ ॥

( मिता० ) एतदेव प्रपञ्चयति—

य इत्यादि । द्रव्यस्य चरुपुरोडाशादेर्देवतोद्देशेन त्यागाद्यो रसः अदृष्टरूपमात्मनः परिणत्यन्तरमुत्तमः सकलजगज्जन्मबीजतयोत्कृष्टतमः संभूतः स देवान् संप्रदानकारकभूतान्सम्यक्प्रीणयित्वा यजमानं चाभिलषितफलेन संयोज्य पवनेन प्रेर्यमाणश्चन्द्रमण्डलं प्र(१)ति नीयते । ततः शशिमण्डलाद्रश्मिभिर्भानुमण्डलम् । सैषा त्रय्येव विद्या तपतीत्यभेदाभिधानात् ऋग्यजुःसाममयं प्रत्युपनीयते । ततश्च स्वमण्डलादसौ सूर्योऽमृतरसं वृष्टिरूपमुत्तमं यत्नकलभूतानामशनानशनात्मनां चराचराणां जनननिमित्तं तत्सृजति । तस्माद्वृष्टिसंपादितौषधिमयात्प्रजोत्पत्तिहेतोरन्नात्पुनर्यज्ञो यज्ञाच्च पूर्वाभिहित(२)भक्त्या पुनरन्नमन्नाच्च पुनः क्रतुरित्येवमेतदखिलं संसारचक्रं प्रवाहरूपेणोत्पत्तिविनाशविरहितं सम्यक्परिवर्तत इत्यनेन क्रमेणात्मनसकाशादखिलजगदुत्पत्तिः । तत्र चात्मनः स्वकर्मानुरूपविग्रहपरिग्रहः ॥ १२१-१२४ ॥

( १ ) प्रत्युपनीयते क । ( २ ) भिहितसङ्गत्युन्नत्र क ।

( वी०मि० ) नन्वनाद्यन्तं चेत् संसारचक्रं तदाऽनिर्मोक्षप्रसङ्ग इत्याशङ्क्याह—

अनादिरात्मा सम्भूतिर्विद्यते नान्तरात्मनः॥
समवायी तु पुरुषो मोहेच्छाद्वेषकर्मजः॥ १२५ ॥

आत्मा स्वरूपतोऽनादिरिति नान्तरा संसारमध्ये तस्यात्मनः सम्भूतिर्विद्यते, तथापि पुरुष आत्मा मोहादिकृतेन कर्मणा लब्धजन्मा गृहीतशरीरः सन् सुखदुःखादिसमवायी भवति। तथा च मोहादेर्निमित्तस्याऽभावे जन्माभावात्सुखदुःखादिविच्छेदे मोक्षः सम्भवत्येव। कस्यचिदात्मनः सर्वदानिर्मोक्षा च संसारचक्रस्याऽनाद्यन्तत्वं न तु सर्वस्यात्मन इति मीमांसकाः। अनन्तत्वं प्रलयव्यतिरिक्तान्तशून्यत्वम्। एवमादित्वमपि वाच्यमिति। तुशब्देन साङ्ख्यप्रसिद्धमात्मनो दुःखाद्यसम्भेदं व्यवच्छिनत्ति॥ १२५ ॥

( मिता० ) ननु यद्यात्मनः संसरणमनाद्यन्तं तर्ह्यनिर्मुक्तिप्रसङ्ग इत्यत आह—

अनादिरिति। यद्यप्यात्मनोऽनादित्वात्संभूतिर्न विद्यते अन्तरात्मनः शरीरव्यापिनः तथापि पुरुषः शरीरेण समवायी भवति भोगायतने सुखदुःखात्मकं भोग्यजातमुपभुङ्क्ते इत्येवंभूतेन संबन्धेन संबन्धी भवत्येव। स च समवायो मोहेच्छाद्वेषजनितकर्मनिर्मितो न तु निसर्गजातः। तस्य कार्यत्वेन विनाशोपपत्तेर्नानिर्मुक्तिः॥ १२५ ॥

( वी०मि० ) अव्यक्तरूपे संसारप्रवर्तको विराडित्युक्तं, स्वरूपेण विशेषः संसारमूलभूतप्राण्यमेकवर्णपृथिव्यादिप्रवर्तकत्वं तस्य दर्शयति—

सहस्रात्मा मया यो व आदिदेव उदाहृतः॥
मुखबाहूरुपज्जाः स्युस्तस्य वर्णा यथाक्रमम्॥ १२६ ॥
पृथिवी पादतस्तस्य शिरसो द्यौरजायत॥
नस्तः प्राणा दिशः श्रोत्रात्स्पर्शाद्वायुर्मुखाच्छिखी॥ १२७॥
मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः॥
जघनादन्तरिक्षं च जगच्च सचराचरम्॥ १२८ ॥

सकलजीवात्मकतया च सहस्रात्मा य आदिदेवो विराट् मया

यः प्रागुदाहृत:, तस्य मुखादितो ब्राह्मणाद्यो वर्णा यथाक्रमं जाता-स्तिष्ठन्ति । नस्तो नासातः, स्पर्शात्तु स्पर्शोपलम्भकात् त्वचः सचराचरं स्थावरजङ्गमप्राणिसहितं जगद्विश्वम् । शेषं सुबोधम् । चकारैः श्रोत्राद्यायुप्राणयोर्नाभेरन्तरिक्षस्य च कल्पान्तरे पुरुषसूक्तसिद्धामुत्पत्तिं सूचयति ॥ १२६-१२८ ॥

( मिता० ) आत्मनो जगज्जन्मेत्युक्तं तत्प्रपञ्चयितुमाह—

सहस्रात्मेत्यादि । योऽसौ सकलजीवात्मकतया प्रपञ्चात्मक मया च सहस्रात्मा बहुरूपस्तथा सकलजगद्धेतुतया आदिदेवो मया युष्माकमुदाहृतः तस्य वदनभुजसक्थिचरणजाता यथाक्रमं प्रजन्मादयश्चत्वारो वर्णाः । तथा तस्य पादाद् भूमिर्मस्तकात्सुरसद्म प्राणात्प्राणः कर्णात्ककुभ स्पर्शात्पवनो वदनाद् हुतवहः मनसः शशाङ्कः नेत्राद्भानुः जघनाद्गगनं जङ्गमाजङ्गमात्मकं जगच्च॥१२६-१२८॥

( वी०मि० ) मुनयो देशयन्ति—(?)

यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते ॥
ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते ॥ १२९ ॥
करणैरन्वितस्यापि पूर्वं ज्ञानं कथञ्चन ॥
वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम् ॥ १३० ॥

हे ब्रह्मन् योगीश्वर यद्येवमात्मजीवयोरैक्यं तदा स आत्मा ईश्वरोऽप्रतिहतेच्छः कथं पापासु निन्द्यासु सर्वासु योनिषु जायते, कथं वाऽनिष्टैर्भावैर्दुःखमोहादिभिश्चाण्डालतिर्यक्त्वादिभिश्च प्रकर्षेण चिरकालं बहुभी रूपैः संयुज्यते न हि मन्दोऽपि नाम शक्तः सन्नमीदृं दुःखादिकमनुभवतीत्येकः पूर्वपक्षः । यदि जीवः परमात्मनोऽभिन्नस्तदा व्यापकत्वात्करणैर्मनःप्रभृतिभिरन्वितोऽपि पूर्व जन्मानुभूतं न कथ जनाति। शरीरस्य चैतन्ये तु नात्मन्यतिप्रसङ्गः । पूर्वजन्मानुभावाय व्यधिकरणत्वेनैव तज्जन्मीयस्मृतिं प्रत्यहेतुत्वादिति द्वितीयः पूर्वपक्षः । यदि परमात्मनोऽभिन्नो जीवस्तदा सर्वगः सर्वप्राणिनामन्तर्यामी स्यात् । तथा च सर्वप्राणिगतां वेदनां दुःखं कस्माच्च वेत्ति नाऽनुभवतीति तृतीयः पूर्वपक्षः । अपिकारौ विरोधार्थौ । चकारेण देवदत्तदृष्टस्य यज्ञदत्तेन कथं न स्मरणमित्यपि पूर्वपक्षान्तरं समुच्चिनोति ॥ १२९-१३० ॥

( मिता० ) अत्र चोदयन्ति—

यदीति। हे ब्रह्मन् योगीश्वर, यद्यात्मैव जीवादिभावं भजते तर्हि कथमसौ पापयोनिषु मृगपक्ष्यादिषु जायते । अथ मोहरागद्वेषादिदोषदुष्टत्वा(१)त्तत्र जन्मेत्युच्यते । तच्च न यस्मादीश्वरः स्वतन्त्रः कथमनिष्टैर्मोहरागादिभावैः सम्प्रयुज्यते ॥ १२९ ॥

( मिता० ) किञ्च—

करणैरिति । तथेदमप्यत्र दूषणम् । मनःप्रभृतिज्ञानोपायैः सहितस्यापि तस्यात्मनः पूर्वज्ञानं जन्मान्तरानुभूतविषयं कस्मान्नोत्पद्यते । तथा सर्वप्राणिगतां वेदनां सुखदुःखादिरूपां स्वयं स(२)र्वगोऽपि सर्वदेहगतोऽपि कस्मान्न वेत्ति । तस्मदात्मैवेश्वरो जीवादिभावं भजत इत्ययुक्तम् ॥ १३० ॥

( वी० मि० ) आद्यं पूर्वपक्षमुत्तरयति—

अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः ॥
दोषैः प्रयाति जीवोऽयं (३)भवं योनिशतेषु च ॥ १३१ ॥
अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम् ॥
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ १३२ ॥

निरवच्छिन्न ईश्वरोऽपि अविद्यावच्छिन्नोऽयं जीवो मनोवचनकायक्रियाप्रभवैर्मोहरागादिभिर्दोषैर्योनिषु भवं तदनन्तरं चाऽन्त्यत्वं चाण्डालत्वं पक्षित्वं स्थावरत्वं च प्रयाति । चकारेणाऽनन्तानां देवादिकीटादिभावानां समुच्चयः । यथाऽन्त्यत्वादयः शरीरेषु शरीरिणां भावा अनन्तास्तथा देहिनां सर्वयोनिष्विह संसारे तत्तदविद्यावच्छिन्नानि रूपाण्यनन्तानि परमात्मन एव । यथैकस्यैवाऽऽत्मनश्चाण्डालादित्वं कालभेदेन नैयायिकैरुपेयते (४)तथाऽस्माभिरपि परमात्मनि एकस्यैव तत्तदविद्यातदभावावच्छेदभेदेन जीवत्वमीश्वरत्वं चाऽभ्युपेयत इति न विरोध इति तात्पर्यार्थः । चकारेण योनिशतजन्मनां सः, अपिः सम्भावनायां, सम्भावितोऽयमर्थ इति तदर्थः, एवकारेण वेदान्तसिद्धत्वात् । उक्तार्थेऽवधारणमभिप्रैति ॥ १३१—१३२ ॥

---

( १ ) तत्तज्जन्मेत्युच्यते ङ । ( २ ) सर्वज्ञोपि ङ ।
( ३ ) भवयोनि०-इति मु० पु० पाठः । ( ४ ) नैयायिकैरुच्यते-इति ख० पु० पाठः ।

( मिता० ) तत्र पूर्वचोद्यस्योत्तरमाह—

अन्त्येति । यद्यपीश्वरः स्वरूपेण सत्यज्ञानानन्दलक्षणः तथाप्यविद्यासामावेशवशान्मोहरागादिभावैरभिभूयमानो नानाहीनयोनिजननसाधनं मानसादित्रिविधं कर्मनिचयमाचरति । तेन चान्त्यजादिहीनयोनितामापद्यते । अन्त्याश्चण्डालादयः,पक्षिणः काकादयः, स्थावरा वृक्षादयः तेषां भावोऽन्त्यपक्षिस्थावरता तां यथाक्रमेण मनोवाक्कायारब्धकर्मदोषैर्जन्मसहस्रेष्वयं जीवः प्राप्नोति ॥ १३१ ॥

( मिता० ) किञ्च—

अनन्ताश्चेति । शरीरिणां जीवानां शरीरेषु भावा अभिप्रायविशेषाः सत्त्वाद्युद्रेकतारतम्याद्यथाऽनन्तास्तथा तत्कार्याण्यपि कुब्जत्वमन्धत्वादीनि रूपाणि देहिनां सर्वयोनिषु भवन्ति ॥ १३२ ॥

( वी० मि० ) ननु कर्मजैर्दोषैर्यदि जन्मशतं स्थावरत्वं च तदा नानाजन्मप्रयोजककर्मसत्त्वे प्रथमं किंजातीयशरीरग्रह इत्यत्र विनिगमकाभाव इत्यत आह—

विपाकः कर्मणां प्रेत्य केषाञ्चिदिह जायते ॥

इह वाऽमुत्र चैके(१)षां भावस्तत्र प्रयोजनम् ॥ १३३ ॥

केषाञ्चित्कर्मणां प्रेत्य भवान्तरे विपाकः फलदानोन्मुखत्व, केषाञ्चित्पुत्रेष्ट्यादीनामिह जन्मनि विपाकः, केषाञ्चिद्दानादीनामिह कीर्त्यादिफलदानोन्मुखत्वम् , अमुत्र परलोके स्वर्गादिफलदानोन्मुखत्वं, विपाकेन तत्तत्कालनियतं कश्चित्फलफलकल्पकारणताको भावः कालविशेषादिः प्रयोजनं प्रयोजक इत्यर्थः । करणे ल्युट् । क्वचित्प्रयोजक इत्येव पाठः । तथा च स्थावरत्वोपभोग्यफलजनकीभूतस्य तादृशस्यैकदाऽसत्त्वादिति भावः । चकारः परस्परसमुच्चयार्थः; तेन विकल्पो व्यवच्छिन्नः ॥ १३३ ॥

( मिता० )ननु यदि कर्मजन्यानि कुब्जत्वादीनि तर्हि कर्मानन्तरमेव तैर्भवितव्यमित्याशङ्क्याह—

विपाक इति । केषांचिज्ज्योतिष्टोमादिकर्मणा विपाकः फलं प्रेत्य देहान्तरे भवति । केषांचित्कारीर्यादिकर्मणां वृष्ट्यादिफलमिहैव भवति । केषांचिच्चित्रादीनां फलं पश्वादिकमिह देहान्तरे वेत्यनियत-

( १ ) चैकेषा—इति मु० पु० पाठ ।

म् । न ह्यनन्तरमेव कर्मफलेन भवितव्यमिति शास्त्रार्थः । अत्र च कर्मणां शुभाशुभफलजनकत्वे सत्त्वादिभाव एव प्रयोजकभूतस्तदायत्तत्वात्फलतारतम्यस्य ॥ १३३ ॥

(वी० मि०) 'अन्त्यपक्षिस्थावरता'मित्याद्युक्तं विशिष्य प्रपञ्चयति—

परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ॥
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥ १३४ ॥
पुरुषोऽनृतवादी च पिशुनः परुषस्तथा ॥
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥ १३५ ॥
अदत्तादाननिरतः परदारोपसेवकः ॥
हिंसकश्चाऽविधानेन स्थावरेष्वभिजायते ॥ १३६ ॥
आत्मज्ञः शौचवान् दान्तस्तपस्वी विजितेन्द्रियः ॥
धर्मकृद्वेदविद्यावित्सात्त्विको देवयोनि(१)षु ॥ १३७ ॥
असत्कार्यरतोऽधीर आरम्भी विषयी च यः ॥
स राजसो मनुष्येषु मृतो जन्माऽधिगच्छति ॥ १३८ ॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ॥
प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्षु तामसः ॥ १३९ ॥
रजसा तमसा चैव समाविष्टो भ्रमन्निह ॥
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥ १४० ॥

मृत इति सर्वत्र वाक्येऽन्वीयते । तेन परद्रव्याण्यपहर्तुमभिध्यायन् परस्याऽनिष्टानि चिन्तयित्वा वितथेऽसत्येऽर्थे बाधशास्त्रयुक्ते सत्यत्वव्यवस्थापनार्थमभिनिवेशशीलो वा मृतो जन्मान्तरे अन्त्यासु अन्त्यपुंसा युक्तासु योनिषु चाण्डालयोनिषु जायत इत्यर्थः । तथाशब्देन चशब्देन च समुच्चयार्थकेन विशेषणविशेष्यभावनिरासः । एवमग्रेऽपि । अनृतमयथार्थं वचसा वादी तदभिधानशीलः, पिशुनः परदोषख्यापनशीलः, परुषः श्रोतुरुद्वे(२)जकवाक्यप्रयोक्ता, अनिबद्धं धर्मशास्त्राद्यनुक्तं स्वेच्छाकल्पितमर्थं कर्तव्यत्वेन प्रलपतीत्यनिबद्ध-

---

(१) देवयोनिताम्—इति मु० पु० पाठः । (२) श्रोतुरुद्वेगकरवाक्य०—इति ख० पु० पाठः ।

प्रलापी पुरुषो मनुष्यः मृतो मृगपक्षियोनिषु जायते । पुरुष इति सर्वान्वितम्, तेनाऽतिरिक्तस्य शुभाशुभकर्मणामदृष्टजनकत्वं वारितम्। पुंस्त्वं च न विवक्षितमुद्देश्यगतत्वादित्यवधेयम् । अदत्तस्य परद्रव्यादानेऽपहारे निरतः प्रसक्तः, परदारगामी, अविधानेन विध्यननुमतप्रकारेण प्राणिनां हिंसकः स्थावरेषु वृक्षलतादिष्वपि जायते । आत्मज्ञ आत्मतत्त्वज्ञानवान् विद्याभिजनादिमदशून्य इति यावत्, दान्तोऽकार्यनियत(१)मनाः, धिजितेन्द्रियः वशीकृतबहिरिन्द्रियः, धर्मकृत् वर्णाश्रमाचारानुष्ठाता, सात्त्विकः किञ्चित्सत्त्वगुणोद्रेकवान् देवयोनिषु जन्म प्राप्नोति । असति धर्मानर्जके कार्ये वाणिज्यकृष्यादौ रतोऽतएवाऽधीरो व्यग्रचित्तः, अत एव शताकार्यारम्भवान्, विषयी स्रक्चन्दनवनितासक्तः, राजसो रजोगुणोद्रेकवान् मनुष्येषु, निद्रालुः दिवापि निद्राशील, क्रूरकृत् वैरानुबन्धकृत्, नास्तिको धर्मनिन्दकः, याचकः अशनवसनसम्पत्तावपि याचनशीलः, प्रमादवान् कार्याकार्यविवेकहीनः, भिन्नवृत्तो वेदविरुद्धद्यूताद्याचारवान्, तामसः तमोगुणोद्रेकवान् तिर्यक्षु पशुयोनिषु भवेदुत्पद्यते । एवं रजसा तमसाऽन्येन सत्त्वेन च समाविष्टः पुरुष इह संसारे भ्रमन् तदनुरूपैर्भावैर्मोहादिभिरनिष्टैस्तत्तद्योनिजन्मप्रदैः संयुक्तः पुनरपि संसारं देहसम्बन्धं प्रतिपद्यते प्राप्नोति अत्युद्रिक्तसत्त्वान्मुच्यते । अन्यत्सुबोधम् ॥ १३४—१४० ॥

( मिता० ) मनोवाक्कायकर्मजैरन्त्यादि(२)योनीः प्राप्नोतीत्युक्तं तत्प्रपञ्चयितुमाह—

. परद्रव्याणीति । परधनानि कथमहमपहरेयमित्याभिमुख्येन ध्यायंस्तथाऽनिष्टानि ब्रह्महत्यादीनि हिंसात्मकानि करिष्यामीति चिन्तयन् वितथे असत्यभूते वस्तुनि अभिनिवेशः पुनःपुनः संकल्पस्तद्वांश्च श्वचण्डालाद्यन्त्ययोनिषु जायते ॥ १३४ ॥

( मिता० ) किञ्च—

पुरुष इति । यस्त्वनृतवदनशीलः पिशुनः कर्णेजपः पुरुषः परोद्वेगकरभाषी अनिबद्धप्रलापी प्रकृतासङ्गतार्थवादी च बुद्धिपूर्वाबुद्धिपू (३)र्वावृत्त्यादितारतम्यादीनोत्कृष्टेषु मृगपक्षिषु जायते ॥ १३५ ॥

( १ ) अकार्ये नियमना—इति ख० पु० पाठ ।
( २ ) योनितां प्राप्नोतीति ङ । ( ३ ) पूर्वादि ।

( मिता० ) किञ्च—

अदत्तेति । अदत्तादाननिरतः अदत्तपरधनापहारप्रसक्तः परदारप्रसक्तश्च अविहितमार्गेण प्राणिनां घातकश्च दोषगुरुलघुभावतारतम्यात्तरुलताप्रतानादिस्थावरेषु जायते ॥ १३६ ॥

( मिता० ) सत्त्वादिगुणपरिपाकमाह—

आत्मज्ञ इति । आत्मज्ञो विद्याधनाभिजनाद्यभिमानरहितः शौचयुक्तः दान्त उपशमान्वितः तपस्वी कृच्छ्रादितपोयुक्तः तथेन्द्रियार्थेष्वप्रसक्तः नित्यनैमित्तिकधर्मानुष्ठाननिरतः वेदार्थवेदी च यः सात्विकः स च सत्त्वोद्रेकतारतम्य(१)वशादुत्कृष्टोत्कृष्टतरसुरयोनितां प्राप्नोति ॥ १३७ ॥

( मिता० ) किञ्च—

असदिति । असत्कार्येषु तूर्यवादित्रनृत्यादिष्वभिरतो यस्तथा अधीरो व्यग्रचित्तः आरम्भी सदा कार्याकुलो विषयेष्वतिप्रसक्तश्च स रजोगुणयुक्तः तद्गुणतारतम्याद्धीनोत्कृष्टमनुष्यजातिषु मरणानन्तरमुत्पत्तिं प्राप्नोति ॥ १३८ ॥

(मिता०)निद्रालुरिति।तथा च यः पुनर्निद्राशीलः प्राणिपीडाकरो लोभयुक्तश्च तथा नास्तिको धर्मादेर्निन्दकः याचनशीलः प्रमादवान् कार्याकार्यविवेकशून्यः विरुद्धाचारश्च असौ तमोगुणयुक्तस्तत्तारतम्याद्धीनहीनतरपश्वादियोनिषु जायते ॥ १३९ ॥

( मिता० ) पूर्वोक्तमुपसंहरति—

रजसेति । एवमविद्याविद्धोऽयमात्मा रजस्तमोभ्यां सम्यगाविष्ट इह संसारे पर्यटन् नानाविधदुःखप्रदैर्भावैरभिभूतः पुनः पुनः संसारं देहग्रहणं प्राप्नोति । इतीश्वरः स कथं भावैरनिष्टैः संप्रयुज्यत इत्यस्य चोद्यस्यानवकाशः ॥ १४० ॥

( वी० मि० ) द्वितीयं पूर्वपक्षमुत्तरयति—

मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ॥
तथाऽविपक्वकरण आत्मज्ञानस्य न क्षमः ॥ १४१ ॥

एक(२) एवादर्शो व्यापको यदवच्छेदेन मलिनस्तदवच्छेदेन रूपालोकस्य प्रतिबिम्बत्वसाक्षात्कारस्य न क्षमः, अन्यावच्छेदेन च

---

(१) तारतम्यादुत्कृष्ट क. । (२) एक एवेत्यारभ्य नं चम इत्यन्तं नास्ति क० पुस्तके।

तत्क्षम एव । एवं सर्वजन्मानुभूत आत्माऽविपक्वकरणो यद्विषयाव-च्छेदेन स्वनावृतचैतन्यस्तस्यात्मनः प्राग्जन्मन्यनुभूतस्य ज्ञानेन क्षम एतज्जन्मानुभूतविषयावच्छेदेन स्वनावृतचैतन्यत्वाज्ज्ञाने क्षम एवेत्यर्थः ॥ १४१ ॥

( मिता० ) यदपि करणैरन्वितस्यापीति द्वितीयं चोद्यं त-स्योत्तरमाह—

मलिन इति । यद्यप्यात्मा अन्तःकरणा(१)दिज्ञानसाधनसम्पन्न स्तथापि जन्मान्तरानुभूतार्थावबोधे न समर्थः, अविपक्वकरणो रा-गादिमलाक्रान्तचित्तो यस्मात् । यथा दर्पणो मलच्छन्नो रूपज्ञानोत्पा-दनसमर्थो न भवति ॥ १४१ ॥

( वी० मि० ) ननु आदर्शे मलिनत्वात्प्रतिबिम्बस्याऽसत्त्वाद नुपलम्भो युज्यते । प्राग्जन्मानुभूतस्य विषयस्याऽनुपलम्भस्तु न नित्यविभुत्वात्मनि तत्सम्बन्धस्य दुरपन्हवत्वादावरणस्याशक्यत्वा दत आह-

कट्वेर्वारौ यथाऽपक्के मधुरः सन्रसोऽपि न ॥
प्राप्यते ह्यात्मनि तथा नापक्वकरणे ज्ञता ॥ १४२ ॥

अपक्के कट्वेर्वारौ तिक्तकर्कट्यामग्रे प्रत्यक्षीक्रियमाणत्वात्सन्नपि मधुरो रसो न प्राप्यते यथा, तथाऽपक्वकरणेऽशुद्धाशये जीवात्मनि चैतन्यस्वभावत्वाद्विद्यमानेऽपि ज्ञता विषयप्रकाशता न प्राप्यते। अत्र दृष्टान्ते स्थूलरूपेण सम्बन्धत्वमप्राप्तिः । दार्ष्टान्तिके तु प्राग्ज-न्मानुभूतविषयावच्छेदेनैव तज्जन्मीयशरीरावच्छिन्नजीवप्रकाशकता-सम्बन्धविरहः । भवति गृहावच्छिन्नाकाशस्य बहिर्वर्तिपुरुषं प्रत्या-वृतत्वमिति भावः । तदिदमाकाशमेकमित्यादिना वक्ष्यति । हिश-ब्दोऽवधारणे ॥ १४२ ॥

( मिता० ) ननु प्राग्भवीयज्ञानस्याप्यात्मप्रकाशत्वात् तस्य च स्वतःसिद्धत्वान्नानुपलम्भो युक्त इत्याशङ्क्याह-

कट्वेरिति । अपक्के कट्वेर्वारौ तिक्तकर्कटिकायां विद्यमानोऽपि मधुरो रसो यथा नोपलभ्यते तथात्मन्यपक्वकरणे विद्यमानापि ज्ञता ज्ञातृता प्राग्भवीयवस्तुगोचरता न प्राप्यते ॥ १४२ ॥

---

( १ ) अन्तःकरणादेर्ज्ञाने ख० ।

( वी०मि० ) तृतीयपूर्वपक्षमुत्तरयति--

सर्वाश्रयां निजे देहे देही विन्दति वेदनाम् ॥

योगी मुक्तश्च सर्वासां यो(१)न वाऽऽप्नोति वेदनाम्॥१४३॥

सर्वास्यात्मनः स्वाभिन्नत्वात् स्वनिष्ठामिव वेदनां सर्वाश्रयां वेदनां देही देहाभिमानी निजे देहे विन्दति प्राप्नोति। यो मुक्तो मुक्तदेहाभिमानो योगी स सर्वासामेव वेदनानां वेदिता भवतीति कस्मान्नवेत्तीत्याशङ्कितवतो नैवेत्युत्तरं पर्यवसितम्। अथ परनिष्ठां वेदनां देही मुक्तो वा किमाप्नोत्येव नेत्याह 'न वाप्नोति वेदना'मिति विद्योपाध्यवच्छेदेन वेदनाजनकमदृष्टं वर्तते। तदवच्छेदेन वेदनासम्बन्ध इति नान्यनिष्ठा वेदनाऽन्यत्र सम्बध्यत इत्यर्थः॥ १४३॥

( मिता० ) 'वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदना'मिति यदुक्तं तत्रोत्तरमाह-

सर्वाश्रयामिति। यः पुनर्देही देहाभिमानयुक्तः स सर्वाश्रयामाध्यात्मिकादि(२)रूपां वेदनां स्वकर्मोपार्जित एव देहे प्राप्नोति, न देहान्तरगतां, भोगायतनारम्भादृष्टवैलक्षण्यादेव। यस्तु योगी मुक्तो मुक्ताहंकारादिः सकलक्षेत्रगतानां सुखदुःखादिसंविदां वेदिता भवति परिपक्वकरणत्वात्॥ १४३॥

( वी०मि० ) नन्वात्मैक्यं प्रागुक्तं न घटते, 'अस्मान्मनुष्यादयःमरवो भिन्न' इत्यादिभेदप्रत्ययस्य सर्वसिद्धत्वादित्यत आह—

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ॥

तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥ १४४ ॥

एकमेवाकाशं यथा घटाकाशाद् गृहाकाशो भिन्न इत्येवं पृथग्भावे भिन्नत्वेनाऽनुभवविषयो भवति, यथा वा जलाधारेषु नानापात्रेषु अंशुमान् सूर्यः पृथग्भवेत्तथैक एवात्माऽनेकत्वेनाऽनुभवविषयो भवतीत्यर्थः। हिशब्दाभ्यां दृष्टान्तयोः सर्वसिद्धत्वेनाऽवधारणमभिप्रैति। तथा च सर्वजीवसाधारणाविद्यारूपदोषावशादयं भ्रम एवेति भावः॥

( मिता० ) नन्वेकस्मिन्नात्मनि सुरनरादिदेहेषु भेदप्रत्ययो न घटत इत्याशङ्क्याह-

आकाशमिति। यथैकमेव गगनं कूपकुम्भाद्युपाधिभेदभिन्नं नाने-

(१) योगमाप्नोति-इति मु० पु० पाठः। (२) त्मिकादिवद्रूपां ख.।

-चानुभूयते, यथा वा मानुरेकोऽपि भिन्नेषु जलभाजनेषु करकमणि कमण्डल्वादिषु नानेवानुभूयते, तथैकोऽप्यात्मा अन्तःकरणोपाधिभेदेन नाना प्रतीयते । द्वितीयदृष्टान्तोपादानमात्मभेदस्यापारमार्थिकत्वद्योतनार्थम् ॥ १४४ ॥

( वी०मि० ) महाभूतादीनां वर्णादीनां चराचरस्य च सृष्टिः प्रागुक्ता, तत्र प्रथमं चरमार्थं व्यक्तीकरोति—

ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः ॥
इमे लोका एष चात्मैतस्माच्च(१) सचराचरम् ॥ १४५ ॥

ब्रह्म व्यापकचिदानन्दरूपं स्वतःसिद्धं सर्वाधारभूतम् । अस्मादेव ब्रह्मणो हेतुभूतात् खादयः पञ्च धातवो यथाक्रमं जायन्ते । त इमे पञ्च धातवोऽन्तरिक्षवाय्वग्निवरुणभूलोका उच्यन्ते । एषु च जातेष्वात्मा ब्राह्मणादिशरीरावच्छिन्नो भवति । एतस्मादनन्तरं चराचरसहितं विश्वं जायत इत्यर्थः । चकारेणाद्येनाकाशादीनां साहित्यमभिप्रैति । द्वितीयचकारेण च सहितानां हेतुत्वमाह । तृतीयचकारेण शरीरिणां चराचरसृष्टेः साहित्यम् ॥ १४५ ॥

( मिता० ) 'पञ्चधातूनस्वयं षष्ठ आदत्ते युगपत्प्रभु'रित्याद्युक्तमर्थमुपसंहरन्नाह—

ब्रह्मेति । ब्रह्म आत्मा च गगनमनिलो वायुः तेजोऽग्निः जलं प्रसिद्धं भूश्चेत्येते वातादिधातव एव शरीरं व्याप्य धारयन्तीति धातवोऽभिधीयन्ते । तत्र खादयः पञ्च धातवः लोक्यन्ते दृश्यन्ते इति यावत् । एष चिद्धातुरात्मा एतस्माज्जडाजडसमुदायात्स्थावरजङ्गमात्मकं सर्वं जगदुत्पद्यते ॥ १४५ ॥

( वी०मि० ) परमेश्वरेण कर्तुं शक्यत्वात् महाभूतसापेक्षस्यैव तस्य सृष्टिसमर्थत्वे महाभूतसृष्टिरेवाऽनुपपन्ना स्यादित्यत आह—

मृद्दण्डचक्रसंयोगात्कुम्भकारो यथा घटम् ॥
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १४६ ॥
हेममात्रमुपादाय रूपं वा हेमकारकः ॥
निजलालासमायोगात्कोशं वा कोशकारकः ॥ १४७ ॥

---

( १ ) एष चात्मा तस्माच्च—इति मु० पु० पाठः ।

कारणान्येवमादाय तासु तास्विह योनिषु ॥
सृजत्यात्मानमात्मा च सम्भूय करणानि च ॥ १४८ ॥

मृदादीनां संयोगात्परस्परप्रत्यासत्तेर्घटं यथा कुम्भकारः करोति यथा वा तृणादिभिर्गृहं गृहकारकः यथा वा हेमकारः केवलं हेम केवलं रूप्यं वा उपादाय कटककुण्डलादि यथा वा कोशकारकः कीटविशेषो निजलालानां परस्परमेलनात् कोशं करोति, एवं सम्भूय कारणानि मिलित्वा कार्यजनकानि करणानि महाभूतान्यादाय इह संसारे तासु तासु तिर्यङ्मनुष्यादिसम्बन्धिषु योनिषु परमात्मा जीवात्मानं सृजतीत्यर्थः। अयमाशयः—न हि कर्ता समवायिकारणतया अपेक्ष्यते। महाभूतसृष्टावपि तत्समवायिपरम्परा अपेक्षणीयाः सृज्यन्त एव। न चैवमनवस्था, परमाणुषु नित्येषु स्वस्मिन्वा विश्रामात्। न च साक्षात्परमाणूनां स्वस्य वा शरीरोपादानत्वं कुतो नेति वाच्यं, स्वभावस्यापर्यनुयोज्यत्वात्। अन्यथा कोशकारः साक्षादेव कोशस्योपादानमस्तु किं लालासमायोजनेनेति किं न पश्यतीति दण्डचक्रोपादानं कारणत्वमात्रेण दृष्टान्ततया। मात्रपदेन समवायिनोऽवैलक्षण्येऽपि निमित्तविशेषाद्विशेषकार्याणामभिप्रैति। आद्यचकारेण संयोगाद्यसमवायिकारणसमुच्चयः। अन्त्यचकारेण अदृष्टादिनिमित्तकारणसङ्ग्रहः। एवकारेण आदायेत्यत्रान्वितेन तन्निरपेक्षसृष्टिव्यवच्छेदः ॥ १४६-१४८ ॥

( मिता० ) कथमसावात्मा जगत्सृजतीत्याह—

मृद्दण्डेत्यादि। यथा हि कुलालो मृच्चक्रचीवरादिकं कारणजातमुपादाय करकशरावादिकं नानाविधकार्यजातं रचयति। यथा वा वर्धकिस्तृणमृत्काष्ठैः परस्परसापेक्षैः एकं गृहाख्यं कार्यं करोति। यथा वा हेमकारकः केवलं हेमोपादाय हेमानुगतमेव कटकमुकुटकुण्डलादिकार्यमुत्पादयति। यथा वा कोशकारकः कीटविशेषो निजलालयारब्धमात्मबन्धनं कोशाख्यमारभते तथात्मापि पृथिव्यादीनि साधनानि परस्परसापेक्षाणि तथा करणान्यपि श्रोत्रादीन्युपादाय अस्मिन्संसारे तासु तासु सुरादियोनिषु स्वयमेवात्मानं निजकर्मबन्धबद्धं शरीरितया सृजति ॥ १४६-१४८ ॥

( वी०मि० ) नन्वात्मानमित्ययुक्तं, भूतमेव चेतनं परमात्मा सृ-

जतीत्यत्र बाधकाभावात् । अत आत्मनि देहिनि मानमाह—

महाभूतानि सत्यानि यथात्माऽपि तथैव हि ॥
कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति ॥ १४९ ॥

वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम् ॥
अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः ॥ १५० ॥

जातिरूपवयोवृत्तविद्यादिभिरहङ्कृतः ॥
सक्तः श(१)ब्दादिविषये कर्मणा मनसा गिरा ॥ १५१ ॥

उक्तयुक्त्या महाभूतानि यथा सत्यानि तथाऽऽत्माऽपि सत्यः । तत्र हेतु-अन्यथा आत्मनोऽसत्यत्वे इन्द्रियाणां चेतनत्वे एकेन नेत्रेण दृष्टमन्येन नेत्रेण त्वगादिना कः पश्यति, न चेदुभयदर्शी कश्चिदभ्युपेयः । तथा वामेन चक्षुषा यदद्राक्षं तद्दक्षिणेन चक्षुषा त्वचा वा पश्यामीति प्रतिसन्धानं नोपपद्येतेत्यर्थः । हिरवधारणे । एवकारेण भूतचैतन्यव्यवच्छेदः । अपिकारो दृष्टान्तदार्ष्टान्तिकयोर्हेतुत्वं समुच्चिनोति । वाचमिति । यदि शरीरमेव चेतनं तदा संश्रुत्य वाचं पुनः पुनः कः शृणोति । आहारपरिणामभेदेन शरीरस्य भिन्नत्वात् । यदि नोभयश्रावी कश्चिदेकः तदा यदश्रौषं पुरा तदधुना शृणोमीति प्रतिसन्धानं न स्यादित्यर्थः । अतीतेति । यद्यात्मा नास्ति तदाऽऽहारपरिणामभेदभिन्नस्य शरीरस्य अनुभवानाश्रयत्वेन स्मरणं नोपपद्येत । अतीतपदेन विषयस्य चैतन्याभावः सूचितः । को वेति । स्वप्नज्ञानस्य कारकः समवायिकारणकः इन्द्रियाणां विरतव्यापारत्वादित्यर्थः । जातीति । जात्यादिभिरहङ्कृतः को वा यद्यात्मा नास्ति तदा मनुष्योऽहं गौरो युवा याज्ञिकोऽधीतवेदो देवदत्तपुत्र इत्यादिप्रतीत्याश्रयः कः स्यात् । न हि शरीरमेव तथा, मृतशरीरेऽपि तथात्वप्रसङ्गात् । नापि प्राणः, तथा तस्याशु विनाशित्वेन पूर्वज्ञातार्थोपनीतमानासम्भवात् । न ह्यन्येन ज्ञातमन्यस्योपनीतं भासते सामानाधिकरण्येनैव उपनयनस्य हेतुत्वादित्यर्थः । सक्त इति । यदि चिरस्थायी नात्माऽस्ति तदा कर्मणा मनसा वाचा वा ज-

(१) शब्दादिविषयोद्योग क०—इति मु० पु० पाठः ।

न्मान्तरे शब्दादिविषयोपभोगहेतुमुद्योगधर्मारम्भं को वा करोतीत्यर्थः ॥ १४९—१५१ ॥

( मिता० ) किं पुनर्वैषयिकज्ञानेन्द्रियव्यतिरिक्तात्मसद्भावे प्रमाणमित्याशङ्क्याह—

महाभूतानीति । यथा हि पृथिव्यादिमहाभूतानि सत्यानि प्रमाणगम्यत्वात् तथात्मापि सत्यः । अन्यथा यदि बुद्धीन्द्रियव्यतिरिक्तो ज्ञाता ध्रुवो न स्यात्तर्हि एकेन चक्षुरिन्द्रियेण दृष्टं वस्तु अन्येन स्पर्शनेन्द्रियेण को विजानाति यमहमद्राक्षं तमहं स्पृशामीति । तथा कस्यचित्पुरुषस्य वाचं पूर्वं श्रुत्वा पुनः श्रूयमाणां वाचं तस्य वागियमिति कः प्रत्यभिजानाति । तस्मात् ज्ञानेन्द्रियातिरिक्तो ज्ञाता ध्रुव इति सिद्धम् ॥

( मिता० ) किञ्च—

अतीतेत्यादि । यद्यात्मा ध्रुवो न स्यात् तर्ह्यनुभूतार्थगोचरा स्मृतिः पूर्वानुभवभावितसंस्कारोद्बोधनिबन्धना कस्य भवेत् । न ह्यन्येन दृष्टे वस्तुन्यन्यस्य स्मृतिरुपपद्यते । तथा कः स्वप्नज्ञानस्य कारकः । न हीन्द्रियाणामुपरतव्यापाराणां तत्कारकत्वम् । तथाहमेवाभिजनत्वादिसम्पन्न इत्येवंविधोऽनुसन्धाप्रत्ययः कस्य भवति स्थिरात्मव्यतिरिक्तस्य । तथा शब्दस्पर्शादिविषयोपभोगसिद्ध्यर्थमुद्योगं मनोवाक्कायैः कः कुर्यात् । तस्मादपि बुद्धीन्द्रियव्यतिरिक्त आत्मा स्थितः ॥ १४९-१५१ ॥

(वी०मि० ) अथ प्रकृतमात्मोपासनं तद्विरोधिसन्दिग्धमतित्वादिनिरासेन सम्पादनीयमित्यभिप्रेत्याह—

स सन्दिग्धमतिः कर्मफलमस्ति न वेति वा ॥
विप्लुतः सिद्धमात्मानमसिद्धोऽपि हि मन्यते ॥ १५२ ॥
मम दाराः सुतामात्या अहमेषामिति स्थितिः ॥
हिताहितेषु भावेषु विपरीतमतिः सदा ॥ १५३ ॥
ज्ञेये च(१) प्रकृतौ चैव विकारे वाऽविशेषवान् ॥
अनाशकानलापातजलप्रपतनोद्यमी ॥ १५४ ॥

---

( १ ) ज्ञेयज्ञे—इति मु० पु० पाठः ।

एवंवृत्तोऽविनीतात्मा वितथाभिनिवेशवान् ॥
कर्मणा द्वेषमोहाभ्यामिच्छया चैव बध्यते ॥ १५५ ॥

कर्मणो यज्ञादेः फलमस्ति नास्ति वेति सन्दिग्धमतिरत एव विप्लुतो धर्मभ्रष्टोऽत एवाऽसिद्धोऽकृतार्थः सन्नपि स आत्मा सिद्धं कृतार्थमात्मानं मन्यते । तत्र हेतुः—मम दारादयः सन्ति, अहं चैषां प्रभुरित्येव वस्तुस्थितिरित्यापाततो हिताऽहितेष्वपरिणामाहितेषु सदा विपरीतमतिः इदमेव परमं प्रयोजनमिति । एवं ज्ञेये आत्मनि प्रकृतौ प्रधाने विकारे अहङ्कारमहाभूतादौ अविशेषवान् विवेकानभिज्ञः । तथा अनशनेऽनलप्रवेशे जलप्रपतने वा उद्यमी एवंवृत्तः एतादृशविरुद्धव्यापारोत्तरत्वात् अविनीतात्मा असंयतचित्तः वितथे परलोकासाधनत्वेन निष्फलमये नृत्यगीतादावासक्तेऽभिनिवेश आसक्तिस्तद्वान् । कर्मणाऽनाशकायितथाभिनिवेशादिना द्वेषेण नाशकाद्याचरणमूलभूतेन मोहेन 'मम दाराः' इत्यादिना इच्छया वितथाभिनिवेशमूलभूतया बध्यते संसारे याति एतत्सर्वं मुमुक्षुणा वर्जनीयमिति तात्पर्यम् । द्वितीयेऽत्र विपरीतमतेर्दोषत्वं दर्शितम् । 'ज्ञेये चे'त्यादिचकारत्रयेण नैयायिकवेदान्तिपातञ्जलसिद्धान्ताभाविप्रोक्तिना प्रदर्शनम् । चरमकारेण योऽपि हेतुविषयकरागद्वेषसमुच्चयः । आद्यस्यैवकारस्य 'इत्येव स्थिति'रिति व्युत्क्रमेणाऽन्वयः । चरम एवकारो बध्यत इत्यत्रान्वितो मोक्षं व्यवच्छिनत्ति ॥ १५२–१५५ ॥

( मिता० ) उपासनविशेषविरुद्ध(१)र्थं संसारस्य रूपं विवृण्वन्नाह—

स इति । योऽसौ पूर्वोक्त आत्मा विप्लुतोऽहङ्कारदूषितः स सकलकर्मसु फलमस्ति न वेति सन्दिग्धमतिर्भवति । तथाऽसिद्धोऽप्यकृतार्थोऽपि सिद्धमेव कृतार्थमात्मानं मन्यते ॥ १५२ ॥

( मिता० ) किञ्च—

ममेति । तस्य विप्लुतेर्मम कलत्रपुत्रप्रेष्यादयोऽहमेषामित्यतीव ममताकुलस्थितिर्भवति । तथा हिताहितकरे कार्यप्रकरे स विप्लुतमतिर्विपरीतमतिः सदा भवेत् ॥ १५३ ॥

( मिता० ) किञ्च—

ज्ञेयज्ञे इत्यादि । ज्ञेयं जानातीति ज्ञेयज्ञस्तस्मिन्नात्मनि प्रकृतौ

(१) सिध्यर्थं क ।

चात्मनो गुणसाम्यावस्थायां विकारे चाहङ्कारादावविशेषवान् विवेकानभिज्ञो भवति । तथानशनहुताशनाम्बुप्रवेशविषाशनादिषु विप्लववशात्कृतप्रयत्नो भवेत् । एवं नानाप्रकाराकार्यप्रवृत्तोऽविनीतात्माऽसंयतात्मा असत्कार्याभिनिवेशयुक्तः सन् तत्कृतकर्मजातेन रागद्वेषाभ्यां मोहेन च बध्यते शरीरग्रहणद्वारेण ॥ १५४-१५५ ॥

( वी०मि० ) एतत्सर्वविरोधिन उपायमाह—

आचार्योपासनं वेदशास्त्रार्थेषु विवेकिता ॥
तत्कर्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः ॥ १५६ ॥
स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम् ॥
त्यागः परिग्रहाणां च जीर्णकाषायधारणम् ॥ १५७ ॥
विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनम् ॥
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥ १५८ ॥
नीरजस्तमता सत्त्वशुद्धिर्निःस्पृहता शमः ॥
एतैरुपायैः संशुद्धः (१)स हि योगमृती भवेत् ॥ १५९ ॥

आचार्यस्याऽध्ययनार्थमुपासनं, तत्प्रयुक्ता च वेदार्थेषु वेदान्तादिशास्त्रेषु च विवेकिता वेदशास्त्रेषु च विवेकिता, वेदशास्त्रोक्तं च प्राणायामादीनामनुष्ठानं, सद्भिर्योगाभ्यासादिचतुरैः सङ्गः, शुभाः परानुद्वेजिका गिरः, स्त्रिया दर्शनस्पर्शनपरित्यागः, सर्वप्राणिनामात्मतुल्यतया दर्शनं, परिग्रहाणां च दारपरिजनानां त्यागं मत्वाऽभिनिवेशत्यागहेतुभूतो विवेकः, पुरातनं गैरिकरक्तवस्त्रधारणं, नृत्यादिषु विषयेषु चक्षुरादेर्निवारणं, तन्द्रा निद्रानुकारिणी प्रमीला, आलस्यमात्मध्यानादावनुत्साहः, तयोर्विवर्जनं, शरीरस्याऽस्थिरतामलमूत्रादिपूर्णत्वेन परिसंख्यानं विवेचनं, स्वर्गाद्यर्थप्रवृत्तिष्वघदर्शनं जन्ममरणप्रबन्धरूपदोषदर्शनं, नीरजस्तमता क्रोधमोहहेतुस्वपरधीशून्यत्वं, सत्त्वस्य चित्तस्य प्राणायामादिभिः शुद्धिरकार्यवैमुख्यं, निःस्पृहता विषयाणामनुपादेयत्वबुद्धिः, अनया प्रागुक्तया बन्धहेतुताया निरासः, शम इन्द्रियसन्निकृष्टेऽपि विषयेऽनासङ्गः । एतैरुक्तैः प्रागुक्तममतादिविरोधिभिरुपायैः सम्यक् शुद्धो निःशेषतो-

( १ ) सत्वयोग्य०—इति मु० पु० पाठः ।

ऽपसारितममतादिः सन् स जीवात्मा योगी अध्यात्मनिरतोऽमृतो मोक्षमाग् भवति । चकारेण सुतादीनां समुच्चयः ॥ १५६-१५९ ॥

(मिता०) कथं पुनस्तस्य विस्रम्भो भवतीत्यत आह—

आचार्येत्यादि । विद्यार्थमाचार्यसेवा । वेदान्तार्थेषु पातञ्जलादियोगशास्त्रार्थेषु च विवेकित्वम् । तत्प्रतिपादितध्यानकर्मणामनुष्ठानम् । सत्पुरुषसङ्गः । प्रियहितवचनत्वम् । ललनालोकनालम्भयोः परित्यागः । सर्वभूतेष्वात्मवद्दर्शनं समत्वदर्शनम् । परिग्रहाणां च पुत्रक्षेत्रकलत्रादीनां त्यागः । जीर्णकाषायधारणम् । तथा शब्दस्पर्शादिविषयेषु श्रोत्रादीन्द्रियाणां प्रवृत्तिनिरोधः । तन्द्रा निद्रानुकारिणी, आलस्यमनुत्साहः, तयोर्विशेषेण त्यागः । शरीरस्य परिसंख्यानमस्थिरत्वाशुचित्वादिदोषानुसन्धानम् । तथा सकलगमनादिषु सूक्ष्मप्राणिवधादिदोषपरामर्शः । तथा रजस्तमोविधुरता । प्राणायामादिभिर्भावशुद्धिः । निःस्पृहता विषयेष्वनभिलाषः । शमो बाह्यान्तःकरणसंयमः । एतैराचार्योपासनादिभिरुपायैः सम्यक् शुद्धः केवलसत्त्वयुक्तो ब्रह्मोपासनेनाऽमृती भवेत् मुक्तो भवति ॥ १५६-१५९ ॥

(वी०मि०) न केवल चित्तशुद्धिममतात्यागादिमात्रेणाऽमृतं निष्पद्यते, किन्तु तत्त्वज्ञानादिकमप्यपेक्ष्यत इत्याह—

तत्त्वस्मृतेरुपस्थानात्सत्त्वयोगात्परिक्षयात् ॥
कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्तते ॥ १६० ॥

तत्त्वस्मृतेरात्मतत्त्वश्रवणात्, उपस्थानात् आत्ममननरूपध्यानरूपात्, सत्त्वगुणोद्रेकजनितायोगाद्वात्मदर्शनात्, कर्मणां पापपुण्यानां परिक्षयात् सर्वतामावेन क्षयात्, सन्निकर्षाद्विद्याकूपापरकायोगमात् सतां पुण्यवतां योगः परमात्मालयः प्रवर्तते जायते । चकारेण ज्ञानस्य कर्मसमुच्चयो दर्शितः । तदुक्तं योगयाज्ञवल्क्ये—

ज्ञानकर्मसमायोगात्परमाप्नोति पूरुषम् ।

इति दिक् ॥ १६० ॥

(मिता०) कथममृतत्वप्राप्तिरित्यत आह—

तत्त्वेति । आत्मादयतत्त्वस्मृतेरात्मनि निश्चलतयोपस्थानात् सत्त्वशुद्धियोगात्केवलसत्त्वगुणयोगात्कर्मबीजानां परिक्षयात् सत्पुरुषाणां च सम्बन्धात् आत्मयोगः प्रवर्तते ॥ १६० ॥

( वी० मि० ) ननु वैराग्यान्ममतादिपरित्यागेऽपि ध्यानाभ्यासं कुर्वतो देवात्मदर्शनोऽनुत्पन्न एव । मृतस्य न मोक्षो नाप्यैहिकसुखमित्युभयविधसंशयात्कथमत्यायाससाध्ये योगाभ्यासे प्रेक्षावतां प्रवृत्तिरत आह—

शरीरसंक्षये यस्य मनः सत्त्वस्थमीश्वरे(१) ॥
अविप्लुतमतेः सम्यक् स जातिस्मरतामियात् ॥ १६१ ॥

यस्याऽविप्लुतमतेरविपर्यस्तज्ञानस्य तत्त्वज्ञानिनो मनः सत्त्वस्थं कामक्रोधादिरहितं सम्यगेकाग्रध्यानेनेश्वरे आत्मनि स्थिरं सोऽन्तरा शरीरसंक्षये मरणे जाते जन्मान्तरे जातस्य जातिस्मरतामियात् । तथा च जन्मान्तरानुभूतकृमिकीटादिनानागर्भवाससमुद्भूतदुःखस्मरणाज्जातवैराग्यो मोक्षार्थं यतते । ततः क्रमेण साक्षात्कारे सति स मुच्यते इति भावः । तदुक्तं भगवद्गीतायाम्—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥

इत्यादि ॥ १६१ ॥

( मिता० ) किंच—

शरीरेति । यस्य पुनर्योगिनोऽविप्लुतमतेः शरीरसंक्षयसमये मनः सत्त्वयुक्तं सम्यगेकाग्रतयेश्वरं प्रति व्याप्रियते स यद्युपासनाप्रयोगाप्रवीणतयात्मानं नाधिगच्छति तर्हि विशिष्टसंस्कारपाठवशेन जात्यन्तरानुभूतकृमिकीटादिनानागर्भवासादिसमुद्भूतदुःखस्मरत्वं प्राप्नुयात् । तत्स्मरणेन च जातोद्वेगस्तच्छिच्छेदकारिणि मोक्षे प्रवर्तते ॥ १६१ ॥

( वी० मि० ) न चाऽनारब्धफलानां कर्मणां तत्त्वसाक्षात्कारेण नाशोप्यः । अथ फलानां तेषां फलैकनाश्यतया बहुजन्मसंभृ(२)तानां बहुजन्मोपभोग्यानां च तेषां विद्यमानत्वे कथमुत्पन्नसाक्षात्कारस्याऽपि मोक्षः स्यादत आह—

यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम् ॥
नानारूपाणि कुर्वाणस्तथात्मा कर्मजास्तनूः ॥ १६२ ॥

यथा भरतो नटः रामरावणादीनां नानारूपाणि कुर्वाणोऽनुकु-

(१) सत्त्वस्थमीश्वरम्—इति मु० पु० पाठः । (२) सञ्चितानां—इति ख० पु० पाठः ।

र्णाणः सितादिभिर्वर्णैरात्मनस्तनुं वर्णयति रामाद्यनेकरूपां रचयति तथात्मा योगसिद्धिवशाद्विदित्वाऽखिलकर्मणां भोगार्थं तत्तत्कर्मजास्तनूर्नरशूकरादितनूर्युगपदेव वर्णयति रचयति । हिशब्देन सौभरिप्रभृतीनां कायव्यूहश्रवणेनावधारितत्वमस्यार्थस्याऽभिप्रैति ॥ १६२ ॥

( मिता० ) यस्त्व(१)पटुसंस्कारतया पूर्वां जातिं न स्मरति तस्य का गतिरित्यत्राह—

यथेति । भरतो नटः स यथा रामरावणादिनानारूपाणि कुर्वाणः सितासितपीतादिभिर्वर्णैरात्मनस्तनुं वर्णयति तथैवात्मा तत्तत्कर्मफलोपभोगार्थं कुब्जवामनादिनानारूपाणि कर्मनिमित्तानि कलेवराण्यादत्ते ॥ १६२ ॥

( वी०मि० ) अन्यनन्यगतिकत्वात् फलकालारब्धकर्मणां कथं कायव्यूहेनोपभोगसम्भवः, मातुः रजस्वलासमये नेत्राञ्जनादिकमङ्गहीनत्वादिहेतुमन्तरा अयोनिजशरीरे तदसम्भवादत आह—

कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च ॥
गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मतः ॥ १६३ ॥

तथा मातुर्दोषेण जन्मत आरभ्याऽङ्गहीनादि हीनाङ्गत्वादि गर्भस्य वैकृतं दृष्टं तथैव कालस्य वार्द्धकाद्यवस्थारूपस्य कर्मणो गर्भहननादेर्दुरदृष्टविशेषवतो गर्भस्थस्य बीजस्य जलजुकस्य वातापहतस्य दोषैरपि दृष्टम् । तथा चाऽप्यत्र दृष्टिविशेषादेव हीनाङ्गत्वादिकमुपपन्नमिति भावः । एवकारो लोकोक्तिविशेषे । चकारो मात्रादिगुणैर्गर्भोत्कर्षो दृष्ट इत्येतत्समुच्चयार्थः ॥ १६३ ॥

( मिता० ) किंच—

कालेति । न केवलं कर्मैव कुब्जवामनत्वादिनिमित्तं, किन्तु कालकर्मणी स्व(२)कारणपितृबीजदोषो मातृदोषश्चेति । सर्वमेतत्सहकारिकारणम् । एतेन दृष्टादृष्टस्वरूपेण कारणकलापेन गर्भस्याङ्गहीनत्वादिविकारो जन्मन आ(३)रभ्यानियतकालो दृष्टः ॥ १६३ ॥

( १ ) यस्त्वपटुसंस्कार ख । ( २ ) स्वपितृकारणबीज ख । ( ३ ) आरभ्यानियत क ।

(वी०मि०) ननु प्राक्तनेन कर्मादिना बध्यत इत्युक्तं, तन्न युक्तमाद्यशरीरस्य पूर्वकर्माद्यभावादत आह—

अहङ्कारेण मनसा गत्या कर्मफलेन च ॥
शरीरेण च नात्मायं मुक्तपूर्वः कदा(१)चन ॥ १६४ ॥

गतिः संसरणहेतुभूतो दोषसमूहः कर्मणो विहितनिषिद्धस्य फलं धर्माधर्मौ। शेषं प्रसिद्धम्। एतस्य जीवः कदाचन न मुक्तपूर्वः, किन्त्वनादिरेव संसार इति शरीरस्याद्यत्वमसिद्धमेवेत्याशयः। चकारेण इन्द्रियसङ्ग्रहः ॥१६४॥

(मिता०) ननु प्राकृतिकप्रलयावसरे महदाद्याखिलविकारविनाशे कर्मणो नाशात्कथं तन्निबन्धनः प्रथमपिण्डपरिग्रह इत्याशङ्क्याह—

अहङ्कारेणेति। मनोहंकारौ प्रसिद्धौ। गतिः संसरणहेतुभूतो दोषराशिः। कर्मफलं धर्माधर्मरूपम्। शरीरं लिङ्गात्मकम्। एतैरहंकारादिभिरयमात्मा कदाचिदपि न मुच्यते यावन्मोक्षः ॥ १६४ ॥

(वी०मि०) ननु कर्मणा बध्यत इत्यत्र बन्धो जन्ममरणरूपः, तत्र मरणं न कर्मसाध्यं दुर्भिक्षादावकाले युगपत्सहस्रसङ्ख्यानाशदर्शनात् कर्मणां च तज्जीवसमवेतानां प्रतिनियतसमयविपाकत्वादत आह—

वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ॥
विक्रियाऽपि च दृष्टैवमकाले प्राणसंक्षयः ॥ १६५ ॥

वर्तिपात्रतैलानां युगपद्योगाद्दीपसमुदायस्य स्थितिर्यथा, यथा च युगपत्तैलाद्यपगमाद्विक्रियाविनाशः। एवं युगपदेव प्रारब्धकर्मवशाज्जीवसमुदायस्य स्थितिस्तत्क्षयाच्च युगपत्सम्पन्नान्मरणजनकादृष्टानां युगपत्परिपाकाद्वा अकाले प्राणसंक्षयः। चकारादेव जीवस्थितिसङ्ग्रहेण उक्तार्थलाभः ॥ १६५ ॥

(मिता०) ननु प्रतिनियतकर्मणां जीवानां प्रतिनियतकालमेवोपरतिर्युक्ता न पुनः संग्रामादौ युगपदकाले प्राणसंक्षय इत्याशङ्क्याह—

वर्तीति। यथा हि खलु तैलाक्लिन्नानेक(२)वर्तिनानां नानाज्वालानां युगपत्संस्थितिः तासां च स्थिता(३)नां तदुत्तरं दोधूयमान-

(१) कथंचन—इति मु० पु० पाठ। (२) नेकवर्तिनीनां ट।
(३) स्थितानां पट्टुनरदाधूयमान ड।

पवनाहतिरूपविपत्तिहेतूपनिपातयौगपद्याद्युगपदुपरतिर्यथा भवति तथैव रथिसारथिवाजिकुञ्जरादिजीवानां युद्धाख्योपरतिहेतुयौगपद्यादकालेऽपि प्राणपरिक्षयो नानुपपन्नः । एतदुक्तं भवति-प्रतिनियतकालविपत्तिहेतुभूतादृष्टस्य तद्विरुद्धकार्यकरदृष्टहेतूपनिपातेन प्रतिबन्ध इति ॥ १६५ ॥

( वी०मि० ) 'स हि योग्यमृतौ भवेत्' इत्युक्तं, तत्र मोक्षस्य मार्गप्रापकमाह—

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ॥
सितासिताः (१)कद्रुनीलाः कपिलाः पीतलोहिताः ॥१६६॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ १६७ ॥

हृदि दीपवत्प्रकाशमानो यस्तिष्ठति जीवात्मा तस्य सितादिवर्णा अनन्ता रश्मयस्तेषां मध्ये य एको रश्मिः सूर्यमण्डलं भित्त्वा ब्रह्मलोकं चातिक्रम्य ऊर्ध्वं स्थितस्तेन मार्गेण जीवः परां गतिं मोक्षपरमात्मालयरूपां याति प्राप्नोति ॥ १६६-१६७ ॥

( मिता० ) मोक्षमार्गमाह—

अनन्ता इति । योऽसौ हृदि प्रदीपवत्स्थितो जीवस्तस्यानन्ता रश्मयो नाड्यः सुखदुःखहेतुभूताः द्वासप्ततिसहस्राणीत्यादिनोक्ताः सितासितकर्बुरादिरूपाः सर्वतः स्थितास्तेषामेको रश्मिरूर्ध्वं व्यवस्थितः, योऽसौ मार्तण्डमण्डलं विभिद्य हिरण्यगर्भनिलयं चातिक्रम्य वर्तते तेन जीवः परां गतिमपुनरावृत्तिलक्षणां प्राप्नोति ॥१६७॥

( वी०मि० ) प्रसङ्गात्स्वर्गमर्त्ययोः संसरणमार्गमाह—

यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् ॥
तेन देवशरीराणि सधामानि प्रपद्यते ॥ १६८ ॥
येनैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ॥
इह कर्मोपभोगाय तै(२)स्तु संसरतेऽवशः ॥ १६९ ॥

तस्य जीवात्मनो मुक्तिमार्गादन्यद्रश्मिशतं यदूर्ध्वं व्यवस्थितं, ते

(१) कद्रुनीला—इति क० पु० पाठ, कर्बुरूपाः कपिला नीललोहिता—इति मु०पु०पाठ ।
(२) तैः संसरति सोऽवशः—इति मु०पु०पाठ ।

नैव सधामानि दिव्यस्थानोपहितानि देवशरीराणि जीवः प्रपद्यते । ये चाऽस्याधस्ताद्व्यवस्थिता रश्मयः सितासिताद्यनेकरूपाः मृदुप्रभाः तैस्त्विह मर्त्यलोके अवशः कर्मपरतन्त्रः सन् गर्भोपभोगाय संसरते जायते जीवः ॥ १६८–१६९ ॥

( मिता० ) स्वर्गमार्गमाह—

यदिति । यदस्यात्मनो मुक्तिमार्गभूताद्रश्मेरन्यद्रश्मिशतमूर्ध्वाकारमेव व्यवस्थितं, तेन सुरशरीराणि तैजसानि सुखैकभोगाधिकरणानि सधामानि कनकरजतरत्नरचितामरपुरसहितानि प्रपद्यते ॥१६८॥

( मिता० ) संसरणमार्गमाह—

येनेति । ये पुनस्तस्याधस्ताद्रश्मयो मृदुप्रभास्तैरिह फलोपभोगार्थं संसारे संसरति अवशः स्वकृतकर्मपरतन्त्रः ॥ १६९ ॥

( वी०मि० ) दार्ढ्यार्थं पुनरपि युक्त्यन्तरैर्भूतव्यतिरिक्तं जीवात्मानमाधयति—

वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च ॥
आर्त्या गत्या तथाऽगत्या सत्येन ह्यनृतेन च ॥ १७० ॥
श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः ॥
निमित्तशाकुनज्ञानग्रहसंयोगजैः फलैः ॥ १७१ ॥
तारानक्षत्रसंचारैर्जागरैः स्वप्नजैरपि ॥
आकाशपवनज्योतिर्जलभूतिमिरैस्तथा ॥ १७२ ॥
मन्वन्तरैर्युगप्राप्त्या मन्त्रौषधिफलैरपि ॥
वित्ताऽऽत्मानं वेद्यमानं कारणं जगतस्तथा ॥ १७३ ॥

वेदादिभिर्वेद्यमानं भूतव्यतिरिक्तत्वेन बोध्यमानं तथा प्रागुक्तप्रकारेण जगतः स्थावरजङ्गमात्मकस्य कारणं जीवात्मानं वित्त हेमुनयो ? यूयं जानीत । वेदः 'अनणवह्रस्वमपाणिपाद'मित्यादि, शास्त्रं मन्वादिप्रणीतं धर्मशास्त्रं, विज्ञानं न्यायशास्त्रादि जन्मकालीनस्तन्यपानेष्टसाधनताज्ञानं, शतकुलादिशुभादृष्टप्रयोजनं जन्म, मरणं कस्यचिच्चिरेण कस्यचिच्छीघ्रम(१)दृष्टविशेषप्रयोज्यम् , आर्तिः प्रार्थना, तथा वाय्वादिकारितविलक्षणे गत्यगती प्रवृत्तिनिवृत्तिकारितौ चेष्टाविशेषौ,

(१) शुभदृष्ट०-इति ग०पु० पाठः ।

सत्याऽनृते यथा(१)र्थाऽयथार्थबुद्धी, श्रेयो मोक्षः, सुखदुःखे स्वर्गनरकौ, शुभाऽशुभे कर्मणी पुण्यपापरूपे, निमित्तं भूकम्पादि, शाकुनज्ञानं पक्षिचेष्टाविशेषाद्यवलोकनं, ग्रहसंयोगः शुभाशुभसूचक ग्रहस्य रक्षाविशेषाद्यवस्थानम्, एतेभ्यो जातं फलमैहिकसुखदुःखरूपम् । तारायाः सप्तर्षिप्रभृतेर्नक्षत्रस्याऽश्विन्यादेश्च सञ्चारस्तदधिष्ठातृजीवकारितः, जागरः चिन्ताकारितः, स्वप्नजं स्वामिशिरश्छेदादिराज्याप्तिजन्यं दुःखसुखरूपं फलम्, आकाशादीनि परोपभोगार्थानि, मन्वन्तरैर्बहुभिः सम्बन्धः तत्तत्कर्मफलार्थवादे श्रुतं, मन्त्रौषधिजन्यं फलं दुःखक्षयः । आद्येन चकारेण मूर्च्छाया, द्वितीयेन द्वेषस्य, तृतीयेन स्मृत्यनुकूलभावनाख्यसंस्कारस्य, अपिकारेण मनसोऽधिकसुखस्य, तथापदेनाऽऽकाशादिगुणानां शब्दादीनां विषयाणां सङ्ग्रहः । अपिशब्देन द्वितीयेन मणिजन्यदुःखध्वंसपरिग्रहः ॥ १७०-१७३ ॥

( मिता० ) भूतचैतन्यवादिपक्षं परिजिहीर्षुराह—

वेदैरित्यादि । वेदैः स एष नेति नेत्यात्मे'ति, 'अस्थूलमनण्वह्रस्वमपाणिपादम्' इत्यादिभिः । शास्त्रैश्च मीमांसान्वीक्षिक्यादिभिः । विज्ञानैश्च ममेदं शरीरमित्यादिदेहव्यतिरिक्तात्मानुभवैः । तथा जन्ममरणाभ्यां जन्मान्तरानुष्ठितधर्माधर्मनियताभ्यां देहातिरिक्तात्मानुमानम् । आत्यां जन्मान्तरगतकर्मानुष्ठाननियतया । तथा गमनागमनाभ्यां ज्ञानेच्छाप्रयत्नाधारनियताभ्यामपि भौतिकदेहातिरिक्तात्मानुमानम् । न हि देहस्य चैतन्यादिसमवायः सम्भवति । यतः का(२)रणगुणप्रक्रमेण कार्यद्रव्ये वैशेषिकगुणारम्भो दृष्टः । न च तत्कारणभूतपार्थिवपरमाण्वादिषु चैतन्यादिसमवायः सम्भवति, तदारब्धस्तम्भकुम्भादिभौतिकेष्वनुपलम्भात् । न च मदशक्तिवद्गुडकादिद्रव्यान्तरसंयोगज इति वाच्यम्, शक्तेः साधारणगुणत्वात् । अतो भौतिकदेहातिरि(३)क्तश्चैतन्यादिसमवाय्यङ्गीकर्तव्यः । सत्यानृते प्रसिद्धे । श्रेयो हितप्राप्तिः । सुखदुःखे आमुष्मिके । तथा शुभकर्मानुष्ठानमशुभकर्मपरित्यागः । एतैश्च ज्ञाननियतैर्देहातिरिक्तात्मानुमानम् । निमित्तं भूकम्पादि । शाकुनज्ञानं पिङ्गलादिपतत्रिचेष्टालिङ्गकं ज्ञानम् । ग्रहाः सूर्यादयः तत्संयोगजः फलं । तारा अश्वि-

( १ ) सत्यानृते प्रसिद्धे—इति ख०पु०पाठः । ( २ ) कारणगुणक्रमेण क ।
( ३ ) रिक्तचैतन्यादि ख ।

न्यादिव्यतिरिक्तानि ज्योतींषि, नक्षत्राण्यश्वयुक्प्रभृतीनि एतेषां संचारैः शुभाशुभफलद्योतनैः जागरैर्जागरावस्थाजन्यैश्च सच्छिद्राऽऽदित्यादिदर्शनैः तथा स्वप्नजैः खरवराहयुक्तरथारोहणादिज्ञानैः, तथा आकाशाद्यैश्च जीवोपभोगार्थतया सृष्टैः, तथा मन्वन्तरप्राप्त्या युगान्तरप्राप्त्या देहेऽनुपपद्यमानया, तथा मन्त्रौषधिफलैः प्रेक्षापूर्वकैः क्षुद्रकर्माद्यैः साक्षात्परम्परया वा देहेऽनुपपद्यमानैर्वेद्यमानं हे मुनयः ! वित्त जानीत ॥ १७०–१७३ ॥

( वी०मि० ) अनुमानविधयाऽऽत्मज्ञापकत्वेनोक्तानां बुद्ध्यादीनामनुक्तानां च निमेषादीनां प्रत्यक्षसहकारितर्कविधया ज्ञापकत्वमभिदधान एव प्रत्यक्षं मानमात्मन्याह—

अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः ॥
इन्द्रियान्तरसञ्चार इच्छा धारणजीविते ॥ १७४ ॥
स्वर्गः स्वप्नश्च भावानां प्रेरणं मनसो गतिः ॥
निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम् ॥ १७५ ॥
यत एतानि लिङ्गानि दृश्यन्ते परमात्मनः ॥
तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः ॥ १७६ ॥

अहं सुखीत्यादिप्रत्यक्षं स्मृतिः, संस्कारजन्यं ज्ञानं बुद्धिः, तन्मूलभूतोनुभवो जाग्रदवस्थाकालीनः, स्वप्नो निद्राकालीनं ज्ञानं, चेतना च उपेक्षात्यक्तं ज्ञानमिति भेदः, मेधा दृढतरसंस्कारः, सुखमैहिकं, स्वर्गस्य पृथगभिधानात् । धृतिः शरीरस्य यत्नः, धारणं भारस्य हस्तादिना तोलनं यत्नकार्यं, जीवितं प्राणसंयोगोऽदृष्टकारितः, भावानां चक्षुरादीनां प्रेरणं विषयेषु योजनं, मनसो बुभुत्साजन्येन्द्रियविशेषसंयोगानुकूला गतिः, निमेषो मुद्रितस्य चक्षुषश्चालनं यत्नकार्यं, यत्नश्च कारणभूतो घटादिसम्पादकश्च, पाञ्चभौतिकं शरीरहस्तादिकृतमादानं जलाद्युपादानम्, आत्मन एतानि लिङ्गानि । यतो हेतोः परमतिशयेन पौनःपुन्यलक्षणेन दृश्यन्ते ज्ञायन्ते । यस्मात्सर्वगो विभुः देहात्परो भिन्न ईश्वरो देहस्य गत्यगत्यादिनियन्ता जीवात्माऽस्ति । चकारेण दुःखादिसङ्ग्रहः । अथवा जीवात्मनि मानमुक्तं परमात्मनि तदाह–अहङ्कार इत्यादि । कर्तृत्वेनाऽह

ङ्कारादीनामीश्वरोऽस्ति परं न हि जीवात्मनो बुद्ध्यादिसमवायिकारणत्वेऽपि तत्कर्तृत्वं सम्भवति बुद्ध्याद्यालम्बनस्य जीवात्मकृत्ययोग्यत्वात् । अत एव बुद्धिर्मयाकृतेत्यादिर्न व्यवहार इति । धारणमक्षधारणं, निमेषः साहजिकमाक्षिकर्म, पाञ्चभौतिकं शरीरसम्बन्धि आधानं गर्भकाले जीवानुप्रवेशनम् । आत्मा परमात्मा ईश्वरः सर्वेषां प्रभुः सर्वगः सर्वप्राणिनामन्तर्यामी । शेषं पूर्ववत् ॥१७४-१७६॥

(मिता०) किञ्च—

अहङ्कार इति । अहंकृतिरहङ्कारः । स्मृतिः प्राग्भवीयानुभवमावितसंस्कारोद्बोधनिबन्धना स्तन्यपानादिगोचरा । सुखमैहिकम् । धृतिर्धैर्यम् । इन्द्रियान्तरेण हि दृष्टेऽर्थे इन्द्रियान्तरस्य संचारो यमहमद्राक्षं तमहं स्पृशामीत्येवमनुसन्धानरूप इन्द्रियान्तरसञ्चारः । अत्रेच्छाप्रयत्नचैतन्यानां स्वरूपेण लिङ्गत्वम् । पूर्वश्लोके(१) तु गमनसत्यवचनादिहेतुतया आर्थिकं लिङ्गत्वमित्यपौनरुक्त्यम् । तथा धारणं शरीरस्य । जीवितं प्राणधारणम् । स्वर्गो नियतदेहान्तरोपभोग्यः सुखविशेषः । स्वप्नः प्रसिद्धः । पूर्वश्लोके तु स्वप्नस्य शुभफलद्यो(२)तनाय लिङ्गत्वम्, अत्र स्वरूपेणेत्यपौनरुक्त्यम् । तथा भावानामिन्द्रियादीनां प्रेरणम् । मनसो गतिश्चेतनाधिष्ठानव्याप्ता । निमेषः प्रसिद्धः । तथा पञ्चभूतानामुपादानम् । यस्मादेतानि लिङ्गानि भूतेष्वनुपपन्नानि साक्षात्परम्परया वा परमात्मनो द्योतकानि दृश्यन्ते तस्मादस्ति देहातिरिक्त आत्मा सर्वग ईश्वर इति सिद्धम् ॥१७४-१७६॥

(वी० मि०) 'तेन याति परां गति'मित्यनेन जीवात्मनः परमात्मनि लयो मोक्ष इत्युक्तं, लघुश्च लिङ्गशरीरापगम इति दर्शितम् । लिङ्गशरीरं क्षेत्रलयात्मकं दर्शयन्नेव तस्य प्रकृतिरूपलयाऽवस्थानापगममाह—

बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च ॥
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥ १७७ ॥
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्याऽस्य निगद्यते ॥
ईश्वरः सर्वभूतस्थः सन्नसन् सदसच्च यः ॥ १७८ ॥

---

(१) श्लोकेऽनुगमन ट । (२) द्योतकतया क ।

बुद्धेरुत्पत्तिरव्यक्तात्ततोऽहङ्कारसम्भवः ॥
तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि च ॥ १७९ ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणः ॥
यो यस्मान्निःसृतश्चैषां स तस्मिन्नेव लीयते ॥ १८० ॥

बुद्धीन्द्रियाणि श्रोत्रादीनि पञ्च सार्थानि शब्दादिवक्ष्यमाणगुणात्मकविषयसहितानि, मनोऽन्तःकरणं, कर्मेन्द्रियाणि रागादीनि पञ्च, अहङ्कारो महत्तत्त्वविकारः, बुद्धिर्महत्तत्त्वं, पृथिव्यादीनि पञ्च महाभूतानि । चकारैश्चतुर्भिरेतच्छ्लोकस्थैरग्रिमश्लोकस्थेन चकारेण च समुच्चितानि सूक्ष्माणि तन्मात्रारूपाणि पञ्च । अव्यक्तं प्रकृतिरित्यस्य विषयाणां विशेषणत्वेन क्षेत्रस्वरूपा प्रकृतिः, तया चतुर्विंशात्मकस्य क्षेत्रस्य य ईश्वरो व्यापाराणां नियन्ता सर्वभूतस्थः सकलमूर्तसंयोगजधर्मविद्भिर्विविच्य साक्षात्कारविषयीकृतः, असन् अयोगिभि(१)र्विविच्याऽप्रत्यक्षीक्रियमाणः, सदसन् धर्म्ये यशस्यपारमार्थिकत्वादविद्यात्मकजीवोपाधेरपारमार्थिकत्वात् स जीवात्मा क्षेत्रज्ञो निगद्यते बुधैः कथ्यते । तत्राऽव्यक्तं नित्यं, ततो बुद्धेरुत्पत्तिः, ततोऽहङ्कारस्य सम्भवः उत्पत्तिः, अहङ्काराच्च साक्षात्पञ्च तन्मात्राः, तद्द्वारा पञ्चभूतानि च एकोत्तरगुणानि आकाशवायुतेजोजलपृथिवीति क्रमेणैकैका(२)ऽधिकगुणवन्ति जायन्ते । चकारेणाऽहङ्काराद्बुद्धिकर्मेन्द्रियमनांसि जायन्ते इति समुच्चीयते । शब्दादयस्तु पञ्च तन्मात्राणां पञ्चभूतानां च गुणत एव जायन्ते । एषां च यो यस्मान्निःसृत उत्पन्नः स तस्मिन्नेव लीयते स्थूलरूपेण तिरोभवति सूक्ष्मरूपेण तिष्ठति, कारण एवाऽवतिष्ठत इति यावत् । तस्मात्प्रकृतिरूपतया अवस्थानं क्षेत्रस्य सिद्धम् । प्रकृतिश्च विद्यमानाऽपि वीतरजस्का योषिदपत्यमिव न संसारं प्रसूत इति न पुनः संसार इति रहस्यम् । आद्य एवकारश्चतुर्विंशतिव्यतिरिक्तत्वस्य क्षेत्रत्वव्यवच्छेदार्थः । चरमश्च विनाशव्यवच्छेदार्थः । हिशब्दः साङ्ख्यादिशास्त्रसिद्धत्वादस्मिन्नर्थेऽवधारणमभिप्रैति । चतुर्थश्लोकस्थैश्चतुर्भिश्चकारैर्वाय्वादीनां चतुर्णां शब्दादिगुणान्तरसमुच्चयः ॥ १७७-१८० ॥

(१) अयोगिनि विविच्या०-इति ख० पु० पाठः ।
(२) क्रमेण लौकिकाऽधिक०-इति ख० पु० पाठः ।

( मिता० ) क्षेत्रज्ञस्वरूपमाह —

बुद्धीति । बुद्धीन्द्रियाणि श्रोत्रादीनि सार्थानि शब्दादिविषयसहितानि, मनः, कर्मेन्द्रियाणि वागादीनि, तथाऽहङ्कारो, बुद्धिश्च निश्चयात्मिका, पृथिव्यादीनि पञ्चभूतानि, अव्यक्तं प्रकृतिरित्येतत् क्षेत्रमस्य योऽसावीश्वरः सर्वगतः अत एव सद्रूपः प्रमाणान्तराग्राह्यत्वात् । असन् अस्पष्टप्रतीतिकत्वात् । सदसद्रूपोऽसावात्मा क्षेत्रज्ञ इति निगद्यते ॥ १७७-१७८ ॥

( मिता० ) बुद्ध्यादेरुत्पत्तिमाह—

बुद्धेरिति । सत्त्वादिगुणसाम्यमव्यक्तम् । ततस्त्रिप्रकारायाः सत्वरजस्तमोमय्या बुद्धेरुत्पत्तिः । तस्याश्च वैकारिकस्तैजसो भूतादिरिति त्रिविधोऽहङ्कार उत्पद्यते । तत्र तामसाद् भूतादिसंज्ञकादहङ्कारात्तन्मात्राणि, आदिग्रहणाद्गगनादीनि तानि चैकोत्तरगुणान्युत्पद्यन्ते । यथाक्रमाद्वैकारिकतैजसाभ्यां बुद्धिकर्मेन्द्रियाणामुत्पत्तिः ॥१७९॥

( मिता० ) गुणस्वरूपमाह—

शब्द इति । तेषां गगनादिपञ्चभूतानां एकोत्तरवृद्ध्या पञ्च शब्दादयो गुणा वेदितव्याः । एषां च बुद्ध्यादिविकाराणां मध्ये यो यस्मात्प्रकृत्यादेरुत्पन्नः स तस्मिन्नेव सूक्ष्मरूपेण प्रलयसमये प्रलीयते ॥१८०॥

( वी०मि० ) प्रकरणार्थमुपसंहरति—

यथाऽऽत्मानं सृजत्यात्मा तथा वः कथितो मया ॥
विपाकात्त्रिप्रकाराणां कर्मणामीश्वरोऽपि सन् ॥ १८१ ॥
सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्तिताः ॥
रजस्तमोभ्यामाविष्टश्चक्रवद् भ्राम्यते ह्यसौ ॥ १८२ ॥
अनादिरादिमांश्चैव स एव पुरुषः परः ॥
लिङ्गेन्द्रियग्राह्यरूपः सविकार उदाहृतः ॥ १८३ ॥

ईश्वरोऽपि सन् परमात्मा जीवस्वरूपतया आत्मानं यथा त्रिप्रकाराणां कायिकवाचिकमानसानां कर्मणां विपाकात्सृजति तथा मया वः कथितः । सत्त्वादयस्तस्यैव जीवस्यैव गुणाः कीर्तिताः । तत्र रजस्तमोभ्यां गुणाभ्यामाविष्टो विषयेष्वासक्तो यो जीवात्मा असौ चक्रवत्संसारे कर्मभिर्भ्राम्यते पुनः पुनर्जन्यते । स एव जीवः पुरुषः

परमात्मा अनादिः शरीरग्रहणेन आदिमान् लिङ्गैः सुखदुःखादिभिः इन्द्रियेण ग्राह्यस्वरूपः सविकारो वामनत्वकुब्जत्वादिविकारसहितो मया उदाहृतः । आद्येन चकारेण परस्परसाहित्येन कार्यारम्भकत्वं त्रयाणामुक्तम् । द्वितीयचकारेण बन्धमोक्षोपाय उदाहृत इति समुच्चीयते । चकारसमभिव्याहृतावेवकाराववधारणार्थौ ॥ १८१-१८३ ॥

( मिता० ) प्रकरणार्थमुपसंहरन्नाह—

यथेति । मानसादित्रिप्रकारकर्मणां विपाकादीश्वरोऽपि सन्नात्मा यथात्मानं सृजति तथा युष्माकं कथितः । सत्त्वाद्याश्च गुणास्तस्यै-(१)वाऽविद्याविशिष्टस्य कीर्तिताः । तथा स एव रजस्तमोभ्यामाविष्टश्चक्रवदिह संसारे भ्राम्यतीत्यपि कथितम् । स एवाऽनादिः परमपुरुषः शरीरग्रहणेनादिमान् कुब्जवामनादिविकारसहितस्तथा स्थूलाकारतया परिणतो लिङ्गैरिन्द्रियैश्च ग्राह्यस्वरूप उदाहृतः ॥१८१-१८३॥

( वी०मि० ) रज्जुवद्रश्मिमवलम्ब्य स्वर्गादिकं गच्छतीत्युक्तं, स रश्मिर्यद्देशमध्येन गम्यस्थानं प्राप्नोति तद्देशमाह चतुर्भिः—

पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम् ॥
तेनाऽग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति ॥ १८४ ॥
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः ॥
तेऽपि तेनैव मार्गेण सत्यव्रतपरायणाः ॥ १८५ ॥

चकाराभ्यामपिकारेण च बहुविधाऽश्रौतकर्मकारिणश्च दिवं प्रयान्ति, ये च सम्यक् यथाविधि दानपराः । चकाराभ्यां स्मार्तबहुविधकर्मान्तरपराः, तथा 'ये दया क्षमाऽनसूयाऽऽशौचोऽनायासो मङ्गलमकार्पण्यमस्पृहत्वं सर्वसाधारणानि च' ति बृहस्पत्युक्तैरष्टाभिरात्मनो गुणैर्युताः, तथा ये सत्याऽभिधाननियमपरास्तेऽपि तेनैव पितृयानरूपेण मार्गेण दिवं यान्ति ॥ १८४-१८५ ॥

( मिता० ) स्वर्गमार्गमाह—

पितृयान इति । अजवीथ्यमरमार्गः तस्यागस्त्यस्य च यदन्तरमसौ पितृयानस्तेनाग्निहोत्रिणः स्वर्गकामाः दिवं यान्ति स्वर्गं प्राप्नुवन्ति १८४

( मिता० ) किञ्च—

ये चेति । ये च दानादिस्मार्तकर्मपराः सम्यग्दम्भरहिताः तथाष्टा-

( १ ) तस्यैवाविशिष्टस्य ख ।

भिरात्मगुणैः 'दया क्षान्तिरनसूयाऽऽशौचमनायासो मङ्गलमकार्पण्यमस्पृहे'ति गौतमादिप्रतिपादितैर्युक्ताः । तथा ये च (१)सत्यवदननिरतास्तेऽपि तेनैव पितृयानेनैव सुरसदनमाप्नुवन्ति ॥ १८५ ॥

(वी० मि०) नन्ववान्तरप्रलयेनाऽखिलोपदिष्टविलयात् कथमग्निहोत्रादिकर्मप्रवृत्तिः प्राथमिकी, यतः स्वर्गमार्गाधिरोहणं भवेदित्यत आह—

तत्राऽष्टाशीतिसाहस्रा मुनयो गृहमेधिनः ॥
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥ १८६ ॥

(वी० मि०) वेदोपदेशद्वारा धर्मप्रवर्तका गृहमेधिनो गृहस्थाश्रमिणो, मुनय आत्ममननशीलाः सर्वज्ञा इति यावत्, अष्टाशीतिसहस्रसङ्ख्याः पुनः सर्गान्ते आवर्तिना गृहीतजन्मानस्तत्र पितृयाने बीजभूताः ॥ १८६ ॥

(मिता०) ननु नैमित्तिकादिप्रतिसञ्चरेऽखिलाध्यापकप्रलयादविदितवेदास्तस्योपरितना जना कथमग्निहोत्रादिकं कर्म करिष्यन्ति कथन्तरां चाऽकृतकर्माणः स्वर्गमार्गमधिरोक्ष्यन्तीत्यत आह—

तत्रेति । तत्र पितृयानेऽष्टाशीतिसहस्रसङ्ख्या मुनयो गृहस्थाश्रमिणः पुनरावृत्तिधर्माणः सर्गादौ वेदस्योपदेशकतया धर्मतत्प्रादुर्भावे बीजभूताः सन्तोऽग्निहोत्रादिधर्मप्रवर्तकाः । अतो न प्रागुक्तदो(२)षसमासङ्गः ॥ १८६ ॥

(वी० मि०) स्वर्गमार्गं तदुपदिष्टसहितमुक्त्वा मोक्षमार्गं तदुपदेष्टृसहितमभिधत्ते—

सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः ॥
तावन्त एव मुनयः सर्वारम्भविवर्जिताः ॥ १८७ ॥
तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया ॥
तत्र गत्वाऽवतिष्ठन्ते यावदाभूतसम्प्लवम् ॥ १८८ ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ॥
श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम् ॥ १८९ ॥

---

(१) सत्यवचन ख । (२) समागम ङ ।

वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ॥
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥ १९० ॥
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ॥
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ॥ १९१ ॥
य एनमेवं विन्दन्ति ये चाऽऽरण्यकमाश्रिताः ॥
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥ १९२ ॥
क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम् ॥
अयनं देवलोकं च सवितारं स वैद्युतम् ॥ १९३ ॥
ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ॥
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥ १९४ ॥

सप्तर्षीणामुत्तरतो नागवीथ्या ऐरावतमार्गस्य दक्षिणतो मध्ये देवलोकमाश्रिता अष्टाशीतिसहस्रसङ्ख्या एते मुनयः सन्ति । कुतो हेतोरत आह सर्वैः काम्यकर्मारम्भैः वर्जिताः । तपोब्रह्मचर्यसङ्गत्यागमेधाभिस्तत्र देवलोके गत्वा यावदासमन्ताद्भावेन भूतसंप्लवः प्रलयस्तावत्कालमवतिष्ठन्ते । यतो देवलोकस्य मुनिवर्गात् वेदाः, पुराणानि, विद्या वेदान्तशास्त्राणि, उपनिषदो बृहदारण्यकादयः, श्लोका इतिहासरूपाः, सूत्राणि व्यासपाणिन्यादिप्रणीतानि, भाष्याणि तद्व्याख्यारूपाणि यदन्यत्किञ्चन वाङ्मयमायुर्वेदादि एतानि सर्वाणि प्रवर्तन्ते । तथा च सति वेदस्याऽनुवचनमध्ययनम् । ततो यज्ञब्रह्मचर्यतपोदमश्रद्धोपवासाः प्रवर्तन्ते । स्वातन्त्र्यं विषयाणां सङ्गलक्षणं च प्रवर्तते । एते चाऽऽत्मनो मोक्षहेतुतत्त्वज्ञानहेतवः । नन्वात्मनः साक्षात्कारो मोक्षहेतुरिति किं वेदजन्यशाब्दज्ञानेनेत्यत आह । आश्रमैः ब्रह्मचर्यादिभिः समस्तैरेवमेव वेदानुवचनाद्युपायेनैव श्रोतव्योऽथ मन्तव्योऽथ द्रष्टव्यो भवति द्विजातिभिः । अथाऽऽत्मज्ञानेऽपि कः पुरुषार्थ इत्यत आह । आरण्यकं बृहदारण्यकमाश्रिता ये द्विजा ये च परया श्रद्धया युक्ता द्विजा एवमेनमुपासते ते सत्यं परमार्थरूपं परमात्मानं विन्दन्ति । तत्र परमार्थलाभे मार्गमाह क्रमादिति । ते ब्रह्मोपासका अर्चिर्वह्न्यभिमानिदेवतास्थानम्, अहर्दिनाभिमानिदेवतास्थानम्, शुक्लपक्षस्य उत्तरायणस्याऽभिमानिदेवतास्थानं, देव-

लोकं सवितारं सूर्यलोकं वैद्युतं विद्युदभिमानिदेवतास्थानं क्रमात् सम्भवन्ति प्राप्नुवन्ति । ततोऽर्चिरादिलोकप्राप्त्यनन्तरं मानसः पुरुषोऽभ्येत्य ब्रह्मलोकभाज उपासकान् करोति । तेषां चेह संसारे पुनरावृत्तिर्न विद्यते । तथापदेनोपनिषद्व्याख्यानग्रन्थस्य चकारेण वेदाङ्गाना समुच्चयः । हिशब्दो वेदानुवचनस्य ज्ञानहेतुत्वे श्रौतव्यत्वस्य हेतुतामभिप्रेति । आद्येन तुशब्देन मननपूर्वं द्रष्टव्यता, द्वितीयेन श्रवणपूर्वं मन्तव्यता व्यवच्छिनत्ति । चकारेण तृतीयेन निदिध्यासनसमुच्चयः । ये चेति चकारः छन्दोग्योपनिषत्समुच्चयार्थः । तथेति ऊर्ध्वस्थितरश्मिसवितृत्वतां व्यवच्छिनत्ति । चकारेण महर्लोकादिसमुच्चयः ॥ १८७-१९४॥

( मिता० ) किञ्च—

सप्तर्षीत्यादि । सप्तर्षयः प्रसिद्धाः, नागवीथी ऐरावतपन्था तदन्तराले तावन्त एव अष्टाशीतिसहस्रसंख्या मुनयः सर्वारम्भविवर्जिता केवलज्ञाननिष्ठाः तपोब्रह्मचर्ययुक्ताः तथा सङ्गत्यागिनो देवलोकसमाश्रिताः आभूतसम्प्लवं प्राकृतप्रलयपर्यन्तमवतिष्ठन्ते । तत्र च स्थिताः स्वाध्यायाद्याध्यात्मिकधर्माणां प्रवर्तकाः ॥ १८७ १८८ ॥

( मिता० ) कथम्भूतास्ते मुनय इत्यत आह—

यत इति । यतो द्विविधाऽपि मुनिसमूहाच्चत्वारो वेदाः पुराणाङ्गविद्योपनिषदश्च नित्यभूता एवाध्येतृपरम्परायाता प्रवृत्तास्तथा श्लोका इतिहासात्मका सूत्राणि च शब्दानुशासनमीमांसागोचराणि भाष्याणि च सूत्रव्याख्यारूपाणि यदन्यदायुर्वेदादिकं वाङ्मयं तदपि यत्सकाशात्प्रवृत्तं तथाविधास्ते मुनयो धर्मप्रवर्तकाः । एवं सति वेदस्यापि नाऽनित्यतादोषप्रसङ्गः ॥ १८९ ॥

( मिता० ) तत किमित्यत आह—

वेदेति । वेदस्य नित्यत्वे सति तत्प्रामाण्यबलाद्वेदानुवचनादयः सत्त्वशुद्ध्यापादनद्वारेणाऽऽत्मज्ञानस्य हेतव इत्युपपन्नं भवति ॥१९०॥

( मिता० ) किञ्च—

स इति । यस्मान्नित्यतयाऽप्रमाणभूतो वेदस्तस्मादसावुक्तमार्गेण सकलाश्रमिभिर्नानाप्रकारं जिज्ञासितव्यः । तमेव प्रकारं दर्शयति । द्विजातिभिर्द्रष्टव्योऽपरोक्षीकर्तव्यः । तत्रोपायं दर्शयति-श्रोतव्यो मन्तव्य इति । प्रथमतो वेदान्तश्रवणेन निर्णेतव्यः । तदनन्तरं म

न्तव्यः युक्तिभिर्विचारयितव्यः । ततोऽसौ ध्यानेनापरोक्षीभवति । ये द्विजातयोऽतिशयश्रद्धायुक्ताः सन्तो निर्जनप्रदेशमाश्रिताः सन्त एवमुक्तेन मार्गेण एनमात्मानं सत्यं परमार्थभूतमुपासते ते आत्मानं विन्दन्ति लभन्ते प्राप्नुवन्ति ॥ १९१-१९२ ॥

( मिता० ) प्राप्तिमार्गं देवयानमाह—

क्रमादिति । ते विदितात्मानः क्रमादग्न्याद्यभिमानिदेवतास्थानेषु मुक्तिमार्गभूतेषु विश्रम्य तैः प्रस्थापिताः परमपदं प्राप्नुवन्ति । अर्चिर्वन्हिः, अहर्दिनं, शुक्लपक्षः, तथोत्तरायणं, सुरसद्म, सविता सूर्यः, वैद्युतं च तेजः, तान् एवं क्रमादर्चिरादिस्थानगतान्मानसः पुरुषो ब्रह्मलोकभाजः करोति। तेषामिह संसारे पुनरावृत्तिर्न विद्यते । किन्तु प्राकृतप्रतिसंचारावसरे त्यक्तलिङ्गशरीराः परमात्मन्येकीभवन्ति ॥ १९३-१९४ ॥

( वी०मि० ) पूर्वोक्तपितृयाने गतिक्रममाह—

यज्ञेन तपसा दानैर्ये तु(१)स्वर्गजितो नराः ॥
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥ १९५ ॥
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ॥
क्रमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च ॥ १९६ ॥

ये तु नराः यज्ञादिभिः स्वर्गजितः स्वर्गफलभोक्तारस्ते धूमादिचन्द्रान्ता(२)भिमानिदेवाद्यादीन् त्रीन् महीं शुक्ररूपां क्रमात्सम्भवन्ति प्राप्नुवन्ति, ततः पुनः संसारमेव व्रजन्तीत्यर्थः । आद्येनैवकारेण पूर्वोक्तमार्गस्य, द्वितीयेन मोक्षस्य व्यवच्छेदः । चकारः पुनरर्थकः, तेन पुनः व्रजन्तीति लभ्यते ॥ १९५-१९६ ॥

( वी०मि० ) अथयोनिसंसरणमाह—

एतद्यो न विजानाति मार्गद्वितयमा(३)त्मनः ॥
दन्दशूकः पतङ्गो वा भवेत्कीटोऽथवा कृमिः ॥ १९७ ॥

एतद्देवयानपितृयानरूपं मार्गद्वितयमात्मनोऽर्थे यो न जानाति तदनुसारि कर्म न करोति, स दन्दशूकः सर्पः, पतङ्गः शलभः, कीटः कृमिर्वा भवेत् ॥ १९७ ॥

( १ ) हि—इति मु० पु० पाठः । ( २ ) चन्द्रपर्यन्तपदार्थाभि०—इति ख० पु० पाठः ।
( ३ ) द्वितयमात्मवान्—इति मु० पु० पाठः ।

( मिता० ) पूर्वोक्तपितृयानमाह—

यज्ञेनेति । ये पुनर्विहितैर्मार्गैर्यज्ञदानतपोभिः स्वर्गफलभोक्तारस्ते क्रमात् धूमादिचन्द्रपर्यन्तपदार्थाभिमानिनीर्देवताः प्राप्य पुनरेव वायुवृष्टिजलभूमीः प्राप्य व्रीह्याद्यन्नरूपेण शुक्रत्वमवाप्य संसारिणो योनिं व्रजन्ति । एतन्मार्गद्वयमतो यो न विजानाति मार्गद्वयोपायभूतधर्मानुष्ठानं न करोति, असौ दन्दशूको भुजङ्गः, पतङ्गः शलभः, कृमिः कीटो वा भवेत् ॥ १९५-१९७ ॥

( वी०मि० ) अथाऽऽत्मोपासनस्येतिकर्तव्यतामाह—

ऊरुस्थोत्तानचरणः सव्ये न्यस्योत्तरं करम् ॥
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥ १९८ ॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ॥
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥ १९९ ॥
संनिरुध्येन्द्रियग्रामं नाऽतिनीचोच्छ्रितासनः ॥
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥ २०० ॥
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥
धारयेत्तत्र चाऽऽत्मानं धारणां धारयन् बुधः ॥ २०१ ॥

ऊरुस्थावुत्तानौ ऊर्ध्वकृतपादतलौ चरणौ यस्य तादृशः सन् सव्यकरे उत्ताने उत्तरं दक्षिणकरमुत्तानं न्यस्य मुखं किञ्चिदुन्नाम्य ऊर्ध्वं कृत्वा उरसा उन्नतेन विष्टभ्य ऊर्ध्वं कायं स्तम्भयित्वा सत्त्वस्थः कामक्रोधादिरहितः सुनिश्चलो निष्कम्पः इन्द्रियाणां श्रोत्रादीनां ग्रामं समूहं संनिरुध्य विषयेभ्यः प्रत्याहृत्य अतिनीचमत्युच्छ्रितं च यदासनं तद्भिन्नासनोपविष्टः द्विगुणं त्रिगुणं कुम्भकरेचकात्मकम् , अपिकारात् द्वादशमात्राकालव्यापकं पूरकं च प्राणायाममनुक्रमेदारभेत । तथा च मार्कण्डेयपुराणम्—

लघुर्द्वादशमात्रस्तु द्विगुणं स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तरीय उदाहृतः ॥

इति । मात्रा निमेषोन्मेषकालः । तत इति । प्राणायामेन प्राणवायुं स्थिरीकृत्य यो हृदये दीपवत्प्रकाशमानः प्रभुरात्माऽसौ ध्येयः । तत्र ध्याने धारणां प्राणायामस्वरूपां धारयन्नात्मानं धारयेन्मनसा

स्थिरीकुर्यादित्यर्थः । चकारैस्त्रिभिर्ग्रीवोन्नमनरहोऽवस्थानपरमात्माभेदध्यानानां समुच्चयः ॥ १९८–२०१ ॥

( मिता० ) उपासनाप्रकारमाह—

ऊरुस्थेत्यादि । ऊरुस्थावुत्तानौ चरणौ यस्य स तथोक्तः बद्धपद्मासनः तथोत्ताने सव्यकरे दक्षिणमुत्तानं न्यस्य मुखं किञ्चिदुन्नाम्योरसा च विष्टभ्य स्तम्भयित्वा तथा निमीलिताक्षः सत्त्वस्थः कामक्रोधादिरहितो दन्तैर्दन्तानसंस्पृशन् तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः तथा संवृतास्यः पिहिताननः सुनिश्चलो निष्प्रकम्पः तथा सम्यगिन्द्रियसमूहं विषयेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तविक्षेपो न भवति तथोपविष्टः सन् द्विगुणं त्रिगुणं वा प्राणायामाभ्यासमुपक्रमेत् । ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवदप्रकम्पः प्रभुः स्थितोऽसौ ध्यातव्यः । तत्र च हृदि आत्मानं मनोगोचरतया धारयेत्, धारणामवधारयन् । धारणास्वरूपं च जान्वग्रभ्रमणेन, छोटिकादानकालो मात्रा । ताभिः पञ्चदशमात्राभिरधमः प्राणायामः । त्रिंशद्भिर्मध्यमः । पञ्चचत्वारिंशद्भिरुत्तमः । एवं प्राणायामत्रयात्मिकैका धारणा । तास्तिस्रो योगशब्दवाच्यास्ताश्च धारयेत् । यथोक्तमन्यत्र—'सम्भ्रम्य छोटिकां दद्यात्कराग्रं जानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः ॥ मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव च' ॥ इति ॥ १९८–२०१ ॥

( वी०मि० ) एवं धारणात्मकयोगे सिद्धे मूलमाह—

अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ॥
निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥ २०२ ॥
अर्थानां छन्दतः सृष्टिर्योगसिद्धेश्च लक्षणम् ॥
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ॥ २०३ ॥

अणिमकार्यमन्तर्धानमावरकेन विनाऽदृश्यत्वलक्षणं, स्मृतिर्जन्मान्तरानुभूतार्थस्मरणं, कान्तिः कमनीयरूपता, दृष्टिर्व्यवहिताऽतीन्द्रियदर्शित्वं, श्रोत्रज्ञता दूरस्थशब्दश्राવિत्वं, निजदेहं त्यक्त्वा परदेहप्रवेशः, छन्दतः स्वेच्छयाऽर्थानामपेक्षितानां ग्रामपश्वादीनां

-सृष्टिः। एतत्सर्वमेवान्तरप्रयोजनभूतं कारणभूताया योगसिद्धेर्लक्षण-मनुमापकम् । न केवलमन्तर्द्धानादिप्रयोजनभाक् योगसिद्धो भवति, किन्तु देहत्यागमिच्छया कुर्वन् मोक्षाय समर्थो भवति मोक्षभा-ग्भवति इत्याह-योग इति । तथापदेनाऽणिमादिसिद्धिं समुच्चिनोति । चकारेण योगसिद्धिफललघिमाद्यलोलुपत्वे मोक्षभाक्, इतरथा न तथेति समुच्चीयते ॥ २०२—२०३ ॥

( मिता० ) धारणात्मकयोगाभ्यासे प्रयोजनमाह—

अन्तर्धानमिति । अणिम(१)प्राप्त्या परैरदृश्यत्वमन्तर्धानम् । स्मृतिरतीन्द्रियेष्वर्थेषु मन्वादेरिव स्मरणम् । कान्तिः कमनीयता । दृष्टिरतीतानागतेष्वप्यर्थेषु । तथा श्रोत्रज्ञता अतिदवीयसि देशेऽभि व्यज्यमानतया श्रोत्रपथमनासेदुषामपि शब्दानां ज्ञातृता । निज-शरीरत्यागेन परशरीरप्रवेशनम् । स्वयाच्छावशेनार्थानां (२)कारण-निरपेक्षतया सृष्टिरित्येतद्योगस्य सिद्धेर्लक्षणं लिङ्गम् । न चैतावदेव प्रयोजनं, किन्तु सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ब्रह्मावाप्तये च प्रभवति ॥ २०२-२०३ ॥

( वी०मि० ) यज्ञोपवासाद्यसमर्थस्य सत्त्वशुद्धावुपायान्तरमाह—

अथवाऽप्यभ्यसन् वेदं न्यस्तकर्मा वने वसन् ॥
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥ २०४ ॥

न्यस्तकर्मा काम्यनिषिद्धकर्मत्यागी गृहीतसन्यासाश्रमो वने वसन् वानप्रस्थो वा वेदाभ्यासरतोऽयाचितमितभुक् चित्तशुद्धि द्वारा मोक्षमवाप्नोतीत्यर्थः ॥ २०४ ॥

( मिता० ) यज्ञदानाद्यसम्भवे सत्वशुद्धावुपायान्तरमाह—

अथवेति। अथवा त्यक्तकाम्योऽनिषिद्धकर्मा अन्यतमं वेदमभ्यसन् एकान्तशीलोऽयाचितमिताशनापादितसत्वशुद्धिरात्मोपासनेन परां मुक्तिलक्षणां सिद्धिं प्राप्नोति ॥ २०४ ॥

( वी०मि० ) न केवलं वानप्रस्थसंन्यासाश्रमवर्तोरेव मोक्षः, किन्तु गृहस्थब्रह्मचारिणोरपि । तदुक्तं प्राक् 'स ह्याश्रमैर्विजिज्ञास्य समस्तै'रिति, तत्र गृहस्थस्याऽतिथिपूजादिकमपि सत्वशुद्धावधिक-मपेक्ष्यमित्याह—

( १ ) अणिमाप्त्या ख० । ( २ ) कारणनिरपेक्ष ख०

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥ २०५ ॥

तत्त्वज्ञाननिष्ठ आत्मध्याननिरतः सत्यवादी चकारात् श्राद्धादियुक्त इति सर्वाश्रमसाधारणधर्मवान् न्यायेन सत्प्रतिग्रहादिनाऽर्जितधनोऽतिथिपूजापरो नित्यनैमित्तिकश्राद्धकृदित्यसाधारणगृहस्थधर्मवान् गृहस्थो हि निश्चितं मुच्यते । अपिकारेण ब्रह्मचर्यगुरुसेवादिस्वाश्रमासाधारणसत्यवचनादिसर्वाश्रमसाधारणधर्मवान् ब्रह्मचारी मुच्यत इति समुच्चीयते ॥ २०५ ॥

इति श्रीमत्० याज्ञवल्क्यव्याख्याने अध्यात्मप्रकरणं
यतिधर्मप्रकरणाऽपरनामकम् ॥

( मिता० ) किञ्च—

न्यायेति । सत्प्रतिग्रहादिन्यायेनोपार्जितधनः अतिथिपूजातत्परः नित्यनैमित्तिकश्राद्धानुष्ठाननिरतः सत्यवदनशीलः सन्नात्मतत्त्वध्याननिरतो गृहस्थोऽपि हि यस्मान्मुक्तिमवाप्नोति तस्मान्न केवलमैहिकपा(१)रिव्राज्यपरिग्रह एव मुक्तिसाधनम् ॥ २०५ ॥

इत्यध्यात्मप्रकरणम् ।

( वी०मि० ) अथ नैमित्तिकं प्रायश्चित्तरूपं धर्ममभिधास्यन् तत्प्ररोचनार्थमधिकारिविशेषप्रदर्शनार्थं च कर्मविपाकमाह त्रयोदशभिः श्लोकैः—

महापातकजान् घोरान् नरकान् प्राप्य दारुणान् ॥
कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह ॥ २०६ ॥
मृगश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ॥
खरपुल्कसवेणानां सुरापो नाऽत्र संशयः ॥ २०७ ॥
कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ॥
तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥ २०८ ॥

(१) पारिव्राज्य ख० ।

ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ॥
हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥ २०९ ॥
यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते ॥

महापातकिनो ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमनप्रवन्तस्त-त्संसर्गिणश्च तत्तन्महापातकजान् दारुणान् दुःखैकभोगैनिलयान् नरकान् घोरान् भयानकान् नरकान् प्राप्य अनुभूय कर्मणां महातकजन्यानामदृष्टानां क्षयाद्दुष्फलदानेन क्षयाच्छादलपाव-शिष्टफलकादिह संसारे जायन्ते । तत्र ब्रह्महा मृगादीनां योनिं, सुरापः खरादीनां योनिमृच्छति प्राप्नोति जन्मार्थमत्र न संशयः । ब्राह्मणसुवर्णहारी कृमित्वादिकं गुरुतल्पगस्तृणादिकं क्रमशोऽवाप्नोति मृगादियोनिम् । जन्मान्तरशेषे मनुष्यजन्मवान् ब्रह्महादिः क्षयरोग-श्यावदन्तत्वकुनखित्वदुश्चर्मत्वानि यथाक्रमं लभते । यश्च एषां महा-पातकिनां मध्ये येन ब्रह्मघ्नादिना संवसति पातित्यप्रयोजकसंसर्गवान् भवति स तस्य ब्रह्महादेर्लिङ्गं कुत्सितनखित्वादि तद्वानभिजायते मृगादियोनिषु जायते। आद्यतुशब्देन नरकानन्तरं मोक्षं व्यवच्छिनत्ति। द्वितीयतुशब्देन ब्राह्मणसुवर्णहारित्वव्यवच्छेदः । चकारेण मृगयोन्या-दिजन्मनां क्षयरोगादिभिः समुच्चयः । खरो गर्दभः, पुल्कसो निषा-देन शूद्रायां जातः, वेनो वैदेहकेनाऽम्बष्ठ्यां जातः, कृमिर्मांस-विष्ठासमुद्भूतः, कीटः पिपीलिकादिः, पतङ्गः शलभः, क्षयरोगो राज-यक्ष्मा; श्यावः स्वभावकृष्णः, दुश्चर्मा कुष्ठी ॥ २०६ ॥ २०९ ॥

( मिता० ) 'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' इत्यत्र प्रति पाद्यतया प्रतिज्ञातषड्विधधर्ममध्ये पञ्चप्रकारं धर्ममभिधायाऽधुनाऽव शिष्टं नैमित्तिकं धर्मजातं प्रायश्चित्तपदाभिलप्यं प्रारिप्सुः प्रथमत-स्तत्प्ररोचनार्थमधिकारिविशेषप्रदर्शनार्थं चाऽर्थवादरूपं कर्मविपाकं तावदाह—

महापातकजानिति । ब्रह्महत्यादिपञ्चकस्य महापातकसंज्ञा 'ब्रह्म हा मद्यप' इत्यत्र वक्ष्यते । तद्योगिनो महापातकिनस्ते महापातकजानि-तांस्तामिस्रादिनरकान् स्वजनितदुष्कृतानुरूपान् घोरानतितीव्रवेदना-पादकत्वेनाऽतिभयङ्करान् दारुणान् दुःखैकभोगनिलयान् प्राप्य कर्म-क्षयात् कर्मजन्यनरकदुःखोपभोगक्षयादनन्तरं कर्मशेषात् पुनरिह

संसारे दुःखबहुलश्वशृगालादितिर्यग्योनिषु प्रकर्षेण भूयो भूयो जायन्ते। महापातकिग्रहणमितरेषामप्युपपातक्यादीनामुपलक्षणम्। तेषां च तिर्यगादियोनिप्राप्तेर्वक्ष्यमाणत्वात् ॥ २०६ ॥

( मिता० ) महापातकिनां संसारप्राप्तिमुक्त्वा तद्विशेषकथनायाह—

मृगेति। मृगा हरिणादयः श्वसूकरोष्ट्राः प्रसिद्धाः तेषां योनिं ब्रह्महा स्वकर्मशेषेण प्राप्नोति। खरो रासभः, पुल्कसः प्रतिलोमनिषादेन शूद्र्यां जातः, वैदेहकेनाम्बष्ठ्यां जातो वेणस्तेषां योनिं(१)सुरापः प्राप्नोति। कृमयः सजातीयसम्भोगनिरपेक्षा मांसविष्ठागोमयादिजन्याः, ततः किञ्चित्स्थूलतराः पक्षास्थिरहिताः पिपीलिकादयः कीटाः, पतङ्गाः शलभाः, तेषां योनिं ब्राह्मणस्वर्णहारी प्राप्नुयात्। तृणं काशादि, गुल्मलते प्रागुक्ते, तज्जातीयतां क्रमेण गुरुतल्पगः प्राप्नोति। एतच्चाऽकामकृतविषयम्। कामकारकृते त्वन्यास्वपि दुःखबहुलयोनिषु संसरन्ति। यथाह मनुः ( १२।५५–५८ )—'श्वसूकरखरोष्ट्राणां गो(२)वाजिमृगपक्षिणाम्। चाण्डालपुल्क(३)सानां च ब्रह्महा योनिमृच्छति ॥ कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम्। हिंस्राणां चैव सत्वानां सुरापो ब्राह्मणो व्रजेत् ॥ लूताऽहिसरटानां च तिरश्चां चाम्बुचारिणाम्। हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः' ॥ लूतोर्णनाभः। सरटः कृकलासः। 'तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि। क्रूरकर्मकृतां चैव शतशो गुरुतल्पगः' ॥ इति ॥ २०७–२०८ ॥

( मिता० ) एवं च तिर्यक्त्वादुत्तीर्णानां मानुष्ये रोगादिलक्षणानि भवन्तीत्याह—

ब्रह्महेति। किञ्च—एवं रौरवादिनरकेषु श्वसूकरखरादियोनिषु च दारुणं दुःखमनुभूयाऽनन्तरं दुरितशेषेण जननसमय एव क्षयरोगादिलक्षणयुक्ताः प्रचुरेषु मानवशरीरेषु संसरन्ति। ब्रह्महा क्षयरोगी राजयक्ष्मी भवेत्। निषिद्धसुरापः स्वभावतः कृष्णदशनः। ब्राह्मणहेम्नो हर्ता कुत्सितनखत्वम्। गुरुदारगामी दुश्चर्मत्वं कुष्ठिताम्। एषां ब्रह्महादीनां मध्ये येन पतितेन यः पुरुषः संवसति स तल्लिङ्गोऽभिजायते ॥ २०९ ॥

---

( १ ) योनीः ख० । ( २ ) गोजाविमृगपक्षिणामिति पाठः।
( ३ ) पुल्कसानां च ङ० ।

अन्नहर्ताऽऽमयावी स्यान्मूको वागपहारकः ॥ २१० ॥
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ॥
तैलहृत्तैलपायी स्यात्पूतिवक्त्रश्च(१) सूचकः ॥ २११ ॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ॥
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः ॥ २१२ ॥
हीनजातौ प्रजायेत पररत्नापहारकः ॥
पत्रशाकं शिखी हृत्वा गन्धान् छुछुन्दरी शुभान् ॥२१३॥
मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं क(२)पिः ॥
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥ २१४ ॥
मधु दंशः फलं गृध्रो गां गोधाऽग्निं बकस्तथा ॥
श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः ॥ २१५ ॥

( वी०मि० ) अन्नस्य सिद्धान्नस्य हर्ता चौर्यकारी यः स जन्मान्तरे आमयावी अजीर्णाग्निः स्यात् । वाचः पुस्तकस्य गुर्वाचार्याणां तु ज्ञानस्य वेदादेर्वा अपहारकश्चौर्येणाऽऽपादानकारी मूकः स्यात् । जन्मान्तर इति सर्वत्र योज्यम् । धान्यमिश्रो व्रीह्याद्यपहारकस्तु शुद्धान्नं विक्रयाद्यर्थमसमीचीनधान्यमिश्रणकर्ता अतिरिक्ताङ्गः षड्ङ्गुलकरादिमान् स्यात् । पिशुनो विद्यमानपरदोषप्रकाशको दुर्गन्धनासिकः स्यात् । तैलहर्ता तैलपायी कीटविशेषः स्यात् । सूचको ऽ(३)सद्दोषसङ्कीर्तकः दुर्गन्धिमुखः स्यात् । अरण्ये इत्यादि स्पष्टम् । ब्रह्मराक्षसो भूतविशेषः । हीनजातौ हेमकारात्मिकायाम्—

मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः ।
विविधानि च रत्नानि जायन्ते हेमकर्तृषु ॥

इति मनुवचनात् । पत्रशाकं वास्तुकादि हृत्वा शिखी मयूरः स्यात् । हृत्वेति द्वितीयान्ते सर्वत्राऽन्वेति । तेन शुभान् गन्धान् चन्दनादीन् हृत्वा छुछुन्दरी मूषिकाप्रभेदः स्यादित्यादिवाक्यार्थः । प्लवः पक्षिविशेषः । गृहकारी वरटाख्यः कीटविशेषः । दंशो वन-

( १ ) वकस्तु—इति मु० पु० पाठः । ( २ ) कपि फलम्—इति मु० पु० पाठः ।
( ३ ) सूचकोऽन्यदोष०—इति मु० पु० पाठः ।

मक्षिका। पलं मांसम्। गोधा स्थलग्राहः। श्वित्री श्वेतकुष्ठी। रसः गुडद्राक्षादिः। चीरी उच्चैःस्वरः कीटविशेषः। शेषं सुगमम्। तुशब्देन स्वाम्यनुमतिव्यवच्छेदार्थकेन श्वेतपदार्थस्याऽचौर्यपर्यवसानम्। हिशब्दोऽवधारणे, चकाराभ्यां तथाशब्देन च स्तेयान्तराणां बहूनां तत्तद्ग्रन्थो(१)क्तविपाकसमुच्चयः॥ २१०-२१५॥

( मिता० ) किञ्च—

अन्नहर्तेति। अन्नस्यापहर्ता आमयावी अजीर्णान्नः। वागपहारकोऽननुज्ञाताध्यायी पुस्तकापहारी च मूको वागिन्द्रियविकलो भवेत्। धान्यमिश्रोऽतिरिक्ताङ्गः षडङ्गुल्यादिः पिशुनो विद्यमानपरदोषप्रख्यापनशीलः पूतिनासिकः दुर्गन्धनासिकः तैलस्य हर्ता तैलपायी कीटविशेषो भवति। सूचकोऽसद्दोषसङ्कीर्तनो दुर्गन्धिवदनो जायते। एतच्च तिर्यक्त्वप्राप्त्युत्तरकालं मानुषशरीरप्राप्तौ द्रष्टव्यम्। (१२।६८)—'यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः'॥ इति मनुस्मरणात्॥ २१०-२११॥

( मिता० ) किञ्च—

परस्येति। यः परदारानपहरति ब्रह्मस्वं च सुवर्णव्यतिरिक्तमपहरति असावरण्ये निर्जले देशे ब्रह्मराक्षसो भूतविशेषो जायते॥२१२॥

( मिता० ) किञ्च—

हीनेति। हीनजातौ हेमकाराख्यायां पक्षिजातौ पररत्नाद्यपहारको जायते। तथा च मनुः (१२।६१) 'मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः। विविधानि च रत्नानि जायते हेमकर्तृषु'॥ इति। पत्रात्मकं शाकं हृत्वा मयूरः। शुभान् गन्धानपहृत्य छुछुन्दरी राजदुहिताख्या मूषिका जायते॥ २१३॥

( मिता० ) किञ्च—

मूषक इति। धान्यहारी आखुः। यानं हृत्वोष्ट्रः। फलं वानरः। जलं प्लवः (२)शकटबिलाख्यः पक्षी। पयः क्षीरम्। काको ध्वाङ्क्षः। गृहोपस्करं मुसलादि हृत्वा गृहकारी (३)चटकाख्यः कीटविशेषः। मधु हृत्वा दंशाख्यः कीटः। पलं मांसं तद् धृत्वा गृध्राख्यः पक्षी। गां हृत्वा गोधाख्यः प्राणिविशेषः। अग्निं हृत्वा बकाख्यः पक्षी। वस्त्रं

(१) तत्तच्छास्त्रोक्त०—इति ग० पु० पाठः।

(२) शकटाविलाख्यः ट०। (३) चटकाख्यः ट०।

हृत्वा श्वित्री । इक्ष्वादिरसं हृत्वा सारमेयः । लवणहारी चीर्यांख्यः उच्चैःस्वरः कीटः ॥ २१४-२१५ ॥

प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि ॥
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ २१६ ॥
यथाकर्म फलं प्राप्य तिर्यक्त्वं कालपर्ययात् ॥
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ २१७ ॥

( वी०मि० ) एतद्योनिविशेषजन्यस्तेयकर्मणि(१) कृते एतत्प्रदर्शनार्थं प्रायश्चित्ताधिकारिनिरूपणप्रसङ्गेन यत्किञ्चिदुदाहरणार्थं मया ते उक्तं विशिष्याऽभिहितम् । अन्ये च विशेषाः संक्षेपेणोच्यन्ते । यथा द्रव्यस्याऽपह्रियमाणस्य प्रकाराः, तथैव जन्मान्तरे प्राणिजातयो भवन्ति । यथा दुग्धापहाराद् श्वित्री बकः, दीपापहारी पेचक इत्यादि । विशेषश्चाऽत्र प्रकृतानुपयोगाद्ग्रन्थकृता नाऽभिहितः । प्रदर्शनार्थं स्त्वित्यन्वये(२)न मुख्यतोऽभिधेयत्वं कर्मविपाकस्य व्यवच्छिनत्ति । हिशब्देनाऽवधारणमभिप्रैति । क्षयरोगादिकं न मृगादिजन्मन्येव किन्तु मनुष्ययोनौ पश्चाज्जनिरिति प्रागुक्तं विवेचयन्नेव तैलपायिजन्माद्यनन्तरं पुनर्मनुष्ययोनौ दरिद्रा जायन्त इत्याह-यथेति । पुरुषाधमाः कृतपापाः यथाकर्म दुष्कृतानतिक्रमेण फलं नरकं तिर्यक्त्वं च प्राप्य कालपर्ययात् कालान्तरमासाद्य धर्मपुरुषलक्षणहीनाद्दरिद्रा जायन्ते ॥ २१६-२१७ ॥

( मिता० ) एवं प्रदर्शनार्थं किञ्चिदुक्त्वा प्रतिद्रव्यं (३)घुणाकोटिन्यायेन वक्तुमशक्तेरेकोपाधिना कर्मविपाकं दर्शयितुमाह—

प्रदर्शनार्थमिति । द्रव्यस्यापह्रियमाणस्य यादृशाः प्रकारास्तादृशा एव प्राणिजातयः स्तेयकर्मण्यपहर्तारो भवन्ति । यथा कांस्यहारी हंस इति । अथवा यत्फलसाधनं द्रव्यमपहरति तत्साधनविकलो यथा पङ्गुतामश्वहारक इति । शब्देन क्वचिद्विशेषो दर्शितः । ब्रह्महा कुष्ठी । तैजसापहारी मण्डली । देवब्राह्मणाक्रोशकः खलतिः । गरदश्चाग्निदश्चोन्मत्तौ । गुरुं प्रतिहन्ताऽपस्मारी । गोघ्नश्चाऽन्धः । धर्मपत्नीं त्यक्त्वाऽन्यत्र प्रवृत्तः शब्दवेधी प्राणिविशेषः । कुण्डाशी भगभक्षः ।

(१) स्तेयकाले-इति ख० पु० पाठः । (२) त्वित्यत्र येन—इति ख० पु० पाठः ।
(३) घटाक्षरः क० ।

देव(१)ब्रह्मस्वहारी पाण्डुरोगी । न्यासापहारी च काणः । स्त्रीपण्योपजीवी षण्ढः । कौमारदारत्यागी दुर्भगः । मिष्टैका(२)शी वातगुल्मी । अभक्ष्यभक्षको गण्डमाली । ब्राह्मणीगामी निर्बीजो । क्रूरकर्मा वामनः । वस्त्रापहारी पतङ्गः । शय्यापहारी क्षपणकः । शङ्खशुक्त्यपहारी कपाली । दीपापहारी कौशिकः । मित्रध्रुक् क्षयी । मातापित्रोराक्रोशकः (३)खञ्जक इति । गौतमोऽपि कंचिद्विशेषमाह । अनृतवागुल्वलः मुहुर्मुहुः संलग्नवाक् । जलोदरी दारत्यागी । कूटसाक्षी श्लीपदी उरुछू(४)नजङ्घाचरणः । विवाहविघ्नकर्ता छिन्नौष्ठः । (५)अवगूरणः छिन्नहस्तः । मातृघ्नोऽन्धः । स्नुषागामी वातवृषणः । चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्री । कन्यादूषकः षण्ढः । ईर्ष्यालुर्मशकः । पित्रा विवदमानोऽपस्मारी । न्यासापहारी अनपत्यः । रत्नापहारी अत्यन्तदरिद्रः । विद्याविक्रयी पुरुषमृगः । वेदविक्रयी द्वीपी । बहुयाजको जलप्लवः । अयाज्ययाजको वराहः । अनिमन्त्रितभोजी वायसः । मृ(६)ष्टैकभोजी वानरः । यतस्ततोऽश्नन् मार्जारः । कक्षवनदहनात्खद्योतः । दारकाचार्यो मुखविगन्धिः । पर्युषितभोजी कृमिः । अदत्तादायी बलीवर्दः । मत्सरी भ्रमरः । अग्न्युत्सादी मण्डलकुष्ठी । शूद्राचार्यः श्वपाकः । गोहर्ता सर्पः । स्नेहापहारी क्षयी । आशापहारी अजीर्णी । ज्ञानापहारी मूकः । चण्डालीपुल्कसीगमने अजगरः । प्रव्रजितागमने मरुपिशाचः । शूद्रीगमने दीर्घकीटः । सवर्णाभिगामी दरिद्रः । जलहारी मत्स्यः । क्षीरहारी बलाकः । वार्धुषिकोऽङ्गहीनः । अविक्रेयी गृध्रः । राजमहिषीगामी नपुंसकः । राजाक्रोशको गर्दभः । गोगामी मण्डूकः । अनध्यायाध्ययने शृगालः । परद्रव्यापहारी परप्रेष्यः । मत्स्यवधे गर्भवासी । इत्येतेऽनूर्ध्वगमना इति । स्त्रियोऽप्येतेषु निमित्तेषु पूर्वोक्तास्वेव जातिषु स्त्रीत्वमनुभवन्ति । यथाह मनुः (१२।६९)—'स्त्रियोऽप्येतेन कल्पेन हृत्वा(७) दोषमवाप्नुयुः । एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः' ॥ इति । एतच्च क्षयित्वादिलक्षणकथनं प्रायश्चित्तोन्मुखीभूतब्रह्महाद्युद्वेगजननार्थं न पुनः क्षयित्वादिलक्षणयुक्तानां द्वादशवार्षिकादिव्रतप्राप्त्यर्थं

(१) पृष्ठाकोटेन० ख० । (२) ब्रह्मस्वहरः ख० । (३) मृष्टकाशी पाठः ।
(४) खण्डकारः ख० । (५) अस्थूलजङ्घ ट० ।
(६) मिष्टकभोजी ट० । (७) हृत्वा दोषं ख० ।

संसर्गनिवृत्त्यर्थं वा। तथा हि-पापक्षयार्थं प्रायश्चित्तम्। (१)न च प्रायश्चित्तेन प्रारब्धफलपापापूर्वविनाशे किञ्चन प्रयोजनमस्ति। न हि कार्मुकनिर्मुक्तो बाणो लक्ष्यवेधे वेद्धुस्तद्व्यापारस्य वा (२)सत्तान्तरं पुनरपेक्षते। न च तदारब्धफलनाशार्थोऽपूर्वनाशोऽन्वेषणीयः। न हि निमित्तका(३)रणीभूतचक्रचीवरादिविनाशेन तदारब्धकरकादिविनाशः। न च नैसर्गिकं कौनख्यादिकं प्रत्यानेतुं शक्यते। किञ्च नरकातिर्यग्योन्यादिजन्यदुःखपरम्परामनु(४)भूतस्य हि कौनख्यादिको विकारश्चरमं फलम्। तेन चोपशममात्रेण स्वकारणापूर्वनाशो जन्यते मन्थनजनिताऽऽशुशुक्षणिवारणिक्षयः। तस्माच्च पापविनाशार्थं व्रतपरिचर्या नापि संव्यवहारार्थम्। न हि शिष्टाः कुनख्यादिभिः सह सम्बन्धं परिहरन्ति। प्राची(५)नक्षयात्पापनाशेन संव्य(६)वहार्यत्वस्यापि सिद्धेर्नार्थो व्रतचर्यया। यत्तु वशिष्ठेनोक्तम्—'कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरेत्' इति, तत्कौमयस्यादिवन्नैमित्तिकमात्रं न पुनः पापक्षयार्थं संव्यवहार्यत्वसिद्ध्यर्थं वेति मन्तव्यम् ॥ २१६ ॥

( मिता० ) किञ्च—

यथाकर्मेति। यथाकर्म स्वकृतदुष्कृतानतिक्रमेण तदनुरूपं नरकादिफलं तिर्यक्त्वं च प्राप्य कालक्रमेण क्षीणे कर्मणि दुष्टलक्षणा दरिद्राश्च पुरुषेषु निकृष्टा जायन्ते ॥ २१७ ॥

ततो निष्कल्मषीभूताः कुले महति भोगिनः ॥
जायन्ते विद्ययोपेता धनधान्यसमन्विताः ॥ २१८ ॥

( वी०मि० ) निष्कल्मषीभूताः भोगविद्याधनधान्योपेता महति कुले प्राक्तनपुण्यवशेन जायन्ते ॥ २१८ ॥

( मिता० ) किञ्च—

तत इति। ततो दुर्लक्षणमनुष्यजन्मानन्तरं निष्कल्मषीभूता नरकाद्युपभोगद्वारेण क्षीणपापाः प्राग्भवीयसुकृतशेषेण महाकुले भोगसम्पन्नाः विद्याधनधान्यसम्पन्ना जायन्ते ॥ २१८ ॥

---

(१) नच प्रारब्ध ख० । (२) सत्ता पुनरपेक्षते ख० । (३) कारणभूत ख० ग० ।
(४) मनुभूय तस्य ख० । (५) प्राचीनतपद क० ख० ।
(६) संव्यवहारार्थत्वस्यापि ख० ।

विहितस्याऽननुष्ठानान्निन्दितस्य च सेवनात् ॥
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१९ ॥
तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये ॥
एवमस्याऽन्तरात्मा च लोकश्चैव प्रसीदति ॥ २२० ॥

( वी०मि० ) अथ प्रायश्चित्तस्य निमित्तं पापं फलं च, तन्नाशरूपमाह—

विहितस्य नित्यनैमित्तिकस्य कर्मणोऽननुष्ठानादकरणात् निन्दितस्य परदारोपगमहिंसादेः सेवनात् करणात् इन्द्रियाणामनिग्रहाद्गीतनृत्यादिष्वनिग्रहादत्यासक्तीकरणाच्च नरः पतनं नरकपातजनकं पापमृच्छति प्राप्नोति। तस्मात्पापान्निमित्तभूतात्तेन नरेण विशुद्धये पापनाशार्थितया प्रायश्चित्तं द्वादशवार्षिकादि इह धर्मार्जनयोग्यदेशे आर्यावर्तादौ कर्तव्यम् । एवं प्रायश्चित्ते कृते सति अस्य नरस्य अन्तरात्मा क्षेत्रज्ञः प्रसीदति निष्पापो भवति, लोकश्च तेन सह व्यवहर्तुं प्रसीदति विचिकित्सारहितो भवति । अथ—

इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ।

इतीन्द्रियानिग्रहस्याऽपि निषिद्धत्वात्पृथगभिधानमसङ्गतमिति चेत्, मैवं स्नातकधर्ममध्ये तस्य व्रतत्वेनाऽभिधानमितीन्द्रियप्रसक्तिविरहसङ्कल्प एव तत्र विधेयो, न तु तेन वाक्येनेन्द्रियप्रसक्तिर्निषिध्यत इति तात्पर्यात्। न च व्रतस्याप्यनित्यत्वं येन विहिताननुष्ठानमध्येऽन्तर्भावः स्यादिति दिक् । केचित्तु इन्द्रियाणामनिग्रहात्तत्त्वज्ञानानुदयादिति पापजनने सहकारिणोऽभिधानमिति वदन्ति । चकाराभ्यां परशाखो(१)क्ताचरणव्युत्क्रमानुष्ठानयोः सङ्ग्रहः ।

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया वा यथाक्रिया ॥

इति कात्यायनवचनात् । अन्त्याभ्यां नरकाभावकर्मविपाकाभावयोः समुच्चयः । एवकारेणाऽवश्यकर्तव्यत्वमुक्तम् , तेन काम्यत्वशङ्का परास्ता ॥ २१९-२२० ॥

( मिता० ) एवं प्रायश्चित्तेषु प्ररोचनार्थं कर्मविपाकमभिधायाऽधुना तेष्वेवाऽधिकारिणं निरूपयितुमाह—

(१) परशाखोक्ता०—इति ख० पु० पाठः ।

विहितस्येति । विहितमिति यदावश्यकं सन्ध्योपासनाऽग्निहोत्रादिकं नित्यमशुचिस्पर्शादौ नैमित्तिकत्वेन चोदितं स्नानादिकं च तदुभयमुच्यते तस्याकरणात्, निन्दितस्य निषिद्धस्य सुरापानादेः करणात्, इन्द्रियाणामनिग्रहाच्च नरः पतनमृच्छति प्राप्नोति । प्रत्यवायी भवतीति यावत् । ननु 'इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः' इतीन्द्रियप्रसक्तेरपि निषिद्धत्वान्निन्दितग्रहणेनैव गतार्थत्वात्किमर्थमनिग्रहाच्चेन्द्रियाणामिति पृथगुपादनम् । अत्रोच्यते—इन्द्रियप्रसक्तिनिषेधस्य नैकान्ततः प्रतिषेधरूपता स्नातकव्रतमध्येऽस्य पाठात्, तत्र च 'व्रतानीमानि धारयेत्' इति व्रतशब्दाधिकाराच्छ्रवणाच्चेन्द्रियप्रसक्तिप्रतिषेधकः सङ्कल्पो विधीयते । स च(१) भावरूप इति पृथगुपादानम् । ननु विहिताकरणात् प्रत्यवैतीति कुतोऽध्यवसितम् । न तावदग्निहोत्रादिचोदना पुरुषप्रवर्तनात्मिकाऽननुष्ठानस्य प्रत्यवायहेतुतामाक्षिपति । विषयानुष्ठानस्य पुरुषार्थत्वावगतिमात्रपर्यवसायिनी हि सा तावन्मात्रेण प्रवृत्त्युपपत्तेर्न पुनरकरणस्य प्रत्यवायहेतुत्वमपि वक्ति, क्षीणशक्तित्वादनुपपत्तेः । किञ्च—(२)यद्यनुपपत्त्युपशमेति प्रवृत्तिसिद्ध्यर्थमर्थान्तरं कल्प्यते तर्हि निषिध्यमानक्रियाजन्यप्रत्यवायपरिहारार्थतयैव तद्वर्जनस्य पुरुषार्थत्वसिद्धावपि फलान्तरं कल्प्येत । न चैतत्कस्यचिदपि संमतम् । ननु यथा निषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैव पुरुषार्थत्वं तथा विहितेष्वप्यर्थवादावगताकरणजन्यप्रत्यवायपरिहारार्थता कस्मान्न स्यात् । नैवम् । न हि सर्वत्राग्निहोत्रादिषु तादृग्विधा अर्थवादाः सन्ति । न च 'विहितस्याऽननुष्ठानान्नरः पतनमृच्छति' इतीयं स्मृतिरेव वाक्यशेषस्थानीयेति चतुरस्रम् । न हि वाक्यान्तरप्रमिते कार्ये वाक्यान्तरेणाऽर्थवादः सम्भवति । भवतु वा कथञ्चिदेकवाक्यतयाऽर्थवादस्तथापि ना(३)भावरूपं विहिताकरणे कार्यान्तरं जनयितुं क्षमते । ननु 'ज्वरे चैवाऽतिसारे च लङ्घनं परमौषधम्' इत्यायुर्वेदवचनाद्भोजनाभावरूपं लङ्घनं ज्वरशान्तिं जनयतीति यथाऽवगम्यते तथाऽत्रापि भवतु । नैवम्—यतो नात्रापि लङ्घनाज्ज्वरशान्तिः किं तर्हि ज्वरनाशप्रतिबन्धकभोजनाभावे सति जठरानलपरिपा(४)कजनिताद्धातुसाम्यादिति

(१) स चोभय ख०। (२) यद्यप्यनुप ख०।
(३) नाभावरूपविहिताकरण ख०। (४) परिपाकजननाद्धातु ख०।

मन्तव्यम्। तस्मात् 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इति कथमस्याः स्मृतेर्गतिरिति वाच्यम्। उच्यते—अग्निहोत्रादिविषयाधिकारासिद्धिरूपभूतप्रत्यवायाभिप्रायेणेति न दोषः। ननु (१२।७१।)–'वान्ताश्युल्कामुखः प्रेतो वि(१)प्रो धर्मात्स्वकाच्च्युतः। अमेध्यकुणपाशी तु क्षत्रियः कटपूतनः॥ मैत्राक्ष(२)ज्योतिकः प्रेतो वैश्यो भवति पूयभुक्। चैलाशकस्तु भवति शूद्रो धर्मात्स्वकाच्च्युतः'॥ इति। एतानि विहिताकरणप्रत्यवायपराणि मनुवचनानि कथं घटन्ते। उच्यते—यथा वान्तमश्नुत उल्कया वा दह्यमानमुखस्य दुःखं तथाऽस्यापि विहितमकुर्वतः पुरुषस्य पुरुषार्थासिद्धेरित्यकरणनिन्दनमनुष्ठानप्ररोचनार्थमित्यविरोधः। यद्वा प्राग्भवीयानिषिद्धाचरणाक्षिप्तविहितानुष्ठानविरोधिरागालस्यादिजन्यवान्ताद्युल्कामुखप्रेतत्वादिरूपमिति न क्वचिदभावस्य कारणतेति मन्तव्यम्। ननु पुंश्चलीवानरखरदष्ट(श्वदष्ट)मिथ्याभिशस्तादौ विहिताकरणादिनिमित्तानामन्यतमस्याप्यभावात्कथं प्रत्यवायिता, कथं च तदभावे प्रायश्चित्तविधानम्। उच्यते—अस्मादेव पापक्षयार्थप्रायश्चित्तविधानाज्जन्मान्तराचरितनिषिद्धसेवादिजन्यपापापूर्वं समाक्षिप्तमित्यभिशापादिकं तन्निमित्तप्रायश्चित्तापनोद्यमनेनाऽनुष्ठितमिति कल्प्यते। पुरुषप्रयत्ननैरपेक्ष्येण कार्यरूपपापोत्पत्त्यनुपपत्तेः। न च पुंश्चल्यादिगतप्रयत्नेन पुरुषान्तरे पापोत्पत्तिः, कर्तृसमवायित्वनियमाद्धर्माधर्मयोः। तस्माद्युक्तैव प्रायाश्चि(३)त्ते निमित्तत्रयपरिगणना। तथा च मनुः (११।४४)—'अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः'॥ इति। नरग्रहणं प्रतिलोमजातानामपि प्रायश्चित्ताधिकारप्राप्त्यर्थम्। तेषामप्यहिंसादिसाधारणधर्मव्यतिक्रमसम्भवात्। यस्मादेवं निषिद्धाचरणादिना प्रत्यवैति तस्मात्तेन कृतनिषिद्धसेवादिना पुरुषेण प्रायश्चित्तं कर्तव्यमिह लोके परत्र च विशुद्ध्यर्थम्। प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः। एवं प्रायश्चित्ते कृते अस्याऽन्तरात्मा शुद्धतया प्रसीदति लोकश्च संव्यवहर्तुं प्रसीदति। एवं वदतैतद्दर्शितम्—नैमित्तिकोऽयं

(१) विप्रो भवति विच्युतः ग. ङ.।

(२) मित्रदेवताकत्वान्मैत्रः पायुस्तद्देवाक्षं कर्मेन्द्रियं तत्र ज्योतिर्यस्य।

(३) प्रायश्चित्तनिमित्त ङ।

(४) लोकश्चायं संव्यव ख०।

प्रायश्चित्ताधिकारः, तत्र चाऽर्थवादगतदुरितक्षयोऽपि जातेष्ट्यायेन साध्यतया स्वीक्रियते । न च दुरितपरिजिहासुनाऽनुष्ठीयत इत्येतावता कामाधिका(१)राशङ्का कार्या । यस्मात् (मनुः ११।५३)—'चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये । निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः' ॥ इत्यकरणे दोषश्रवणे दोषश्रवणेनाऽऽवश्यकत्वावगमात् ॥ २१९-२२० ॥

(वी०मि०) अत एवाऽकरणेऽनिष्टमाह—

प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ॥

अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥२२१॥

भयानकान् नरकान् यान्ति ॥ २२१ ॥

( मिता० ) प्रायश्चित्ताकरणे दोषमाह—

प्रायश्चित्तमिति । पापेषु शास्त्रार्थव्यतिक्रमजनितेषु प्रसक्ताः पुरुषाः अपश्चात्तापिनो मया दुष्कृतं कृतमित्येवमुद्वेगरहिताः प्रायश्चित्तमकुर्वाणाः दुः(२)सहान्नरकान् प्राप्नुवन्ति ॥ २२१ ॥

( वी०मि० ) नरकानिति बहुवचनसूचितं नरकाणां बहुविधत्वं प्रदर्शयन्नुक्रमे(३)णाऽर्थं विस्तरेणाह—

तामिस्रं लोहशङ्कुं च महानिरयशाल्मली ॥

रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ २२२ ॥

सङ्घातं लोहितोदं च सविषं सम्प्रपातनम् ॥

महानरककाकोलं सञ्जीवनमहापथम् ॥ २२३ ॥

अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ॥

असिपत्रवनं चैव तपनं चैकविंशकम् ॥ २२४ ॥

महापातकजैर्घोरैरुपपातकजैस्तथा ॥

अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ॥ २२५ ॥

तामिस्रादीनेकविंशतिनरकानन्वर्थसंज्ञावतो महापातकजैस्तथापदेन महापातकसमस्तैरुपपातकैश्च पापैर्बहुदुःखप्रदर्शकत्वेन घोरै-

---

( १ ) धिकाराशङ्का क० । ( २ ) दुस्तरान् क ।

( ३ ) प्रदर्शयन् क्रमेणार्थं—इति ख० पु० पाठः ।

रन्विता नराधमाः अकृतप्रायश्चित्ता यान्तीत्यर्थः । चकारैराद्य-तथाशब्देन क्वचित्समुच्चयः क्वचिद्विकल्पो नरकाणामिति सूचयति, मार्कण्डेयपुराणाद्युक्तनरकान्तरान् समुच्चिनोति च । एवकाराभ्यामत्यावश्यकत्वं नरकाणां दर्शितम् ॥ २२२-२२५ ॥

( मिता० ) नरकस्वरूपं विवृण्वन्नाह--

तामिस्रमित्यादि । तामिस्रप्रभृतींस्तपनपर्यन्तानेकविंशतिनरकानन्वर्थसंज्ञाद्योतितावान्तरभेदान् महापातकोपपातकजनितभयङ्करदुरितैरन्विता अनाचरितप्रायश्चित्ताः पुरुषाधमाः प्राप्नुवन्ति।२२२-२२५॥

( वी०मि० ) पापक्षयः प्रायश्चित्तेन भवतीत्युक्तौ विशेषमाह—

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ॥
कामतो व्यवहार्यस्तु वचनादिह जायते ॥ २२६ ॥

महापातकजन्यमेनः पापं यदज्ञानकृतं भवति तदेव द्वादशवार्षिकादिप्रायश्चित्तैरपैति । कामतो यदेनः कृतं तत्र द्वादशवार्षिकादिप्रायश्चित्तैरिह लोके व्यवहार्यो जायते ।

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ।
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् ॥

इति मनुवचनादित्यर्थः । न हि तत्प्रायश्चित्तमफलमिति, लोकव्यवहार्यत्वमेव तत्फलमिति भावः । अत्र ज्ञानत इति वक्तव्ये कामत इति प्रवर्तकज्ञानकामनयोः समनियमाभिप्रायेणोक्तम् । तुशब्देन पापक्षयव्यवच्छेदः ।

इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥

इति मनुवचनात् । इदं त्ववधेयं–प्राणान्तिकप्रायश्चित्तेन कामकृतेऽपि महापातके पापं नश्यत्येव फलान्तरस्याऽसम्भवात् । 'नाऽस्याऽस्मिंल्लोके प्रत्यापत्तिर्विद्यते, कल्मषं तु निहन्यते' इति आपस्तम्बवचनाच्च । 'हतः शुद्धिमवाप्नुया'दित्यग्रे ग्रन्थकृता वक्ष्यमाणत्वाच्च । एवं चाऽत्र प्रायश्चित्तपदं मरणान्तिकप्रायश्चित्तव्यतिरिक्तपरम् । अत एव द्वादशवार्षिकप्रायश्चित्तं समभिधाय 'विशुद्धि'रित्यनेन तदेवोपक्रान्तं, 'निष्कृतिर्न विधीयते' इत्यनेन यत्पर्युदस्तं मनुना । महापातकव्यतिरिक्तपापे तु कामकृते प्रायश्चित्तं द्विगुणं पापनाशकमपि ।

विहितं यदकामानां कामात्तु द्विगुणं भवेत् ।

इत्याङ्गिरोवचनात् ।

अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति ।
कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः ॥

इति मनुवचनाच्च । मोहशब्दोऽबुद्धिपूर्वकव्यतिक्रमार्थः ।

यः कामतो महापापं नरः कुर्यात्कथञ्चन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥

इति मिताक्षरावचनाच्चायमर्थः स्फुटमवगम्यत इत्यास्तां विस्तर ॥२२६॥

(मिता०) उपात्तदुरितनिरासार्थं प्रायश्चित्तमित्युक्तं, तत्र विशेषमाह—

प्रायश्चित्तैरिति । प्रायश्चित्तैर्वक्ष्यमाणलक्षणैरज्ञानाद्देनः पापं कृतं तदपैति गच्छति न कामतः कृतम् । किन्तु तत्र प्रायश्चित्तविधायकवचनबलादिह लोके व्यवहार्यो जायते । अत्र च 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृत'मित्युपक्रमात्तत्प्रतियोगितया ज्ञानत इति वक्तव्ये यत्कामत इत्युक्तं तत् ज्ञानकामयोस्तुल्यत्वप्रदर्शनार्थम् । तथा हि 'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' । तथा अबुद्धिपूर्वक्रियायामर्धं प्रायश्चित्तम् । तथा 'म्लेच्छेनाधि(१)गतः शूद्रस्त्वज्ञानात्तु कथञ्चन । कृच्छ्रत्रयं प्रकुर्वीत ज्ञाना(२)त्तु द्विगुणं भवेत्' ॥ (३)इत्यादिभिर्वचनैर्ज्ञानकामनयोस्तुल्यप्रायश्चित्तदर्शनात्तुल्यफलतैव । किञ्च स्वतन्त्रप्रवृत्तिर्विषयज्ञानकामनाभ्यां नियता, तयोरन्यत(४)रापायेऽपि तस्या असम्भवादतः कामत इत्युक्तं ज्ञानम् । ज्ञानत इत्युक्तेऽपि कामः प्राप्नोत्यविनाभावात् । न च चौरादिभिर्बलात्प्रवर्त्यमानस्य सत्यपि विषयज्ञाने कामानाभावाच्चाविनाभाव इति वाच्यम् । यतोऽत्र विद्यमा(५)नस्यापि ज्ञानस्य प्रवृत्तिहेतुत्वाभावेनासत्समत्वम् । यत्तु शुष्केऽपि पिपतिषोर्भ्रान्त्या कर्दमपतनं तत्रापि वास्तवज्ञानाभावात्तद्विषयकामनायाश्चाऽभाव एव । एवमज्ञानाकामनयोरप्यव्यभिचार एव । ननु 'प्रायश्चित्तैरपैत्येन' इति न युक्तं, फलविनाश्यत्वात्कर्मणाम् । नैवम्—यथा पापोत्पत्तिः शास्त्रगम्या तथा तत्परिक्षयोऽपीति नात्र प्रमाणान्तरं क्रमते । अत एव गौतमेन पूर्वोत्तरपक्ष-

---

(१) धिगता शूद्रा त्वज्ञानात्तु ख० । (२) ज्ञानात्तद्द्विगुण ग० ज्ञानं तु द्विगुण ङ० ।
(३) इत्यप्युर्वचनैः ङ० । (४) अन्यतरापायेऽपि ग० ।
(५) विद्यमानस्य प्रवृत्ति ङ० ।

भङ्ग्या अयमर्थो दर्शितः। तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते। न कुर्यादित्याहुर्न हि कर्म क्षीयते इति। कुर्यादित्यपरे। 'पुनः स्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते। व्रात्यस्तोमेनेष्ट्वा त(१)रति सर्वं पाप्मानं तरति भ्रूणहत्यां योऽश्वमेधेन यजते' इति। पुनः सवनमायान्ति इति सवनसम्पाद्यज्योतिष्टोमादिद्विजातिकर्मणि योग्यो भवतीत्यर्थः। न चेदमर्थवादमात्रम्, अधिकारिविशेषणाकाङ्क्षायां रात्रिसत्रन्यायेनाऽर्थवादिकफलस्यैव कल्पनाया न्याय्यत्वात्, अतो युक्तं प्रायश्चित्तैरपैत्येन इति। ननु कामकृते प्रायश्चित्ताभावात्कथं व्यवहार्यत्वं, तदभावश्च 'अनभिसन्धिकृतेऽपराधे प्रायश्चित्तम्' इति वासिष्ठवचनात्, 'इयं विशुद्धिरुदिता प्रमाप्याकाऽमतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते'॥ इति मनुवचनाच्चाऽवगम्यते। नैतत्। 'यः कामतो महापापं नरः कुर्यात्कथञ्चन। न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते'॥ इति। तथा–'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' इति च कामकृतेऽपि प्रायश्चित्तदर्शनात्। यत्तु वासिष्ठवचनं तस्याप्यकामकृतेऽपराधे प्रायश्चित्तं शुद्धिकरमित्यभिप्रायो न पुनः कामकृते प्रायश्चित्ताभाव इति। यत्तु मनुवचनम्–'इयं विशुद्धिरुदिता' इत्यादि, तदपीयमिति सर्वनामपरामृष्टद्वादशवार्षिकादिव्रतचर्याया एव। 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इत्यनेन प्रतिषेधो न पुनः प्रायश्चित्तमात्रस्य। मरणान्तिकादेः प्रायश्चित्तस्य दर्शितत्वात्। ननु यदि कामकृतेऽपि प्रायश्चित्तमस्ति तर्हि पापक्षयोऽपि कस्मान्न स्यादविशेषाद्यदि पापक्षयोऽपि नास्ति तर्हि व्यवहार्यतापि कथं भवति। उच्यते––उभयत्र प्रायश्चित्ताविशेषेऽपि फलविशेषः शास्त्रतोऽवगम्यते। अज्ञानकृते तु सर्वत्र पापक्षयः। यत्र तु 'ब्रह्मह(२)सुरापगुरुतल्पगमातृपितृयोनिसम्ब(३)न्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्यागिपतितत्यागिनः पतिताः पातकसंयोजकाश्च' इति गौतमोक्तमहापातकादौ व्यवहार्यत्वं निषिद्धं, तस्मिन् पतनीये कर्मणि कामतः कृते व्यवहार्यत्वमात्रं न पापक्षय इति। न च पापक्षयाभावे व्यवहार्यत्वमनुपपन्नम्। द्वे हि पापस्य शक्ती

---

(१) नद्वा ब्रह्मचर्यं चरेदुपनयनत इति पाप्मानं ख०।

(२) ब्रह्महा सुरापो गुरुतल्पगो मातृपितृ ख। (३) सम्बन्धावगम ट०।

नरकोत्पादिका व्यवहारनिरोधिका चेति । तत्रेतरशक्त्यविनाशेऽपि व्यवहारनिरोधिकायाः शक्तेर्विनाशो नाऽनुपपन्नस्तस्मात्पापानपगमेऽपि व्यवहार्यत्वं नानुपपन्नम् । यत्तु मनुवचनम् (११।४५— 'अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्'॥ इति, तदपि कामकृते प्रायश्चित्तप्राप्त्यर्थं, न पुनः पाप(१)क्षयप्रतिपादनपरम् । अपतनीये पुनः कामकृतेऽपि प्रायश्चित्तेन पापक्षयो भवत्येव । (११।४६)—'अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः.' ॥ इति मनुस्मरणात् । पतनीयेऽपि कर्मणि कामकृते मरणान्तिकप्रायश्चित्तेषु कल्मषक्षयो भवत्येव, फलान्तराभावात् । 'ना(२)स्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मष तु निर्हन्यते' इत्यापस्तम्बस्मरणात् ॥ २२६ ॥

(वी०मि०) महापातकजैरिति श्लोकोक्तानि महापातकतत्समोपपातकान्याह षोडशश्लोकैः—

ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः ॥
एते महापातकिनो यश्च तैः सह संवसेत् ॥ २२७ ॥

ब्रह्महा ब्राह्मणस्य हन्ता साक्षात्प्राणवियोगफलकव्यापारकर्ता, मद्यं पैष्टीरूपं तत्पानकर्ता ।

हाद(३)शं तु सुरा मद्यं सर्वं मद्यसमं स्मृतम् ।

इति वचनमात् । 'सुरा वै मलमन्नाना'मिति वचनाच्च ।

सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समाः ॥

इति भविष्यपुराणाच्च ।

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।

इति मनुवचनं तु प्रायश्चित्ततुल्यतामात्रप्रदर्शकम् । इदं च शूद्रस्य न महापातकं, 'न पातव्यं द्विजातिभि'रिति विशिष्य मनुना निषेधात् । अत्र ब्राह्मणीगमनं सुरापानस्थाने शूद्रस्य पञ्चमं महापातकम् । आतिदेशिकमात्रत्वेऽपि तस्या गुर्वङ्गनापदेन कर्मधारयसमासान्तरे वाऽभिधानमित्येकवाक्यतानुरोधेनाऽत्रापि विशेषपरतौचित्यात् । अन्यथा 'मातुः सपत्न्यां वक्ष्यमाणगुरुतल्पातिदेशोऽसङ्गत एव स्यात् । तैः ब्रह्महादिभिः सह यः सम्यक् संवत्सरपर्यन्तं

(१) पापक्षय प्रति प्रतिपादन क० । (२) नास्यास्मिँल्लोके ख ।
(३) हादशीस्तु—इति ग० पु० पाठ ।

सहासनादिपूर्वकं वसेत्, एते पञ्च महापातकिन इत्युच्यन्ते। पातकत्वं नरकपातहेतुत्वं, महत्त्वं च धर्मानधिकारिताप्रयोजकत्वम्।

अस म्भाष्या असम्भोज्या अविवाह्या अपाठिनः।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः॥

इति ब्रह्महादिकमधिकृत्य मनुनाऽभिधनात्। चकारेण—

याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्।
कृत्वा सद्यः पतत्येष पतितेन न संशयः॥

इति सद्यःपातहेतुसंसर्गसमुच्चयः। अत्र सहभोजनमेकपात्रभोजनम्।

संवत्सरेण पतति पतितेन सहाऽऽचरन्।
भोजनासनशय्यादि कुर्वाणः सार्वकालिकम्॥

इति वृहद्विष्णुना एकपङ्क्तिभोजनस्य वर्षव्यापकस्यैव महापातकहेतुत्वाभिधानादिति दिक्। तथाशब्देन प्रकारवाचिना अनुग्राहकानुमन्तृप्रयोजकनिमित्तानां मन्वन्तरविशेषाणां महापातकित्वं दर्शितम्। अनुग्राहके भयनिवारणादिना साहाय्यकारी, तस्य च महापातकित्वं स्पष्टमाह मनुः—

बहुनामेककार्याणां सर्वेषां शस्त्रधारिणाम्।
यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः॥

अनुमन्ताऽनुप्रवृत्तस्य राजाद्यनुमतिमन्तरा हननादिसम्पादकः। प्रयोजकश्च हननाद्यर्थमप्रवृत्तस्याऽऽज्ञाभ्यर्थनोपदेशाऽन्यतमकर्ता। एतयोर्महापातकित्वमाह विष्णुः—

रागाद्द्वेषात्प्रमादाद्वा स्वतः परत एव वा।
ब्राह्मणं घातयेद्यस्तु स भवेद्ब्रह्मघातकः॥

निमित्ती चाऽऽक्रोशनताडनादिनिमित्तेन मन्यूत्पादकः। तस्य च महापातकित्वमाह षट्त्रिंशन्मतम्—

आक्रोशितस्ताडितो वा धनैर्वा परिपीडितः।
यमुद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम्॥

एवकारः—'अदण्ड्यदण्डनं, युधि पलायनं क्षत्रियस्य महापातकं, मानतुलानृतत्वे वैश्यस्य, मांसविक्रयो ब्राह्मणीगमनं कपिलादुग्धपानं शूद्रस्ये'ति (च्यवनो)क्तानां(१) महापतकत्वव्यवच्छेदार्थः। तत्र महापातकपदस्य तत्समर्थकत्वात्। 'स्तेनो हिरण्यस्य, सुरां पिबंश्च, गुरो·

(१) च वनोक्तानां–इति क० पु०, च वलोक्तानां–इति ख० पु० पाठः।

स्तल्पमावसन्, ब्रह्महा चैते पतन्ति चत्वार पञ्चमश्चाऽऽचरंस्तै रिहे'ति छान्दोग्यश्रुतौ न्यूनाधिकसंख्याव्यवच्छेदस्याऽर्थता बोधनात्। न चैवं श्रुत्यनुरोधेन सपत्नीमातृगमनमपि महापातकं स्यात्तदनुरोधेन गुर्वङ्गनापदे षष्ठीसमासस्यौचित्यादिति वाच्य, श्रुतौ सङ्कोचमपेक्ष्य स्मृतौ लक्षणाया जघन्यत्वात् सपत्नीमातरि गुरुतल्पातिदेशान् श्रुते-र्विशेषपर(१)ताग्रहाच्चेत्यास्तां विस्तर ॥ २२७ ॥

(मिता०) निषिद्धाचरणादिकं प्रायश्चित्ते निमित्तमित्युक्तं तत्प्रपञ्चयितुमाह—

ब्रह्महेति। हन्तिरत्र प्राणवियोग(२)करे व्यापारे रूढ । यद्व्यापारसमनन्तरं कालान्तरे वा कारणान्तरनिरपेक्ष प्राणवियोगो भवति स। ब्राह्मणं हतवानिति ब्रह्महा। मद्यपो निषिद्धसुराया पाता। स्तेनो ब्राह्मणसुवर्णस्य हर्ता। 'ब्राह्मणसुवर्णापहरणं महापातकम्' इत्यापस्तम्बस्मरणात्। गुरुतल्पगो गुरुभार्यागामी। तल्पशब्देन शयनवाचिना साहचर्याद्भार्या लक्ष्यते। एते ब्रह्महादयो महापातकिन। पातयन्तीति पातकानि ब्रह्महत्यादीनि। महच्छब्देन तेषां गुरुत्वमुच्यते तद्योगिनो महापातकिन इति। लाघवार्थं संज्ञाकरणम्। यश्च तैर्ब्रह्महादिभि प्रत्येकं सह संवसति 'यास्तु संवसेद्यो वै वत्सरं सोऽपि तत्सम' इति वक्ष्यमाणन्यायेन सोऽपि महापातकी। तथाशब्द प्रकारवचनोऽनुग्राहकप्रयोजकादिकर्तृसङ्ग्रहार्थ। अनुग्राहकश्च य पलायमानममित्रं उपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन् हन्तुर्दार्ढ्यमानमुपजनयन्नुपकरोति स उच्यते। अत एव मनुनाऽनुग्राहकस्य हिंसाफलसम्बन्धो दर्शित —'बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम्। यद्येको घातयेत्तत्र सर्वे ते घातका स्मृता'॥ इति। तथा प्रयोजकादीनामप्यापस्तम्बेन फलसम्बन्ध उक्त —'प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन् फलविशेष' इति। तत्राऽप्रवृत्तस्य प्रवर्तक प्रयोजक। स च त्रिप्रकार —आज्ञापयिताऽभ्यर्थयमान उपदेष्टेति। तत्राऽऽज्ञापयिता नाम स्वयमुद्य स्वीचि भृत्यादिकं य प्रेरयति मदीयममित्रं जहीति स उच्यते। अभ्यर्थयमानस्तु य स्वयमसमर्थ सन् प्रार्थनादिना म-

(१) विशेषपदाग्रहा०—इ त ख० पु० पाठ। (२) वियोगकरण ख।

च्छत्रुं व्यापादयेत्यु(१)च्चं प्रवर्तयति सोऽभिधीयते। अनयोश्च स्वार्थसिद्ध्यर्थमेव प्रयोक्तृत्वम्। उपदेष्टा पुनस्त्वं शत्रुमित्थं व्यापादयेति मर्मोद्घाटनाद्युपदेशपुरःसरं प्रेरयन् कथ्यते। तत्र च प्रयोज्यगतमेव फलमिति तेषां भेदः। अनुमन्ता तु प्रवृत्तस्य प्रवर्तकः। स द्विप्रकारः—कश्चित्स्वार्थसिद्ध्यर्थमनुजानाति कश्चित्परार्थमिति। नन्वनुमननस्य कथं हिंसाहेतुत्वं, न तावत्प्राणवियोगोत्पादनेन, तस्य साक्षात् कर्तृव्यापारजन्यत्वात्। नापि प्रयोजकस्येव, साक्षात्कर्तृप्रवृत्त्युत्पादनद्वारेण प्रवृत्तस्य प्रवर्तकत्वात्। न च साधु त्वयाऽध्यवसितमिति प्रवृत्तमेवानुमन्यत इति शङ्कनीयम्। ता(२)दृशस्याऽनुमननस्य हिंसां प्रत्यहेतुत्वाद्व्यर्थत्वाच्च। उच्यते—यत्र हि राजादिपारतन्त्र्यात्स्वयं मनसा प्रवृत्तोऽपि प्रवृत्तिविच्छेदभयादागामिदण्डभयाद्वा शिथिलप्रयत्नो राजाद्यनुमतिमपेक्षते तत्रानुमतिर्हन्तुः प्रवृत्तिमुपोद्बलयन्ती हिंसाफलं प्रति हेतुतां प्रतिपद्यते। त(३)था योऽपि भर्त्सनताडनधनापहारादिना परान् कोपयति सोऽपि मरणहेतुभूतमन्यूत्पादनद्वारेण हिंसाहेतुर्भवत्येव। अत एव विष्णुनोक्तम्—'आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्' ॥ इति। तथा—'ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्'॥ इति। न च कृतेष्वप्याक्रोशनादिषु कस्यचिन्मन्यूत्पत्त्यदर्शनादकारणतेति शङ्कनीयम्। पुरुषस्वभाववैचित्र्यात्। ये अल्पतरेणापि निमित्तेन जातमन्यवो भवन्ति तेष्वव्यभिचार इति नाकारणता। एतेषां चानुग्राहकप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगतगुरुलाघवापेक्षया च फ(४)लगुरुलाघवात् प्रायश्चित्तगुरुलाघवं बोद्धव्यम्। 'यो भूय आरभते तस्मिन्फलविशेषः' इति वचनात्। तथा ह्यनुग्राहकस्य तावत्स्वयमेव हिंसायां प्रवृत्तत्वेन स्वतन्त्रकर्तृत्वे सत्यपि साक्षात्प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेन साक्षात्कर्तृवद्व्यो हिंसारम्भकत्वाभावादल्पफलत्वमल्पप्रायश्चित्तत्वं च। (प्रयोजकस्य तु स्वतन्त्रकर्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्ततोऽल्पफलत्वम्)। प्रयोजकानां मध्ये परार्थप्रवृत्तत्वेनोपदेष्टुरल्पफलत्वम्। ननु प्रयोजकहस्तस्थानीयत्वात्प्रयोज्यस्य न

(१) समर्थं प्रवर्तयति ङ। (२) तादृशमननस्य ख।
(३) तथान्योऽपि ख। (४) फलं गुरु ख।

फलसम्बन्धो युक्तः । यदि परप्रयुक्त्या प्रवर्तमानस्यापि सम्बन्धस्तर्हि स्थपतितडागखनित्रृप्रभृतीनामपि मूल्येन प्रवर्तमानानां स्वर्गादिफलप्राप्तिप्रसङ्गः । उच्यते—शास्त्रोक्तं फलं प्रयोक्तरीतिन्यायेनाऽधिकारिकर्तृगतफलजनका देव(१)कूपतडागनिर्माणादयः । न च स्थपतितडागखनित्रादयो देव(२)कूपतडागकरणादिष्वधिकारिणः । अस्वर्गकामित्वात् । अथ पुनः परप्रयुक्त्या प्रवर्तमानानामप्यहिंसाया-मधिकारित्वाद्भवत्येव तद्व्यतिक्रमनिबन्धनो दोषः । अनुमन्तुस्तु प्रयोजकादप्यल्पफलत्वं प्रयोजकव्यापाराद्बहिरङ्गत्वाल्लघुत्वाच्चाऽनुमननस्य निमित्तकर्तुः पुनराक्रोशकादेः प्रवृत्तिहेतुभूतमन्युजनकत्वेन व्यवहितत्वान्मरणानुसन्धानं विना प्रवृत्तत्वाच्चाऽनुमन्तुः सकाशा(३)-दप्यल्पफलत्वम् । ननु यदि व्यवहितस्यापि कारणत्वं तर्हि मातापित्रोरपि हन्तृपुरुषोत्पादनद्वारेण हननकर्तृत्वप्रसङ्गः । उच्यते—न हि पूर्वभावित्वमात्रेण कारणत्वम् । कारणाकारणतयापि तथाभावित्वोपपत्तेः । यत्खलु स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगि भवति तद्धि कारणम् । यदि 'रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीया'दिति 'रथन्तरसामतैव क्रतोरैन्द्रवायवाग्रता(४)यां कारणम् । न हि तत्र सोमयागः स्वरूपेण कारणं व्यभिचारात् । न च पित्रोस्तादृग्विधकारणलक्षणयोगित्वमिति ना(५)तिप्रसङ्गः । अनेनैव न्यायेन धर्माभिसन्धिना निर्मितकूपवाप्यादौ प्रमादपतितब्राह्मणादिमरणे खानयितुर्दोषाभावः । न हि कूपोऽनेन खानितः, अतोऽहमात्मानं व्यापादयामीत्येवं कूपखनननिमित्तं व्यापादनं यथाक्रोशादौ । अतः कूपकर्तुरपि कारणकारणत्वमेव न पुनर्हिंसाहेतुत्वमिति मातापितृतुल्यतैव । तथा क्वचित्सत्यपि हिंसानिमित्तयोगित्वे परोपकारार्थप्रवृत्तौ वचनाद्दोषाभावः । यथाह संवर्तः—'बन्धने गोश्चिकित्सार्थे गूढगर्भविमोचने । यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं न विद्यते ॥ औषधं स्नेहमाहारं ददद्गोब्राह्मणादिषु । दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते ॥ दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम् । प्राणसन्त्राणसिद्ध्यर्थं प्रायश्चित्तं न विद्यते'॥ इति । एतच्चादानानिदानानिपुणभिषग्विषयम् ।

(१) देवकुलतडाग क० ग० ।
(२) तडागकर्त्रादयो ख० ।
(३) दप्यफलत्वम् ख० ।
(४) ग्रता कारणं क० ।
(५) नास्ति प्रसङ्ग क० ।

इतरस्य तु 'भिषङ्मिथ्याचरन्दाप्यः' इत्यत्र दोषो दर्शितः । यत्र तु मन्युनिमित्ताक्रोशनादिकमकुर्वतोऽपि नाम गृहीत्वोन्मादादिनाऽऽत्मानं व्यापादयति तत्रापि न दोषः । 'अकारणं तु यः कश्चिद्द्विजः प्राणान् परित्यजेत् । तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्तयेत्' ॥ इति स्मरणात् । तथा यत्राप्याक्रोशकादिजनितम(१)न्युरात्मानं खड्गादिना प्रहृत्य मरणादर्वागाक्रोशनादिक(२)र्त्रा धनदानादिना सन्तोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राऽऽक्रोशकस्याऽपराध इति तत्रापि वचनान्न दोषः । यथाह विष्णुः—'उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः । तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृ(३)ते' ॥ इति । एतेषां च प्रयोजकादीनां दोषगुरुलघुभावपर्यालोचनया प्रायश्चित्तविशेषं वक्ष्यामः ॥ २२७ ॥

गुरूणामभ्यधिक्षेपो वेदनिन्दा सुहृद्वधः ॥
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ २२८ ॥
निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ॥
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ २२९ ॥
अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ॥
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥ २३० ॥
सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ॥
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ २३१ ॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ॥
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ २३२ ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि ॥२३३॥

(वी०मि०) गुरूणाम् अधि आधिक्येनाऽधिक्षेपो निन्दा, अधीतस्य वेदस्य नाशनमालस्यादिना विस्मरणं, समत्वं प्रायश्चित्ते । अत एव 'छित्त्वा लिङ्गं वध' इत्यग्रे स्फुटीकरिष्यति । परन्तु कामकृतब्रह्मवध·

(१) मन्युनात्मानं घ० । (२) कर्ता धनदाना ङ० । (३) ततः क० ।

प्रायश्चित्तं कामकृते वेदनिन्दादौ मरणं च महापातकप्रायश्चित्ताल्लघु-पीडाकरोपायेनेति विशेषः । शिरःकपालधारणादिविशेषप्रतिपादनाय सर्वेषां महापातकसमत्वेनाऽभिधानं कृतमिति मन्तव्यम् । शूलपाणिस्तु महापातकसमत्वातिदेशात्कर्मानधिकारमप्याह । तदयुक्तं, श्रुतस्य प्रायश्चित्तसाम्यस्यैव समपदार्थपरतौचित्यात् । एवं वक्ष्यमाणवचनेन महापातकत्ववतां कर्मानधिकारिताप्रयोजकरूपमहत्त्वसमत्वे महापातकत्वापत्तेश्च निषिद्धलशुनादेर्भक्षणं, जैह्मयं कौटिल्यं गुरुविषयं, स्वस्योत्कर्षार्थं राजकुलादौ 'चतुर्वेदोऽह'मित्याद्यनृतं वचः, रजस्वलामुखस्य स्वयमास्वादनम् । एतानि सुरापानसमानि । अश्वादीनां ब्राह्मणसम्बन्धिनां निक्षेपस्य सुवर्णस्य व्यतिरिक्तस्य हरणं सुवर्णस्तेयसमम् । सख्युर्मित्रस्य भार्या, कुमारी उत्तमजातीया ।

*सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।*

इति वचनस्वरसात् । स्वयोनिः सहोदरा, अन्त्यजा चाण्डाली, सगोत्रा तुल्यगोत्रा, सुतस्त्री पुत्रेण विवाहं विनैव परिगृहीता स्त्री, स्नुषायाः पृथगभिधानात् । आसु गमनं गुरुतल्पगमनसमम् । मातुष्वस्त्र स्वसारमित्यनुपज्यते । भगिनीं स्वसपत्नीमातुः पुत्रीम् । यद्वा स्वयोनिपदं सपिण्डस्त्रीपरमितीदं यथाश्रुतमेव । गच्छन् रेतःसेकान्तं मैथुनं कुर्वन् गुरुतल्पगमः । तस्य सखिभार्यादिगामिनो लिङ्गं छित्त्वा वधः प्रायश्चित्तम् । सखिभार्यादायाः प्रतिभिन्नादिगमनं वध एव प्रायश्चितमित्यर्थः । शेषं सुगमम् । अपिशब्देन प्रथमेन महापातकिसमानां संसर्गे महापातकिसमत्वमभिप्रैति । द्वितीयेन तु बलात्कारादिना व्यभिचारितायाः प्रायश्चित्ताभावं समुच्चिनोति ।

मासि मासि रजः स्त्रीणां दुष्कृतान्यपकर्षति ।

इत्यादिवचनात् । चकारः पञ्चभिः पञ्चानां महापातकानां समेषु पातकसञ्ज्ञां समुच्चिनोति ।

महापातकतुल्यानि पापान्युक्तानि यानि तु ।
तानि पातकसंज्ञानि तद्वनमुपपातकम् ॥

इति वचनात् । आद्यतथाशब्देनाऽनुपातकसंज्ञामेषामभिप्रैति । 'पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारसमं पितृष्वसृगमनं च श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं स्वस्रुसख्याः स-

गोत्राया उत्तमवर्णाया अन्त्यजायाः कुमार्या रजस्वलायाः प्रव्रजिताया निक्षिप्ताया गमनमित्येतान्यनुपपातकानी'ति विष्णुना महापातकसमत्वेनाऽभिहितेष्वेवोपपातकत्वाऽभिधानात् । द्वितीयतथापदेन विष्णूक्तानां मातामह्यादीनां समुच्चयः ।

वामहस्तस्थिते दर्भे जलपानं सुरासमम्।

इत्याद्यर्थानां स्मृत्यन्तरसिद्धानां समुच्चयश्च । आद्येन तुशब्देन महापातकत्वव्यवच्छेदाद्भेदगर्भसमत्वलाभः सर्वत्र भवति । 'मातृगमनं दुहितृगमनं स्नुषागमनमित्यपि पातकानी'ति वृहद्विष्णुनोक्तानामतिपातकभिन्नत्वव्यवच्छेदबोधनेनाऽतिपातकोपपातकानामुद्देशश्च भवति । मातृपदं चाऽत्र सपत्नीमातृपरम् । द्वितीयेन तुशब्देन रेतःसेकात्पूर्वं निवृत्तौ गुरुतल्पगसमत्वव्यवच्छेदः ।

रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥

इति मनुना विशिष्याऽभिधानात् ।

शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत् ।

इति यमवचनादिना रेतःसेकं विना गमनेऽल्पप्रायश्चित्तोपदेशाच्चेति दिक् ॥ २२८-२३३ ॥

( मिता० ) ब्रह्महत्यासमान्याह—

गुरूणामिति । गुरूणामाधिक्येनाऽधिक्षेपः अनृताभिशंसनम् । 'गुरोरनृताभिशंसनमिति महापातकसमानि' इति गौतमस्मरणात् । एतच्च लोकाविदितदोषाभिशंसनविषयम् । 'दोषं बुद्ध्वा न पूर्वः परेषां समाख्याता स्यात्संव्यवहारे चैनं परिहरेत्' इत्यापस्तम्बस्मरणात् । नास्तिक्याभिनिवेशेन वेदकुत्सनम् । सुहृन्मित्रं तस्याब्राह्मणस्यापि वधः । अधीतस्य वेदस्यासच्छास्त्रविनोदेनाऽऽलस्यादिना वा नाशनं विस्मरणम् । एतानि प्रत्येकं ब्रह्महत्यासमानि । यत्पुनः 'स्वाध्यायाग्निसुतत्यागः' इत्यधीतत्यागस्योपपातकमध्ये परिगणनं तत्कथञ्चित्कुटुम्बभरणाकुलतया सच्छास्त्रश्रवणव्यग्रतया वा विस्मरणे द्रष्टव्यम् ॥ २२८ ॥

( मिता० ) सुरापानसमान्याह—

निषिद्धेति । निषिद्धं लशुनादिकं तस्य मतिपूर्वं भक्षणम् । अत एव मनुः ( ५।१९ )—'छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।

पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेन्नरः ॥ इति । अमतिपूर्वे तु प्रायश्चित्तान्तरम् (५।२०)—'अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यतिचान्द्रायणं वापि शेषेषूपवसेदहः' । इति तेनैवोक्तत्वात् । जैह्म्यं कौटिल्यम्, अन्याभिसन्धानेनान्यवादित्वमन्यकर्तृत्वं च । अत्र च जैह्म्यमिति यद्यपि सामान्येनोक्तं तथापि प्रायश्चित्तस्य गुरुत्वान्निमित्तस्यापि गुरुविषय(१)य जैह्म्यमिति गौरवमवगम्यते । अस्ति च नैमित्तिकपर्यालोचनया निमित्तस्य विशेषावगतिः । यथा यस्योभावग्नी अनुगतौ स्यातां दुष्टौ मन्येताभिनिम्लोचेता वा पुनराधेयं तत्र प्रायश्चित्तिरित्यत्रोभाग्न्यस्य निमित्तविशेष(२)णत्वेन हविर्मयत्वादविवक्षितत्वेऽप्यग्निद्वयनिष्पादकपुनराधेयरूपनैमित्तिकविधिबलादग्निद्वयानुगतिरेव निमित्तमिति कल्प्यते, तथात्रापीति युक्तं निमित्तगौरवकल्पनम् । तथा समुत्कर्षनिमित्तं राजकुलादावचतुर्वेद एव चतुर्वेदोऽहमित्यनृतमाषणम् । रजस्वलाया (कामवशेन) वक्त्रासवसेवनमेतानि सुरापानसमानि ॥ २२९ ॥

(मिता०) सुवर्णस्तेयसमान्याह—

नरहरणमिति । अश्वादीनां ब्राह्मणसम्बन्धिनां निक्षेपस्य च सुवर्णव्यतिरिक्तस्यापहरणमेतत्सर्वं सुवर्णस्तेयसमं वेदितव्यम् ॥२३०॥

(मिता०) गुरुतल्पसमान्याह—

सखीति । सखा मित्रं तस्य भार्या, कुमार्यं उत्तमजातीया कन्यकास्तासु । 'सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः । दूषणे तु करच्छेद उत्तमायां वधस्तथा' ॥ इति तत्रैव दण्डविशेषप्रतिपादनात्प्रायश्चित्तगुरुत्वं युक्तम् । स्वयोनिर्भगिनी । अन्त्यजा चाण्डाली । सगोत्रा समानगोत्रा । सुतस्त्री स्नुषा । एतासां गमनं प्रत्येकं गुरुतल्पसमम् । एतच्च रेतःसेकादूर्ध्वं वेदितव्यम् । अर्वाङ्निवृत्तौ तु न गुरुतल्पसमत्वं किन्त्वल्पमेव प्रायश्चित्तम् । (११।५८)—'रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः' ॥ इति मानवे रेतःसेक इति विशेषणोपादानात् । सगोत्राग्रहणेनैव सिद्धे पुनः सुतस्त्रीग्रहणं प्रायश्चित्तगौरवप्रतिपादनार्थम् । अत्र च ब्रह्महत्यादिसमत्ववचनं गुर्वधिक्षेपादेस्तत्तन्निमित्तप्रायश्चित्तोपदेशार्थम् । ननु वेदनिन्दादौ क्षेपस्य लघुत्वाद्गुरुतरं ब्रह्मह

(१) विषये यज्जैह्म्यमिति ख० । (२) विशेषणत्वेन क० ।

त्यादिप्रायश्चित्तं न युज्यते । नैवम् । गुरुप्रायश्चित्तोपदेशबलादेव दोष-(१)गुरुत्वावगतेः । न च ब्रह्महत्यादिप्रायश्चित्तातिदेशार्थमेवं वचनं न भवति । किन्तु दोषगौरवमात्रप्रतिपादनपरमित्याशङ्कनीयम् । यतस्तावन्मात्रप्रतिपादनपरत्वे ब्रह्महत्यासममिदं गुरुतल्पसममित्यादिभेदेन समत्वाभिधानं नोपपद्यते । तच्च प्रायश्चित्तं समशब्देनोपदिश्यमानं ब्रह्महत्यादिप्रायश्चित्तेभ्यः किञ्चिन्न्यूनमेवोपदिश्यते । 'लोके राजसमो मन्त्री'त्यादिवाक्येषु समशब्दस्य किञ्चिद्धीने प्रयोगदर्शनात् , महतः पातकस्येतरस्य च तुल्यत्वस्यायुक्तत्वाच्च । एवं च सति याज्ञवल्क्येन ब्रह्महत्यासमत्वेनोक्तानामपि ब्रह्मोज्झत्ववेदनिन्दासुहृद्वधानां मनुना यत्सुरापानसाम्यम् । ( ११।५६ )—'ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । ग(२)र्हितान्नाज्ययोर्जग्धिः सुरापानसमानि षट्' ॥ इत्युक्तं तत्प्रायश्चित्तविकल्पार्थम् । एवमन्येष्वपि वचनेषु विरोधः परिहर्तव्यः । यत्तु वसिष्ठेन—'गुरोरलीकनिर्बन्धे कृच्छ्रद्वादशरात्रकं चरित्वा सचैलः स्नातो गुरुप्रसादात् पूतो भवति' इति लघुप्रायश्चित्तमुक्तं, तदमतिपूर्वं सकृदनुष्ठाने च वेदितव्यम् ॥ २३१ ॥

( मिता० ) गुरुतल्पातिदेशमाह—

पितुरिति । पितृष्वस्रादयः प्रसिद्धास्ताः गच्छन् गुरुतल्पगस्तस्य लिङ्गं छित्वा राज्ञा वधः कर्तव्यो दण्डा(३)र्थं, प्रायश्चित्तं च तदेव । चशब्दाद्राज्ञीप्रव्रजितादीनां ग्रहणम् । यथाह नारदः—'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गच्छन्गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते' ॥ इति । राज्ञी राज्यस्य कर्तुर्भार्या, न क्षत्रियस्यैव । तद्गमने प्रायश्चित्तान्तरोपदेशात् । धात्री मातृव्यतिरिक्ता स्तन्यदानादिना पोषयित्री । साध्वी व्रतचारिणी । वर्णोत्तमा ब्राह्मणी । अत्र मातृग्रहणं दृष्टान्तार्थम् । अयं च लिङ्गच्छेदवधात्मको दण्डो ब्राह्मणव्यतिरिक्तस्य । 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्' इति तस्य वधनिषेधात् वधस्यैव प्रायश्चित्तरूपत्वात् । अस्य च विषयं गुरुत-

(१) गुरुत्वमवगम्यते ख० । (२) गर्हितानाद्ययोः इति पाठः । (३) दण्डार्थः ख० ।

ल्पप्रायश्चित्तप्रकरणे प्रपञ्चयिष्यामः । अत्र स्नुषाभगिन्योः पूर्वश्लोकेन गुरुतल्पसमीकृतयोः पुनर्ग्रहणं प्रायश्चित्तविकल्पार्थम् । यदा पुनरेता स्त्रियः सकामाः सत्य एतानेव पुरुषान् वशीकृत्योपभुञ्जन्ते तदा तासामपि पुरुषवद्वध एव दण्डः प्रायश्चित्तं च । एतानि गुर्वधिक्षेपादितनयागमनपर्यन्तानि महापातकातिदेशविषयाणि सद्यः— पतनहेतुत्वात्पातकान्युच्यन्ते । यथाह यमः—'मातृष्वसा मातृसखी दुहिता च पितृष्वसा । मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः पतेन्नरः'॥ इति । गौतमेन पुनरन्येषामपि पातकत्वमुक्तम् । मातृपितृयोनिसम्बद्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिन पतिताः पातकसंयोजकाश्चेति । तथा च महापातकोपपातकमध्यपाठान्महापातकान्न्यूनत्वमुपपातकाच्च गुरुत्वमवगम्यते । तदुक्तम्— 'महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्' ॥ इति । तथा चाऽङ्गिराः—'पातकेषु सहस्रं स्यान्महत्सु द्विगुणं तथा । उपपापे तुरीयं स्यान्नरकं व(१)र्षसंख्यया' ॥ इति ॥ २३२-२३३ ॥

गोवधो व्रात्यता स्तेयमृणानां चाऽनपक्रिया ॥
अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् ॥ २३४ ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ॥
पारदार्यं पारिवित्र्यं वार्द्धुष्यं लवणक्रिया ॥ २३५ ॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थो(२)पजीवनम् ॥
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ २३६ ॥
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ॥
पितृमातृसुतत्यागस्तडागारामविक्रयः ॥ २३७ ॥
कन्यासन्दूषणं चैव परिविन्दकयाजनम् ॥
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ २३८ ॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ॥
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥ २३९ ॥

(१) वर्षसंख्यया क० । (२) निन्दितार्थेन—इति क्वचित्पाठः ।

इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ॥
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥ २४० ॥
शूद्रप्रैष्यं हीनसख्यं हीनयोनिनिषेवणम् ॥
तथैवाऽनाश्रमे वासः परान्नपरिपुष्टता ॥ २४१ ॥
असच्छास्त्राऽधिगमनमाकरेष्वधिकारिता ॥
भार्यावि(१)क्रयणं चैषामेकैकमुपपातकम् ॥ २४२ ॥

( वी०मि० ) गोवधो गोमारणं, व्रात्यता कालेऽनुपनीतत्वं, स्तेयं धान्यादिवक्ष्यमाणत्रयाश्वादिसुवर्णसमब्राह्मणसुवर्णातिरिक्तद्रव्यचौर्यम, ऋणानां गृहीतानामनपाक्रियाऽपरिशोधनं, देवर्षिपित्रृणानां यज्ञाऽध्यापनप्रजोत्पादनैरनपाकरणम् , अनाहिताग्निता सत्यधिकारेऽग्न्याधानाभावः, केचित्तु अन्येनासंस्कृताग्निनैवाऽग्निहोत्रकारितेत्यर्थमाहुः, अपण्यस्याऽविक्रय्यस्य विक्रयः, परिवेदनं सहोदरस्य ज्येष्ठस्याऽकृतदारस्याऽपरिगृहीताग्नेर्वा सतो दाराग्न्योर्यथाक्रमं संयोगः, भृताद्वत्ताऽध्यापनवेतनादध्ययनस्य आदानं सम्बन्धः, भृतकस्य गृहीतवेतनस्य सतोऽध्यापनं, पारदार्यं गुरुदारतत्समव्यतिरिक्तपरस्त्रीसंयोगः, पारिवित्त्यं कनिष्ठे सहोदरे कृतविवाहे कृताऽग्निहोत्रे वाऽकृतविवाहित्वमकृताग्निहोत्रत्वं वा, वार्धुष्यं निषिद्धवृद्ध्युपजीवनं, लवणस्य क्रिया उत्पादनं, वैखानसव्यतिरिक्तानां स्त्रिया आत्रेयीभिन्नब्राह्मण्या वधः, शूद्रवधः, अदीक्षितवैश्यवधः, अदीक्षितक्षत्रियवधः, निन्दितस्याऽर्थस्य नील्यादेरुपजीवनं कृषिवाणिज्यादिकरणं, नास्तिक्यं नास्ति परलोक इत्यभिनिवेशः, व्रतस्य ब्रह्मचर्यस्य मैथुनादिना लोपः, सुतानां पुत्राणां कन्यानां च विक्रयः, धान्यस्य व्रीह्यादेः, कुप्यस्य त्रपुकांस्यादेः, पशोर्गवादेर्वा स्तेयम् , अयाज्यानां याजयितुमयोग्यानां शूद्रपतितादीनां याजनं पौरोहित्यार्त्विज्यादिकरणं, पित्रादेरन्यतरस्याऽपतितस्य त्यागो निर्वासनं, तडागस्य बृहज्जलाशयस्य आरामस्योपवनस्य वा विक्रयः, कन्यायाः कुमार्याः सन्दूषणमङ्गुल्यादिना योनिविदारणं, परिविन्दकस्य परिवेदनकर्तुर्याजनं, तस्यैव वरस्य कन्याप्रदानं, कौटिल्यं गुरोरन्यत्र, व्रतस्य काम्यस्य

(१) भार्याया विक्रयश्चैषा०—इति मु० पु० पाठः ।

ताम्बूलभक्षणवर्जनादेर्लोपनमनिर्वाहनम्, आत्मनो भोजनार्थं पाकक्रियारम्भः, मद्यपायाः स्त्रिया जायाया अपि निषेवणं, सुतस्य सुतायाश्च त्यागः संस्क(१)रणोपेक्षा, बान्धवस्य पितृव्यादेरविम(२)-त्वादिनाऽवश्यभरणीयस्य त्यागो भरणौदास्यं, लौकिकपाका-दिसम्पा(३)दकेन्धनार्थं सजीवद्रुमच्छेदः, स्त्रिया भार्यया व्यभिचा-रादिष नियोजितया हिंसया प्राणिवधस्यानाध्यक्षत्वादिना औषधेन रोगनाशनार्थकेन वशीकरणाद्यर्थकेन वा विक्रीतेन जीवनं, हिंस्रस्ये-क्षुतिलादिपीडाकरस्य यन्त्रस्य विधानं प्रवर्तनं, व्यसनानि पानमृग-याक्षादीन्यष्टादश, आत्मविक्रयो द्रव्यं गृहीत्वा परदास्यकरणं, शूद्र-स्य प्रैष्यं सेवाकारित्वं, हीनैश्चाण्डालादिभिः सख्यं, हीनयोनिर्वैश्या तन्निषेवणं तन्मैथुनं, यथाविध्यपरिणीतशूद्रागमनं च, त्रैवर्णिकस्य अनाश्रमे निन्दिताश्रमे अवधूतादिपरिगृहीते वा वासः परिग्रहः, केचित्तु आश्रमचतुष्टयव्यतिरेकेऽव्यवस्थानमिति व्याचक्षते । परा-न्नेन चिरकाले लोलुपतया सेवितेन परिपुष्टता, असच्छास्त्रस्य बौद्धा-दिग्रन्थस्याऽधिगमनमध्ययनम्, आकरेषु सुवर्णाद्युत्पत्तिस्थानेष्वधि-कारिता राजाज्ञयाऽधिष्ठातृत्वं, भार्यायाः परिणी(४)तायाः शूद्रस्या-ऽपरिणीताया अपि परिगृहीतायाः स्त्रिया विक्रयो द्रव्यं गृहीत्वाऽन्य-स्वत्वापादनम् । एषामेकैकं न तु मिलितमुपपातकमित्युच्यते । च-कारस्तथाशब्दैर्बहुभिर्बहूनां मन्वाद्युक्तानां लशुनभक्षणादि-आचारादी-नां सङ्ग्रहः । एवकारैः पञ्चभिर्जातिभ्रंशकरसङ्करीकरणपात्रीकरणम-लिनीकरणप्रकीर्णकानामुपपातकत्वव्यवच्छेदबोधनात्तेषामप्यर्थत उ-द्देशमभिप्रैति । तानि च पापानि स्फुटयति मनुः—

ब्राह्मणस्य रुजःकृत्या घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥

(१) संस्करणाकरणम्=इति ख० पु० पाठः । (२) रतिरिक्तत्व—इति ख० पु० पाठः ।
(३) सम्पादनार्थ सं०—इति ख० पु० पाठः ।
(४) अविगीतायाः शूद्रस्याऽपरिणीतायाः स्त्रियाः—इति ख० पु० पाठः ।

तथा—

अनुक्तनिष्कृतीनां तु पापानामपनुत्तये।

इत्यनेन प्रकीर्णकं मनुना सूचितम्। तदेवं 'कामक्रोधलोभाक्रान्त' इत्यनुवृत्तौ वृद्धविष्णुनोक्तानामतिपातकाऽनुपातकोपपातकेषु [समुच्चयो] वर्तते। जातिभ्रंशकरेषु सङ्करीकरणेष्वपात्रीकरणेषु मलावहेषु प्रकीर्णकेषु चेति नवविधानामुद्देशः कण्ठतोऽर्थतश्च ग्रन्थकृता कृतः। मनुना त्वतिपातकस्य पातकमध्येऽन्तर्भावं कृत्वाऽष्टविधत्वमेवोक्तम्। क्वचिदुपाधिद्वयसाङ्कर्यं तु न दोषायेति ॥ २३४—२४२ ॥

( मिता० ) एवं महापातकानि तत्समानि च पातकानि परिगणय्योपपातकानि परिगणयितुमाह—

गोवध इत्यादि। गोवधो गोपिण्डव्यापादनम्। कालेऽनुपनीतत्वं व्रात्यता। ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम्। गृहीतस्य सुवर्णादेरप्रदानम्। ऋणानामनपाकरणम्। तथा देवर्षिपितृणां स(१)म्बन्ध्यृणस्यानपाकरणं च। सत्यधिकारेऽनाहिताग्नित्वम्। ननु ज्योतिष्टोमादिकामश्रुतयः स्वाङ्गभूताग्निनिष्पत्त्यर्थमाधानं प्रयुञ्जत इति मीमांसकप्रसिद्धिरतश्च यस्याग्निभिः प्रयोजनं तस्य तदुपायभूताधाने प्रवृत्तिर्व्रीह्याद्यर्थिन इव धनार्जने। यस्य पुनरग्निभिः प्रयोजनं नास्ति तस्याऽप्रवृत्तिरिति कथमनाहिताग्निता दोषः। उच्यते, अस्मादेवाधानस्यावश्यकत्ववचनान्नित्यश्रुतयोऽपि साधि(२)कारित्वाविशेषादाधानस्य प्रयोजिका इति स्मृतिकाराणामभिप्रायो लक्ष्यत इत्यदोषः। तथा अपण्यस्य लवणादेर्विक्रयः। सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः परिवेदनम्। पणपूर्वाध्यापकादध्ययनग्रहणम्। पणपूर्वाध्यापनम्। परदारसेवनं गुरुदारतत्समव्यतिरेकेण। पारिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम्। वार्धुष्यं प्रतिषिद्धवृद्ध्युपजीव(३)नम्। लवणक्रिया लवणस्योत्पादनम्। स्त्रिया वधः अब्राह्मण्या अप्यात्रेयीव्यतिरेकेण। शूद्रवधः। अदीक्षितविट्क्षत्रियवधः। निन्दितार्थोप(४)जीवनमराजस्थापितार्थोपजीवनम्। नास्तिक्यं नास्ति परलोक इत्याद्यभिनिवेशः। व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसङ्गः। सुतानामपत्यानां विक्रयः। धान्यं व्रीह्यादि, कुप्यमसारद्रव्यं त्रपुसीसादि, पशवो गवादय-

(१) सम्बन्ध्यृणस्या ख.। (२) साधिकारत्वाविशेषा ट.। (३) वृत्त्युपजीवित्वम् ट.।
(४) निन्दितार्थोपजीवनमराजस्थापितार्थोपजीवनम्—इति क्वचिन्मान्यानां पुस्तके पाठः।

स्तेयमपहरणम् । 'गोवधो व्रात्यता स्तेय'मित्यनेन स्तेयग्रहणेनैव सिद्धे पुनर्धान्यकुप्यादिस्तेयग्रहणं नित्यार्थम् । अतो धान्यादिव्यतिरिक्तद्रव्यस्तेयेनाधस्त्यमेतदेव प्रायश्चित्तमपि तु ततोऽन्यूनमपि भवत्येव । एतेन बान्धवत्यागग्रहणेनैव सिद्धे पुनः पित्रादित्यागग्रहणं व्याख्यातम् । अयाज्यानां जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम् । पितृमातृसुतानामपतितानां त्यागो गृहान्निष्कासनम् । तडागस्यारामस्य चोद्यानोपवनादेर्विक्रयः । कन्यायाः सन्दूषणमङ्गुल्यादिना योनिविदारणं न तु भोगः, तस्य सखिभार्याकुमारीष्विति गुरुतल्पसमत्वस्योक्तत्वात् । परिविन्दकयाजनं तस्य च कन्याप्रदानम् । कौटिल्यं गुरोरन्यत्र । गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वमुक्तम् । पुनर्व्रतलोपग्रहणमशिष्टाप्रतिषिद्धेष्वपि श्रीहरिचरणकमलप्रेक्षणात् प्राक् ताम्बूलादिकं न भक्षयामीत्येवंरूपेषु व्रतार्थं न तु स्नातकव्रतप्राप्त्यर्थम् । तत्र (११।२०३)—'स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्' इति मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् । तथात्मार्थं च पाकलक्षणक्रियारम्भः । (मनुः ३।११८)—'अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्' इति तस्यैव प्रतिषिद्धत्वात् । क्रियामात्रविषयत्वे तु प्र(१)तिषेधकल्पनाया गौरवं स्यात् । मद्यपायाः स्त्रियाः जायाया अपि निषेवणमुपभोगः । स्वाध्यायत्यागो ब्रह्मोज्झता । अग्नीनां च श्रौतस्मार्तानां त्यागः । सुतत्यागः संस्काराद्यकरणम् । बान्धवानां पितृव्यमातुलादीनां त्यागः सति विभवे अपरिरक्षणम् । पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो न त्वाहवनीयपरिरक्षणार्थमपि । स्त्रिया हिंसया औषधेन च वर्तनं जीवनं स्त्रीहिंसौषधजीवनम् । तत्र स्त्रीजीवनं नाम भार्यां पण्यभावेन प्रयोज्य तल्लब्धोपजीवनम्, स्त्रीधनेनोपजीवनं वा । हिंसया जीवनं प्राणिवधेन जीवनम् । औषधजीवनं वशी(२)करणादिना । हिंस्रयन्त्रस्य तिलेक्षुपीडाकरस्य प्रवर्तनम् । व्यसनानि मृगयादीन्य(३)ष्टादश । आत्मविक्रयो द्रव्यग्रहणेन

(१) प्रतिषेधे क. । (२) करणेन क ।

(३) मृगयादीन्यष्टादश व्यसनानि मनुस्मृतौ (७ श्लो. ४७-५२)' मृगयाक्षा दिवास्वापः परिवाद स्त्रियो मदः । तौर्यत्रिक वृथाट्या च कामजो दशको गण ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डज च पारुष्य क्रोधजोऽपि गणोऽष्टकः ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदु । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एत

परदारूयकरणम् । शूद्रसेवनं हीनेषु मैत्रीकरणम् । अनूढसवर्णदारस्य केवलहीनवर्णदारोपयमनं साधारणस्त्रीसम्भोगश्च । अनाश्रमवासः अगृहीताश्रमित्वं सत्यधिकारे । परान्नपरिपुष्टता परपाकरतित्वम् । असच्छास्त्रस्य चार्वाकादिग्रन्थस्याऽधिगमः । सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वम् । भार्याया विक्रयः । चशब्दान्मन्वाद्युक्ताभिचारामतिपूर्वलशुनादिभक्षणादेर्ग्रहणम् । एषां गोवधादीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या । मनुना पुनरन्यान्यपि निमित्तानि जातिभ्रंशकरसङ्करीकरणापात्रीकरणमलिनीकरणसंज्ञानि परिगणितानि । (मनुः ११।६७-७०)—'ब्राह्मणस्य रुजःकृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥ खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम्' ॥ इति । अतोऽन्यन्निमित्तजातं प्रकीर्णकं कथ्यते ॥ वृहद्विष्णुना च समस्तानि प्रायश्चित्तनिमित्तान्युत्तरोत्तरं लघीयांसि पृथक्संज्ञाभेदभिन्नानि दर्शितानि । 'ब्रह्महत्यासुरापानं ब्राह्मणसुवर्णापहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च । मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि । यागस्थक्षत्रियवधो वैश्यस्य च रजस्वलायाश्चान्तर्वत्न्याश्चा(१)सगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि । कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ । ब्राह्मणस्य भूमिहरणं सुवर्णस्तेयसमम् । पितृव्यमातामहमातुलनृपपत्न्यभिगमनं गुरुदारगमनसमम् । पितृष्वसृमातृष्वसृगमनं श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च । स्वसुः सख्याः सगोत्राया उत्तमवर्णाया रजस्वलाया शरणागताया प्रव्राजितायाः निक्षिप्तायाश्च गमनमित्येतान्यनुपातकानि । अनृतवचनं समुत्कर्षे राजगामि च पै(२)-

---

त्कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोधो व्रजति स्वर्यात्यव्यसनी मृतः ॥' इति ।

(१) ब्राह्मिगोत्रायाः ख० । (२) पैशुन्यम् ख० ।

श्रुतम् । गुरोश्चालीकनिर्बन्धो वेदनिन्दा अधीतस्य त्यागोऽग्निपितृमातृसुतदाराणां च अभोज्यान्नभक्षणं परस्वापहरणं परदारानुगमनमयाज्यानां च याजनं नास्तिकता भृतकाध्यापनं भृतकाध्ययनादानं सर्वाकरेष्वधिकारो महायन्त्रप्रवर्तनं द्रुमगु(१)ल्मलतौषधीनां हिंसया जीवनमभिचारमूलकर्मसु च मन्त्रादिरात्मार्थक्रियारम्भः अनाहिताग्निता देवर्षिपितॄणामृण(२)स्यानपक्रिया असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवणमित्युपपातकानि । ब्राह्मणस्य रुजः करणमघ्रेयमद्ययोर्घ्रातिर्जैह्म्यं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकराणि । ग्राम्यारण्यपशूनां हिंसनं सङ्करीकरणम् । निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनम् असत्यभाषणं शूद्रसेवनमित्यपात्रीकरणानि । पक्षिणां जलजानां च घातनं कृमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि । यदनुक्तं तत्प्रकीर्णकम्' इति । कात्यायनेन तु महापातकसमानां विष्णुनाप्यु(३)पपातकत्वेनोक्तानां पातकसंज्ञा दर्शिता—'महापापं चातिपापं तथा पातकमेव च । प्रासङ्गिकं चोपपापमित्येवं पञ्चको गणः ॥' इति । ननूपपातकादीनां कथं पातकत्वं पतनहेतुत्वाभावात् । यदि तेषामपि पतनहेतुत्वं तर्हि मातृपितृयोनिसम्बद्धाग इत्यादिपरिगणनमनर्थकम् । अथैवमुच्यते यद्यपि महापातकतत्समेभ्यो न सद्यः पातित्यहेतुत्वं नास्ति तथाप्यभ्यासापेक्षया पातित्यहेतुत्वमविरुद्धम् । 'निन्दितकर्माभ्यासादि'ति गौतमवचनादिति नैवम्, अभ्यासस्यानिरूप्यमाणत्वात् द्वि शतकृत्वो वेति तत्राविशेषेऽङ्गीक्रियमाणे योऽपि द्विर्दिवा स्वपिति यः शतकृत्वा वा गोवधं करोति तयोरविशेषेण पातित्यं स्यात् । अत्रोच्यते—यत्रार्थवादे प्रत्यवायविशेषः श्रूयते प्रायश्चित्तबहुत्वं वा तस्मिन्निन्दितकर्मणि यावत्यभ्यस्यमाने महापातकतुल्यत्वं भवति तावानभ्यासः पातित्यहेतुः । दिवास्वप्नादौ तु सहस्रकृत्वोऽप्यभ्यस्यमाने न महापातकतुल्यत्वं भवतीति न तत्र पातित्यमतो युक्तमुपपातकादेरभ्यासापेक्षया पतनहेतुत्वम् ॥ २३४—२४२ ॥

( वी० मि० ) एवं प्रायश्चित्तनिमित्तान्यभिधाय नैमित्तिकानि प्रायश्चित्तान्याह । तत्रादौ महापातकानामुद्देशात् यथोद्देशं प्रायश्चित्तेषु

(१) गुल्मवल्लीलतौषधीनां ख० । (२) स्यानपाक्रिया ख । (३) नुपातकत्वेन ख ।

दक्तव्येषु ब्रह्मवधप्रायश्चित्तमभिधत्ते—

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ॥
ब्रह्महा द्वादशाऽब्दानि मितभुक् शुद्धिमाप्नुयात् ॥२४३॥
ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य च ॥
तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४४ ॥
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ॥
दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः ॥ २४५ ॥
आनीय विप्रसर्वस्वं हृतं घातित एव वा ॥
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुद्ध्यति ॥ २४६ ॥
लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम् ॥
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २४७ ॥
सङ्ग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ॥
मृतकल्पः प्रहारार्तो जीवन्नपि विशुद्ध्यति ॥ २४८ ॥
अरण्ये नियतो जप्त्वा त्रिःकृत्वो वेद(१)संहिताम् ॥
शुद्ध्येत वा मिताशित्वा(२)त्प्रतिस्रोतः सरस्वतीम् ॥२४९॥
पात्रे धनं वा पर्याप्तं दत्त्वा शुद्धिमवाप्नुयात् ॥
आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता ॥ २५० ॥

घातितस्य तदलाभे ब्राह्मणान्तरस्य शिरःसम्बन्धि कपालं पाणिना धारयमाणः, ध्वजवान् खट्वाङ्गरूपचिन्हस्य पाणिना धर्ता 'खट्वाङ्गकपालपाणि'रिति गौतमस्मरणात् । स च दण्डारोपितशिरःकपालात्मकः, भिक्षाशी ग्रामाद् ग्रामादाहृतस्य भक्ष्यस्याऽशनशीलः, कर्म वेदयन् भिक्षाचरणकाले 'ब्रह्महाऽस्मी'ति स्वकर्म ख्यापयन् ।

वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः ।

इति पराशरस्मरणात् । अत्र संवर्तः—

भिक्षार्थं प्रविशेद्ग्रामं यदि वन्यैर्न जीवति ।

---

( १ ) त्रिर्वै वेदस्य संहिताम्—इति मु० पु० पाठः ।
( २ ) मिताशीत्वा—इति मु० पु० पाठः ।

भिक्षापात्रमाहाऽऽपस्तम्बः—'लोहितेन खण्डशरावेण ग्रामं भिक्षायै प्रविशेत्'। मितभुक् अनतितृप्तिकरभोजनवान्। द्वादशाब्दानि व्याप्यैतद्विशेषणपञ्चकविशिष्टश्चेद्भवति तदा ब्रह्महा शुद्धिमाप्नुयात्। इदं चाऽकामतः साक्षाद्ब्रह्मवधे प्रायश्चित्तम्। कामकृते तु प्राणान्तिकमेवेति प्रागुक्तम्। साक्षाद्व्यतिरिक्तेषु षड्विधेषु ब्रह्मवधेषु तु 'भूयो भूय आरभते तस्मिन् फलविशेषः' इत्यापस्तम्बवचनादितो लघूनि प्रायश्चित्तानि। तत्र निमित्तमधिकृत्य—

सशस्त्रमन्यं यदा विप्रो ह्यायाऽऽत्मानं मृतो मुहुः(१)।
निर्गुणः साहसात् क्रोधाद् गृहक्षेत्रादिकं प्रति ॥
त्रैवार्षिकं व्रतं कुर्याद् ब्रह्मचर्यं चरन्नपि।

इति भविष्यपुराणे त्रैवार्षिकं कण्ठत एवोक्तम्। 'इतरेषु च समं स्या'दिति न्यायेन सार्द्धसार्द्धवर्षहानिः कल्पनीया। तथा हि प्रयोजको द्विविधः—अप्रवृत्तप्रवृत्तकः, प्रवृत्तोत्साहजनकश्च। अनुग्राहकोऽपि द्विविधः—वध्यगतवैमनस्यापादकः, तदनुग्राहकृतमपध्युदासकारी च। अनुमन्ता चैकविधः। तत्राऽऽद्यस्य प्रयोजकस्य सार्द्धदशवार्षिकम्, अनुमन्तुश्च सार्द्धचतुर्वार्षिकमिति। कामतः कृतेषु साक्षाद्व्यतिरिक्तेष्वकामकृतप्रायश्चित्तद्वैगुण्यं विहितम्।

विहितं यदकामानां कामतो द्विगुणं भवेत्।

इत्यङ्गिरोवचनात्। अत्र शिरःकपालादीतिकर्तव्यताया कष्टत्वादुपवासत्रयवता प्राज्यापत्येन तपसा (२)शिष्टाचारसिद्धान्तो द्वादशवर्षपर्यन्तं प्राजापत्यानि कार्याणि। तत्स्वरूपं चोक्तं मनुना—

त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात्प्राजापत्यविधिः स्मृतः ॥

इति। एवं द्वादशभिर्वर्षैः षष्ट्यधिकं प्राजापत्यशतत्रयं भवति। प्राजापत्यासमर्थस्यैकप्राजापत्यस्थाने धेनुमेकां दद्यात्।

प्राजापत्यक्रियाशक्तो धेनुं दद्याद्विचक्षणः।
धेनोरभावे तुल्यं तु मूल्यं देयं न संशयः ॥

इति मार्कण्डेयवचनात्। एवं प्रायश्चित्तान्तरेऽप्यूहनीयम्। न्यूनाधिकादिद्वादशाब्दे व्रते समारब्धे मृतस्य(३)मार्तेनैमित्तिकमुत्तरावधिमाह श्लोकत्रयेण ब्राह्मणस्येति। तदाह वृद्ध—'द्वादशे वर्षे शुद्धि

(१) शङ्कः—इति क०, वहुः—इति ख० पुस्तकयोः पाठः।
(२) मुख्यता—इति क० पु० पाठः। (३) मम तौ—इति ख० पु० पाठः।

प्राप्नोत्यन्तरा ब्राह्मणं वा मोचयित्वा गवां द्वादशानां परित्राणात्सद्य एवाऽश्वमेधावभृथस्नानाद्वा पूतो भवति'। मनुश्च द्वादशवार्षिक-मुपक्रम्य—

ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत्।

इत्यादि मध्येऽभिधाय—

एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः।
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति॥

इत्युपसंहृतवानिति। नेदं स्वतन्त्रं प्रायश्चित्तं किन्तु गुणविशेषो नैमित्तिकः। ब्राह्मणस्य गवां द्वादशकस्य वा चौरव्याघ्रादिभिः प्राणापगमसम्भावनायां स्वप्राणान् पणीकृत्य तत्परित्राणात् तथा कर्मस्थापनपूर्वकं परक्रियमाणाऽश्वमेधावभृथाख्यकर्माङ्गस्नानाद्वा ब्रह्महा शुद्धिमाप्नुयात्। बहुकालव्यापिदुस्सहरोगग्रस्तं ब्राह्मणमेकां वा गां तथाविधां पथि दृष्ट्वा औषधदानेन तद्रोगमपाकृत्य ब्रह्महा शुचिर्भवति। विप्रस्य सर्वस्वं परैरपहृतं बलादानीय आनयनाशक्तौ तैस्तद्द्रव्यनिमित्तं शस्त्रैर्घातितः सतो जीवन्नपि वा शुध्यति। अथापिवेत्यव्ययसमुदायो गोब्राह्मणयोर्विकल्पार्थः। अग्रिमवाकारः पूर्वश्लोकोक्तेन विकल्पार्थः। एवकारेणाऽऽनयनं व्यवच्छिनत्ति। अपिशब्देनाऽस्त्रसमुच्चयः। कामकृते ब्रह्मवधे त्वाह लोमभ्य इति श्लोकद्वयेन। 'लोमभ्यः स्वाहे'त्येवं चतुर्थीस्वाहायुक्तैरेभिर्लोमत्वगादिनामरूपैरष्टभिर्मन्त्रैर्लोमप्रभृतित्वग्लोहितमांसमेदःस्नाय्वस्थिमज्ज्ञान्तां तनुमुत्कृत्य यथाक्रमं जुहुयात्। अयं च होमो मृत्युदेवतो 'लोमानि मृत्योर्जुहोमी'त्यादिवसिष्ठवचनात्। सङ्ग्रामे युद्धभूमौ प्रायश्चित्ती अयमिति विदुषां युध्यतां स्वेच्छया लक्ष्यभूतः सन् हतो वा शुद्धिं ब्रह्महाऽऽप्नुयात्। तदाह मनुः—

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः।

इति लक्ष्यभूतः प्रहारैः पीडितो मृतकल्पो मूर्च्छितश्चेद्भवति तदा जीवन्नपि विशुध्यति। हिशब्देन स्मृत्यन्तरप्रसिद्धत्वसूचनाद्विशिष्य लोमादीनामनभिधानम्। वैशब्दः पादपूरणे। आद्येनाऽपिकारेण भृग्वग्निपतनस्य, द्वितीयेनाऽश्वमेधादेः समुच्चयः। तदाहाऽङ्गिराः—

यः कामतो महापापं नरः कुर्यात् कथञ्चन।
न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृते॥

मनुः—

यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुताऽपि वा ॥

अश्वमेधस्य क्षत्रियस्यैव प्रायश्चित्तम्—

यजेत वाऽश्वमेधेन क्षत्रियस्तु महीपतिः ॥

इति पराशरवचनात् । जातिमात्रपतितब्राह्मणवधे तु कामतो न मरणान्तिकं, किन्तु द्वादशवार्षिकमेव ।

जातिमात्रे हते विप्रे कामतो यद्व्रतं शृणु ।
चरेद्द्वादश वर्षाणि कृत्वा शवशिरोध्वजम् ॥

इति पुराणात् । अरण्य इति । नियतस्त्रिभिः पराकैः शोधितः सन्नरण्ये निर्जनप्रदेशे त्रिःकृत्वो वेदसंहितां जप्त्वा शुध्यति । मिताशित्वादिति ल्यब्लोपे पञ्चमी, तेन मिताशित्वं सम्पाद्य सरस्वत्याः प्रतिकूलस्रोतो यत्र विनिर्गतं तं देशं गत्वा तत्र स्नात्वा वा शुध्यति । इदं चात्यन्तगुणवतो निर्धनस्य निर्गुणब्राह्मणवधे । तत्राऽप्याद्यं वेदविदो द्वितीयमवेदविद इति मिताक्षरा । वधप्रयोजकपरमिति भवदेवः । अत्र विशेषमाह मनुः—

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः ।
अभ्यस्याऽब्दं पावमानीर्भैक्षाहारो विशुध्यति ॥
अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ।
मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥

पात्रे धनमिति । विद्यावृत्तसम्पन्ने ब्राह्मणे पर्याप्तं यावज्जीवभरणक्षमं धनं दत्त्वा शुद्धिमाप्नुयादित्यर्थः । इदं च धनवतो निर्गुणब्राह्मणवधे । मनुश्चात्राधिकमप्याह—

सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायाऽलं गृहं वा सपरिच्छदम् ॥

प्रसङ्गात्पात्रस्य धनग्राहिणः प्रायश्चित्तमाह—आदातुरिति । धनग्रहीतुस्तद्ग्रहणजन्यपापविशुद्ध्यर्थं वैश्वानरी वैश्वानरदेवताका इष्टिः कर्तव्यत्वेन स्मृतिपूक्तेत्यर्थः । इदं चाऽऽहिताग्निपरम् । अनाहिताग्नेस्तद्दैवत्यश्चरुरिति चकारार्थः । ब्रह्मवधमधिकृत्य भविष्ये—

द्विगुणा क्षत्रियाणां च वैश्यानां त्रिगुणा स्मृता ।
चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मना ॥

पर्षदुक्तं व्रतं प्रोक्तं शुद्धये पापकर्मणाम् ।

पर्षद् द्विगुणादिकं क्षत्रियादीनां, व्रतं प्रायश्चित्तरूपम् । कालिकापुराणे—

अथापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम् ।
मुच्यते ब्रह्महत्याया नरो वै नाऽत्र संशयः ॥

अत्र विशेषो भविष्ये—

यद्युत्तरे वसेत्पार्श्वे विन्ध्यस्य सुरसत्तम ।
दक्षिणे वसतश्चेदं न भवेदिति तच्छ्रुतिः ॥ २४३-२५० ॥

(मिता०) एवं व्यवहारार्थं संज्ञाभेदसहितं प्रायश्चित्तनिमित्तपरिगणनं कृत्वा नैमित्तिकानि प्रदर्शयितुमाह—

शिर इति । शिरसः कपालमस्यास्तीति शिरःकपाली । तथा ध्वजवान् ( ११।७२ )—'कृत्वा शवशिरोध्वजम्' इति मनुस्मरणात् । अन्यच्छिरःकपालं दण्डाग्रसमारोपितं ध्वजशब्दवाच्यं गृह्णीयात् । नच कपालं स्वव्यापादितब्राह्मणशिरःसम्बन्धि ग्राह्यम् । 'ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसञ्चरेत्' इति शातातपस्मरणात् । तदलाभेऽन्यस्यैव ब्राह्मणस्य ग्राह्यम् । एतदुभयं पाणिनैव ग्राह्यम् । 'खट्वाङ्गकपालपाणिः' इति गौतमस्मरणात् । खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मको ध्वजो गृह्यते न पुनः खट्वैकदेशः । 'महोक्षः खट्वाङ्गं परशुः' इत्यादिव्यवहारेषु तस्यैव प्रसिद्धेः । एतच्च कपालधारणं चिह्नार्थं न पुनर्भोजनार्थं भिक्षार्थं वा । 'मृन्मयकपालपाणिर्भिक्षायै ग्रामं प्रविशेत्' इति गौतमस्मरणात् । तथा वनवासिना च तेन भवितव्यम् । ( ११।७२ )— '(१)ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्' इति मनुस्मरणात् । ग्रामसमीपादौ वा । (मनुः ११।७८)—'कृतवापनो वा निवसेद्ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा गो(२)ब्राह्मणहिते रतः'॥ इति तेनैवोक्तत्वात् । कृतवापनो वेति विकल्पाभिधानाज्जटी वेति लक्ष्यते । अत एव संवर्तः—'ब्रह्महा द्वादशाब्दानि (३)वाल्कवासा जटी ध्वजी' इति । तथा भिक्षाशनशीलश्च भवेत् । भिक्षा च लोहितकेन मृन्मयखण्डशरावेण ग्राह्या । 'लोहितकेन खण्डशरावेण ग्रामं भिक्षायै प्रविशेत्' इति आपस्तम्बस्मरणात् । सप्तागाराण्ये(४)वान्नमिष्टं लभ्येत वा न वेत्येवमसङ्कल्पितानि

(१) ब्रह्महा द्वादशसमा इति पाठः । (२) सर्वभूतहिते ग० ।
(३) चीरवासा जटी ख० । (४) ण्येवात्र मृष्टं लभ्यते नापेत्येवमसङ्कल्पितानि ख० ।

भिक्षार्थे प्रविशेत् 'सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षम्' इति वसिष्ठस्मरणात् । (१)तथैककाल एव सा ग्राह्या । 'एककालाहारः' इति तेनैवोक्तत्वात् । एतच्च भैक्षं ब्राह्मणादिवर्णेष्वेव कार्यम्, 'चातुर्वर्ण्ये चरेद्भैक्षं खट्वाङ्गी संय(२)तात्मवान्' इति संवर्तस्मरणात् । तथा ब्रह्महास्मीति स्वकर्म ख्यापयन् द्वारि स्थितो भि(३)क्षां याचेत् । 'वेदमनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः' इति पराशरस्मरणात् । अयं च भैक्षाशित्वनियमो यद्यन्यैर्जीवनाशक्तौ द्रष्टव्यः । 'भिक्षार्थे प्रविशेद्ग्रामं यद्यन्यैर्यदि न जीवति' इति संवर्तस्मरणात् । तथा ब्रह्मचर्यादियुक्तेन च तेन भवितव्यम् । य(४)ट्वाङ्गकपालपाणिर्द्वादश वत्सरान् ब्रह्मचारी भिक्षार्थे ग्रामं प्रविशेत्कर्माचक्षाणः पथाऽपक्रामेत्सन्दर्शनादार्यस्य । ('उत्थि(५)तस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि । एतद्वीरासनं नाम सर्वपापप्रणाशनम्' ॥) 'स्थाना(६)सनाभ्यां विहरेत्सवनेषूदकोपस्पर्शी शुद्ध्येत्' इति गौतमस्मरणात् । ब्रह्मचारिग्रहणं च 'वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनोपानच्छत्रकामक्रोधलोभमोहहर्षनृत्यगीतपरिवादनभयानि' इति ब्रह्मचारिप्रकरणोक्ताखिलधर्मप्राप्त्यर्थम् । अत एव शङ्खः—'स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलुः । भिक्षाचर्याऽग्निकार्यं च कृष्माण्डीभिः सदा जपः' ॥ इति । तस्य भवेदिति शेषः । अत्र सवनेषूदकस्पर्शीति स्नानविधानात्तदङ्गभूतमन्त्रादिप्राप्तिरप्यवगम्यते । तथा 'शुचिना कर्म कर्तव्य'मित्यस्य सर्वकर्मसा(७)धारणत्वात्तत्तचर्याङ्गभूतशौचसम्पत्त्यर्थं स्नानवत्सन्ध्योपासनमपि कार्यम् । तस्यापि शौचापादनद्वारेण सर्वकर्मशेषत्वात् । तथा च दक्षः—'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेत्' ॥ इति । न च 'द्विजातिकर्मभ्यो हानिः पतनम्' इति वचनात् सन्ध्योपासनायाश्च द्विजातिकर्मत्वादप्राप्तिरिति शङ्कनीयम् । यस्मात्पतितस्यैव व्रतचर्योपदेशात्तदङ्गतयैव सन्ध्योपासनादिप्राप्तिरतो 'द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः' इत्यादीना-

---

(१) तथा भायङ्काल एव ख० । (२) यत, पुमान् क० ङ० ।
(३) भिक्षां चरेत् ख० । (४) खट्वाङ्गपाणि ख० ।
(५) इदं पद्यं ङ० पुस्तके नास्ति । (६) स्थानासनाभ्यां क० ।
(७) साधारणस्मरणत्वात् ख० ।

मेव द्विजातिकर्मणां व्रतचर्याङ्गभूतानां हानिर्न सर्वेषाम्। तावन्मात्रपरत्वेन हानिवचनस्य चरितार्थत्वात् । इयं च मनुयाज्ञवल्क्यगौतमादिप्रतिपादिता द्वादशवार्षिकव्रतचर्यैकैव न पुनर्भिन्ना, परस्परसापेक्षत्वादविरोधाच्च । तथा हि 'भिक्षाशी कर्म वेदय'न्नित्युक्ते किं भिक्षापात्रं केषां वा गृहेषु कतिषु वेत्याकाङ्क्षा जायेतैव । तत्र 'लोहितकेन खण्डशरावेण' इत्यापस्तम्बवचनैः परिपूरणमविरुद्धम्। यतः सर्वैरेककल्पोपदेशात् । यत्कैश्चिदुक्तं मनुगौतमाद्युक्तेतिकर्तव्यतायाः परस्परसापेक्षत्वेऽपि विकल्प इति, तदनिरूप्यैवोक्तमिति मन्तव्यम् । एवं द्वादशवर्षाणि व्रतचर्यामावर्त्य ब्रह्महा शुद्धिमाप्नुयात् । इयं चाऽकामकृतब्रह्मवधविषया । (११'८९)—'इयं विशुद्धिरुदिता प्रमाप्याऽकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' ॥ इति मनुस्मरणात् । अत्रेदं चिन्तनीयम् । किं द्वित्र(१)ब्राह्मणवधे प्रायश्चित्तस्य तन्त्रत्वमुतावृत्तिरिति । तत्र केचिन्मन्यन्ते ब्रह्महा द्वादशाब्दानीत्यत्र ब्रह्मशब्दस्यैकस्मिन्द्वयोर्बहुषु साधारणत्वादेकस्मिन्ब्राह्मणवधे यत्प्रायश्चित्तं तदेव द्वितीये तृतीयेऽपि । तत्रैकब्राह्मणवधनिमित्तकप्रायश्चित्तानुष्ठाने सतीदं कृतमिदं नेति न शक्यते वक्तुम् । देशकालकर्तॄणां प्रयोगानुबन्धभूतानामभेदेनागृह्यमाणविशेषत्वात्तन्त्रानुष्ठानेनैव पापक्षयलक्षणकार्यनिष्पत्तिर्युक्ता । यथा तन्त्रानुष्ठितैः प्रयाजादिभिराग्नेयादिषु तन्त्रेणैवाऽनेकोपकारलक्षणकार्याणां निष्पत्तिः । न चैवं वाच्यम् , 'द्वि(२)त्रब्राह्मणवधे पापस्य गुरुत्वादेनसि गुरूणि गुरूणि लघुनि लघूनि' इति, गौतमवचनादावृत्तमेव प्रायश्चित्तानुष्ठानं युक्तम्, विलक्षणकार्ययोस्तन्त्रेण निष्पत्त्यनुपपत्तेरिति । यतो नेदं वचनमावृत्तिविधायकं किन्तूपदिष्टानां गुरुलघुकल्पानां व्यवस्थाप्रतिपादनपरम् । न च द्वितीयब्राह्मणवधे पापस्य गुरुत्वं, प्रमाणाभावात् । यच्च मनुदेवलाभ्यामुक्तम्—'विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं (३)भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः' ॥ इति, तदपि 'प्रतिनिमित्तं नैमित्ति(४)कशास्त्रमावर्तते' इति न्यायेन द्वित्रब्राह्मणवधगोचरनैमित्तिकशास्त्रावृत्त्यनुवादेन चतुर्थे तदभावविधिपरम् , न पुनर्द्वितीयब्रह्मवधे प्रायश्चित्तानुष्ठान-

(१) किं तत्र द्वित्रिब्राह्मणवधे ख० । (२) द्वित्रिब्राह्मण ख० ।
(३) द्विगुणं चरेत् ख० । (४) त्तिकमावर्तते ख० ।

द्वैगुण्यविधिपर(१)मपि । वाक्यभेदप्रसङ्गात् । तस्मात् त्रिप्रब्राह्मणवधेऽपि सकृदेव द्वादशवार्षिकाद्यनुष्ठानं युक्तम्, यथा 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे'दित्यादिगृहदाहादिनिमित्तेषु चोदितानां क्षामवत्यादीनां युगपदनेकेष्वपि गृहदाहादिनिमित्तेषु सकृदेवानुष्ठानम् । अत्रोच्यते । न हि वचनविरोधे न्यायः प्रभवति । वचने च विधेः प्राथमिकाद्वित्यादिकं त्रिप्रब्राह्मणवधे प्रायश्चित्तानुष्ठानावृत्तिविधिपरम् । एवं सति न्यायलभ्यतन्त्रानुष्ठानबाधेनावृत्तिविधायिदं वचनं प्रवृत्तिविशेषकरं स्यात् । इतरथा शास्त्रतः प्राप्त्यनुवादकत्वेनाऽनर्थकं स्यात् । न च वाक्यभेदः । चतुर्थादिब्रह्मवधपर्युदासेनेतरत्रावृत्त(२)प्रायश्चित्तविधानेनैकार्थत्वात् । किञ्च 'चतुर्थे नास्ति निष्कृति'रिति लिङ्गदर्शनाद्धन्यमानब्राह्मणसंख्योत्कर्षे दोषगौरवं गम्यते । तथा देवलादिवचनाच्च 'यस्त्वयादनभिसन्धाय पापं कर्म सकृत्कृतम् । तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभि'' ॥ इति । न च विलक्षणयोर्गुरुलघुदोषयोः क्षयस्तन्त्रेण निष्पद्यते । अत एवंविधेषु दोषगुरुत्वेन कार्यवैलक्षण्यादपि प्रतिनिमित्तं नैमित्तिकस्यावृत्तिर्युक्ता । क्षामवत्यादिषु पुनः कार्यस्यावैलक्षण्याद्युक्तस्तत्प्रसाद इत्यलं प्रपञ्चेन । यच्चेदं 'चतुर्थे नास्ति निष्कृति'रिति तदपि महापातकविषयम् । पादस्यातिगुरुत्वेन प्रायश्चित्ताभावप्रतिपादनपरत्वात् । अतः शूद्रादिसेवनादौ बहुशोऽभ्यस्ते तदनुगुणप्रायश्चित्तावृत्तिः कल्पनीया न पुनः प्रायश्चित्ताभावः । अत एवोक्तं मनुना (११।१४०)– 'पूर्णे चान(३)स्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्' इति । इदं च द्वादशवार्षिकं व्रतं साक्षाद्धन्तुरेव । ब्रह्महेति तस्यैवाऽभिधानात् । अनुग्राहको यत्प्रायश्चित्तभाजं पुरुषमनुगृह्णाति स तत्प्रायश्चित्तं पादोनं कुर्यात् । अतस्तस्य द्वादशवार्षिकेण पादोनं नववार्षिकं, प्रयोजकस्त्वर्धोनं षड्वार्षिकं कुर्यात् । अनुमन्ता पुनः सार्धपादं सार्धचतुर्वार्षिकं, निमित्ती त्वेकपादं त्रिवार्षिकम् । अत एव सुमन्तुः—'तिरस्कृतो यदा विप्रो हत्वात्मानं मृतो यदि । निर्गुणः साहसात्क्रोधाद् गृहक्षेत्रादिकारणात् ॥ त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम् । गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम् ॥ अत्रायं निर्गुणो विप्रो

(१) परमिति ख० परमेव ग० ।
(२) वृत्तिनय ग्रन्थ ङ० । (३) अस्थिरहित नां प्राणिनां शकटपरिमितानां वधे इत्यर्थः ।

ह्यत्यर्थं निर्गुणोपरि । क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः ॥ वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये' ॥ इति । यदा पुनर्निमित्त्य-(१)त्यन्तगुणवान् आत्मघाती चात्यन्तनिर्गुणस्तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात् । 'केशश्मश्रुनखादीनां कृत्वा तु वपनं वने । ब्रह्मचर्यं चरन्विप्रो व(२)र्षेणैकेन शुध्यति' ॥ इति तेनैवोक्तत्वात् । अनयैव दिशाऽनुग्राहकप्रयोजकादीनां येऽनुग्राहकप्रयोजकादयस्तेषामपि प्रायश्चित्तं कल्प्यम् । अस्यां च कल्पनायां प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु (३)भागिनो 'यो भूय आरभते तस्मिन्फलविशेषः' इत्यापस्तम्बीयं वचनं मूलम् । तथा प्रोत्साहकादीनामपि दण्डप्रायश्चित्ते कल्प्ये । यथाह पैठीनसिः—'हन्ता मन्त्रोपदेष्टा च तथा सम्प्रतिपादकः । प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥ आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् । उपेक्षकः शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः ॥ अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत् । यथाशक्त्यनुरूपं च दण्डं चैषां प्रकल्पयेत्' ॥ इति । तथा बालवृद्धादीनां साक्षात्कर्तृत्वेऽप्यर्धमेव—'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च' ॥ इत्यङ्गिरःस्मरणात् । तथा(४)सुमन्तुः—'अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा । अर्धमेव भवेत्पुंसां तुरीयं तत्र योषिताम्' ॥ इति । तथाऽनुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तम् । 'स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः' ॥ इति विष्णुस्मरणात् । अतश्च यच्छङ्खेन—'ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सुहृज्जनः' ॥ इति प्रतिपाद्योक्तम्—'अतो बालतरस्यास्य नापराधो न पातकम् । राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते' ॥ इति, तदपि सम्पूर्णप्रायश्चित्ताभावप्रतिपादनपरं न पुनः सर्वात्मना तदभावप्रतिपादनपरम् । आश्रमविशेषनिरपेक्षेण श्रूयमाणेषु ब्राह्मणो न हन्तव्यस्तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्येवमादिष्वनपेक्षितवयोविशेषस्यैवाऽधिकारात् । अतश्च तदीयमपि प्रायश्चित्तं पित्रादिभिरेवाचरणीयम् । 'पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विदध्यात्' इति तस्यैव(५)

(१) गुणवदुपरि आत्मघाती चा० । (२) वर्षैकेण विशुध्यति ख० । (३) भागिनो भूय ख० । (४) तथार्वाक्तु ख० । (५) पुत्रहिताचरणे ख० ।

पुत्रादिविहिताचरणेऽधिकृतत्वात्। यत्र पुनः कस्मिंश्चिद्ब्रह्मवधे प्रयो(१)जकभावमापन्नस्यान्यस्मिन् साक्षात्कर्तृत्वे गुरुलघुप्रायश्चित्तसन्निपातस्तत्र द्वादशवार्षिकादिगुरुप्रायश्चित्तान्तःपातिनः प्रयोजकस्यान्यलघुप्रायश्चित्तस्य प्रसङ्गात्कार्यसिद्धिः। न चैवं सत्यविशेषाल्लघुकल्पेन महतोऽपि सिद्धिः स्यादित्याशङ्कनीयम्। अत्र ह्यन्तःपातितयानुष्ठाने विशेषावगमात्प्रसङ्गात्कार्यसिद्धि(२)रवगम्यते। न च लघ्वन्तःपाती महाकल्प इति कुतः प्रसङ्गाशङ्का। न च चैत्रवधजनितकल्मषक्षयार्थं(३)मनुष्ठितेन कथं विष्णुमित्रवधोत्पाद्यपापनिवृत्तिरिति वाच्यम्। चैत्राद्युद्देशस्यातन्त्रत्वात्। अतो यथा काम्यनियोगनिष्पत्त्यर्थं स्वर्गार्थं वाऽनुष्ठितैराग्नेयादिभिर्नित्यनियोगनिष्पत्तिस्तद्वल्लघुप्रायश्चित्तस्यापि कार्यसिद्धिः। यत्पुनर्मत्स्यमाङ्गिरोवचनम्—'गवां सहस्रं विधिवत्पात्रेभ्यः प्रतिपादयेत्। ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च'॥ इति तत्सवनस्थगुणवद्ब्राह्मणविषयम्। एतच्च 'द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्' इत्येतद्वाक्यविहितद्विगुणद्वादशवार्षिकव्रतचर्याशक्तस्य वेदितव्यम्। प्रायश्चित्तस्यातिगुरुत्वात्। न त्वनाद्युक्तद्वादशवार्षिकविषयम्। तत्र हि द्वादशदिनान्येकैकप्राजापत्यमिति गणनायां प्राजापत्यानां षष्ट्यधिकशतत्रयं भवति। यद्यपि प्राजापत्यस्यान्ते त्र्यहमुपवासोऽधिकस्तथाप्यत्र वनवासजटाधारणवन्याहारत्वादि(४)रूपतपोविशेषयुक्तत्वादुपवासाभावेऽप्येकैकस्य द्वादशाहस्य प्राजापत्यतुल्यत्वम्। ततश्च—'प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्विचक्षणः। गवामभावे दातव्यं तन्मूल्यं वा न संशयः'॥ इत्यनेन न्यायेन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं शतत्रयं भवति न पुनः सहस्रम्। अतो यथोक्त एव विषयो युक्तः। यदपि शङ्खवचनम्—'पूर्ववदमतिपूर्वे चतुर्षु वर्णेषु विप्रं प्रमाप्य द्वादशवत्सरान् षट् त्रीन् सार्धं संवत्सरं च व्रतान्यादिशेत्तेषामन्ते गोसहस्रं तदर्धं तस्यार्धं तदर्धं च दद्यात्सर्वेषां वर्णानामानुपूर्व्येण' इति द्वादशवार्षिकगोसहस्रयोः समुच्चयविधि(५)परं तदाचार्यादिहननविषयं द्रष्टव्यम्। तस्यातिगुरुत्वात्। तथा च दक्षः—'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। आचार्ये शतसाहस्रं श्रो-

(१) प्रयोजकभावापन्न क०। (२) सिद्धिरुच्यते क०। (३) मनुष्ठेयेन ख०।
(४) रूपतया विशेष। (५) समुच्चयपरं ख०।

त्रिये दत्तमक्षयम्' ॥ इति प्रतिपाद्योक्त(१)वान्—'समद्विगुणसाहस्रमानन्त्यं च यथाक्रमम् । दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि' ॥ इति । तथापस्तम्बेन द्वादशवार्षिकमुक्त्वोक्तमस्मिन्नेव विषये—'गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमोत्तमादुच्छ्वासाच्चरेत्' इति, तत्र यावज्जीवमावर्तमाने व्रते यदा त्रैगुण्यं चातुर्गुण्यं वा संभाव्यते तदा तत्र समर्थस्य बहुधनस्यायं दानतपसोः समुच्चयो द्रष्टव्यः । द्वादशवार्षिकव्यतिरिक्तानां तु सुमन्तुपराशराद्युक्तानां प्रायश्चित्तानामुत्तरत्र व्यवस्थां वक्ष्यामः । ननु द्वादशवार्षिकादिकल्पानां व्यवस्था कुतोऽवसिता । न तावद्द्वादशवार्षिकादिविधायकवाक्यैरिति युक्तम् । तत्राप्रतीतेः । न च वाच्यं प्रमाणावगतगुरुलघुकल्पानां बाधो मा प्रसाङ्क्षीदिति व्यवस्था कल्प्यत इति । विकल्पसमुच्चयाङ्गाङ्गिभावानामन्यतमाश्रयणेनापि बाधस्य सुपरिहरत्वात् । अत्रोच्यते—न तावद्द्वादशवार्षिकसेतुदर्शनादीनां विषमकल्पानां विकल्पोऽवकल्प्यते । विकल्पाश्रयणे गुरुकल्पानामनुष्ठानासम्भवेनानर्थक्यप्रसङ्गात् । न च षोडशिग्रहणाग्रहणवद्विषमयोरपि विकल्पोपपत्तिरिति वाच्यम् । यतस्तत्रापि सति सम्भवे ग्रहणमेवेति युक्तं कल्पयितुम् । यद्वा षोडशिग्रहणानुगृहीतेनातिरात्रेण क्षिप्रं स्वर्गादिसिद्धिरतिशयितस्य वा स्वर्गस्येति कल्पनीयम् । इतरथा ग्रहणविधेरानर्थक्यप्रसङ्गात् । नापि समुच्चयः । उपदेशातिदेशप्राप्तिमन्तरेण समुच्चयो न सम्भवति । उपदेशावगतनैरपेक्ष्यस्य बाधप्रसङ्गात् । न चाङ्गाङ्गिभावः । श्रुत्यादिविनियोजकानामभावात् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि विनियोजकानि । अतः परस्परोपमर्दपरिहारार्थं विषयव्यवस्थाकल्पनैवोचिता । सा च जातिशक्तिगुणाद्यपेक्षया कल्पनीया । 'जातिशक्तिगुणापेक्षं सकृद् बुद्धिकृतं तथा । अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्' ॥ इति देवलस्मरणात् ॥ २४३ ॥

( मिता० ) पूर्वोक्तस्य ब्रह्महत्यादिप्रायश्चित्तस्य नैमित्तिकस(२)माप्त्यवधिमाह—

ब्राह्मणस्येति । यश्चौरव्याघ्रादिभिर्व्यापाद्यमानस्य ब्राह्मणस्यैकस्याप्यात्मप्राणानन्तरे कृत्वा प्राणत्राणं करोति गवां द्वाद(३)शक-

(१) योक्तवान् ख० । (२) समस्यावधि ङ० (३) कस्य वाऽसंपूर्णोऽपि ख० ।

स्यात्तावदसम्पूर्णेऽपि द्वादशवार्षिके शुद्ध्येत् । यद्यपि प्राणत्राणे प्रवृत्तस्तदक्षत्वैव म्रियते तथापि शुद्ध्यत्येव । अत एव मनुना (११।७९)—'ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजन् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च' ॥ इति । ब्राह्मणरक्षणं तदर्थे मरणं च पृथगुपात्तम् । तथा परकीयाश्वमेधावभृथाख्यकर्माङ्गभूतस्नानसमये स्वयमपि स्नात्वा ब्रह्महत्यायाः शुद्धिं प्राप्नुयात् । (१)स्नानं च स्वकृत्यं विख्याप्य कुर्यात् । तथा च मनुः (११।९२)—'शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे । स्वमेनोऽवभृथे स्नात्वा हयमेधे वि(२)मुच्यते' ॥ इति । भूमिदेवा ब्राह्मणा ऋत्विजस्तेषां नरदेवेन यजमानेन राज्ञा समवाये स्वीयमेनः शिष्ट्वा विख्याप्याऽश्वमेधावभृथे स्ना(३)त्वा शुध्यति यदि तैरनुज्ञातो भवति। 'अश्वमेधावभृथं गत्वा तत्रानुज्ञातः स्नातः सद्यः पूतो भवति' इति शङ्खस्मरणात् । अश्वमेधावभृथग्रहणमग्निष्टुन्मध्यानां पञ्चदशरात्रादिकावान्तराणामग्निष्टुत्समासिकानां वा सर्वमेधादीनामुपलक्षणम् । 'अश्वमेधावभृथे वाऽन्ययज्ञेऽप्यग्निष्टुदन्तश्चेत्' इति गौतमस्मरणात् । अयं च प्रक्रान्तद्वादशवार्षिकस्य कथञ्चित् ब्राह्मणप्राणत्राणादिकं कुर्वतो व्रतसमाप्त्यवधिरुच्यते । यथा सारस्वते सत्रे प्लाक्षं प्रस्रवणं प्राप्योत्थानमृषभैकशतानां वा गवां सहस्रमभावे सर्वस्व(४)दानं गृहपतिमरणे चेति । न पुनः स्वतन्त्रं प्रायश्चित्तान्तरम् । तथा च शङ्खः—'द्वादशे वर्षे शुद्धिं प्राप्नोत्यन्तरा वा ब्राह्मणं मो(५)चयित्वा, गवां द्वादशानां परित्राणात्सद्य एवाऽश्वमेधावभृथस्नानाद्वा पूतो भवति' इति । अत एव मनुना ( ११।७८ )—'कृतवापनो वा निवसेत्' इति द्वादशवार्षिकस्य गुणविधिं प्रक्रम्य । ( ११।७९ )—'ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च'॥ इत्यादिना मध्ये ब्राह्मणत्राणादिकमभिधाय (११।८१)—'एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः । समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति' ॥ इति द्वादशवार्षिकमेवोपसंहृतम् । ननु ब्रह्महत्यायाः शुद्धिं प्राप्नुयादिति ब्राह्मणत्राणादीनां द्वादशवार्षिकेण सहैकफलत्वावगमात्स्वातन्त्र्यमेव युक्तं न पुनरङ्गत्वम् । किञ्च प्रधानाविरोधित्वादपि

(१) स्नाने च ख० । (२) विशुध्यति क० । (३) स्नात्वा शुध्येत ख० ।
(४) सर्वस्वजान्यां, सर्वस्वयाज्याथ्यां क० । (५) भोजयित्वा क० ।

नाङ्गत्वम् । प्रधानानुग्राहकं ह्यङ्गं भवति । न च प्रारब्धद्वादशवार्षिकस्येदं विधानम् । येन तत्कार्यं विधानं गम्यते । यथा 'सत्रायाऽवगूर्य विश्वजिता यजेत' इति सत्रप्रयोगप्रवृत्तस्य तत्परिसमापनाक्षमस्य विश्वजिद्विधानमतोऽपि स्वातन्त्र्यमेव युक्तम् । यथाऽग्निप्रवेशलक्ष्यभावादीनाम् । न च तेषामपि द्वादशवार्षिकोपक्रमोपसंहारमध्यपठितत्वेन तदङ्गत्वमिति शङ्कनीयम् । यतः सत्यपि मध्यपाठे निर्ज्ञातप्रयोजनत्वेन प्रयोजनाकांक्षाविरहान्न परस्परमङ्गाङ्गित्वं युक्तम् । यथा सामिधनीप्रकरणमध्य(१)वर्तिनां निर्वित्पदानामग्निसमिन्धनप्रकाशत्वेन सामिधेनीभिः सहैककार्याणां न सामिधेन्यङ्गत्वम् । न चैकान्ततोऽग्निप्रवेशादीनां द्वादशवार्षिकमध्ये पाठः, वसिष्ठगौतमादिभिरेषां द्वादशवार्षिकप्रक्रमात्प्रागेव पठितत्वात् । इदमेव स्वातन्त्र्यं प्रकटयितुं मनुना (११।७३)—'लक्ष्यं शस्त्रभृतां वा स्यात्प्रास्येदात्मानमग्नौ वा' इति प्रतिवाक्यं वाशब्दः पठितः । तथा प्रतिप्रायश्चित्तमेवोपसंहृतम् ( मनुः ११।८६ )—'अतोऽन्यतममास्थाय विधिं विप्रः समाहितः । ब्रह्महत्याकृतं पापं व्यपोहत्यात्मशुद्धये' ॥ इति । अतोऽग्निप्रवेशादीनां स्वातन्त्र्यमेव युक्तम् । अतश्च ब्राह्मणत्राणादेरप्येकफलत्वान्नाङ्गत्वमिति । उच्यते--परिहृतमेतत्, 'अन्तरा ब्राह्मणं मोचयित्वे'त्यादिना शङ्खवचनेनाऽङ्गत्वावगमात् । अङ्गस्यैव यतः प्रधानद्वारेण फलसम्बन्धः । न च प्रधानविरोधः, यतो ब्राह्मणत्राणावधिकस्यैव व्रतानुष्ठानस्य फलसाधनत्वं विधीयत इति न विरोधः ॥ २४४ ॥

( मिता० ) किञ्च—

दीर्घेति । दीर्घेण बहुकालव्यापिना तीव्रेण दुःसहेनामयेन कुष्ठादिव्याधिना ग्रस्तं पीडितं ब्राह्मणं गां वा तथाविधां पथि दृष्ट्वा निरातङ्कं नीरुजं कृत्वा ब्रह्महा शुचिर्भवति । ननु ब्राह्मणस्य परित्राणादित्यत्र यदुक्तं ब्राह्मणरक्षणं तदेव किमर्थं पुनरुच्यते ब्राह्मणं गामथापिचेति । सत्यमेवम् । किन्त्वात्मप्राणपरित्यागेनाधस्तनवाक्ये ब्राह्मणरक्षणमुक्तमधुना पुनरौषधदानादिनेति विशेषः । अमुनैवाऽभिप्रायेणोक्तं मनुना (११।८०)—'विप्रस्य तन्निमित्ते वा प्राणलाभे विमुच्यते' इति ॥ २४५ ॥

---

( १ ) वर्तिनामग्निविदामपि ख०

( मिता० ) किञ्च—

आनीयेति । विप्रस्यापहृतसर्वस्वतयाऽवसीदतः सम्बन्धि द्रव्यं भूहिरण्यादिकं चौरैर्हृतं साकल्येनानीय रक्षणं यः करोति स विशुध्यति । आनयने प्रवृत्तः स्वयं चौरैर्घातितो वा यदि वा तन्निमित्तं ब्राह्मणसर्वस्वानयनार्थं तत्र युध्यमानः शस्त्रैः क्षतो मृतकल्पो जीवन्नपि विशुध्यति । शस्त्रैरिति बहुवचनं क्षतबहुत्वप्राप्त्यर्थम् । अत एव मनुना ( ११।८० )—'(१)ऽवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा' इति त्र्यवरग्रहणं कृतम् । एतस्य श्लोकद्वयोक्तकल्पपञ्चकस्य ब्राह्मणरक्षणरूपकत्वेनान्तरा वा ब्राह्मणं मोचयिष्येत्यनेन शङ्खवचनेन क्रोडीकृतत्वात् द्वादशवार्षिकसमासवधित्वेनेतरग्रहणे विनियोगान्न स्वातन्त्र्यम् ॥ २४६ ॥

( मिता० ) प्रायश्चित्तान्तरमाह—

लोमभ्य इति । लोमभ्यः स्वाहेत्येवमादिभिर्मन्त्रैर्लोमप्रभृतिमज्जान्तां तनुं जुहुयात् । इतिशब्दः करणत्वनिर्देशार्थः । एवंशब्दः प्रकारसूचनार्थः । हिशब्दः स्मृत्यन्तरप्रसिद्धत्वगादीनां प्रभृतिशब्देनाक्षिप्यमाणानां द्योतनार्थः । ततश्च लोमादीनि होमद्रव्याणि चतुर्थ्या निर्दिश्यन्ते स्वाहाकारं पठित्वा तैर्मन्त्रैर्जुहुयात् । ते च हूयमानद्रव्याणां लोमत्वग्लोहितमांसमेदःस्नाय्वस्थिमज्ज्ञानामष्टसंख्यत्वादष्टौ मन्त्रा भवन्ति । तथा च वसिष्ठः—'ब्रह्महा(२)ग्निमुपसमाधाय जुहुयाल्लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासय इति प्रथमाम् । १ । त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासय इति द्वितीयाम् । २ । लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासय इति तृतीयाम् । ३ । मांसानि मृत्योर्जुहोमि मांसैर्मृत्युं वासय इति चतुर्थीम् । ४ । मेदो मृत्योर्जुहोमि मेदसा मृत्युं वासय इति पञ्चमीम् । ५ । स्नायूनि मृत्योर्जुहोमि स्नायुभिर्मृत्युं वासय इति षष्ठीम् । ६ । अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वासय इति सप्तमीम् । ७ । मज्जां मृत्योर्जुहोमि मज्जाभिर्मृत्युं वासय इत्यष्टमीम् । ८ ।' इति । अत्र च लोमप्रभृतितनुं जुहुयादिति लोमादीनां होमद्रव्यत्वावगमाल्लोमभ्यः स्वाहेति सत्यपि चतुर्थीनिर्देशे लोमादीनां न देवतात्वं कल्प्यते । द्रव्यप्रकाशनेनैव मन्त्राणां होमसाधनत्वोपपत्तेः । किन्तु लोमभिर्मृत्युं वासय इ-

(१) त्रिवारं क० । (२) ब्रह्महाग्निमिति पाठान्तरम् ।

त्यादिवसिष्ठमन्त्रपर्यालोचनया मृत्योरेव हविःसम्बन्धावगमाद्देव-तात्वं कल्प्यते। अतश्च लोमादीनि सामर्थ्यात्स्वधितिनावदाय मृत्यूद्देशेनाग्नौ होमान् कृत्वाऽन्ते तनुं प्रक्षिपेत्। अतो यत्कैश्चिदुक्तमनादिष्टद्रव्यत्वा(१)दाज्यहविष्का होमा इति, तदनिरूप्यैवोक्तमित्युपेक्षणीयम्। जुहुयादित्यनेनाग्नौ सिद्धे भ्रूणहाग्निमुपसमाधायेति पुनरग्निग्रहणं लौकिकाग्निप्राप्त्यर्थम्। युक्तं चैतत्। पतिताग्नीनां प्रतिपत्तिविधानात्। 'आहिताग्निस्तु यो विप्रो महापातकभाग्भवेत्। प्रायश्चित्तैर्न शुध्येत तदग्नीनां तु का गतिः॥ वैतानं प्रक्षिपेत्तोये शालाग्निं शमयेद् बुधः'॥ इत्युशनःस्मरणात्। तथा—'महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि। पुत्रादिः पालयेदग्नीन्युक्तश्चादोपसंक्षयात्॥ प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि। (२)गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम्'॥ इति कात्यायनस्मरणात्। तनुप्रक्षेपश्चोत्थायोत्थाय त्रिरधोमुखेन कर्तव्यः। यथाह मनुः (११।७३)—'प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः' इति। गौतमेनाप्यत्र विशेषो दर्शितः—'प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य' इति। अवच्छातस्य अनशनकर्शितकलेवरस्येत्यर्थः। तथा च काठकश्रुतिः—'अनशनेन कर्शितोऽग्निमारोहेत्' इति। इदं च मरणान्तिकं प्रायश्चित्तं कामकारविषयम्। यथाह मध्यमाङ्गिराः—'प्राणान्तिकं च यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः। तत्कामकारविषयं विज्ञेयं नात्र संशयः'॥ इति। तथा—'यः कामतो महापापं नरः कुर्यात्कथञ्चन। न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृते'॥ इति। एतच्च प्रायश्चित्तं स्वतन्त्रमेव न ब्राह्मणत्राणादिवत् द्वादशवार्षिकान्तर्भूतमित्युक्तं प्राक्॥ २४७॥

( मिता० ) किञ्च—

संग्रामे इति। अथवा संग्रामे युद्धभूमावुभयबलप्रेरितशरसम्पातस्थाने लक्ष्यभूतो मृतः शुद्धिमवाप्नुयात्। गाढमर्मप्रहारजनिततीव्रवेदनो मृतकल्पो मूर्च्छितो जीवन्नपि विशुध्यति। लक्ष्यभावश्च प्रायश्चित्ती अयमित्येवं विदुषां धनुर्विद्याविदां संग्रामे स्वेच्छया कर्तव्यो न तु राज्ञा बलात्कारयितव्यः। यथाह मनुः ( ११।१७ )—'लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः' इति। इदं च मरणा-

---

(१) हविष्कामो होम इति ट०। (२) गृह्यं वा निर्वपेच्छ्रौतं ट।

न्तिकत्वात्साक्षात्कर्तुः क्षत्रियस्य कामकारविषयम् । अपिशब्दादश्वमेधादिनापि विशुध्यति । यथाह मनुः ( ११।७५ )—'यजेत वाश्वमेधेन स्वर्जिता गोसवेन च । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा' ॥ इति । अश्वमेधानुष्ठानं सार्वभौमक्षत्रियस्यैव । 'यजेत वाश्वमेधेन क्षत्रियस्तु महीपतिः' इति पराशरस्मरणात् । नासार्वभौमो यजेतेत्यसार्वभौमस्य प्रतिषेधदर्शनाच्च । इदं चाश्वमेधानुष्ठानं सार्वभौमस्य कामकारकृते मरणान्तिकस्थाने द्रष्टव्यम् । 'महापातककर्तारश्चत्वारो मतिपूर्वकम् । अग्निं प्रविश्य शुध्यन्ति स्थित्वा वा महति क्रतौ' ॥ इति यमेन मरणकालाग्निप्रवेशतुल्यतया महाक्रतोरश्वमेधस्य निर्दिष्टत्वात् । स्वर्जिच्छब्दश्च त्रैवर्णिकस्याहिताग्नेरिष्टप्रथमयज्ञस्य द्वादशवार्षिकेण सह विकल्पन्ते । न च स्वर्जिताद्यर्थमाधानं प्रथमयज्ञानुष्ठानं वा कार्यम् । पतितस्य द्विजातिकर्मस्वनधिकारात् । न च सन्ध्योपासनवद्विरोध इति युक्तम् । आधानादेरुत्तरक्रतुशेषत्वाभावात् । ते च दक्षिणान्यूनाधिक्याश्रयणेन (१)द्वादशवार्षिकाद्यर्हेषु साक्षाद्धन्त्रादिषु व्यवस्थापनीयाः ॥ २४८ ॥

( मिता० ) किञ्च—

अरण्य इति । अरण्ये निर्जनप्रदेशे नियतो मितताहारः ( ११।७७ )—'जपेद्वा नियताहारः' इति मनुस्मरणात् । त्रिवारं मन्त्रब्राह्मणात्मकं वेदं जपित्वा शुध्यति । संहिताग्रहणं पदक्रमव्युदासार्थम् । यद्वा मिताशनो भूत्वा प्लाक्षात्प्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः स्रोतःस्रोतः प्रति सरस्वतीम् इत्वा गत्वा विशुध्यति । अशनं च हविष्येण कार्यम् (११।७७)—'हविष्यभुग्वानुचरेत्प्रतिस्रोतःसरस्वतीम्' इति मनुस्मरणात् । अयं च वेदजपो विदुषो हन्तुर्निर्धनस्यात्यन्तगुणवतो निर्गुणव्यापादने प्रमादकृते द्रष्टव्यः । सरस्वतीगमनं तु तादृश एव विषये विद्याविरहिणो द्रष्टव्यम् । निमित्तिनश्च—'तिरस्कृतो यदा विप्रो निर्गुणो म्रियते यदि' इति सुमन्तुवचनस्य दर्शितत्वात् । यत्पुनर्मनुवचनम् ( ११)७५)—'जपित्वान्यतमं वेदं योजनानां शतं व्रजेत्' इति, तदप्यरण्ये नियतो जप्येत्येतस्यैव विषयेऽशक्तस्य द्रष्टव्यम् ॥ २४९ ॥

---

( १ ) द्वादशवार्षिकषड्वार्षिकत्रैवार्षिकादिषु साक्षाद्धन्त्रादिषु ख० ।

( मिता० ) किञ्च—

पात्र इति। न विद्यया केवलयेत्याद्युक्तलक्षणे पात्रे गोभूहिरण्यादिकं जीवनपर्याप्तं समर्थं धनं दत्त्वा शुद्धिमवाप्नुयात्। तद्धनं यः प्रतिगृह्णाति तस्य वैश्वानरदैवत्येष्टिः शुद्ध्यर्थं कर्तव्या। एतच्चाहिताग्निविषयम्। अनाहिताग्नेस्तु तद्दैवत्यश्चरुर्भवति। य एवाहिताग्नेर्धर्मः स एवौपासनिकस्येति गृह्यकारवचनात्। वाशब्दात्सर्वस्वं सपरिच्छदं वा गृहं दद्यात्। यथाह मनुः ( ११।७६ )—'सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्। धनं वा जीवनायालं गृहं वा सपरिच्छदम्' ॥ इति। इदं च पात्रे धनदानं निर्गुणस्य धनवतो हन्तुर्निर्गुणव्यापादने द्रष्टव्यम्। तत्रैव विषये अविद्यमानान्वयस्य सर्वस्वदानं सान्वयस्य तु सोपस्करगृहदानमिति व्यवस्था। यदपि पराशरेणोक्तम्—'चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके। समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत्। वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः ॥ अहं दुष्कृतकर्मा वै महापातककारकः। गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥ गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च। तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥ एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम्। (१)ब्रह्महापि प्रमुच्येत स्नात्वा तस्मिन्महोदधौ ॥ ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम्। दत्त्वा वस्त्रं पवित्राणि पूतात्मा प्रविशेद् गृहम् ॥ गवां वापि शतं दद्याच्चातुर्विद्याय दक्षिणाम्। एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः' ॥ इति। तदपि पात्रे धनं वा पर्याप्तमित्यनेन समानविषयम्। यच्च सुमन्तुवचनम्—'ब्रह्महा संवत्सरं कृच्छ्रं चरेदधःशायी त्रिषवणी कर्मावेदको भैक्षाहारो दिव्यनदीपुलिनसङ्गमाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्यात् स्थानवीरा(२)सनी संवत्सरे पूर्णे हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो ददत्पूतो भवति' इति तदपि हन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने द्रष्टव्यम्। यत्पुनर्वसिष्ठवचनम्—'द्वादशरात्रमभक्षो द्वादशरात्रमुपवसेत्' इति तन्मनसाऽध्यवसितब्रह्महत्यस्य स्वत एवोपरतजिघांसस्य वेदितव्यम्। यत्पुनः—'षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत्। चान्द्रायणं वा कुर्वीत पराकद्वयमेव च' ॥ इति षट्त्रिंशन्मत-

( १ ) ब्रह्महा विप्रमुच्येत ट० । ( २ ) वीरासनेन संवत्सरे ट० ।

वचनं तदप्रत्यानेयपुंस्त्वस्य सप्रत्ययवधे द्रष्टव्यम् । अत्रैव विषये अप्रत्ययवधे बृहस्पतिराह—'अरुणायाः सरस्वत्याः सङ्गमे लोकविश्रुते । शुध्येत्त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः' ॥ इति । एवमन्यान्यपि स्मृतिवचनान्यन्विष्य विषमाणां व्यवस्था विज्ञेया । समानां तु विकल्पः । एतानि च द्वादशवार्षिकादिधनदानपर्यन्तानि ब्राह्मणस्यैव । क्षत्रियादेस्तु द्विगुणादिकम् । यथाहाङ्गिराः—'पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्' ॥ इति । एवं च ब्राह्मणानां येन हन्तृहन्यमानगतगुणविशेषेण यः प्रायश्चित्तविशेषो व्यवस्थितः स एव तद्गुणविशिष्टे क्षत्रियादौ हन्तरि द्विगुणस्त्रिगुणो वेदितव्यः । अनयैव दिशा क्षत्रियवैश्यादावपि हीनेनोत्कृष्टवधे दोषगौरवात्प्रायश्चित्तस्यापि द्वैगुण्यादि कल्पनीयम् । दोषगौरवं च दण्डगौरवादवगम्यते । यथोक्तम्—'प्रतिलोमापवादेषु द्विगुणास्त्रिगुणो दमः । वर्णानामानुलोम्ये च तस्मादर्धार्धहानितः' ॥ इति । यत्तु चतुर्विंशतिमतवचनम्—'प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः । पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत् ।' शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मसु' । इति, तत्प्रतिलोमानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । तथा मूर्धावसिक्तादीनामप्यनुलोमोत्पन्नानां दण्डवत्प्रायश्चित्तमूहनीयम् । दर्शितं दण्डतारतम्यम्—'दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः' इति । ततश्च मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणादतिरिक्तं क्षत्रियान्न्यूनमध्यर्धं द्वादशवार्षिकं भवति । अनयैव दिशा प्रतिलोमोत्पन्नानामपि प्रायश्चित्तगौरवमूहनीयम् । तथा आश्रमिणामपि अङ्गिरसा विशेषो दर्शितः—'गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि । शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शनात्' । इति । शौचवदिति 'एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम्' ॥ इति वचनाद्यथा शौचं द्वैगुण्यादिक्रमेण वर्धते तथा शोधनं प्रायश्चित्तमपि भवतीत्यर्थः । ब्रह्मचारिणस्तु प्रायश्चित्तद्वैगुण्यं षोडशवर्षादूर्ध्वमेव । अर्वाक्तु पुनः 'बालो घाप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति' इति षोडशवर्षादर्वाचीनस्यार्धप्रायश्चित्ताभिधानात् । न च द्वादशवार्षिके चतुर्गुणे क्रियमाणे मध्ये विपत्तिशङ्कया समाप्त्यनुपपत्तेः प्रवृत्तिरेव नोपपद्यत इति शङ्कनीयम् । यतः प्रक्रान्तप्राय-

श्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवत्येव । यथाह हारीतः—'प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते । पूतस्तदहरेवासाविह लोके परत्र च' ॥ इति । व्यासोऽप्याह—'धर्मार्थं यतमानस्तु न चेच्छक्नोति मानवः । प्राप्तो भवति तत्पुण्यमत्र वै नास्ति संशयः' ॥ इति २५०॥

( वी०मि० ) ब्रह्मवधादिप्रायश्चित्तं प्राणान्तिकं भिन्नं ग्रन्थलाघवेनाऽत्रैव क्षत्रियादिविशेषवधेऽप्याह—

यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम् ॥
गर्भहा च यथावर्णं तथात्रेयीनिषूदकः ॥ २५१ ॥

यागस्थयोर्दीक्षितयोः क्षत्रियवैश्ययोरन्यतरस्य हन्तुर्ब्रह्मघ्नव्रततुल्यं व्रतं चरेत् । गर्भहन्ता पुष्पोद्गमानन्तरं षोडशदिनमध्ये ऋतुमतीहन्ता च यथावर्णं यद्वर्णवधे यत्प्रायश्चित्तं तच्चरेदित्यर्थः । तथापदेन साक्षादिति, चकारेण वाकारेण च कामकृतेऽर्धमिति लभ्यते ॥ २५१ ॥

( मिता० ) अधुना निमित्तान्तरेषु ब्रह्महत्याप्रायश्चित्तस्यातिदेशमाह—

यागस्थेति । दीक्षणीयाद्युदवसानीयापर्यन्ते सोमयागप्रयोगे वर्तमानौ क्षत्रियवैश्यौ यो व्यापादयति असौ ब्रह्महणि पुरुषे यद्ब्रह्महत्याव्रतमुपदिष्टं द्वादशवार्षिकादि तच्चरेत् । यद्यपि यागशब्दः सामान्यवचनस्तथाप्यत्र सोमयागमभिधत्ते । 'सवनगतौ च राजन्यवैश्यौ' इति वसिष्ठेन सवनत्रयसम्पाद्यस्य सोमयागस्यैव निर्दिष्टत्वात् । अत्र च गुरुलघुभूतानां द्वादशवार्षिकादिब्रह्महत्याव्रतानां जातिशक्तिगुणाद्यपेक्षया प्रागुक्तवद्व्यवस्था वेदितव्या । एवं गर्भवधादिष्वपि । मरणान्तिकं तु नातिदिश्यते, व्रतग्रहणात् । अतः कामतो यागस्थक्षत्रियादिवधे व्रतस्यैव द्वैगुण्यम् । एतच्च व्रतं सम्पूर्णमेव कर्तव्यम् । पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वेति प्रक्रम्याऽऽपस्तम्बेन द्वादशवार्षिकाभिधानात् । गर्भं च विप्रासु सम्भूतं हत्वा यथावर्णं यद्वर्णपुरुषवधे यत्प्रायश्चित्तमुक्तं तद्वर्णगर्भवधे तच्चरेत् । एतच्चानुपजातस्त्रीपुंनपुंसकव्यञ्जनगर्भविषयम् । (११।८७)—'हत्वा गर्भमविज्ञातम्' इति मानवे विशेषदर्शनात् । अत्र च यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव तद्वधनिमित्तव्रतप्राप्तिस्तथापि स्त्रीत्वस्यापि सम्भवात्स्त्री-

शूद्रविट्क्षत्रवध इत्युपपातकत्वेन तत्प्रायश्चित्तप्राप्तिरपि स्यादत स्त्रीपुंनपुंसकत्वेनाविज्ञातेऽपि ब्राह्मणगर्भत्वमात्रप्रयुक्तं ब्रह्महत्याव्रतं कुर्यादित्यर्थवदतिदेशवचनम् । उपजाते स्त्रीपुंसादिविशेषव्यञ्जने यथायथमेव प्रायश्चित्तम् । यश्चात्रेय्या निषूदको व्यापादकः सोऽपि तथा व्रतं चरेत् । हन्यमानात्रेयीवर्णानुरूपं व्रतं चरेदित्यर्थः । आत्रेयीशब्देनर्तुमत्युच्यते । 'रजस्वलामृतुस्नातामात्रेयीमाहुर्यत्र ह्येतदपत्यं भवति' इति वसिष्ठस्मरणात् । अत्रिगोत्रजा च । 'अत्रिगोत्रां वा नारीम्' इति विष्णुस्मरणात् । एतदुक्तं भवति । ब्राह्मणगर्भवधे ब्राह्मण्यात्रेयीवधे च ब्रह्महत्याव्रतम् । क्षत्रियगर्भवधे क्षत्रियात्रेयीवधे च क्षत्रहत्याव्रतमेवमन्यत्रापीति । चशब्दात्साक्ष्ये अनृतवचनादिष्वपि । तथाह मनुः (११।८८)—'उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम्' ॥ इति । यत्र व्यवहारे असत्यवचनेन प्राणिनां वधप्राप्तिस्तद्विषयमेतत् । प्रायश्चित्तस्यातिगुरुत्वात् । प्रतिरोधः क्रोधावेशः । निक्षेपश्च ब्राह्मणसम्बन्धी । स्त्री चाहिताग्निभार्या पतिव्रतात्वादिगुणयुक्तोच्यते सवनस्था च । यथाहाङ्गिराः—'आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च' ॥ इति । 'सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्' । इति पराशरस्मरणात् । एवं च सवनस्थाग्निहोत्रिण्यात्रेयीवधे ब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्यपाठादुपपातकत्वमेव । ननु 'ब्राह्मणो न हन्तव्य' इत्यत्र निषेधेऽनुपादेयगतत्वेन लिङ्गवचनयोरविवक्षितत्वाद्ब्राह्मणजातेश्च स्त्रीपुंसयोः(१)विशेषात्तदतिक्रमनिमित्तप्रायश्चित्तविधेर्ब्रह्महा द्वादशाब्दानीत्यस्योभयत्र प्राप्तत्वात्किमर्थं तथात्रेयीनिषूदक इत्यतिदेशवचनम् । उच्यते—सत्यपि ब्राह्मणत्वेऽनात्रेय्या वधस्य च महापातकप्रायश्चित्तनिराकरणार्थमतस्तस्योपपातकमध्यपाठादुपपातकप्रायश्चित्तमेव । आतिदेशिकेषु च प्रायश्चित्तस्यैवातिदेशो न पातित्यस्य । अतः पतितत्यागादिकार्यं(२)मत्र न भवति २५१॥

(वी०मि०) ब्रह्मवधार्थं यागस्थक्षत्रियवधार्थं च प्रवृत्तस्य वधानिष्पत्तौ प्रायश्चित्तमाह—

चरेद्व्रतमहत्वाऽपि घातार्थं चेत्समागतः ॥

(१) रात्रपर्यवाद् क० । (२) कार्यमात्रं क० ।

घातार्थं ब्राह्मणदिर्यद्यागतस्तदा दैवादहत्वाऽपि व्रतं चरेदित्यर्थः। व्रतं चाऽत्र निमित्ततोऽभिहितं त्रैवार्षिकं काण्डादिना क्षते जाते। अन्यथा तु 'शरप्रक्षेपमात्रे वार्षिकं व्रतम्, अज्ञानतस्तु तदर्धं मानसव्यापारमात्रे द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्' इत्यापस्तम्वोक्तव्रतमिति भवदेवः। इदं च व्रतमपीत्यन्वयेन व्रतान्यत्वं लभ्यते॥

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्॥ २५२॥

(वी०मि०) सवनस्थे सोमयागं कुर्वाणे ब्राह्मणे कामतो हते द्वादशवार्षिकं व्रतं द्विगुणमादिशेत्। तुशब्देन कामकृते सवनस्थब्राह्मणवधे द्विगुणप्रायश्चित्तव्यवच्छेदः। मरणस्य द्वैगुण्यासम्भवादिति दिक्॥ २५२॥

(मिता०) किञ्च—

चरेदिति। यथावर्णमित्यनुवर्तते। ब्राह्मणादिहनने कृतनिश्चयस्तद्व्यापादनार्थं सम्यगागत्य शस्त्रादिप्रहारे कृते कथञ्चित्प्रतिघातादिप्रतिबन्धवशादसौ न मृतस्तदा अहत्वापि यथावर्णं ब्रह्महत्यादि व्रतं चरेत्। तथा च गौतमः—'सृष्टश्चेद्ब्राह्मणवधे अहत्वापि' इति। ननु हनने तदभावे चैकप्रायश्चित्तता न युक्ता। सत्यम्। अत एवौपदेशिकेभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवन्ति। एतच्च प्रपञ्चितं प्राक्। किञ्च—यस्तु सवनसम्पाद्यं सोमयागमनुतिष्ठन्तं ब्राह्मणं व्यापादयति तस्मिन्द्वादशवार्षिकादिव्रतं द्विगुणं समादिशेत्। तेषां च व्रतानां गुरुलघुभूतानां जातिशक्तिगुणाद्यपेक्षया सत्यपि सवनस्थत्वस्याविशेषे पूर्ववदेव व्यवस्थाऽवगन्तव्या। ब्रह्महत्यासमानां तु गुर्वधिक्षेपादीनामातिदेशिकेभ्योऽपि न्यूनत्वादर्वाग्नं द्वादशवार्षिकादि प्रायश्चित्तमित्युक्तम्॥२५२॥

इति ब्रह्महत्याप्रायश्चित्तप्रकरणम्।



(वी०मि०) अथ क्रमप्राप्तं सुरापानप्रायश्चित्तमाह—

सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्॥
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति॥२५३॥
वालवासा जटी वापि ब्रह्महत्याव्रतं चरेत्॥

पिण्याकं वा कणान् वापि भक्षये(१)त्तु समा निशि ॥२५४॥
अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ॥
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५ ॥

सुरापः सुरादीनामन्यतममग्निवदत्यु(२)ष्णं पीत्वा मरणाच्छुद्धिं प्राप्नोतीत्यर्थः । पयो दुग्धम्, एतच्च कामकृते । अकामकृते त्वाह—बालेत्यादि । गोछागादिलोमनिर्मितवस्त्रप्रावृतो, जटाधारी, अपि-शब्दान्मुण्डी वा ब्रह्महत्याव्रतं द्वादशाब्दिकं चरेत् । अत्र—

ब्रह्महा द्वादशाब्दानि बालवासा जटी ध्वजी ।

इति संवर्तवचनात्मासस्याऽत्र विशिष्याऽभिधानाच्छिरःकपाल-धारणान्निवृत्तिरवगम्यते । पुनः पुनः सुरापाने स्वकामकृतेऽपि मरणान्तिकमेव । 'अभ्यासेन तु सुरापोऽग्निवर्णां तां पिबेत् द्विजो चर्णात्पूतो भवतीति विज्ञायते' इति वसिष्ठवचनात् । अत्र द्विजाति-पुरस्कारेणाऽभिधानमनुपनीतसाधारणम् ।

सुरापाननिषेधस्तु जात्याश्रय इति स्थितिः ।

इति स्मरणात्—

प्रागुपनयना(३)द्बालो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता पिता तथा ॥

इति वचनाच्च । अत एव 'त्रयो वर्णा' इति वक्ष्यति । 'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति गौतमवचनं तु पञ्चवर्षाभ्य-न्तरपरम् ।

मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्तु वत्स(४)रात् पञ्च ऊर्ध्वं पित्रोस्तु तद्गुरोः ॥

इति नारदवचनादिति दिक् । परन्तु—

अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो व्याधित एव च ॥

इति वचनादर्धं प्रायश्चित्तम् । एकादशवर्षादूर्ध्वं 'पादो बालेषु दा-

---

(१) भक्षयेत्रिसमा–इति मु० पु० पाठः । (२) अत्युष्ण–इति ख० पु० पाठः ।
(३) अनुपेतस्तु यो बालो–इति ख० पु० पाठ ।
(४) दोषस्त्वापञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोः । इति ख० पु० पाठः ।

परिवित्तेः प्राजापत्यमिति। 'परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा पुनर्निविशेत तां चैवोपयच्छेत' इति वसिष्ठस्मरणात्। इति परिवित्तिप्रकरणम्॥ वार्धुष्यलवणक्रययोस्तु मनुयोगीश्वरोक्तसामान्योपपातकप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया योज्यानि॥ २६५॥

(वी०मि०) एवं सर्वसाधारणानि प्रायश्चित्तान्यभिधाय केषुचिदुपपातकेषु प्रायश्चित्तान्तराण्यप्याह—

ऋ(१)षभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान्॥
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत्॥ २६६॥
वैश्यहाऽब्दं चरेदेतद्द्याद्वैकशतं गवाम्॥
षण्मासाच्छूद्रहाप्येतद्दद्या(२)द्धेनूर्दशापि वा॥ २६७॥
दुर्वृत्ता ब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु॥
दृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये॥ २६८॥
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्॥

क्षत्रियस्य षडङ्गवेदाध्ययनादिमतो वधे एकमधिकं यस्मिन् सहस्रे, तस्य पूरण एकसहस्रः, ऋषभ एकसहस्रो यासां ता ऋषभैकसहस्रा गा दद्यात् शुद्ध्यर्थं दद्यात्। तथा च मनुः—

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
वृषभैकसहस्रा गा दद्यात् शुद्ध्यर्थमात्मनः॥

तथा—

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥

ब्रह्महत्येति। अवृत्तस्थक्षत्रियवधे वर्षत्रयं ब्रह्महत्यावच्छिरःकपालादिधारणरूपव्रतं चरेद्ब्राह्मणः। मनुवाक्ये विरुद्धविभक्तिमति क्षत्रिये वृत्तस्थत्वान्वयात् पुमानित्यनेन स्त्रीणामर्धार्धप्रायश्चित्तं सूचितम्। अपिकारेण कामतो वधे सर्वत्र द्वैगुण्यस्य समुच्चयः। अवृत्तस्थवैश्यवधे अब्दं ब्रह्महत्याव्रतं चरेत्। वृत्तस्थवैश्यवधे सार्धमब्दमिति मनुनाऽभिधानात्। षडङ्गवेदाध्ययनादियुक्तवैश्यवधे गवामेकशतं दद्यात्। अवृत्तस्थशूद्रहा षण्मासानेतद् व्रतं चरेत्। अतिदाग्निरािचरप्रसूता

(१) वृषभैक—इति क० पु० पाठः। (२)

दश धेनूर्वा सवत्सा दद्यात् । तेन पञ्चधेनुतुल्यत्वम् । वृत्तस्थशूद्रवधे मनुना नवमासस्यापि व्रतबोधनात् । वृत्तं च—

गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः ।
प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥

इति स्मृत्यन्तरे परिभाषितम् । आपेक्षा(१)वाक्यं मनूक्तं वृत्तस्थवैश्यशूद्रयोर्वधे प्रायश्चित्तद्वयं समुच्चिनोति । सर्वं चेदं ब्राह्मणकर्तृकवधे । क्षत्रियादीनां तु प्रायश्चित्तहानिः क्रमेण भवति ।

विप्रे तु सकलं देयं पादोनं क्षत्रियस्य तु ।
वैश्येऽर्धं पादशेषस्तु शूद्रजातिषु शस्यते ॥

इति बृहस्पतिवचनात् । एवमन्यत्राऽप्यनुसन्धेयम् । ब्राह्मणादीनां दुर्वृत्ता अनियतपुरुषगामिनीर्योषाः प्रमाप्य हत्वा दृतिं धर्मकोशं जलाधारं, धनुः प्रसिद्धं, बस्तं छागम्, अविं मेषं विशुद्धये दद्यात् । अत्र धनुर्बस्तयोर्योग्यताबलेन क्षत्रविशोर्व्युत्क्रमेणाऽन्वयः । क्वचित् 'क्षत्रविट्' इत्येव पाठः । इदं चाऽन्यजातिव्यभिचरिताकामतो वधे । सकृत्सवर्णव्यभिचरितस्त्रीवधे त्वाह—अप्रकर्षेण दुष्टां स्त्रियं हत्वा अकामतः कामतश्च शूद्रहत्यायां यद्व्रतमकामतः कामतश्चाऽभिहितं तच्चरेत् । असकृत्सवर्णव्यभिचरितस्त्रीवधे तु शूद्रवधे तप्तकृच्छ्रं सुन्दरोतकमवगन्तव्यम् । यागस्थाप्रियमाणा तु त्रैवर्णिकस्त्री यदि हन्यते तदा द्वादशवार्षिकमेव ।

सवनस्थां स्त्रियं हत्वा चरेद्ब्रह्महणो व्रतम् ।

इति पराशरवचनात् । ऋतुमतीवधे तु द्वादशवार्षिकं प्रागेव मन्वष्टतोकम् । तुशब्देनाऽन्यजातिस्त्रीव्यवच्छेदः ॥ २६६-२६८ ॥

( मिता० ) लवणक्रयानन्तरं स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्ये पठितं, तत्र प्रायश्चित्तान्तरमप्याह—

ऋषभेति । एकमधिकं यस्मिन्सहस्रे तदेकसहस्रं तस्य पूरण एकसहस्रः ऋषभ एकसहस्रो यासां गवां ताः ऋषभैकसहस्रास्ताः क्षत्रवधे दद्यात् । अथवा ब्रह्महत्याप्रायश्चित्तं ब्रह्महत्याव्रतं वर्षत्रयं कुर्यात् । वै(२)श्यघाती पुनरेतत् ब्रह्महत्या(३)व्रतमेकवर्षं चरेत् । गवां ऋषभैकशतं वा दद्यात् । शूद्रघाती तु ब्रह्महत्याव्रतं षण्मासं चरेत् ।

---

( १ ) मपेक्षावाक्यं—इति क० पु० पाठः ।
( २ ) वैश्यहन्ता ख । ( ३ ) व्रतमब्दमेकं ख ।

यद्वा दशधेनूरचिरप्रसूताः सवत्सा दद्यात् । इदमकामतो जातिमात्रक्षत्रियादिवधविषयम् । 'अकामतस्तु राजन्यं विनिपात्य' इति प्रक्रम्यैतेषामेव प्रायश्चित्तानां मानवेऽभिधानात् । दानतपसोश्च शक्त्यपेक्षया व्यवस्था । ईषद्वृत्तस्थयोस्तु विट्शूद्रयोः (११।१२६)—'तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः' ॥ इति मनूक्तं द्रष्टव्यम् । वृत्तस्थे क्षत्रिये तु सार्धचतुर्वार्षिकं कल्प्यम् । वृत्तशब्देन चात्र गुणादिकमुच्यते । 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः । प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते' ॥ इति मनुस्मरणात् । यत्तु वृद्धहारीतवचनम्—'ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत् । वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजाः ! ॥ शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गाः' ॥ इति, तत्कामकारविषयम् । श्रोत्रियक्षत्रियादिवधे तु–'तुरीयोनं क्षत्रियस्य वधे ब्रह्महणि व्रतम् । अर्धं वैश्यवधे कुर्यात्तुरीयं वृषलस्य तु' ॥ इति वृ(१)द्धहारीतोक्तं द्रष्टव्यम् । यत्तु वसिष्ठवचनम्—'ब्राह्मणो राजन्यं हत्वाऽष्टौ वर्षाणि व्रतं चरेत् षट् वैश्यं त्रीणि शूद्रम्' इति, तदपि हारीतीयेन समानविषयम् । क्षत्रिये त्वीषद्गुणन्यून इत्येतावान् विशेषः । यदा तु श्रोत्रियो वृत्तस्थश्च भवति तदा पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वेत्यापस्तम्बोक्तं द्वादशवार्षिकं द्रष्टव्यम् । प्रारब्धयागे त्वश्रोत्रिये क्षत्रियादौ व्यापादिते 'यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम्' इति द्रष्टव्यम् । श्रोत्रिये पुनर्यागस्थे क्षत्रियादौ 'ब्राह्मणस्य राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यमृषभैकसहस्राश्च गा दद्यात्, वैश्यवधे त्रिवार्षिकमृषभैकशताश्च गा दद्यात्, शूद्रवधे सांवत्सरिकमृषभैकादशाश्च गा दद्या'दिति गौतमोक्तो दानतपसोः समुच्चयो द्रष्टव्यः । एतच्चामतिपूर्वविषयम् । पूर्ववदमतिपूर्वे चतुर्षु वर्णेषु प्रमाप्य 'द्वादश षट् त्रीन् संवत्सरं च व्रतान्यादिशेत् तेषामन्ते गोसहस्रं च ततोऽर्धं तस्यार्धमर्धं च दद्यात् सर्वेषामानुपूर्व्येणे'ति शङ्खस्मरणात् । इदं च द्वादशवार्षिकं गौतमीयविषयमेव किञ्चिन्न्यूनगुणे क्षत्रिये गुणाधिकयोर्वैश्यशूद्रयोश्च द्रष्टव्यम् । स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्ये विशेषत एव पठितत्वेनोत्सर्गापवादन्यायगोचरत्वाभावादुपपातकसामान्यप्राप्तान्यपि प्रायश्चित्तान्यत्र योजनीयानि । तत्र दुष्ट-

(१) वृद्धहारीतोक्तं द ।

चक्षत्रियादौ कामतो व्यापादिते मानवं त्रैमासिकं, द्वैमासिकं, चान्द्रायणं च वर्णक्रमेण योज्यम्। अकामतस्तु योगीश्वरोक्तं त्रिरात्रोपवाससहितमृषभैकादशगोदानं मासं पञ्चगव्याशनं मासिकं च पयोव्रतं यथाक्रमेण योज्यम्। एतच्च प्रागुक्तं व्रतजातं ब्राह्मणकर्तृके क्षत्रियादिवधे द्रष्टव्यम्। (११।१२७)—'अकामतस्तु राजन्यं विनिपात्य द्विजोत्तम.'। तथा—ब्राह्मणस्य राजन्यवधे षड्वार्षिकम्। तथा—'ब्राह्मणः क्षत्रियं हत्वे'त्यादिषु मनुगौतमहारीतवसिष्ठशाक्येषु ब्राह्मणग्रहणात्। क्षत्रियादिकर्तृके तु क्षत्रियादिवधे पादन्यूनं द्रष्टव्यम्-'विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्धमेकपादस्तु शूद्रजातिषु शस्यते'॥ इति वृद्धविष्णुस्मरणात्। 'यस्तु पर्षदा ब्राह्मणानां तु सा राज्ञां द्विगुणा मता। वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्'॥ इत्यङ्गिरोवचनं तत्प्रातिलोम्येन वाग्दण्डपारुष्यविषयमित्युक्तं गोवधप्रकरणे। मूर्धावसिक्तादीनां वधे एतत्प्रायश्चित्तजातं न भवति। तेषां क्षत्रियादित्वाभावात्। अतो दण्डानुसारेणैव तद्वधे पूर्वोक्तव्रतकदम्बस्य वृद्धिह्रासौ कल्पनीयौ। दण्डस्य च वृद्धिह्रासौ दर्शितौ-'दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरे' इत्यत्र ॥ २६६-२६७ ॥

इति क्षत्रियादिवधप्रायश्चित्तप्रकरणम्।

---

(मिता०) स्त्रीवधे प्रायश्चित्तमाह—

दुर्वृत्तेति। ब्राह्मणादिभार्यां दुर्वृत्ताः स्वैरिणीः प्रमाप्य क्रमेण दृतिं जलाधारचर्मकोशं धनुः कार्मुकं वस्तं छागम् अविं मेषं च विशुद्धये दद्यात्। इदं च प्रातिलोम्येनान्त्यजातिप्रसूनानां ब्राह्मण्यादीनामकामतो वधविषयम्। कामतस्तु प्रचेताः आह—'प्रतिलोमप्रसूतानां स्त्रीणां मासावधिः स्मृतः। अन्तरप्रभवाणां च सूतादीनां चतुर्द्विषट्'॥ इति। ब्राह्मण्या वधे षण्मासाः क्षत्रियायाश्चत्वारो वैश्याया द्वावित्येवं यथार्हनयान्वयः। यदा तु वेश्याकर्मणा जीवन्तीं व्यापादयति तदा किञ्चिद्देयम्। 'वैशिकेन किञ्चित्' इति गौतमस्मरणात्। वैशिकेन वेश्याकर्मणा जीवन्त्यां व्यापादितायां किञ्चिद्देयं देयं तच्च जलम्। (१)'जलकोशं वधे विप्रे ब्राह्मण्याः प्रतिपादयेत्। वधे धेनुः क्षत्रियाया

(१) कोशो दृते च विप्रे वा—इति पाठान्तरम्।

वस्तो वैश्यावधे स्मृतः ॥ शूद्रायामाविकं, वेश्यां हत्वा दद्याज्जलं नरः' ॥ इत्यङ्गिरःस्मरणात् । यदा पुनः क्षत्रियादिभिः प्रातिलोम्येन व्यभिचरिता ब्राह्मणाद्या (१)व्यापाद्यन्ते तदा गोवधप्रायश्चित्तानि यथार्हं योज्यानि ॥ २६८ ॥

( मिता० ) ईषद्व्यभिचरितब्राह्मण्यादिवधे विशेषमाह—

अप्रदुष्टामिति । यदा त्वप्रकर्षेण दुष्टामीषद्व्यभिचारिणीं ब्राह्मण्यादिकां व्यापादयति तदा शूद्रहत्याव्रतं षाण्मासिकं कुर्यात् । यद्वा दश धेनूर्दद्यात् । इदं च षाण्मासिकमकामतो ब्राह्मण्या व्यापादने, क्षत्रियावधे तु कामकृते द्रष्टव्यम् । कामतो वैश्यावधे दश धेनूर्दद्यात् । कामतः शूद्रावधे तु उपपातकसाधारणप्राप्तं मासं पञ्चगव्याशनम् । यदा तु कामतो ब्राह्मणीं व्यापादयति तदा द्वादशमासिकम् । क्षत्रियादीनां त्वकामतो व्यापादने त्रैमासिकसार्धमासिकसार्धद्वाविंशत्यहानि । यथाह प्रचेताः—'अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान्वेति । क्षत्रियां हत्वा षण्मासान्मासत्रयं वेति । वैश्यां हत्वा सार्धमासं सार्धद्वाविंशत्यहानि वा' इति । यत्तु हारीतेन—'षड्वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्यं त्रीणि वैश्ये सार्धं शूद्र' इति प्रतिपाद्योक्तं 'क्षत्रियवद्ब्राह्मणीषु वैश्यवत्क्षत्रियायां शूद्रवद्वैश्यायां शूद्रां हत्वा नवमासान्' इत्युक्तं तदपि कर्मसाधनत्वादिगुणयोगिनीनां कामतो व्यापादने द्रष्टव्यम् । अकामतस्तु सर्वत्रार्धं कल्प्यम् । आत्रेय्यां तु प्रागुक्तम् ॥

इति स्त्रीवधप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) हिंसाप्रायश्चित्तप्रसङ्गेन प्रकीर्णकपदवाच्यहिंसाप्रायश्चित्तमाह—

अस्थिमतां सहस्रं (२)च तथाऽनस्थिमतामनः ॥ २६९ ॥
मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः ॥
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ २७० ॥
गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ॥
खराऽजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ २७१ ॥

---

(१) व्यापादितास्तदा ङ । (२) तु—इति मुद्रितपुस्तके पाठः ।

हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः ॥
भासं च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम् ॥ २७२ ॥
उरगेष्वयसो दण्डः पण्डके त्रपुसीसकम् ॥
कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽशुकम् ॥ २७३ ॥
तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ॥
दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये ॥ २७४ ॥
फलपुष्पान्नरसजसत्त्वघाते घृताशनम् ॥
किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके ॥ २७५ ॥

अस्थिमतामनुक्तनिष्कृतीनां कृकलासादीनां सहस्रं हत्वा तथा अनस्थिमतां [illegible] दंशमशकादीनाम् अनःशकटपूर्तिक्षमं समुदायं हत्वा शूद्रहत्याव्रताचरणं कार्यम् । मार्जारादीनामन्यतमं हत्वा तत्पापशोधनाय दुग्धं केवलं त्र्यहं पिबेत्, पादकृच्छ्रं वा चरेत्, इदमकामतो वधे । कामतस्तु वधे 'श्वमार्जारमण्डूकनकुलसर्पदहरमूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चिद्दद्या'दिति वसिष्ठोक्तं प्रायश्चित्तम् । दहरोऽल्पमूषकः । गजे हते नीलवर्णाः पञ्च वृषाः शुद्ध्यर्थं देयाः । शुके हते द्विवार्षिको वत्सो देयः । खराद्यन्यतमेषु हतेषु प्रत्येकमेको वृषो देयः । क्रौञ्चे चक्रवाके हते त्रैवार्षिको वत्सो देयः । हंसादीन् भासान्तान् प्रत्येकं हत्वा शुद्ध्यर्थं गां दद्यात् । अक्रव्यादो ऽपक(१)भोजनमिश्रान् चकोरटिट्टिभादीन् हत्वा [illegible] वत्सतरीं दद्यात् । क्रव्यात्तु गृध्रशृगालादिः । जलस्थलपदाभ्यां तत्रस्था बकादयो बलाकादयश्च लक्ष्यन्ते । शिखण्डी मयूरः । भासः पक्षिविशेषः । उरगेषु सरीसृपेषु लोहमयो लगुडस्तीक्ष्णप्रान्तो देयः । पण्डके नपुंसके पक्षिणि हते त्रपु रङ्गं सीसकं च देयं माषमितम् । कोले हते घृतपूर्णः कुम्भो देयः । उष्ट्रे हते गुञ्जा देयाः । हये हते वस्त्रं देयम् । तित्तिरौ हते तिलद्रोणं चतुराढकमितास्तिला देयाः । गजादीनां वधे निर्धनतया नीलवृषादिकं दानं दातुमशक्नुवंस्तु एकैकस्य विशुद्धये कृच्छ्रं यथायोग्यं तपश्चरेत् । तथाह गौतमः—'संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र

(१) ऽन्नमांसभोजन०—इति ख० पु० पाठः।

इति कालः, एतान्येवानादेशे विकल्पेन क्रियेरन्नेनांसि गुरूणि गुरूणि लघूनि लघूनी'ति। उदुम्बरादौ फले मधूकादौ पुष्पे चिरास्थितसक्त्वादावन्ने तादृशे गुडादौ रसे वा जातस्य सत्त्वस्य प्राणिनो घाते कृते शुद्ध्यर्थं घृतप्राशनं कार्यम्। सास्थिप्राणिन एकस्य वधे किञ्चित्स्वल्पमूल्यकहिरण्यम्, अष्टमुष्टिपरिमिततण्डुलादि वा देयम्। अस्थिशून्य एकस्मिन् प्राणिन्यनुक्तविशेषे हते तु प्राणायामः सन्ध्याद्वये कार्यः॥ २६९-२७२॥

( मिता० ) हिंसाप्रायश्चित्तप्रसङ्गात्प्रकीर्णकपशाभिधेयानुपपातकप्राणिवधेऽपि प्रायश्चित्तमाह—

अस्थिमतामिति। अस्थिमतां प्राणिनां कृकलासप्रभृतीनामनुक्तनिष्कृतीनां सहस्रं हत्वा अनस्थिमतां च यूकामत्कुणदंशमशकप्रभृतीनामनः शकटं तत्परिपूर्णमात्रं हत्वा शूद्रहत्याव्रतं षाण्मासिकं प्राकृतं ब्रह्मचर्यं चरेद्दश धेनूर्वा दद्यात्। सहस्रमिति परिमाणनियमाचतोऽधिकवधे त्वतिरिक्तं कल्प्यम्। अर्वाक्पुनः प्रत्येकं वधे—'किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके' इति वक्ष्यति। तथानस्थिमतामन इत्येतच्च क्षोदिष्टजन्तुविषयम्। स्थविष्ठानस्थिघुणादिजन्तुवधे तु 'कृमिकीटवयोहत्या' इत्यादिना मलिनीकरणीयान्यभिधाय 'मलिनीकरणीयेषु ततः स्याद्यावकस्त्र्यहम्' इति मनूक्तं द्रष्टव्यम्॥२६९॥

( मिता० ) किंच—

मार्जारेति। मार्जारादयः प्रसिद्धाः, पतत्रिणश्चापकाकोलूकास्तान् हत्वा त्रिरात्रं पयः पिबेत् पादकृच्छ्रं वा चरेत्। वाशब्दाद्योजनगमनादिकं वा कुर्यात्। यथाह मनुः ( ११।१३२ )—'पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत्। (१)उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत्'॥ इति। इदं च प्रत्येकवधविषयम्। समुदितवधे तु ( ११।१३१ )—'मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च। श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्'॥ इति मनूक्तं षाण्मासिकं द्रष्टव्यम्। यत्पुनर्वसिष्ठेनोक्तम्—'श्वमार्जारनकुलमण्डूकसर्पदहरमूषिकान्हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यात्' इति, तत्कामतोऽभ्यासविषयं वा वेदितव्यम्। दहरोऽल्पमूषकश्छुच्छुन्दरी वा॥ २७०॥

---

(१) स्नानः स्यादिद।

( मिता० ) किंच—

गजे इति । हस्तिनि व्यापादिते पञ्च नीलवृषा देयाः । शुके पक्षिणि द्विवर्षो वत्सः । रासभच्छागैडकेषु व्यापादितेषु प्रत्येकमेको वृषः । क्रौञ्चे पक्षिणि त्रिहायनो वत्सः । देय इति सर्वत्रानुषङ्गः । मनुनात्पत्र विशेष उक्तः (११।१२६)—'वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् । अजमेषावनड्वाहं खरं हत्वैकहायनम्' ॥ इति ॥२७१॥

( मिता० ) किंच—

हंसेति । क्रव्यमपक्वं मांसमत्तीति क्रव्यादाव्याघ्रशृगालादिर्मृगविशेषः पत्तनसाहचर्यात् । तथा हंसश्येनसमभिव्याहारात्कङ्कगृध्रादिः पक्षिविशेषश्च गृह्यते । जलशब्देन जलचरा बकादयो गृह्यन्ते । स्थलशब्देन स्थलचरा ब(१)लाकादयः । शिखण्डी मयूरः । भासः पक्षिविशेषः । श्येनाः प्रसिद्धाः । एषां प्रत्येकं वधे गामेकां दद्यात् । अक्रव्यादस्तु हरिणादिमृगान् खञ्जरीटादिपक्षिविशेषान्हत्वा वत्सतरीं दद्यात् । तथा च मनुः ( ११।१३५-१३७ )—'हत्वा हंसं बलाकां च बकं बर्हिणमेव च । वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ क्रव्यादस्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम् । अक्रव्यादो वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम्' ॥ इति ॥ २७२ ॥

( मिता० ) किंच—

उरगेष्विति । सरीसृपेषु व्यापादितेषु अयोमयो दण्डस्तीक्ष्णप्रान्तो देयः । पण्डके नपुंसके व्यापादिते त्रपु सीसकं च माषपरिमितं दद्यात् पलालभारं वा । 'पण्डकं हत्वा पलालभारं त्रपु सीसकं वा दद्यात्' इति स्मृत्यन्तरदर्शनात् । यद्यपि 'पण्डको लिङ्गहीनः स्यात्संस्कारार्हश्च नैव सः' इति देवलवचनेन सामान्येनैव स्त्रीपुंलिङ्गरहितो निर्दिष्टस्तथापि न गोब्राह्मणरूपस्येह विवक्षा । गोब्राह्मणवधनिषेधस्य जात्यवच्छेदेन प्रवृत्तेः लिङ्गविरहेऽपि च पण्डे जातिसमवायाद्विशेषात्तन्निमित्तमेव लघुप्रायश्चित्तं युक्तम् । तस्मान्मृगपक्षिण एव विवक्षिताः । मृगपक्षिसमभिव्याहाराच्च । कोले शूकरे व्यापादिते घृतकुम्भो देयः । उष्ट्रे गुञ्जा देयाः । वाजिनि विनिपातितेऽनुक्तं वस्त्रं देयम् । तथा च मनुः (११।१३३)–'अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः । पलालभारकं षण्ढे सीसकं चैव माषकम्' ॥ इति ॥२७३॥

---

(१) बल्दच च ।

( मिता० ) किंच—

तित्तिराविति । तित्तिरौ पतत्रिणि व्यापादिते तिलद्रोणं दद्यात् । द्रोणशब्दश्च परिमाणविशेषवचनः । 'अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् । पुष्कलानि तु चत्वारि आढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम्' ॥ इति स्मरणात् । पूर्वोक्तानां गजादीनां व्यापादने निर्धनत्वेन नीलवृषपञ्चकादिदानं कर्तुमशक्नुवन् प्रत्येकं कृच्छ्रं चरेद्विशुद्ध्यर्थम् । कृच्छ्रशब्दश्चात्र लक्षणया क्लेशसाध्ये तपोमात्रे द्रष्टव्यः । तपांसि च गौतमेन दर्शितानि—'संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालः । एतान्येवानादेशे विकल्पेन क्रियेरन्नेनासि गुरूणि गुरूणि लघूनि लघूनि' इति । यदि कृच्छ्रशब्देन मुख्योऽर्थो गृह्यते तर्हि गजे शुके वा विशेषेण प्राजापत्य एव स्यात् । न च तद्युक्तम् । तपोमात्रपरत्वे तु गुरुलघुभावाकलनया तपसोऽपि गुरुलघुभावो युज्यते । ततश्च गजे द्विमासिकं यावकाशनं शुके तूपवास इति । एवमन्यत्रापि दानानुसारेण प्रायश्चित्तं कल्प्यम् ॥ २७४ ॥

( मिता० ) किंचाह—

फलेति । उदुम्बरादौ फले मधूकादौ च कुसुमे चिरस्थितभक्तसक्त्वाद्यन्ने च रसे गुडादौ च यानि सत्त्वानि प्राणिनो जायन्ते तेषां घाते घृतप्राशनं शुद्धिसाधनम । इदं च घृतप्राशनं भोजनकार्य एव विधीयते प्रायश्चित्तानां तपोरूपत्वात् । दर्शितं च तपोरूपत्वमाङ्गिरसे प्रायश्चित्तपदनिर्वचनव्याजेन—'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते' ॥ इति ॥

( मिता० ) प्रतिप्राणिप्रायश्चित्तस्यानन्त्यात् पृष्ठाकोटेनापि वक्तुमशक्यत्वात्सामान्येन प्रायश्चित्तमाह—

किञ्चिदिति । अस्थिमतां कृकलासादिप्राणिनां न्यूनसहस्रसंख्यानां प्रत्येकं वधे किंचित्स्वल्पं धान्यहिरण्यादि देयम् । अनस्थिके त्वेकः प्राणायामः । तत्र किंचिदिति यदा हिरण्यं दीयते तदा पणमात्रम्' 'अस्थिमतां वधे पणो देयः' इति सुमन्तुस्मरणात् । यदा तु धान्यं देयं तदाष्टमुष्टि देयम् ,'अष्टमुष्टि भवेत्किंचित्' इति स्मरणात् । एतच्चानुक्तनिष्कृतिप्राणिवधविषयम् । यत्र तु प्रायश्चित्तविशेषः श्रूयते तत्र स

एव भवति। यथाह पराशरः—'हंससारसचक्राह्वक्रौञ्चकुक्कुटघातकः। मयूरमेषौ हत्वा च एकभक्तेन शुध्यति ॥ मद्गुं च टिट्टिभं चैव शुकं पारावतं तथा । आडिकां च बकं हत्वा शुध्येद्वै नक्तभोजनात् ॥ चाषकाककपोतानां सारीतित्तिरिघातकः । अन्तर्जले उभे सन्ध्ये प्राणायामेन शुध्यति ॥ गृध्रश्येनविहङ्गानामुलूकस्य च घातकः । अपक्वाशी दिनं तिष्ठेत् त्रीन् कालान् मारुताशनः ॥ हत्वा मूषिकमार्जारसर्पाजगरडुण्डुभान् । प्र(१)त्येकं भोजयेद्विप्रांल्लोहदण्डश्च दक्षिणा ॥ सेधाकच्छपगोधानां शश(२)शल्यकघातकः । वृन्ताकफलगुञ्जाशी अहोरात्रेण शुध्यति ॥ मृगरोहितवराहाणामाविकायस्तघातने । वृकजम्बूकऋक्षाणां तरक्षूणां च घातकः ॥ तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् । गजमेषतुरङ्गोष्ट्रगवयानां निपातने ॥ प्रायश्चित्तमहोरात्रं त्रिसन्ध्यं चाऽवगाहनम् । वराहमहिसिंहानां चित्रकव्याघ्रघातकः॥ शुद्धिमेति त्रिरात्रेण ब्राह्मणानां च भोजनैः'। इति। एवमन्येषामपि स्मृतिवचसां देशकालाद्यपेक्षया विषयव्यवस्था कल्पनीया ॥ २७५ ॥

इति हिंसाप्रायश्चित्तप्रकरणम् ।

---

( वी०मि० ) इन्धनार्थं द्रुमच्छेद इत्युपपपातकेषु गणितं प्रायश्चित्तमभिधानस्तुल्यप्रायश्चित्तमन्यदाप्याह—

वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ॥

कर्षणाद्भूतदलादिदृष्टार्थयज्ञादृष्टार्थप्रयोजनव्यतिरेकेण फलादिहारोपयोगिनां वृक्षादीनां छेदने ऋचां गायत्र्यादीनां शतं जप्यमित्यर्थः। गुल्मादयः प्राग्व्याख्याताः। मनु —

फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥

वसिष्ट —'फलपुष्पोपगान् पादपान् न हिंस्यात् कर्षणकरणार्थं चोपहन्यात्' ॥

( वी०मि० ) वृक्षच्छेदप्रसङ्गेनौषधिच्छेदे प्रकीर्णके पापे तत्प्रसङ्गेन यत्किञ्चिद्वृक्षच्छेदरूपे दंशोऽपि प्रायश्चित्तमाह—

स्यादोषधिवृथाच्छेदे क्षीराशी गोऽनुगो दिनम् ॥ २७६ ॥

---

(१) इदम् भोजयेत क। (२) शशशल्यक क।

पुंश्चलीवानरखरैर्दष्टः श्वोष्ट्रादिवायसैः ॥
प्राणायामं जले कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ २७७ ॥

ओषधीनां फलपाकान्तानां ग्राम्यारण्यानां वृक्षच्छेदे कृते दिनमेकं व्याप्य गोऽनुगामी सन् क्षीरमात्राशी शुद्ध्यर्थं स्यात् । पुंश्चल्यादिभिर्दष्टः प्राणायामं जलमध्ये कृत्वा घृतप्राशेन शुद्ध्यति । आदिपदेन शृगालादिसङ्ग्रहः । रजस्वलायां दष्टायां विशेषमाह पुलस्त्यः—

रजस्वला यदा दष्टा शुना जम्बुकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥

इति ॥ २७६—२७७ ॥

( मिता० ) इन्धनार्थं द्रुमच्छेद इत्युपपातकोद्देशे पठितं, हिंसाप्रसङ्गलोभेन तदुत्क्रमपठितमप्यपकृष्य तत्र प्रायश्चित्तमाह—

वृक्षेति । फलदानाम् आम्रपनसादिवृक्षाणां गुल्मादीनां च यज्ञाद्यदृष्टार्थं विना छेदने ऋचां गायत्र्यादीनां शतं जप्तव्यम् । ओषधीनां तु ग्राम्यारण्यानां वृथैव छेदने दिनं कृत्स्नमहर्गवां परिचर्यार्थमनुगच्छन्ते क्षीरं पिबेदाहारान्तरपरित्यागेन । पञ्चयज्ञार्थे तु न दोषः । एतच्च फलादिद्वारेणोपयोगिषु द्रष्टव्यम् । ( मनुः ११।१४२ )—'फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् । गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्' ॥ इति मनुस्मरणात् । दृष्टार्थत्वेऽपि कर्षणाङ्गभूतहलाद्यर्थत्वे न दोषः । 'फलपुष्पोपगान्पादपान्न हिंस्यात्कर्षणकरणार्थं चोपहन्यात्' इति वसिष्ठस्मरणात् । यत्र तु स्थानविशेषाद्दण्डाधिक्यं तत्र प्रायश्चित्ताधिक्यमपि कल्पनीयम् । तदुक्तम्—'चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये । जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते' ॥ इति । अयं च ऋक्शतजपो द्विजातिविषयो न पुनः शूद्रादिविषयः । तेषां जपेऽनधिकारात् । अतस्तेषां दण्डा(१)नुसारेण द्विरात्रादिकं कल्पनीयम् । उपपातकमध्ये विशेषतः पाठस्यानर्थक्यपरिहारार्थमुपपातकसा(२)धारणप्राप्तं प्रायश्चित्तमप्यत्र भवति । तच्च गुरुत्वादभ्यासविषयं कल्प्यम् ॥ २७६ ॥

( मिता० ) पुंश्चलीवानरादिवधप्रायश्चित्तप्रसङ्गात्तद्दंशननिमित्तं प्रायश्चित्तमाह—

---

( १ ) दण्डानुसारेण इति पाठः ख । ( २ ) साधारणप्रायश्चित्तं ख ।

पुश्चलीति । पुश्चल्यादयः प्रसिद्धा, एतैर्दष्ट पुमानन्तर्जलं प्राप्य विशुध्यति । आदिग्रहणाच्छृगालादीनां ग्रहणम् । यथाह मनु (११। १९९)—'श्वशृगालखरैर्दष्टो ग्राम्यै क्रव्याद्भिरेव च । नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति' ॥ इति । अत्र च घृतप्राशो भोजनप्रत्याम्नायो द्रष्टव्यः। प्रायश्चित्तानां तपोरूपत्वेन शरीरसन्तापनार्थत्वात् । एतद्दशक्तविषयम् । 'श्वशृगालमृगमहिषाजाविकखरकरभनकुलमार्जा(१)रमूषकप्लवककाकपुरुषदष्टानामापोहिष्ठयादिभिः स्नानं प्राणायामत्रयं च' इति यत्सुमन्तुवचनं तन्नाभेरध प्रदेशदंष्ट्रविषयम् । यदङ्गिरोवचनम्—'ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पिबेत्पयः । गृहस्थश्चेद्द्विरात्रं तु एकाहं योऽग्निहोत्रवान् ॥ नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् । स्याद्वेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणम्' ॥ इति तत्सकामदष्टविषयम् । क्षत्रियवैश्ययोस्तु पादपादन्यूनं कल्पनीयम् । शूद्रस्य तु—'शूद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः । गां वा दद्यात्सुरूपं चैकं ब्राह्मणाय विशु(२)द्धये' ॥ इति बृहद्ङ्गिरसोक्तं द्रष्टव्यम् । यत्तु वसिष्ठवचनम्—'ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति' ॥ इति तदुत्तमाङ्गदंशविषयम् । स्त्रीणां तु—'ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा । उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्' ॥ इति पराशरोक्तं द्रष्टव्यम् । कृच्छ्रादिव्रतस्थाया पुनस्तेनैव विशेषो दर्शितः—'त्रिरात्रमेवोपवसेच्छुना दष्टा तु सुव्र(३)ता । सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत्' ॥ इति । रजस्वलायामपि विशेषः पुलस्त्येन दर्शितः—"रजस्वला यदा दष्टा शुना जम्बुकरासभैः । पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥ ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा । चतुर्गुणं स्मृतं मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेत्'॥ इति । अन्यत्राऽरजस्वलावस्थायाम् । यस्तु श्वादिभिर्घ्राणादिनोपहन्यते तस्य शातातपेन विशेष उक्तः—'शुना घ्राणावलीढस्य नखैर्विलिखितस्य च । अद्भिः प्रक्षालनं शौचमग्निना चोपचूल(४)नम्' ॥ इति । उपचूलनं तापनम् । यदा तु श्वादिदंशशस्त्रघातादिजनितव्रणे कृमय उत्पद्यन्ते तदा मनुना विशेष उक्तः—'ब्राह्मणस्य व्रणद्वारे पूयशो-

(१) मूषिकनकुल क। (२) विशुध्यते क।
(३) व्रतता क। (४) मुपचूलनं।

णितसंभवे। कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥ गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत्। त्रिरात्रं पञ्चगव्याशी त्वधोनाभ्या विशुध्यति॥ नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः। षड्रा(१)त्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे'॥ इति। तत्र श्वादिदंशव्रणे तद्दंशप्रायश्चित्तानन्तरमिदं कर्तव्यम्। शस्त्रादिजनितव्रणे त्वेतदेव, त्र्यहं पञ्चगव्याशनादिकमिति विशेषः। क्षत्रियादिषु तु प्रतिवर्णं पादपादह्रासः कल्पनीयः॥ २७७॥

(वी०मि०) शारीरकत्वग्धातुविच्छेदकदंशप्रसङ्गेन रसधातुविच्छेदकरेतःस्खलने प्रायश्चित्तमाह—

यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत्॥
स्तनान्तरं भ्रुवोर्मध्यं तेनाऽनामिकया स्पृशेत्॥ २७८॥

अकामतो गृहस्थो रात्रौ स्वप्ने स्त्रीसम्भोगं विना रेतःपाते स्कन्नं रेतो 'यन्मेऽद्य रेतः', 'पुनर्मामैत्विन्द्रिय'मित्याभ्यामृग्भ्यामभिमं(२)त्र्य तेन रेतसा स्तनयोरन्तरं मध्यं, भ्रुवोर्मध्यं चाऽनामिकयाऽङ्गुल्या शुद्ध्यर्थं स्पृशेत्। कामतः पाते त्वाह (यमः)—

गृहस्थः कामतः कुर्याद्रेतसः स्कन्दनं भुवि।
सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥

दिवा रेतःस्कन्दने त्वाह छागलेयः—

दिवा स्कन्नस्य विप्रस्य प्रायश्चित्तं विधीयते।
त्रिरात्रमुपवासश्च प्राणायामशतं स्मृतम्॥

ब्रह्मचार्यादेस्तु रेतःस्कन्दने प्रायश्चित्तं वक्ष्यते॥ २७८॥

(मिता०) शारीरत्वग्धातुविच्छेदकदंशप्रायश्चित्तप्रसङ्गाच्छारीरचरमधातुविच्छेदकस्कन्दने प्रायश्चित्तमाह—

यदिति। यदि कथञ्चित्स्त्रीसम्भोगमन्तरेणापि हठाच्चरमधातुर्विप्लुष्टस्तदा तत्स्कन्नं रेतो यन्मेऽद्य रेतः पृथिवीमस्कान् पुनर्मामैत्विन्द्रियमित्याभ्यां मन्त्राभ्यामभिमन्त्रयेत्। तेन चाभिमन्त्रितेन रेतसा स्तनयोर्भ्रुवोश्च मध्यमुपकानिष्ठिकया स्पृशेत्। अन्ये तु स्कन्नस्य रेतसोऽशुचित्वेन स्पर्शकर्मण्ययोग्यत्वात्तेनेत्यनामिकासाहर्यात्स्ववुद्धि-

(१) षड्रात्रं च तदा प्रोक्तं प्राजापत्यं विशोधनं इ, षड्रात्रं च त्र्यहं पञ्चगव्याशनमिति स्मृतम्. मु० पु० पाठः।

(२) मन्त्रयेत्—इति ख० पु० पाठः।

स्याङ्गुष्ठपरत्वेन व्याख्याने । तेनाङ्गुष्ठेनाऽनामिकया चेति अङ्गुष्ठपद ग्रहणं वृत्तभङ्गप्रसङ्गात्तेनेति निर्दिष्टमिति । तदसत् , अङ्गुष्ठस्याऽबुद्धिस्थत्वात् । न च शब्दसंनिहितपरित्यागेनार्थाद् बुद्धिस्थस्यान्वयो युक्तः । तदुक्तम्—'गम्यमानस्य चार्थस्य नैवं दृष्टं विशेषणम् । शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्' ॥ इति । न च रेतसोऽशुचित्वेन स्पर्शायोग्यत्वम् । विधानादेव प्रायश्चित्तार्थरूपस्पर्शे योग्यमवगम्यते प्रायश्चित्तरूपपाने इव सुरायाः । [illegible] च प्रायश्चित्त गृहस्थस्यैवाऽकामतः स्कन्नविषयम् । ब्रह्मचारिणः स्वप्ने जागरणावस्थायां च गुरुप्रायश्चित्तस्य द(१)र्शनात् । यत्तु यमवचनम्—'गृहस्थः कामतः कुर्याद्रेतसः स्कन्दनं भुवि । सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह' ॥ इति तत्कामकारविषयम् ॥ २७८ ॥

(वी०मि०) स्वप्नवद्विभ्रमरूपतया प्रसङ्गात्प्रतिबिम्बदर्शने विभ्रम जनकत्वादनृताभिधाने प्रायश्चित्तसाम्येन ग्रन्थलाघवाच्चापले अशुचिदर्शने च प्रायश्चित्तमाह—

मयि तेज इति च्छायां स्वां दृष्ट्वाऽम्बुगतां जपेत् ॥
सावित्रीमशुचौ दृष्टे चा(२)पले चाऽनृतेऽपि च ॥२७९॥

अम्बुगतां स्वीयां छायां प्रतिबिम्बं दृष्ट्वा शुद्ध्यर्थं 'मयि तेज इन्द्रिय'मिति मन्त्रं जपेत् । चराद्यशुचिद्रव्यस्य दर्शने वाक्पाणिपादचापले कामकृताऽनृतभाषणे वा सावित्रीं जपेत् । अकामकृताऽनृतभाषणे आचमनं, जलाभावे दक्षिणकर्णस्य स्पर्शं च कुर्यादिति चकाराभ्यां समुच्चितम् । तदाह मनुः—

क्षुत्वा सुप्त्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

संवर्तः—

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथाऽनृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥

अविकारेण ब्राह्मणप्राणरक्षार्थं तथाऽनृते प्रायश्चित्ताभावः सूचितः ॥ २७९ ॥

( मिता० ) किञ्च—

मयीति । स्वीयं प्रतिबिम्बमम्बुगतं चेत् दृष्टं तदा 'मयि तेज इन्द्रि·

(१) नारायणेति ख। (२) चापले—इते कुत्सितकर्मे दृष्ट ?

यम्' इतीमं मन्त्रं जपेत् । अशुचिद्रव्यदर्शने पुनः सावित्रीं सवितृदेवत्यां तत्सवितुरित्यादिकामृचं जपेत् । तथा वाक्पाणिपादादिचापल्यकरणे तामेव जपेत्, अनृतवचने च । एतत्कामकारे द्रष्टव्यम् । अकामकृते तु 'सुप्त्वा भुक्त्वा च क्षुत्वा च निष्ठीव्योक्त्वाऽनृतानि च । पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्' ॥ इति मनूक्तमाचमनं द्रष्टव्यम् । यत्तु संवर्तवचनम्—'क्षुते नि(१)ष्ठीवने चैव दन्तश्लिष्टे तथानृते । पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत्' ॥ इति, तदल्पप्रयोजने जलाभावे वा द्रष्टव्यम् । स्त्रीशूद्रविट्क्षत्रवधानन्तरं निन्दितार्थोपजीवनं पठितं, तत्र च मनुयोगीश्वरप्रोक्तान्युपपातकप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया वेदितव्यानि । नास्तिक्येऽपि तानि प्रायश्चित्तानि तथैव प्रयोज्यानि, नास्तिक्यशब्देन वेदनिन्दनं, तेन च जीवनमुच्यते, तत्रोभयत्रापि वसिष्ठेन प्रायश्चित्तान्तरमप्युक्तम्—'नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रम्' इति । एतच्च सकृत्करणविषयम् । उपपातकप्रायश्चित्तान्यभ्यासविषयाणि । यच्च शङ्खेनोक्तम्—'नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी इत्येते पञ्च संवत्सरं ब्राह्मणगृहे भैक्षं चरेयुः' इति । यच्च हारीतेन—'नास्तिको नास्तिकवृत्तिः' इति प्रक्रम्य 'पञ्च तपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु' इति, तदुभयमप्यत्यन्ताभिनिवेशेन बहुकालाभ्यासविषयम् ॥ २७९ ॥

( वी०मि० ) व्रतलोप उपपातकेषु गणितस्तत्र निमित्तविशेषेण व्रतलोपे प्रायश्चित्तविशेषमाह—

अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ॥
गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति ॥ २८० ॥
भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ॥
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ॥ २८१ ॥
उपस्थानं ततः कुर्यात्समासिञ्चन्त्वनेन तु ॥
मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥

(१) निष्ठीविते ट ।

प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति ॥

ब्रह्मचारी अस्वजनां योषितं गत्वा योऽवकीर्णी क्षतव्रतः स्यात् स निर्ऋतिदैवतं पशुं गर्दभरूपमालभ्य तेन पशुना यागं कृत्वा विशुद्ध्यति । अत्र विशेषमाह वसिष्ठः-'ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत्' । तुशब्देन स्वप्ने रेतःस्कन्दन इदं प्रायश्चित्तं व्यवच्छिनत्ति ।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।

स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥

इति मनुवचनात्तत्र प्रायश्चित्तान्तरविधानात् । अनातुरो ब्रह्मचारी सप्ताहं निरन्तरं गुरुपरिचर्यादिकार्यव्यग्रतया भैक्षाऽग्निकार्ये त्यजति, 'कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा', 'कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा' इत्याभ्यामाहुतिद्वयमाज्येन जुहुयात् । ततः 'समासिञ्चन्तु मरुतः समिन्द्र' इत्यादिमंत्रेण अग्नेरुपस्थानं कुर्यात् । तुशब्देनाऽस्यत्र (१)एव भैक्षाऽग्निकार्ययोरत्यवस्था ।

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।

अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥

इति मनुना भैक्ष्यतपस्यालम्भस्य तत्र विधानात् । ब्रह्मचारिणा मधुनो मद्यमांसस्य वाऽशने कृते प्राजापत्यव्रतं कार्यम् । शेषव्रतानि ब्रह्मचारिणमधिकृत्योक्तानि च कार्याणि । चकारेण साहित्यलाभात् प्राजापत्यकाले व्रतान्तरानिराकरणनिरासः । अस्याऽपवादो वसिष्ठेन कृतः-'स चेद्व्याधितः कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीया'दिति शेषव्रतानीति सर्वत्र प्रायश्चित्ते योज्यम् । गुरोः प्रतिकूलमाज्ञाप्रतिघातादिकं कृत्वा तं चरणप्रणिपातादिना प्रसाद्य विशुद्ध्यति । एवकारेण प्रायश्चित्तान्तरव्यवच्छेदः ॥ २८०-२८२ ॥

( मिता० ) नास्तिक्यानन्तरं व्रतलोपदत्वेत्युक्तं तत्रावकीर्णस्याऽप्रसिद्धत्वात्तल्लक्षणकथनपूर्वकं प्रायश्चित्तमाह—

अवकीर्णीति । ब्रह्मचार्युपकुर्वाणको नैष्ठिकश्चासौ योषितं गत्वाऽवकीर्णी भवति । चरमधातोर्विसर्गोऽवकीर्णं तदस्यास्ति सोऽवकीर्णी स निर्ऋतिदैवत्येन गर्दभपशुना यागं कृत्वा विशुद्ध्यति । गर्द-

(१) तुशब्दनाऽस्यत्र प्रेक्षा०—इति क० पु० पाठ।

अस्य पशुत्वे सिद्धेऽपि पुनः पशुग्रहणं 'अथ पशुकल्पः' इत्याश्वलायनादिगृह्योक्तपशुधर्मप्राप्त्यर्थम् । एतच्चारण्ये चतुष्पथे लौकिकेऽग्नौ कार्यम् । 'ब्रह्मचारी चेत्स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत' इति वसिष्ठस्मरणात् । तथा रात्रावेकाक्षिविकलेन यष्टव्यम् । तथा च मनुः (११।११८)—'अवकीर्णी तु काणेन रासभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि' ॥ इति । पशोरभावे चरुणा यष्टव्यम् । 'निर्ऋतिं वा चरुं निर्वपेत् तस्य जुहुयात् कामाय स्वाहा, कामकामाय स्वाहा, निर्ऋत्यै स्वाहा, रक्षोदेवताभ्यः स्वाहा' इति वसिष्ठस्मरणात् । एतच्चाशक्तविषयम् । शक्तस्य पुनर्गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत् । 'तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षं चरेत्कर्माचक्षाणः संवत्सरेण शुध्यति' इति गौतमोक्तो वार्षिकतपःसमुच्चितः पशुयागश्चरुर्वा द्रष्टव्यः । तथा त्रिषवणस्नानमेककालभोजनं च द्रष्टव्यम् । (११।१२२—१२३)—'एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् । सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥ तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम् । उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति' ॥ इति मनुस्मरणात् । इदं च वार्षिकमश्रोत्रियब्राह्मणपत्न्यां वैश्यायां श्रोत्रियपत्न्यां च द्रष्टव्यम् । यदा तु गुणवत्योर्ब्राह्मणीक्षत्रिययोः श्रोत्रियभार्ययोरवकिरति तदा त्रिवार्षिकं द्विवार्षिकं च क्रमेण द्रष्टव्यम् । यथाहतुः शङ्खलिखितौ—'गुप्तायां वैश्यायामवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् । क्षत्रियायां तु द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणि' इति । यत्त्वङ्गिरोवचनम्—'अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत् । चीरवासास्तु षण्मासांस्तथा मुच्येत किल्बिषात्' ॥ इति तदकामतो मानवाद्युक्तविषयमीषद्व्यभिचारिणीविषयं वा । 'अत्यन्तव्यभिचारितासु पुनः स्वैरिण्यां वृषल्यामवकीर्णः सचैलं स्नात उदकुम्भं दद्याद्ब्राह्मणाय । वैश्यायां चतुर्थकालाहारो ब्राह्मणान्भोजयेत् । यवसभारं च गोभ्यो दद्यात् । क्षत्रियायां त्रिरात्रमुपोषितो घृतपात्रं दद्यात् । ब्राह्मण्यां षड्रात्रमुपोषितो गां च दद्यात् । गोष्ववकीर्णः प्राजापत्यं चरेत् । षण्ढायामवकीर्णः पलालभारं सीसमाषकं च दद्यात्' इति शङ्खलिखितोदितं वेदितव्यम् । एतच्चावकीर्णिप्रायश्चित्तं त्रैवर्णिकस्यापि ब्रह्मचारिणः समानम् । 'अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु ।

ष्ठा भैक्षाशिनो नित्यं शुध्यन्त्यब्दात्समाहिताः' ॥ इति शाण्डिल्यस्मरणात् । यदा स्त्रीसम्भोगमन्तरेण कामतश्चरमधातुं विसृजति तदा नैर्ऋतयागमात्रं द्रष्टव्यम् । 'एतदेव रेतसः प्रयत्नात्सर्गे दिवा स्वप्ने च' इति वसिष्ठेन यागमात्रस्यातिदिष्टत्वात् । व्रतान्तरेषु कृच्छ्रचान्द्रायणादिष्वतिदिष्टब्रह्मचर्येषु स्कन्दने सत्येतदेव यागमात्रम् । 'व्रतान्तरेषु चैव'मिति तेनैवातिदिष्टत्वात् । स्वप्नस्कन्दने तु मनूक्तं द्रष्टव्यम् ( २।१८१ )—'स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्' ॥ इति । वानप्रस्थादीनां चेदमेव ब्रह्मचर्यखण्डने अवकीर्णिवत् कृच्छ्रत्रयाधिकं भवति । 'वानप्रस्थो यतिश्चैव स्कन्दने सति कामतः । पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत्' ॥ इति शाण्डिल्यस्मरणात् । यदा गार्हस्थ्यपरिग्रहेण सन्यासात्प्रच्युतो भवति तदा संवर्तोक्तं द्रष्टव्यम् । 'सन्न्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं व्रजेद्यदि । स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यनन्तरम्' ॥ इति । प्रत्यापत्तिर्गार्हस्थ्य(१)परिग्रहः । अत एव वसिष्ठः—'यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः' ॥ इति । तथा च पराशरः—'यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । 'अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥ स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्' ॥ इति, तत्र ब्राह्मणस्य षाण्मासिकं कृच्छ्रं पुनः सन्यासः संस्कारश्च । क्षत्रियस्य चान्द्रायणत्रयम् । वैश्यस्य कृच्छ्रत्रयमिति व्यवस्था । अथवा ब्राह्मणस्यैव ज्ञानिमत्त्वाद्यभ्यासाद्यपेक्षया व्यवस्थितं प्रायश्चित्तत्रयं द्रष्टव्यम् । ('चिति(२)भ्रष्टा तु या नारी मोहाद्विचलिता क्वचित् । प्राजापत्येन शुध्येत्तु तस्मादेवापकर्मणः' ॥ चितिभ्रष्टा भर्तुरनुगमने आपस्तम्बस्मरणात् क्वचिद्दृष्टमुक्तम् ।) तथा मरणसन्यासिनामपि यमेन प्रायश्चित्तमुक्तम्—'जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः । विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥ नवैते प्रत्यवसिताः सर्वलोकबहिष्कृताः । चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा' ॥ इति । इदं च चान्द्रायणं तप्तकृच्छ्रद्वयात्मकं प्रायश्चित्तद्वयं शक्त्याद्यपेक्षया व्यवस्थितं विज्ञेयम् । यदा तु 'शस्त्रघातहताश्च' इति पाठः तदात्मत्यागाद्यशास्त्रीयमरण

(१) गार्हस्थ्यस्य परिग्रह ग । (२) अयं [illegible] ख ।

निमित्तस्तत्पुत्रादेरुपदेशो द्रष्टव्यः । यत्पुनर्वसिष्ठेनोक्तम्—'जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत् त्रिरात्रं चोपवसेत्' इति तदध्यवसिताशीस्त्रायमरणस्यैव कथञ्चिज्जीवने शक्त्यपेक्षया द्रष्टव्यम् । अथवाऽध्यवसायमात्रे त्रिरात्रं शस्त्रादिक्षतस्य द्वादशरात्रमिति व्यवस्था । इदं चावकीर्णिप्रायश्चित्तं गुरुदारतत्समव्यतिरिक्तागम्यागमनविषयम् । तत्र गुरुतरप्रायश्चित्तस्य दर्शितत्वात् । न च लघुनाऽवकीर्णिव्रतेन द्वादशवार्षिकाद्यपनोद्यमहापातकदोषनिवर्हणमुचितम् । न च ब्रह्मचारित्वोपाधिकं लघुप्रायश्चित्तविधानमिति युक्तम् । आश्रमान्तराणां द्वैगुण्यादिवृद्धेर्ब्रह्महत्याप्रकरणे दर्शितत्वात् । न चात्राऽगम्यागमनप्रायश्चित्तं पृथक्कर्तव्यम् । ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागमननान्तरीयकत्वात्, अतोऽन्यत्रापि यस्मिन्निमित्ते यन्निमित्तान्तरं समं न्यूनं वावश्यं(१)भावि न तत् पृथक् नैमित्तिकं प्रयुङ्क्ते । यथा (मनुः ११।२०८)—'अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते' ॥ इत्यत्र शोणितोत्पादननिमित्तेऽवगू(२)रणनिपातलक्षणं निमित्तद्वयमवश्यंभावित्वेन स्वनैमित्तिकं कृच्छ्रमतिकृच्छ्रं च न प्र(३)युङ्क्ते । एवमन्यत्राप्यूहनीयम् । यत्र पुनर्निमित्तानामन्तर्भावनियमो नास्ति तत्र पुनर्नैमित्तिकानि पृथक्प्रयुज्यन्ते । निमित्तानि यथा—'यदा पर्वणि परभार्यां रजस्वलां तैलाभ्यक्तो दिवा जले गच्छति' इति । ननु ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनान्तरीयकत्वं नास्त्येव । पुत्रिकागमनेऽगम्यागमनदोषाभावात् । तथा हि न तावत्पुत्रिका कन्या अक्षतयोनित्वात्, नापि परभार्या प्रदानाभावात्, नापि वेश्या अतद्वृत्तित्वात्, नापि विधवा भर्तृमरणाभावात् । अतः पुत्रिकायाः क्वाप्यनन्तर्भावादप्रतिषिद्धेति तत्रैव विप्लुतस्य केवलमवकीर्णिव्रतम् । अन्यत्र विप्लुतस्य तु निमित्तान्तरसंनिपातादवकीर्णिव्रतं नैमित्तिकान्तरमपि प्रयोक्तव्यमिति । तदसत्, पुत्रिकाया अपि परभार्यास्वन्तर्भावात् । प्रदानाभावेऽपि विवाहसंस्कारेण संस्कृतत्वात् गान्धर्वादिविवाहपरिणीतावत् । न च 'यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत्तु तां प्राज्ञः पुत्रिकाधर्मशङ्कया' ॥ इति प्रतिषेधात्सगोत्रास्विव भार्यात्वं नोत्पद्यते इति वाच्यम् । दृष्टार्थत्वात्प्रति-

(१) भाविनस्तत्र ख। (२) अवगोरण ट। (३) प्रयुङ्क्ते अत एव।

वेधस्य व्यङ्गांग्यादिप्रतिषेधवत् । दृष्टार्थत्वं च पुत्रिकाधर्मशङ्कयेति हेतूपादानात् । न च पुत्रार्थमेव परिणयनम् अपितु धर्मार्थमपि, अत श्चोत्पादितपुत्रस्य मृतभार्यस्य धर्मार्थं पुत्रिकापरिणयने को विरोधः । प्रपञ्चितं चैतत्पुरस्तादित्यलमतिप्रसङ्गेन । तस्माद् ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमननान्तरीयकत्वान्न पृथङ् नैमित्तिकं प्रयोक्तव्यमिति सुष्ठूक्तम् ॥ २८० ॥

(मिता०) ब्रह्मचारिप्रायश्चित्तप्रसङ्गादन्यदप्यनुपासकप्रायश्चित्तमाह—

भैक्षेति । यस्त्वनातुर एव ब्रह्मचारी निरन्तरं सप्तरात्रं भैक्षमग्निकार्यं वा त्यजति असौ 'कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा' इत्येताभ्यां मन्त्राभ्यामाहुती हुत्वा 'समासिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः । स(१)मायमग्निः सिञ्चन्तां यशसा ब्रह्मवर्चसेन' । इत्यनेन मन्त्रेणाऽग्निमुपतिष्ठेत् । एतच्च गुरुपरिचर्यादिगुरुतरकार्यव्यग्रतया अकरणे द्रष्टव्यम् । यदा त्वव्यग्र एवोभे भैक्षाग्निकार्ये त्यजति तदा 'अकृत्वा भैक्षचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्' ॥ इति मानवं द्रष्टव्यम् । यज्ञोपवीतविनाशे तु हारीतेन प्रायश्चित्तमुक्तम्—'मनोव्रतपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयादसङ्क्षेभोजनेऽभ्युदितेऽभिनिर्मुक्ते वान्ते दिवा स्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य ह(२)स्त्यश्वोष्ट्रान् पूज्यातिक्रमे चैताभिरेव जुहुयादग्निसमिन्धने स्थावरसरीसृपादीनां वधे, यद्देवादेवहेडनमिति कूष्माण्डीभिराज्यं जुहुयात् मणिवा(३)सोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्' इति । मनोव्रतपतीभिरिति मनोज्योतिरित्यादिमनोलिङ्गाभिस्त्वदग्ने व्रतपा असीत्यादिव्रतलिङ्गाभिरित्यर्थः। यथार्थं प्रतीयादिति उपनयनोक्तमार्गेण समन्त्रकं गृह्णीयादित्यर्थः । यज्ञोपवीतं विना भोजनादिकरणे तु—'ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा । गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति' ॥ इति मरीच्युक्तं द्रष्टव्यम् ॥ २८१ ॥

( मिता० ) किंच—

मधुमांसेति । ब्रह्मचारिणा अमत्या मधुमांसभक्षणे कृच्छ्रः कार्यः । तदनन्तरमवशिष्टानि व्रतानि समापयेत् । एतच्च शिष्टभोजनादेरा-

(१) समयमग्नि ग० । (२) हस्तीनश्वस्य ग० । (३) वासोगवादीनां क० ।

शादिमांसभक्षणविषयम् । 'ब्रह्मचारी चेन्मांसमश्नीयादुच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेत्' इति वसिष्ठस्मरणात् । द्वादशरात्रग्रहणं तु मतिपूर्वाभ्यासापेक्षयातिकृच्छ्रपराकादेरपि प्राप्त्यर्थम् । यदा तु मांसैकापनोद्यव्याध्यभिभूतस्तदा मांसं गुरोरुच्छिष्टं कृत्वा भक्षणीयम् । 'स चेद्व्याधितः कामं गुरोरुच्छिष्टं भेषज्यार्थं सर्वं प्राश्नीयात्' इति तेनैवोक्तत्वात् । सर्वग्रहणं मांसलशुनाद्यभक्ष्यमात्रसङ्ग्रहार्थम् । तद्भक्षणेन चापगतव्याधिरादित्यमुपतिष्ठेत । तथा च बौधायनः—'येनेच्छेत्तु चिकित्सितुं स यदाऽगदो भवति तदोत्थायाऽऽदित्यमुपतिष्ठेत हंसः शुचिषत्' इति । मधुनोऽप्यज्ञानतः प्राशनोपपत्तौ न दोषः । 'अकामोपनतं मधु वाजसनेयके न दुष्यति' इति वसिष्ठस्मरणात् । अन्यसूतकान्नादिभक्षणप्रायश्चित्तं त्वभक्ष्यप्रायश्चित्तप्रकरणे वक्ष्यामः । आज्ञाप्रतिघातादिना गुरोः प्रतिकूलमाचरन् पादप्रणिपातादिना गुरुं प्रसाद्य विशुध्यति ॥

( वी०मि० ) ब्रह्मचारिप्रसङ्गात् गुरोः प्रायश्चित्तमाह—

कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि ॥ २८३ ॥

चौरव्याघ्रादिमति देशे गुरुणा प्रहितः शिष्यो यदि म्रियते तदा स गुरुः प्राजापत्यत्रयं कुर्यात् ॥ २८३ ॥

( मिता० ) ब्रह्मचारिप्रायश्चित्तप्रसङ्गाद्गुरोरपि प्रायश्चित्तमाह—

कृच्छ्रेति । यस्तु गुरुश्चौरोरगव्याघ्रादिभयाकुलप्रदेशे सान्द्रतरान्धकाराकुलितनिशीथावसरे कार्यार्थं शिष्यं प्रेरयति स च गुरुणा प्रेरितो दैवान्मृतस्तदा स गुरुः कृच्छ्राणां प्राजापत्यादीनां त्रयं कुर्यात् । न पुनस्त्रिः प्राजापत्यम् । तथा सति पृ(१)थक्त्वनिवेशिनी संख्यानुपपन्ना स्यात् । न च 'एकादश प्रयाजान्यजति' इतिवदावृत्त्यपेक्षा संख्येति चतुरस्रम् । स्वरूपपृथक्त्वे संभवत्यावृत्त्यपेक्षाया अन्याय्यत्वात् । यदियमुत्पन्नगता संख्या स्यात्तदा स्यादपि कथञ्चिदावृत्त्यपेक्षा । किन्तूत्पत्तिगतेयम्, अतस्तिस्र आज्याहुतीर्जुहोतीतिवत्स्वरूपपृथक्त्वापेक्षयैव त्रित्वसंख्याघटना युक्ता ॥ २८३ ॥

( वी०मि० ) सकलहिंसाप्रायश्चित्तापवादमाह—

[औषधान्नप्रदानाद्यैः (२)स्नेहाद्यैर्वाऽप्युपक्रमैः ॥]

---

(१) पृथक्त्वनिवेशिनी घ. । (२) इदमर्धं घ० पुस्तक एवाऽधिकम् ।

क्रियमाणोपकारे तु मृते विप्रे न पातकम् ॥

[विपाके (१)गोवृषाणां तु (२)भेषजाग्निक्रियासु च ॥]

क्रियमाण उपकार औषधिप्रयोगादिना यस्य तस्मिन् विप्रे ग वाश्वे वा औषधप्रयोगादिवशान्मृते पातकं न भवतीत्यर्थः ॥ २८४ ॥

( मिता० ) सकलहिंसाप्रायश्चित्तापवादमाह—

क्रियमाणेति। आयुर्वेदोपदेशानुसारेणौषधपथ्यान्नप्रदानादिभिश्चिकित्सादिना क्रियमाण उपकारे यस्य ब्राह्मणादेस्तस्मिन्दैवात्कथञ्चिन्मृतेऽपि पातकं नैव भवति। विप्रग्रहणं प्राणिमात्रोपलक्षणार्थम्। अत एव 'यन्त्रणे (३)गोचिकित्सार्थे मूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते' ॥ इत्यादि संवर्तादिरुक्तम्। एतच्च प्रपञ्चितं प्राक् ॥

( वी०मि० ) अनृतभाषणे गुरुतराऽभिशापविषयके प्रागुक्तमाविशेषात् गुरुप्रायश्चित्तमभिधातु तन्निन्दति—

मिथ्याभिशंसिनो दोषो द्विः समो भूत(४)वादिनः ॥

मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥ २८५ ॥

द्वेषेण सत्यमपि ब्रह्महत्यादियथार्थाऽभिशापवादिनोऽभिशस्तपातुल्यो दोषः। मिथ्याऽभिशापवादिनस्तु तद्द्विगुणो दोषः। किञ्च मृषाऽभिशापं वदन् मिथ्याऽभिशस्तस्य प्राक्तनं पापरूपं दोषं समादत्ते। चकारः साहित्यसूचनाय ॥ २८५ ॥

( मिता० ) मिथ्याभिशंसिनः प्रायश्चित्तविवक्षया तदुपयोग्यर्थवादं तावदाह—

मिथ्येति। यस्तु परोत्कर्षैर्ष्याजनितरोषकलुषितान्तःकरणो जनसमक्षं मिथ्यैवाभिशापं ब्रह्महत्यादिकमनेन कृतमित्यारोपयति तस्य तदेव द्विगुणं भवति। यस्तु विद्यमानमेव दोषमलोकायोदितं जनसमक्षं प्रकाशयति तस्यापि तत्पातकिसमदोषमाक्रम्। तथा चापस्तम्बः—'दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य स(५)माख्याता स्यात् परिहरेच्चैनं धर्मेषु' इति। न केवलं मिथ्याभिशंसी द्विगुणदोषभाक्।

(१) विपाके—इति मु० पु० पाठः। (२) इदमर्धं क० पुस्तके नास्ति।
(३) गोचिकित्सार्थे च। (४) भूतवादिने—इति क० पु० पाठः।
(५) समाख्याने इति पाठान्तरम्।

अपि तु मिथ्याभिशस्तस्य यदन्यद् दुरितजातं तदपि समादत्त इति वक्ष्यमाणप्रायश्चित्तेऽर्थवादो न पुनः पापद्वैगुण्यादिप्रतिपादनमत्र विवक्षितम् । निमित्तस्य लघुत्वाल्लघुप्रायश्चित्तस्योपदेक्ष्यमाणत्वात् कृतनाशाकृताभ्यागमप्रसङ्गाच्च ॥ २८४ ॥

( वी०मि० ) मिथ्याभिशापाभिधातुः प्रायश्चित्तमाह—

महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ॥
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ २८५ ॥

मृषा मिथ्या जापी शुद्धवतीजपशीलः 'शुद्धवतीरावर्तयेदश्वमेधावभृथं वा गच्छे'दिति वसिष्ठवचनात् । महापापपदमतिपातकस्याऽप्युपलक्षकम् । शेषं सुगमम् ॥ २८५ ॥

( मिता० ) तत्र प्रायश्चित्तमाह—

महापापेति । यस्तु महापापेन ब्रह्महत्यादिना गोवधाद्युपपापेन वा मृषैव परमभिशंसति स मासं यावज्जलाशनो जपशीलो जितेन्द्रियश्च भवेत् । जपश्च शुद्धवतीनां कार्यः । 'ब्राह्मणमनृतेनाभिशस्य पतनीयेनो(१)पपातकेन वा मासमब्भक्षः शुद्धवतीरावर्तयेदश्वमेधावभृथं वा गच्छेत्' इति वसिष्ठस्मरणात् । महापापोपपापग्रहणमन्येषामप्यतिपातकादीनामुपलक्षणम् । एतच्च ब्राह्मणस्यैव ब्राह्मणेनाभिशंसने कृते द्रष्टव्यम् । यदा तु ब्राह्मणः क्षत्रियादेरभिशंसनं करोति क्षत्रियादिर्वा ब्राह्मणस्य तदा—'प्रातिलोम्यापवादेषु द्विगुणस्त्रिगुणो दमः । वर्णानामानुलोम्येन तस्मादर्धार्धहानितः' ॥ इति दण्डानुसारेण प्रायश्चित्तस्य वृद्धिह्रासौ कल्पनीयौ । भूताभिशंसिनस्तु पूर्वोक्तार्थवादानुसारेण दण्डानुसारेण च तदर्धं कल्पनीयम् । तथातिपातकाभिशंसिन एतदेव व्रतं पादोनम् । पातकाभिशंसिनस्त्वर्धम् । उपपातकाभिशंसिनस्तु पादः । ( मनुः ११।१२६ )—'तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः' इत्युपपातकभूतक्षत्रियादिवधे महापातकप्रायश्चित्ततुरीयांशस्य दर्शनात् । एवं प्रकीर्णाभिशंसिनो(२)ऽपि उपपातकान्न्यूनं कल्पनीयम् । 'शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्' इति स्मरणात् । यत्तु शङ्खलिखिताभ्यां 'नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी चेत्येते

(१) नोपपतनीयेन वा. ड. । (२) नोपि ततो न्यूनं ड. ।

षड्वर्षाणि ब्राह्मणगृहेषु भैक्षं चरेयुः संवत्सरं धौतभैक्षमश्नीयुः षण्मासान्वा गा अनुगच्छेयुः' इति गुरुप्रायश्चित्तमुक्तं, तद्भ्रासतारतम्यापेक्षया योजनीयम् ॥ २८५ ॥

( वी०मि० ) अभिशंसिप्रायश्चित्तप्रसङ्गेनाऽभिशस्तप्रायश्चित्तमाह—

अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ॥
निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा ॥ २८६ ॥

मृषाऽभिशस्तस्तु प्राजापत्यं चरेदग्निदेवताकं पुरोडाशं वायुदेवताकं पशुं वा यागार्थं निर्वपेत् । अत्र मिथ्याऽभिशस्तत्वलिङ्गानुमितप्राग्भवीयपापनाशनार्थं प्रायश्चित्तं द्रष्टव्यम् । एवकाराभ्यां कृच्छ्रसाहित्यमुभयत्र व्यवच्छिद्यते ॥ २८६ ॥

( मिता० ) अभिशंसिप्रायश्चित्तप्रसङ्गादभिशस्तप्रायश्चित्तमाह—

अभिशस्त इति । यः पुनर्मिथ्याभिशस्तः स कृच्छ्रं प्राजापत्यं चरेत् । अग्निदैवत्येन वा पुरोडाशेन यजेत । वायुदैवत्येन वा पुरोडाशेन यजेत । वायुदैवत्येन वा पशुना । एषां च पक्षाणां शक्तिसम्भवापेक्षया व्यवस्था । यत्तु वसिष्ठेन 'मासमब्भक्षणमुक्तमेतेनैवाभिशस्तो व्याख्यातः' इति, तदभिशस्तस्यैव किंचित्कालमकृतप्रायश्चित्तस्य सतो द्रष्टव्यम् । 'संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः' इति दण्डातिरेकदर्शनात् । यत्तु पैठीनसिनोक्तम्—'अनृतेनाभिशस्यमानः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासम्' इति, तदपि वसिष्ठेन समानविषयम् । यत्तु बौधायनेनोक्तम्—'पातकाभिशंसिने कृच्छ्रस्तदर्धमभिशस्तस्य' इति, तदुपपातकादिविषयम्, अशक्तविषयं वा । एवमन्येषामप्युच्चावचप्रायश्चित्तानामभिशस्तविषयाणां कालशक्त्याद्यपेक्षया व्यवस्था विज्ञेया । यथाह मनुः ( ११।२०० )—'वधेनाप्यकालता मासं संहिताजप एव वा । होमाश्च (१)शाकला नित्यमपाङ्क्तानां विशोधनम्' ॥ इति । अपाङ्क्तानां मध्ये अभिशस्तादयः पठिताः । यद्यप्यत्राभिशस्तस्य निषिद्धाचरणं नोपलभ्यते तथापि मिथ्याभिशस्तत्वलिङ्गानुमितप्राग्भवीयनिषिद्धाचरणापूर्वनिबन्धनमिदं प्रायश्चित्तं कृमिदष्टानामिवेति न विरोधः ॥२८६॥

(१) देवकृतस्यैनसोऽवयजनमसीत्यादिकैः शाकलशाखापठितैः सूक्तमन्त्रैः तैः मन्त्रैर्घृतहोमः कार्यः ।

(वी०मि०) पारदार्यविशेषे प्रायश्चित्तमाह—

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत् ॥
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति ॥ २८७ ॥

क्षेत्रजपुत्रोत्पादनार्थं नियोगं विना भ्रातुर्ज्येष्ठस्य कनिष्ठस्य वा जायामकामतो गत्वा चान्द्रायणं चरेत् । कामकृते च (१)'परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयातां ज्येष्ठभार्यामनियुक्तो गच्छंस्तदेव कनिष्ठभार्यां चे'ति शङ्खोक्तं द्रष्टव्यम्। उदक्यां रजस्वलामकृतस्नानां गत्वा त्रिरात्रोपवासानन्तरं घृतप्राशनेन शुद्ध्यति ॥ २८७ ॥

(मिता०) किञ्च—

अनियुक्त इति। यस्तु नियोगं विना भ्रातुर्ज्येष्ठस्य कनिष्ठस्य वा भार्यां गच्छति स चान्द्रायणं चरेत् । एतच्च सकृदमतिपूर्वविषयं द्रष्टव्यम्। यत्तु शङ्खवचनम्—'परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षं चरेयातां ज्येष्ठभार्यामनियुक्तो गच्छंस्तदेव कनिष्ठभार्यां च' इति, तत्कामकारविषयम् ॥

(मिता०) किञ्चाह—

त्रिरात्रान्ते इति। यः पुनरुदक्यां रजस्वलां स्वभार्यामपि गच्छति स त्रिरात्रमुपोष्याऽन्ते घृतं प्राश्य विशुध्यति। इदमकामतः सकृद्गमनविषयम् । तत्रैवाभ्यासे 'रजस्वलागमने सप्तरात्रम्' इति शातातपेनोक्तं द्रष्टव्यम्। कामतः सकृद्गमनेऽप्येतदेव । यत्तु बृहत्संवर्तेनोक्तम्—'रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा। तस्य पापविशुध्यर्थमतिकृच्छ्रं विशोधनम्' ॥ इति, तत्कामतोऽभ्यासविषयम्। यत्पुनः शङ्खेन त्रिवार्षिकमुक्तम्—'पादस्तु शूद्रहत्यायामुदक्यागमने तथा' इति, तत्कामतोऽत्यन्तानवच्छिन्नाभ्यासविषयम् । रजस्वलायास्तु रजस्वलादिस्पर्शे प्रायश्चित्तं स्मृत्यन्तरोक्तं द्रष्टव्यम् । तथा च वृद्धवसिष्ठः—'स्पृष्टे रजस्वलेऽन्योन्यं (२)सवर्णे त्वेकभर्तृके। (३)कामादकामतो वापि सद्यः स्नानेन शुध्यतः' ॥ इति। असपत्न्योस्तु सवर्णयोरकामतः स्नानमात्रम्। 'उदक्या तु सवर्णा या स्पृष्टा चेत्स्या-

(१) परिवित्तिः परिवेत्ता च—इति नास्ति क० पुस्तके।
(२) सगोत्रे ख०। (३) कामतोऽकामतो वापि ख०।

दुदक्यया । तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम्' ॥ इति मार्कण्डेयस्मरणात् । यत्तु कश्यपवचनम्—'रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि । एकरात्रं निराहारा पञ्चगव्येन शुध्यति' ॥ इति तत्कामकारविषयम् । असवर्णास्पर्शे तु वृद्धवसिष्ठेन विशेषो दर्शितः—'स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजापि च । कृच्छ्रेण शुध्यते पूर्वा शूद्री दानेन शुध्यति' ॥ दानेनेति पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशदानेन शुध्यतीति । 'स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजापि च । पादहीनं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा ॥ स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा । कृच्छ्रार्धाच्छुध्यते पूर्वा तूत्तरा च तदर्धतः ॥ स्पृष्ट्वा रजस्वलान्योन्यं क्षत्रिया शूद्रजापि च । उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥ स्पृष्ट्वा रजस्वलान्योन्यं क्षत्रिया वैश्यजापि च । त्रिरात्राच्छुध्यते पूर्वा त्वहोरात्रेण चो(१)त्तरा ॥ स्पृष्ट्वा रजस्वलान्योन्यं वैश्या शूद्री तथैव च । त्रिरात्राच्छुध्यते पूर्वा तूत्तरा च दिनद्वयात् ॥ वर्णानां कामतः स्पर्शे शुद्धिरेषा पुरातनी' । इति । अकामतस्तु वृद्धविष्णुनोक्तं स्नानमात्रम्—'रजस्वला हीनवर्णां रजस्वला स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा स्यात् । सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा विशुध्यति' इति । चण्डालादिस्पर्शे तु वृद्धवसिष्ठेन विशेष उक्तः—'पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला । तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव तु । अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥ शूद्रयोच्छिष्टया स्पृष्टा शुना चेदूपवासमाचरेत्' । इति । तान्यहानि व्यतिक्रम्य अनाशकेन नीत्वेति यावत् । एतत्कामतः स्पर्शविषयम् । अकामतस्तु—'रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्वायसैः । तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति' ॥ इति बौधायनोक्तं द्रष्टव्यम् । यत्पुनरत्रैवोक्तम्—'रजस्वला तु संस्पृष्टा ग्रामकुक्कुटसूकरैः । श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम्' ॥ इति, तदशक्तविषयम् । यदा तु भुञ्जानायाः श्वादिस्पर्शो भवति तदा स्मृत्यन्तरे विशेष उक्तः—'रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि । गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति ॥ अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम्' ॥ इति । यदा तूच्छिष्टयोः परस्परस्पर्शनं भवति तदा—

(१) चपरा क ।

'उच्छिष्टोच्छिष्टया स्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषिता' ॥ इत्यत्रिणोक्तं द्रष्टव्यम् । यदा तूच्छिष्टान्द्विजान्रजस्वला स्पृशति तदा—'द्विजान्कथंचिदुच्छिष्टान्रजःस्था यदि संस्पृशेत् । अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेत्' ॥ इति मार्कण्डेयोक्तं द्रष्टव्यम् । एवमवकीर्णिप्रायश्चित्तप्रसङ्गात्कानिचिदनुपातकभूतप्रायश्चित्तान्यपि व्याख्याय प्रकृतमनुसरामः । तत्रावकीर्णानन्तरं 'सुतानां चैव विक्रयः' इत्युक्तं, तत्र मनुयोगीश्वरोक्तानि त्रै(१)मासिकादीनि कामाकामजातिशक्त्याद्यपेक्षया पूर्ववद्व्यवस्थापनीयानि । यत्तु शङ्खवचनम्—'देवगृहप्रतिश्रयोद्यानारामसभाप्रपातडागपुण्यसेतुसुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेत्' इति, यच्च पराशरेणोक्तम्—'विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेत्' इति, तदुभयमप्यापद्यकामतो द्रष्टव्यम् । कामतस्तु—'नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् । द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः' ॥ इति चतुर्विंशतिमतोक्तं द्रष्टव्यम् । यत्तु पैठीनसिनोक्तम्—'आरामतडागोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारः संवत्सरेण पूतो भवति' इति तदेकपुत्रविषयम् । तदनन्तरं 'धान्यकुप्यपशुस्तेयम्' इत्युक्तं, तत्प्रायश्चित्तानि च स्तेयप्रकरणे प्रपञ्चितानि ॥ २८७ ॥

( वी०मि० ) अयाज्यायाजनं चशब्दसमुच्चितेऽभिचारे नास्तिक्ये चोपपातके प्रायश्चित्तमाह—

त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि ॥
वेदप्लावी यवान्यब्दं त्यक्त्वा च शरणागतम् ॥ २८८ ॥

व्रात्यस्य कालेऽनुपनीतस्य याजकोऽपिशब्दात् पतितादियाजकश्च अभिचारं श्येनयागादिकं वैरिवधफलं कुर्वंश्च प्राजापत्यानि त्रीण्याचरेत् । यस्तु नास्तिक्यात् वेदं प्लावयति अप्रमाणत्वेन व्यवस्थापयति, यश्च शरणागतमुपेक्षते सोऽब्दमेकं यवमात्राशी भवेत् । एवं कृते शुद्ध्यति ॥ २८८ ॥

(मिता०) अनन्तरमयाज्यानां च याजनमित्युक्तं तत्र प्रायश्चित्तमाह—

त्रीनिति । यस्तु सावित्रीपतितानां याजनं करोति स प्राजापत्य-

---

( १ ) दीनि कामजाति ट ।

नामुद(१)कवास उपदिश्यते—अतिशीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोद(१)कवासः कल्पनीयः । तथा वयोविशेषादपि यदि नवतिवार्षिकादेरपूर्णद्वादशवार्षिकस्य वा (२)द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणा वियुञ्ज्यरन्निति ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यम् । अत एव स्मृत्यन्तरे 'क्वचिदर्धं क्वचित्पादः' इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः, तच्च प्रागप्रपञ्चितम् । तथा धनदानतपश्चरणादिशक्त्यपेक्षया च । न हि निर्धनस्य पात्रे धनं वा पर्याप्तमित्याद्युपपद्यते । तथोद्रिक्तवित्तादेर्वा पराकादिकं नापि स्त्रीशूद्रादेर्जपादिकम् । अत एव 'राजादीनामशक्नुवन् । दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये' इत्युक्तम् । तथा 'प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च' इति तपस्यशक्तस्य स्मृत्यन्तरे प्रायश्चित्तस्य ह्रासोऽभिहितः । तथा पापं च महापातकादिरूपेण सप्रत्ययाप्रत्ययसकृदभ्यासादिरूपेण चावेत्य यत्नतः सकलधर्मशास्त्रपर्यालोचनया प्रायश्चित्तं कल्पनीयम् । तत्राकामतो यद्विहितं तदेव कामकृते द्विगुणं कामतोऽभ्यासे चतुर्गुणमित्येवं स्मृत्यन्तरानुसारेण कल्पनीयम् । तथा—'महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् । अब्भक्षो मासमासीत' इत्युक्तं, तत्र महापापोपपापयोस्तुल्यप्रायश्चित्तस्यायुक्तत्वान्महापापापेक्षयोपपातके मासिकप्रायश्चित्तस्य ह्रासः कल्पनीयः । यत्र च हसितजृम्भि(३)ताक्रन्दितास्फालनादि नाकस्मात्कुर्यात् । तथा—'नोदक्यतोऽम्भसि स्नायाश्च दन्तधावनादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम्' ॥ इत्यादौ प्रायश्चित्तं नोपदिष्टं तत्रापि देशाद्यपेक्षया प्रायश्चित्तं कल्प्यम् । ननु न किञ्चिदपि निमित्तजातमनुक्तनिष्कृतिकमुपलभ्यते—'प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव हि' ॥ इत्यनुक्तनिष्कृतिष्वपि प्रायश्चित्तस्य वक्ष्यमाणत्वात् । गौतमेनाप्येतान्येवानादेशे विकल्पेन क्रियेरन्नित्येकाहादयः प्रतिपादिताः । उच्यते—सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः । न च हसितादिषु सर्वत्र प्राणायामशतं युक्तम् । निमित्तस्य लघुत्वात् । अतः पापा-

(१) वस्त्रव क ।  (२) द्वादशवार्षिकं क ।

(३) जृम्भितरुदितेत्यन्ये क ।

पेक्षया ह्रासः कल्पनीयः प्रायश्चित्तान्तरं वा । ननु कथं पापस्य लघुत्वं येन प्रायश्चित्तस्य ह्रासकल्पना स्यात् । न च प्रायश्चित्ताल्पत्वादिति वाच्यम् । अनुक्तनिष्कृतित्वादेव । सत्यम्, किन्तु अर्थवादसंकीर्तनाद् बुद्धिपूर्वाबुद्धिपूर्वानुबन्धाद्यपेक्षया च सुबोध एव दोषस्य गुरुलघुभावः । तथा दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावः । यथा ब्राह्मणावगोरणादौ सजातीयविषये प्राजापत्यादिकमुक्तम्, तत्र यदा चानुलोम्येन प्रातिलोम्येन वाऽवगोरणादि क्रियते, तदा मूर्धावसिक्तादिदण्डतारतम्यदर्श(१)नादेव दोषाल्पत्वमहत्त्वावगमात्प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः । दर्शितश्च दण्डस्य गुरुलघुभावः 'प्रातिलोम्यापवादेषु द्विगुणस्त्रिगुणो दमः' इत्यादिना ॥ २९३ ॥

(वी०मि०) महापातकिनां प्रायश्चित्तेन व्यवहार्यत्वमुक्तम्, यदि त्वौद्धत्यात्पतितो न प्रायश्चित्तं करोति तदा किं कार्यमत आह—

दासीकुम्भं बहिर्ग्रामान्निरयेरन् स्वबान्धवाः ॥
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ २९४ ॥
चरितव्रत आयाते निनयेरन्नवं घटम् ॥
जु(२)गुप्सेरन्न चाऽप्येनं संविशेयुश्च सर्वशः ॥ २९५ ॥
पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः ॥
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥ २९६ ॥

दा(३)स्याः सपिण्डैः प्रेरितयाऽऽनीतं जलपूर्णं कुम्भं ग्रामाद्बहिः पतितस्य स्वाज्ञातयो बान्धवा मातुलादयश्च निनयेरन् पर्यस्येर(४)न् । चकारेण दास्येव वा सपिण्डादिप्रयुक्ता घटं निनयेदिति समुच्चीयते ।

दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ॥

इति मनुवचनात् । गौतमः—'पात्रमानीय घटात् पूरयित्वा दक्षिणाभिमुखो यदा विपर्यस्येदमुमनुदकं करोमीति नामग्राहं तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धा-

(१) दर्शनाद्दोषाल्पत्वं ख । (२) जुगुप्सेयुः—इति क० पु० पाठः ।
(३) पतितानीतं—इति ख० पु० पाठः । (४) पर्यवस्येरन्—इति ख० पु० पाठः ।

स्य क्षिप्रेरन्नप उपस्पृश्य ग्रामं प्रविशेयुः' । एवं कुम्भाऽपवर्जनानन्तरं पतितं सर्वकार्येषु विवाहसम्भाषणस्नेहा(१)सनश्राद्धशौचादिषु बहिः कुर्युः । एवकारेण स्नेहानुबन्धमपि व्यवच्छिनत्ति । यदि तु बन्धुत्यागादन्यथा वा आतवैराग्यः अकामकृते महापातके प्रायश्चित्तं पतितः परित्यक्तः करोति तदा स्याद् चरितेति । प्रायश्चित्तं कृत्वा समागते तस्मिन् नवं घटं जलपूर्णं निनयेरन् बान्धवाः, न च तं निन्देयुः सहाचनं च तेन कुर्युः सर्वे । आद्येन चकारेणाऽवमानं सङ्गृहीतं निषेधति । द्वितीयेन विवाहाऽऽशौचादिव्यवहारसमुच्चयः । अपिकारेण नवघटनिनयातिकर्तव्यतासमुच्चयः । तदाह गौतमः—'यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनमुपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्सम्प्रतिगृह्य जपेत्—'शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामी'-त्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूश्माण्डैश्चाऽऽज्यं जुहुयाद्धिरण्यं दद्याद्गां वाऽऽचार्याय । यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येदेत्तदेव शान्त्युदकं सर्वेषूपपातकेषु । पुरुषस्य पतितस्य परित्यागविधिः स्त्रीणां पतितानामतिदिशति पतितानामिति । एष परित्यागस्य प्रायश्चित्तान्तरसङ्ग्रहस्य च विधिः प्रकारः पतितानां स्त्रीणां मुनिभिः परिकीर्तितः । (२)एषां तु विशेषः—ऋतुनिनयानन्तरमपि स्त्रीणां स्वगृहनिकटे वासो देयः, अन्नं वस्त्रं व्यभिचारसंरक्षणपूर्वकं देयम ॥ २९५—२९६ ॥

( मिता॰ ) एवं महापातकादिभिः पतितस्य प्रायश्चित्तमुक्तं, यस्त्वौद्धत्यादेतन्न चिकीर्षति तस्य किं कार्यमित्यत आह—

दासीकुम्भमिति । जीवत एव पतितस्य ये स्वा ज्ञातयो बान्धवा मातृपक्षास्ते सर्वे संनिपत्य दासी प्रेष्या, तया सपिण्डादिप्रेषितया आनीतमपां पूर्णं कुम्भं घटं ग्रामाद्बहिर्निनयेयुः । एतच्चतुर्थ्यादिरिक्तातिथिष्वह्नः पञ्चमे भागे गुर्वादिसंनिधौ कार्यम् । ( ११।१८२)-'पतितस्योदकं कार्यं सपिण्डैर्बा(३)न्धवैर्बहिः । निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ' ॥ इति मनुस्मरणात् । अथवा दास्येव सपि-

(१) सोदकम—इति क॰ पुस्तके । (२) मन्ये तु—इति क॰ पु॰ पा॰ ।

(३) बान्धवैः सह च ।

ण्डादिप्रयुक्ता निनयेत् । यथाह मनुः ( ११।१८३ )—'दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा । अहोरात्रमुपासीरन्नशौचं बान्धवैः सह' ॥ इति । प्रेतवदिति दक्षिणामुखापसव्ययोः प्राप्त्यर्थम् । तच्च निनयनमुदकपिण्डदानादिप्रेतक्रियोत्तरकालं द्रष्टव्यम् । 'तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः पात्रं चास्य विप(१)र्यस्येयुः दासः कर्मकरो वाऽवकरात् पात्रमानीय दासीघटात् पूरयित्वा दक्षिणाभिमुखः पदा विपर्यस्येत् अमुमनुदकं करोमि इति नामग्राहं तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन् अप उपस्पृश्य ग्रामं प्रविशेयुः' इति गौतमस्मरणात् । अयं च त्यागो यदि बन्धुभिः प्रेर्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः । तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्वेति, स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येदिति शङ्खस्मरणात् । ततस्तं लब्धोदकं पतितं सर्वकार्येषु सम्भाषणसहासनादिषु बहिः कुर्युर्वर्जयेयुः । तथा च मनुः ( ११।१८४ )—'निवर्तेरंस्ततस्तस्मात्सम्भाषणसहासने । दायाद्यस्य प्रदानं च यात्रामेव च लौकिकीम्' ॥ इति । यदि स्नेहादिना सम्भाषणं करोति तदा प्रायश्चित्तं कार्यम् । 'अत ऊर्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन्सावित्रीमज्ञानपूर्वं ज्ञानपूर्वं चेत्त्रिरात्र'मिति ॥ २९४ ॥

( मिता० ) यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः प्रायश्चित्तमकृत, तदा किं कार्यमित्यत आह—

चरितेति । कृतप्रायश्चित्ते बन्धुसमीपं पुनरायाते तत्सपिण्डाधास्तेन सहिता नवमनुपहतं घटम् उदकपूर्णं निनयेयुः । एतच्च निनयनं पुण्यह्रदादिस्नानोत्तरकालं द्रष्टव्यम् । ( ११।१८६ )—'प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम् । तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये' ॥ इति मनुस्मरणात् । गौतमेन तु विशेष उक्तः— 'यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेत्—'शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामि' इत्येतैर्यजुर्भिः

(१) विपरिदिचेयुः ट ।

पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां वाचार्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्। तस्यैव शान्त्युदकं सर्वेषूपपातकेषु' इति। तत एवं कृतप्रायश्चित्तं ते नैव कुत्सयेयुः तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः॥ २९५॥

( मिता० ) पूर्वोक्तस्य पतितपरित्यागादिविधेरतिदेशमाह—

पतितानामिति। य एव पुरुषाणां परित्यागे पिण्डोदकदानविधिः कृतप्रायश्चित्तानां परिग्रहविधिश्च स एव स्त्रीणामपि पतितानां वेदितव्यः। इयांस्तु विशेषः—पतिताभ्योऽपि ताभ्यः ( स्त्रीभ्यः ) दत्तोदकादिकर्मभ्यो वासस्तृणपर्णमयं कुटीगृहकं प्रधानगृहसमीपे देयम्। तथा प्राणधारणमात्रमन्नं मलिनं च वस्त्रं पुनः पुरुषान्तरोपभोगनिवारणसहितं सम्यक्कारं देयम्॥ २९६॥

( वी०मि० ) स्त्रीणां न केवलं ब्रह्मवधादीन्येव पञ्च महापातकानि उपपातकानि च कुम्भापवर्जननिमित्ते पतनयोजानि किन्त्वन्यान्यपीत्याह—

नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्॥

विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥ २९७॥

हीनवर्णव्यभिचारित्वं ब्राह्मणव्यतिरिक्तस्यापि गर्भस्य भर्तुर्वा हिंसनं स्त्रीणामेतान्यपि पुरुषादसाधारणानि पतनीयानि ध्रुवं निश्चितं भवन्ति। अपिकारेण पुरुषपतननिमित्तसमुच्चयः॥ २९७॥

( मिता० ) ननु काः पतिता यासामयं परित्यागविधिरित्यत आह—

नीचाभिगमनमिति। हीनवर्णगमनं गर्भपातनमब्राह्मण्या अपि भर्तुः अब्राह्मणस्यापि हिंसनमित्येतानि स्त्रीणामसाधारणानि पतननिमित्तानि। अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकानुपातकान्यप्यस्तानि चोपपातकादीनि तान्यपि स्त्रीणां ध्रुवं निश्चितं पतनकारणानि भवन्ति। अत एव शौनकः—'पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव, ब्राह्मणी हीनवर्णसेवायामधिकं पतति' इति। यत्तु वसिष्ठेन—'त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः। भर्तृवधो भ्रूणहत्या स्वस्य गर्भस्य पातनम्'॥

इति भ्रूणहत्याग्रहणं कृतं, तत् दृष्टान्तार्थं न पुनरितरेषां महा

पातकादीनां पतनहेतुत्वनिरासार्थम् । यदपि तेनैव—'चतस्रस्तु परि- त्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितो- पगता च या' ॥ इति चतसृणामेव परित्याग इत्युक्तं तथापि तासां प्रायश्चित्तमचिकीर्षन्तीनां मध्ये चतसृणामेव शिष्यगादीनां चैलान्न- गृहवासादिजीवनहेतुत्वाद्युच्छेदेन त्यागं कुर्यान्नान्यासामित्यभिप्रा- यः । अतश्चान्यासां पतितानां प्रायश्चित्तमकुर्वतीनामपि वासो गृहान्तिके देयमित्यादिकं कर्तव्यमित्यवगम्यते ॥ २९७ ॥

( वी०मि० ) 'चरितव्रत आयात' इत्याद्युक्तमपवदति—

शरणागतबालस्त्रीहिंसकान् संवसेन्नतु ॥
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥ २९८ ॥

शरणागतहिंसकादींस्तु कृतघ्नसहितान् कृतघटापवर्जनप्रायश्चि- त्तानपि सतः न संवसेन्न व्यवहरेदित्यर्थः ॥ २९८ ॥

( मिता० ) 'जुगुप्सेरन्न चाप्येनं संविशेयुश्च सर्वशः' इत्यस्याप- वादमाह—

शरणेति । शरणागतादिव्यापादनकारिणः कृतघ्नसहितान्प्राय- श्चित्तेन क्षीणदोषानपि न संव्यवहरेदिति वाचनिकोऽयं प्रतिषेधः, किमिति वचनं न कुर्यात, न हि वचनस्यातिभारोऽस्ति, अतश्च य- द्यपि व्यभिचारिणीनां वधेऽल्पीय एव प्रायश्चित्तं, तथापि वाचनिको- ऽयं संव्यवहारप्रतिषेधः ॥ २९८ ॥

( वी०मि० ) प्रायश्चित्तानन्तरं घटं निनयते तस्य कृत्यमाह—

घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ॥
प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥ २९९ ॥

यवसं घासं गवामर्थे प्रदद्यात् । हि यतस्तद्दत्तघासभक्षणेन प्रथ- मं गोभिः सत्कृतस्य ज्ञात्यादिभिः सत्क्रिया कर्तव्या । गोभिर्घासस्या- ऽभक्षणे पुनः प्रायश्चित्तं कारयेदिति भावः ॥ २९९ ॥

( मिता० ) एवं प्रसङ्गेन स्त्रीषु विशेषमभिधाय प्रकृत एव चरि- तव्रतविधौ विशेषमाह—

घटे इति । घटेऽपवर्जिते ह्रदादुद्धृत्य पूर्णे कुम्भेऽवनिनीतेऽसौ चरितव्रतः सपिण्डादिमध्यस्थो गोभ्यो यवसं दद्यात् । ताभिः प्रथ- मं सत्कृतस्य पूजितस्य पश्चाज्ज्ञातिभिः सत्क्रिया कार्या । गोभिश्च

तस्य सत्कारस्तद्दत्तयवसभक्षणमेव । यदि गावस्तद्दत्त यवसं न गृह्णीयुस्तर्हि पुनः प्रायश्चित्तमनुतिष्ठेत् । यदाह हारीत —'स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः प्रतिगृह्णीयुरथैनं प्रवर्तयेयुः इतरथा नेत्यभिप्रेतम्' ॥ २९९ ॥

( वी०मि० ) एवं पापानि प्रायश्चित्तसहितान्यभिधाय प्रायश्चित्तपूर्वकृत्यमाह—

विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ॥
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०० ॥

परज्ञातदोषस्त्ववरवेदप्रायश्चित्तविज्ञब्राह्मणसमुदायात्मकस्य पर्षदः समीपमागत्य तदनुमतं व्रतं प्रायश्चित्तं कुर्वीत । परैरज्ञातदोषस्तु रहस्यमप्रकाशं प्रायश्चित्तमाचरेत् ॥ ३०० ॥

( मिता० ) महापातकादिपञ्चविधेऽपि दोषगणे प्रातिस्विकव्रतसन्दोहमभिधायाधुना सकलव्रतसाधारणं धर्ममाह—

विख्यातदोष इति । यो दोषो यावत्कर्तृसम्पाद्यस्ततोऽन्यैर्विख्यातो विज्ञातो दोषो यस्यासौ पर्षदुपदिष्टं व्रतं कुर्यात् । यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथापि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्यात् । तदुपगमने चाङ्गिरसा विशेष उक्तः—'कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्धयेत्पापं यावन्नाख्याति पर्षदि ॥ सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । पर्षदानुमतस्तत्त्वं सर्वं विख्यापयेन्नरः । व्रतमादाय भूयोऽपि तथा स्नात्वा व्रतं चरेत्' ॥ इति । विख्यापनं च पर्षद्दक्षिणादानानन्तरं कार्यम् । यथाह पराशरः—'पापं विख्यापयेत्पापी दत्त्वा धेनुं तथा वृषम्' इति । एतच्चोपपातकविषयम् । महापातकादिष्वधिकं कल्प्यम् । यत्तूक्तम्—'तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणि । विख्या(१)प्य पापं पर्षद्भ्यः किञ्चिद्दत्त्वा व्रतं चरेत्' ॥ इति, तत्प्रकीर्णकविषयम् । पर्षत्स्वरूपं च मनुना दर्शितम्—'त्रैविद्यो हैतुकस्तर्की नै(२)रुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा' ॥ हैतुको मीमांसायांदितत्त्वज्ञः । तर्की न्यायशास्त्रकुशलः । तथान्यदपि पर्षद्द्वयं तेनैव दर्शितम्—'ऋग्वेदविद्यजुर्विच्च सा-

(१) विख्यातपापं वक्तृत्य इति क। (२) निरुक्तो क।

मवेदविदेव च । अपरा पर्षद्विज्ञेया धर्मसंशयनिर्णये' ॥ इति । तथा—'ए(१)कोऽपि वेदविद्धर्मं यं व्यवस्येत्समाहितः । स ज्ञेयः परमो धर्मो नाज्ञानामुदितोऽयुतैः' ॥ इति । कासां च पर्षदां सम्भवापेक्षया व्यवस्था महापातकाद्यपेक्षया वा । यत्तु स्मृत्यन्तरेऽभिहितम्—'पातकेषु शतं पर्षत्सहस्रं महदादिषु । उपपापेषु पञ्चाशत्स्वल्पं स्वल्पे तथा भवेत्' ॥ इति, तदपि महापातकादिदोषानुसारेण पर्षदो गुरुलघुभावप्रतिपादनपरं न पुनः संख्यानियमार्थम् । मन्वादिमहास्मृतिविरोधप्रसङ्गात् । तथा देवलेन चात्र विशेषो दर्शितः—'स्वयं तु ब्राह्मणा ब्रूयुरल्पदोषेषु निष्कृतिम् । राजा च ब्राह्मणाश्चैव महत्सु च परीक्षितम्' ॥ इति । (२)तया च पर्षदा अवश्यं व्रतमुपदेष्टव्यम्—'आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः' ॥ इत्यङ्गिरःस्मरणात् । (३)तया पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम्—'अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदं व्रजेत्' ॥ इति वसिष्ठस्मरणात् । क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः—'न्यायतो ब्राह्मणः क्षिप्रं क्षत्रियादेः कृतैनसः । अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्' ॥ इति । तत्र च यागाद्यनुष्ठानशीलानां जपादिकं वाच्यम् । इतरेषां तु तपः । 'कर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः । जपहोमादिकं तेभ्यो विशेषेण प्रदीयते ॥ ये नामधारका विप्रा मूर्खा धनविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः' ॥ इति ॥

इति प्रकाशप्रायश्चित्तप्रकरणम् ।

---

( मिता० ) व्याख्याय ख्यातदुरितशातनीं व्रतसन्ततिम् ।
रहःकृताघसन्दोहहारिणीं व्याहरन्मुनिः ॥

तत्र प्रथमं सकलरहस्यव्रतसाधारणं धर्ममाह—

अनभिख्यातदोष इति । कर्तृव्यतिरिक्तैरनभिख्यातो दोषो यस्या-

---

(१) एकोऽपि धर्मविद्धर्ममिति पाठः ।

(२) तया च पर्षदा घ ।

(३) तथा च घ ।

स्त्री रहस्यव्रतप्रकारं प्रायश्चित्तमनुतिष्ठेत् । अतः स्त्रीसम्भोगादौ तस्या अपि कारकत्वात् तदितरैरविज्ञातदोषस्य रहस्यव्रतमिति मन्तव्यम् । अत्र यदि कर्ता स्वयं धर्मशास्त्रकुशलस्तदा परस्मिन्नविसाध्य स्वनिमित्तोचितं प्रायश्चित्तमनुतिष्ठेत् । यस्तु स्वयमनभिज्ञोऽसौ केनचिद्वृद्धो ब्रह्महत्यादिकं कृतं तत्र किं रहस्यप्रायश्चित्तमित्यन्यव्याजेनावगम्य रहोव्रतमनुतिष्ठेत् । अत एव स्त्रीशूद्रयोरप्यमुनैव मार्गेण रहस्यव्रतज्ञानसिद्धेरधिकारसिद्धिः । न च वाच्यं रहस्यव्रतानां जपादिप्रधानत्वादविद्ययोः स्त्रीशूद्रयोस्तदनुपपत्तेरनधिकार इति । यतोऽनैकान्ततो रहस्यव्रतानां जपादिप्रधानत्वम् । दानादेरप्युपदेशात्, गौतमोक्तप्राणायामादेरपि सम्भवाच्च । इतरेषामपि मन्त्रदैवतर्षिच्छन्दःपरिज्ञानमात्रमेवाऽधिकारोपयोगि न स्वन्यविषयम् । न हि तडागनिर्माणादौ ज्योतिष्टोमादिविषयिणी प्रतिपत्तिरुपयुज्यते । देवतादिपरिज्ञानं त्ववश्यमपेक्षणीयम् । 'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः' ॥ इति व्याससस्मरणात् । अत्राप्याहारविशेषानुक्तौ पयःप्रभृतयः, कालविशेषानुक्तौ संवत्सरादयः, देशविशेषानुक्तौ शिलोच्चयादयो गौतमाद्यभिहिताः प्रकाशप्रायश्चित्तवदन्वेषणीयाः ॥ ३०० ॥

(वी० मि० ) रहस्यकृतेषु पापेषु पूर्वोक्तमेव व्रतं कार्यं नेत्याह—

त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ॥
अन्तर्जले विशुध्येत गां दत्त्वा च पयस्विनीम् ॥३०१॥
लोमभ्यः स्वाहेत्यथ वा दिवसं मारुताशनः ॥
जले स्थित्वाऽभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०२ ॥
त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ॥
ब्राह्मणस्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०३ ॥
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ॥
गौर्देया कर्मणोऽस्याऽन्ते पृथगेभिः पयस्विनी ॥ ३०४ ॥
प्राणायामशतं कार्यं सर्वपापापनुत्तये ॥
उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०५ ॥

ओङ्काराभिष्टुतं सो(१)मं सलिलं पावनं पिबेत् ॥
कृत्वा हि रेतोविण्मूत्रप्राशनं तु द्विजोत्तमः ॥ ३०६ ॥

निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ॥
त्रैकाल्यसन्ध्याकरणात्तत्सर्वं विप्रणश्यति ॥ ३०७ ॥

शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ॥
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०८ ॥

यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ॥
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥ ३०९ ॥

वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ॥
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३१० ॥

वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाऽप्सु सूर्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ॥ ३११ ॥

ब्रह्महा यः स त्रिरात्रोपोषणानन्तरं जलमध्येऽघमर्षणसूक्तं त्रिर्जप्त्वा पयस्विनीं गां च तदु(२)त्तरं दत्त्वा शुध्यति । यद्वा दिवसमहोरात्रमेकं मारुताशन उपोषितः सन् जले स्थित्वा प्रातर्जलादुत्तीर्य 'लोमभ्यः स्वाहे'त्याद्यष्टभिर्मन्त्रैरेकैकेन पञ्च पञ्चाऽऽहुतय इत्येवं चत्वारिंशद्घृताहुतीर्जुहुयात् । तत्र जलवासात्क्लेशात् त्रिरात्रोपवाससाम्यम् । सुरापस्तु त्रिरात्रोपोषितः कूष्माण्डीभिर्घृतं चत्वारिंशदाहुतीर्हुत्वा शुचिर्भवति । ब्राह्मणस्वर्णहारी तु त्रिरात्रोपोषितो जलमध्यस्थो 'नमस्ते रुद्र मन्यव' इति शतरुद्रियजपं कृत्वा शुचिर्भवति । गुरुतल्पगतस्तु 'सहस्रशीर्षा'जपशीलः पापान्मुच्यते । अत्र ताच्छील्ये णिनिप्रत्ययादावृत्तिर्गम्यते ।

पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ।

आवृत्तौ च सङ्ख्याकाङ्क्षायां चत्वारिंशत्सङ्ख्याऽनुमी(३)यते । संसर्गप्रायश्चित्तं ब्रह्मवधादिप्रायश्चित्तैरेव व्याख्यातम् । एभिः सुरा(४)पायिसुवर्णस्तेयिगुरुतल्पगैः प्रत्येकं कर्मणोऽस्य प्रायश्चित्तरूप-

(१) सोमसलिलं—इति मुद्रितपुस्तकपाठः । (२) तदनन्तरं—इति ख० पु० पाठः ।
(३) चत्वारिंशत्संख्याऽन्नीयते—इति क० पु० पाठः ।
(४) सुरापायि—इत्यारभ्य गोवधादिभिः—इत्यन्तो भागः ख० पुस्तके नोपलभ्यते ।

स्याऽन्ते पयस्विनी गौर्देया ब्राह्मणायेति । उपपातकैर्गोवधादिभिर्जातानां सर्वेषां पापानामपगमाय प्राणायामशतं कार्यम् । चकारान्महापातके प्राणायामानां शतचतुष्टयमतिपातके शतत्रयं समुच्चीयते । एवकारेणाऽल्पतरपापेषु शतसङ्ख्याव्यवच्छेदेनाऽल्पप्राणायामसङ्ख्यामभिप्रैति । 'वाक्चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति । शूद्रस्त्रीगमनान्नभोजनेषु पृथक् पृथक् सप्ताहं सप्त सप्त प्राणायामान् धारये'दित्यादिबौधायनवचनात् । हिशब्दः पादपूरणे । उपपातकजातानामित्यत्राऽपवादमाह–ओङ्कारेति । ब्राह्मणो रेतःप्रभृति प्राशन कृत्वा ओङ्काराऽभिमन्त्रितं सोमलतारसं शुद्धिसाधनं यथास्यात्तथा पिबेत् । हिशब्दः प्राग्वत् । दिवा रात्रौ वा । अपिकारात् सन्ध्ययोरज्ञानकृतं यत्सर्वं प्रकीर्णकं मानसोपपातकं च प्रातर्मध्याह्नसायङ्कालेषु सन्ध्योपासनान्नश्यति । सकलमहापातकादिसाधारणं प्रायश्चित्तमाह—शुक्रियेति । शुक्रियं 'विश्वानि देव सवित'रित्यादि वाजसनेयपठितम् , आरण्यकम्—'व्रतं वाचं प्रपद्ये' इत्यादि तयोर्जपः, गायत्र्याश्च जपो विशेषतः सङ्ख्याविशेषानुसारेण । रुद्रैकादशिनी एकादशानां रुद्रानुवाकानां समाहारस्य जपः । एते प्रत्येकं सर्वपापहराः । विशेषश्च प्रोक्तः शङ्खेन—

> शतजप्ता तु सा देवी सर्वपापप्रणाशिनी ।
> सहस्रजप्ता च तथा पातकेभ्यः प्रमोचनी ॥
> दशसाहस्रजाप्येन सर्वकल्मषनाशिनी ।
> लक्षजप्ता तु सा देवी महापातकनाशिनी ॥

यत्तु चतुर्विंशतिमते—

> गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ।
> लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥
> पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः ।
> गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः ॥

इत्युक्तं, तद्गुरुत्वात्प्रकामकृतमहापातकपरम् । चकारेणाऽघमर्षणजपादीनां समुच्चयः । हिशब्दः प्राग्वत्, निश्चयपरत्वेन सन्दिग्धपापव्यवच्छेदार्थो वा । सन्दिग्धपापसाधारणं प्रायश्चित्तमाहयत्रेति । यत्र सङ्कीर्णं पापेनाऽऽक्रान्तं मन्यते सन्दिग्धे निश्चिनोति वा तत्र गायत्र्या तिलैर्होमः । तथा वशिष्ठोक्तप्रकारेण वाचनं स्वस्तिवाचनं

तिलप्रतिसहृदानपूर्वकं भवति प्रायश्चित्तम् । यमः—

गायत्र्या लक्षहोमेन मुच्यते सर्वपातकैः ।

अतिपातकादिषु पादपादह्रासः कल्पनीयः । वसिष्ठः—

वैशाख्यां पौर्णमास्यां (१)तु ब्राह्मणान् सप्त पञ्च वा ।
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

इति । चकारेण कृष्णाजिनदान(२)सङ्ग्रहः ।

कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥

इति वसिष्ठवचनात् । किञ्च वेदाभ्यासादिरतं पञ्चमहायज्ञानुष्ठानपरं महापातकजान्यपि पापानि इह रहसि अकामकृतानि न स्पृशन्ति, किमुताऽन्यपापानि तादृशानि । वायुभक्षः सोपवासो दिवा दिनम् उर्ध्वं तिष्ठन्नीत्वा रात्रिं चाऽप्सु वसन्नेव नीत्वा प्रातः सूर्यं पश्यन् गायत्रीं सहस्रकृत्वो जप्त्वा ब्रह्मवधातिरिक्ताऽखिलपापात् शुध्यति ॥ ३०१—३११ ॥

( मिता० ) एवं सकलरहस्यसाधारणधर्ममभिधाय प्रकाशप्रायश्चित्तवद्ब्रह्महत्यादिक्रमेणैव रहस्यप्रायश्चित्तान्याह—

त्रिरात्रोपोषित इति । त्रिरात्रमुपोषितोऽन्तर्जलेऽघमर्पणेन महर्षिणा दृष्टं सूक्तम् अघमर्षणम् 'ऋतं च सत्यं च' इति तृचमानुष्टुभं भाववृत्तदेवताकं जप्त्वा त्रिरात्रान्ते पयस्विनीं गां दत्त्वा ब्रह्महा विशुध्यति । जपश्चान्तर्जले निमग्नेन त्रिरावर्तनीयः । यथाह सुमन्तुः—'देवद्विजगुरुहन्ताऽप्सु निमग्नोऽघमर्षणं सूक्तं त्रिरावर्तयेत् । मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीं वान्य(३)द्वाऽगम्यागमनं कृत्वाऽघमर्षणमेवाऽन्तर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवति' इति । एतच्चाकामकारविषयम् । यत्तु मनुनोक्तम् ( ११।२४८ )—'सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः'॥ इति, तदप्यस्मिन्नेव विषये गोदानाशक्तस्य वेदितव्यम् । यत्तु गौतमेन षट्त्रिंशद्रात्रव्रतमुक्त्वोक्तम्—'एतद्व्रतमेव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत्'

( १ ) न्यद्वा गमनं ख । ( २ ) कामतो वध ख । ( ३ ) वासाः सकृत् ख ।

इति, तत्का(१)मतोऽसकृद्वधविषयम् । यत्तु बौधायनेनोक्तम्—'ग्रामात्प्राचीं वोदीचीं दिशमुपनिष्क्रम्य स्नातः शुचिः शुचिवासा उदकान्ते स्थण्डिलमुपलिप्य सकृत्क्लिन्नवासाः(२) गोवालपूतेन पाणिनादित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत । प्रातः शतं मध्याह्ने शतमपराह्णे शतमपरिमितं वोदितेषु नक्षत्रेषु प्रसृतियावकं प्राश्नीयात् । ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते । द्वादशरात्रान्महापातकेभ्यो ब्रह्महत्यासुरापानसुवर्णस्तेयानि वर्जयित्वा एकविंशतिरात्रेण तान्यपि तरतीति तदकामकारविषयम्, अकामतः श्रोत्रियाचार्यसवनस्थवधविषयं वा । यत्तु मनुनोक्तम् (११।२५८)—'अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् । मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः' ॥ इति, तत्कामतः श्रोत्रियादिवधविषयमितरत्र कामतोऽभ्यासविषयं वा । यत्तु बृहद्विष्णुनोक्तम्—'ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याऽघमर्षणेनाऽष्टसहस्रमाज्याहुतीर्जुहुयात्तेन तस्मात्पूतो भवति' इति, तन्निर्गुणवधविषयमनुग्राहकविषयं वा । यत्तु यमेनोक्तम्—'त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम्' ॥ इति, तद्गुणवतो हन्तुर्निर्गुणवधविषयं प्रयोजकानुमन्तृविषयं वा । यत्तु हारीतेनोक्तम्—'महापातकातिपातकानुपातकोपपातकानामेकतममेव संनिपाते चाघमर्षणमेव त्रिर्जपेत्' इति, तन्निमित्तकर्तृविषयम् । एवमन्यान्यपि स्मृतिवाक्यान्यन्विष्यैवमेव विषयेषु विभजनीयानि ग्रन्थगौरवभयान्न लिख्यन्ते । एतदेव ब्रह्मजातं यागस्थयोषित्क्षत्रियविट्स्वात्रेय्यामाहिताग्निपत्न्यां गर्भिण्यामविज्ञाते च गर्भे व्यापादिते तुरीयांशन्यूनमनुष्ठेयम् ॥ ३०१ ॥

(मिता०) प्रायश्चित्तान्तरमाह—

लोमभ्य इति । अथवाऽहोरात्रमुपोषितो रात्रावुदके वासं कृत्वा प्रातर्जलादुत्तीर्य लोमभ्यः स्वाहेत्यादिभिरष्टाभिर्मन्त्रैरेकैकेन पञ्चपञ्चाहुतय इत्येवं चत्वारिंशद् घृताहुतीर्जुहुयात् । इदं च पूर्वोक्तसमानविषयम् । उदवासस्य क्लेशबाहुल्यात् ॥ ३०२ ॥

(मिता०) क्रमप्राप्तं सुरापानप्रायश्चित्तमाह—

त्रिरात्रेति । सुरापश्चत्वारिंशद्घृताहुतीरित्यनुवर्तते । त्रिरात्रमु-

(१) च—इति ख० पु० पाठः । (२) इत—इति नास्ति ख० पुस्तके ।

पोषितः कूष्माण्डीभिः यद्देवादेवहेडनमित्याद्याभिः कूष्माण्डदृष्टाभिरनुष्टुब्भिर्मन्त्रलिङ्गदेवताभिः ऋग्भिश्चत्वारिंशद्घृताहुतीर्हुत्वा शुचिर्भवेत्। तथा बौधायनेनाप्युक्तम्—'अथ कूष्माण्डीभिर्जुहुयाद्योऽपूत इवात्मानं मन्येत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते । अयोनौ वा रेतः सिक्त्वान्यत्र स्वप्नात्' इति । यत्तु मनुना (११।२४९)—'कौ(१)त्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचम्। माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति' ॥ इति । मासं प्रत्यहं षोडशकृत्वोऽपनःशोशुचदघं प्रतिस्तोमेभिरुषसं वासिष्ठम्। महित्रीणामवोऽस्तु । एतोन्विन्द्रं स्तवामेत्येतेषामन्यतमस्य जप उक्तः, स त्रिरात्रोपवासकूष्माण्डहोमाशक्तस्य वेदितव्यः । एतच्चाकामतः पैष्ट्याः सकृत्पाने, गौडीमाध्व्योस्तु पानावृत्तौ च वेदितव्यम् । यच्च मनुना (११।२५६)—'मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । सुगुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्' ॥ इति । संवत्सरं प्रत्यहं 'देवकृतस्यैनसः' इत्यादिभिरष्टाभिर्मन्त्रैर्होमो 'नम इदुग्रं नम आविवासे' इत्येतस्या ऋचो वा जप उक्तः, स कामकारविषयः । यत्तु—'महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुध्यति' ॥ इति, तदभ्यासविषयं, समुच्चितमहापातकविषयं वा ॥

( मिता० ) सुवर्णस्तेयप्रायश्चित्तमाह—

ब्राह्मणेति । ब्राह्मणस्वर्णहारी पुनस्त्रिरात्रोपोषितः जलमध्यस्थो 'नमस्ते रुद्र मन्यव' इति शतरुद्रियजपयुक्तः शुध्यतीति । शातातपेनात्र विशेष उक्तः—'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्माच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः'॥ इति । जपश्चैकादशकृत्वः कार्यः । 'एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः'॥ इत्यत्रिस्मरणात् । यत्तु मनुना ( ११:२५० )—'सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च । सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः'॥ इति द्विपञ्चाशदृक्संख्याकस्य, 'अस्य वामस्य पलितस्य होतुः' इति सूक्तस्य तथा 'यज्जाग्रतो दूरमुदैतु दैवम्' इति शिवसङ्कल्पदृष्टस्य षडृचस्य वा सकृज्जप उक्तः, सोऽत्यन्तनिर्गुणस्वामिकस्वर्णहरणे गुणवतोऽपहर्तुर्द्रष्टव्यः । सुवर्णन्यूनपरिमाणविषयोऽनुग्राहकप्रयोजकविषयो

(१) मासं जप्त्वाप इत्येतद्वासिष्ठं च तृचं प्रति । माहित्र्यं शुद्ध ख. ।

वा । आवृत्तौ तु 'महापातकसंयुक्तोऽनुगच्छेत्' इत्यादिनोक्तं द्रष्टव्यम् ॥ ३०३ ॥

( मिता० ) क्रमप्राप्तं गुरुतल्पगप्रायश्चित्तमाह—

सहस्रेति । गुरुतल्पगस्तु सहस्रशीर्षेति षोडशर्चं सूक्तं नारायणदृष्टं पुरुषदैवत्यमानुष्टुभं त्रिष्टुबन्तं जपंस्तस्मात्पापान्मुच्यते । सहस्रशीर्षंजापीति ताच्छील्यप्रत्ययादावृत्तिर्गम्यते । अत एव यमेनोक्तम्—'पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात्' इति । आवृत्तौ च संख्यापेक्षायामधस्तनश्लोकगता चत्वारिंशत्संख्यानुमीयते । अत्रापि प्राक्तनश्लोकगतं त्रिरात्रोपोषित इति सम्बध्यते । अत एव बृहद्विष्णुः—'त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येत्' इति । एभिश्च सुरापसुवर्णस्तेनगुरुतल्पगैस्त्रिभिः पृथक्पृथगस्य त्रिरात्रव्रतस्यान्ते बहुक्षीरा गौर्देया । इदमकामविषयम् । यत्तु मनुना ( ११।२५१ )—'हविष्यान्तीयमभ्यस्य नतमंह इतीति च । जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः' ॥ इति । 'हविष्यान्तमजरं स्वर्विदम्', 'न तमंहो न दुरितम्', 'इति वा इति मे मनः', 'सहस्रशीर्षे'त्येषामन्यतमस्य मासं प्रत्यहं (१)षोडशषोडशकृत्वो जप उक्तः सोऽप्यकामविषय एव । कामतस्तु 'मन्त्रैः शाकलहोमीयैः' इति मनूक्तं द्रष्टव्यम् । यत्तु षट्त्रिंशन्मतेऽभिहितम्—'महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना । उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ महापातकसंयुक्तो लक्षहोमेन शुध्यति' । इति, तदावृत्तिविषयम् । यत्तु यमेनोक्तम्—'जप्त्वाप्यस्यवामीयं पावमानीरथापि वा । कुन्तापं वालखिल्यांश्च निवित्प्रैषान्वृषाकपिम् ॥ होतॄन्रुद्रान्सकृज्जप्त्वा मुच्यते सर्वपातकैः' ॥ इति, तद्व्यभिचारिणीगमनविषयम् । यानि पुनः गुरुतल्पातिदेशविषयाणि तत्समानि चातिपातकोपपातकपदाभिधेयानि तेषु तुरीयांशन्यूनमर्धोनं च क्रमेण वेदितव्यम् । पातकातिपातकानुपातकमहापातकानामेकतमे संनिपाते वा अघमर्षणमेव त्रिर्जपेदिति हारीतोक्तं वा द्रष्टव्यम् । महापातकिसंसर्गिणश्च स तस्यैव व्रतं कुर्यादिति वचनात् येन सह संसर्गस्तदीयमेव प्रायश्चित्तम् । न च वाच्यम्—अध्यापनादिसंसर्गस्यानेककर्तृकसम्पाद्यत्वाद्द्वयस्यानुपपत्तिरिति । नैवम्—यतः सत्यप्यनेककर्तृत्वे परदारगमनवत् कर्तृव्यतिरिक्ततृतीयाद्यपरि-

---

(१) 'षोडशावृत्त' पत्रावृत्तिरेकस्य जप उक्तः ख ।

शतत्रयप्राणायामा गोवधोद्युपपातकाभिप्रायाः । अथ पातकवर्जमित्यादिनोक्ताः षष्ट्यधिकशतसहितद्विसहस्रसंख्याकाः प्राणायामा अतिपातकानुपातकाभिप्रायाः । अथ पातकेष्वित्यादिनोक्ता विंशत्यधिकशतत्रययुक्ताश्चतुःसहस्रप्राणायामा महापातकविषयाः । इदं चाऽभ्यस्यमोऽन्येत्यादिनोक्तं प्रायश्चित्तपञ्चकमत्यन्ताभ्यासविषयं, समुच्चितविषयं वा । यत्तु मनुना ( ११।२५२ )—'एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् । अवेत्यृचं जपेदब्दं यत्किंचेदमितीति वा' ॥ इत्यब्दं यावत्प्रत्यहमर्थान्तराविरुद्धेषु कालेषु 'अवते हेळो वरुण' इत्यस्या ऋचो 'यत्किंचेदम्' इत्यस्या, 'इति वा इति मे मनः' इत्यस्याश्च जप उक्तः सोऽप्यभ्यासविषयः ॥ ३०५ ॥

( मिता० ) उपपातकसामान्यप्राप्तस्य प्राणायामशतस्यापवादमाह—

ओङ्कारेति । द्विजो रेतोविण्मूत्रप्राशनं कृत्वा सोमलतारसमोङ्कारेणाभिमन्त्रितं शुद्धिसाधनं पिबेत् । एतच्चाकामकारविषयम् । कामतस्तु सुमन्तूक्तम्—'रेतोविण्मूत्रप्राशनं कृत्वा लशुनपलाण्डुगृञ्जनकुम्भिकादीनामन्येषां (१)चाभक्ष्याणां भक्षणं कृत्वा हंसग्रामकुक्कुटश्वशृगालादिमांसभक्षणं च कृत्वा ततः कण्ठमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा महाव्याहृतिभिरुद्रोगमुदकं पीत्वा तदेतस्मात्पूतो भवती'ति । मनुनापि सप्तविधाभक्ष्यभक्षणे प्रायश्चित्तान्तरमुक्तम् ( ११ २५३ )—'प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् । जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्' ॥ इति । अप्रतिग्राह्यं विषशस्त्रसुरादि पतितादिद्रव्यं च । यदा स्वप्नेषु रेतोविण्मूत्रादि शारीरं मलं विसृजति, तदापि तेनैवोक्तम्—'अप्रशस्तं तु कृत्वाप्सु मासमासीत भैक्ष्यभुक्' इति ॥ ३०६ ॥

( मिता० ) अज्ञानकृते प्रकीर्णके मानसे चोपपातके प्रायश्चित्तमाह—

निशायामिति । रजन्यां वासरे वा यत्प्रमादकृतं प्रकीर्णकं मानसं वाचिकं चोपपातकं तत्सर्वं प्रातर्मध्याह्नादिकालत्रयविहितनित्यसन्ध्योपासनया प्रणुदयति । तथा च यमः—'यदह्नात्कुरुते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां सन्ध्यां प्राणायामैर्निहन्ति तत्' ॥ इति । शातातपेनाप्युक्तम्—'अनृतं मद्यगन्धं च दिवा मैथुनमेव च । पुनाति वृषलान्नं च सन्ध्या बहिरुपासिता' ॥ इति ॥ ३०७ ॥

---

(१) चाभक्ष्यभक्षणं च।

( मिता० ) अथ सकलमहापातकादिसाधारणान्पवित्रमन्त्रानाह—

शुक्रियारण्यकेति । शुक्रियं नाम आरण्यकविशेषः 'विश्वानि देव सवितः' इत्यादि वाजसनेयके पठ्यते, आरण्यकं च यजुः 'ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये' इत्यादि तत्रैव पठ्यते तयोर्जपः सकलमहापातकादिहरः । तथा गायत्र्याश्च महापातकेषु लक्षमतिपातकानुपातकयोर्दशसहस्रमुपपातकेषु सहस्रं प्रकीर्णकेषु शतमित्येवं विशेषतो जपः सर्वपापहरः । तथा च गायत्रीमधिकृत्य श्लोकः शङ्खेनोक्तः- 'शतजप्ता तु (१)सावित्री महापातकनाशिनी । सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥ दशसाहस्रजप्येन (२)सर्वकिल्बिषनाशिनी । लक्षजप्ता तु सा देवी महापातकनाशिनी ॥ सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः । सुरापश्च विशुध्यन्ति लक्षं जप्त्वा न संशयः' ॥ इति । यत्तु चतुर्विंशतिमते उक्तम्—'गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः । गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः' ॥ इति, तद्गुरुत्वात्प्रकाशविषयम् । तथा रुद्रैकादशिनी । एकादशानां रुद्रानुवाकानां समाहारो रुद्रैकादशिनी । सा च विशेषतो जप्ता सर्वपापहरा । 'एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित् । महद्भ्यः स तु पापेभ्यो मुच्यते नात्र संशयः' ॥ इति महापातकेष्वेकादशगुणावृत्तिदर्शनात् अतिपातकादिषु चतुर्थचतुर्थांशह्रासो योजनीयः । चशब्दोऽघमर्षणादिसमुच्चयार्थः । यथाह वसिष्ठः-'स(३)र्ववेदपवित्राणि वक्ष्याम्यहमतः परम् । येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥ अघ(४)मर्षणं दे(५)वकृतं शुद्ध(६)वत्यस्त(७)रत्समाः । कूष्माण्ड्यः(८) पावमान्य(९)श्च (१०)दुर्गा सा(११)वित्र्यथैव च ॥ अभी(१२)षङ्गाः पद(१३)स्तोमाः सा(१४)मानि व्या(१५)हृतीस्तथा ।

(१) सा देवी क । (२) कल्मषनाशिनी क ।

(३) सर्वदेवपवित्राणि पाठः । (४) अघमर्षणमृतं च सत्यमित्यादि ।

(५) देवकृतं देवकृतस्यैनस इत्यादृक् । (६) शुद्धवत्यः एतोन्विन्द्रं स्तवामेत्याद्या ऋचः ।

(७) तरत्समन्दीधावतीत्याद्यृचः । (८) कूष्माण्ड्यः यद्देवादेवहेडनमित्याद्याः ।

(९) पावमान्यः स्वादिष्ठया मदिष्ठयेत्याद्याश्चत्वारोऽध्यायाः ।

(१०) दुर्गा जातवेदसे सुनवामेत्यादिसूक्तम् । (११) सावित्रीर्देवस्यत्वेत्याद्यृचः ।

(१२) अभीषङ्गास्तदाख्या मन्त्रविशेषाः । (१३) पदस्तोमाः उत्सोदेवा हिरण्यया इत्यादयः ।

(१४) सामानि साधारणानि । (१५) व्याहृतीः भूरग्नये च पृथिव्यै चेत्यादिकाः ।

(१)मारुण्डानि च सामानि (२)गायत्रं रैवतं त(३)था ॥ (४)पुरुषव्रतं च (५)भासं च तथा देवव्र(६)तानि च । (७)अब्लिङ्गं (८)बार्हस्पत्यं च वा(९)क्सूक्तं मध्वृच(१०)स्तथा ॥ (११)शतरुद्रि(१२)याथर्वशिरस्त्रिसु(१३)पर्णं महाव्र(१४)तम् । गो(१५)सूक्तं चाश्व(१६)सूक्तं च इन्द्र(१७)शुद्धे च सामनी ॥ त्री(१८)ण्याज्यदोहानि (१९)रथन्तरं च (२०)अग्नेर्व्रतं (२१)वामदेव्यं (२२)बृहच्च । एतानि गीतानि पुनन्ति जन्तूञ्जातिस्मरत्वं लभते यदीच्छेत्' ॥ इति ॥३०८॥

(मिता०) किञ्च—

यथेति । यत्र यत्र च प्रमादपथादौ तज्जनि(२३)तकल्मषजातेनात्मानं सङ्कीर्णमभिभूतं द्विजो मन्यते, तत्र तत्र गायत्र्या तिलैर्होमः कार्यः । तत्र महापातकेषु ल(२४)क्षसंख्यया होमः कार्यः । 'गायत्र्या लक्षहोमेन मुच्यते सर्वपातकैः' इति यमस्मरणात् । अतिपातकादिषु पादपादह्रासः कल्पनीयः । तथा तिलैर्वा(२५)चनं दानं कार्यम् । तथा च रहस्याधिकारे वसिष्ठः—'वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् स(२६)प्त पञ्च वा । क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति' ॥ इति । तथा अनियतकालेऽपि दानं तेनैवोक्तम्—'कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम्' ॥ इति । तथा व्यासेनाप्युक्तम्—'तिलधेनुं च यो दद्यात्संय-

(१) आरण्यानि साम ते अत्र आरण्यं इत्यादीनि । (२) गायत्र सामविशेष ।
(३) रैवतं रेवतीर्नः सधमाद इत्यादि । (४) पुरुषव्रतं वैरूपमित्यादि ।
(५) भासं भासे [illegible] इत्यादि । (६) देवव्रत अनृतत्वस्य [illegible] इत्यादि ।
(७) अब्लिङ्ग आपो हिष्ठेत्याद्या ऋचः [illegible] । (८) बार्हस्पत्य बृहस्पते प्रथम [illegible] इत्यादि । (९) वाक्सूक्तं अहं रुद्रेभिरित्यादि । (१०) मध्वृच मधुवाता इत्यादय ।
(११) शतरुद्रियं नमस्ते रुद्र मन्यव इत्यादि । (१२) अथर्वशिरः देवा ह वै स्वर्गं लोकमित्यादि । (१३) त्रिसुपर्णं ब्रह्ममेतु मामित्यादि । (१४) महाव्रत [illegible] इत्यादि ।
(१५) गोसूक्तं आ गावो अग्मन्नित्यादि । (१६) अश्वसूक्त [illegible] इत्यादि ।
(१७) इन्द्राय साम गायतेत्यन्ये इन्द्रशुद्धसामनी । (१८) आज्यदोहानीत्यादीनि [illegible] ।
(१९) रथन्तरं सामविशेष । (२०) अग्नेर्व्रतम् ।
(२१) वामदेव्य कया नश्चित्र इत्यादि । (२२) बृहच्च सामविशेष ।
(२३) दोषजातेन च । (२४) गायत्र्या लक्षहोमेन च ।
(२५) वाचनं दानं तिलैरित्यन्वये सम्बध्यते, तिलदानमित्यर्थः ।
(२६) सप्त पञ्च वा ।

तान्मा द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः' ॥ इति । एवमादि दानजातं रहस्यकाण्डोक्तमविदुषां द्विजानां स्त्रीशूद्रयोश्च वेदितव्यम् । यत्तु यमेनोक्तम्—'तिलान्ददाति यः प्रातस्तिलान्स्पृशति खादति । तिलस्नायी तिलाञ्जुह्वन्सर्वं तरति (१)दुष्कृतम्' ॥ तथा—'द्वे चाष्टम्यौ तु मासस्य चतुर्दश्यौ तथैव । आमवास्या पौर्णमासी सप्तमी द्वादशीद्वयम् ॥ संवत्सरमभुञ्जानः सततं विजितेन्द्रियः । मुच्यते पातकैः सर्वैः स्वर्गलोकं च गच्छति' ॥ इति । यच्चाऽत्रिणोक्तम्—'क्षीराब्धौ शेषपर्यङ्के त्वाषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोः संपूजयेद्धरिम् ॥ ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति' ॥ इत्येवमादि तत्सर्वं विद्याविरहिणां कामाकामसकृदभ्यासविषयतया व्यवस्थापनीयम् ॥ ३०९ ॥

( मिता० ) किञ्चाह—

वेदेति । 'वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा' ॥ इत्युक्तक्रमेण वेदाभ्यासनिरतं तितिक्षायुक्तं पञ्चमहायज्ञानुष्ठाननिरतं महापातकजान्यपि पापानि न स्पृशन्ति । किमुत प्रकीर्णकजानि वाङ्मनसजान्योपपातकानि चेत्यत्र तात्पर्यमपिशब्दाल्लक्ष्यते । एतच्चाकामकारविषयम् । अत एव वसिष्ठेन—'यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम्' ॥ इति प्रकीर्णकाद्यभिप्रायेणाभिधायाभिहितम्—'न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत्' ॥ इति ॥ ३१० ॥

( मिता० ) किञ्च—

वायुभक्ष इति । सोपवासो वासरमुपविशन् उषित्वा सलिले वसंस्त्रियां नीत्वादित्योदयानन्तरं सावित्र्याः सहस्रं जप्त्वा ब्रह्मवधव्यतिरिक्तसकलमहापातकादिपापजान्मुच्यते । अतश्चोपपातकादिष्वभ्यासेऽनेकदोषसमुच्चये वा वेदितव्यम् । विषमविषयसमीकरणस्यान्याय्यत्वात् । अत एव वृद्धवसिष्ठेन महापातकोपपातकयोः कालविशेषेण व्रतविशेष उक्तः । यथाह—यवानां प्रसृतिमञ्जलिं वा श्रप्यमाणं (२)शृतं वाभिमन्त्रयेत्—'यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्' ॥ इत्य-

(१) किल्बिषं ट । (२) शृतं चाभिमन्त्रयेत् ट ।

नेन, 'घृतं यथा मधु यवाः पवित्रममृतं यवाः । सर्वे पुनन्तु मे पापं वाङ्मनःकायसंभवम्' ॥ इत्यनेन वा । 'अग्निकार्यं तु कुर्वीत तेन भूतबलिं तथा । नाग्रं न भिक्षां नातिथ्यं न चोच्छिष्टं परित्यजेत्' ॥ 'ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा' इत्यात्मनिजुहुयात्त्रिरात्रं मेधाभिवृद्धये पापक्षयाय त्रिरात्रं ब्रह्महत्यादिषु द्वादशरात्रं पतितोत्पन्नश्चेति । एतद्दिग्दर्शनमनेनान्यान्यपि स्मृतिवचनानि विवेचनीयानि ॥ ३११ ॥

इति रहस्यप्रायश्चित्तप्रकरणम् ।

---

( वी० मि० ) एवं रहस्यपापप्रायश्चित्तान्यभिधाय प्रकाशरहस्यप्रायश्चित्ताङ्गधर्मानाह—

ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ॥
अहिंसा स्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ ३१२ ॥
स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ॥
नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ ३१३ ॥

ब्रह्मचर्यं सम्भोगातिरिक्त(१)श्रवणादिसप्तविधमैथुननिवृत्तिः । उपस्थनिग्रहपदेन सम्भोगनिवृत्तेरभिधास्यमानत्वात् दयादेः पुरुषार्थत्वेऽपि प्रायश्चित्ताङ्गत्वमधुनाऽभिहितम् । अकल्कता निर्दम्भता, अस्तेयं देवतार्थं कुसुमातिरिक्तचौर्याभावः, माधुर्यं प्रियवादिता, इज्या पञ्चमहायज्ञाचरणम्-एते यमा बहिरिन्द्रियनिग्रहाः, गुरोः शुश्रूषा आराध्यत्वेन ज्ञानं शौचादयश्च नियमा मनोनिग्रहाः स्मृताः प्रायश्चित्ताङ्गत्वेन स्मृतिपूकाः।गुरुपरिचर्यादिकं चकारेण समुच्चीयते॥३१२-३१३॥

( मिता० ) विनियुक्तमतयातरूपभेदे बुभुत्सिते ।
कीदृक्षमिति संक्षेपाल्लक्षणं वक्ष्यतेऽधुना ॥

तत्र तावत्सकलप्रकाशरहस्यव्रताङ्गभूतान्धर्मानाह—

ब्रह्मचर्यमिति । ब्रह्मचर्यं सकलेन्द्रियसंयमः। उपस्थनिग्रहो लिङ्गनिग्रहः गोबलीवर्दन्यायेन निर्दिष्टः । अकल्कता अकुटिलता । शेषं प्रसिद्धम् । यत्पुनर्मनुनोक्तम्—'अहिंसा सत्यमक्रोधमार्जवं च समाचरेत्' इति, तदप्येतेषामुपलक्षणं न परिगणनाय । अत्र च दयाक्षान्त्या-

(१) स्मरण—इति ख० पु० पाठः ।

दीनां पुरुषार्थतया प्राप्तानामपि पुनर्विधानं प्रायश्चित्ताङ्गत्वार्थम्। कचिद्विशेषोऽप्यस्ति। यथा विवाहादिष्वभ्यनुज्ञातस्याप्यनृतवचनस्य निवृत्त्यर्थं सत्यत्वविधानम्। पुत्रशिष्यादिकमपि न ताडनीयमित्येवमर्थमहिंसाविधानमित्येवमादि ॥ ३१२-३१३ ॥

( वी० मि० ) अथोक्तानां प्रायश्चित्ताख्यव्रतानां स्वरूपाणि विविनक्ति द्वादशभिः श्लोकैः—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ॥ ३१४ ॥

गोमूत्रादीनि षट्(१) संयुक्तानि आ(२)हारान्तपरित्यागेनैकस्मिन् दिने पीत्वा परदिने उपवसेदिति सान्तपनं द्व्यहसाध्यमित्यर्थः। अत्र पराशरः—

गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम्।
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥
घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा।
अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥

इति ॥ ३१४ ॥

( मिता० ) तत्र सान्तपनाख्यं व्रतं तावदाह—

गोमूत्रमिति। पूर्वेद्युराहारान्तरपरित्यागेन गोमूत्रादीनि पञ्चगव्यानि पञ्च द्रव्याणि कुशोदकसहितानि संयुज्य पीत्वा अपरेद्युरुपवसेदिति द्वैरा(३)त्रिकः सान्तपनः कृच्छ्रः। संयो(४)जनं चोत्तरश्लोके पृथग्विधानादवगम्यते। कृच्छ्र इति चान्वर्थसंज्ञेयम्। तपोरूपत्वेन क्लेशसाध्यत्वात्। गोमूत्रादीनां परिमाणं वक्ष्यते। यदा पुनः पूर्वेद्युरुपोष्यापरेद्युः समन्त्रकं संयुज्य समन्त्रकमेव पञ्चगव्यं पीयते तदा ब्रह्मकूर्च इत्याख्यायते। यथाह पराशरः—'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं तु (५)प्रत्येकं कायशोधनम् ॥ गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम्। पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥ घृतं च कृष्णवर्णायाः सर्वं कापिलमेव च। अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥ गोमूत्रं माषकास्त्वष्टौ

( १ ) मंत्र-इति ख० पु० पाठः। ( २ ) अहोरात्रान्त-इति ख० पु० पाठः। ( ३ ) द्वैरात्रः ख। ( ४ ) सांतपनं। ( ५ ) पवित्रं कायशोधनमिति पाठः ख।

गोमयस्य तु षोडश । क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिता ॥ गोमूत्रवद् घृतस्येष्टस्तदर्धं तु कुशोदकम् । गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् । पञ्चगव्यमृचा पूतं होमयेदग्निसंनिधौ ॥ सप्तपत्राश्च ये दर्भा (१)अच्छिन्नाग्राः शुचित्विषः । एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥ इरावती इदं विष्णुर्मानस्तोके च शंवती । एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ॥ प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च । प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु । मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् । स्वर्णपात्रेण रौ(२)प्येण ब्राह्मतीर्थेन वा पुनः ॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे । ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम्' ॥ इति ॥ यदा त्वेतदेव मिश्रितं पञ्चगव्यं त्रिरात्रमभ्यस्यते तदा यतिसान्तपनसंज्ञां लभते—'एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम्' इति शङ्खस्मरणात् । जाबालेन तु सप्ताहसाध्यं सान्तपनमुक्तम्—गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥ कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनम् ॥ इति । एषां च गुरुलघुकृच्छ्राणां शक्त्याद्यपेक्षया व्यवस्था विज्ञेया । एवमुत्तरत्रापि व्यवस्था बोद्धव्या ॥३१४॥

पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ३१५ ॥

(वी० मि०) सान्तपनोक्तैर्गोमयादिभिः षड्भिर्द्रव्यैरेकैकप्राशनेनैकैकदिनमतिवाह्य षडहं षण्णामह्नां समाहारं परेद्युरुपवासेन सहितं एवं सप्ताहेन महासान्तपनं कृच्छ्रं स्मृतं । तुशब्देनाऽऽद्यान्तरव्यवच्छेदः षडहं इत्यं ॥३१५॥

(मिता०) महासान्तपनाख्यं कृच्छ्रमाह—

पृथगिति । सप्ताहेनापवर्तितो महासान्तपनाख्यः कृच्छ्रो विज्ञेयः । कथमित्यपेक्षायामुक्तं पृथग्भूतैः षड्भिर्गोमूत्रादिभिरेकैकेनैकैकमहरतिवाहयेत् सप्तमं चोपवासेनेति । यमेन तु पञ्चदशाहसम्पाद्यो महासान्तपनोऽभिहितः—'त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् । त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ॥ महासान्तपनं ह्येतत्सर्वपाप

(१) अच्छिन्नाग्रा इति क पाठः । (२) गव्येन च ।

चतुर्थदिन उपवसेदिति महान् तप्तकृच्छ्र उदाहृतः। मिलितानां त्रयाणामेकस्मिन् दिने पानं द्वितीयदिन उपवास इति शुद्धस्तप्तकृच्छ्र इति चकारार्थः ॥ ३१७ ॥

( मिता० ) तप्तकृच्छ्रमाह—

तप्तक्षीरेति । दुग्धसर्पिरुदकानां तप्तानामेकैकं प्रतिदिवसं प्राश्यापरेद्युरुपवसेत् । एवं दिवसचतुष्टयसम्पाद्यो महातप्तकृच्छ्रः । एभिरेव समस्तैः सोपवासैर्द्विरात्रसम्पाद्यः सान्तपनवत्तप्तकृच्छ्रः । मनुना तु द्वादशरात्रनिर्वर्त्योऽभिहितः ( ११·२१४ )—'तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः' ॥ इति । क्षीरादिपरिमाणं तु पराशरेणोक्तं द्रष्टव्यम्-'अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत्।पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम्' ॥ इति । त्रि(१)रात्रमारुतस्य पूरणमुष्णोदकबाष्पं पिबेदित्यर्थः । यदा तु शीतं क्षीरादि पीयते तदा शीतकृच्छ्रः। 'त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम्'॥ इति यमस्मरणात्॥ ३१७ ॥

इति तप्तकृच्छ्रचतुर्विधः ।

---

एकभक्तेन नक्तेन तथैवाऽयाचितेन च ॥
उपवासेन चैवाऽयं पादकृच्छ्रः प्रकीर्तितः ॥ ३१८ ॥

(वी० मि०) एकभक्तेन दिवैव भोजनेनैकेन नक्तभोजनेनैकेन अयाचिताशनेनैकेन उपवासेन चैकेन चतुरहसाध्यः पादकृच्छ्र इत्युदाहृतः। तथाप्यत्र चकाराभ्यां च दिनत्रये भोजने ग्राससङ्ख्यानियमः समुच्चीयते । तदाह पराशरः—

सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरयाच्याः परं निरशनं स्मृतम् ॥

इति । चकारेण द्वितीयभोजनव्यवच्छेदः सर्वत्र ॥ ३१८ ॥

( मिता० ) पादकृच्छ्रमाह —

एकभक्तेनेति । एकभक्तेन सकृद्भोजनेन दिवैव । नक्तेनेति पृथगुपादानात् । अतश्च दिवैवैकवारमेव भोजनेनैवैकमहोरात्रमतिवाह्य·

---

( १ ) त्रिरात्रस्य मारुतस्य च ।

दिति । तत्र दिवेति रात्रिव्युदासः । एकवारमिति द्विवारादिव्युदासः । भोजनेनेत्यभोजनव्युदासः । एतच्च कृच्छ्रादीनां व्रतरूपत्वात् पुरुषार्थभोजनपर्युदासेन कृच्छ्राङ्गभूतं भोजनं विधीयते । तथा चाऽऽपस्तम्बः—'त्र्यहमनक्ताश्यदिवाशी च ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचन' इति । अत्र चानक्ताशीत्यनेन नक्तपर्युदासेन दिवाभोजननियमं दर्शयति । गौतमेनापीदमेव स्पष्टीकृतम्—'हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्' इति । एवं नक्तभोजनविधावपि । न विद्यते याचितं यस्मिन्भोजनं तदयाचितम् । तेन कालविशेषानुपादानाद्दिवा रात्रौ वा सकृदित्येव । तपोरूपत्वात्कृच्छ्राणां द्वितीयभोजने तदनुपपत्तेः । अयाचितमिति न केवलं परकीयायाचनप्रतिषेधोऽपि तु स्वकीयमपि परिचारकभार्यादिभ्यो न याचितव्यम् । प्रेषणाध्येषणयोः साधारणत्वाद्याच्ञायाः । अतः स्वगृहेऽपि भृत्यभार्यादयोऽनाज्ञप्ता एव यदि भोजनमुपहरन्ति तर्हि भोक्तव्यं नान्यथा । अमुनैवाऽभिप्रायेणोक्तं गौतमेन—'अथापरं त्र्यहं न कञ्चन याचेत' इति । अत्र च ग्राससंख्यानियमः पराशरेण दर्शितः—'सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः । चतुर्विंशतिरयाच्याः परं निरशनं स्मृतम्' ॥ इति । आपस्तम्बेन त्वन्यथोक्तम्—'सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः । चतुर्विंशतिरयाच्याः परे निरशनास्त्रयः । कुक्कुटाण्डप्रमाणास्तु यथा वास्यं विशेत्सुखम्' ॥ इति । अनयोश्च कल्पयोः शक्त्यपेक्षया विकल्पः । आपस्तम्बेन तु प्राजापत्यप्रायश्चित्तं चतुर्धा विभज्य चतुरः पादकृच्छ्रान्कृत्वा वर्णानुरूपेण व्यवस्था दर्शिता—'त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् । सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥ प्रातः पादं चरेच्छूद्रः सायं वैश्ये तु दापयेत् । अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम्' ॥ इति । यदा त्वयाचितोपवासात्मकत्र्यहद्वयानुष्ठानं तदाऽर्धकृच्छ्रः । सायं व्यतिरिक्तापरत्र्यहत्रयानुष्ठानं तु पादोनमिति विज्ञेयम् । 'सायं प्रातर्विनार्धं स्यात्पादोनं नक्तवर्जितम्' इति तेनैवोक्तत्वात् । अर्धकृच्छ्रस्य प्रकारान्तरमपि तेनैव दर्शितम्—'सायं प्रातस्तथैकैकं दिनद्वयमयाचितम् । दिनद्वयं च नाश्नीयात्कृच्छ्रार्धं तद्विधीयते' ॥ इति ॥ ३१८ ॥

यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥

अयमेवाऽतिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः ॥ ३१९ ॥

( वी० मि० ) अथ पादकृच्छ्रो यथाकथञ्चिद्दण्डकलितवदावृत्त्या स्वस्थानविवृत्त्या वा तत्राप्यानुलोम्येन प्रातिलोम्येन वा जपादियुक्त तद्रहितो वा त्रिगुणीकृत प्राजापत्य उच्यते । अयमेव प्राजापत्य एव पाणिपूरान्नभोजनयुक्तो नवस्वहःसु चेत्त [redacted] द्वादशादिग्रासमित भोजनयुक्तस्तदाऽतिकृच्छ्र इत्युच्यत इति । कृच्छ्रान्तर [redacted] द्वादशाहो पवासरूप प्रागभिहितम् ॥ ३१९ ॥

( मिता० ) प्राजापत्य कृच्छ्रमाह—

यथाकथञ्चिदिति । अयमेव पादकृच्छ्र यथाकथचिद्दण्डकलित वदावृत्त्या स्वस्थानविवृत्त्या वा, तत्राप्यानुलोम्येन प्रातिलोम्येन वा तथा वक्ष्यमाणजपादियुक्त तद्रहित वा त्रिरभ्यस्त प्राजापत्योऽभिधीयते । तत्र दण्डकलितवदावृत्तिपक्षो वसिष्ठेन प्रदर्शित —'अह प्रातरहर्नक्तमहरेकमयाचितम् । अह पराक तथैकमेव चतुरहो परौ ॥ अनुग्रहार्थं विप्राणा मनुर्धर्मभृता वर । बालवृद्धातुरे ष्वेव शिशुकृच्छ्रमुवाच ह' ॥ इति । आनुलोम्येन स्वस्थानविवृत्ति पक्षस्तु मनुना दर्शित ( ११।२११ )—'त्र्यह प्रातस्त्र्यह साय त्र्यह मद्यादयाचितम् । पर त्र्यह च नाश्नीयात्प्राजापत्य चरन् द्विज' ॥ इति । प्रातिलोम्यावृत्तिस्तु वसिष्ठेन दर्शिता—'प्रातिलोम्य चरेद्विप्र कृच्छ्र चान्द्रायणोत्तरम्' इति । जपादिरहितपक्षस्तु स्त्रीशूद्रादिविष येऽङ्गिरसा दर्शित —'तस्माच्छूद्र समासाद्य सदा धर्मपथे स्थितम् । प्रायश्चित्त प्रदातव्य जपहोमादिवर्जितम्' ॥ इति । जपादियुक्तपक्षस्तु वारिशब्याद्योग्यतया च त्रैवर्णिकविषय । स च गौतमादिभिर्द र्शित —'अथात कृच्छ्रान् व्याख्यास्यामो हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापर त्र्यह नक्त भुञ्जीताथापर त्र्यह न कञ्चन याचेताथापर त्र्यहमुपवसेत् तिष्ठेदहनि रात्रावासीत क्षिप्रकाम सत्य वदेदनार्यैः सह न भाषेत रौरवयौधाजपे नित्य प्रयुञ्जीतानुसवनमु दकोपस्पर्शनमापोहिष्ठेति तिसृभि पवित्रवतीभिर्मार्जयीत हिरण्य वर्णा शुचय पावका इत्यष्टाभिरथोदकतर्पण—नमोहमाय मोह माय महमाय धन्वने तापसाय पुनर्वसवे नम । मौञ्ज्याय और्म्याय वसुविन्दाय सर्वविदाय नम । पाराय सुपाराय महापाराय पारदाय परपाराय पारयिष्णवे नम । रुद्राय पशुपतये महते देवाय त्र्यम्ब

कायैकचरायाधिपतये हराय शर्वायावनाशनायोग्राय वज्रिणे घृणिने कपर्दिने नमः सूर्यायादित्याय नमः । नीलग्रीवाय शितिकण्ठाय नमः। कृष्णाय पिङ्गलाय नमः। ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्ध्वरेतसे नमः । सत्याय पावकाय पावकवर्णायैकवर्णाय कामाय कामरूपिणे नमः। दीप्ताय दीप्तरूपिणे नमः । तीक्ष्णाय तीक्ष्णरूपिणे नमः । सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषाय उत्तमपुरुषाय ब्रह्मचारिणे नमः। चन्द्रललाटाय कृत्तिवाससे नम इति । एतदेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वा एताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृते इति, अन्ते ब्राह्मणभोजनम्' इति। तत्र तिष्ठेदहनि रात्रावासीत क्षिप्रकाम इत्यस्यार्थः। यस्तु महतोऽप्येनसः क्षिप्रमेकेनैव कृच्छ्रेण मुच्येयेत्येवं कामयते असावहनि कर्माविरुद्धेषु कालेषु तिष्ठेद्रात्रावासीत। एवं रौरवयौधाजयाख्यसामजपो नमोहमायेत्यादिभिस्तर्पणमादित्योपस्थानादिकं चरुश्रपणादिकं च योगीश्वराद्यनुक्तं क्षिप्रकामः कुर्वीत। अतश्च योगीश्वराद्युक्तप्राजापत्यद्वयस्थाने गौतमीयमनेकेतिकर्तव्यतासहितं द्रष्टव्यम्। एवमन्यान्यपि स्मृत्यन्तरोक्तानि विशेष(१)णाऽन्वेषणीयानि ॥

( मिता० ) अतिकृच्छ्रमाह—

अयमिति । एतद्धर्मक एव एकभक्तादिप्राजापत्यधर्मयुक्तोऽतिकृच्छ्रः स्यात्। इयांस्तु विशेषः—आद्ये त्र्यहत्रये पाणिपूरणमात्रमन्नं भुञ्जीत न पुनर्द्वाविंशत्वादिग्रासान् । अत्र च प्राप्तभोजनानुवादेन पाणिपूरान्नविधानादन्त्यत्र्यहेऽतिदेशप्राप्त उपवासोऽप्रतिपक्ष एव । अत्रापि पादशो व्यवस्था पूर्ववदेव द्रष्टव्या । यत्तु मनुनोक्तम् (११। २१३)—'एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः' ॥ इति तत्पाणिपूरान्नपरिमि(२)तादल्पत्वाच्छक्तविषयम् ॥ ३१९ ॥

कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ३२० ॥

( वी० मि० ) एकविंशतिदिवसान् पयसा पयोमात्राहारेण कृ-

---

( १ ) विशेषेणान्तराण्यन्वेषणीयानि ट। ( २ ) परिमितत्वात् ख।

च्छ्रातिकृच्छ्रः स्यात् । पराकस्तु द्वादशाहोपवासरूपः ॥ ३२० ॥

( मिता० ) कृच्छ्रातिकृच्छ्रमाह—

कृच्छ्रेति । एकविंशतिरात्रं पयसा वर्तनं कृच्छ्रातिकृच्छ्राख्यं व्रतं विज्ञेयम् । गौतमेन ॥ द्वादशरात्रमुदकेन वर्तनं कृच्छ्रातिकृ(१)च्छ्र उक्तः–'अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः' इति । अतश्च शक्त्यपेक्षयाऽनयोर्व्यवस्था ॥

( मिता० ) पराकमाह—

द्वादशेति । ऋज्वर्थोऽयमर्धश्लोकः ॥ ३२० ॥

पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ॥

एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२१ ॥

( वी० मि० ) पिण्याकस्तिलकल्कः, आचाम ओदननिस्रावः । तक्रादीनि त्रीणि प्रसिद्धानि । एषां प्रत्यहमाहारान्तरव्यवच्छेदेन प्रत्येकं भोजनं षष्ठेऽहन्युपवास इत्ययं सौम्यकृच्छ्र उच्यते । चकारेण —

पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्युपोषणम् ।

वासो वै दक्षिणां दद्यात्सौम्योऽयं कृच्छ्र उच्यते ॥

इति जाबालोक्तचतुरहसाध्यसौम्यकृच्छ्रसमुच्चयः ॥ ३२१ ॥

( मिता० ) सौम्यकृच्छ्रमाह—

पिण्याकेति । पिण्याको निःसृततैलस्तिल ओदननिस्रावोदश्विदुदकसक्तूनां पञ्चानामेकैकं प्रतिदिवस(२)मुपभुज्य षष्ठेऽह्नि उपवसेदेष सौम्याख्यः कृच्छ्रोऽभिधीयते । द्रव्यपरिमाणं तु प्राणयात्रामात्रनियन्धनमधिगन्तव्यम् । जाबालेन तु चतुरहव्यापी सौम्यकृच्छ्र उक्तः—'पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम् । वासो वै दक्षिणां दद्यात्सौम्योऽयं कृच्छ्र उच्यते' ॥ इति ॥ ३२१ ॥

एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ॥

तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३२२ ॥

( वी० मि० ) एषां पिण्याकादीनां सक्तुपर्यन्तानामेकैकस्य क्रमेण त्रिरात्राभ्यासात् । पञ्चदशाहसाध्यस्तुलापुरुष इत्येष कृच्छ्रो ज्ञेयः ३२२

( मिता० ) तुलापुरुषाख्यं कृच्छ्रमाह—

एषामिति । एषां पिण्याकादीनां पञ्चानां क्रमेणैकैकस्य त्रिरात्रा·

---

( १ ) तिकृच्छ्रमित्युक्तं ।  ( २ ) मुपभुज्य ख० ।

भ्यासेन पञ्चदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रो वेदितव्यः । अत्र च पञ्चदशाहिकत्वविधानादुपवासस्य निवृत्तिः । यमेन त्वेकविंशतिरात्रिकस्तुलापुरुष उक्तः–'आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् । त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षी त्र्यहद्वयम् ॥ एकविंशतिरात्रस्तु तुलापुरुष उच्यते' ॥ इति अत्र हारीताद्युक्तेतिकर्तव्यता ग्रन्थगौरवभयान्न लिख्यते ॥ ३२२ ॥

तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिखण्डिसंमितान् ॥
एकैकं ह्रासयेत्पिण्डं कृष्णे चान्द्रायणं चरन् ॥ ३२३ ॥
यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ॥
मासेनैवोपभुञ्जीत चान्द्रायणमथाऽपरम् ॥ ३२४ ॥

( वी० मि० ) चान्द्रायणाख्यं व्रतं कुर्वन् शुक्लपक्षे तिथिषु कलावृद्ध्यनुसारिण्या वृद्ध्या मयूराण्डप्रमाणान् पिण्डान् ग्रासान् चरेत् भक्षयेत् । कृष्णे च पक्षे यथोत्तरं तिथिषु एकैकं पिण्डं ह्रासयेत् । एवममावास्यायामुपोषणपर्यन्तेन व्रतं समाप्यते । अयं च शुक्लपक्षप्रतिपद्यारभ्याऽमावास्यायां समाप्यतः इत्येकः पक्षः । स च यवमध्य इत्युच्यते । कृष्णप्रतिपद्यारभ्याऽमावास्यायामुपोष्य पौर्णमास्यां समाप्यत इत्यपरः पक्षः । स च पिपीलिकामध्य इत्युच्यते । एवं पञ्चविंशत्यधिकशतद्वयग्राससाध्यं चान्द्रायणं मुक्त्वा चत्वारिंशदधिकशतद्वयग्राससाध्यं चान्द्रायणमाह यथाकथञ्चिदिति । अष्टावष्टौ ग्रासान् प्रत्यहमेकदेशव्यवधानेन षोडश ग्रासान् वा मासपर्यन्तमुपयुञ्जीत । एवं चत्वारिंशदधिकशतद्वयपिण्डभक्षणरूपमपरं चान्द्रायणमित्यर्थः । एवकारेणाऽमावास्यायामभोजनं व्यवच्छिनत्ति । अपिशब्देन—

त्रींस्त्रीन् पिण्डान् समश्नीयात् नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥

इति यमोक्तपक्षान्तरसमुच्चयः ॥ ३२३—३२४ ॥

( मिता० ) चान्द्रायणमाह—

तिथिवृद्ध्येति । चान्द्रायणाख्यं (१)व्रतं कुर्वन् मयूराण्डपरिमितान् पिण्डान् शुक्ले आपूर्यमाणपक्षे तिथिवृद्ध्या चरेत् भक्षयेत् । यथा प्रतिपत्प्रभृतिषु चन्द्रकलानामेकैकशो वृद्धिरर्धमासे तद्वत्पिण्डानपि

(१) कर्म कुर्वन् ट० ।

प्रतिपद्येको द्वितीयायां द्वाविल्येवमेकैकशो वर्धयन् भक्षयेद्यावत्पौर्णमासीम् । ततः पञ्चदश्यां पञ्चदश ग्रासान् भुक्त्वा ततः कृष्णपक्षे चतुर्दश प्रतिपदि द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान् ह्रासयन्नमावास्यायाश्चतुर्दशीम् । ततश्चतुर्दश्यामेकं ग्रासं प्रसित्वा इन्दुक्षयेऽर्यामुपवसेत् । तथा च वसिष्ठः—'एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः' ॥ इति । चन्द्रस्यायनमिवायनं चरणं यस्मिन्कर्मणि ह्रासवृद्धिभ्यां तच्चान्द्रायणम् । संज्ञायां दीर्घः । इदं च यवस्य प्रान्तयोरणीयो मध्ये स्थवीय इति यवमध्यमिति कथ्यते । एतदेव व्रतं यदा कृष्णपक्षप्रतिपदि प्रक्रम्य पूर्वोक्तक्रमेणानुष्ठीयते तदा पिपीलिकाया मध्ये इव सूक्ष्मं भवतीति पिपीलिकामध्यमिति कथ्यते । तथा हि—पूर्वोक्तक्रमेण कृष्णप्रतिपदि चतुर्दश ग्रासान् भुक्त्वा एकैकग्रासापचयेन चतुर्दश्यां यावद् भुञ्जीत । ततश्चतुर्दश्यामेकं ग्रासं प्रसित्वामावास्यायामुपोष्य शुक्लप्रतिपद्येकमेव ग्रासं प्राश्नीयात् । तत एकैकोपचयभोजनेन पक्षशेषे निर्वर्त्यमाने पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्त इति युक्तैव पिपीलिकामध्यता । तथा च वसिष्ठः—'मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी सन्पक्षशेषं समापयेत् ॥ तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम् । ग्रासोपचयभोजी सन्पक्षशेषं समापयेत्' ॥ इति । यदा त्वेकस्मिन्पक्षे तिथिवृद्धिह्रासवशात् षोडशदिनानि भवन्ति चतुर्दश वा तदा ग्रासानामपि वृद्धिह्रासौ वेदितव्यौ । तिथिवृद्ध्या पिण्डांश्चरेदिति नियमात् । गौतमेनात्र विशेषो दर्शितः—'अथातश्चान्द्रायणं तस्योक्तो विधिः कृच्छ्रे वपनं व्रतं चरेत् श्वोभूतां पौर्णमासीमुपवसेत्, आप्यायस्व, संतेपयांसि, नवोनव इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं च चन्द्रमसः यद्देवादेवहेडनमिति चतसृभिराज्यं जुहुयाद्देवकृतस्येति चान्ते समिद्भिस्त्रिभिः ॐ भूः भुवः स्वः महः जनः तपः सत्यं यशः श्रीः ऊर्क् इट् ओजः तेजः पुरुषः धर्मः शिवः इत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्वानेतैरेव ग्रासान्भुञ्जीत । तद्ग्रासप्रमाणमास्याविकारेण चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्यानि । पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् । अमावास्यायामुपोष्यैकैकोपचयेन पूर्व-

पक्षं विपरीतमेकेषामेव चान्द्रायणो मासः' इति । अत्र ग्रासप्रमाणमास्याविकारेणेति यदुक्तं तद्बालाभिप्रायम् । तेषां शिखण्डपरिमितपञ्चदशग्रासभोजनाशक्तेः । क्षीरादिहविष्षु शिखण्डपरिमितत्वं तु पर्णपुटकादिना संपादनीयम् । तथा कुक्कुटाण्डाद्यामलकादीनि तु ग्रासपरिमाणानि स्मृत्यन्तरोक्तानि शक्तिविषयाणि शिखण्डपरिमाणाल्लघुत्वाच्चेषाम् । यत्पुनरत्र श्वोभूतां पौर्णमासीमुपवसेदित्यत्र चतुर्दश्यामुपवासमभिधाय पौर्णमास्यां पञ्चदशग्रासान्भुक्त्वेत्यादिना द्वात्रिंशदहरात्मकत्वं चान्द्रायणस्योक्तं तत्पक्षान्तरप्रदर्शनार्थं न सार्वत्रिकम् । योगीश्वरवचनानुरोधेन त्रिंशदहरात्मकस्य दर्शितत्वात् । यद्येतत्सार्वत्रिकं स्यात्तदा नैरन्तर्येण संवत्सरे चान्द्रायणानुष्ठानानुपपत्तिः स्यात् । चन्द्रगत्यनुवर्तनानुपपत्तिश्च ॥ ३२३ ॥

( मिता० ) चान्द्रायणान्तरमाह—

यथाकथञ्चिदिति । पिण्डानां चत्वारिंशदधिकं शतद्वयं मासेन भुञ्जीत । यथाकथंचित्प्रतिदिनं मध्याह्नेऽष्टौ ग्रासान् , अथवा नक्तंदिनयोश्चतुरश्चतुरो वा, अथवैकस्मिंश्चतुरोऽपरस्मिन्द्वादश वा तथैकरात्रमुपोष्यापरस्मिन् षोडश वेत्यादिप्रकाराणामन्यतमेन शक्त्याद्यपेक्षया भुञ्जीतेत्येतत्पूर्वोक्तचान्द्रायणद्वयादपरं चान्द्रायणम् । अतस्तयोर्नायं ग्राससंख्यानियमः किन्तु पञ्चविंशत्यधिकशतद्वयसंख्यैव । मनुना चैते प्रकारा दर्शिताः (११।२१८-२२०)—'अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते । नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ॥ यथाकथंचित्पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम्' ॥ इति । तथा चत्वारिंशच्छतद्वयन्यूनसंख्याग्राससंपाद्यस्यापि संग्रहार्थमपरग्रहणम् । यथाह यमः—'त्रींस्त्रीन् पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्' ॥ इति । एषु च यतिचान्द्रायणप्रभृतिषु न चन्द्रगत्यनुसरणमपेक्षितम् । अतस्त्रिंशद्दिनात्मकसावनेन मासेन नैरन्तर्येण चान्द्रायणानुष्ठाने यदि कथंचित्तिथिवृद्धिह्रासवशात् पञ्चम्यादिष्वारम्भो भवति तथापि न दोषः । यदपि सोमायनाख्यं मासव्रतं मार्कण्डेयेनोक्तम्—'गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्टयात् । स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥ स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । एतत्सोमायनं नाम व्रतं कल्मषनाश-

नम्' ॥ इति । स्मृत्यन्तरे—'सप्ताहं चेत्येवद्गोस्तनमखिलमथ त्रीन् स्तनान्द्वौ तथैकं कुर्यात् त्र्यंशोपवासान्यदि भवति तदा मासि सोमायनं तत्' इति, तदपि चान्द्रायणधर्मकमेव । हारीतेनापि—'अथातश्चान्द्रायणमनुक्रमिष्यामः' इत्यादिना सेतिकर्तव्यताकं चान्द्रायणमभिधायैवमेव सोमायनमित्यतिदेशाभिधानात् । यत्पुनस्तेन कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्यन्तं सोमायनमुक्तम् । चतुर्थीप्रभृतिचतुःस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन त्रिरात्रं एकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृति पुनश्चतुः(१)स्तनान्तं 'या ते सोम चतुर्थी तनूस्तया नः पाहि तस्यै नमः स्वाहा, या ते सोम पञ्चमी षष्ठीत्येवमागाथोदितिविहोमा (२)एव स्तुत्वा एनोभ्यः पूतश्चन्द्रमसः समानतां सलोकतां सायुज्यं च गच्छति' इति चतुर्विंशतिदिनात्मकं सोमायनमुक्त तदशक्तविषयम् ॥ ३२४ ॥

(वी० मि०) कृच्छ्रचान्द्रायणसाधारणीमितिकर्तव्यतामाह—

कुर्यात् त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ॥

पवित्राणि जपेत्पिण्डान् गायत्र्या चाऽभिमन्त्रयेत् ॥ ३२५ ॥

त्रिषवणस्नायी प्रातर्मध्याह्नसायाह्नस्नानशीलः कृच्छ्रसान्तपनादिकं चान्द्रायणं च कुर्यात् । पवित्राणि अघमर्षणादीनि तदा जपेत् । गायत्र्या च भोक्तव्यद्रव्याण्यभिमन्त्रयेत्, 'सकृत्स्नायी समाहितः' इति वचनात् । न च कृच्छ्रे त्रिषवणस्नानं नाऽन्येति । तथाह्यत्र 'स्नात्वा चर्म न पीडयेदि'त्यादिनिषेधपरिपालनस्य, चकारेण तु—

एकवासा आर्द्रवासा लघ्वाशी स्थण्डिलेशयः ।

इति गर्गाद्युक्तेतिकर्तव्यतायाः समुच्चयः ॥ ३२५ ॥

( मिता० ) अथ कृच्छ्रचान्द्रायणसाधारणीमितिकर्तव्यतामाह—

कुर्यादिति । कृच्छ्रं प्राजापत्यादिकं चान्द्रायणं वा त्रिषवणस्नानयुक्तः कुर्यात् । एतच्च तप्तकृच्छ्रव्यतिरेकेण । तत्र 'सकृत्स्नायी समाहितः' इति मनुना विशेषाभिधानात् । यत्पुन गौतमेन कृच्छ्रेषु षट्सवस्नानमभिहितम्—त्रिरह्नि त्रिर्निशायां तु सवासा जलमाविशेत्' इति तच्छक्तविषयम् । यत्पुनर्द्वैपायनेन द्विकालिकं स्नानमुक्तम्—स्नानं, द्विकालमेव स्यात्त्रिकाले वा द्विजन्मनः ' इति तत्त्रिषवणस्नाना-

(१) स्तनान्तं क । (२) एवमस्त क ।

शक्तस्य वेदितव्यम् । यत्पुनर्गार्ग्येणोक्तम्—'एकवासाश्चरेद्भैक्षं स्नात्वा वासो न पीडयेत्' इति तदपि शक्तस्यैव । 'एकवासा आर्द्रवासा लघ्वाशी स्थण्डिलेशयः' इत्येकवस्त्रताया अपि शङ्खेन पाक्षिकत्वेनाभिधानात् । स्नाने च हारीतेन विशेष उक्तः—'ऽथवरं शुद्धवतीभिः स्नात्वाघमर्षणमन्तर्जले जपित्वा धौतमहतं वासः परिधाय साम्ना सौम्येनादित्यमुपतिष्ठेत' इति । स्नानानन्तरं च पवित्राणि जपेत् । पवित्राणि च 'अघमर्षणं देवकृतः शुद्धवत्यस्तरत्समाः' इत्यादीनि वसिष्ठादिप्रतिपादितानामन्यतमान्यर्थाविरुद्धेषु कालेषु अन्तर्जले जपेत् सावित्रीं वा । (११।२२५)—'सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः' इति मनुस्मरणात् । यत्तु गौतमेनोक्तम्—'रौरवयौधाजये नित्यं प्रयुञ्जीत' इति तदपि पवित्रत्वादेवोक्तं न पुनर्नियमाय । तथा सति श्रुत्यन्तरमूलत्वकल्पनाप्रसङ्गात् । अतोऽनधीतसामवेदेन गायत्र्यादिकमेव जप्तव्यम् । यदपि 'नमो हमाय मोहमाय' इत्यादि पठित्वा 'एता एवाज्याहुतयः' इत्युक्तं तदपि न नैयमिकं, किन्तु ( ११।२२२ )—'म(१)हाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम्' इति मनुना महाव्याहृतिभिर्होमविधानात् । तथा षट्त्रिंशन्मतेऽप्युक्तम्—'जपहोमादि यत्किञ्चित्कृच्छ्रोक्तं संभवेन्न चेत् । सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन वा' ॥ इति । आदिग्रहणादुदकतर्पणादित्योपस्थानादेर्ग्रहणम् । अत एव वैशम्पायनः—'स्नात्वोपतिष्ठेदादित्यं सौरीभिस्तु कृताञ्जलिः' इति । एवमन्येष्वपि विरोधिपदार्थेषु विकल्प आश्रयणीयः । अविरोधिषु समुच्चयः । शाखान्तराधिकरणन्यायेन सर्वस्मृतिप्रत्ययत्वात्कर्मणः । जपसंख्यायां विशेषस्तेनैव दर्शितः—'ऋषभं विरजं चैव तथा चैवाघमर्षणम् । गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरम् ॥ शतमष्टशतं वापि सहस्रमथवा परम् । उपांशु मनसा वापि तर्पयेत्पितृदेवताः ॥ मनुष्यांश्चैव भूतानि प्रणम्य शिरसा ततः' ॥ इति । तथा पिण्डांश्च प्रत्येकं गायत्र्या चाभिमन्त्रयेत् । तथा यमेनापि विशेष उक्तः—'अङ्गुल्यग्रस्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् । प्राश्याचम्य पुनः कुर्यादन्यस्याप्यभिमन्त्रणम्' ॥ इति । अतश्च ॐभूर्भुवःस्वरित्यादिभिर्गौतमोक्तैरभिमन्त्रमन्त्रैः सहास्य विकल्प उक्तः । यत्पुनराप्यायस्व संतेपयांसीत्या-

( १ ) आज्येन वेति पाठान्तरम् ।

दिभिः पिण्डकरणात्पूर्वं हविषोऽभिमन्त्रणमुक्तं तद्विप्रकार्यत्वात्समुच्चीयते । एतानि च कृच्छ्रादिव्रतानि यदा प्रायश्चित्तार्थमनुष्ठीयन्ते तदा केशादिवपनपूर्वकं परिग्रहीतव्यानि । 'वपनं व्रतं चरेत्' इति गौतमस्मरणात् । अभ्युदयार्थे तु नैव वपनम् । वासिष्ठेनाप्यत्र विशेष उक्तः—'कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् । कुक्षिरोमशिखावर्जम्' इति । कृच्छ्राणां व्रतरूपाणां व्रतरूपाणि वपनादीन्यङ्गानि वक्ष्यन्त इति शेषः । पर्वदुपादिष्टव्रतग्रहणं च व्रतानुष्ठानदिवसात्पूर्वेद्युः सायाह्ने कार्यम् । यथाह वासिष्ठः—सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् । ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ॥ दिनान्ते नखरोमादीन्प्रवाप्य स्नानमाचरेत् । भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ॥ मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये । दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ॥ व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने । आचम्यातः परं मौनी ध्यायन्दुष्कृतमात्मनः ॥ मनःसन्तापनं तीव्रमुद्वहेच्छोकसम्भवम्' ॥ इति । बहिरिति ग्रामाद्बहिर्निष्क्रम्य । स्त्रियाश्चैवमेव व्रतपरिग्रहः कार्यः । केशश्मश्रुलोमनखवपनं तु नास्ति । 'चान्द्रायणादिष्वेतदेव स्त्रियाः केशवपनवर्जम्' इति बौधायनस्मरणात् ॥

वपनानिच्छोस्तु हारीतेन विशेष उक्तः—'राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥ केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् । द्वि(१)गुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्' ॥ इति । एतच्च महापातकादिवो(२)विषये विशेषाभिप्रायेण द्रष्टव्यम्—'विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् । ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः' ॥ इति मनुस्मरणात् । जाबालेनाप्यत्र विशेष उक्तः—'आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । अ(३)ग्नैव च बालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥ श्राद्धं कुर्याद् व्रतान्ते तु गोहिरण्यादि दक्षिणा' ॥ इति । यमेनाप्यत्र विशेषोऽभिहितः—'पश्चात्तापो निवृत्तिश्च स्नानं चाकृतयोदितम् । नैमित्तिकानां सर्वेषां तथा चैवानुकीर्तनम्' ॥ तथा—'गात्राभ्यङ्गशिरोभ्यङ्गौ ताम्बूलमनुलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत्' ॥ इति । एवमादि-

(१) द्विगुणे व्रत आचीर्णे क । (२) दैवमिनोरोहेन क ।
(३) आज्येनैवेह तु क । (४) वर्जयेत्सदा क ।

कर्तव्यताजातं स्मृत्यन्तरादन्वेष्टव्यम् । एवमनेन विधिना व्रतं गृहीत्वाऽवश्यं परिसमापनीयम् । अन्यथा तु प्रत्यवायः । 'पूर्वं व्रतं गृहीत्वा तु नाचरेत्काममोहितः । जीवन्भवति चण्डालो मृतः श्वा चैव जायते' ॥ इति छागलेयस्मरणात् । इत्यलं प्रपञ्चेन ॥ ३२५ ॥

( वी० मि० ) चान्द्रायणपर्यन्तानि कृच्छ्राणि स्वरूपतो निरूप्य चान्द्रायणस्य कृच्छ्रस्य चान्यत्रापि विनियोगमाह—

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च ॥
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ३२६ ॥
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात् ॥
यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ॥ ३२७ ॥

आदिश्यत इत्यादिष्टं प्रायश्चित्तान्तरं तद्रहितेषु पापेषु चान्द्रायणेन चशब्दात् कृच्छ्रादिना शुद्धिर्भवति ।

यानि कानि च पापानि गुरोर्गुरुतराणि च ।
कृच्छ्राऽतिकृच्छ्रचान्द्रैस्तु शु(१)ध्यन्ते मनुरब्रवीत् ॥

एतच्चान्द्रायणं धर्मार्थं यश्चरेत् स चन्द्रस्य सलोकतामेति । धर्मकाम(२)नया प्राजापत्यादिकृच्छ्रकर्ता तु महतीं राज्यादिरूपां श्रियमाप्नोति । अत्र दृष्टान्तः-गुरूणां क्रतूनामश्वमेधादीनां फलं यथा सुसमाहितः सर्वाङ्गसम्पादनपरः प्राप्नोति । अनेन दृष्टान्तेन नैमित्तिकेऽपि सर्वाङ्गसम्पादनं प्रायश्चित्तमावश्यकमित्यभिप्रैति ॥३२६-३२७॥

(मिता०) इत्थमुक्तविनियोगस्य चान्द्रायणादेः स्वरूपमभिधाय लब्धप्रसङ्गकार्यान्तरेऽपि विनियोगमाह—

अनादिष्टेष्विति । आदिश्यत इत्यादिष्टं प्रायश्चित्तं न विद्यते आदिष्टं येषु पापेषु तेषु चान्द्रायणेन शुद्धिः । चशब्दात्प्राजापत्यादिभिः कृच्छ्रैरैन्दवसहितैस्तन्निरपेक्षैर्वा शुद्धिः । तथा च षट्त्रिंशन्मतेऽभिहितम्—'यानि कानि च पापानि गुरोर्गुरुतराणि च । कृच्छ्रातिकृच्छ्रचान्द्रेयैः शोध्यन्ते मनुरब्रवीत्' ॥ इति त्रयाणां समुच्चयः प्रतिपादितः । उशनसा तु द्वयोः समुच्चय उक्तः—'दुरितानां दुरिष्टानां पापानां महतामपि । कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनम्' ॥ इति । दुरितमुपपातकम् । दुरिष्टं पातकम् । गौतमेन तु कृच्छ्राति-

(१) शोध्यन्ते इति ख० पु० पाठः । (२) धर्मकामेन इति ख० पु० पाठः ।

कृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तमिति विसमासकरणेनैन्दवनिरपेक्षता कृच्छ्रातिकृच्छ्रयोः सूचिता, चान्द्रायणस्य च तन्निरपेक्षता, इतिशब्देन च त्रयाणां समुच्चयः । केवलप्राजापत्यस्य तु नैरपेक्ष्यं चतुर्विंशतिमतेऽभिहितम्—'लघुदोषे त्वनादिष्टे प्राजापत्यं समाचरेत्' इति । गौतमेनापि प्राजापत्यादिनिरपेक्षत्वमुक्तम्—'प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति, द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यते, तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते' इति महापातकादपीत्यभिप्रेतम् । मनुनाप्युक्तम् ( ११।२१५ )—'पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः' इति । हारीतेनाप्युक्तम्—'चान्द्रायणं यावकश्च तुलापुरुष एव च । गवां चैवानुगमनं सर्वपापप्रणाशनम्' ॥ तथा—'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत्' ॥ तथा तप्तकृच्छ्रमधिकृत्यापि शङ्खेनोक्तम्—'एष कृच्छ्रो द्विरभ्यस्तः पातकेभ्यः प्रमोचयेत् । त्रिरभ्यस्तो यथान्यायं शूद्रहत्यां व्यपोहति' ॥ इति । उशनसा चोक्तम्—'यत्रोक्तं यत्र वा नोक्तं महापा(१)तकनाशनम् । प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र संशयः' ॥ इति । एतानि प्राजापत्यादीन्यनादिष्टोपपातकादिषु सकृदभ्यासापेक्षया व्यस्तानि समस्तानि वा योजनीयानि । तथा आदिष्टेष्वपि महापातकादिषु अभ्यासापेक्षया योजनीयानि । अत एव यमेनोक्तम्—'यत्रोक्त'मित्यादि । गौतमेनाप्युक्तनिष्कृतीनां संग्रहार्थं सर्वप्रायश्चित्तग्रहणं कृतम् । तथा यदपि तेनैवोक्तम्-'द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यते' इत्युक्त्वा 'तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते' इति, तदपि महापातकाभिप्रायं न तु क्षुद्रपातकाभिप्रायम् । न च महापातकमनुक्तनिष्कृतिकं संभवति, तस्मादुक्तनिष्कृतिकेष्वपि प्राजापत्यादयो योजनीयाः । तत्र द्वादशवार्षिकव्रते द्वादशद्वादशदिनान्येकैकं प्राजापत्यं परिकल्प्य गण्यमाने प्राजापत्यानां षष्ट्यधिकशतत्रयं द्वादशवार्षिके वैकल्पिकमनुष्ठेयं भवति । तदशक्तौ तावत्यो वा धेनवो दातव्याः । तदसंभवे निष्काणां षष्ट्यधिकशतत्रयं दातव्यम् । तथा स्मृत्यन्तरम्-'प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद्विचक्षणः । धेनोरभावे दातव्यं (२)मूल्यं तुल्यमसंशयम्' ॥ मूल्यार्थमपि निष्कं तदर्धं

(१) सर्वपातकनाशनं ख ।    (२) तत्पूर्वं वा न संशयः क ।

तदर्धं वा शक्त्यपेक्षया । 'गवामभावे निष्कं स्यात्तदर्धं पाद एव वा' इति स्मरणात् । मूल्यदानस्याप्यशक्तौ तावन्तो वोदवासाः कार्याः । तत्राप्यशक्तौ गायत्रीजपः षट्त्रिंशल्लक्षसंख्याकः कार्यः । 'कृच्छ्रोऽयुतं तु गायत्र्या उदवासस्तथैव च । धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्' ॥ इति पराशरस्मरणात् । यत्तु चतुर्विंशतिमतेऽभिहितम्—'गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः । गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः' ॥ इति, तत् द्वादशवार्षिकतुल्यविधानतयोक्तं न पुनरशक्तविषयमिति न विरोधः । एवमन्येऽपि—'कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् । तिलहोमसहस्रं तु वेदपारायणं तथा' ॥ इत्यादयः प्रत्याम्नायाश्चतुर्विंशतिमतादिशास्त्राभिहिताः षष्ट्यधिकत्रिशतगुणिता महापातकेषु बोद्धव्याः । अतिपातकेषु सप्तत्यधिकशतद्वयं प्राजापत्यानां कर्तव्यम् । तावन्तो वा धेन्वादयः प्रत्याम्नायाः । पातकेषु तु साशीतिशतं प्राजा(१)पत्याः प्रत्याम्नायाश्च धेन्वादयस्तावन्त एव वा । तथा चतुर्विंशतिमतेऽभिहितम्—'जन्मप्रभृति पापानि बहूनि विविधानि च । कृत्वार्वाग् ब्रह्महत्यायाः षडब्दं व्रतमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाष्टादशलक्षाणि गायत्र्या वा जपेद् बुधः' ॥ इति । इदमेव द्वादशवार्षिके व्रते द्वादशद्वादशदिनैरेकैकप्राजापत्यास्तावन्तो वा प्रत्याम्नायाः । त्रैमासिकविषयेषु पुनः सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेनूदवासादयस्तावन्त एव । मासिकव्रतविषयेषु तु सार्धं प्राजापत्यद्वयं तावानेव वा प्रत्याम्नायः । चान्द्रायणविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयम् । तदशक्तस्य प्रत्याम्नायस्तावानेव । यत्पुनश्चतुर्विंशतिमतेऽभिहितम्—'अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा' इति, (२)तदतिधनिनः पिपीलिकामध्यादिचान्द्रायणप्रत्याम्नायविषयम् । मासातिकृच्छ्रविषयभूतेषु पुनरुपपातकेषु सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेन्वादयस्तावन्त एव । 'प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । (३)पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा' ॥ इति चतुर्विंशतिमतेऽभिधानात् । एतच्च 'एकैकं ग्रासमश्नीया'-

---

(१) प्राजापत्यानां प्रत्याम्नायधेन्वादयः ख । (२) तदपि धनिनः ।

(३) पराकतप्तातिकृच्छ्रे तिलस्तिलस्तु गास्तथेति पाठान्तरम् ।

दित्यामलकपरिमितैकैककग्रासपक्षे वेदितव्यम् । पाणिपूरान्नभोजनपक्षे पुनर्धेनुद्वयमेव । प्राजापत्यस्य षडुपवासतुल्य(१)त्वात् तद्द्विगुणत्वाच्चातिकृच्छ्रस्य । यद्यपि नवसु दिनेषु पाणिपूरान्नस्य भोजनं तथापि नैरन्तर्येण द्वादशदिवसानुष्ठाने क्लेशातिशयात्षडुपवाससमानप्राजापत्यद्वयतुल्यत्वमेव । प्राजापत्यस्य च षडुपवासतुल्यत्वं युक्तमेव । तथा हि प्रथमे त्र्यहे सायन्तनभोजनत्रयनिवृत्त्यैकोपवाससम्पत्तिः । द्वितीये त्र्यहे प्रातःकालभोजनत्रय(२)निवृत्तिपरस्य । तथा च अयाचितत्र्यहेऽपि सायंतनभो(३)जनत्रयवर्जनेऽपरस्यैवेवं नवभिर्दिनैरुपवासत्रयम् । (४)पुनश्चान्त्यत्र्यहे चोपवासत्रयमिति युक्तं षडुपवासतुल्यत्वम् । ऋषभैकादशगोदानसहितत्रिरात्रोपवासात्मकगोवधव्रते तु सार्धैकादशप्राजापत्यास्तावत्संख्याकाश्चोदवासादयः प्रत्याम्नायाः । मासं पयोव्रते तु सार्धप्राजापत्यद्वयम् । पराकात्मके तूपपातकव्रते प्राजापत्यत्रयं पराकसमातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् । 'सान्तपनस्य वाध्यधर्मज्ञो व्रतमाचरेत्' इति षट्त्रिंशन्मतेऽभिधानात् । चान्द्रायणपराककृच्छ्रातिकृच्छ्रास्तु प्राजापत्यत्रयात्मका द्वादशवार्षिकव्रतस्थाने त्रिंशदुत्तरशतसंख्या अनुष्ठेयाः । तत्प्रत्याम्नायास्तु धेन्वादयस्त्रिगुणाः । अतिपातकेषु नवतिसंख्याकाश्चान्द्रायणादयः । तत्समेषु पुनः पातकपदाभिधेयेषु षष्टिसंख्याः । उपपातकेषु षट्संख्याः । उपपातकेषु त्रैवार्षिकविषयेषु त्रिंशत्संख्याः । त्रैमासिके गोवधव्रतस्थाने गोमूत्रस्नाना(५)दीतिकर्तव्यताबाहुल्याच्चान्द्रायणत्रयम् । मासिकव्रते तु योगीश्वरोक्ते एकमेव चान्द्रायणं धेनूदवासादिप्रत्याम्नायस्तु सर्वत्र त्रिगुण एव । प्रकीर्णकेषु पुनः प्रतिपदोक्तप्रायश्चित्तानुसारेण प्राजापत्यं पादादिकल्पनया योजनीयम् । आवृत्तौ पुनश्चान्द्रायणादिकमिति, एतद्दिग्प्रदर्शनेनान्यत्रापि कल्पना कार्या । यत्पुनर्वृद्धबृहस्पतिनोक्तम्—'जन्मप्रभृति यत्किञ्चित्पातकं चोपपातकम् । तावदावर्तयेत्कृच्छ्रं यावत्स्याद्द्विगुणं भवेत्' ॥ इति । तत् 'द्वे परदारे' इति गौतमोक्तद्विवार्षिकसमानविषयम् । तथा त्रैमासिकादिविषयभूतोपपातकावृत्तिविषये वा । पातकपदाभिधेयचाण्डाला-

(१) तुल्यत्वात् त्रिगुणत्वाच्च क । (२) यवर्जनेऽपरस्य क ।
(३) भोजनवर्जनेऽप्यपरस्येति क । (४) तथान्त्यत्र्यहे क ।
(५) स्नानादीनां कर्तव्यता ।

द्विस्त्रीगमने द्विरभ्यासविषये वा । तत्र 'ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्' इति सकृद्बुद्धिपूर्वगमने कृच्छ्राब्दविधानात्तदभ्यासे द्विवर्षतुल्यषष्टिकृच्छ्रविधानं युक्तमेव । यत्तु सुमन्तुनोक्तम्—'यदभ्यसकृदभ्यस्तं बुद्धिपूर्वमघं महत् । तच्छुद्ध्यत्यब्दकृच्छ्रेण महतः पातकादृते' ॥ इति तदप्युपपातकाद्यावृत्तिविषयम् । तथा 'अज्ञानादैन्दवद्वय'मिति यमोक्तैन्दवद्वयविषयभूतपातकावृत्तिविषयं वा । यस्तु तपस्यसमर्थो धान्यसमृद्धश्च स कृच्छ्रादिव्रतानि द्विजाग्र्यभोजनदानेन सम्पादयेत् । तथा हि स्मृत्यन्तरम्—'कृच्छ्रे पञ्चाऽतिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये चत्वारिंशच्च तप्ते त्रिगुणितगुणिता विंशतिः स्यात्पराके । कृच्छ्रे सान्तापनाख्ये भवति षडधिका विंशतिः सैव हीना द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान्' ॥ इति । अहरहरिति सर्वत्र सम्बन्धनीयम् । तृतीयः कृच्छ्रातिकृच्छ्रः । अत्र प्राजापत्यादिवत्कल्पनया विद्वद्विप्राणां षष्टिर्भोजनं भवति । यत्तु चतुर्विंशतिमतेऽभिहितम्—'विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च । अन्या(१) वा पावनी काचित्समान्याहुर्मनीषिणः' ॥ इति प्राजापत्यस्थाने द्वादशानां विप्राणां भोजनमुक्तं तन्निर्धनाविषयम् । यच्चान्द्रायणस्यापि तत्रैव प्रत्याम्नानमुक्तम्—'चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च । मित्रविन्दापशुश्चैव कृच्छ्रं मासत्रयं तथा ॥ नित्यनैमित्तिकानां च काम्यानां चैव कर्मणाम् । इष्टीनां पशुबन्धानामभावे चरवः स्मृताः' ॥ इति, तदपि चान्द्रायणाशक्तस्य । यत्तु 'कृच्छ्रं मासत्रयं तथे'ति कृच्छ्राष्टकं प्रत्याम्नातं तदतिजरठमूर्खविषयम् । चान्द्रायणं त्रिभिः कृच्छ्रैरिति दर्शितत्वादित्यलं प्रपञ्चेन । प्रकृतमनुसरामः—यस्त्वभ्युदयकामो धर्मार्थं काम्यनियोगनिष्पत्त्यर्थमेतच्चान्द्रायणमनुतिष्ठति न पुनः प्रायश्चित्तार्थमसौ चन्द्रसालोक्यं स्वर्गविशेषं प्राप्नोति । एतच्च संवत्सरावृत्त्यभिप्रायेण । 'एकमाप्त्वा विपापो विपाप्मा सर्वमेनो हन्ति, द्वितीयमाप्त्वा दशपूर्वान् दशापरानात्मानं चैकविंशं पंक्तिं च पुनाति, संवत्सरं चाप्त्वा चन्द्रमसः सलोकतामाप्नोती'ति गौतमस्मरणात् ॥ ३२६ ॥

( मिता० ) किञ्च—

कृच्छ्रकृदिति । यस्त्वभ्युदयकामः प्राजापत्यादिकृच्छ्राननुति-

---

(१) अन्यद्वा पावनं किंचित्समानाहुर्मनीषिण इत्यपि पाठः ।

छति स महतीं राज्यादिलक्षणां श्रियं विभूतिमनुभवति । यथा गुरुक्रतूनां राजसूयादीनां कर्ता तत्फलं स्वाराज्यादिलक्षणं महत्फलं लभते तथायमपि सुसमाहितः सकलाङ्गकलापमविकलमनुतिष्ठन्निति फलमहिमप्रकाशनार्थं क्रतुदृष्टान्तकीर्तनम् । सुसमाहित इत्यनेनाविकलशास्त्रानुष्ठानं वदन् काम्यकर्मतयाङ्गवैकल्ये फलासिद्धिं द्योतयति । अतो नात्र प्रायश्चित्तेष्विव यावत्संभवाङ्गानुष्ठानमङ्गीकरणीयमिति दूरोत्सारितं प्रत्याम्नायोपादानम् । कृच्छ्राद्यनुष्ठानाधूर्तौ तु 'अधिकारिणः फलाप्तिः कर्मण्यारम्भमात्रयथाविधि' इति न्यायलभ्या विधेयतेति नेदमविवक्षितम् ॥ ३२७ ॥

( वी० मि० ) एवं वर्णाश्रमेतराणां धर्मानभिधाय प्रार्थनोत्तराध्यायस्य ग्रन्थस्य धारणादिफलमाह—

विप्रे(१)ष्वपि विशेषेण धार्यो वाजसनेयिकैः ॥
इच्छद्भिः श्रेयसि फलमिह लोके परत्र च ॥
यद्(२)वात्र मया देवादादित्याद्वै सनातनात् ॥
तद्वै सर्वमिदं प्रोक्तं श्रुतिस्मृत्यभिसं(३)मतम् ॥
निःश्रेयसकरं नृणां शास्त्रं देवर्षिसेवितम् ॥
ज्ञात्वा ये ह्याचरन्ति ते न संयान्ति वै पुनः ॥
श्रुत्वैतानृषयो धर्मान् याज्ञवल्क्येन भाषितान् ॥
इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२८ ॥
य इदं धारयिष्यन्ति (४)धर्मशास्त्रमतन्द्रिताः ॥
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३२९ ॥
विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा ॥
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३३० ॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चाऽर्थमाप्नुयात् ॥
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाम् ॥

(१) अन्तिमियमपन्थे प्रक्षिप्तश्लोकाः मुद्रितपुस्तके सन्तीति प्रदर्शितम्, परं कतिपयः श्लोकाः पुस्तके नोपलब्धाः । (२) यत्सर्वं—इति ख० पु० पाठः ।
(३) सम्मितम्—इति ख० पु० पाठः । (४) शास्त्रमिदं—इति क० पु० पाठः ।

श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति ॥
पितॄणां तस्य तृप्तिः स्यादक्षय्या नात्र संशयः ॥ ३३१ ॥
ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ॥
(१)वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३२ ॥
य इदं श्रावयेद्विद्वान् द्विजान्पर्वसु पर्वसु ॥
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३३ ॥
श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ॥
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥ ३३४ ॥
निर्जित्य वादे देवान् वै ऋषीन् सर्वानुपस्थितान् ॥
गा बोधेनाऽऽहृतास्तस्मै नमो ब्राह्मणहेतवे ॥
अध्यायत्रयसंक्षिप्तं सर्वेषां बुद्धिवर्द्धनम् ॥
अनुष्टुप्छन्दसा ह्येतद्याज्ञवल्क्येन भाषितम् ॥
सर्वपापहरं पुण्यं सुप्रसन्नं समञ्जसम् ॥
श्लोकानामपि विज्ञेयं सहस्रं चतुरुत्तरम् ॥
आदित्यस्य प्रसादेन प्राप्तवान् यो यजुर्गणम् ॥
प्रणमेद्याज्ञवल्क्यं तं (२)पिप्पलादगुरोरलम् ( ? ) ॥

योगीन्द्रं याज्ञवल्क्यं मुनयः सामश्रवःप्रभृतयः ऊचुः प्रार्थयामासुः । धारयिष्यन्ति स्मरिष्यन्ति । अस्माद्धर्मशास्त्रात् श्रावयिष्यति नियुक्तब्राह्मणान् । धान्यरूपं धनं तद्वान् धनान्तरस्य प्रागेव फलत्वेनाऽभिधानात् । तस्येति अलं भवत्विति शेषः । तदेतदस्मत्प्रार्थितं भवाननुमन्यतां वरदानरूपामनुमतिं करोतु । प्रीतात्मा न सन्तुष्टमनाः स्वयम्भुवे ब्रह्मणे । आचारपालनार्थं मङ्गलार्थं वा वरस्य सत्येन निर्वा(३)हार्थं वा नमस्कृत्य एवमस्त्विति वरमुवाच । तथापदाभ्यां नानाविधपुत्रादिफलसमुच्चयः । एवकारोऽवश्यम्भावार्थः । अपिशब्देन कैमुतिकन्यायादधिकश्रावणे फलाऽतिशयः सूचितः । हिशब्दः स्मृ(४)तिं प्रति हेतुतामभिधत्ते । चकारेण शूद्रः सुखी भवेदिति समु-

(१) वैश्यः स्यात् धान्य०-इति क० पु०पाठः । (२) लब्धपिप्पदगुरोरलम्-इति क०, ब्रशिष्यादगुरोरलम्-इति च ख० पु० पाठः । (३) निराहारार्थ—इति ख० पु० पाठः । (४) तृप्ति-इति क० पु० पाठः

च्चीयते । आधिकारेण मुनीनामपि याज्ञवल्क्यसूक्तिसम्प्रीतत्वं सूचयति । हिशब्दः पादपूरणे ॥ ३२८-३३४ ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरण-
कमलश्रीमन्महाराजाधिराजमधुकरसाहिसूनुश्रीमन्महाराजाऽधि-
राजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर-
श्रीवीरदेवोत्तेजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूरिसूनु-
सकलविद्यापारावारपारीणधुरीणश्रीमन्मित्रमिश्रकृते
श्रीवीरमित्रोदयाख्याने श्रीयाज्ञवल्क्यव्याख्याने
प्रायश्चित्तप्रकरणं नाम तृतीयोऽध्यायः ॥

समाप्ता वीरमित्रोदयाख्या व्याख्या ।

(मिता०) प्रागुदिताखिलार्थोपसंहारव्याजेन धर्मशास्त्रधारणादिविधीन् सार्थवादान् प्रार्थनावरदानरूपेण प्रतिपादयितुमाह—

श्रुत्वेति । अत्र हि वर्णाश्रमादिष्वावृत्ता धर्माः षट्प्रकाराः प्रतिपादिताः तानखिलान् योगीश्वरभाषितान् ऋषयः श्रुत्वा प्रहर्षोत्फुल्ललोचनाः तं महिमगुणशालिनमचिन्तनीयशक्तिविभवमिदमभिधास्यमानमूचिवांसः ॥ ३२८ ॥

(मिता०) य इदमित्यादि । इत्यमृज्वर्थैः श्लोकैः सामर्थ्य प्रभृतयोऽनेकधा प्रार्थयन्तेस्म ॥ ३२९-३३२ ॥

(मिता०) अपरामपि प्रार्थनामाह—

य इदं धारयेदिति । यस्त्विदं धर्मशास्त्रं प्रतिपर्व द्विजान् श्रावयेत् तस्याश्वमेधफलं भवेदिति श्रावणविध्यर्थवादः । तदेतदस्मत्प्रार्थितमर्थं सर्वमत्रभवाननुमन्यताम् ॥ ३३३ ॥

(मिता०) वरदानमाह—

श्रुत्वैतदिति । एतदृषिभिर्भाषितं श्रुत्वा योगीन्द्रोऽपि स्वनिर्मितधर्मशास्त्रधारणादिफलप्रार्थनोन्मीलितमुखपङ्कजः स्वयंभुवे ब्रह्मणे नमस्कृत्य प्रणम्य मयाप्रार्थितं सकलमित्थं भवत्वित्येवं किल भगवान् यमाय ॥ ३३४ ॥

इति श्रीमद्भारद्वाजपद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजक-
विज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्र-
विवृतौ प्रायश्चित्ताध्यायस्तृतीयः समाप्तः ॥

अथाऽस्याध्यायानुक्रमणिका लिख्यते । तत्राद्यं सूतकप्रकरणम् १ । आपद्धर्मप्रकरणम् २ । वानप्रस्थप्रकरणम् ३ । यतिधर्मप्रकरणम् ४ ।

ततः प्रायश्चित्तप्रकरणम् ५ । तत्रादौ कर्मविपाकः १ । महापातकादिनिमित्तपरिगणनम् २ । महापातकप्रायश्चित्तान्यातिदेशिकसहितानि ३ । उपपातकप्रायश्चित्तानि ४ । प्रकीर्णकप्रायश्चित्तप्रकरणम् ५ । पतितत्यागविधिः ६ । व्रतग्रहणविधिः ७ । रहस्यप्रायश्चित्ताधिकारः ८ । कृच्छ्रादिलक्षणम् ९ । इति प्रकरणानि ॥

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः ।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥

इति याज्ञवल्क्यमुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षरापि विपुलार्थवती परिपिञ्चति श्रवणयोरमृतम् ॥ २ ॥

गम्भीराभिः प्रसन्नाभिर्वाग्भिर्यस्ता मिताक्षरा ।
अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मया ॥ ३ ॥

नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।
विज्ञानेश्वर(१)पण्डितो न भजते किञ्चा(२)न्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥ ४ ॥

स्रष्टा वाचां (३)मधुरवपुषां विश्वदाश्चर्यसीम्नां
दाताऽर्थानामतिशयजुषामर्थि(४)सार्थार्थनायाः ।
ध्याता मूर्तेर्मुरविजयिना जीवतादार्कचन्द्रं
जेतारीणां तनुसहभुवां तत्त्वविज्ञाननाथः ॥ ५ ॥

आ सेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजा-
(५)दा च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात् ।
आ च (६)प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः ॥ ६ ॥

अन्तर्मुखानि यदि खानि तपस्ततः किं
नान्तर्मुखानि यदि खानि तपस्ततः किम् ।
अन्तर्बहिर्यदि हरिश्च तपस्ततः किं
नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥ ७ ॥

---

## समाप्तेयं समिताक्षरा याज्ञवल्क्यस्मृतिः ॥

---

समाप्तश्चायं ग्रन्थः ।

---

( १ ) विज्ञानेश्वरपण्डितेन भजते को वा मनीषी तुलामाकल्पं—इति पाठान्तरम् ।
( २ ) दन्योपमामाकल्प ट । ( ३ ) मधुरवपुषां ट ।
( ४ ) मर्थिनामर्थितायाः । ( ५ ) यावत्प्रत्यक् । ( ६ ) प्राचीसमुद्रादमितनृपशिरोरत्न ।

श्री ।

# याज्ञवल्क्यस्मृतिपद्यानामकाराद्यनुक्रमणिका ।



* एतच्चिह्नाङ्कितानि पद्यानि प्रक्षिप्तानि सन्ति ।

श्री ।

## वीरमित्रोदयकृता समुद्धृतानां ग्रन्थानां ग्रन्थकृतां च

## वर्णानुक्रमेण सूची ।

आ ।

## मिताक्षराधृतानां ग्रन्थानां ग्रन्थकाराणां च वर्णानुक्रमणिका ।

नामानि
जावालः
जावालश्रुतिः
जावालिः
जैमिनिः
त्रिकाण्डी
दक्षः
दीर्घतमाः
देवलः
धारेश्वरः
धौम्यः
नारदः
निरुक्तम्
पराशरः
पातञ्जलः
पारस्करः
पितामहः
पुलस्त्यः
पैङ्ग्यः
पैठीनसिः
प्रचेताः
वाष्कलः
वृहच्छातातपः
वृहत्प्रचेताः
वृहत्संवर्तः
वृहदङ्गिराः
वृहद्धारीतः
वृहद्यमः
वृहद्याज्ञवल्क्यः
वृहद्वसिष्ठः
वृहद्विष्णुः
वृहद्व्यासः
वृहन्मनुः
वृहस्पतिः
वोधायनः
ब्रह्मगर्भः
ब्रह्माण्डपुराणम्
ब्राह्मवधम्
भरद्वाजः
भविष्यत्पुराणम्
भारद्वाजः
भारद्वाजगृह्यम्
भृगुः

नामानि
मत्स्यपुराणम्
मध्यमाङ्गिराः
मनुः
मरीचिः
मार्कण्डेयः
मेधातिथिः
यमः
याज्ञवल्क्यः
योगीश्वरः
लिखितः
लौगाक्षिः
वसिष्ठः
विश्वरूपः
विषतन्त्रम्
विष्णुः
वृद्धप्रचेताः
वृद्धमनुः
वृद्धयाज्ञवल्क्यः
वृद्धवसिष्ठः
वृद्धविष्णुः
वृद्धशातातपः
वृद्धहारीतः
वैयाघ्रपादः
वैशम्पायनः
व्याघ्रः
व्याघ्रपादः
व्यासः
शङ्खः
शाण्डिल्यः
शातातपः
शारीरकम्
शुनःपुच्छः
शौनकः
श्रीकराचार्यः
षट्त्रिंशन्मतम्
सुमन्तुः
सुश्रुतम्
सूत्रकारः
संवर्तः
स्कन्दपुराणम्
स्मृत्यन्तरम्
हारीतः